# SARASVATĪBHAVANA-GRANTHAMĀLĀ

*[ Vol. 112 ]*

# PRAKRIYĀKAUMUDĪ

*[ Part III ]*

by

RĀMACANDRĀCĀRYA

With

**PRAKĀŚA**

by

ŚRĪKRIṢṆA

*Edited by*


**Pt. Muralīdhara Miśra**



Ex-Head of Vyākarana Department
Sampurnanand Sanskrit Vishvavidyalaya.





Chief Editor of the Granthamālā
DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'
Director, Research Institute,
Sampurnanand Sanskrit Vishvavidyalaya,



VARANASI
1980

सरस्वतीभवन-ग्रन्थमाला

[ ११२ ]

रामचन्द्राचार्यप्रणीता

# प्रक्रियाकौमुदी

[ तृतीयो भागः ]

श्रीकृष्णविरचितया

प्रकाशव्याख्यया

संवलिता

सम्पादकः

पं० मुरलीधरमिश्रः

व्याकरणविभागाध्यक्षचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



ग्रन्थमालाया मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०३७ तमे वैक्रमाब्दे १९०२ तमे शकाब्दे १९८० तमे खैस्ताब्दे

रामचन्द्राचार्यप्रणीता

# प्रक्रियाकौमुदी

प्रकाशव्याख्यया

विभूषिता

[ अथोत्तरार्धम् ]

प्रकृतिः सा जयत्याद्या यया धात्वादिरूपया ।
व्यज्यन्ते शब्दरूपाणि परप्रत्ययसंनिधेः ॥

"सिद्धे शब्दार्थसम्बन्धे" इति वार्त्तिककारेणार्थे प्रयुक्तानां शब्दानामिदमनुशासनमित्युक्तम् । प्रयोगश्च पदस्यैव । "अपदं न प्रयुञ्जीत" (भा०) इति निषेधात् । पदञ्च द्विविधम् । "सुप्तिङन्तं पदम्" ( १ । ४ । १४ ) इति वचनात् । तत्र श्रुतक्रमानुरोधेन सुबन्तानि व्युत्पाद्य, तिङन्तानि व्युत्पादयिष्यन् प्रकरणादौ मङ्गलमाचरति-प्रकृतिरित्यादिना । सा प्रसिद्धा वैयाकरणाभिमता आद्या, आदौ प्रत्ययादुत्पत्तेः [1]पूर्वकाले भवा स्थिता । सर्वप्रयोगमूलभूता वा प्रकृतिः । प्रकर्षेण नियमेन क्रियते प्रत्ययोऽनया अन्तरङ्गप्रत्ययान्वयेति यावत् । सा जयति सर्वोत्कर्षेण वर्तते ।

यत्तु प्रत्ययात्पूर्वमुपादीयमानशब्दः प्रकृतिरिति । आद्या[2] प्रत्ययापेक्षया पूर्वविधिभूतेति च प्राचा व्याख्यातम् । तदसत्—रुणद्धि–पचतकि–बहुपटुरिति श्नम्-अकच्-बहुच्प्रकृतिष्वव्यापनात् । विधौ पूर्वोच्चारितः पूर्वो ······स्तन्निमित्तं चेत्यर्थ इति चेन्न । "कर्मण्यण्" ( ३ । २ । १ ) "सार्वधातुके यक्" ( ३ । १ । ६७ )······[3] विधौ पञ्चमीनिर्दिष्ट इत्यपि न । अकच्यव्याप्तेरिति दिक् ।

सा का ? यया शब्दानां पचत्यादीनां रूपाणि प्रयोगा व्यज्यन्ते प्रकटीक्रियन्ते । नहि प्रकृतिमन्तरोक्तरूपाणि निष्पाद्यन्ते । किंभूतया यया[4] धात्वादिरूपया ? धात्वादीनि धातुप्रातिपदिकङ्यन्तावन्ततिङन्तानि रूपाणि यस्यास्तया । न पुनः प्रकृतिमात्रं रूपाभिव्यञ्जनायालमित्याह—परप्रत्ययसन्निधेरिति । अत्रापि परशब्दो न देशवाची श्नमाद्यसङ्ग्रहापत्तेः, किन्तु प्रकृत्युपदेशात् परकाले उपपन्नो दृष्टो वा प्रत्ययो लट्-शबादिस्तस्य सन्निधिः सन्निधानम्, तस्माद् हेतोः "न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः" इति नियमादिति भावादुभयोः परस्पराविनाभावेऽपि प्रकृतिरेवोत्कर्षको हेतुरित्युक्तम्[5]—आद्येति । प्रत्ययाद्युत्पत्तेः प्रकृतिहेतुत्वेनोपजीव्यत्वेन सैव प्रधान[6]मिति भावः । प्रत्यय इति च प्रत्ययसंज्ञाऽधिकारविहितो गृह्यते ।

---

१. पूर्वं । पूर्वकालभवा स्थितेति क० पु० ।
२. पूर्वा पूर्वकाले नावस्थितेति च ग० पु० ।
३. आद्ययेति । अतिप्रसक्तिरिति ग० पु० ।
४: ययेति नास्ति ग० पु० ।
५. अत उक्तमिति ख० पु० ।
६. प्राधान्यमिति ग० पु० ।

## १. धातोः [ ३ । १ । ९१ ]

आतृतीयाध्यायान्तं वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः। तेष्वादौ दश लकाराः प्रदर्श्यन्ते—लट्। लिट्। लुट्। लृट्। लेट्। लोट्। लङ्। लिङ्। लुङ्। लृङ्।

---

यत्तु–प्रतीयतेऽर्थो यस्मादिति व्याख्यातं प्राचा, तदसत्—स्वार्थिकानां कनादीनां शबादीनाञ्च विकरणानामसङ्ग्रहापत्तेः। तेषामनर्थकत्वात्। अर्थवत्त्वस्यान्वयव्यतिरेकगम्यत्वात्। "स्वार्थिकाश्च प्रकृत्यर्थेनैवार्थवन्तः" इति तु कल्पनामात्रम्। वस्तुतस्त्वनर्थका एवेति "प्रत्ययः" ( ३। १।१५ ) इति सूत्रे हरदत्तादिभि[१]र्व्यवस्थापितत्वात्। अन्यथा[२] वेदान्त्यभिमता प्रकृतिरीश्वराधिष्ठितविद्याशक्तिर्जयति। धातवः पञ्च महाभूतानि ब्रह्मखानिलतेजांसि मूलभूता धातव इति स्मृतेः। तेषामादिकारणभूतं रूपं यस्याः। यद्वा [३]प्रकृतिविकृत्योरेकत्वाद् धात्वादीन्येव स्थूलपर्यन्तानि रूपमस्याः, महाभूतात्मना परिणतत्वात्। एवम्भूतया यया शब्दा वाचका रूपाणि वाच्यानि च व्यज्यन्तेऽत्यन्तासन्त्यपि गन्धर्वनगरादिवदुपदर्श्यन्ते।

नन्वविद्याया जडायाः कथं व्यञ्जकत्वमत आह—परेत्यादि। परश्चासौ प्रत्ययो ज्ञानम्। "प्रत्ययाधीनशपथं ज्ञानविश्वासहेतुषु" इत्यभिधानात्। नित्यविज्ञानमयः परमात्मा तस्य सन्निधेः सन्निधानादचेतनेऽपि कर्तृत्वादिशक्तिराविशति–अयस्कान्तसंनिधेरिव[४] लोहशलाकायाम्।

अन्ये तु–साङ्ख्याभिमता प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था प्रधानाख्या मूलप्रकृतिरिति वर्णयन्ति। पर उत्कृष्टः प्रत्ययो ज्ञानं यस्य स परप्रत्ययः पुरुषस्तत्सन्निधिमात्रादनया[५] शब्दरूपाणि व्यज्यन्ते इति पूर्ववत्।

यद्यपीयमन्यैर्निराकृता, एतावता न व्याख्येया न सम्भवदुक्तिकत्वात्। नित्यस्फोटादेरप्यन्यैर्निराकृतत्वेनानुपादेयत्वप्रसङ्गाच्च। जयतीत्यनेन च स्तुतिरूपं मङ्गलमुपनिबद्धम्। काव्यप्रकाशकारस्त्वाह—'जयत्यर्थेन नमस्कार आक्षिप्यते' सर्वोत्कृष्टा तेन तां प्रत्यहं नतोऽस्मि इत्यर्थो वा[६] नमस्कार एवात्र मङ्गलमिति।

धातोः। आतृतीयाध्यायान्तम् इति। तृतीयाध्यायस्यान्तः समाप्तिः तं मर्यादीकृत्येत्यर्थः। अन्यथाऽन्तग्रहणासामञ्जस्यात्। "धातोरेकाच" ( ३। १। २२ ) इति

---

१. भ्यव इति नास्ति ग० पु०।
२. अनादित्वात्सर्वजगत्कारणतपरया प्रसिद्धवेदान्त्यभिमता ख० पु०।
३. अभेदादिति ग० पु०।
४. सन्निवेशे इति ख० पु०।
५. मात्रादृया इति ग० पु०।
६. धात्वधि इत्यर्थोनमस्कार इति ख० पु०।

## २.　लः कर्मणि च भावे चाकर्मकेभ्यः [३।४।६९]

लकाराः सकर्मकाद्धातोः कर्मणि कर्तरि चाकर्मकाद् भावे कर्तरि च स्युः। "प्रत्ययः" "परश्च" (३।१।१२) इत्यनुवर्तते।

---

यङ्विधौ यद्धातुग्रहणं तत्स्वरितत्वादध्यायपरिसमाप्तेरनुवर्तते। प्रकृतिलेनेति शिष्यसौकर्याय विभज्य व्याख्यातम्।

यत्तु स्वतन्त्रं धातोः (३।१।९१) इत्यधिकारसूत्रं तत् कृदन्तादौ व्याख्यास्यति। यदि तु तदेवेह व्याख्यायते तथा सति तत्पूर्वभाविषु णिच्णिङ्चिणादिषु धातुग्रहणसम्बन्धो न प्रतिपादितः स्यात्। एवञ्चामुनैव सिद्धे पुनर्धातोरित्यधिकारारम्भस्य प्रयोजनं तत्रैव वदिष्यति। धात्वधिकार इत्यार्धधातुकसंज्ञार्थं इति।[१] सोपसर्गाच्च लडादयो मा भूवन्निति। लेत्विति। तेषु वक्ष्यमाणेषु प्रत्ययेषु मध्ये लस्य स्थाने तिङ् विधीयते इति। आदौ तेषां स्थानित्वेन दश लकारा अनुबन्धभेदेन बुद्धिसौकर्याय प्रदर्श्यन्ते उदाह्रियन्त इत्यर्थः। तेषु षट् टितश्चत्वारो ङित इति द्वैराश्येनाक्षरसमाम्नायानुपूर्व्या पठति—लडित्यादि॥ १॥

लः कर्मणि। ल इत्युत्सृष्टानुबन्धा लकारा सामान्येन निर्दिश्यन्ते। प्रथमाबहुवचनं चेदमिति दर्शयति लकारमात्रशेषत्वाल्लडादय एव लकारत्वेन व्यवह्रियन्ते। तत्र कर्मणि विधानमकर्मकेभ्यो न सम्भवति, कर्मणोऽलाभात्। भावे चाकर्मकेभ्य इति विशेषोपदेशाच्चेति सकर्मकेभ्य एव कर्मणि विधानमित्याह—सकर्मकाद्धातोरिति। कर्मणि चेति। चकारेण "कर्तरि कृत्" (३।४।६७) इति प्रकृतः कर्ताऽनुकृष्यते इत्याह—कर्मणि कर्तरि चेति[२]। चकारेणापि कर्तैव परामृश्यते। अकर्मकेषु तदसम्भवादित्याह—भावे कर्तरि च स्युरिति।

अत्र कर्मणि कर्तुरीप्सिततमे इति व्याख्यातं प्राचा। तदसत्। स्पृश्यते तृणम्, भुज्यते विषम्, गौर्दुह्यते पयः, आस्यते मास इत्यादावपि दर्शनात्। लकारो द्विविधः, तिङ्भावी अतिङ्भावी च। तत्र भवति पचत्यादौ तिङ्भाविनः कृत्सञ्ज्ञानिषेधात् "कर्तरि कृत्" (३।४।६७) इत्यस्यानुपस्थापनात् स्वार्थे विधिः स्यात्। अतिङ्भाविनस्तु कृत्त्वात् कर्तर्येव विधिः स्यात्, न त्वास्यमानः शय्यमान इत्यादौ भावकर्मणोरित्येतद्वचनमारभ्यते इति वदन्ति। तन्न—भावकर्मणोरात्मनेपदविधानात् शेषात्कर्तरि परस्मैपदविधानाच्च ज्ञापकात् लकाराणामपि भावकर्मकर्तारोऽर्था अनुमास्यन्ते

---

१. धात्वधिकार आर्धधातुकादिसंज्ञार्थं इति ख० पु०।
२. भावे चेति ग० पु०।
३. न कर्मेति ग० पु०।
४. इत्यपि प्रयोगः ख० पु०।

इति नार्थोऽनेन उच्यते। अनारभ्यमाणे एतस्मिन् यथा भावे विधीयमाना घञादयस्सकर्मकेभ्योऽपि भवन्ति। ओदनस्य पाकः। जगतः कृतिरिति। एवं "भावकर्मणोः" (१।३।१३) इत्यात्मनेपदं सकर्मकेभ्योऽपि भावे स्यात्। ततश्च घटं क्रियते देवदत्तेनेत्यपि प्रयोगः प्रसज्येत। अतश्चाकर्मकेभ्य इति नियमार्थं वक्ष्यामि। सकर्मकेभ्यो भावे मा भूदितीदमारब्धम्।

कर्मणि चेत्येतदुत्तरत्र "तयोः" (३।४।७०) इत्यनेन परामर्शार्थम्। अतिङ्भाविषु च तेषु "कर्तरि कृत्" (३।४।६७) इति न प्रवर्तते। [1]तद्वाक्यशेषोऽयम्। अनिर्दिष्टार्थेषु ण्वुलादिष्वर्थाकाङ्क्षित्वादुपतिष्ठते न [2]तेषु निर्ज्ञातार्थेष्विति स्थितमाकरे। अत्र कालभावाध्वदेशव्यतिरिक्तेन कर्मणाऽकर्मकत्वं विवक्षितम्। तेन मासमास्यते देवदत्तेनेति कालादिकर्मकादपि भावे लो भवति। तदुक्तं कैयटेन "अकर्मकश्रुत्याऽन्तरङ्गं द्रव्यादिकर्म निषिध्यते न च बहिरङ्गं कालादिकर्म"। पूर्वं हि क्रियाया द्रव्यकर्मणा योगो भवति पश्चात् कालादिना[3] परिमाणनिर्द्धारणाय। तथाऽन्तरङ्गत्वाद् द्रव्यकर्मणो बहिरङ्गस्य कालादेस्तिरोभावात्तदपेक्षः सकर्मकव्यपदेशो न प्रवर्तते इति। यत्र तु अन्तरङ्गस्यासन्निधिस्तत्र कालादिनिमित्तः सकर्मकव्यपदेशो भवत्येवेत्यास्यते मास इति कर्मणि लकारो भवतीत्यपि तत्रैवावोचाम।

यत्तु प्राचोक्तम्--अविवक्षितत्वात् कर्मणः सकर्मकादपि भावे लकारः यथा नेह पच्यते नेह भुज्यते इतीति। तदेतद् [4]भाष्यकैयटपदमञ्जर्यादिष्वनूद्य कण्ठतो दूषितम्। यथाहुः— "अत्यन्ताविद्यमानकर्माणो धातवोऽकर्मकग्रहणेन गृह्यन्ते न त्वविवक्षितकर्माणः" इति। अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकत्वनिबन्धनानि कार्याणि भवेयुः।

अकर्मकशब्दे[5] च धातवोऽन्यपदार्थत्वेनाश्रीयन्ते नार्थः। गत्यर्थादिषु धातूनामेव विशेष्यत्वेन प्रक्रमात् ण्यन्तत्वाण्यन्तत्वादेर्धातुष्वेव सम्भवाच्च। धातुषु चाश्रीयमाणेषु क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यात्ते एवैते इति तत्त्वप्रत्ययविषयाणां[6] कर्म न व्यपदिश्यते। यदा त्वर्थस्यापि स्वतो भेद इति दर्शनम्, तदाऽर्थेष्वन्यपदार्थेष्वेव न दोष इति। कथं तर्हि नेह पच्यते नेह भुज्यते इति, भावे लकारो मा भूद्भावकर्मण्येव भविष्यति गम्यमानत्वान्न प्रयुज्यते प्रविश पिण्डीमितिवत्॥ २॥

---

१. मिति निर्दिष्टार्थेषु इति ग० पु०।

२. ष्वपीति ग० पु०।

३. कालादिभिः रित्यधिकं ख० पु०।

४. घान्तरालिकाभिर्भोजनादिक्रियाभिर्व्यवहिते नेति ख० पु०।

५. र्धातूनां रागामिति ख० पु०।

६. णुपचर्यते ख० पु०।

## ३. वर्तमाने लट् [ ३ । २ । १२३ ]

आरब्धापरिसमाप्तक्रियोपलक्षिते काले वाच्ये धातोर्लट्प्रत्ययः स्यात् । अटावितौ । आदेशविधानसामर्थ्यान्न लस्येत्संज्ञा ।

---

वर्तमाने लट् । ननु वर्तमानत्वं धात्वर्थे सम्भवति । बहवः क्षणाः धातुवाच्याः तत्र निष्पन्नानां भूतत्वादनिष्पन्नानां भविष्यत्त्वात् निष्पन्नानिष्पन्नव्यतिरिक्तस्य तृतीयप्रकारस्याभावात् । सत्यम् । नेह विद्यमानत्वं वर्तमानत्वं किं तु वर्तमानकालोपाधिकत्वम्, तत्र कोऽसौ वर्तमानत्वोपाधिरित्याशङ्क्य क्रियैवोपाधिरिति दर्शयति-आरब्धेति । आरब्धा कर्तुं प्रस्तुताऽपरिसमाप्ता न तु विरता या क्रिया तयोपलक्षितः परिच्छिन्नः । एतदुक्तं भवति अधिश्रयणादवश्रयणपर्यन्त[१]मोदनफलावच्छिन्नो विततरूपो व्यापारसमूहः पचेरर्थः ।

स च यावता कालेन निष्पद्यते स कालो वर्तमानः । काले वाच्ये इति । वाच्ये धातोर्वाच्यत्वेन विषयभूतेऽर्थे प्रारब्धापरिसमाप्तक्रियोपलक्षिते काल उपाधितया विवक्षिते सति कर्त्राद्यर्थे लडित्यर्थः । यद्वा तादृशि काले निष्पद्यमानं यद् वाच्यं क्रियारूपं तत्र वर्तमानात्तद्वाचकाद् धातोरित्यर्थः । यद्वा कालशब्देन क्रिया विवक्षिता क्रियेति च प्रसिद्धपरिमाणा निमेषादिक्रिया । वाच्येति च धातुविशेषणम् । तदयमर्थः प्रारब्धपरिसमाप्तश्चासौ निमेषादिक्रियोपलक्षितस्तत्परिच्छिन्नस्तादृशि काले क्रियायां वाच्येऽभिधेये स्थिताद्धातोर्लडिति स च "लः कर्मणि" ( ३ । ४ । ६९ ) इति वचनात् *कर्त्राद्यर्थे न काले तस्यावाच्यत्वात् । अन्यथा चैत्रोऽस्तीति कर्तुरनभिहितत्वात् प्रथमा* न स्यात् वर्तमानादेर्धात्वर्थोपाधित्वम्, न तु वाच्यत्वमिति स्थितमाकरे ।

कथं तर्हि पर्वतास्तिष्ठन्ति, यावज्जीवमधीते इति लट् । पर्वतादिस्थितेर्नित्यप्रवृत्तत्वेनाप्रारब्धत्वात्, अध्ययनस्य चान्तराकालिक[१]भोजनादिभिर्व्यवहितत्वेन परिसमाप्तत्वात् । सत्यम् । तथापि कालत्रयवर्तिरा[२]जानां याः भूतभविष्यद्वर्तमानाः पालनादिक्रियास्तत्संबन्धात् पर्वतादिस्थितेरपि भूतत्वाद्युपपद्यते[३] । ततश्च ये सम्प्रति राजानस्तत्क्रियोपचारात् पर्वतादिस्थितेर्वर्तमानत्वम् । तस्थुः पर्वताः नलादिकाले । स्थास्यन्ति पर्वताः कल्किकाले । अधीते इत्यत्राप्याफलनिष्पत्तेरध्ययनमपरिसमाप्तमन्तरालवर्ति तु भोजनादि नान्तरीयकत्वादव्यवधायकं तस्यैवावयवक्रिया । यथा भुङ्क्ते इत्यादौ जलपानादि ।

---

१. चान्तराकालिकं भिर्भोजनादि क्रियाभिर्व्यवहितत्वनेति ख० पु० ।

२. वर्तिनां राज्ञां ख० पु० ।

३. द्युपचर्यते ख० पु० ।

४. लस्य [ ३ । ४ । ७७ ]

इत्यधिकृत्य ।

५. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् [ ३ । ४ । ७८ ]

एतेऽष्टादश लस्यादेशाः स्युः । पटञा इतः । ल इति दश लकारा उच्यन्ते ।

६. लः परस्मैपदम् [ १ । ४ । ९९ ]

लादेशाः परस्मैपदसंज्ञाः स्युः ।

---

भ्वादितौ इति । लटष्टकारष्टेरेत्त्वार्थः । अकारः 'लटः शतृशानचौ" ( ३ । २ । १२४ इति विशेषणार्थः । "लशक्वतद्धिते" ( १ । ३ । ८ ) इति लस्येत्संज्ञेति तु न भवति, लस्येत्यधिकृत्य तिबाद्यादेशविधानसामर्थ्यात् । हरदत्तस्तु सत्यामित्संज्ञायां लोपाभावमात्रमाह । तत्रासति प्रयोजने कथमित्त्वमिति चिन्त्यम् । न च लित्स्वरः प्रयोजनम् । णलो लित्करणं ज्ञापकम्, न लादेशे लित्स्वरो भवतीति तेनैवाभिधानात् तिबादिभिर्लोपो बाध्यते इति व्याख्येयम् ॥ ३ ॥

लस्येत्यधिकृत्येति । "लस्य" ( ३ । ४ । ७७ ) इत्यधिकारसूत्रम् । लकार इत्युच्चारणार्थः । लडादिष्वनुगतमुत्सृष्टानुबन्धं लकारमात्रमधिक्रियते । "धातोः" ( ३ । १ । ९१ ) इत्यधिकाराद्धातोर्विहितस्यैव लस्य ग्रहणात् । "लः कर्मणि च" ( ३ । ४ । ६९ ) इत्यत्र निर्दिष्टानां कर्त्राद्यर्थानामनुवृत्तेर्वा कर्त्राद्यर्थे विहितस्य ग्रहणम् । तेन 'लुनाति चूडाल' इत्यादौ न भवति ॥ ४ ॥

तिप्तस्झि इति । समाहारद्वन्द्वोऽयं महिङन्तानाम् । पृथक्पदानि वा । पटङ इतः । तिप्सिप्मिपां पः स्वरार्थः पित्वाद्यर्थश्च । इटष्टकारः "इटोऽत्" ( ३ । ४ । १०६ ) इति विशेषणार्थः । एरदिति हि उच्यमाने भवेमहोत्यत्रापि स्यात् । ( अन्ये तु प्रत्ययाप्रत्ययपरिभाषया नात्र प्रसङ्गः भवेमहोत्यत्रेकारमात्रस्याप्रत्ययत्वात् । लिङादेशस्येत्यनुवृत्तेरिकारमात्रस्यालिङादेशत्वादेरदित्येव मन्यन्ते । तन्मते व्यर्थ एव[1] ) । आगमलिङ्गं तु टित्वं न भवति, आदेशमध्ये पाठात् । महिङो ङकारस्तिङिति प्रत्याहारार्थो नावयवानुबन्धार्थोऽपीत्याचार्याणां स्मृतिपरम्परा । तेन संपप्रच्छिमहे वव्रश्चिमहे इति ग्रहिज्या ( ६ । १ । १६ ) इति संप्रसारणं न भवति ॥ ५ ॥

लः परस्मैपदम् । ल इति षष्ठ्येकवचनमादेशापेक्षयेत्याह—लादेशा इति । यदि तु ल इति जसन्तं स्यात् । तत्रादेशानां स्थानिवत्त्वाद् यद्यपि सिद्ध्यति तथापि किकिनो-

---

१. ( ) इति चिह्नतो नास्ति स० पु० ।

७. तङानावात्मनेपदम् [ १ । ४ । १०० ]

तङिति प्रत्याहारः । तादिर्नवकः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञापवादः ।

८. शेषात्कर्तरि परस्मैपदम् [ १ । ३ । ७८ ]

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ।

९. अनुदात्तङित आत्मनेपदम् [ १ । ३ । १२ ]

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ।

---

रपि स्यात् लिङ्वदिति वचनात् । ततश्च देङ्दृङादिभ्यश्चात्मनेपदिभ्यो न स्यात्[1] । लादेशानां तु परस्मैपदसञ्ज्ञाश्रयणे नास्ति तयोः प्रसङ्ग इति कैयटादौ स्थितम् ।

अन्ये तु लक्षणप्रतिपदोक्तपरिभाषयैव किकिनोर्निरासे जसन्तत्वमेव युक्तम् इति ॥ ६ ॥

तङानाविति । आनेति शानच्कानचोरुत्सृष्टानुबन्धयोर्ग्रहणम् । चानशस्तु न भवति ल इत्यनुवृत्तेर्लादेशस्यैव ग्रहणात् । एतदर्थमेव पूर्वत्र ल इति षष्ठी व्याख्याता । तेन कतीह निघ्नाना इति परस्मैपदिभ्योऽपि संभवतीत्याह—शानच्कानचौ चेति । "लटः शतृशानचौ" ( ३ । २ । १२४ ) इत्यादि "लिटः कानज्वा" ( ३ । २ । १०६ ) इति विहिताविसर्थः । पूर्वसञ्ज्ञापवाद इति । एकसञ्ज्ञाधिकारात् । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन ॥ ७ ॥

शेषात्कर्तरि । उपर्युक्तादन्यः शेषः । अनुदात्तेत्त्वङित्त्वञित्त्वस्वरितत्वाद्यनुबन्धोपाधौ भावकर्मगन्धनाद्यर्थोपाधी "नेर्विशः" ( १ । ३ । १७ ) इत्याद्युपपदोपाधौ चात्मनेपदं विहितम्, यः पुनस्ततोऽन्यः स शेषः इत्याह—आत्मनेपदेत्यादि । अत्र धातोरित्यस्यानन्तरं विहितस्य लस्येति शेषो ज्ञेयः । तिबादिवाक्ये तथैव स्थितत्वात् । अस्य नियमस्य तत्समानविषयत्वप्रख्यात् । अनुदात्त इत्यादिनात्मनेपदं नियतं परस्मैपदं त्वनियतं सत् सर्वतः प्राप्नोतीति नियम आरभ्यते । तत्र कर्मणि यदि भवति शेषादेवेति यदि नियमस्ततश्शेषात्कर्तरि मा भूत् शेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति । अत्र शेषाद् यदि भवति कर्तर्येवेति[2] । ततः शेषाद्भावकर्मणोर्मा भूत् अशेषात्तु त्रिष्वपि प्राप्नोति । न चैकेन वाक्येन नियमद्वयं शक्यं कर्तुम् । अत्राहुः योगविभागोऽत्र क्रियते । तत्र प्रथमे योगे शेषादेवेति नियमः द्वितीये तु कर्तर्येवेति ॥८॥

अनुदात्तङित इति । द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं सम्बध्यते इत्याह—

---

१. स्यातामिति ख० पु० ।

२. कर्तर्येव भवतीति ख० पु० ।

अनुदात्तेतो ङितश्चेति। एतच्चानुदात्तलक्षणमात्मनेपदमनित्यम्, चक्षिङो ङित्करण[1]-ज्ञापनात्। स ह्यनुदात्तेत् पठ्यते विचक्षण इत्यत्र "अनुदात्तेतश्च हलादेः" (३।२।१४९) इति युच् यथा स्यादिति। तेन "अनुकम्प्यूहति पण्डितो जनः" "लभन्ति पुनरुत्थानम्" "पिण्डं ग्रसति" इत्याद्युपपन्नम्।

धातोः इति। अस्याप्यनन्तरं विहितस्य लस्येति शेषो द्रष्टव्यः। तिङां लादेशत्वात् परस्मैपदात्मनेपदनियमस्य तिबादिविध्येकवाक्यतया विधेर्वा तद्विषयत्वेन लकारापेक्षावश्यम्भावात्। अत एवात्र धातोरिति व्याख्यातम्। तेन प्रकृतेराक्षेपात् नियतसामर्थ्येन लाभाच्च।

यत्तु भाष्यकृता "भूवादयो धातवः" ( १ । ३ । १ ) इत्यतो धातुग्रहणमनुवर्तते इत्युक्तम्, सोऽभ्युच्चयवादः। सामर्थ्याक्षेपादिलभ्ये व्यवहितानुवृत्तये स्वरितत्वकल्पने प्रमाणाभावात्। यद्येवं यङन्ताद्[2] ईयङन्ताच्च न प्राप्नोति बेभिद्यते ऋतीयते इति। प्रत्ययस्य ङित्वेऽपि धातोरङित्त्वात् गुणादिनिषेधेन चारितार्थ्याच्च न समुदाय विशिनष्टि। "अवयवे ह्यचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति"। नैष दोषः। ङिता धातोर्विशेषणात्तदन्तविधौ ङिदन्तस्य धातोरिति विज्ञायते। तेनेयङाद्यन्ताद् भविष्यति। केवलस्य चष्टे इत्यादौ व्यपदेशिवद्भावात्। न चैवं चङङोरपि प्रसङ्गः। "विकरणेभ्यो नियमो बलीयान्" (प०) इति "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इत्यनेन ज्ञापितत्वात्। परस्मैपदप्रवृत्त्यनन्तरप्रवृत्तिकत्वेन चङङोः पुनस्तत्प्रवर्तकत्वाभावाच्च।

अन्ये त्वाहुः। अयङिति यङोऽकार आदिलोऽनुदात्त इदनुबध्यते तेनावयवेऽचरितार्थेन समुदायस्य विशेषणादनुदात्तेत्त्वलक्षणमात्मनेपदं भविष्यति। एवमीयङित्यत्रापीकार इदिति व्याख्येयः, न चैवं नुम्प्रसङ्गः। "गोः पादान्ते" ( ७ । १ । ५७ ) इत्यतोऽन्तग्रहणानुवृत्तेरन्त इदितो धातोर्नुम् भवतीति विज्ञायते। तेनादाविदितो न भविष्यति।

यत्तु हरदत्तेनोक्तं सत्यं समाहितमायुष्मता वृथा चायं प्रयासः प्रयोजनाभावात्। धातुग्रहणं त्यज्यतामिति। स्यादेतदेवम्। यदि तदनुवर्त्येत सामर्थ्याल्लभ्यं तु तदित्यवोचाम। उपस्थितस्य च तस्य संबन्धो दुर्वारः दोषप्रसङ्गस्तु प्रतिविधेय इत्येव युक्तम्। प्रयोजनाभावोऽपि पाक्षिकः। नियमात्परत्वान्नित्यत्वाच्च पूर्वं विकरणे इति पक्षे चङङोः कृतयोस्तत्त्योऽवर्जनीयत्वात्।

यत्तु "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति ज्ञापकमुक्तम्, तदपि न। स्येन व्यवहितेऽपि नियमः प्रवर्तते इति विपरीतस्यापि ज्ञापयितुं शक्यत्वादिति शब्दालङ्कारेऽस्माभिर्व्यवस्थापितत्वादित्यलं वृद्धविरोधेन ॥ ९ ॥

१. ङित्करणात् ज्ञापकात् इति ख० पु०।
२. ईयङन्ताच्चेति नास्ति ख० पु०।

# विषयानुक्रमणिका





अनुदात्तेतो ङितश्चेति । एतच्चानुदात्तलक्षणमात्मनेपदमनित्यम्, चक्षिङो ङित्करण[1]-ज्ञापनात् । स ह्यनुदात्तेत् पठ्यते विचक्षण इत्यत्र "अनुदात्तेतश्च हलादेः" (३।२।१४९) इति युच् यथा स्यादिति । तेन "अनुकम्पयूहति पण्डितो जनः" "लभन्ति पुनरुत्थानम्" "पिण्डं ग्रसति" इत्याद्युपपन्नम् ।

धातोः इति । अस्याप्यनन्तरं विहितस्य लस्येति शेषो द्रष्टव्यः । तिङां लादेशत्वात् परस्मैपदात्मनेपदनियमस्य तिबादिविध्येकवाक्यतया विधेर्वा तद्विषयत्वेन लकारापेक्षावश्यम्भावात् । अत एवात्र धातोरिति व्याख्यातम् । तेन प्रकृतेराक्षेपात् नियतसामर्थ्येन लाभाच्च ।

यत्तु भाष्यकृता "भूवादयो धातवः" ( १ । ३ । १ ) इत्यतो धातुग्रहणमनुवर्तते इत्युक्तम्, सोऽभ्युच्चयवादः । सामर्थ्याक्षेपादिलभ्ये व्यवहितानुवृत्तये स्वरितत्वकल्पने प्रमाणाभावात् । यद्येवं यङन्ताद्[2] ईयङन्ताच्च न प्राप्नोति वेभिद्यते ऋतीयते इति । प्रत्ययस्य ङित्वेऽपि धातोरङित्त्वात् गुणादिनिषेधेन चारितार्थ्याच्च न समुदायं विशिनष्टि । "अवयवे ह्यचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति" । नैष दोषः । ङिता धातोर्विशेषणात्तदन्तविधौ ङिदन्तस्य धातोरिति विज्ञायते । तेनेयङाद्यन्ताद् भविष्यति । केवलस्य चष्टे इत्यादौ व्यपदेशिवद्भावात् । न चैवं चङङोरपि प्रसङ्गः । "विकरणेभ्यो नियमो बलीयान्" ( प० ) इति "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इत्यनेन ज्ञापितत्वात् । परस्मैपदप्रवृत्त्यनन्तरप्रवृत्तिकत्वेन चङङोः पुनस्तत्प्रवर्तकत्वाभावाच्च ।

अन्ये त्वाहुः । अयङिति यङोऽकार आदितोऽनुदात्त इदनुबध्यते तेनावयवेऽचरितार्थेन समुदायस्य विशेषणादनुदात्तेत्त्वलक्षणमात्मनेपदं भविष्यति । एवमीयङित्यत्रापीकार इदिति व्याख्येयः, न चैवं नुम्प्रसङ्गः । "गोः पादान्ते" ( ७ । १ । ५७ ) इत्यतोऽन्तग्रहणानुवृत्तेरन्त इदितो धातोर्नुम् भवतीति विज्ञायते । तेनादाविदितो न भविष्यति ।

यत्तु हरदत्तेनोक्तं सत्यं समाहितमायुष्मता वृथा चायं प्रयासः प्रयोजनाभावात् । धातुग्रहणं त्यज्यतामिति । स्यादेतदेवम् । यदि तदनुवर्त्येत सामर्थ्याल्लभ्यं तु तदित्यवोचाम । उपस्थितस्य च तस्य संबन्धो दुर्वारः दोषप्रसङ्गस्तु प्रतिविधेय इत्येव युक्तम् । प्रयोजनाभावोऽपि पाक्षिकः । नियमात्परत्वान्नित्यत्वाच्च पूर्वं विकरण इति पक्षे चङङोः कृतयोस्तङोऽवर्जनीयत्वात् ।

यत्तु "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति ज्ञापकमुक्तम्, तदपि न । स्येन व्यवहितेऽपि नियमः प्रवर्तते इति विपरीतस्यापि ज्ञापयितुं शक्यत्वादिति शब्दालङ्कारेऽस्माभिव्यंक्तस्यापितत्वादित्यलं वृद्धविरोधेन ॥ ९ ॥

१. ङित्करणात् ज्ञापकात् इति ख० पु० ।
२. ईयङन्ताच्चेति नास्ति ख० पु० ।

# विषयानुक्रमणिका





# प्रास्ताविकम्

रामचन्द्राचार्यप्रणीतायाः प्रक्रियाकौमुद्याः प्रकाशव्याख्यासमलङ्कृतायास्तृतीयभागात्मकम् उत्तरार्द्धमिदं मोऽयामं प्रकाशमानीयते। प्रथमस्य भागस्य प्रास्ताविके प्रसादव्याख्यानवैशिष्ट्यमयोनमेव मवद्भिः। आकरग्रन्थस्थलनिर्देशविकलं तत्रत्यं विविधशास्त्रग्रन्थमन्थनं कमप्यनुसन्धानप्रस्थमनिवेदने। प्रक्रियाकौमुदीकारेण च बहूनि मतानि 'केचित्' (प्रक्रिया० २१, ६१ १०८, १४०, २४८, २५२, ३१३, ३२४, ३२६, ३३२, ३७९ ४३५); 'अपरे' (प्रक्रिया० ३०१) इति कृत्वा समुद्धृतानि। किन्तु कस्यानि तानि मतानीति प्रकाशकारेणापि सर्वत्र न प्रस्फोर्यते। ३७९ पृष्ठस्थस्य 'केचित्' इति प्रक्रियाकौमुदीकारोद्धृतस्थलस्य व्याख्यानावसरे, प्रसादकार आह—'नद्धदिहापि गत्यर्थत्वमन्ये मन्यन्त इति तन्मताभिप्रायेण केचिदित्युक्तम्' (३८० पृ०), बहुत्र तु स मौनमाकलयानास।

प्रकाशकृता शेषकृष्णेन समुद्धृतानि नामोल्लेखविरहितानि मतान्तराणि नूनं तदीयं स्वाध्यायमहिमानं प्रकटयन्ति। स्वरहस्योद्घाटनार्थं तानि व्याख्याकाराणां मुखमीक्षन्ते। इह तेषां कानिचन प्रस्तूयन्ते—अन्ये तु (२, ६, ८, १४, २५, ३०, ३३, ४८, ५१, ७४, ८०, ८४, १०५, १०८, ११६, ११९, १२७, १३५, १३६, १४४, १४६, १५८, १८७, २०४, २१२, २१३, २२९, २३६, २५६, २८४, २८५, ३२५, ३४३, ३५३, ३५७, ३६६, ३६७, ३८३, ३८४, ३९०, ४३१, ४५१, ४५३, ४६९, ५३७, ५५१, ५५७, ५५९ ५७४, ५८०, ५९२, ६००,); यत्तु (३, ५६, ७८, ८९, १५७, १६७, २६०, ४२३, ४१७); यस्तु (७४, ९५, १३८, २६३, २६७); ये तु मन्यन्ते (२४ पृ०); ये तु (७७, ६६, १२७, १३६, १६९, २१३, ५५०; ये त्वाहुः...तन्मते विपरीतः क्रम ऊहनीयः (५६७); एतच्चाकरमित्यन्ये मन्यन्ते (३१ पृ०); इत्यन्ये (११२, १३८, १४५, ४५८, ५०४, ५७२); अन्येषां तु; परे मन्यन्ते (२८८); इत्यपरे (४५८); अत्र कश्चित् (३३३); इति केचित् (१४, ९४, १०२, १०३, १३२, १४०, १६५, ५४१); केचिद् दीर्घोदितं पठन्ति, तदसत् (५१); अत्र केचित् (५३, १२१, ३१८, ३३७, ४४९); केचित् (६०, ७७, ८१, १३६, १७४, १७८, २०१, २०९, २११, २१२, २१७, २२५, २३४, २३६, २४९, ३०८, ५०७, ५५६); केचित्तु (१४५, २८३); पठ्यते केश्चित् (४३१); इति केषाञ्चिन्मते (११२ पृ०); यदप्युक्तम्..., तन्न (४८८); क्वचित्तु परिष्कृत्य इत्युदाह्रियते, तत्र एत्वाभावश्चिन्त्यः (११०), क्वचित्तु (२८४ पृ०); तदेतदन्यमतम् (३६१), क्वचिद् विकल्पः पठ्यते सोऽनाकरः (५००); अत एवाधुनिकाः (३१६); प्रतितन्त्रेऽपि (३२३)।

प्रकाशकारेण दीपकृष्णेन बहुत्र ग्रन्थग्रन्थकारनामानि समुद्धृतानि, तद् विभाव्य तदीया स्वाध्यायस्य गभीरता व्यापकता च प्रकटीभवतः। अत्रोदाह्रियन्ते कतिचन स्थलानि—एतच्च वार्तिकमतेनोदाहृतम् ( ५३१ ); यत्तु भाष्यकृता···इत्युक्तम्, सोऽप्युच्चदवादः ( ८ ); भाष्यविरोधादुपेक्ष्यम् ( ५४ ); भाष्यकारमते ( १८७ ); स्थितमाकरे ( १८८, ३३५ ); भाष्यादिषु स्थितम् ( १९० ); आकरे स्थितत्वात् ( २०२ ); भाष्येऽपि ( २०६ ), भाष्ये ( २१३ ); इत्याकरे स्थितम् ( २२७ ); भाष्यकारपक्षे ( २४० ); भाष्यकैयटयोः ३२३ ); भाष्यकारस्योक्तेः ( ३२३ ); भाष्यकारस्येदमभिमतम् ( ३२४ ); भाष्ये तु ( ३२४ ; भाष्यकारोक्तगौरवात् ( ३२९ ); यदाह भगवान् भाष्यकारः ( ३३३ ); भाष्यविरोध उपेक्षणीय एव ( ३३५ ); भाष्येऽप्युक्तम् (३३६ ); भाष्यकारस्तु ( ३३८ ); भाष्ये प्रकृतिपरिगणनमुक्तम् ( ३५० ), भाष्यादावनुदाहृतत्वेन ३७१ ), भाष्ये तु ( ३९६ ), भाष्यं च ( ४०२ ); भाष्यकारस्तु ( ३४२ ), इत्याकरे ४०७ ), भाष्ये उट्टङ्कितम् ( ४२६ ); इत्येतद् तु भाष्ये पूर्वपक्षरूपेण पठितम् ( ४४१ ), भाष्यकारस्तु नैतदाद्रियते ५१३ ) ,भाष्यकारस्तु ( ५३२ ); भाष्ये तु च्छान्दस एवेति स्थितम् ( ५४१ )।

वृत्तिकृता तु ( ३४२ ), अत एव काशिकायाम् ( ९६ ), वृत्तिकारस्तु ( १४४ ); वृत्तिन्यासपदमञ्जरीप्रदीपादिषु ( १९९ ), तदेतत्काशिकाकारमतम् ( २५४ ); इति काशिका ( २६८ ) इति; वृत्तिन्यासकारहरदत्तैर्व्याख्यानम् ( २८६ ), काशिकाकारवचनम् (३२३); काशिकाकारसंमत्या भाषायामपि यङ्लुक् ( ३३८ ), जयादित्येन ( ३७६ ); इति जयादित्यमतमनुसृत्य व्याचष्टे ( ३९६ ), जयादित्याचार्यास्तु मन्यन्ते ( ३३८ ); जयादित्येन ( ३७६ ), जयादित्यस्तु मन्यते ( ४८२ ), तदुक्तं काशिकायाम् ( ४०२, ५०३ ); वृत्तिकारैः सूत्रे प्रक्षिप्तम् ( ४५१ ), तथा च काशिका ( ५५१ ); विश्रामोऽशब्द इति काशिकायाम् ( ५६८ ), नैतत् काशिकाकारो मन्यते ( ५६८ ); तथा च काशिकायाम् ( ५६९ ), काशिकायां तूक्तम् ( ५७५ ) इति। वृत्तिकारेण सूत्रे प्रक्षेपाः कृता इति मन्यते प्रकाशकारः दीपकृष्णः।

बहुत्र हरदत्तमतानि समुद्धृतानि क्वचिन्निराक्रियन्ते, क्वचिच्च स्वपक्षमण्डनार्थमुपस्थाप्यन्ते; यथा—हरदत्तादिभिः (२) १४४, २७२; हरदत्तस्तु···आह, चिन्त्यम् (६), यत्तु हरदत्तेनोक्तम्, सत्यं समाहितमायुष्मता, वृथा चायं प्रयासः प्रयोजनाभावात् ( ८ ); इति हरदत्तोक्तेः (५१); अत्र हरदत्तः ( ६५, १७५, ४०२, ४१६, ५०९ ), हरदत्तोऽपि (७८, १४० ); हरदत्तेनाप्येवैव चिन्ता सूत्रिता ( ८० ), हरदत्तश्चाह ( ८१ ), इति हरदत्तेनोक्तम् ( ८९ ); यथाह हरदत्तः ( १०९ ); हरदत्त·· मते तु ( ११८ ), हरदत्तः ( १२१, २३०, २४६ ); चिन्त्यतामिति हरदत्तः ( १३५ ); यदाह हरदत्तः ( १६८, ४३०, ४६१, ६०८ ); इति न्यासहरदत्तौ ( १९० ); हरदत्तस्तु ( २२१, ४२८, ४६४ ); तदाह हरदत्तः ( २५९ ); इति···हरदत्तैर्व्याख्यातम् ( २८६ ); इति हरदत्तादयः ( ३०६ ); कैयट-

हरदत्ताभ्याम् ( ३१७ ), हरदत्तेनोक्तम् ( ३२४ ), यत्तु हरदत्तेनोक्तम्, ...तन्न ( ३३१ ); इति हरदत्तोक्तेः ( ३३०, ८८४ ), हरदत्तादीना तु ( ३५७ ), हरदत्तेन ( ३१७ ), हरदत्तस्त्वाह ( ३५८, ४५१, ४०१ ), हरदत्तोऽप्याह ( ३६० ), इति हरदत्तेन तूक्तम् ( ३६५ ); पञ्चेति हरदत्तः ( ३९९ ), हरदत्तेन दूषणमुक्तम् ( ४०२ ); इति हरदत्तः ( ४९१, ४६३, ५०१, ५०४, ५७२, ५९५ ), हरदत्तस्तु भाषायामस्य प्रयोगश्चिन्त्य इत्याह ( ५०६ ), अत्र योगः अकर्मकोऽकर्तुम् इति हरदत्तः ( ४३० ), प्रत्र जनं चिन्त्यमिति हरदत्तः ( ५३१ ); हरदत्तादिभिरुक्तेः ( ५६९ ); अत्र हरदत्त प्रमादपाठोऽयम् ( ६०४ )।

एवमेव—इति स्मृतेः ( २ ), तदुक्तं कैयटेन ( ४ ), कैयटादौ स्थितम् ( ७ ); यत्तु माधवेनोक्तं तन्मत् ( ११ ), तदाह यास्कः ( ११ ), अत एव कैयटेनोक्तम् ( १३ ); कैयटेन प्रयुक्तम् ( १४ ), इत्यष्टधातुकारः ( १४ ), बोपदेवस्तु ( १४, १४५ ), इति माधवेनोक्तं दूषणं परास्तम् ( २५ ), यत्त्वाह माधव ..., तच्चिन्त्यम् ( ३५ ), यदपि श्रीभोजेन न इति बोपदेव उक्तस्तत् सर्वं साम्प्रविरोधादुपेक्ष्यम् ( ५४ ), इति भट्टिः ( ५९ ); कालिदासप्रयोगश्चानुपपन्नः स्यात् ( ५६ ), तथा च शाकटायन ( ६४ ); इति कैयटोक्तेः ( ६६ ), माधवेनोक्तत्वात् ( ७८ ; यद्वा सहवृत्त्या माधवोक्तं दूषयितुमाह ( ७८ ); माधवस्त्वाह ( ६६ ), तथा च शाकल्लमल्लः ( ६६ ), कैयटादिषु ( ७० ), तदाह वामनः अमागमोऽप्यस्य न दृश्यते, तद्विहान्य पाठे प्रयोजनं चिन्त्यमिति ( ७० ); इति निरुक्तम् ( ७३ ); इति माधवः ( ८१ ); यत्तु कैयटेनोक्तम् ( ८१ ); माधवादयस्त्वस्यापि सत्वमुदाजह्रुः ( ८५ ); कैयटेनोत्तरवात् ( ८६ ); माधवस्त्वाह ( ६६ ); इति माधवः ( १०९ ); इति कैयटादिभिरुक्तम् ( ११६ ); इति खण्डने टीकाकृता वर्धमानेन विक्लिततम् इति भवितव्यमित्युक्तम् ( ११६ ); निघण्टुषु प्रसिद्धेरित्याकरः ( ११७ ), भट्टमल्लस्य... चाभिधानं चिन्त्यम् ( ११७ ); कैयटेनोक्तत्वात् ( १२० ); तरङ्गिणीकारोऽप्येवं प्रतिपेदे ( १२३ ), बोपदेवोऽपि ( १२३, १२७ ); इति माधवोक्तेः ( १२५ ), इति माधः ( १२७ ), मुरारेः परस्मैपदप्रयोगः प्रमादः ( १२८ ); इति दौर्गाः ( १३४ ); इति माधवः ( १३५, १८१, २०१, २११ ); माधवादयः ( १३७, १७६ ); न्यासकैयटहरदत्तमाधवादयः ( १४२ ); भट्टिप्रयोगस्तु चिन्त्यः ( १६८ ); माधवोक्तेश्च ( १६९ ; न्यासकारेणोक्तम् ( १६९ ; इत्यात्रेय इति माधवीये ( १७० ), आत्रेयस्तु ( १७६ ; कौमं रात्स्वेतो भाषायामनुमन्यन्ते ( १८० ); आपिशलास्तु ( १९४ ), इति न्यास-( १८० ); क्षीरस्वामिमते ( १९९ ); न्यासपदमञ्जरीप्रदीपादिषु तु ( १९९ ); चान्द्रास्तु ( २०३ ), इति स्वामी ( २१० ); कविरहस्ये ( २१८ ); माधवोऽप्याह ( २३० ); यत्तुमाधवेनोक्तम् ( २३० ); शाकटायनक्षीरस्वाम्यादयो न पठन्ति ( २३९ ); शाब्दिकाभरणे क्षेगोनीति गुण उदाहृतः ( २३६ ); क्षीरस्वाम्याह ( २३९ ); माधवस्तु ( २४३ ); माधवेन ( २४४ ); सुधाकरादयः ( २४८ ); कैयटः ( २५०, ४०१ ); इति सीरदेवः ( २५१ ); क्षीरस्वामी त्वाह

( २५२ ); वैद्यादेस्तु ( २५८ ); कैयटेनोक्तम् ( २६१ ); तदेतन्न्यासकारेणोपेक्षितम् ( २८३ ); तदुक्तं वोपदेवेन ( २८४ ); स्वामी तु ( २८५ ); न्यासकार० ( २८६ ); इति न्यासः ( ३००, ४८९, ); माधववोपदेवाभ्याम् ( ३०७ ); चान्द्रोदाहृतमनादेयम् ( ३१७ ), यत्त्वत्र माधवेनोक्तम् ( ३१७ ), कैयट० ( ३१७ ), यदत्र माधवेन···, तच्चिन्त्यम् (३२०), यदुक्तं न्यासकृता ( ३२१ ), इति माधवादयः ( ३२२ ), पाणिनीयास्तु ( ३२२ ), न्यासे तु ( ३२२ ); माधवादयः···इत्याचिष्टन्ते, तदसमञ्जसम् ( ३२२ ); भाष्यकैयटयोः ( ३२३ ), तदुक्तं क्षीरतरङ्गिण्याम् ( ३२५ ), न्यासकारोऽप्याह ( ३२६ ); इति माधवादयः ( ३२६ ), माधवादिभिः ( ३२८ ), वामनव्याख्यानेनानयः ( ३२९ ); माधवोदाहृतं चिन्त्यनामावहेत् ( ३२९ ); कैयटोऽप्याह ( ३३६ ), इति माधवोक्तं प्रयुक्तम् ( ३३७ ), तथा च भट्टि ( ३४३ ), इति माधव. ( ३३९, ३५५, ३६५, ); इति कैयटोक्ते ( ३५७ ), तदुक्तं मुग्धबोधे ( ३५७ ), कैयटादीनां मते ( ३५७ ), इति वैजयन्त्याम् ( ३५८ ), माधवोदैरुदाहृतम् ( ३५९ ), माधवमतमनुसृत्य ग्रन्थो व्याख्यातः ( ३६० ); इति कैयटः ( ३६३ ), वामनस्यापि मते ( ३६३ ), वामनमताह ( ३६४ ), दुर्गगुप्तादयः ( ३६४ ), अत्राह कैयटः ( ३६५ ), कैयटस्तु ( ३६६ ), चान्द्रे तु ( ३३८ ); व्याख्यात च कैयटेन ( ३६९ ), इत्यात्रेयमाधवौ ( ३७३ ), इति न्यासः ( ३७६ ), कैयटादयः ( ३८० ), रघु. ( ३८० ), कृष्णप्रयोगमप्याह ( ३८२ ), मुरारिप्रयोगश्चिन्त्यः ( ३८७ ), इति दुर्घटः ( ३८७ ), भट्टिप्रयोग ( ३९७ ), इति कैयट. ( ४०१ ), कैयटस्त्वाह ( ४०२ ), माघप्रयोगोऽपि व्याख्यातः ( ४०२ ), इति जयमङ्गला ( ४०५ ); उदाहृत चात्र वैरूप्यं माधवादिभिरित्यास्तामेतत् ( ४१७ ), न्यासकारोऽपि ( ४१६ ); तथा वोपदेवः ( ४३१ ), भट्टिकाव्ये तु पुनि प्रयुज्यते ( ४५८ ); पुरुषोत्तमादयोऽप्येवम् ( ४५८ ), पुरुषोत्तमेन व्याख्यातम् ( ४५९ ); भट्टिप्रयोगात् ( ४५९ ), माघस्तु ( ४६४ ); इत्यमरकोषव्याख्याने क्षीरस्वामी ( ४७० ), माघः प्रायुङ्क्त ( ४७१ ), तदाहामरवचने ( ४८० ); तथा चामरः ( ४८१, ५८० ); कैयटोऽपि ( ४८२ ); समर्थितहेतानि···, तदपि तुच्छम् ( ४८८ ); न्यासकारस्त्वाह ( ४९४ ); यदाह न्यासकारः ( ५०० ); इति न्यासात् ( ५०१ ); यदन्यत्र न्यासे उक्तम् ( ५०३ ); माधवेनात्रैवमभिधानात् ( ५०२ ); मुग्धबोधानुसारेण ( ५०८ ); तथा च माघः ( ५२१ ); तथा च न्यासः ( ५५९ ); यदाह वामनः ( ५६८ ); इति न्यासादयः ( ५८४ ); रामचन्द्रनाम्नाचार्येण प्रकाशिता ( ६१४ ); विट्ठलेन व्याख्यातः ( ६१५ )।

इत्थं प्रकारान्तरेण बहूनां ग्रन्थानां ग्रन्थकाराणां च मतानि निराकृतानि, क्वचिच्च स्वमतपोषणार्थमङ्गीकृतानि । इह 'तथा च' 'तु' 'अपि' इत्यादिभिः प्रयोगैरालोचनासूक्ष्मेक्षिका विभावनीया सुधीभिः । मन्ये, 'अष्टधातुकारः' 'शाकटायनः' 'कृष्णप्रबोधः' 'नैमिदोषः' इत्यादीनि नामानि सर्वैनिह्नो नूतनानि मन्वीरन्नुनर्विष्यन्ति बुधाः । इह वाल्मीकीयरामायण-महाभारतादीनां प्राचीनानां लक्ष्यग्रन्थानां प्रयोगा विरलाः, कालिदासभारविप्रभृतीनां प्रयोगास्तु लक्ष्यतया समालोच्यन्ते ।

शेषकृष्णस्य व्याख्याप्रकारोऽसामान्यस्तं विशिष्टकोटिकानां व्याख्याकाराणां पङ्क्तावुपवेशयति। कानिचन निदर्शनानीह विभाव्यन्ताम्—इति न किञ्चित् कष्टम् (१३); इति तु मतान्तरम् (१६), नैष दोषः, निपातनानामनेकार्थत्वात् (२६), अत्रापपाठेऽपि न दोषः (७०), नैतत् सुष्ठूच्यते (७०), गुणग्रहणं चिन्त्यप्रयोजनम् (१२०), फलं चिन्त्यम् (१०७); अत्र पक्षे प्रयोजनं चिन्त्यम् (१४६), इति चिन्त्यम् (१६७), तदनाकरम् (१७४); अत्र च व्याख्यानमेव शरणम् (३२१); अनश्चिन्त्यमेतत् (३२९) अत्र फलभेदोपपादनार्थमिदमुपन्यस्तम् (३२९); कथञ्चिन्निर्वाह्यम् (३३०), तदेतदज्ञानविजृम्भितम् (३३३), इति भाष्याणि मध्यबुद्धिभिः (३३४), विशेषणं चिन्त्यप्रयोजनम् (४८०), तदेतच्चिन्त्यप्रयोजनम् (५०१) इति।

प्रकाशकारो यद्यपि सर्वत्र व्याख्यायां नामग्राहं मतानि न गृह्णाति, तथापि तदीय-स्वपरमतविवेकः स्थाने स्थाने समुज्जृम्भते। यथा—एतच्च परमतेनोक्तम् (७९), स्वमते तु (७६); स्वमते पुनः व्याहरेयमित्याहुः (७६), ये तालव्यान्तं पठन्ति तन्मतेनोक्तम् (९०); एतत् परमतेनोक्तम् (२११); तदेतत् परमतेनोक्तम् (३४७); माधवमतमनुसृत्य ग्रन्थो व्याख्यातः (३६०), इति जयादित्यमतमनुसृत्य व्याचष्टे (३९६); एतच्च वार्तिकमतेनोदाहृतम् (५३१); इति तु प्रकाशः (१३६) इति।

स्वग्रन्थस्य शब्दालङ्कारस्य नामोल्लेखोऽनेकत्र क्रियते प्रकाशकारेण—प्रपञ्चित चैतद् शब्दालङ्कारे (२२), शब्दालङ्कारे समाहितमस्माभिः (४०२); शब्दालङ्कारादनुसन्धेयानि (४२६) इति।

शेषकृष्णेन स्वव्याख्यायां पाठनिर्धारणादौ नामनितरसाधारणं वैदुष्यं प्रदर्शितम्—अत्रापपाठेऽपि न दोषः (७०); पाठश्चिन्त्यप्रयोजनः (७८); अनेकार्थपाठस्तु प्रपञ्चार्थः (८७); अत्र चुपे: पाठो व्यर्थः (८८); अस्य स्वादिपाठे प्रयोजनं चिन्त्यम् (१०४), अत्रैव त्वेतत् पठितं युक्तम् (११७); मिवादिषु स्नुप्वजोः पाठोऽङ्व्यवायेऽपि विकल्पार्थः (१२१); इत्यनाकरः पाठः (१३४); केचिदमुमुदितं पठन्ति (१४०), अनेशनिति पाठे निपातोऽयमादेशः (२१०); एवं तु द्युतादिपाठे प्रयोजनं चिन्त्यम् (२१२), क्वचिदौकार इति पाठः (२९४); ह्रस्वपाठ एव ज्यायान् (३४१), क्वचिद् वेदयतेति पाठः प्रामादिकः (३५३); 'समः क्ष्णुवः' इति सविसर्गपाठ: (३९८); क्वचित्तु तङाद्येकवचनमिति पाठः (४०९), न्यासादिस्तनयोः पाठः प्रामादिकः (४३०); क्वचिद् विकल्पः पठ्यते, सोऽनाकरः (५००), वेरिति त्वपपाठः (५०८) इति।

बहुत्र व्याख्यायां पाणिनीयसूत्रस्य प्रत्याख्यानविषये भाष्यकारमतमुल्लिखितम्—एतद् सूत्रं भाष्ये प्रत्याख्यातम् (२९) इति। अनेकत्र सूत्रकारस्याऽऽशयो निर्णीतः—सूत्रकारस्तु मन्यते (३१), सूत्रकृतोऽभिप्रायः (३१) इति।

प्रायो दशमखीस्तशताब्दीतो वैयाकरणा लक्षणाश्रिता लक्ष्याणि नान्विष्यन्ति स्म। शेषकृष्णस्तत्रापवादो नास्ति। 'हन हिंसागत्योः' इति धातोर्गत्यर्थकत्वं परवर्तिषु ग्रन्थेष्वनालोच्य तेन तस्य प्रपञ्चार्थत्वमास्थितम्। वस्तुतो हन्-धातोर्गत्यर्थो वाल्मीकीयरामायणे-हतस्य (२,७३,२) = प्रापितस्य (तिल०); महाभारते—ब्राह्मणो हन्तुमर्हति (९,४१,३९) = गन्तुम् (नील०); हृतः (८,१,५६) = गतः (नील०); हन्यमानस्य (५,१३३,४०) = अनुद्रुतस्य। अत्र हन्तिर्गत्यर्थः (नील०) इति। 'इणादेः सनुमः' (८।४।३२) इति सूत्रव्याख्याने प्रकाशकारः 'अत्राहुः'

इत्यारभ्य मतान्तरमुद्धरति । तत्र मगि सर्पणे' इति पाठः कस्मिन् सम्प्रदाये विलसतीति मौनमातिष्ठते । वस्तुतोऽसौ पाठो वोपदेवीयो न तु पाणिनीयः ।

प्रकाशकारः प्रक्रियाकौमुदीकारं रामचन्द्राचार्यं सर्वत्र समादरवशाद् आचार्यपदेन स्मरति । यत्रापि तदीयान् दोषान् नाविष्करोति—आचार्यस्तु विशेषाभावात् सुट् नोदाहृतः (१७); आचार्यस्तु ···· (१२३६८); पठिष्यत्याचार्यः (३२); निषेधसूत्रमुपेक्षितमाचार्यैः ३४), आचार्यैस्त्वत्र सूक्ष्मेक्षिका न कृता (५६); आचार्यैस्त्वन्यमताभिप्रायेणैतदुदाहृतम् (६४) आचार्यास्तु तालव्यान्तस्यैव ग्रहणमिच्छन्ति (६७; शैली चेयमाचार्याणामन्यत्रापि दृष्टिचरी ८१); न त्वाचार्यैर्धातुविशेषणं व्याख्यानम्, तदेवं पर्युदासेऽपि भाष्ये दोषा उद्घृता इत्याचार्यैः स एवाहृत. (९३), अनेकाच इत्यस्यानुवृत्तिराचार्यैर्दर्शिता (१०४); आचार्यास्तु प्रसज्यप्रतिषेधं मन्यमाना न तु निष्ठायामिति व्याचख्युः (१०९); आचार्यैरपि तदेवानुसृतम् (१४५), आचार्यास्तु (१८६), तदनुसारेणाचार्यैरप्युदाहृतौ (१९०), आचार्यास्तु कातन्त्रानुसारिणः प्रसज्यप्रतिषेधं मन्यमाना जित्वमुदाहरन्ति (२३०); अत एवाचार्यैः कुटादिभिः सपुटीकृत्योदाहृतः (२३१); इति तावदाचार्याणां हृदयम्, आकरे त्वन्यथा व्याख्यानम् (२७७); आचार्यास्तु ···इति मन्यन्ते (३०९), अत एवाचार्यैः कृदन्त एव दीर्घं उदाहृतः (३२३); केचिदित्याचार्यैरप्युक्तम् (३२५), तत्रभवद्भिराचार्यपादैः -वामनवाक्यं प्रमाणयद्भिः—इदमुदाहृतम् (३३०), इत्याचार्याणामभिप्रायः (३३१), व्युत्पत्तिपक्षमाश्रित्याचार्यैरुक्तम् (३४०), आचार्याणां तु सुबन्तादेशोऽन्तत्तो स्वरम (३६०), श्रद्धातिशयादाचार्यैः पुनरप्यु पात्तमिति ध्येयम् (३६१), आचार्यैरप्युपेक्षितानि (३६३, इह तु आचार्यैराश्रविघर्षणार्थेन विगृह्यते (३७०), आचार्यैस्त्वेतत् कातन्त्रे दर्शनादुदाहृतमिति ज्ञेयम् (३७१), आचार्यास्तु हृक्रोर्नेन नियममनिश्रियन् (४२०), आचार्यास्तु (४६३) आचार्यैस्तु ···· इति प्रौढिवादेनैतदुक्तम् (४६८), आचार्यैस्तु गिरिशमुपचचार इत्यादिलोकेऽपि प्रयोगदर्शनान्नेदमादृतम् (४९१), आचार्यैर्नैतयुरनिबद्धमिति बोद्धव्यम् (४६४) अयं च पक्ष आचार्याणामप्यभिप्रेतः (५१३) इदमेवाचार्यस्याभिप्रेतम् (५२३), आचार्यैः संगृहीतमिति द्रष्टव्यम् (५७४), आचार्यैस्तु काशिकानुसारात् तथा विमृश्य लिखितम् (६०४), आचार्यैस्तु ·· लिङ्स्वरमात्रमुदर्शितम् (६१३) इति ।

प्रक्रियाकौमुद्याः प्रथमे भागे 'प्राञ्चः' 'प्राचा' इत्यादिवचनैः शेषकृष्णेन समीक्षितः प्रसादकारो विट्ठलाचार्य इति मया प्रास्ताविके दर्शितम् । द्वितीयस्य भागस्य प्रास्ताविके तु केचिदंशाः समुपन्यस्ताः । शेषकृष्णेन विट्ठलाचार्यमतानि विशेषतः समीक्ष्यन्ते साग्रहमिति तत्रत्यं रहस्यं विचक्षणचर्णैर्ध्यातव्यम् । तस्मिन् प्रास्ताविके मया तत्र तत्र तुलनार्थं प्रसादकारमतान्यपि प्रसादटीकाग्रन्थपृष्ठादिनिर्देशपुरस्सरं समुद्धृतानि । इह तु केवलं प्रकाशसमीक्षितान्येव स्थानानि निर्दिश्यन्ते । तुलनास्पृहयालुभिर्विद्वद्भिर्जिज्ञासुभिश्च प्रसादस्थलान्यविकलानि तत्पुस्तकादेव विचेयानि । उद्धियते विट्ठलाचार्यमतसमीक्षा प्रकाशकारकृतेह मया । यथा—यत्तु······प्राचा व्याख्यानम्, तदसत् (१), यत्तु······ व्याख्यातं प्राचा, तदसत् (२), इति व्याख्यातं प्राचा, तदसत् (३), यत्तु प्राचोक्तम्······, तदेतद् भाष्यकैयटपदमञ्जर्यादिष्वनूद्य कण्ठतो दूषितम् (४, इति प्राचा व्याख्यातम्, तदसत् (१५), इति प्राचोक्त-

मपास्तम्, १८;४२३ ); यत्तु ······प्राचा व्याख्यातम् तदसत्, इति प्राचोक्तमनादेयम् (५२); इति प्राचोक्तमपास्तम् (५२ ); यत्तु ··· तदपि न ( ६६ ); यत्तु प्राचोक्तम्······ वम् ( ११० ); यत्तु प्राचोक्तम् ·· तदसत् ( ४१४ ); यच्चाकारोच्चारणं ज्ञापकमित्युक्तम्, तदप्यसत् ( ११४ ), यत्तु प्राचोक्तम् ······, दूषितत्वादुपेक्ष्यम् १२५ ), यत्तु प्राचा तदसत् ( १३४ ); इति प्राचोक्तमनादेयम् ( १७३); यत्तु प्राचा सन्वद्भावोऽप्युक्तः ( २५०); यत्तु प्राचोक्तम्······ अयुक्तम् ( २५१ ); अत्र प्राचोक्तम्,···· तदसत् ( २६४ ); अत्र प्राचा 'शद्लृ शातने' इति निपातनादेव तत्त्वं भविष्यतीति शङ्कित्वा·· परिहृतम्, तदसत् ( २७५–७६ ); इति प्राचोक्तम्,·· ···अनुपादेयम् ( २८४ ); यत्तु प्राचोक्तम्······तद् भ्रान्तिप्रलपितम् ( २६६ ); अत एव प्राचा नायं ग्रन्थः स्पृष्ट इत्यालोचयामः ( ३१० ); अत्र प्राचोक्तम्····· एतत् तु निर्मूलत्वादप्रमाणम् ( ३०६ ); यत्तु प्राचोक्तम् ·····, तदसत् ( ३७६,४८८,५५२ ); यत्तु प्राचा·· ···, तदसत् ३८०,८१ ); यत्तु प्राचोक्तम्······ इति, तदसत् ( ३६७ ); इति प्राचः प्रमादः ( ४१४ ; यत्तु······इति प्राचोक्तम्, तदसत् (४८४); यत्त्वत्र·· ·· इति प्राचोक्तम्, तत् प्रमत्तभाषितत्वान्नादेयम् (५१४); इति प्राचोक्तमनादेयम् ( ५७१ ) इति।

क्वचित् विट्ठलाचार्यमतमनालोच्यैव समुद्भूत इति प्राञ्च·, ( २९ ); प्राचा तु ( ६४ ); इति प्राचोक्त व्याख्यातम् ( २८६ ); यत् प्राचोक्तम्, एतच्च परमतम् ( ४१६ ); इति प्राचोक्तम् ( ५०८ ); इति प्राचोक्तेरङ्गैव भाष्यम् ( ५७४ ) इति।

इयं प्रक्रियाकौमुदी बालव्युत्पत्तये रामचन्द्राचार्येण संक्षिप्योक्ता। अतः पाणिनीयानि सर्वाणि सूत्राणि नैवेह व्याख्यातानि। वैदिकप्रक्रियायां केवलं चतुश्चत्वारिंशदेव सूत्राणि व्याकृतानि। अन्ते तेनेत्थं श्लोकितम्—

आनन्त्यात् सर्वशब्दा हि न शक्यन्तेऽनुशासितुम्।

बालव्युत्पत्तयेऽस्माभिः संक्षिप्योक्ता यथामति॥ इति।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये नव्यव्याकरणविभागाध्यक्षचरैः सुगृहीतनामधेयैः पण्डितप्रवरैः श्रीमुरलीधरमिश्रमहाभागैर्महताऽऽयासेन संपादितोऽयं सप्रकाशो ग्रन्थो विश्वविद्यालयेन चतुर्दशवर्षेभ्यः प्राग् मुद्रापयितुमुपक्रान्तः। स चायमधुना चतुर्दशवर्षे त्रिषु भागेषु कार्त्स्न्येन प्रकाशमुपेयमानो विदुषां जिज्ञासूनाम् अनुसन्धित्सूनां च भृशमुपकारकः सेत्स्यति। श्रीमिश्रमहोदयानामस्वास्थ्यात् प्रस्तुते हस्तलेखे सम्पादनदृशा बहुत्राकरस्थलनिर्देशपूर्वकमोक्ष्य-संशोधनादिकार्यं प्रकाशनाधिकारिणा डॉ० हरिश्चन्द्रमणित्रिपाठिना ऽनुष्ठितम्। सूत्रेषु क्रमाङ्कविनियोजनाऽपि तेनैव विहितेति संस्करणमिदमुद्गाढमुपादेयतामधादिति ध्रुवं विश्वसिति

वाराणस्याम् — भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
मेषसंक्रान्तौ २०३७ वै० — निदेशकः
( १३–४–८० खी०रब्दे ) — अनुसन्धानसंस्थानस्य

१०. स्वरितञितः कर्त्रभिप्राये क्रियाफले [१।३।७२]

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले ।

११. तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः [ १।४।१०१]

तिङ्प्रत्याहारः तिङ उभयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ।

---

स्वरितञित इति । द्वन्द्वान्ते श्रूयमाणः इच्छब्दः प्रत्येकमभिसंबध्यते इत्याह— स्वरितेत इत्यादि । कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम् । कर्मण्यण् प्रकृतधातु[१]-वाच्यायाः क्रियायाः प्रधानभूत यत्फलम्, तदर्थमसौ क्रिया प्रवर्तते तच्चेत् प्रत्ययवाच्य-कर्तृगामिविवक्षितमित्यर्थः । यथा यजते यजमानः इत्यत्र यागफलस्य स्वर्गादेः प्रधानस्य यजमानगामित्वम् । यजन्ति याजकाः इत्यत्र न भवति । न हि यज्ञफलं स्वर्गादि-ऋत्विग्गामि । यच्च ऋत्विग्गामि दक्षिणादि न तत्प्रधानं फलम् । न हि ऋत्विजो दक्षिणां लभेरन् इति यजमानो यागमारमते किन्त्वहं स्वर्गं लभेयेति ।

उक्तं च—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते यज्ञादयः ।
तत्प्रधानं फलं तेषां न लाभादिप्रयोजनम् ॥

इह तु स्वामिदासौ पचत इति क्रियामात्रविवक्षया परस्मैपदम् । यदा तु स्वामिधर्मो दासे आरोप्यते तदा स्वामिदासौ पचेते इत्यपि भवति । सुचेतनेऽपि कर्तृत्ववत् कर्त्रभिप्रायारोपाद् भवति । "कमलवनोद्घाटनं कुर्वते ये" इत्यादि ॥ १० ॥

तिङस्त्रीणि इति । ननु तिङः षट् त्रिकाः संज्ञिनः[२] संज्ञाश्च तिस्रः इति यथा-सङ्ख्यं न प्राप्नोतीत्याह—तिङः उभयोरिति । अत्र परस्मैपदमात्मनेपदमिति चानुवर्तते तयोः संज्ञा प्रत्येकं प्रवर्तते । तिङः परस्मैपदसंज्ञानि त्रीणि त्रीणि प्रथमादिसंज्ञानि । एवं तिङः आत्मनेपदसञ्ज्ञान्यपि त्रीणि त्रीण्युक्तसञ्ज्ञानीति । तिङ्ग्रहणं तु शतृक्वसुकानजादिनिवृत्त्यर्थम्[३] । प्रथममध्यमोत्तमाश्च[४] प्रथममध्यमोत्तमाश्च प्रथम-मध्यमोत्तमा इति द्वन्द्वैकशेषेण सञ्ज्ञा अपि षट् तेन षण्णां त्रिकाणां षट् संज्ञाः क्रमेण भवन्ति । अत्रापि पक्षे परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव । पुरस्तादिसंज्ञा शतृक्व-सुशानच्कानज्विषये सावकाशे परस्मैपदात्मनेपदसंज्ञे मा बाधिषत इति ॥ ११ ॥

---

१. प्रकृति इति ख० पु० ।
२. संज्ञिन इति नास्ति ख० पु ।
३. कान निवृत्त्यर्थमिति ख० पु० ।
४. पद्देत्यधिकः ख० पु० ।

१२. तान्येकवचनद्विवचनबहुवचनान्येकशः [१।४।१०२]

तिङस्त्रीणि त्रीणि वचनान्येकैकश एतत्संज्ञानि स्युः।

१३. शेषे प्रथमः [ १ । ४ । १०८ ]

युष्मदस्मद्विषयादन्यत्र प्रथमपुरुषः स्यात्।

१४. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः [ १ । ४ । १०५ ]

तिङ्वाच्यकारकवाचिनि युष्मदि स्थिते स्थानिन्यपि मध्यमपुरुषः स्यात्।

---

तानीति। तिङस्त्रीणि त्रीणीत्यनुवृत्त्यैव सिद्धे तानिग्रहणं सञ्ज्ञासमावेशार्थम्। येषां पुरुषादिसञ्ज्ञाः कृतास्तानि लब्धपुरुषसञ्ज्ञानि त्रीणि। एकश एकवचनादि—सञ्ज्ञानि स्युरिति। अन्यथैकसञ्ज्ञाधिकारात् पुरुषवचनसङ्ख्याः पर्यायेण स्युः। एकश इति। एकमेकमित्येकशः। "सङ्ख्यैकवचनाच्च वीप्सायाम्" ( ५। ४। ४३ ) इति प्रथमान्ताच्छस्। वृत्तौ त्वेकैकश इति वीप्सायाः शसैवोक्तावपि "नित्यवीप्सयोः" (८। १। ४) इति द्वित्वम्। यथा चैतत्तथा "सुपः" ( १।४।१०३) इत्यत्रोक्तम् ॥१२॥

शेषे प्रथम इति। शेष इति मध्यमोत्तमविषयादन्यो विषय उच्यते। यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्रेत्यर्थः। एतेन युष्मदस्मदोरर्थाभावः शेषो न पुनरन्यसद्भाव इति दर्शयति युष्मदस्मद्विषयादन्यत्रेति। तेन त्वं च देवदत्तश्च पचथः। अहं च देवदत्तश्च पचाव इति प्रथमो न भवति ॥ १३ ॥

युष्मदि। समानमधिकरणं वाच्यं यस्य स समानाधिकरणः समानाभिधेय इत्यर्थः। तत्र केन समानाभिधेयत्वमित्याशङ्क्याह—तिङ्वाच्यकारकवाचिनीति। प्रकृतत्वात्तिङस्तदपेक्षयैव समानमभिधेयत्वं विवक्ष्यते इति भावः। यद्यपि भावकर्मकर्तारस्त्रयोऽपि तिङ्वाच्यास्तथापि युष्मदस्मदोर्भाववाच्यत्वासम्भवात् कर्मकर्तृवाच्यत्वमेवं गृह्यते इत्यलम्।

कारके इति। यत्रार्थे कर्तरि कर्मणि वा तिङुत्पद्यते तदेव चेद् युष्मदभिधत्ते तत्रेत्यर्थः। तेन त्वया पच्यते ओदन इत्यत्र न भवति। त्वामतिक्रान्तोऽतित्वम् भवति; अत्यहम्भवतीत्यत्रापि न भवति। इह चात्वं त्वं सम्पद्यते[१] त्वद् भवति मद् भवतीति संधौ भवन्ति ब्राह्मणा इतिवत् प्रकृतेरेव प्राधान्यात् प्रथम एव भवति न मध्यमोत्तमौ अन्ये तु सुवर्णपिण्डः खदिराङ्गारवर्णे कुण्डले भवत इति पस्पशाभाष्ये विकृतिप्राधा-

---

१. महतीभूता महद्भूतेति ख० पु०।

## १५. अस्मद्युत्तमः [ १ । ४ । १०७ ]

अस्मदि तु तथाभूते उत्तमपुरुषः स्यात् । भू सत्तायाम् । कर्तृविवक्षायां भू तिप् इति स्थिते ।

---

न्यापेक्षद्विवचनप्रयोगाद् अमहतीभूता महद्भूता ब्राह्मणीति विकृतिप्राधान्यमाश्रित्य समानाधिकरणलक्षणपुंवद्भावदर्शनाच्च विकृत्याश्रयौ मध्यमोत्तमौ यथाविवक्षं भवत इत्याहुः ।

यदा त्वमत्वमित्यहमनहमिति त्वमित्येवं विपर्यस्ताध्यवसितौ युष्मदस्मदर्थौ विवक्ष्येते भवत्येव त्वद्भवामि मद्भवसीति ।

स्थिते इति । प्रयुज्यमाने स्थानिन्यपि । यत्र युष्मच्छब्दो न प्रयुज्यते तदर्थस्तु गम्यते तत्रापीत्यर्थः । भवान् पचतीत्यत्र तु न भवति । अलिङ्गः संबोधनैकविषयश्च युष्मदर्थः । भवदर्थो लिङ्गवान् न तु संबोधनैकविषयः इति भिन्नार्थत्वात् । यत्तु माधवेनोक्तम्—यदास्मात् संबोधने विभक्तिस्तदा युष्मदर्थयोगाद् मध्यमो भवति हे भवन् भवसीति । तदसत् । कथञ्चित् सम्बोधनविषयत्वेऽप्यलिङ्गत्वासम्भवेनायुष्मदर्थत्वादवस्थात् । महञ्च भवांश्चेति सहविवक्षायामपि आवां भवावः इत्युत्तम एव भवति । "पूर्वशेषदर्शनाच्चेति" भाष्यवचनादस्मद एव शेषो न भवति इति "त्यदादीनाम्" ( वा० ) इत्यत्र स्थितत्वात् ॥ १४ ॥

अस्मद्युत्तम इति । तथाभूते इति । तिङ्वाच्यकारकवाचिनि स्थिते स्थानिन्यपीत्यर्थः । इह त्वं चाहं च पचाव इति प्रत्येकनिष्ठकर्तृशक्तिद्वयाभिधानाय यदैक एव लकारः प्रवर्तते तदा परत्वादुत्तम एव भवति ।

भूसत्तायाम् । भू इत्ययं शब्दः सत्तायां वर्तते[1] इति शेषः । भू इत्यविभक्तिको निर्देशः । छान्दसो वा सुपो लुक् । सत्तेहात्मभरणम् । तदाह यास्कः—"अस्तीत्युत्पन्नस्यात्मावधारणमाचष्टे इति न तूत्पत्तिरेव सत्ता । तत्र जातस्तत्र भवः इति भेदेन निर्देशात् । सत्तायामिति चार्थान्तराणामप्युपलक्षणम् । हिमवतो गङ्गा प्रभवति, मल्लो मल्लाय भवति, परान् पराभवति, समनुभवति इत्यादावर्थान्तरप्रतीतेः । उपसर्गाणां द्योतकत्वात् । तथा चोच्यते "अनेकार्था हि धातवः" इति । एवं कुर्द-खुर्द-गुर्द-गुद क्रीडायामेवेत्यवधारणोपपत्तिः । हन हिंसागत्योरित्यादि क्वचिदनेकार्थप्रदर्शनम् प्रपञ्चार्थम् । आदौ भू इति निर्देशो महाव्याहृतिस्मरणेन मङ्गलार्थः ।

कर्तृविवक्षायाम् इत्यादि । भू इत्यस्य 'भूवादयो धातवः" ( १ । ३ । १ ) इति धातुसंज्ञायां "वर्तमाने लट्" ( ३ । २ । १२३ )। स यदा "लः कर्मणि"

---

१. तत्र लस्य तिबादि इति ख० पु०

१६. तिङ्शित् सार्वधातुकम् [ ३ । ४ । ११३ ]

तिङ्शितश्चैतत्संज्ञाः स्युः ।

१७ कर्तरि शप् [ ३ । १ । ६८ ]

कर्त्रर्थे सार्वधातुके परे धातोः शप् प्रत्ययः स्यात् । शपावितौ ।

१८. सार्वधातुकार्धधातुकयोः [ ७ । ३ । ८४ ]

एतयोः परयोरिगन्तस्याङ्गस्य गुणः स्यात् । भवति । भवतः ।

---

( ३ । ४ । ६९ ) इति वचनात् कर्तरि भवति तदा तावदुदाह्रियते इत्यर्थः । भावकर्मप्रक्रियां त्वग्रे दर्शयिष्याम इत्यर्थादुक्तम् । तस्य[1] तिबादिषु "शेषात्" ( १ । ३ । ७८ ) इति परस्मैपदम् । "शेषे प्रथमः" ( १ । ४ । १०८ ) "द्व्येकयोर्द्विवचनैकवचने" ( १ । ४ । २२ ) इत्येकवचने तिपि पकारस्येत्त्वलोपयोः भू–ति इति स्थिते सत्युच्यमाने इति शेषः ॥ १५ ॥

तिङ्शित् । एशः शित्त्व सर्वादेशार्थम् इति परत्वाद् "लिट् च" ( ३ । ४ । ११५ ) इत्यार्धधातुकसंज्ञैव भवति । तेन जग्ले इत्यातो लोपो भवति । तिङा साहचार्याद्धात्वधिकाराच्च शिदपि धातुप्रत्यय एव गृह्यते । तेन वारिणी इति शीभावस्यासार्वधातुकत्वात् नोपधागुणः ॥ १६ ॥

कर्तरि शप् । कर्तरि वाच्ये इति नार्थः विकरणानामनर्थकत्वादित्यालोच्य व्याचष्टे—कर्त्रर्थे सार्वधातुके इति । शपावितौ इति । "लशक्वतद्धिते" ( १ । ३ । ८ ) इति शः । "हलन्त्यम्" ( १ । ३ । ३ ) इति च पः इत्संज्ञे इत्यर्थः ।

न च कार्यः शकारोऽयमार्धधातुकतो गुणः ।
प्रदेशस्थे शकारे चेत्युक्ते न स्युः पिबादयः ॥
अथायं केवले शित्त्वे सार्वधातुकसंज्ञके ।
अपित्त्वात् ङित्त्वमभ्येत्य संक्रमाय प्रकल्पते ॥

सार्वधातुकार्धधातुकयोः । "इको गुणवृद्धी" ( १ । १ । ३ ) इत्यस्योपस्थानादाह—इगन्तस्येति । अङ्गस्येत्यधिकारात् । अथात्रोवङ् कस्मान्न भवति गुणस्त्वनजादौ सावकाश इत्यत आह—गुणवृद्धी इत्यादि । इयङादीत्यादि शब्दादुवङं वारयति । भेदयतीति "एरनेकाच" ( ६ । ४ । ८२ ) इति यणमपि । "इको यणचि" ( ६ । ४ । ७७ ) यण् त्वियाङादिभिरेव येन नाप्राप्त्या बाध्यते । "विप्रतिषेधे परम्" ( १ । ४ । २ ) इति वचनात् । क्वचिन्नैतत्पठ्यते । भवतीति गुणे कृतेऽवादेशः ।

---

१. अयं श्लोको नास्ति ख० पु० ।

## १९. झोऽन्तः [ ७ । १ । ३ ]

प्रत्ययादेर्झस्यान्तादेशः स्यात् । अतो गुणे । भवन्ति । भवसि । भवथः भवथ ।

---

ननु शपः पूर्वमेव परत्वात्तिबाश्रय एव गुण उदाहर्तुमुचितः । न च नित्यत्वाच्छपैव पूर्वं भाव्यम् । गुणस्यापि कृताकृतप्रसङ्गित्वेन नित्यत्वात् । सत्यम् । "भूसुवोस्तिङि" ( ७ । ३ । ८८ ) इति निषेधात्तिबाश्रयः गुणो न भवतीति शपमवतार्य प्रदर्शितः । तसादिषु चिनुतः, तुदतीत्यादिषु च गुणस्य कृताकृतप्रसङ्गित्वासम्भवादादौ विकरण एव नित्यत्वाद् भवति । यदि तु सार्वधातुकसामान्यापेक्षया कृतप्रसङ्गश्चिन्त्यते ततः शबेव नित्यो न गुणस्तस्मादादावप्रसङ्गात् इति न किञ्चित् कष्टम् ।

भवत इति । द्वित्वे द्विवचनं तस् । पूर्ववच्छबादि । रुत्वविसर्गौ । "न विभक्तौ तुस्माः" ( १ । ३ । ४ ) इति निषेधात् सस्य "हलन्त्यम्" ( १ । ३ । ३ ) इति नेत्वम् ॥ १८ ॥

झोऽन्तः । अत्र "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" ( ७ । १ । २ ) इत्यतः प्रत्ययग्रहणमनुवर्तते । आदिग्रहणं निवृत्तम् । अन्यथा शयान्ते इत्यत्र शीङो लेटि "लेटोऽडाटौ" ( ३ । ४ । ९४ ) इति लावस्थायामेवाटि कृते झस्यानादित्वान्न स्यात् इत्याकरे स्थितम् । तत्कथं व्याख्यायते प्रत्ययादेरिति । सत्यम् । छान्दसमेतत् तत्र "बहुलं छन्दसि" ( ७ । १ । ८ ) इत्यनादेरपि भविष्यतीत्यदोषः ।

यद्वा प्रत्ययेनादीयते उपादीयतेऽवयवत्वेनेति प्रत्ययादिः प्रत्ययावयव इत्यर्थो व्याख्येयः । आङ्पूर्वकाद् दाञः "उपसर्गे घोः किः" ( ३ । ३ । ९२ ) । वस्तुतस्त्वडागमोऽपि कृतेऽस्तु नाम तत्सहितोऽपि प्रत्ययो न तु तत्सहित एवेति नियमः । अन्यथा प्रणिदापयतीति युकि कृते दा इत्यस्यानर्थकत्वात् अधातुत्वाच्च घुसंज्ञा न स्यात् । अत एव कैयटेनोक्तम् "अनागमकानां सागमका आदेशाः भवन्ति" एतत्तु नित्यतासमर्थनार्थमेवोक्तम् । प्रक्रियादशायां त्वागमागमिभाव एवेति ।

भवन्ति इति । झकारमात्रस्य व्यञ्जनान्तोऽन्तादेशः । अन्त इत्यन्तोऽकार उच्चारणार्थः । अत्रान्तरङ्गत्वात् परत्वात् नित्यत्वाच्चादौ शबन्ताकारयोः "अतो गुणे" ( ६ । १ । ९७ ) इति पररूपम्, तस्य परादिग्रहणेन ग्रहणात् "क्ङिति च" ( १ । १ । ५ ) इति गुणनिषेधः प्राप्नोति । एकादेशस्य स्थानिवद्भावान्न भवति ॥१९॥

२०. अतो दीर्घो यञि [ ७ । ३ । १०१ ]

अतोऽङ्गस्य दीर्घः स्यात् यञादौ सार्वधातुके परे । भवामि । भवावः । भवामः । स. भवति । त्वं भवसि । अहं भवामीत्यादि ज्ञेयम् । भू प्राप्तावात्मनेपदी वा ।

२१. टित आत्मनेपदानां टेरे [ ३ । ४ । ७९ ]

टितो लस्यात्मनेपदस्य टेरेत्त्वं स्यात् । भवते ।

---

अतो दीर्घ इति । भवामि इति । तदादीतिवचनाच्छवन्तमङ्गम् । सार्वधातुक इति किम् ? केशवः भज्जना । यञादौ किम् ? भवति । अत आदिति वाच्ये दीर्घग्रहणं दीर्घ एव यथा स्यात् "अनन्त्यस्यापि प्रश्नाख्यानयोः" ( ८ । २ । १०५ ) इति प्लुतो मा भूत् । अपाक्षीदोदन देवदत्तः । ननु पचामि भोः इति । एवं युष्मदादिष्व-प्रयुज्यमानेषूदाहृतम् । प्रयुज्यमानेऽप्युदाहरति—स भवतीत्यादि । इत्यादीत्यनेन तौ भवतः ते भवन्तीत्यादिद्विवचनबहुवचनयोरप्युदाहार्यमिति सूचितम् ।

भू प्राप्तावा । प्राप्त्यर्थो भू नित्यमात्मनेपदी वा चुरादिरिति शेषः । अयं चुरादा-वाधृषाद्द्रत्यधिकारे विकल्पितणिच्कः पठ्यते । एतच्च सन्नियोगशिष्टत्वाण्ण्यन्तादेव भवति न केवलादिति केचित् । अन्ये तु केवलादपीच्छन्ति । तथा च कैयटेन वर्षासु भवति वर्षासु वा भवते इति प्रयुक्तम् । चौरादिकस्यैव च प्राप्त्यर्थस्यात्मनेपदमिदम् । भौवादिकस्य त्वनेकार्थत्वाद् धातूनां प्राप्त्यर्थस्यापि परस्मैपदमेव । तेन सर्वं भवति सर्वं सर्वं प्राप्नोतीत्यर्थ इत्यष्टधातुकारः । तेन णिजभावपक्षे उदाहर्तुमस्योपन्यासः ।

वोपदेवस्त्वणिजन्तमप्युभयपदिनं प्राप्त्यर्थादा[१]वुवाच । १२० ॥

टित इति । टित इति लस्य विशेषणम् इत्याह—टितो लस्येति । आत्मनेपद-विशेषणे तु अकु[२]र्व्यित्यादावपि स्यात् इति भावः । आतामित्यादावन्त्यादेशए त्वं न भवति टिग्रहणसामर्थ्यात् 'नानर्थकेऽलोऽन्त्यविधिः' इति निषेधाच्च । 'तिप्तस्झि' (३ । ४ । ७८) इति प्रकृतानामेवात्मनेपदानां[३] ग्रहणादिह न भवति पचमानो यजमान इति । एवं च तङामित्येव सिद्धे आत्मनेपदग्रहणं वैचित्र्यार्थम् ॥ २१ ॥

---

१. प्राप्त्यर्थात्वादावावुवाचेति ख० पु० ।
२. तुकुर्वीत्यत्रापीति क० पु० ।
३. आतामोऽदावन्त्यादेश इति क० पु० ।

२२. सार्वधातुकमपित् [ १ । २ । ४ ]

अपित् सार्वधातुकं ङिद्वत् स्यात् ।

२३. आतो ङितः [ ७ । २ । ८१ ]

अतः परस्य ङितामाकारस्य इय् स्यात् । "लोपो व्योर्वलि" (६।१।६६)। भवेते । भवन्ते ।

२४. थासः से [ ३ । ४ । ८० ]

टितो लस्य थासः से स्यात् । भवसे । भवेथे । भवध्वे । "अतो गुणे" (६।१।९७) भवे । भवावहे । भवामहे ।

२५. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्

[ ३ । ३ । १६१ ]

एष्वर्थेषु धातोर्लिङ् स्यात् । लस्य तिबादयः ।

---

सार्वधातुकमपित् । ङिद्वद् इति । ङितीव ङिद्वत् । "तत्र तस्येव" (५।१।११६) इति सप्तम्यन्तादिवार्थे वतिः । ङिति यत्कर्तव्यमुक्तं तत्सार्वधातुकेऽपि स्यादिति प्राचा व्याख्यातम् । तदसत् । तथाहि सति भवेतेत्यत्र "आतो ङितः" ( ७ । २ । ८१ ) इति ङितो यत्कार्यं तन्न स्यात् । तस्मात् ङिता तुल्यं ङिद्वत् इति तृतीयान्ताद्वतिर्ज्ञेयः ।

अत्र सूत्रावृत्त्या 'पिच्च ङिन्न भवति, ङिच्च पिन्न भवति' इति व्याख्यायते । तेन ब्रूतादिति स्थानिवत्त्वात् पित्त्वमाश्रित्य 'ब्रुव ईट्' ( ७ । ३ । ९३ ) इति न भवति । अचिनोदिति च स्थानिवत्त्वात् ङित्त्वं न भवति ॥ २२ ॥

भवन्त इति । नित्यत्वाच्छपि कृतेऽदन्तत्वाभावादादेशः इति "झोऽन्तः" (७।१।३) इत्येव भवति ॥ २३ ॥

थासः से । स इति वाच्ये से इति वचनं ज्ञापकमादेशानामेत्त्वं न भवति । तेन भवितेत्यादि सिद्धम् । भवध्वे इति । पक्षे "अनचि च" ( ८ । ४ । ४७ ) इति द्वित्वे "झलां जश् झशि" ( ८ । ४ । ५३ ) इति धस्य दत्वे भवद्ध्वे इत्यपि । भवे इति । भव इ इति स्थिते परमपि गुणं बाधित्वाऽन्तरङ्गत्वादेरेत्वम् । तत्पश्चाद् गुणं बाधित्वा "वृद्धिरेचि" ( ६ । १ । ८८ ) इति वृद्धिः प्राप्नोति, अत उक्तम् "अतो गुणे" इति ॥२४॥

विधिनिम० । विधिः प्रेरणम् । भृत्यादेः कस्यचित् क्रियायां नियोजनम् । निमन्त्रणं नित्यनैमित्तिककर्मविषया प्रवर्तना । आमन्त्रणं काम्यविषया । अधीष्टः

२६. यासुट् परस्मैपदेषूदात्तो ङिच्च [ ६ । ४ । १०३ ]

लिङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च । ङित्त्वोक्तेर्ज्ञाप्यते ङित्त्वं नादेशानामिति ।

२७. लिङः सलोपोऽनन्त्यस्य [ ७ । २ । ७९ ]

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् ।

२८. इतश्च [ ३ । ४ । १०० ]

ङितो लस्य परस्मैपदेष्विकारस्य लोपः स्यात् ।

---

सत्कारपूर्विका सर्वविषया[1] । एषु चतुर्ष्वपि प्रवर्तना नाम प्रवर्तते[2] । सैव लिङर्थः । भेदेन तूपादानं प्रपञ्चार्थम् । सम्प्रश्नः सम्प्रधारणम् । तद्वेदं वा कर्तव्यमिति । प्रार्थना याच्ञा ।

एष्वर्थेषु इति । गम्यमानेषु प्रत्ययार्थविशेषणेष्विति शेषः । तेन विदध्यात् निमन्त्रयेदिति प्रकृत्याभिहितेष्वपि विध्यादिषु भवति । लिङस्तु कर्त्रादयो वाच्याः । "लः कर्मणि च" ( ३ । ४ । ६९ ) इति वचनात् । लिङ् विध्यादिवाची, कर्त्रादयस्त्वाक्षेपलभ्या इति तु मतान्तरम् ॥ २५ ॥

यासुट् । स चोदात्त इति । स यासुट् । उदात्तवचनं ज्ञापकम् "आगमा अनुदात्ताः" इति । ङिच्च इति । ङित्त्वं परस्मैपदानां विधीयते तन्निमित्तत्वात् गुणादिप्रवृत्तेस्तत्रैव ङित्त्वविधेरर्थवत्त्वात् ङित्त्वोक्तेरित्याद्यप्यत्रैवानुकूलम् । ननु लिङो ङित्त्वात्तदादेशानामपि स्थानिवत्त्वादेव ङित्त्वं सिद्धं तत्किं ङिद्वचनेनेत्यत आह—ङित्त्वोक्तेः इति । तेनाचिनवम् इत्यादौ गुणः सिद्ध्यति । एतच्च ज्ञापकम् "ङिच्च पिन्न पिच्च ङिन्न भवति" इत्यनाश्रित्योक्तम् । तदाश्रयणे तु स्थानिवद्भावप्राप्तं ङित्त्वमौपदेशिकेन पित्त्वेन बाधितमिति विध्यर्थमेतत् स्यात् चिनुयादिति सिद्ध्यर्थम् ।

एवमपि नैतज्ज्ञापकं यद्वक्ष्यति—शृणुयुरित्यादौ यासुटो ङित्त्वान्न गुण इति । नैतदेकान्तिकं प्रयोजनम् "जुसि च" ( ७ । ३ । ८३ ) इत्यत्राचीत्यनुवृत्तेरन्यथासिद्धत्वात् । सति तु ङिच्चेत्यस्मिन् भवत्येतदप्यपि प्रयोजनम् इति । यासुट उकार उच्चारणार्थः । ट आदिवृद्ध्यर्थः ॥ २६ ॥

लिङः सलोप इति । सेति लुप्तषष्ठीकं पृथक् पदम् । अनन्त्यस्येत्यनेन विशेष्यते इत्याह—अनन्त्यस्य सस्येति ॥२७॥

---

१. सर्वकर्मविषयेति ख० पु० ।

२. वर्तते इति ख० पु० ।

२९. अतो येयः [ ७ । २ । ८० ]

अतः परस्य या इत्यस्य इय् स्यात् सार्वधातुके । गुणः । यलोपः । भवेत् ।

३०. तस्थस्थमिपां तान्तन्तामः [ ३ । ४ । १०१ ]

ङितश्चतुर्णां तामादयः क्रमात् स्युः । भवेताम् ।

३१. झेर्जुस् [ ३ । ४ । १०८ ]

लिङो झेर्जुस् स्यात् । ज इत् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् ।

३२. नित्यं ङितः [ ३ । ४ । ९९ ]

ङिल्लकारोत्तमसकारस्य नित्यं लोपः स्यात् । भवेव । भवेम ।

---

भवेत् इति । भवति इति स्थिते यासुटः सलोपः, या इत्यस्येय् । आद् गुणः । "लोपो व्योर्वलि" ( ६ । १ । ६६ ) इति यलोपः । "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः ।

ननु "सुट् तिथोः" ( ३।४।१०७ ) इति सुटा भाव्यम् । न च यासुटाऽस्य बाधः, भिन्नविषयत्वात् । सुट् हि तयोर्भक्तः । यासुट् तु लिङ इति । सत्यम् । अस्तु सुट् लिङः सलोप इति यासुट इव सुटोऽपि लोपो भविष्यति । एतच्च पर्जन्यवल्लक्षणप्रवृत्तिपक्षे ज्ञेयम् । आचार्यैस्तु विशेषाभावात् सुड् नोदाहृतः; भविषीष्टेत्यादावेव श्रवणसम्भवा-दुदाहरिष्यते ॥ २९ ॥

झेर्जुस् । ज इत् इति । चुटू इत्यनेन । भवेयुः इति । भव या उस् इति स्थिते "उस्यपदान्तात्" ( ६ । १ । ९६ ) इति पररूपं बाधित्वा परत्वान्नित्यत्वाच्च "अतो येयः" ( ७ । २ । ८० ) इति प्रवर्तते, तत आद् गुणः । अवल्परत्वाद्वलि लोपो नास्ति ॥ ३१ ॥

नित्यं ङितः । ङिल्लकारोत्तमसकारस्य इति । ङिद् यो लकारस्तदादेशो य उत्तम-पुरुषस्तत्सम्बन्धिनः सस्येत्यर्थः । ननु भूयासमित्यत्रापि प्राप्नोति । उच्यते । उत्तम-शब्द आवर्तते । तत्रैकोऽन्त्यार्थस्तेनोत्तमपुरुषसम्बन्धिन उत्तमस्यान्त्यस्य लोप इत्यर्थः । यद्वा नित्यग्रहणमतिरिच्यते "वेतोऽन्यत्र" ( ३ । ४ । ९६ ) इति वाग्रहणाननुवृत्तेः । स्वरितेनेत्येव सिद्धेः । तेन नित्यमुत्तमस्येत्यर्थः । यासुटस्तु सा नैवंविधः । लिङोऽ-न्यत्रोत्तमे तदभावात् । तेन वस्मसारेवाय सलोपः ॥ ३२ ॥

३३. लिङः सीयुट् [ ३ । ४ । १०२ ]

लिङः आत्मनेपदस्य सीयुडागमः स्यात् । सेर्लोपः । भवेत । भवेयाताम् ।

३४. झस्य रन् [ ३ । ४ । १०५ ]

लिङो झस्य रन् स्यात् । भवेरन् । भवेथाः । भवेयाथाम् । भवेध्वम् ।

३५. इटोऽत् [ ३ । ४ । १०६ ]

लिङादेशस्येटोऽत् स्यात् । भवेय । भवेवहि । भवेमहि ।

३६. लोट् च [ ३ । ३ । १६२ ]

विध्यादिष्वर्थेषु धातोर्लोट् स्यात् ।

३७. आशिषि लिङ्लोटौ [ ३ । ३ । १७३ ]

धातोर्लिङ्लोटावाशिषि स्तः ।

---

लिङः सीयुट् । यद्यप्ययं लिङः सामान्येन विधीयते, तथापि परस्मैपदेषु यासुट् विशेषविहित इति परिशेषादात्मनेपदे सीयुट् पर्यवस्यतीत्याह—लिङात्मनेपदस्येति । तेन परस्मैपदे यासुटि कृते तस्य लिङ्भक्तत्वात् पुनः सीयुड् न भवतीति भावः । सलोप इति । "लिङः सलोपो" ( ७ । २ । ७९ ) इत्यनेन । भवेत इति । भव त इति स्थिते सीयुट् सुट् च पूर्ववत् । तयोरुभयोरपि "लिङः सलोपो०" ( ७ । २ । ७९ ) इति सलोपः । यलोपः । आद् गुणः । एवं भवेयातामित्यादावपि सुटो लोपो ज्ञेयः ॥३३॥

झस्य रन् । झस्य इति । समुदायः स्थानी न [1]झकारमात्रम्, अन्यथाऽकारो न निवर्तेत । एवं च झोऽन्तापवाद इति प्राचोक्तमपास्तम् । येन नाप्राप्तिन्यायेन वा योऽयम् । भवेरन्निति । "न विभक्तौ तुस्माः" ( १ । ३ । ४ ) इति नस्य नेत्त्वम् । भवेध्वमिति । "अनचि च" ( ८ । ४ । ४७ ) इति द्वित्वं न भवति । "दीर्घादाचार्याणाम्" ( ८ । ४ । ५२ ) इति निषेधात् ॥ ३४ ॥

इटोऽत् । इडित्यादेशो गृह्यते नागमोऽनर्थकत्वात् लस्येति सम्बन्धाच्चेत्याह—लिङादेशस्येति । तेन भविषीष्टेत्यादाविटो न भवतीति भावः । अदिति तकार उच्चारणार्थः । तेन "न विभक्तौ" ( १ । ३ । ४ ) इति निषेधो न शङ्क्यः । अनित्यत्वाद्वा ॥ ३५ ॥

---

१. न [illegible] झकारमात्रमिति ख० पु० ।

## ३८. एरुः [ ३ । ४ । ८६ ]

लोट इकारस्य उः स्यात् ।

## ३९. तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् [७ । १ । ३५]

आशिषि तुह्योः स्थाने तातङ् स्याद्वा । ङित्त्वं गुणाद्यभावाय नान्त्यादेशाय । भवताद्वा ।

## ४०. लोटो लङ्वत् [ ३ । ४ । ८५ ]

लोटो लङ्वत्कार्यं स्यात् । तेन तामादयः सलोपश्च । भवताम् ।भवन्तु ।

---

एरुः । इङ्वहिमहिङां तु न भवति 'एत ऐ" ( ३ । ४ । ६३ ) इति लिङ्गात् यद्वा कृतेऽप्युत्त्वे पुनः प्रसङ्गविज्ञानादेरेत्व भविष्यति ॥ ३८ ॥

तुह्योस्ता । यद्यपि तिह्योरित्युक्तेऽपि साहचर्यात् लोट एव तिग्रंहीष्यते नाशीर्लिङोऽपि; तथापि प्रतिपत्तिलाघवाय तुह्योर्ग्रहणम् । अनेकाल्त्वात् सर्वादेशोऽयम् । नन्वपवादत्वात् "ङिच्च" (? । १ । ५३) इत्यन्तस्य भाव्यम्, अनङादिवदित्याशङ्क्याह ङित्वमिति ।

अयं भावः—तातङोऽनेकाल्त्वात् सर्वादेशतैव युक्ता परत्वात् ङिच्चेत्यस्य बाधनात् । अनङादिषु तु ङित्वसामर्थ्यात् रस्यापि सर्वादेशत्वस्य बाधः । इह तु न ।ङित्वस्य सामर्थ्यम्, सर्वादेशत्वेऽपि भूतात् मृष्टादित्यादौ गुणवृद्धिप्रतिषेधार्थत्वस्य सम्भवात् । अबाधेनैवोपपत्तौ[1] बाधो न न्याय्यः ।

ततश्चैवं योजना—गुणाद्यभावाय यत्सम्भाव्यते ङित्वं तदन्त्यादेशाय न भवति, अनन्यार्थङित्वेष्वेतदप्रवृत्तेरिति भावः । यद्वाऽत्र ङित्वं गुणाद्यभावाय तच्च सर्वादेशत्वेऽपि सम्भवत्यतोऽन्त्यादेशत्वाय न भवत्यनन्यार्थत्वाभावादिति । अन्यथा "एरु." ( ३ । ४ । ८६ ) इत्यस्यानन्तर तिह्योस्तादित्येव वाच्ये ङित्करणं नान्त्यादेशाय, किं तु गुणाद्यभावाय । तच्च सर्वादेशतामन्तरेण न भवतीत्यर्थः ॥३९॥

लोटो लङ्वत् । "विदो लटो वा" ( ३ । ४ । ८३ ) इति वानुवृत्तेर्व्यवस्थितविभाषया अडाट्जुसो न स्युरित्याशयेनाह—तामादय इति । तान्तन्तामः ।

---

१. अबाधेन चोपपत्ताविति ख० पु० ।

## ४१. सेर्ह्यपिच्च [ ३ । ४ । ८७ ]

लोटः सेर्हिः स्यात् सोऽपिच्च ।

## ४२. अतो हेः [ ६ । ४ । १०५ ]

अतः परस्य हेर्लुक् स्यात् । भव, भवताद्वा । भवतम् । भवत ।

## ४३. मेर्निः [ ३ । ४ । ८९ ]

लोटा मेर्निः स्यात् ।

---

सलोपश्च इति । "नित्यं ङितः" ( ३ । ४ । ९९ ) । वस्तुतस्तु लोट इत्युपमेये षष्ठीदर्शनादुपमानेऽपि षष्ठ्यन्ताद्वतिः । तेन लङः स्थाने यत्कार्यं तामादि तदेवातिदिश्यते । ननु[1] यल्लङि प्रसक्तं । जुसपि मुख्ये लङि भवति नातिदेशिके ङिदधिकारे "लङः शाकटायनस्यैव" ( ३ । ४ । १११ ) इत्यत्र लङ इति योग विभज्य लङेव यो लङिति व्याख्यानात् । भवतामिति । तसस्ताम् ॥ ४० ॥

सेरिति । ह्यंत्यविभक्तिको[2] निर्देशः । अपिच्चेत्यनेन स्थानिवद्भावप्राप्तं पित्वं निषिध्यते । तेन "सार्वधातुकमपित्" ( १ । २ । ४ ) इति ङित्वाद् ब्रूहि मृड्ढीत्यादौ गुणवृद्धी न भवतः । एतदेव[3] पिद्वचनं ज्ञापकं भवत्यनुबन्धकार्याणा-मल्विधित्वेऽप्यतिदेश इति ॥ ४१ ॥

अतो हेः । भवेति । ननु भूसि इति स्थिते नित्यत्वाविशेषेऽपि परत्वादन्तरङ्गत्वाच्च पूर्वं हिरादेश एव भवति ततश्शप् । ततश्च शबकारमाश्रित्य "अतो हेः" ( ६ । ४ । १०५ ) इति लुका न भाव्यम्, "सन्निपातलक्षण" ( प० ) इति वचनात् । लुग्वचनं तु चिकीर्ष-जिहीर्षेति सन्नन्ते सावकाशम् । सत्यम् । अनित्येयं परिभाषे-त्यदोषः । अत एव जहीत्यत्र जादेशस्यासिद्धत्वमारभ्यते । अन्यथा सन्निपातपरिभाषयैव सिद्धम् । कृते तु[5] हेर्लुकि "निमित्तापाय" न्यायेन शपो निवृत्तिर्न भवति, अनुपजीव्यं हि नैमित्तिकं निवर्तते पपुष[6] इति । यथा नहि संप्रसारणेनेडुपजीव्यते । इह तु अत इति वचनाल्लुका शबुपजीव्यते । न चोपजीव्यविरोधो युक्तः । अन्यथा यथा हिर्निवृत्तः इति शब् निवर्तेत । एवं शब् निवृत्त इति हेर्लुगपि निवर्तेतेति लुगेव न व्यवतिष्ठेत ।

---

१. न तु लङादि इति क० पु० ।

२. सेर्हीति ख० पु० ।

३. येति अधिकः ख० पु० ।

४. अविधित्वे इति क० पु० ।

५. हि लुकि इति ख० पु० ।

६. पजुष इति क० पु० ।

४४. आडुत्तमस्य पिच्च [ ३ । ४ । ९२ ]

लोडुत्तमस्याडागमः स्यात् स पिच्च । ह्निन्योरुत्वनिषेधः भवानि ।

४५. ते प्राग्धातोः [ १ । ४ । ८० ]

ते गत्युपसर्गसंज्ञकाः धातोः पूर्वं प्रयोज्याः ।

४६. आनि लोट् [ ८ । ४ । १६ ]

उपसर्गस्थान्निमित्तात् परस्य लोडादेशस्यानीत्यस्य णः स्यात् । प्रभवाणि "अदन्तरोरुपसर्गवत् वृत्तिर्वाच्या" ( वा० ) वृत्तिः समासः । अद् भवानि । अन्तर्भवाणि । "दुरः परस्य णत्वं न" इति केचित् । दुर्भवानि । भवाव । भवाम । टेरेत्वे कृते ।

---

भवताविति । ननु तातङोऽपि स्थानिवद्भावाद् "अतो हेः" ( ६ । ४ । १०५ ) इति लुका भाव्यम् । नैष दोषः । "हुझल्भ्यः" ( ६ । ४ । १०१ ) इत्यतो द्वितीयहिग्रहणमनुवर्तते, तेन हेर्विशेषणात् हिरित्येवरूपो[1] यो हिस्तस्य लुक् स्थानिवद्भावेन यो हिस्तस्य लुग् न भवति[2] । यद्वा तातङा परत्वाद् बाधितो हेर्लुक् सकृद्गतिन्यायेन हेर्न प्रवर्तते ॥ ४२ ॥

आडुत्तमस्य । स उत्तमस्तत्रैव पित्कार्यसम्भवाद् न चाटि पित्[3] कार्यमस्ति । अनुदात्तत्वस्य "आगमाः अनुदात्ताः" इत्येव सिद्धेः । अड्विधानमदानीत्याद्यर्थम् । इह तु अतो दीर्घेणापि सिद्धम् । ह्निन्योः इति । अद्धि, जुहुधि इति हे भवानीति[4] नेश्च "एरुः" ( ३ । ४ । ८६ इत्युत्वं प्राप्तं निषिध्यते । उत्वग्रहणमुपलक्षणम् । "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपस्यापि । आदेशयोः पुनरिकारोच्चारणसामर्थ्यादुभयं न[5] भवतीति भावः । यद्वा नाप्राप्तयोरुत्वेल्लोपयोरारभ्यमाणो ह्निनो तयोर्बाधकावित्यर्थः ॥ ४४ ॥

ते प्राग्धातोः । तेग्रहणं व्यवहितस्याप्युपसर्गस्य परामर्शार्थम् । गतयो ह्यनन्तराः । प्रयोगनियमार्थं चेदं वचनम् । तेन परव्यवहितप्रयोगो न[5] भवति । धातोः किम् ? प्रचिकीर्षति इति सनः क्रियावाचित्वात्ततः पूर्वं प्रयोगो मा भूत् इति ॥ ४५ ॥

आनि लोट् । नि लोट् इत्येव सिद्धे आनिग्रहणमनित्यमागमशास्त्रमिति ज्ञापनार्थम् । तेन सागरं तर्तुकामस्येत्यादाविडभावः सिद्धयति । लोड्ग्रहणं तु

---

१. हेरित्येवमिति क० पु० ।
२. लुग् भवतीति क० पु० ।
३. येऽका इति ख० पु० ।
४. श्रीणादाविति क० पु० ।
५. तत्रैति ख० पु० ।

४७ आमेतः [ ३ । ४ । ९० ]

लोट एकारस्याम् स्यात्। भवताम् । भवेताम् । भवन्ताम् ।

४८. सवाभ्यां वामौ [ ३ । ४ । ९१ ]

लोडेतः सवाभ्यां परस्य क्रमाद् व अम् एतौ स्तः । भवस्व । भवेथाम् । भवध्वम् ।

४९. एत ऐ [ ३ । ४ । ९३ ]

लोडुत्तमस्यैत ऐ स्यात् । आमोऽपवादः । आडागमः । वृद्धिः । भवै । आटोऽङित्त्वादियादेशो न । भवावहै । भवामहै ।

---

विस्पष्टार्थम् । प्रकृष्टा वपा[1] येषां तानि प्रवपानि मासानीत्यत्रोपसर्गग्रहणादर्थवद् ग्रहणाच्च न भविष्यति। निमित्ताद् इति । रषाभ्यामिति । 'अट्कुप्वाङ्नुम्व्यवायेऽपीति च । प्रवन्तरोः इति । उपसर्गत्वात् अद्धेति। 'आतश्चोपसर्गे" ( ३ । ३ । १०६ ) इत्यङ् भवति। अद् भवानीत्यत्रोपसर्गत्वात् प्राक् प्रयोगमात्रं णत्वं तु न भवति, तकारेण व्यवधानात्। अन्तःशब्दे तु प्राक् प्रयोगोऽङ्किविधिणत्वानि च। अङ् अन्तर्धा किविधिः। अन्तर्धिः। णत्वे[3] उदाहरति—अन्तर्भवाणीति । दुरः परस्य[4] इति। निर् दुरिति प्रादिषु पाठादुपसर्गत्वाद् भवत्येव णत्वम् । ये तूपसर्गप्रतिरूपकमेतदव्ययमिति मन्यन्ते तेऽत्रानुपसर्गत्वाण्णत्वं नेच्छन्ति । तथा दुर्नय इत्यादौ णत्वाभावो दृश्यते टेरेत्वे इति "टित" ( ३ । ४ । ६६ ) इत्यनेन ॥ ४६ ॥

भवतम् इति । "सार्वधातुकमपित्" ( १ । २ । ४ ) इति ङित्वाद् "आतो ङितः" ( ७ । २ । ८१ ) इतीयादेशः ॥ ४७ ॥

सवाभ्याम् इति । क्रमादिति । सात्परस्य लोडेतो वः वात्परस्य त्वमित्यर्थः ॥४८॥

एत ऐ । पचावेदमित्यत्र तु न भवति । आद् गुणस्य "असिद्धं बहिरङ्गम्" ( प० ) इत्यसिद्धत्वात् । अत एव "आमेतः" ( ३ । ४ । ९० ) इत्यपि न भवति।

वृद्धिः इति । भव ए इति स्थिते "अतो गुणे" ( ६ । १ । ९४ ) इति पररूपं बाधित्वाऽन्तरङ्गत्वात् प्रतिपदविधित्वाच्च "आडुत्तमस्य" ( ३ । ४ । ९२ ) इत्याट्।

---

१. मस्येत्यधिकः ख० पु० ।

२. वपा वपानि इति क० पु० ।

३. णत्वे इति क० पु० ।

४. प्रतिरूपकमव्ययमिति ख० पु० ।

**५०. अनद्यतने लङ् [ ३ । २ । १११ ]**

नास्त्यद्यतनो यस्मिन् भूते काले तस्मिन् वाच्ये धातोर्लङ् स्यात् ।

**५१. लुङ्लङ्लृङ्क्ष्वडुदात्तः [ ६ । ४ । ७१ ]**

एषु परेषु अङ्गस्याडागमः स्यात् स चोदात्तः । अभवत् । अभवताम् । झोऽन्ते इलोपे संयोगान्तलोपः । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । अभवत । अभवेताम् । अभवन्त । अभवथाः । अभवेथाम् । अभवध्वम् । अभवे । अभवावहि । अभवामहि ।

**५२. लुङ् [ ३ । २ । ११० ]**

भूतेऽर्थे लुङ् स्यात् ।

**५३. माङि लुङ् [ ३ । ३ । १७५ ]**

माङ्योगे लुङ् स्यात् सर्वलकारापवादः ।

---

"आटश्च" ( ६ । १ । ९० ) इति वृद्धि. । ततो "वृद्धिरेचि" ( ६ । १ । ८८ ) इति वृद्धिः । ननु "आतो ङितः" ( ७ । २ । ८१ ) इत्याट इयादेशेन भाव्यम्, तत्राह्–आतो ङित्वादिति । आट इयादेशो नेति सम्बन्धः । मध्ये हेतुः । अङित्वाद् इति । आटः परस्योत्तमस्य पित्त्वेन ङिन्न भवतीति वचनादिति भावः ॥ ४९ ॥

अनद्यतन इति । यद्ययं तत्पुरुषः [1]स्याद् अद्यतनादन्यस्मिन्निति ततो व्यामिश्रेऽपि प्राप्नोति । अद्य ह्योऽभुंक्ष्महि इति । अद्यतनानद्यतनसमुदायस्याप्यद्यतना[2]दन्यत्वात्, अतो बहुव्रीहिरित्याह–नास्त्यनद्यतनो यस्मिन्निति । काले वाच्ये इति । तत्कालोपलक्षितक्रियाविशिष्टे कर्त्रादौ वाच्ये इत्यर्थः ॥ ५० ॥

लुङ्लङ् । स चोदात्त इति । "आगमा अनुदात्ताः" इत्यस्यापवादः । अभवदिति । "झलां जशोऽन्ते" ( ८ । २ । ३९ ) इति जश्त्वम् । पक्षे "वाऽवसाने" (८ । ४ । ५६) इति चर्त्वं तकारः ॥ ५१ ॥

लुङ् । भूतेऽर्थे इति । भूतसामान्येऽयं विधिः । अनद्यतनादिविशेषेषु तु लङादीनामपवादानां विधानम् ॥ ५२ ॥

माङि लुङ् । मा भवतु तस्य पापमित्यादौ तु नायं माङ्, किन्तु माशब्द इत्याहुः ॥ ५३ ॥

---

१. तत्पुरुषःस्यादिति क० पु० । २. नान्यत्वादिति क० पु० ।

५४. स्मोत्तरे लङ् च [ ३ । ३ । १७६ ]

स्मोत्तरे माङि लङ् स्यात् लुङ् च।

५५. च्लि लुङि [ ३ । १ । ४३ ]

धातोर्लुङि च्लिप्रत्ययः स्यात् । शबाद्यपवादः ।

५६. च्लेः सिच् [ ३ । १ । ४४ ]

च्लेः सिजादेशः स्यात् । इचावितौ ।

५७. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु [२।४।७७]

एभ्यः सिचो लुक् स्यात् परस्मैपदेषु । गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ।

---

च्लि लुङि । इकार उच्चारणार्थं चित्वमन्तोदात्तार्थम् । यद्यपि च्लिर्न क्वापि श्रूयते, तथापि "मन्त्रे घस" ( २ । ४ । ८० ) इत्यत्र लेरिति सामान्य-ग्रहणार्थं च्लिः क्रियते । अन्यथा सिचश्चङोऽङ् इति प्रत्येकं निर्देश्यं स्यात् । शबाद्यपवाद इति । आदिशब्देन तद्ग्रहणप्रयुक्तानां श्यनादिविकरणानामपि[1] ॥ ५५ ॥

च्लेः सिच् । इचावितौ इति । तत्रेदित्वे प्रयोजनम् अमंस्तेत्यत्र "अनिदिताम्" ( ६ । ४ । २४ ) इत्युपधालोपो मा भूत् । ये तु मन्यन्ते "हनः सिच्" ( १ । २ । १४ ) इति कित्करणाज्ज्ञापकात् सिजन्तस्योपधालोपो न भवतीति तेषामिकार उच्चारणार्थः । इत्वं चौपचारिकम् इदिव इत् यौगिकं वा एति गच्छतीति[2] इत् । आगमानुदात्तत्वं प्रत्ययस्वरमिव स्थानिवत्त्वप्राप्तं चित्स्वरमपि स्थानिन्यादेशे च द्विश्चित्त्वमकारि ॥५६॥

गाति । गापोर्ग्रहण इति । तत्र गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्-विकरण इणादेशो गा गृह्यते । गाङ्गतावित्यस्य तु सत्यपि सम्भवे परस्मैपदासम्भवाद् अग्रहणम् । "लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणम्" ( ५० ) इति परिभाषया "पा पाने" इत्ययं गृह्यते, न पा रक्षणे इत्यादि । भूभुवोस्तिङि । भू सत्तायाम् । पूङ् प्राणिगर्भविमोचने । सुवति-सूयत्योस्तु न ग्रहणम् ॥ ५७ ॥

तिङो विकरणेन व्यवधानात् । विकरणङित्त्वेनैव गुणाभावसिद्धेश्च । अभूदिति । अभूस् ति इति स्थिते तित्यत्वादिटः पूर्वं सिचो लुक् प्रत्ययलक्षणेन पुनः सिच् इट् न भवति । इटो हि सिच्कार्यम्, न च कार्यम् निमित्तत्वेन नाश्रीयते इति । लुका

---

१. मित्रेषसोरित्यत्रेति ख० पु० । २. भणेति ख० पु० । ३. गच्छतीत् इति ख० पु० ।

## ५८. भूसुवोस्तिङि [ ७ । ३ । ८८ ]

भू सू इत्येतयोः सार्वधातुके तिङि परे गुणो न स्यात् । अभूत् ।

## ५९. क्ङिति च [ १ । १ । ५ ]

गित्-कित्-ङिन्निमित्ते गुणवृद्धी न स्तः । अभूताम् ।

## ६०. भुवो वुग् लुङ्लिटोः [ ६ । ४ । ८८ ]

भुवो वुगागमः स्याल्लुङ्लिटोरचि । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।

---

लुप्तःश्चात्र सिचि वृद्ध्यभावः । प्रत्ययलक्षणेन "अस्तिसिच" ( ७ । ३ । ९६ ) इतीट् तु न भवति द्विसकारकनिर्देशात् श्रूयमाणसिच[1] एव तत्र ग्रहणात् इति भाष्ये स्थितम् । द्वितीयश्च सकारः सिच इत्यस्यानन्तरं निर्दिश्यते । सिचस् स इति । अविभक्तिकश्च निर्देशस्तस्य संयोगान्तलोपे लोपस्यासिद्धत्वं न भवति । तेनोत्वं सिद्ध्यति । स च सकारोऽस्तिसिचा विशिनष्टि । सकारादस्तेः सकारान्ताच्च सिच इति । तेनास्तेर्भूादेशे सिचो लुकि च न भवति । एतेनास्तीति पदान्तर्भूतस्यापदस्य सकारस्य पदान्तरेणान्वयायोगात्[2] । पृथक्पदत्वे तु न तस्य धातुत्वम्, नापि तत्सङ्घितस्य समुदायस्येति धातुविषयस्तिवनिर्देश एव नोपपद्यते इति माधवोक्तं दूषणं परास्तम्[3] । अन्ये तु आर्द्धिभुवो रोट्प्रतिषेध इति वार्त्तिकमुदाहरन्ति । तदसत् । स्यनिवृत्त्यद्ग्रहणपरे तस्मिन्ननादेशस्य भुवो ग्रहणासम्भवात् । संभवेऽपि वा अस्यादित्यादावप्रतीकाराच्च ॥ ५८ ॥

क्ङिति च । कश्च ङश्च क्ङौ तावितौ यस्येति क्ङित् तस्मिन् । गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते । जिष्णुरित्यादावपि प्रतिषेधो यथा स्यादिति । न च ग्लाजिस्थश्च क्नुः कित् । स्थास्नुरित्यत्र "घुमास्था" ( ६ । ४ । ६६ ) इतीत्वप्रसङ्गात् । तदुक्तम् "स्नोर्गित्वान्न स्थ इकारः क्ङितोरीत्वशासनात् ।

"गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरिति" ।

तदेवमभिसन्धायाह—गित्-कित्-ङिन्निमित्ते इति निमित्तग्रहणेन निमित्तसप्तमीयं न परसप्तमीत्याह तेन भिन्नं छिन्नमित्युपधागुणस्यापि निषेधः सिद्ध्यति इक इत्यनुवृत्तेः कामयत इत्यादौ "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्धेर्न निषेधः । तथापि

---

१. श्रूयमाणः सिचे इति क० पु० ।

२. अन्ववायोग इति क० पु० ।

३. मन्यलपकं वेदितव्यमिति ख० पु० ।

## ६१. आर्धधातुकं शेषः [ ३ । ४ । ११४ ]

तिङ्शित्भ्योऽन्यो धात्वधिकारविहितः प्रत्यय एतत्संज्ञः स्यात्

## ६२. आर्धधातुकस्येड्वलादेः [ ७ । २ । ३५ ]

वलादेरार्धधातुकस्येडागमः स्यात् । गुणावादेशौ । षत्वष्टुत्वे । अभविष्ट । अभविषाताम् ।

## ६३. आत्मनेपदेष्वनतः [ ७ । १ । ५ ]

अनकारात्परस्यात्मनेपदेषु झस्यादित्यादेशः स्यात् । अभविषत । अभविष्ठाः । अभविषाताम् ।

---

लैगवायन इति "आगुणः" ( ६ । ४ । १४६ ) इत्यस्य निषेधः प्राप्नोति फकः कित्वात् । नैष दोषः । "क्ङिति च" ( १ । १ । ५ ) इति चकारः क्रियते स चेकेत्यर्थे निपातानामनेकार्थत्वात् तेनेक इत्येव शब्दं समुच्चार्य विहिते ये गुणवृद्धी तयोर्निषेध इत्यर्थः । न चोर्गुणः इक् शब्दमुच्चार्य विधीयते । ओरिति निर्दिष्टस्थानिकत्वेनेक्परिभाषाया अनुपस्थानात् । अभूतामिति । "न भूसुधियोः" ( ६ । ४ । ८५ ) इति निषेधस्त्वत्र न प्रवर्तते "नाभ्यस्तस्याचि" ( ७ । ३ । ८६ ) इत्यतः पित्यधिकारात् ॥ ५९ ।

अभूवन्निति । उवङोऽपवादो वुक् । "आतः" ( ३ । ४ । ११० ) इति नियमात् प्रत्ययलक्षणेन प्राप्त "सिजभ्यस्त" ( ३ । ४ । १०९ ) इति जुस् न ॥ ६० ।

आर्धधातुक । अत्र धातोरिति प्रकृतेऽपि "धातोरेकाचः" ( ३ । १ । २२ ) इत्यतो द्वितीयं धातुग्रहणमनुवर्तते तत्सामर्थ्याद् धातुशब्दमुच्चार्य विहितो यः प्रत्ययः स आर्धधातुकम् इत्यर्थो लभ्यते इत्याशयेनाह—धात्वधिकारे विहित इति । तेन भूभ्यामित्यत्र क्विबन्ताद्धातोर्विहितस्य भ्यामो न भवति । धातोर्विहित एतावत्युक्तेतु स्यादिति भावः ॥ ६१ ।

आर्ध । "नेड् वशि कृति" ( ७ । २ । ८ ) इत्यतः इडीति वर्तमाने पुनरिड्ग्रहणं निषेधानुवृत्तिर्मा भूदिति । अभविष्टेति । परस्मैपदेष्विति वचनात् "गातिस्था" ( २ । ४ । ७७ ) इति सिचो न लुक् । नापि सिचि वृद्धिः । इट् । "सार्वधातुक" ( ७ । ३ । ८४ ) इति गुणः । अवादेशः । "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वम् । "ष्टुना ष्टुः" ( ८ । ४ । ४१ ) ॥ ६२ ॥

आत्मनेपदे । अनकारादिति । अङ्गस्येति वर्तते तस्यानेन विशेषणात्तदन्तविधिः तेनाकारान्तादङ्गात् परस्यात्मनेपदसंबन्धिनो झस्य अदेत्यर्थः । ततश्च शयान्ते

## ६४. घि च [ ८ । २ । २५ ]

धादौ प्रत्यये परे सलोपः स्यात् ।

## ६५. विभाषेटः [ ८ । ३ । ७९ ]

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अभविड्ढ्वम् । अभविध्वम् । ध्वे सलोपो वा सस्य दः इति केचित् । अभविद्ध्वम् । अभवि । अभविष्वहि । अभविष्महि ।

---

इत्यत्र न भवति । अत्र ह्यङ्गस्यानन्तरमात्मनेपदं न तु झकारः । अन्तादेशस्त्वङ्ग-विशेषानुपादानादिहापि भवति । आत्मनेपदेषु किम् ? चिन्वन्ति । अनतः किम् ? भवन्ते । तपरकरणादिहापि भवति—गाते । गाते गाते ॥ ६३ ॥

घि च । धादौ प्रत्यय इति । यद्यपि प्रत्ययग्रहणं न सन्निहितं तथापि "उदः स्थास्तम्भोः पूर्वस्य" ( ८ । ४ । ६१ ) इति पूर्वसवर्णविधानं ज्ञापकम् । अस्मिन् प्रकरणे यो लोपः स प्रत्यये भवतीति । अन्यथोत्स्थानमिति स्थिते झलीति सलोपेनैवोत्थानादेः सिद्धत्वादनर्थकं तत्स्यात् । सामान्यापेक्षं च ज्ञापकम् । धीति धादिः प्रत्ययो गृह्यते इत्याशयः । तेन पयो धावतीत्यादौ न भवति । सस्य लोपः स्यादिति । अत्र "धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम्" इति श्लोकवार्त्तिकमते सिच इति व्याख्येयम् । भाष्यकारस्त्वाह—चकाधीत्येव भवितव्यमिति । अत एवाचार्यैरुभयसाधारण्याय सलोप इत्येव व्याख्यातम् । यद्ययं सलोपो नारभ्येत ततः सिचः षत्वे जश्त्वे च सति "विभाषेटः" ( ८ । ३ । ७९ ) इति मूर्धन्याभावपक्षेऽपि नित्यं डकारः श्रूयेत । अतः सलोपो मूर्धन्यविकल्पश्चारभ्यते । विकल्पस्तु लिङ्षीध्वमोः सावकाशेऽभविड्ढ्वमिति । अभविध्वमिति । अत्र वकार इण् ततः पर इट् ततः परो लुङो धकारस्तस्य मूर्धन्यष्ट-वर्गं चतुर्थो ढकारो भवति घोषवत्त्वादिनाऽन्तरतम्यात् । "अनचि च" (८ । ४ । ४७) इति पक्षे द्वित्वे जश्त्वे चाभविड्ढ्वम् इत्यपि भवति । मूर्धन्याभावे त्वभविध्वमिति । न च "अनचि च" ( ८ । ४ । ४७ ) इति द्वित्वे जश्त्वे च सलोपाभावपक्षादविशेष इति वाच्यम् । द्वित्वस्य विकल्पितत्वात् । ध्वे सलोप इति । "घि च" ( ८ । २ । २५ ) इति विहितो यः सलोप स वा स्यादिति केषाञ्चिन्मतम् । यदा च सलोपो नास्ति तदा "झलां जश् झशि" ( ८ । ४ । ५३ ) इति जश्त्वापवादे षत्वे प्राप्ते सस्य द इत्यर्थः । अभविद्ध्वमिति । एतच्च सलोपे द्वित्वपक्षे च तुल्यम् [1]अभविषीति । "नास्ति सिचोऽ-पृक्ते" ( ७ । ३ । ९६ ) इतीट् तु न भवति । "उतो वृद्धिः" ( ७ । ३ । ७९ ) इत्यतो हलीत्यनुवृत्तेः ॥ ६४-६५ ॥

---

१ ( ) इति रेखाङ्कितो नास्ति क० पु० ।

६६. न माङ्योगे [ ३ । ४ । ७४ ]

लुङ्लङ्लृङ्क्ष्वट् माङ्योगे न स्यात् । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ।

६७. परोक्षे लिट् [ ३ । २ । ११५ ]

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ।

६८. लिट् च [ ३ । ४ । ११५ ]

लिडादेशस्तिङार्धधातुकसंज्ञः । तेन शबादयो न ।

६९. परस्मैपदानां णलतुसुस्थलथुसणल्वमाः [३।४।८२]

लिडस्तिबादिनवानां णलादयो नवादेशाः स्युः ।

७०. इन्धिभवतिभ्यां च [ ६ । १ । ५ ]

आभ्यां परो लिट् कित् स्यात् ।

---

परोक्षे लिट् । परोक्षवृत्तेरिति । परोक्षत्वोपाधिकार्थवृत्तेरित्यर्थः ॥ ६५ ॥

यद्यपि क्रिया नित्यं परोक्षैव । यदुक्तं भाष्ये 'क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" यथा गर्भो निर्लुठित इति । तथापि साधनद्वाराक्षत्वमिह विवक्षितम्, साधनं च यद्यपि शक्तिः सापि परोक्षैव तथापि शक्तिशक्तिमतोरभेदात् अत्र साधनशक्त्याश्रयभूतं फूत्कारसीत्कारादिविशिष्टं संरब्धरूपं द्रव्यं प्रत्यक्षं न भवति तत्परोक्षमित्युच्यते । तस्मात् क्रियानाविष्टपुरुषमात्र-प्रत्यक्षेऽपि भवत्ययं पपाच त्वं पेचिथेत्यादि ॥ ६७ ॥

लिट् च । अत्र "लङः शाकटायनस्यैव" ( ३ । ४ । १११ ) इत्यतः एवकारानु-वृत्तेरार्धधातुकमेवेति नियमात् सार्वधातुकसंज्ञा निवर्तते तत्फलमाह—तेन शबादयो न ॥ ६८ ॥

परस्मै । क्रमादिति । अर्थतः साम्यादिति भावः । नन्वकारो "अलोऽन्त्यस्य" ( १ । १ । ५२ ) इति थशब्दाकारस्य प्राप्नोति फलं च यथासंख्यसंपत्तिः स्यात् । ततश्च तूपकारः श्रूयेत । अत्राहुः धातोरित्यनुवर्तते ततश्च "आदेः परस्य" (१।१।५४) इति थकारमात्रस्याकारे कृते द्वयोः "अतो गुणे" इति पररूपं भविष्यति । यद्वा अ इति द्वावकारौ पररूपेण निर्दिष्टौ तेनानेकाल्त्वात् सर्वादेशो भविष्यति ॥ ६९ ॥

इन्धिभवति । इन्धि इत्यागन्तुकेनेकारेण निर्देशो नेका । "अनिदिताम्" ( ६ । ४ । २४ ) इति नलोपप्रसङ्गात् । इन्धेः संयोगार्थं भवतः पिदर्थं वचनम् ।

७१. लिटि धातोरनभ्यासस्य [ ६ । १ । ८ ]

लिटि परे अनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः ।

७२. एकाचो द्वे प्रथमस्य [ ६ । १ । १ ]

लिडादायुक्तं द्वित्वं धात्ववयवस्य प्रथमस्यैकाचः स्यात् ।

७३. पूर्वोऽभ्यासः [ ६ । १ । ४ ]

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ।

---

ञिइन्धी दीप्तौ, भू सत्तायाम् । एतत्सूत्रं भाष्ये प्रत्याख्यातम् । इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात् ताभ्यां लिटः किद्वचनानर्थक्यमिति । तथाहि भाषायामिन्धेर्लिट् परो न संभवति "इजादेश्च" ( ३ । १ । ३६ ) इत्यामो विधानात् । यद्यपि "छन्दस्यमन्त्रे" इति निषेधात् सम्भवति समीधिरे इति तथापि "छन्दस्युभयथा" ( ३ । ४ । ११७ ) इति सार्वधातुकत्वेन ङित्वान्नलोपः सिद्धः । भवतेरपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद्वुका गुणवृद्धी बाधिष्येते तत् किं कित्वेनेति ॥ ७० ॥

लिटि धातोरिति । धातोः किम् ? सुन्विरे । छन्दसि लिटः सार्वधातुकत्वात् कि करणे कृते तदन्तस्य लिटि परे प्रथमस्यैकाचो द्वित्वं मा भूत् । अनभ्यासस्य किम् ? नोनाव । धात्ववयवस्यैकाच इति । एतेनानभ्यासस्येति नञ्तत्पुरुष इति दर्शितम् । आकरे बहुव्रीहित्वं धातुविशेषणं चेति स्थितं तत्प्रयोजनं चाचा-एतच्च "एकाचो द्वे प्रथमस्य" ( ६ । १ । १ ) इत्यधिकारलब्धमुक्तम् । तदेवोपन्यस्यति—एकाच इति । अधिकारोऽयं न विधिः उत्तरविधीनां वैयर्थ्यप्रसङ्गादित्याह ॥ ७१ ॥

लिडादावित्यादि । एकाज्ग्रहणं जागर्त्यादिषु अनेकाचः समुदायस्य मा भूदिति । प्रथमग्रहणमनन्त्यानिवृत्त्यर्थम् । प्रथमत्वं च द्वितीयाजवधिकम् । तेन यत्र समुदाये द्वितीयमवधीकृत्य यावानेकाच्समुदायः यथा जागर्तो जागिर्ति दरिद्रातो दरिति सन्नन्ते यङन्ते च भूस् भूष् इति तस्य सर्वस्य द्वित्वं तत्र पपाचेत्यादो द्वितीयोऽच् नास्ति तत्र व्यपदेशिवद्भावात् पच् एतावानेव प्रथम एकाचेति द्विरुच्यते । एकाजिति बहुव्रीहिरियायेत्यादौ तु व्यपदेशिवद्भावाद्[1] भवति ॥ ७२ ॥

पूर्वोऽभ्यासः । अत्रेति । एकाचो द्वे इति प्रकरणे न तु "सर्वस्य द्वे" (८ । १ । १) इत्याष्टमिके इति प्राञ्चः । एवं तु "द्युतिगमिजुहोत्यादीनां[2] द्वे च" (वा०) । दिद्युत् ।

---

१. व्यपदेशिवद् भवतीति क० पु० ।

२. जुहोतीनामिति ख०-पु० ।

७४. ह्रस्वः [ ७ । ४ । ५९ ]

अभ्यासस्य ह्रस्वः स्यात् ।

७५. अभ्यासे चर्च [ ८ । ४ । ५४ ]

अभ्यासे झलां चरः स्युर्जशश्च । खयां चरः झशां जश इति विवेकः ।

७६. भवतेरः [ ७ । ४ । ७३ ]

भवतेरभ्यासस्योकारस्य अः स्यात् लिटि । भवतेरिति कर्तृनिर्देशात् भावकर्मणोर्नात्वम् । वेति केचित् । "अचो ञ्णिति" ( ७ । २ । ११५ ) इति वृद्धिप्राप्तौ "क्ङिति च" ( १ । १ । ५ ) इति निषेधः । वुगागमः । बभूव । बभूवतुः । बभूवुः । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम ।

---

इत्यादावभ्यासकार्यं न स्यात् । एवं दधृक् इत्यादावपि निपातितद्वित्वे । तस्मात् "लिटि धातोरनभ्यासस्य" ( ६ । १ । ८ ) इति प्रक्रमादत्र[1] ग्रहणेन धातुद्वित्वं मात्रं परामृश्यते । तेन विद्युत् दधृक् इत्यादेरपि संग्रहः । चराचर इत्यादौ तु आगागमविधानसामर्थ्यादभ्यासकार्याभाव इति तत्रैव वक्ष्यामः । अन्ये तु दिद्युदित्यादावन्येष्वपि दृश्यते इति दृशिग्रहणादभ्यासकार्यमित्याहुः । पूर्व इति । द्विःप्रयोगात्मके द्वित्वे प्रथमो भाग इत्यर्थः ॥ ७२ ॥

अभ्यासे चर्च । चकारेण जशपि समुच्चीयते इत्याह—जशश्चेति । तत्र[2] नियमः स्यादित्याशङ्क्यान्तरतमपरिभाषया व्यवस्थामाह—खयां[3] चर इत्यादि । वर्गाणां प्रथमद्वितीयाः खे च विवृतकण्ठश्वासानुप्रदाना अघोषाश्च तेषां तादृशा एव चरस्तुल्यस्थानाः । अवशिष्टाः झशः[4] तृतीयचतुर्थास्ते च घोषवन्तः संवृतकण्ठा नादानुप्रदानास्तेषां तादृशा एव जशस्तुल्यस्थाना इत्यर्थः । तत्र प्रकृतिचरां प्रकृतिचरो भवन्ति चिचीर्षति, तितीर्षति । प्रकृतिजशां प्रकृतिजशश्च भवन्ति । जिगाय बुबुधे इति । एतदप्यान्तरतम्यादर्थतः सिद्धम् ॥ ७५ ॥

भवतेरः । अभ्यासोकारस्येति । एतच्च अलोऽन्त्यपरिभाषया लभ्यते । न च "नानर्थकेऽलोऽन्त्यविधिः" ( प० ) इति निषेधात् । भवतेरिति[5] कर्तृनिर्देशादित्यादि ।

---

१. वन्तग्रहणेनेति क० पु० ।
२. जशत्वे इति क० पु० ।
३. खयां चर इत्यादि नास्ति क० पु० ।
४. जश इति क० पु० ।
५. कर्तृनिर्देशादिति क० पु० ।

अयं भावः—कर्त्रर्थस्य तिबन्तरूपस्यानुकरणमिदं न शिपा निर्देशः, शपानिर्दिष्ट त्वाच्च बोभावीति यङ्लुकि न भविष्यति। न चैवं भवतीत्यत्र प्रसङ्गः। लिटीति वचनात्। अभ्यासस्यासंभवाच्च। न च लिटि भवतीति रूपं भवति। अतस्तेन कर्त्रर्थो लक्ष्यते। कर्त्रर्थे लिटि परे भवतेरः स्यादिति। यत्तु कर्त्रर्थयोः तिप्शपो निर्देशादिति[1] प्राच व्याख्यातम्। तदसत्। श्तिपो धातुनिर्देशमात्रे विधानात्। शपश्च[2] विकरण स्यानर्थकत्वादिति। एतच्चानाकरम् इत्यन्ते न मन्यन्ये इत्याशयेनाह—वेति केचिदिति। तथा च कर्मण्यप्यत्वं दृश्यते। 'तत्यातपत्रै[3] बिभराम्बभूवे, बिभावरीभिर्विभर रांबभूविरे" इति।

ननु बभूवेत्येव णलो णित्त्वाद् वृद्ध्या भव्यमत' आह—असो ङित्तोत्यादि। "इन्धिभवतिभ्यां च" (१।२।६ इति पितो लिट किद्वादित्यर्थः। वृद्धिग्रहण च बभूविथेति गुणस्याप्युपलक्षणम्। नन्विग्लक्षणयोगु णवृद्धयो· 'क्ङिति च" (७।२।११८) इति निषेध इत्युक्तं तत्कथमज्लक्षणाया वृद्धेर्निषेधः। न च कित्त्ववैयर्थ्यं णलि उत्तमे णलि च गुणनिषेधार्थत्वेनोपपत्तेः, सत्यम्। कित्-ङित्-इत्युभयमत्रानुवर्तते। तत्र कित्त्वेनैव सिद्धे ङित्त्वविधेरज्लक्षणाया अपि निषेधो भवतीति। ननु कृताकृत प्रसङ्गित्वेन नित्यत्वाद् वुगेव गुणवृद्धी बाधिष्यते तत्किं कित्त्वेन प्रतिषेधार्थेन।

न च कृतयोगु णवृद्ध्योरेजन्तस्य प्राप्नोति—अकृतयोस्तूदन्तस्येति शब्दान्तर प्राप्त्या वुको नित्यत्वम्। एकदेशविकृतस्यानन्यत्वेन शब्दान्तरप्राप्त्यभावात्। सत्यम्। तदेतद्वार्त्तिककारस्य मतं यदाह—इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात् 'ताभ्यां लिङः किद्वचनानर्थक्यम् इति। सूत्रकारस्तु मन्यते वुगनित्यः इति तद्विधौ "ओः सुपि" (६।४।८३) इत्यत ओरित्यनुवर्तते उवर्णान्तस्य भुवो वुग् यथा स्यात् बोभावेति यङ्लुकि मा भूदिति तत्र हि "इन्धिभवतिभ्यां च" (१।२।६) इति श्तिपा निर्देशेन कित्त्वं व्यावर्त्यते। तेन वृद्धिरेव भवति। एव चयथा तत्रानुवर्णान्तित्वाद् वुग् न भवति।

एवं बभूवेत्यत्रापि वृद्धौ कृतायां न प्राप्नोतीत्यनित्यो वुक् परया वृद्ध्या मा बाधीदित्यारम्भणीयं कित्त्वम्। एष एव च कित्वे श्तिपा निर्देश[4] वुकि च तदभावं कुर्वतः सूत्रकृतोऽभिप्रायः। वुगागम इति। "भुवो वुग्लुङ्-लिटोः (६।४।८८) इत्यनेन। अत्रायं कार्यप्रवृत्तिक्रमः द्विर्वचनात् परत्वान्नित्यत्वाच्च[5] पूर्वप्राप्तयोगु णवृद्ध्योः कित्त्वान्निषेधे[6] कृते परत्वादादौ वुक्। ततो भूव् इत्यस्यैकाचः समुदायस्य द्वित्वम्।

---

१. दित्यर्थ इति ख० पु०।
२. स्वेति क० पु०।
३. तपत्तु पुत्तमिद साम्यवारीभिरावभूदिवत इति क० पु०।
४. भ्यभ्येति क० पु०।
५. नित्यत्वाविति नास्ति क० पु०।
६. कित्त्वनिषेधे इति ख० पु०।

## ७७ लिटस्तझयोरेशिरेच् [ ३ । ४ । ८१ ]

लिडादेशयोस्तझयोरेश्-इरेच् इत्येतौ स्तः। बभूवे। बभूवाते। बभूविरे। बभूविषे। बभूवाथे। बभूविढ्वे। बभूविध्वे। बभूवे। बभूविवहे। बभूविमहे।

---

प्रथमस्येति तु द्वितीयाज्वर्जनार्थमिति[1] सिद्धान्तात्। ततो "हलादिः शेषः (७।४।६०) इति वलोपेऽप्यामकार्यम् इति। आचार्यैस्तु रूपे विशेषाभावात् पूर्वं वुग्वोदाहृतः। हलादिः शेषश्च नोपन्यस्त। बभूवेति। तिपो णलादेशोऽनेकाल्त्वात्सर्वादेशः। "नानुबन्धकृतमनेकाल्त्वम्" (प० इत्यत्र नास्ति न ह्यकृते सर्वादेशे णकारस्य "चुटू" (१। ३। ७) इतीत्संज्ञाऽस्ति। अप्रत्ययादित्वात्। सर्वादेशे तु कृते स्थानिवद्भावेन प्रत्ययादित्वादनन्तरं[2] सा भवति।

ननु वुकि कृतेऽपि तस्य "असिद्धवदत्राभात्" (६।४।२२) इत्यसिद्धत्वादुवङ् प्राप्नोति। न च पुनर्वुकि "उपधाया च" (८। २। ७८) इति दीर्घत्वे वलि लोपे च बभूवेत्यादि रेत्स्यतीति वाच्यम्। वलि लोपं प्रति दीर्घस्यासिद्धत्वेन पूर्वं वलि लोपे कृते दीर्घस्यासंभवात् दीर्घ, वलोपयोश्चान्तरङ्गयोः कर्तव्ययोर्बहिरङ्गस्य वुकोऽसिद्धत्वेन तयोरप्रसङ्गादिति चेत्। सत्यम्। "वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" (वा०) इति वचनादुवङि कर्तव्ये वुकोऽसिद्धत्वं न भविष्यतीति। एतच्च दीङ् क्षये इत्यत्र पठिष्यत्याचार्यः। वुगर्थमिहैव पठितु युक्तम्। यद्वा "श्नसोरल्लोपः" (६।४।१११) इति तपरकरणाज् ज्ञापकाद् आभीयमसिद्धमनित्यमिति मत्वा तदुपेक्षितम्। बभूवतुरित्यादि। स्थानिवत्त्वेन विभक्तित्वान्न सत्वेरत्वम्। बभूविथेति। "आर्धधातुकस्य" (७। २। ३५) इतीट्। कित्त्वाद् गुणाभ व। वुका बाधितत्वाद् वा। बभूवेति। "आदेः परस्य" (१।४।५४) इति थकारस्याकारादेशे "अतो गुणे" (६। १। ९७) इति पररूपे च रूपसिद्धिः। बभूविवेत्यादि। नन्वत्र लिटः कित्त्वात् "श्र्युकः किति" (७। २। ११) इति इट्प्रतिषेधः प्राप्नोति। उपदेशे एवाच्त्वात् बुभूषतीतिवत्। सत्यम्। क्रादिनियमादिड् भविष्यति तदर्थं क्रादिसूत्रमात्रं पठितुं युक्तम्॥ ७६॥

"एशिरेचोश्च थासः से कुत एत्वं विधीयते।
आदेशे तु कृते मा भूत् ज्ञापितं भवितादिषु"

लिटस्त। शकारः सर्वादेशार्थः। चोऽन्तोदात्तार्थः। बभूविरे। बभूविषे इति। थासः से, इट्, षत्वम्। बभूविढ्ढ्वे बभूविध्वे इति। "विभाषेटः" (८।३।७९) इति वा ढत्वम्। "अनचि च" (८। ४। ४७) इति द्वित्वपक्षे जश्त्वेन बभूविद्ढ्वे इत्यपि॥ ७७॥

---

१. द्वितीयावर्जनार्थमिति क० पु०।

२. अनन्तर एवेति ख० पु०।

७८. अनद्यतने लुट् [ ३ । ३ । १५ ]

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् प्रत्ययः स्यात् ।

७९ स्यतासी लृलुटोः [ ३ । १ । ३३ ]

लृ इति लृङ्लृटोर्ग्रहणम् । धातोर्लृलुटोः परयोः क्रमात् स्यतासी एतौ प्रत्ययौ स्तः । शबाद्यपवादः ।

८०. लुटः प्रथमस्य डारौरसः [ २ । ४ । ८५ ]

लुडादेशप्रथमपुरुषस्य क्रमाद् डारौरस् एते आदेशाः स्युः । पदद्वयेऽपि डित्त्वसामर्थ्याट्टिलोपः । भविता ।

---

अनद्यतने । नास्त्यद्यतनो यस्मिन् सोऽनद्यतनः इति पूर्ववद् बहुव्रीहिस्तेन व्यामिश्रेऽपि भवति । अद्य श्वो गमिष्यतीति ॥ ७८ ।

स्यतासी । लृ इति लृङ्लृटोर्ग्रहणमिति । उत्सृष्टानुबन्धम् लृ इति रूप-सामान्यमनुक्रियते इत्यर्थः । तेन लृ इति एकनिमित्तरूपं[1] लुडिति चापरमिति निमित्तयोर्द्वित्वात् स्यतास्योर्यथासंख्यं सिद्धमित्याह—क्रमादिति । अन्यथा तु तन्न स्यात् निमित्तानां त्रित्वादनयोर्द्वित्वादिति । तासेरिकार उच्चारणार्थः । अन्ये तु मन्तेत्यादावनेनेदं[2] तस्य डादेशे[3] टिलोपे च कृते "अनिदिताम्" ( ६ । ४ । २४ ) इति नलोपो मा भूदिति तासेरिदित्त्वमिच्छन्ति । न च "असिद्धवदत्राभात्" (६।४।२२) इति टिलोपस्यासिद्धत्वम् । अनित्यत्वात् ॥ ७९ ।

लुटः प्रथमस्येति । अत्र प्रथमस्येति परस्मैपदात्मनेपदयोराद्यास्त्रयस्त्रयो गृह्यन्ते । तत्र वैषम्यात् संख्यातानुदेशो न प्राप्नोति । अत्राहुः पूर्वं परस्मैपदेषु वर्तते तत आवृत्त्यात्मनेपदेष्वपीति । अथवा डारौरस इति कृतद्वन्द्वानामेकशेषस्तेन षट् स्थानिनः आदेशाश्च षडेवेति भविष्यन्ति । अथवा आन्तर्यतो व्यवस्था । एकार्थस्यैकार्थं द्व्यर्थस्य द्व्यर्थं बह्वर्थस्य बह्वर्थं इति तदेतदाह—पदद्वयेऽपीति चेत् । तथापि पदद्वयेऽपि डित्त्वसामर्थ्यादिति । डित्त्वं हि टिलोपार्थं कृतम् । यदि च भत्वाभावात् स न स्यात्, डित्करणमनर्थकं स्याद् इत्यर्थः । ननु सति डित्त्वे आकारो विधीय-मानोऽन्त्यस्य स्यात् । धातोरित्यधिकाराद् "आदेः परस्य" (१।१।५४) इति चेत्, तथापि पदद्वयेऽपि इकारश्च श्रूयेत । ततश्च डकारोच्चारणस्य सर्वादेशार्थत्वात्

---

१. एकनिमित्तयोरिति क० पु० ।

२. मन्तेति क० पु० ।

३. तडादेशे इति क० पु० ।

८१. रि च [ ७ । ४ । ५१ ]

रेफे परे तासेरस्तेश्च सस्य लोपः स्यात् । भविताररौ । भवितारः ।

८२. तासस्त्योर्लोपः [ ७ । ४ । ५० ]

तासेरस्तेश्च सस्य लोपः स्यात् सादौ प्रत्यये । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः । भविता । भवितारौ । भवितारः । भवितासे । भवितासाथे । "धि च" ( ८ । २ । २५ ) इति सलोपः । भविताध्वे ।

८३. ह एति [ ७ । ४ । ५२ ]

तासस्त्योः सस्य हः स्यादेति परे । भविताहे भवितास्वहे । भवितास्महे ।

---

कथं सामर्थ्यम्, नैतत् । तथा सतोशादिवत् शितमेव कुर्यात् । भवितेति । भू ति इति स्थिते तिपो डा, सर्वादेशः णल्वत् । ततस्तासि तासेरिट् गुणावादेशो टिलोपः । तत्र कृते 'पुगन्तलघूपधस्य च" ( ७ । ३ । ८६ ) इतीटो लघूपधो गुणः प्राप्नोति, तन्निषेधार्थम् ' दीधीवेवीटाम्" (१ ।१ ।६) इतीह पठितु युक्तम् । यद्वा "नेड्वशि कृति" ( ७ । २ । ८ ) इत्यत इडित्यनुवर्तमाने पुनः 'आर्धधातुकस्य" ( ७ । २ । ३५ ) इतीड्ग्रहणम्, इडेव स्यादाङ्ग। विकारो मा भूदित्यवधारणार्थं विज्ञास्यते तेन गुणो न भविष्यतीति । अन्यथासिद्धत्वान्निषेधसूत्रमुपेक्षितमाचार्यैः ॥ ८० ।

रि च । रेफे परे इति । रेफादौ प्रत्यये इत्यर्थः । प्रत्ययाधिकारात् तेनाक्षिप्तस्य[1] प्रत्ययस्य रेफेण[1] विशेषणात् "यस्मिन् विधि." (५०) इति तदादिविधिः ॥ ८१ ।

तासेरस्तेश्चेति । तासस्त्योर्लोप ७ । ४ । ५० ) इति समुदायानुवृत्त्यनुरोधादेतदेवमुक्तम्, न पुनरस्तेः रेफादिप्रत्ययः सम्भवतीत्यस्तेरित्यविवक्षितं द्रष्टव्यम् । भवितेति । आत्मनेपदे तस्य डा । शेषं प्राग्वत् । टेरेत्वं तु न भवति । आदेशानामेत्वं तु न भवतीति सेग्रहणेन ज्ञापितत्वात् । भविताध्वे इति । 'धि च" "झलि च" ( ८ । २ । २५ ) इति सलोपः । रत्वे सलोपो वा सस्य दः इति केचिदिति पक्षेऽपि "अनचि च" (८।४।४७) इति धस्य द्वित्वे जश्त्वे च सदकारसलोपाभावेऽपि सस्य जश्त्वे तदेवैकं रूपमाह[2] । तच्चिन्त्यम् । "दीर्घादाचार्याणाम्" (८ । २ । ५२) इति निषेधाद् द्वित्वस्य वैकल्पिकत्वाच्च द्वैरूप्यस्यानिवार्यत्वात् ॥ ८२ ।

ह एति । अस्तेः परस्मैपदित्वेऽपि यदाऽस्मात् "कर्तरि कर्मव्यतिहारे" (१।३।१४) इत्यात्मनेपदं तदैकारः संभवति । अहं व्यतिहे इति । अत्राप्येतासि एकारादिः प्रत्ययो

---

१. तेन तिप् तस्य रेफोऽर्णविशेषणादिति क० पु० ।

२. तदेवैकरूप्यमाहेति क० पु० ।

८४. लिङाशिषि [ ३ । ४ । ११६ ]

आशिषि लिङ्स्तिङार्धधातुकसंज्ञः स्यात् । तेन न शबादि ।

८५. किदाशिषि [ ३ । ४ । १०४ ]

आशिषि लिङो यासुट् कित् स्यात् । आर्धधातुकत्वात् सलोपो न । "स्कोः संयोगाद्योः" (८।२।२९) इति सलोपः। भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

---

गृह्यते । स च तासिसाहचर्यादुत्तमैकवचनं सार्वधातुकमेव गृह्यते, नार्धधातुकम् । तेनैधामासे स्वयेत्तामासे इत्यार्धधातुके न भवति । तासेहि सार्वधातुकमेवोकारः संभवति[1], नार्धधातुकमिति ॥ ८३ ।

किदाशिषि । यासुट् कित् स्यादिति । यासुटोपलक्षितो लिङ् किदित्यर्थः । नहि यासुटः कित्त्वे प्रयोजनमस्ति । कित्कार्याणां प्रत्यये विधानात् तदयं वृत्त्यर्थः[2] आशिषि यत्र लिङो यासुट् विधीयते तत्र लिङ् कित् स्यादिति । यासुटोपलक्षितलिङ: ङित्त्वेनैव गुणवृद्धिप्रतिषेधे[3] सिद्धे[4] किद्वचनम् इज्यात् जागर्यादित्यादौ सम्प्रसारणादिसिद्ध्यर्थम् । आर्धधातुकत्वादिति । "लिङः सलोप" ( ७ । २ । ७९ ) इत्यत्र सार्वधातुकलिङः इत्युक्तेरित्यर्थः । स्कोरित्यादि भू ति इति स्थिते "इतश्च" ( ३ । ४ । १०० ) इतीलोपे कृतियोर्यासुट्सुटोः सस्य "स्कोः" ( ८ । २ । २९ ) इति सलोप. । तत्र सिपि झलि संयोगादित्वात्तु यासुट:[5] सलोपस्तस्यासिद्धत्वात्तिरः संयोगान्तलोपस्तु न भवति पदान्तसंयोगादिलोपस्यानवकाशत्वात् ।

ननु संयोगादिलोपस्य "पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इत्यस्यासिद्धत्वाद् हल्ङ्यादिलोपे न भाव्यम् । नैतद् । सुतिसीति प्रत्ययेन प्रकृतेराक्षेपात् हलन्ता प्रकृतिर्गृह्यते । न च यासुट् सुडन्ता प्रकृतिरिति । यत्त्वाह माधवः--भूयादित्यत्र सलोपस्यासिद्धत्वे सुटोऽपि लोपोऽसिद्धस्तस्य च तकारभक्तत्वाद् अपृक्तस्यैवाभाव इति । तच्चिन्त्यम् । एवमपि सुटमेवाश्रित्य लोपप्रसङ्गात् । प्रकृत्याक्षेपेण परिहार-

---

१. सर्वत्र इति क० पु० ।

२. तदयंवृत्त्यर्थ इति क० पु० ।

३. लिङ्त्वेनैवेति क० पु० ।

४. सिचि इति क० पु० ।

५. यासुटोरिति क० । पु० ।

६. सुट इति क० पु० ।

## ८६. सुट् तिथोः [ ३ । ४ । १०७ ]

आशिषि लिङस्तकारथकारयोः सुडागमः स्यात् । यलोपः । भविषीष्ट । भविषीयास्ताम् । भविषीरन् । भविषीष्ठाः । भविषीयास्थाम् । भविषीढ्वम् । भविषीय । भविषीवहि । भविषीमहि ।

## ८७. लृट् शेषे च [ ३ । ३ । १३ ]

क्रियार्थोपपदादन्यत्र शुद्धे भविष्यत्यर्थे धातोर्लृट् प्रत्ययः स्यात् । चात् तत्रापि । "स्यतासी" (३ । १ । ३३) इति स्यः । भविष्यति । भविष्यतीति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । भविष्यते । भविष्येते । भविष्यन्ते । भविष्यसे । भविष्येथे । भविष्यध्वे । भविष्ये । भविष्यावहे । भविष्यामहे ।

---

श्चेत्, तर्हि किमनेन ? अथागमे कृते विशिष्टस्यैवार्थवत्त्वात् प्रत्ययत्वाच्च नापृक्तत्वं तमात्रस्येति मतम् । न्तेव यासुट्मात्रेणापि तत्सुवचनम्. किं सुटोऽसिद्धत्वे नापूर्वं प्रतिपादितम् । प्रणिदापयतीत्याद्यर्थमागमिनोऽपि केवलस्यार्थवत्त्वमङ्गीकृतमाकरे इति न किञ्चिदेतत् । भूयास्तामित्यादौ सुटि कृते "स्कोः"( ८।२।२९) यासुट् मात्रस्य सस्य लोपः । भूयासमित्यादौ यथा "नित्यं ङितः" ( ३ । ४ । ९९ ) इति यासुटः सलोपो न भवति, तथा तत्रैवोक्तम् ॥ ८५ ।

सुट् तिथोः । तकारे[1] इकार उच्चारणार्थः इत्याह—तकारथकारयोरिति । एवं वर्णमात्रागमेन सुटा लिङः आगमो यासुट् न बाध्यते भिन्नविषयत्वात् । भविषीष्टेति । सीयुट् गुणः । अवादेशः । सुट् । यलोपः । "आदेशप्रत्यययोः" (८ । ३ । ५९) इति षत्वम् । ष्टुत्वम् । अवयवावयवोऽपि समुदायं प्रत्यवयवो दृश्यते । लोके यथा देवदत्तस्याङ्गुलिरिति । ततश्च तत्प्रत्ययावयवतकारमात्रभक्तोऽपि सुट् प्रत्ययग्रहणेन गृह्यते इति सुटोऽपि षत्वसिद्धिः । भविषीढ्वमिति । "विभाषेटः" ( ८ । ३ । ७९ ) इति वा ढत्वम् । भविषीयेति । इटोऽत् ॥ ८६ ।

लृट् शेषे च । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( ३ । ३ १० ) इति प्रागुक्तम् । ततोऽन्यः शेष इत्याह—क्रियार्थोपपदादन्यत्रेति । क्रिया अर्थः प्रयोजनं यस्याः क्रियायाः सा क्रियार्था सा उपपदं यस्मिन् स क्रियार्थोपपदः क्रियार्थक्रियोपपद इत्यर्थः । यद्येवम् अनद्यतने लुड्विषयेऽपि प्राप्नोतीत्याशङ्क्याह—शुद्धे भविष्यतीति । चतुर्थी हि

---

१. तौविति ख० पु० ।

## ८८. लिङ्निमित्ते लृङ् क्रियातिपत्तौ [३ । ३ १३९]

हेतुहेतुमद्भावादि लिङ्निमित्तं तत्र भविष्यत्यर्थे धातोर्लृङ् स्यात् कुतश्चित् क्रियाया अनिष्पत्तौ गम्यमानायाम् । स्यप्रत्ययः । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । अभविष्यत । अभविष्येताम् । अभविष्यन्त । अभविष्यथाः । अभविष्येथाम् । अभविष्यध्वम् । अभविष्ये । अभविष्यावहि । अभविष्यामहि । सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यद् इत्यादि ज्ञेयम् ।

---

भविष्यत्कालः । अद्यतनानद्यतनव्यामिश्रणसामान्यरूपभेदात् । यदुक्तम्—

भूतः[१] पञ्चविधस्तत्र भविष्यंश्च चतुर्विधः ।
वर्तमानो द्विधाख्यात इत्येकादश कल्पना ॥

तत्रानद्यतने भविष्यति परत्वाल्लुटा भाव्यम् इत्यन्यत्र भविष्यत्ययं विधिरित्यर्थः । तत्रानद्यतन इति 'बहुव्रीहिनिर्देशाद् व्यामिश्रणेऽपि लृडेव भवति । यास्यत्रापीति । क्रियार्था क्रियोपपदेऽपीत्यर्थः । 'भविष्यतीति शेषस्योदाहरणम् । क्रियार्थोपपदस्य तु न भविष्यतीति व्रजतीति । भविष्यामीति । "तदादिग्रहणं स्यादिनुमर्थम्" (वा०) इत्युक्तेः स्यान्तस्याङ्गसंज्ञेति "अतो दीर्घो यञि" ( ७ । ३ । १०१ ) इति दीर्घः । भविष्यते इत्येत्वम् । भविष्येते इत्यत्र "आतो ङितः" ( ७ । २ । ८१ ) इतेयादेशः ॥ ८७ ।

लिङ्निमित्ते इति । लिङो निमित्तम् "हेतुहेतुमतोर्लिङ्" ( ३ । ३ । १५६ ) "कामप्रवेदनेऽकच्चिति" ( ३ । ३ । १५३ ) इत्येवमादि तत्र गम्यमाने । कुतश्चिदिति । कस्माच्चिद् वैगुण्यात् क्रियाया अनभिनिर्वृत्तौ गम्यमानायामित्यर्थः । स्यप्रत्यय इति "स्यतासी" ( ३ । १ । ३३ ) इत्यत्र लृङ्लृटोर्ग्रहणमित्युक्तम् । अभविष्यदिति । भू ति इति स्थिते "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः । अडागमः स्यप्रत्ययः । इडागमे गुणायादेशौ । षत्वम् । क्रियातिपत्तिं विवृणोति—सुवृष्टिश्चेदित्यादि । सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत् । न च सुवृष्टिर्भविष्यति तस्मात् सुभिक्षमपि न भविष्यतीत्यर्थः । अत्र भविष्यत्सुभिक्षहेतुभूतां वृष्टिं बुद्ध्योत्प्रेक्ष्य तदतिपत्तिं च

---

१. अयं श्लोको पूर्णो नास्ति क० पु० ।

२. नेत्येव क० पु० ।

३. अभिनिवृत्ताविति क० पु० ।

८९. शेषे विभाषाऽकखादावषान्त उपदेशे [८।४।१८]

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात्। प्रणिभवति। प्रनिभवति। एवं चेतत्यादयः। चिती संज्ञाने।

---

प्रमाणान्तरादवगम्य वक्रोक्त्या वाक्यं प्रयुङ्क्ते। तत्र हेतुहेतुमतोर्वृष्टिसुभिक्षयोर्भविष्यत्कालयोरतिपत्तिरितो वाक्यादवगम्यते। "[१]भूते च" ( ३ । ३ । १४० ) इति सूत्रान्तरेण भूतकालेऽपि क्रियातिपत्तौ लृङ् विधीयते। तत्राप्येष एव प्रयोगः ॥८८॥

शेषे विभाषा। "नेर्गदनद" (८।४।१७) इति सूत्रोक्तापेक्षयाऽन्यः शेष इत्याह—गदनदादेरन्यस्मिन्निति। उपदेशे किम्? प्रनिचखादेति[२]। अकखादौ[३] किम्? प्रनिकरोति। प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। उपदेशग्रहणात् प्रनिचष्टे इत्यत्रापि निषेधो भवति। शेषे किम्? प्रणिगदति प्रणिनदतीति। अस्मादेव नेर्णत्ववचनाद् ज्ञापकाद् निशब्दव्यवधानेऽपि प्रशब्दः प्रयुज्यते। उपसर्गानुवृत्तेः स्वरितत्वेनापि सुवचत्वात्। "ते प्राग्धातोः" ( १ । ४ । ८० ) इति तेग्रहणेन विजातीयव्यवधानस्यैव निषिद्धत्वात्। एवमिति अनेन प्रकारेण चितीप्रभृतयोऽपि लकारेषूदाहर्तव्याः। विशेषस्तु वक्ष्यते इत्यर्थः। तानेव विशेषान् धातुविशेषेषूदाहरिष्यन् परस्मैपदात्मनेपदमिश्रप्रकरणभेदेनोपक्रमते। चितीति। सज्ञानं चैतन्यम्। उपलक्षणमेतत्। स्मरणेऽपि हि दृश्यते चेतन्ती सुमतीनाम् इति। तथा च "अधीगर्थदयेशां कर्मणि" ( २ । ३ । ५२ ) षष्ठी प्रयुक्ता। तथा सधानेऽपि। यदाह श्रीरामस्वामी प्रायो विनाशश्चित्तसधानं प्रायश्चित्तमिति। "प्रायस्य चित्तिचित्तयोः" ( वा० ) इति पारस्करादिपाठात् सुट्[४]। तथा शोधनेऽपि स्मरन्ति—"प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम्" इति। निश्चयेऽपि स्मर्यते। 'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तयोर्निश्चयसंयुक्तं प्रायश्चित्त विदुर्बुधाः" इति। चितीति ईकारः 'श्वीदितो निष्ठायाम्" ( ७ । २ । १४ ) इतीट्प्रतिषेधार्थः। अज गताविरयन्ताः। द्वाविंशतिः सेट्काः एध। वृद्धाविति यावत् परस्मैपदिनः ॥ ८९ ।

---

१. तत्र हेतुमतोरित्येव क० पु०।

२. रस्मिन्निति क० पु०।

३. प्रनिचिकायेति ख० पु०।

४. अकखादावित्यारभ्य–प्रनिखादतीत्यन्तो नास्ति क० पु०।

५. मुंद्रा इति क० पु०।

## ९०. पुगन्तलघूपधस्य च [ ७ । ३ । ८६ ]

पुगन्तस्य लघूपधस्य चेको गुणः स्यात् सार्वधातुकयोः । चेतति । चेतेत् । अचेतत् । लुङि सिचि इडागमे कृते ।

## ९१. वदव्रजहलन्तस्याचः [ ७ । २ । ३ ]

एषामचः स्थाने वृद्धिः स्यात् सिचि परस्मैपदे । इति वृद्धिप्राप्तौ ।

---

पुगन्त । अत्र यदि पुगन्तो यस्य लघ्वी उपधा यस्येति च बहुव्रीहिर्ज्ञायते, तेनाङ्गं विशेष्यते तेन चेक्[1] वैय्यधिकरण्येन विशेष्येत पुगन्तस्याङ्गस्य लघूपधस्य चाङ्गस्येको गुण इति । ततो दरिद्रापयति, भिनत्ति इत्यादावुपधाया अपीको गुणः स्यादतः पुकि अन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधमिति । द्वन्द्वैकवद्भावान्नपुंसकह्रस्वत्वम् । इकश्च समानाधिकरणं विशेषणम् । पुकि परे अन्तभूतो य इक्, तथा लघ्वी या उपधा तद्रूपस्येको गुण इत्याकरे व्याख्यातम् । ततश्चेहापि लघूपधाया इति व्याख्यातुं युक्तम्, न तु लघूपधस्य चेति । सत्यम्—

एवं मन्यते द्वयोरपीहावपि इक प्रत्ययेनादन्तत्वेन विशेषणाद् "येन नाव्यवधानम्" इत्येकवर्णाव्यवहितस्येको भविष्यति, न तु भिनत्तीत्यादावनेकेन व्यवायादिति । लघूपधस्येति किम् ? ईहते, ऊहते । कथं तर्हि भेत्ता छेत्तेत्यादौ गुणः प्रकृतिप्रत्ययावयवयोः हलोरानन्तर्येण "संयोगे गुरु" ( १ । ४ । ११ ) इति गुरूपधत्वात् । नैष दोषः । "त्रसिगृधिक्षिपेः क्नुः" ( ३ । २ । १५० ) "हलन्ताच्च" (१ । २ । १०) इति क्नुसनोः कित्करणं ज्ञापकं भवति प्रकृतिप्रत्ययहलोरानन्तर्येऽपि लघूपधगुण इति । चेतयतीति । चित् लट् तिप् शप् उपधायाः गुणः । चेततः चेतन्तीत्यादि । चेतेदिति । विध्यादौ लिङ् । तस्य तिप् यासुट् सुटो लोपः, शप् । "अतो येयः" ( ७ । २ । ८० ) "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः । आद् गुणः । वलि लोपः । चेतेताम् । चेतेयुरित्यादि । चेततिवति । लोटस्तिप् । शप् । एरुः । चेततादिति[2] । चेतताम् । चेतन्तु[3] । अचेतदिति । लङस्तिप् । इलोपः । अडागमः । शप्गुणौ । अचेतताम् । अचेतन्निति । लुङीत्यादि । चित् अस्माल्लुङस्तिप् इलोपः "च्लि लुङि" "च्लेः सिच्" (३ । १ । ४४) इत्याविलौ अडागमः अचित् स् त इति स्थिते उपधागुणे ( ३ । १ । ४३ ) प्राप्ते तदपवादं वृद्धिमाशङ्कते ॥ ९० ॥

वदव्रज । वद व्यक्तायां वाचि । व्रज गतौ । हल् अन्ते येषां तानि अङ्गानि त्रयाणां समाहारद्वन्द्वोऽयमित्याह—एषामिति । हलन्तत्वादेव सिद्धे वदव्रज्योर्ग्रहणं

---

१. चेकोऽइति क० पु०

२. चेततादिति द्विवारं क० पु० ।

३ चेतुन्तमिति क० पु० ।

## ९२. नेटि [ ७ । २ । ४ ]

इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात् । गुणः ।

## ९३. अस्तिसिचोऽपृक्ते [ ७ । ३ । ९६ ]

अस्तेः सिचश्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमः स्यात् । लघूपधत्वेटो गुणे प्राप्ते ।

## ९४. दीधीवेवीटाम् [ १ । १ । ६ ]

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः ।

---

"अतो हलादेर्लघोः" ( ७ । २ । ७ ) इति विकल्पबाधनार्थम् । सिचि परस्मैपदेष्विति । परस्मैपदे परे सिचोत्यर्थः । एतच्चाङ्गस्य विशेषणं न त्वचो हलन्तेऽचोऽनन्तरस्यासंभवात् । अथापि येन न व्यवधानमिति न्यायः । एवमप्येकवर्णेन व्यवधानं स्यान्नानेकेन मराङ्क्षीत् अभाङ्क्षीत् इति । यदा तु ग्रहणे जातिनिर्देशस्तदाज्विशेषणेऽप्यदोषः । उदवोढामित्यत्र तु वहेः सिचि ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् पूर्वं हलन्तलक्षणा वृद्धिः प्रवर्तते, पश्चादोत्त्वं तत्र कृते पुनर्वृद्धिर्न भवति सकृत्प्रवृत्त्या कृतकार्यत्वात् । यत्र त्वकृता तत्रौकारस्यापि भवति सौढामित्रस्यापत्यं सौढामित्रिरिति ॥ ९१ ।

नेटि । इडादौ सिचीति । यद्यपीडिति समुदायनिर्देशो नाल्ग्रहणम्, तथापि टकारस्यानुबन्धस्यानेकान्तत्वाद् इकारमात्रनिर्देशे तात्पर्यमिति 'यस्मिन्विधिः' (प०) इति तदादिविधिर्दर्शितः । हलन्तस्येति । "अनन्तरस्य विधिर्वा" इति न्यायेन वदव्रजेत्यस्यापवादो न सिचि वृद्धेस्तेनालावीत् इत्यादौ न निषेध इति भावः । न चात्राप्यन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तवृद्ध्यैव भवितव्यमिति वाच्यम्, सिचि वृद्ध्या वचनसामर्थ्यादन्तरङ्गस्यापि गुणस्य बाधनात् । "ह्म्यन्तक्षण" ( ७ । २ । ५ ) इति णिश्विग्रहणेन "न सिच्यन्तरङ्गमस्ति" इति ज्ञापनाच्च । अन्यथा अोनयीत् अश्वयीत् इत्यत्राप्यन्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तानां नेत्येव निषेधस्य सिद्धेः किं णिश्विग्रहणम् । गुण इति निषेधेन वृद्धेरपवादस्याभावे पुनरुत्सर्गस्य स्थितिरित्यर्थः॥ ९२

अस्तीति । अस्तेरिति । अस् भुवीत्यस्माद् धातोः "सेः[1] सिच्" ( ३ । १ । ४४ ) च्लेः सिजादेशात् । अत्र मकारः प्रश्लिष्यते तेनास्तिसिचोर्विशेषणादस्तेर्भूभावे सिचो लुकि च अभूदित्यत्र न भवतीति प्रागेव प्रपञ्चितम् ॥ ९३ ।

दीधी । दीधीङ् दीप्तिदेवनयोः । वेवीङ् वेतिना तुल्ये इति धातोः इटश्चेति आगमस्य ग्रहणं व्यापकत्वात्, न तु इट किट कटी गतौ इति धातोः । साहचर्यं च

---

१. सि चो ति क० पु०

९५. इट ईटि [ ८ । २ । २८ ]

इटः परस्य सिचो लोपः स्यादीटि। "सिज्लोप एकादेशे सिद्धो वाच्यः" ( वा० ) सवर्णदीर्घः। अचेतीत्। अचेतिष्टाम्।

९६. सिजभ्यस्तविदिभ्यश्च [ ३ । ४ । १०९ ]

सिचः परस्याभ्यस्तविदिभ्यां च ङित्संबन्धिनो झेर्जुस् स्यात्। अचेतिषुः। अचेतीः। चिचेत।

---

न सर्वत्र नियामकम्। एतच्च सूत्रं भाष्ये प्रत्याख्यातम्। "दीधीवेव्योश्छन्दोविषयत्वात्" इत्यादिना। इड्ग्रहणप्रत्याख्यानं तु भवितेत्यत्रोक्तमस्माभिः॥ ६४॥

इट ईटि। "रात्सस्य" ( ८ । २ । २४ ) इत्यतः 'सस्येत्यनुवर्तमानमपि इट ईटीति समभिव्याहारात् सिच्पर सम्पद्यते इत्याह—सिचो लोपः स्यादिति। इट इत्यागमो गृह्यते व्यापकत्वान्नेट् गताविति धातुः। ननु "पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इति सिज्लोपस्यासिद्धत्वात्' सवर्णदीर्घेण न भाव्यमत आह—सिज्लोपश्च इति। अचेतिष्टामिति। तसस्ताम्। तस्यापृक्तत्वाभावादीटोऽभावान्न सिचो लोपः षत्वम्। ष्टुत्वम्॥ ६५॥

सिजभ्यस्त। अलिडर्थमारम्भः। विदिग्रहणमसिजर्थम्। विद ज्ञाने इत्यस्यैव ग्रहणम्। ननु विन्ते विद्यते विन्दतीमामाद्ययोरात्मनेपदित्वाद् झेरसम्भवात् अन्त्यस्य च विकरणाव्यवधानेन ङितः परस्यासम्भवात्। "नित्यं ङितः" ( ३ । ४ । ९९ ) इत्यतो मण्डूकप्लुत्या ङित इत्यनुवर्तते इत्याह—ङित्संबन्धिन इति। 'अचेतिषुरिति। येन नाप्राप्तिन्यायेन जुसा "इतश्च" ( ३ । ४ । १०० ) इत्येतद् बाध्यते। कृते तु तस्मिन् परत्वादपृक्तत्वलक्षणे ईटि कृते तत्सहितस्य जुस् न भविष्यति "निर्दिश्यमानस्यादेशा भवन्ति" ( प० )। अचेतीरिति। सिज्लोप एकादेशे रुत्वम्। थसादिषु तु अचेतिष्टम्। अचेतिष्ट। अचेतिषम्। अचेतिष्व। अचेतिष्मेति रूपाणि स्पष्टत्वान्नोदाहृतानि। चिचेतेति चितेर्लिटि तिपो णलि द्वित्वम् 'तच्च चिदिति तान्तस्य समुदायस्य न तु चिमात्रस्य, समुदायावयवसन्निधौ समुदायस्यैव कार्यं नावयवानामित्येकाज्द्विर्वचनन्यायेन व्यवस्थितत्वात्। चिशब्दमात्रस्य च द्वित्वे तान्तस्यानभ्यस्तत्वात् चेचितीति इति यङ्लुकि

---

१. मण्डूक प्लुतेति नास्ति क० पु०।
२. उपपत्तेरनवस्थात्राचार्यैः न्यायभाष्य नावाठीति क० पु०।
३. इत्यनुवृत्त्यामिति क० पु०।
४. च त स्येति क० पु०।

## ९७. असंयोगाल्लिट् कित् [ १ । २ । ५ ]

असंयोगात् परोऽपित् लिट् कित् स्यात् । चिचिततुः । चिचितुः । चिचेतिथ । चेतिता । चित्यात् । चेतिष्यति । अचेतिष्यत् । च्युतिर् आसेचने । "इर इत्संज्ञा वाच्या" ( वा० ) च्योतति । च्योतेत् । च्योततु । अच्योतत् ।

---

"नाभ्यस्तस्य" ( ७ । ३ । ८७ ) इति गुणनिषेधो न स्यात् । वचनसामर्थ्याद् व्यवहितेऽपि स्यादिति चेन्न । लघूपधग्रहणानुवृत्त्यापि वचनस्योपपत्तेः । तथा चेचितति "अदभ्यस्तात्" ( ७ । १ । ४ ) इति न स्यात् । अचेतिपुरिति च 'सिजभ्यस्त" ( ३ । ४ । १०९ ) इति जुस् न स्यात् । तस्मात् तान्तस्यैव द्वित्वमेषितव्यम् । तथा च "हलादिः शेषः" ( ७ । ४ । ६० ) अत्रैव पठितुं युक्तस्तथापि प्रकृतोदाहरणस्य विमात्र द्विर्वचनेनाप्युपपत्तेरनावश्यकत्वादाचार्यैर्न्यायमनुभाव्य नापाठि ॥ ९६ ॥

असंयोगात् । असंयोगात्पर इति । लिडात्मस्य धातोरसंयोगेन विशेषणात्तदन्तविधेरसंयोगान्तात्पर इति व्याख्येयम् । प्रसज्यप्रतिषेधश्चायम्[१] । पर्युदासे हि संयोगान्तसदृशाद् हलन्तादेव कित्त्वं स्यात् । चिचिततुः । बिभिदतुरित्यादौ । न तु विव्यतुः, चक्रतुरित्यादौ । यद्वा पर्युदासेऽपि नञिवयुक्तन्यायो नाश्रयिष्यते सस्मरतुरित्याद्यर्थात् "ऋतश्च संयोगादेर्गुणः" ( ७ । ४ । १० ) इति गुणारम्भात् । ङित्त्वे प्रकृतेऽपि कित्त्वातिदेशः ईधतुः, जजागरतुरित्यादौ सम्प्रसारणगुणाद्यर्थः । चिचिततुरिति । "लिट् च" ( ३ । ४ । ११५ ) इत्यार्धधातुकत्वात् प्राप्तस्योपधागुणस्य ' विङति च" (१।१।५) इति निषेधः । अपित् किम् ? चिचेतिथ । "आर्धधातुकस्येड् वलादेः" ( ७ । २ । ३५ ) इतीट् । चेतितेति । चितेर्लुटस्तिप् । तस्य डा तासि । इट्, गुण[२], टिलोपः । चेतितारौ । चेतितारः । इत्यादि । चित्यादित्यादि । आशिषि लिङि, यासुटः कित्त्वान्नोपधागुणः "स्कोः संयोगाद्योः" ( ८ । २ । २९ ) इति सलोपः । चेतिष्यतीति । लृटस्तिप् तस्य इट्, गुणः, षत्वम् । अचेतिष्यदिति । पूर्ववत्[२] स्ये इटि गुणः । अट् "इतश्च" (३ । ४ । १००) इतीलोपः । चिति स्मृत्यामिति चुरादाविदित् पठ्यते । चित् संचेतने[३] इत्यपरे । आत्मनेपदी[४] चेतयते इति । श्च्युतिर्[५] आसेचने । आसेचनमार्द्रीकरणम्, तथा च कर्मस्थक्रियोऽयम् इति हरदत्तः । आङोपदर्शेऽभिव्याप्तौ वा । "इर इत्संज्ञा वाच्या"

---

१. प्रसज्यप्रतिषेधश्चायमिति नास्ति क० पु० ।
२. पूर्ववत् स्ये इड् गुण इति क० पु० ।
३. आसेचने इति ख० पु० ।
४. आत्मनेपदे इति ख० पु० ।
५. आसेचने इति नास्ति क० पु० ।

## ६८. इरितो वा [ ३ । १ । ५७ ]

इरितो धातोः परस्य च्लेरङादेशो वा स्यात् परस्मैपदेषु । अच्युतत् । अच्योतीत् ।

## ६९. हलादिः शेषः [ ७ । ४ । ६० ]

अभ्यासस्यादिर्हल् शिष्यतेऽन्यो हल् लुप्यते । चुच्योत । च्योतिता । च्युत्यात् । च्योतिष्यति । अच्योतिष्यत् । श्च्युतिर् क्षरणे ।

---

( वा० ) "इरितो वा" ( ३ । १ । ५७ इति ज्ञापकादिति भावः । यद्वा "उपदेशेऽजनुनासिक इत्" ( १ । ३ । २ ) 'हलन्त्यम्" ( १ । ३ । ३ ) इतीकाररेफयोः प्रत्येकमित्संज्ञा वाच्या व्याख्येयेत्यर्थः ॥ ६७ ॥

"इरितो वा" ( ३ । १ । ५७ ) इत्यत्रापि इराविती यस्येति विगृहीतव्यम् । न चैवं "इदितो नुम् धातोः" ( ७ । १ । ५८ ) इति नुम्विधानात् । इत् चासावित् चेदित् तस्येदितः विशेषणेन तदन्तविधेरित्संज्ञकेकारान्तस्येति व्याख्यानाद्वा । अच्युतदिति । च्युतेर्लुङस्तिप् इलोपः । च्लि लुङि, च्लेः सिचि प्राप्ते इरित्त्वादङ् । ङित्त्वान्नोपधागुणः । अच्योतीदिति । अङभावे च्लेः सिच् तस्य 'इट ईटि" ( ८ । २ । २८ ) इति सलोपः । तस्यासिद्धत्वादुपधागुणः, सवर्णदीर्घः ॥ ६८ ॥

हलादिरिति । हलादिरिति पृथक्पदे कर्मधारयो वा । शेषशब्दश्चात्र निवृत्तिमदवस्थानवाची । तत्रावस्थानस्य स्वतः सिद्धत्वेनाविधेयत्वाद् गुणभूता[1]ऽन्यनादिनिवृत्तिरेवात्र विधीयते इत्याशयेनाह—अन्यो हल् लुप्यते इति । आदिर्हल् शिष्यते इत्येतत्तु शाब्दप्राधान्यप्राप्त्यर्थानुवादमात्रम्, यद्वा शेषशब्दोऽवस्थानमात्रवाचीति वस्त्वर्थं व्याचष्टे—आदिर्हल् शिष्यते इति । नन्वेव प्राप्तत्वेन विधिवैयर्थ्यमित्याशङ्क्य —एवं तर्हि सिद्धे सत्यारम्भो नियमार्थः । अभ्यासजातावादिरेव हल् शिष्यते नानादिरिति दर्शयति-अन्यो हल् लुप्यते इति । चुच्योतेति । लिटि समुदायस्य द्विरुक्तौ हलादिः शेषेणाभ्यासे यकारतकारयोर्निवृत्तिः । श्च्युतिर् क्षरणे । क्षरणं स्रुतिः । तालव्यादिरयं न दन्त्यादिः । तथा सति आट् श्च्योततोऽत्यादौ "ङः सि धुट्" ( ८ । ३ । २९ ) इति धुट् प्रसङ्गाद् इति क्षीरस्वामी । तदसत्[2] । "श्चुत्व[3] धुटि सिद्धं वाच्यम्" ( वा० ) इति निषेधादिति श्रीभोजः । तथा च वृत्तिन्याससहरदत्तादयस्तु

---

१. न्यादिनिवृत्तिरिति क० पु० ।

२. तदसदित्यारभ्य-श्रीभोजः इत्यन्तो नास्ति क० पु० ।

३. धुत्वमिति क० पु० ।

१००. शर्पूर्वाः खयः [ ७ । ४ । ६१ ]

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । चुश्च्योत । मन्थ विलोडने । ममन्थ । संयोगात्परस्य लिटोऽकित्त्वात् "अनिदितां हलः" ( ६ । ४ । २४ ) इति नलोपो न । ममन्थतुः । संयोगाल्लिटो वा कित्त्वम् । ममथतुः । लोपः मथ्यात् । कुथि हिंसासंक्लेशनयोः ।

१०१. इदितो नुम् धातोः [ ७ । १ । ५८ ]

इदितो धातोर्नुमागमः स्यात् । कुन्थति ।

---

दन्त्यादि मन्यन्ते । "सकारजः शकारश्च" इति परिभाषणात्[1] । यथा च मधुश्च्युतमाचष्टे इति णिचि "णाविष्ठवत्" ( वा० ) इति लोपे ततः क्विपि णिलोपे च "स्कोः" (८ । २ । २९ ) इति सलोपः । "च्योर्वलि" इति यलोपे चोः कुत्वेन[2] मधुगिति भवति । तालव्यादित्वे तु सलोपाभावात् व्रश्चादिपत्वे मधुडिति स्यात् । श्चुत् श्च्योततीत्यत्र धुट् तु न भवति । "श्चुत्वं धुटि सिद्धं वक्तव्यम्" इति वचनात् । केचित्त्वयकारममुं पठन्ति । यश् हीनमन्ये[3] । अश्चुतत् इति । "इरितो वा" (३।१।५७) ॥ ९९ ॥

शर्पूर्वाः । शर्पूर्वो येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिस्तेन परो न शेष इत्याह अन्ये हलो लुप्यन्ते इति । अन्ये–अनयोर्व्यतिरिक्ता इत्यर्थः । चुश्च्योतेति खयश्चकारस्य शेषेऽभ्यासे सकारयकारतकाराणां निवृत्तिः । मन्थ । संयोगात् परस्येति । "असंयोगाल्लिट् कित्" ( १ । २ । ५ ) इत्युक्तेरिति भावः । ममथतुरिति कित्त्वपक्षे नलोपस्यासिद्धत्वात् "अत एकहल्मध्ये" ( ६ । ४ । १२० ) इत्येत्त्वाभ्यासलोपो न भवतः । मन्थ्यादिति । आशिषि लिङि यासुटः कित्त्वान्नलोपः । दौर्गास्तु कुथि पुथि लुथि मथि हिंसासंक्लेशनयोरिति दण्डके मथिमिदितं पठन्ति । तस्य मन्थतीत्यादिरूपवर्गे समानेऽपि ङ्किति विशेषः । इदित्वादत्र लोपाभावः । मन्थ्यात् । मन्थ्यतेऽब्धिः सुरैः । मन्थितः । मामन्थ्यते इत्यादि । मथे विलोडने इति निरनुषङ्गोऽप्येदित् भ्वादौ पठ्यते । तस्य मथति । मथेत् । मथतु । अमथत् । "ह्म्यन्त" ( ७ । २ । ५ ) अमथीत् । ममाथ । मेथतुः । मथुः । मथितेत्यादि ज्ञेयम् । क्र्यादावपि सानुषङ्गो मन्थ विलोडने इति पठ्यते । तस्य मथ्नाति, मथ्नीत इत्यादि । कुथि संक्लेशो वा धातुः । अन्ये तु संक्लेशनयोरिति

---

१. भाषापाठात् इति क० पु० ।

२. कुत्वे इति क० पु० ।

३. य वा हीनमिति क० पु० ।

## १०२. कुहोश्चुः [ ७ । ४ । ६२ ]

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशः स्यात् । चुकुन्थ । इद्त्त्वान्नलोपो न । प्रनिकुन्थ्यात् । कादित्वान्न णः । षिधु गत्याम् ।

---

पठन्ति सोऽपपाठः । सकर्मकत्वप्रसङ्गात् । न चेष्टापत्तिः 'परिणतरविगर्भव्याकुला पौरहूती दिगपि घनकपोती घूत्कृतैः कुन्थतीव" इत्यादौ सक्लिश्यतीत्येवार्थावगमात् इकारस्य 'उपदेशेऽजनुनासिक" ( १ । ३ । २ ) इतीत्संज्ञा । तस्याः फलं नुम्नलोपाभावौ ॥ १०० ॥

कुन्थतीति । अत्र धातूपदेशावस्थायामेव नुमि कृते पश्चात् शबादि । यदि त्वङ्गाविकारात्तूभयं[१] प्रत्यये परतो भवेत् । ततश्च[२] कुण्डेत्यादौ किन्न स्यान्नाकारो गुरोर्हलः । अत एवात्र धातुग्रहणं क्रियते धातूपदेशावस्थायामेव नुम् यथा स्यादिति । नह्ययं धातुरिदिदस्ति । तासिसिचोरिकार उच्चारणार्थो[३] नेत्संज्ञकः इति वामनः । नन्विदित् फलु नुम् तनुमनुपक्त एव पठ्यताम् किमिदित्त्वेव "तद्वतोरेवास्तु किं तेन" इति न्यायादित्याशङ्क्याह—इदित्वान्नलोपो नेति । प्रनिकुन्थ्यात् इति । अत्र यासुटः कित्वान्नलोपः प्राप्तः । अथात्र "शेषे विभाषा" ( ८ । ४ । १८ ) इति नेर्णत्वं प्राप्नोतीत्यत्राह—कादित्वान्न णः इति । अकखादाविति निषेधादित्यर्थः । उपदेशे कादित्वाश्रयणात् प्रनिचुकुन्थ इत्यत्रापि णत्वं नेति ज्ञेयम् । कुथ संक्लेशे इति क्र्यादौ कुथ्नाति । कुथ पूतीभावे इति दिवादौ । पूतीभावो दुर्गन्धः । कुथ्यति इत्यादि दीव्यतिवत् । अनयोः सिजादिषु लघूपधाद् गुणे अकोथीत् । चुकोथ । कोथिता । कुथ्यात् । कोथिष्यतीत्यादि ज्ञेयम् । षिध, केचिदेनमुदित पठन्ति । तदसत् । निष्ठायामपि[४] प्रतिषेधाभावात् सिधितं. बुधितं लुधितमित्येव भवतीत्यनिट्कारिकावृत्तिविरोधात् । उदित्वे हि "उदितो वा" ( ७ । २ । ५६ ) इति क्त्वायां विकल्पितेट्त्वात् "यस्य विभाषा" ( ७ । २ । १५ ) इति निष्ठायामिटा न भाव्यम् । अत एव न्यासपदमञ्जर्योरपि सिधेरुदित्त्वमनार्षमित्युक्तम् ।

---

१. त्रुभयमिति क० पु० ।

२. कुण्डेत्यादौ ततश्चेति क० पु० ।

३. सिचोऽस्तीकार इति क० पु० ।

४. एवंरेखाङ्कितो नास्ति क० पु० ।

१०३. धात्वादेः षः सः [ ६ । १ । ६४ ]

धातोरादेः सस्य षः स्यात् ।

सेकृसृपृसृस्तृसृजस्त्यान्ये दन्त्याजन्तसादयः ।
षोपदेशाः स्मृताः ष्वष्कस्विद्स्वद्स्वञ्जस्वप्स्मिङः ॥ १ ॥

सेधति । अच्छ सेधति । "सात्पदाद्योः" ( ७ । ३ । १११ ) इति षत्वनिषेधे प्राप्ते ।

---

धात्वादेरिति । यदि सिधादयो दन्त्या एव पठ्येरन् ततः सिसेधेत्यादौ "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वं न स्यादनादेशत्वादतः षकारमुपदिश्य तस्य सत्वमनेन विधीयते । एवं च साधादिषु षत्वस्यानुपदिष्टत्वादसति सत्वे सिसाधयिष्यतीत्यादौ "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वं न स्यात् । न च धातुपाठे सर्वत्र षकार उपदिश्यते । अतस्तद्विवेचनाय षोपदेशत्वं लक्षणेन बोधयामि । सेगित्यादि[1] । सेकृ गतौ । सृ गतौ स्तृञ् आच्छादने सृज विसर्गे । स्तृञ् आच्छादने । स्त्यै शब्दसंघातयोः । एभ्योऽन्ये एतान् वर्जयित्वेति यावत् । दन्त्याः लृतुलसाः अचोऽकारादयस्ते अन्ते परसमीपे यस्य स दन्त्याजन्तः स चासौ सकारः [illegible] आदिर्येषां ते दन्त्याजन्तसादयो धातवस्तु स्थास्नासहसिवुप्रभृतयः षोपदेशाः स्मृताः । पूर्वाचार्यैरिति शेषः । तदुक्तं भाष्ये "अच्दन्त्यपराः सादयः षोपदेशाः" इति । यस्य सकारस्य अच् वा दन्त्यो वा परभूतोऽस्ति तदादयः षोपदेशा इत्यर्थः । दन्त्याजन्तेति किम् ? चस्कन्द । अपुस्फुरत् । अत्र दन्त्यशब्देन केवलदन्त्यस्य विवक्षितत्वाद् दन्त्यौष्ठ्यवकारादीनां केषांचित् स्मिङश्चासंग्रहापत्तिमाशङ्क्याह—ष्वस्केत्यादि । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । ष्वद् आस्वादने । ष्वञ्ज परिष्वङ्गे । ञिष्वप् शये । ष्मिङ् ईषद्धसने एतेऽपि षोपदेशा स्मृताः इत्यपेक्षते[2] । अत्र ष्वष्कते षोपदेशत्वे षत्वं प्रयोजनं तु न सुब्धातुष्ठिवुष्वष्कतीनां[3] सत्वनिषेधात् । तथाप्यसति षोपदेशत्वोपदेशे[4] दन्त्यादिष्वपीतमाशङ्केरन्निति तदुपदिश्यते । स्वदेस्तु षोपदेशत्वे प्रयोजनं ण्यन्तात्स्वदि असिष्वदत् स्विदेः सिष्वेद । असिष्वदत् । स्वञ्जेः परिसस्वजे । पर्यसष्वजत्[5] । स्वपेः

---

१. स्तेगित्यादि इति क० पु० ।
२. इत्यर्थे कृते इति क० पु० ।
३. अशुद्धिउद्धृतः ज० पु० ।
४. षोपदेशत्वोपदेशे इति क० पु० ।
५. पर्यसष्वजदिति नास्ति क० पु० ।

१०४ उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभति-स्थासेनयसेधसिचसञ्जस्वञ्जाम् [८ । ३ । ६५]

उपसर्गस्थान्निमित्तात्परस्यैषां सस्य षः स्यात् ।

---

सुष्वाप । सोसुय्यते[1] । स्मिङ् सिस्मिये । सिष्मीयते[2] इत्यादौ षत्वम् । अत्र लक्षणे एकाच इति विशेषणमपि देयम् । सोसूच्यते, सोमूचितेत्यादौ 'सूचिसूत्र्यादीनामदन्तानामेकाचामषोपदेशत्वात् षत्वं न भवतीति माधवः । अत्र सेगित्यादिपर्युदासाद्धातुपाठपठिता एव दन्त्याजन्तसादयो गृह्यन्ते । तेन स्थूलमाचष्टे स्थाययति स्थिरमाचष्टे स्थापयति इत्यादेर्न षोपदेशत्वम् । सति हि तस्मिन् भवान् स्थवयति पटु स्थापयतीति "ङः सि धुट्" ( ८ । ३ । २९ , "नश्च" ( ८ । ३ । ३० ) इति धुट् न स्यात् । अत एव सुब्धातूनामषोपदेशत्वेन षत्वप्रतिषेधोऽनर्थक इति स्पष्टार्थमुक्तो हरदत्तादिभिः । एवं च धातुपाठे येषामादौ षकारो न पठ्यते साध्यति स्थूलत्यादीना तेषामनेन षोपदेशत्वमावेद्यते । येषा तु स्वत एव सकारादित्वं न निवर्तते । न च नह्यन्त एव षोपदेशा नान्ये इति नियम्यते । तथा हि सति ष्ठिवे द्वितीयष्ठकार इति पक्षे सत्वनिषेधोऽनर्थकः स्यात् । नाप्येते षोपदेशा एत्रैतयोगोऽपि व्यवचिछ्द्यते सेधितर्दन्त्यादिरप्यस्तीति मैत्रेय न्यासकारादिभिरुक्तत्वात् । अतः सम्भवमात्राभिधानमेतत् । अच्छसेधतीति । अच्छ आभिमुख्ये । "अच्छगत्यर्थवदेषु" ( १ । ४ । ६९ ) [3]इति गतित्वात् प्राक् प्रयोगः ॥ १०३ ॥

उपसर्गादिति । षुञ् अभिषवे स्वादिः । षू प्रेरणे तुदादिः । षोऽन्तकर्मणि दिवादिः ष्टुञ् स्तुतौ अदादिः । ष्टुभ स्तम्भे भ्वादि । अनुदात्तेत् । येषां पञ्चाना श्तिपा निर्देशो यङ्लुक्निवृत्त्यर्थः । तेनामि सोषवीतीत्यादौ षत्वाभाव इत्याकारः । यद्यपि ' स्थादिष्वेवाभ्यासस्य" इति नियमादेवात्राप्रसङ्गस्तथाप्यभ्यासेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात् अत्र परे नियमेन भाव्यम् । न चैतद् यडो लुकि संभवतीत्याशयेनोक्तम् ।

ष्ठा गतिनिवृत्तौ । सेनयतिरर्यन्तः । सेनयाऽभियातीत्यर्थे सुब्धातुः । अभिषेणयतीति । सेनाशब्दश्च यद्यव्युत्पन्नः । यदि च सह इनेन वर्तते इति व्युत्पन्नः तदा अषोपदेशत्वादप्राप्तमेव षत्वं विधीयते । यदा तु सिनोतेर्नप्रत्यये व्युत्पाद्यते तदा षोपदेशत्वमस्त्येव किं तु पदादित्वादप्राप्ते वचनम् । अत्र शपा निर्देशो यङ्लुक्-

---

१. सोसप्यनदावौ नास्ति क० पु० ।
२. सिष्मीयते इति नास्ति क० पु० ।
३. ष्विति स्वादिति क० पु० ।

१०५. सदिरप्रतेः [ ८ । ३ । ६६ ]

उपसर्गात् सदेः सस्य षः स्यान्न तु प्रतेः परस्य ।

१०६. स्तम्भेः [ ८ । ३ । ६७ ]

उपसर्गात्परस्य स्तम्भेः सस्य षत्वं स्यात् ।

१०७. अवाच्चालम्बनाविदूर्ययोः [ ८ । ३ । ६८ ]

अवात् परस्य स्तम्भेरेतयोः षत्वं स्यात् ।

---

निवृत्त्यर्थं इत्याहुः । तदसत् । अनेकाच्त्वेन यङोऽसंभवात् । अन्ये तु णौ[1] णिलोपे तत आचारे क्विपि संभवतीत्याहुः ।

सेधति । षिध गत्याम् । षिधू शास्त्रे माङ्गल्ये च । इति भौवादिकयोः द्वयोर्ग्रहणम् । तत्र "सेधतेर्गतौ" ( ८ । ३ । ११३ ) इति प्रतिषेधादगत्यर्थेऽयं षत्वविधिः । शपा निर्देशः षिधु संराद्धौ इति दैवादिकस्य निवृत्त्यर्थः । यत्तु यङ्लुक्निवृत्त्यर्थश्चेत्याहुः । तदसत् । सेधतेर्गताविति निर्देशात् । अन्यथा यङ्लुकि षत्वमेव न प्रसजति तत्किं परित्राणार्थेन श्तिपा कृतं स्यात् । अत्र हि इण्कोरिति वर्तते तच्चोपसर्गग्रहणेन विशेष्यते "तात्स्थ्यात् ताच्छब्द्यम्" इत्युपचारादित्याह—उपसर्गादिति । निमित्तादिति । "इण्कोः" ( ८ । ३ । ५७ ) इत्यधिकृतात् । तत्रोपसर्गे कवर्गस्यासंभवादिणेवात्र संबध्यते । निःषुणोति । निःषेधतीत्यादावपि भवति "नुम्विसर्जनीयशर्व्यवायेऽपि" ( ८ । ३ । ५८ ) इति वचनात् । उपसर्गादित्युक्तेः निर्गतः सावकोऽस्मान्निःसावक इत्यत्र न भवति । "यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञाः" इति वचनात् । अभिषावयतीति ण्यन्ते तु अभिषवविषया प्रवृत्तिः न तु प्रवृत्तेरभिना संबन्ध इति षत्वं भवत्येव । अभिषावकीयतीत्यत्र यदाऽभिषाकमिच्छतीति सुनोतिनाभेः संबन्धो विवक्ष्यते तदा षत्वं भवत्येव । यदा तु सावमभीच्छतीति क्यजर्थेनेच्छतिनाऽभेः संबन्धस्तदा षत्वाभावादभिसावकीयतीति भवति । एवमन्येष्वप्यूह्यम् । स्थादिष्वभ्यासेन ( ८ । ३ । ६४ ) "प्राक्सितात्" ( ८ । ३ । ७० ) इति च वक्ष्यते । तत्रादिपदे न सौत्रक्रमपठिता धातवो गृह्यन्ते इति पाठपरिज्ञानार्थं यथासूत्रं षत्वप्रकरणं व्याख्यति ॥ १०४ ॥

सदिरप्रतेः । पञ्चम्यर्थे प्रथमेत्याह—सदेरिति । षद्‍लृ विशरणगत्यवसादनेषु" इत्यस्य ॥ १०५ ॥

स्तम्भेः । स्तम्भु रोधने सौत्रो धातुः ॥ १०६ ॥

अवात् । आलम्बनमाश्रयणम् । यथा यष्टिमालम्ब्यास्ते विशेषेण दूरं विप्रकृष्टं ततोऽन्यदविदूरं तस्य भावः आविदूर्यम् । अत एव निपातनान्नञ्पूर्वादपि तत्पुरुषाद् भावप्रत्ययः । एतयोरिति । अर्थयोरिति शेषः ॥ ०७ ॥

---

१. क्वविति क० पु० ।

१०८. वेश्च स्वनो भोजने [ ८ । ३ । ६९ ]

व्यवाभ्यां स्वनतेः षत्वं स्याद्भोजने ।

१०९. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् [ ८ । ३ । ७० ]

परिनिविभ्यः परेषामेषां षत्वं स्यात् । निषेधति ।

११०. प्राक्सितादड्व्यवायेऽपि [ ८ । ३ । ६३ ]

सेवसितेत्यत्र सितशब्दात् प्राक् ये सुनोत्यादयस्तेषामड्व्यवायेऽपि षत्वं स्यात् । न्यषेधत् ।

१११. स्थादिष्वभ्यासेन चाभ्यासस्य [ ८ । ३ । ६४ ]

स्थादिषु प्राक् सितादभ्यासेन व्यवायेऽपि षत्वं स्यादभ्यासस्य च । निषिषेध ।

---

वेश्च । चकारोऽवादित्यस्य समुच्चयार्थं इत्याह—व्यवाभ्यामिति । यद्यपि स्वनशब्दे इति पठ्यते तथापि शब्दक्रियाविशिष्टे भोजने यदाऽयं वर्तते तदा षत्वमनेन विधीयते । यथोदाहरिष्यति–विष्वणति मांसं सशब्दं भुङ्क्ते इत्यर्थं इति । यदा तु शब्दमात्रे वर्तते तदा भोजने वृत्त्यभावात् न षत्वम्—विस्वनति वीणेति ।

परिनिविभ्यः । षेवृ सेचने । सितेति । षिञ् बन्धने निष्ठान्तो निर्दिश्यते । सयेति एरजन्तः स एव विषय इति यथा । षिवु तन्तुसन्ताने । षह मर्षणे । सुडागमः । परिष्करोतीति यथा । ष्टुञ् स्तुतौ । ष्वञ्ज परिष्वङ्गे । स्तुस्वञ्जोः "उपसर्गात्सुनोति" ( ८ । ३ । ६५ ) इत्येव सिद्धे पर्यादिपूर्वयोरेतयोः "सिवादीनां[1] वाड्व्यवायेऽपि" ( ८ । ३ । ७१ ) विकल्पार्थं पुनर्वचनम् ॥ १०९ ॥

प्राक् सितादिति । "उपसर्गात्सुनोतीति" ( ८ । ३ । ६५ ) इति सर्वमनुवर्तते । प्राक् सितादित्यनेन च सुनोत्यादयो विशेष्यन्ते । तेन "सुनोतिसुवतिस्यतिस्तौति-स्तोभतिस्थासेनय-सेध-सिच्-सञ्ज-स्वञ्ज-सद्-स्तम्भ-स्वन-सेव" एषां षत्वं स्यादित्यर्थः । इण्कोरिति पञ्चमीनिर्देशादड्व्यवाये न प्राप्नोतीति वचनम् । यद्यपि स्थादिषु "उपसर्गात् सुनोति" ( ८ । ३ । ६५ ) इत्यभ्यासस्य सिद्धम् । अभ्यासात्परस्य "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति, तथापि अपिशब्दादड्व्यवायेऽपि भवति । अडिति चागमो गृह्यते न प्रत्याहारः व्याख्यानात् ॥ ११० ॥

स्थादिषु । उपसर्गात्सुनोतीत्यत्र पठिताः स्थासेनयसेधेत्यादय इण्कोरिति पञ्चमीनिर्देशादड्व्यवाये न प्राप्नोतीत्येतद् वचनम् । यद्यपि स्थादिषूपसर्गात्सुनोतीत्यभ्यासस्य

---

१. सिवाड्व्यवायेऽपीति क० पु० ।

११२. सेधतेर्गतौ [ ८ । ३ । ११३ ]

गत्यर्थस्य सेधतेर्न षत्वम् । गङ्गां विसेधति । षिधू शास्त्रे माङ्गल्ये च ।

११३. स्वरतिसूतिसूयतिधूञूदितो वा [ ७ । २ । ४४ ]

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् । असेधीत् । "वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः । चर्त्वम् । असैत्सीत् ।

११४. झलो झलि [ ८ । २ । २६ ]

झलः परस्य सिचो लोपः स्याज् झलि ।

---

सिद्धम्—अभ्यासात्परस्य तु "आदेशप्रत्यययोः" इति । तथाप्यपोपदेशार्थं वचनम् । सेनयाऽभियातुमिच्छति—अभिषेणयति सह इनेन वर्तते इति सेना । अवर्णान्ताभ्यासार्थं च । अभितष्ठौ, परितष्ठौ । षणि प्रतिषिद्धार्थं च अभिसिसिक्षति । षिच क्षरणे । "स्तौतिण्योरेव" ( ८ । ३ । ६१ ) इति नियमार्थम्[1] । ण्यादिष्वेवाभ्यासस्य षत्वं नान्यत्र । अभिसुसूषति । अतिसिषासति । षू प्रेरणे । षोऽन्तकर्मणि । पूर्वत्र धातुसकारस्य "स्तौतिण्योरेव" ( ८ । ३ । ६१ ) इति नियमादषत्वम् । अभ्याससकारस्य तु अस्मान्नियमात् षत्वाभावः । एवं परत्रापि षणोऽभावात् अभ्यासात् परस्य षत्वम् । एव स्थिते निषिषेधेत्यत्र पूर्वेणैव सिद्धत्वात् यद्यप्यस्योपयोगो नास्ति तथापि "पर्जन्यवल्लक्षणप्रवृत्तिः" इति न्यायेनात्रोपन्यस्तम् ॥ १११ ॥

सेधतेः । "उपसर्गात्" ( ८ । ३ । ६५ ) इति प्राप्तं प्रतिषिध्यते । गङ्गां विसेधतीति गच्छतीत्यर्थः । सेधेदित्यादि चितिवत् । षिधू । शास्त्र शासनम् । शास्त्रविषयं ज्ञानमित्यन्ये । माङ्गल्यं मङ्गलक्रिया । सेधती'त्यादि पूर्ववत् ॥ ११२ ॥

स्वरतीति । स्वृ शब्दोपतापयोः । षूङ् प्राणिगर्भविमोचने । अदादिः । षूङ् प्राणिप्रसवे दिवादिः । धूञ् कम्पने स्वादिः, क्र्यादिः, भ्वादिश्चुरादिश्च । तत्रैकाच इत्यधिकारात् चुरादेरग्रहणम् । ऊत् इद् येषां ते ऊदितः तेषां समाहारद्वन्द्वात् पञ्चमी । तत्र स्वरतेरनुदात्तत्वात् नित्यमिड्निषेधे प्राप्ते विकल्पार्थं वचनम् । असेधीत् इति । लुङि सिच इट् । 'नेटि" ( ७ । २ । ४ ) इति वृद्धिनिषेधादुपधागुणः । चर्त्वमिति । "खरि च" ( ८ । ४ । ५५ ) इत्यनेन । धस्य तत्वम् इत्यर्थः ॥ ११३ ॥

झलो झलि । सस्येत्यनुवृत्तावपि सिच एवात्र लोपो विज्ञायते । "उदः स्थास्तम्भोः" ( ८ । ४ । ६१ ) इत्युक्तज्ञापकेन झलोति झलादेः प्रत्ययस्यैव ग्रहणमिति स्थितत्वात् ।

---

१. नियमान्निवर्तितं षत्वं तदप्युपसर्गमाश्रित्य भवति अभ्यासस्येति ख० पु० ।

२. सेधति गच्छतीति क० पु० ।

## ११५. झपस्तथोर्धोऽधः [ ८ । २ । ४० ]

झपः परयोस्तथोर्धः स्यान्न तु दधातेः । जरब्धम् । असेद्धाम् । खद स्थैर्ये हिंसायां च ।

## ११६. अतो हलादेर्लघोः [ ७ । २ । ७ ]

हलादेर्लघोरकारस्य इडादौ सिचि परस्मैपदे वा वृद्धिः स्यात् । प्रन्यखादीत् । खादित्वान्न णः । अखदीत् ।

---

न च झलादौ प्रत्यये परे झलः परः सकारः सिचोऽन्यः सम्भवतीत्याशयेनाह—झलः परस्य सिच इति । तेन समित्स्यानमित्यत्र न प्रवर्तते[1] ॥ ११४ ॥

असेद्धामिति । तस्य धत्वे "झला जश्" ( ८ । ४ । ५३ ) इति धस्य दत्वम् । सिसेध । सिसिधतुः । सिसिधुः । थलि तु क्रयादिनियमादूदित्त्वलक्षणं विकल्पं बाधित्वा नित्यमिट् । यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रयादिनियमेनापोद्यते । पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यादिति हरदत्तोक्तेः । तेन सिसेधिथेत्येव भवति । अन्ये त्वाहुः पुरस्तात् प्रतिषेधकाण्डे क्रयादिनियम आरभ्यते, स च तुल्यजातीयत्वात् प्रकृत्याश्रयम् 'एकाचः" ( ७ । २ । १० ) इति निषेधं प्रत्यया'-श्रयं च "श्र्युकः किति" ( ७ । २ । ११ ) इत्येतन्निषेध निवर्तयति न तु विकल्पमपि । तेन सिसेधिथ, सिसेद्धेत्युभयं भवति । एव वमयोरप्युदाहार्यम्, तदेतदग्रे स्वयमेव वक्ष्यति । 'ऊदित्त्वादिड् वेति केचित् । क्रयादिनियमाश्रित्यमिटमाहुरिति । षिधु संराद्धाविति दिवादौ पठ्यते ह्रस्वानुबन्धः । केचिद्दीर्घोदितं पठन्ति तदसत् । उभयतः पाठवैयर्थ्यप्रसङ्गात् । खद् स्थैर्येऽकर्मकः । चकाराद् भक्षणे च । खदतीत्यादि ॥११५॥

अतो हलादेरिति । "नेटि" (७।२।४) इत्यस्यापवादः । अतः किम् ? अदेवीत् । हला देः किम् ? मा भवानटीत् । लघोः किम् ? अतक्षीत् । अत्र सिच्परत्वेनाकारो विशेष्यते । हलन्तस्येति च वर्तते । तेन ' येन नाव्यवधानम्" इति न्यायादेकवर्णव्यवधाने एव भवति नानेकवर्णव्यवधाने अचकासीदित्यादौ । न चैवमतक्षीदित्यादावपि हल्द्वयव्यवधानेनाप्रसङ्गाद् लघोरित्यनर्थकम् । हल्जातेरेकत्वात् 'वर्णग्रहणे च जातिग्रहणस्य "निपात एकाजनाङ्" (१ । १ । १४) इत्यत्रैकग्रहणेन ज्ञापितत्वात् । एवं च विस्पष्टार्थं

---

१. न भवतीति भावः इति ख० पु० ।

२. प्रकृत्याश्रयमिति क० पु० ।

३. ऊदिद्वेति क० पु० ।

११७. अत उपधायाः [ ७ । २ । ११६ ]

उपधाया अतो वृद्धिः स्यात् ञिति णिति । चखाद ।

११८. णलुत्तमो वा [ ७ । १ । ९१ ]

उत्तमणल् णिद्वा स्यात् । चखाद् । चखद । गद व्यक्तायां वाचि ।

११९. नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च [ ८।४।१७ ]

उपसर्गस्थान्निमित्तात् परस्य नेर्णत्वं स्याद् गदादौ परे । प्रणिगदति । अगदीत् । अगादीत् । रद विलेखने ।

---

लघोरित्युक्तमिति प्राचोक्तमनादेयम् । खादित्वान्न ण इति । "शेषे विभाषाऽकखादौ" ( ८ । ४ । १८ ) इत्युक्तेः प्रखदीति[1] । वृद्ध्यभावपक्षे ॥ ११६ ॥

चखादेति । णलि परत्वान्नित्यत्वाच्चोपधावृद्धिः तस्याः "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् खद् इत्यस्य द्वित्वम् । तेन वृद्धित्वे ह्रस्व इति प्राचोक्तमपास्तम् । "कुहोश्चुः" ( ७ । ४ । ६२ ) इति खस्य छस्तस्य "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति चः ॥ ११७ ॥

णलुत्तमो वा । णिद्वा स्यात् । "गोतो णित्" ( ७ । १ । ९० ) इत्यतिदेशस्य प्रकृतत्वात् णित्कार्यं[2] वा स्यादित्यर्थः । णित्त्वाद् वृद्धेः सिद्धत्वात् पक्षे वृद्ध्यभावोऽतिदिश्यते ॥ ११८ ॥

नेर्गदनदेति । गद व्यक्तायां वाचि । णद अव्यक्ते शब्दे । पत्लृ गतौ । पद् गतौ अनुदात्तेत् । घुसंज्ञा दाधारूपा । माङ् माने शब्दे च । मेङ् प्रणिदाने । द्वयोर्ग्रहणम् । गामादाग्रहणेष्वविशेषात् । मा माने इत्यस्य ग्रहणं तु नेष्यते । षोऽन्तकर्मणि । हन हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ । प्सा भक्षणे । हन्त्यादयः प्सान्ता अदादयः । डुवप् बीजसन्ताने । वह प्रापणे । शमु उपशमे । दिह उपचये । स्यतिप्रभृतिषु श्तिपा निर्देशः यङ्लुङ्निवृत्त्यर्थः । अत्र "अट्कुप्वाङ्नुम्व्यवायेऽपि" ( ८ । ४ । २ ) इति वर्तते । तेन प्रण्यगदत् इत्यटा आङा च व्यवायेऽपि भवति । अन्यथाऽङ्गभक्तोऽट् विकरणान्तं चाङ्गं सोऽसौ संघातभक्तो न शक्यो गदादिग्रहणेन

---

१. प्र ख दीति क॰ पु॰ ।

२. णित्कार्यं इष्टेहि ग॰ पु॰ ।

## १२०. अत एकहल्मध्येऽनादेशादेर्लिटि [६।४।१२०]

लिट्कृताऽभ्यासादेशहीनस्य धातोरसंयुक्तहलोर्मध्यस्थात एत्त्वं स्यात् किति लिटि अभ्यासलोपश्च। रेदतुः। रेदुः।

## १२१. थलि च सेटि [ ६ । ४ । १२१ ]

इड्वति थलि परे पूर्वविषये एत्त्वाभ्यासलोपौ स्तः। रेदिथ। अनादेशादेः किम्? चखदतुः। नलोपिनो नेति केचित्। ममथतुः। णद अव्यक्ते शब्दे।

---

प्रहातुमिति णत्वं न स्यात्। प्रण्युपगदतीत्यादौ तु "पदव्यवायेऽपि" ( ८ । ४ । ३८ ) इति प्रतिषेधात् न णत्वम्। जगाद। गदितेत्यादि। रद[1] विलेखने। विलेखनं भेदनम्। रदति। अरदीत्। रराद॥ ११९॥

अत एकेति। लिटीति निमित्तसप्तमी। अनादेशादेरित्यस्य विशेषणम्। आदिश्चा-ऽभ्यास एव गृह्यते। सामर्थ्यादित्यादि। लिटि कृतेत्यादि। एकहल्मध्येऽत्रैकशब्दोऽ-सहायवाची। सहायश्च सजातीय एव भवति। तेनासंयुक्तयोर्द्वयोर्हलोर्मध्ये इति लभ्यते। किति लिटीति। यद्यप्येकं लिड्ग्रहणं तच्चादेशविशेषणं व्याख्यातम्, तथापि सन्निधानादेत्त्वस्यापि निमित्तं संपद्यते। अभ्यासलोपश्चेति। "घ्वसोरेद्धावभ्यासलोपश्च" ( ६ । ४ । ११९ ) इत्यनुवृत्तेः। अनादेशादेः[2] किम्? बभणतुः। चखदतुः। अत्रैत्त्वं प्रति जश्त्वचर्त्वे नासिद्धे[3] "पलतुकोरसिद्धे" ( ६ । १ । ८६ ) इति वचनात्। ज्ञापकं चात्र फलिभज्योरेत्वविधानम्। अतः किम्? ययाचे। एकहल्मध्ये किम्? ततसरतुः। लिट्कृतेति किम्? नेमतुः। नहि णो नत्वं लिण्निमित्तम्। किति किम्? रराद। अभ्यासादेशश्चेह रूपभेदक एव निषिध्यते "न शसदद" ( ६ । ४ । १२६ ) इत्यारम्भात्। तेन देभतुः पेचतुरित्यादौ न निषेधः। अस्ति ह्यत्रापि प्रकृतिजशां प्रकृतिजशः प्रकृति-चरां प्रकृतिचर इत्यादेशादित्वम्॥ १२०॥

थलि च सेटि। अकिदर्थोऽयमारम्भः। पूर्वविषय इति। लिट्कृताभ्यासादेश-हीनस्य धातोरसंयुक्तहलोर्मध्यस्थात इत्यर्थः। न नोपिनो नेति केचित्। येषां संयोगाल्लिटो वा कित्त्वमिति पक्षस्तेऽपि नलोपे एत्त्वाभ्यासलोपौ निषेधन्तीत्यर्थः। स्वमते तु कित्त्व-मेव नास्ति तेन ममन्थतुरित्येव भवति। सत्यपि वा नलोपे तस्य "असिद्धवदत्र" ( ६ । ४ । २२ ) इत्यसिद्धत्वादेत्त्वाद्यभावः। रदितेत्यादि। शद्॥ १२१॥

---

१. लिदिकि वेत्यादौति क० पु०।

२. अनादेः किमिति ख० पु०।

३. नासिद्धे इति नास्ति क० पु०। अत्रैत्त्वं प्रतिजश्त्वचर्त्वयोरसिद्धत्वं तु न भवति रभ्यास-जश्त्वचर्त्वे पलतुकोः सिद्धे वक्तव्ये इति वचनादिति पाठः ख० पु०।

१२२. णो नः [ ६ । १ । ६५ ]

धात्वादेर्णस्य न स्यात् । णोपदेशास्त्वनर्दनाटिनाथ्नाध्नन्दनक्क-नॄनृतः ।

१२३. उपसर्गादसमासेऽपि णोपदेशस्य [८।४।१४]

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णत्वं स्यात् । समासेऽसमासेऽपि । प्रणदति । "नेर्गद" ( ८ । ४ । १७ ) इति णत्वम् । प्रणिनदति । लिट्कृताभ्यासादेशाभावादेत्वाभ्यासलोपौ । नेदतुः । नेदिथ । अर्द गतौ याचने च । लिटि द्वित्वे कृते ।

---

णो नः । अत्र "आदेच उपदेशेऽशिति" ( ६ । १ । ४५ ) इत्यत उपदेश इति वर्तते । तेन लघूपदेशे णस्य नत्व विधीयते । तेन णकारीयति इति नामधातोर्न भवति । "उपसर्गादसमासेऽपि" ( ८ । ४ । १४ ) इत्यत्र णोपदेशस्येत्युच्यते तद्व्यवस्थार्थं लक्षणमाह—णोपदेशास्त्विति । नृती गात्रविक्षेपे । नर्द शब्दे । नाथृनाधृ याच्ञोपतापैश्वर्याशीःषु । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नट अवस्यन्दने । चुरादिरिह गृह्यते यस्तु नट नृत्तौ घटादिः नृत्तं नृत्यं[1] च तस्यार्थः न तस्येह ग्रहणमिष्टम् । सर्वे नादयो णोपदेशाः । नृतिनन्दिनर्दिनक्कनाटिनाथृनाधृनॄवर्जमिति । भाष्ये नाटीति विकृतनिर्देशात् इत्याकरे स्थितत्वात् । एवं च नट चलने इति प्राचोक्तमनादेयम् । यदपि रक्षितेनोक्त धान्तो धातु······
यदपि श्रीभोजेन नॄ इति णोपदेश उक्तस्तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । एतान् वर्जयित्वाऽन्ये नादयो णोपदेशा इत्यर्थः ॥ १२२ ॥

उपसर्गादिति । नन्वसमासे इति व्यर्थम्, सामान्येन विधानादेव सिद्धेः । न च पूर्वपदाधिकारात् समासे एव प्राप्नोतीति तन्निवृत्त्यर्थमेतदिति वाच्यम् । अस्वरितत्वादपि तन्निवृत्तिसिद्धेः सुवचत्वात् । सत्यम् । असत्यस्मिन् असंज्ञायां समासे न स्यात् । पूर्वपदात्संज्ञायामेवेति नियमात् । अस्य विधेरसमासे चरितार्थत्वात् । तस्मात् पूर्वपदाधिकारनिवृत्तिद्योतनमुखेन समासासमासयोर्द्वयोरपि यथा स्यादित्यसमासेऽपि ग्रहणम् । तत्रासमासे उदाहरति—प्रणदतीति । समासे तु प्रणाम इत्युदाहर्तव्यम् । प्रणिनदतीति । निना प्रस्य व्यवहितत्वात् धातोर्न णत्वम् । ननु नेदतुरित्यादौ एत्वाभ्यासलोपाभ्यां न भवितव्यम् । "णो नः" । न त्वेनादेशादित्वात्तत्राह—लिट्कृतादेशाभावादिति । लिटीति निमित्तसप्तम्यन्तेनादेशो विशेष्यते न च णत्वं लिड्निमित्तमतो न निषेध इत्यर्थः

---

१. तस्मिन् वृत्तेरि क० पु० ।

## १२४. अत आदेः [ ७ । ४ । ७० ]

अभ्यासस्यादेरतो दीर्घः स्यात् । पररूपापवादः ।

## १२५. तस्मान्नुड् द्विहलः [ ७ । ४ । ७१ ]

दीर्घीभूतादकारात् परस्य द्विहलोर्धातोर्नुडागमः स्यात् । आनर्द । इदि परमैश्वर्ये ।

---

मेदियेति । सेट्त्वमस्य दर्शयति । अर्द याचने । अयं द्विकर्मकः । अर्दतीत्यादि । लिटि द्वित्वे इति । अर्द इति समुदायस्य द्वित्वे हलादिः शेषेण रदयोर्लोपे चेति शेषः । "न न्द्राः" ( ६ । १ । ३ ) इति निषेधस्तु रेफस्य न भवति द्वितीयस्यैकाचोऽवयवा इति वक्ष्यमाणत्वात् ॥ १२३ ॥

अत आदेः । अत्र "न व्यो लिटि"[1] ( ६ । १ । ४६ ) इत्यतः लिटीति प्रकृतमपि व्याख्यातम्, लिटोऽन्यत्राभ्यासस्यातोऽसम्भवात् । ननु सर्वत्राभ्यासे ह्रस्वविधानेन दीर्घस्यासंभवादत इति तपरत्वमनर्थकम् । एवं तर्हि तपरत्वं स्वाभाविकस्यातः परिग्रहार्थम् । तेनाछि आयामे आञ्छेत्यत्र न भवति । अन्यथाऽत्रापि अभ्यासस्य ह्रस्वत्वे कृतेऽस्त्येवादिति स्यात्प्रसङ्गः तत्र च कृते नुट् स्यात् । अन्ये तु तपरकरणं मुखसुखार्थं मन्यमानाः आनाञ्छेतीच्छन्ति । तथा च तत्र वक्ष्यति—आञ्छेर्नुड् वेति केचित इति । पररूपापवाद इति । नाप्राप्ते "अतो गुणे" ( ६ । १ । ९७ ) इति पररूपे-स्यारम्भात् । न च पररूपमभ्यासविकारः[2] । अभ्यासस्येत्येवमविधानात् । तेनाभ्यासविकारेषु अपवादाः नोत्सर्गान् विधीन् बाधन्ते इत्यपि नास्ति ॥ १२४ ॥

तस्मान्नुड् । तच्छब्देन पूर्वसूत्रविहितो दीर्घः परामृश्यते । स चात इति वचनाद् दीर्घस्यैव विहितः इत्याशयेनाह—दीर्घीभूतादकारात् इति । अदीर्घः पूर्वमासीदिदानीं तु दीर्घः सम्पन्न इत्यभूततद्भावे च्विप्रत्ययः । तत्प्रयोगस्तु प्रियतद्धिताः दाक्षिणात्या इति कृतः । तच्छब्देन प्रधानस्य प्रकृतस्य दीर्घस्यैव परामर्शादुक्तदीर्घात् परस्यैवेत्येव वक्तुं युक्तं त् । तथा च "तस्माच्छसो नः पुंसि" ( ६ । १ । १०३ ) इति पूर्वसवर्णदीर्घात् परस्येत्येव व्याख्यातम् । द्विहलः किम् ? आट, आटतुः । द्विहल्ग्रहणमनेकहल उपलक्षणम् । तेनानर्च्छेत्यत्र गुणे रपरत्वे च कृते त्रिहलोऽपि भवति । न च लिडपेक्षत्वेन बहिरङ्गस्य गुणस्यासिद्धत्वम् । नुटोऽपि लिडपेक्षत्वात् । 'नाजानन्तर्ये' ( प० ) इति निषेधाच्च । अचोरिति द्वित्वस्याविवक्षितत्वात् । अवीत्येत्यत्र यथेति । इदीति । इदित्त्वान्नुम् । इन्दति । इन्देदित्यादि ॥ १२५ ॥

---

१. व्येञोलिट ति क० ख० पुस्तकद्वये ।

२. अभ्यासाधिकार इति ख० पु० ।

१२६. आडजादीनाम् [ ६ । ४ । ७२ ]

अजादेरङ्गस्याडागमः स्यात् लङ्लुङ्लृङ्क्षु । "आटश्च" (६।१।९०) इति वृद्धिः ऐन्दत् ।

१२७. इजादेश्च गुरुमतोऽनृच्छः [ ३ । १ । ३६ ]

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् प्रत्ययः स्याल्लिटि ।
आमोऽमित्त्वमदन्तत्वाद्गुणत्वं विदेस्तथा ।
आस्कासोराम्विधानाच्च पररूपं कतन्त्रवत् ॥

---

आडजादीनाम् । "लुङ्लङ्लृङ्क्ष्वडुदात्तः" ( ६ । ४ । ७१ ) इति वर्तते । अटोऽपवाद । एतत्तु अर्द गतावित्यत्रैव लिखितुं युक्तम् । आर्दत् आर्दीत् इति यथा स्यादिति । न ह्यत्राटा इष्टसिद्धिः । "अतो गुणे" (६ । १ । ९६ ) इति पररूपप्रसङ्गात् । अड्विधिश्च हलादौ सार्थकः । किं चात्र परत्वादपवादत्वाच्चाटैव भाव्यम् । आचार्यस्त्वत्र सूक्ष्मेक्षिका न कृता ॥ १२६ ॥

इजादेरिति । इच् प्रत्याहारः आदिर्यस्य स इजादिः । गुरोरित्येव सिद्धे मतुबुपादानं नित्ययोगप्रतिपत्त्यर्थम् । नित्यं यो गुरुमान् इति । तेन इयाज । इयेष । ईषतुरित्यादौ वृद्धिगुणदीर्घेषु कृतेषु गुरुमत्त्वेऽप्याम् न भवति । इह तु उच्छी विवासे । व्युच्छाञ्चकार । उछि उञ्छे । उञ्छाञ्चकारेति । तुक्नुमोः कृतयोरपि प्रयोगे गुरुमत्ताया नास्ति व्यभिचारः। यद्वा अनृच्छ इति निषेधो ज्ञापकः आगमनिमित्ता गुरुमत्ता न निवर्त्यते इति । अथवा लिटीति विहितविशेषणं व्याख्येयम् । इजादिर्यो धातुर्गुरुमान्, ततो विहिते लिटि परे आम् भवतीति । तेन लिड्निमित्ता यस्य गुरुमत्ता तस्मान्न भविष्यति । आगमनिमित्ता यस्य गुरुमत्ता तस्माच्च भविष्यति । ऋच्छत्यन्येति । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु इति तौदादिक ऋच्छतिः । इजादेः किम् ? ततक्ष । गुरुमतः किम् ? इयेष । ईषतुः । अनृच्छः किम् ? आनर्च्छ । आनर्च्छतुः । "ऋच्छत्यृताम्" ( ७ । ४ । ११ ) इति गुणः । नन्वस्माद् ज्ञापकादृच्छेराम् न भविष्यति । यदि हि स्याल्लिटि परे गुणविधानमनर्थकं स्यात् । चिन्त्यमेतत् । आम् स्यादिति । हलन्तपक्षावलम्बनेनैवमुक्तम् अदन्तत्वपक्षे त्वामः स्यादिति वक्तुं युक्तम् । ननु हलन्तत्वे[1] "हलन्त्यम्" ( १ । ३ । ३ ) इतीत्संज्ञया भाव्यमित्याशङ्क्याह—आमोऽमित्वमिति । इन्दाञ्चकारेत्यादौ प्रयोगेऽयमाम्प्रत्ययः श्रूयते । तस्यामित्त्वम् । नास्ति मकार इद् यस्य सोऽमित् तस्य भावोऽमित्त्वम् । मकारस्येत्संज्ञा न भवतीत्यर्थः । अत्र हेतुमाह—अदन्तत्वादिति । अन्तशब्दः समीपवाची अत् अन्ते समीपे यस्य सोऽदन्तः तस्य भावोऽदन्तत्वम् । तस्माद्

१. हलन्तत्व पक्षे इति क० पु० ।

विधानवेलायां समीपेऽकारवत्त्वादीत्यर्थः। तेन मकारस्योपदेशेऽन्त्यत्वाभावात् नेत्संज्ञेति भावः। यदि त्वन्तशब्दोऽवयववचनः स्यात् ततो विरोधः आम् चेत् कथमदन्तः[1] अथादन्तश्चेत्कथमामिति। एवं च "कास्प्रत्ययात्" (३।१।३५) इत्यत्राम् अमन्त्रे इति पदच्छेदः अविभक्तिकश्च निर्देश इत्युक्तं भवति। अगुणत्वं विदेस्तयेति। "उषविदजागृभ्योऽन्यतरस्यामिति"। (३।१।३८) अत्र आम्प्रत्ययसन्नियोगेन विदेरदन्तत्वं निपात्यते, तेन विदाञ्चकारेत्यत्रातो लोपे कृते पूर्वविधौ स्थानिवत्त्वात् गुणाभावोऽपि। तथाऽदत्वादेवेत्यर्थः। अप्रस्तुतमप्येतत् अदन्तत्वप्रसङ्गेनोक्तमित्याहुः। नन्वेवं पिबादेरप्यदन्तत्वं प्रदर्शनीयम्। अथोपलक्षणमेतत् तर्ह्यमप्युपलक्षणमस्तु। नैष दोषः। तथा शब्दोऽस्ति स च पिबेरपि समुच्चयार्थः। तेन विदेः पिबेश्चागुणत्वमदन्तत्वादिति प्रकृतो हेतुः। अन्येऽत्र व्याचक्षते मित्त्वाभावे हेत्वन्तरमाह—अगुणत्वमिति। न विद्यते गुणो यस्मात् सोऽगुणोऽन्त्याकारः स विद्यतेऽस्मिन्निति अगुणो विदिः। अर्शआद्यच्। यद्वा अकारो गुणो विशेषणं यस्येत्यगुणः तस्य भावोऽगुणत्व(मदन्तत्वनिपातनमिति यावत्।)[2] तद्विदेरदन्तत्वनिपातनं तथा सति आमो मित्वाभावे सत्युपयुज्यते नान्यथेत्यर्थः। अयं भावः—यद्ययं मित् स्यात् ततो विदाञ्चकारेत्यत्र विद् लिट्[3] इति स्थिते परत्वान्नित्यत्वाच्चातो लोपे कृते भवन्नाम् अन्त्यादचः पर इकारात्परः स्यात्। अथाऽप्यतो लोपात्पूर्वमेवाम् स्यात् तदाऽप्यकारात्परः आम् भवन्नागमत्वादङ्गग्रहणेन गृह्यतेति—अदन्तमङ्गं सम्पन्नमित्युभयथाऽप्यलघूपधत्वाद् गुणो न भविष्यतीति व्यर्थमेवादन्तत्वनिपातनं स्यात् इति तत्क्रियमाणे मित्त्वाभावं ज्ञापयतीति। अत्रैव ज्ञापकान्तरमप्याह–आसकासोरिति। आस उपवेशने। कासृ शब्दकुत्सायाम्। अनयोः [ "दयायासश्च" , ३।१।१७)। "कासप्रत्ययादाममन्त्रे लिटि" (३।१।३५ इति आम् विधीयते स यदि मित् स्यात् अन्त्यादचः परः स्यात्। ततश्च सवर्णदीर्घत्वे द्वयोरकारयोः कृते आस् कासिति रूपे विशेषाभावात् तयो ] राम् विधानमनर्थकं स्यात् इति।[4] अस्मादेव[5] ज्ञापकाद् आमो मित्त्वं न भवतीत्यनुपङ्गः। न चानयोराम्विधानं कृञोऽनुप्रयोगार्थस्यादित्याशङ्क्याह–आमन्ताद्धातोः कृञ् तु प्रयुज्यते इति व्याख्यानात्। योऽत्र धातुर्नासागमन्ते यश्चामन्तो न स धातुरिति। किं चैवमर्थत्वे आसकासोश्च कृञ् प्रयुज्यते लिटीत्येव ब्रूयात् न तु तयोरामं विदध्यात् इत्यनयोराम्विधानं ज्ञापकमेव मित्त्वाभावस्य। ननु प्रथमपक्षे[6]

---

१. ( ) रेखाङ्कित पाठः नास्ति क० पु०।
२. अदन्तत्वमिति नास्ति क० पु०।
३. लिट् इति नास्ति क० पु०।
४. [ ] रेखाङ्कितः पाठो नास्ति क० पु०।
५. अस्मात् ज्ञापकादिति ख० पु०।
६. प्रत्ययमेति क० पु०।

## १२८. आमः [ २ । ४ । ८१ ]

आमः परस्य लेलुक् स्यात् ।

## १२९. कृञ्चानुप्रयुज्यते लिटि [ ३ । १ । ४० ]

आमन्ताद्धातोः कृञ् अनुप्रयुज्यते लिटि परे । अभूततद्भावे "कृभ्वस्ति" ( ५ । ४ । ५० ) इत्यतः "कृञो द्वितीया" ( ५ । ४ । ५८ ) इति ञकारेण कृञ्प्रत्याहारः । तेन कृभ्वस्तयो ज्ञेयाः । तेषां द्वित्वादि ।

---

"अकः सवर्णे दीर्घेणामन्त्रे इति निर्देश्यं स्यात् तत्राह—पररूपं कतन्तवदिति । यथा "सर्वत्र लोहितादिकतन्तेभ्यः" ( ४ । १ । १८ ) इत्यत्र कतोऽन्तो यषां ते कतन्ताः इति निर्देशे सौत्रत्वात् शकन्ध्वादित्वाद्वा पररूप तद्वदिहापि द्रष्टव्यमित्यर्थः ॥ १२७ ॥

आमः । "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" ( १० ) इति वचनात् लक्षणप्रतिपदोक्तपरिभाषया चाम्प्रत्ययो गृह्यते । तेनाम गतौ इत्यस्माण्णलि उपधावृद्धौ च यदाऽमिति रूपं ततः परस्य णलः स्थानिवद्भावेन लिट्त्वेऽपि लुक् न भवति ।

लेरिति[1] । सामान्यग्रहणेऽपि लिडेवात्र गृह्यते तत्रैवाम् सम्भवति । न लिङिति । लुक्[2]चायं नाप्राप्तेषु तिबादिष्वारभ्यमाणस्तेषामपवाद[3] इति लावस्थायामेव जायते । तेनेन्दाञ्चकारेत्यत्र "तिङ्ङतिङः" ( ८ । १ । २८ ) आमन्तस्यानिघातस्तस्माच्च परस्य निघातः सिद्धयति । अत एव लिटोऽतिङ्भावित्वेन "कृदतिङ्"[4] ( ३ । १ । ९३ ) इति कृत्वात् "कृत्तद्धित" ( १ । २ । ४६ ) इति प्रातिपदिकत्वे सुपि तस्य[5] हल्ङ्यादिलोपे स्वरादिष्वामः पाठाद् "अव्ययादाप्सुपः" ( २ । ४ । ८२ ) वा लुकि कृते प्रत्ययलक्षणेनामन्तस्य सुबन्तत्वात् पदत्वमपि सिद्धम् । तथा च इन्दाञ्चकारेत्यादौ "वा पदान्तस्य" ( ८ । ४ । ५९ इति परसवर्णविकल्पो भवति । यत्त्वत्र लिटो लुकि प्रत्ययलक्षणेन द्वित्वाद्याशङ्क्य "न लुमता" ( १ । १ । ६३ ) इति निषेधेन परिजह्वार नैमिषीयस्तद्भ्रान्तप्रलपितम् । आमन्तस्य लिट्परत्वेऽपि अधातुत्वाद् धातोश्चामा व्यवधानाद् द्वित्वप्रसङ्गासम्भवात् ॥ १२८ ॥

कृञ्चेति । अनुशब्दः पश्चादर्थे । कस्मात्पश्चादित्यपेक्षायां प्रकृतत्वादाम्[6] एवेति गम्यते । प्रत्ययेन च तदन्तग्रहणमित्यभिप्रेत्याह—आमन्ताद्धातोरिति । तद्गुणसंविज्ञान-

---

१. लेरिति नास्ति ख० पु० ।
२. लुक्कार्यमिति क० पु० ।
३. तिबादिष्विति नास्ति क० पु० ।
४. कृदतिङिति नास्ति क० पु० ।
५. (     ) पाठो नास्ति क० पु० ।
६. प्रकृतित्वादिति ख० पु० ।

बहुव्रीहिः । अतद्गुणसंविज्ञाने आम्प्रत्ययवत् प्रकृत्युपलक्षणात्[1] धातोरामश्च मध्ये स्यात् । लिटीति कृञोऽनुप्रयुज्यमानस्य विशेषणम्, लिटि परे यः कृञ् लिडन्त इति यावत् सोऽनुप्रयुज्यते इति । लिडप्यनेनैव साध्यते न तु लिट्येव स्थिते कृञ्मात्रं विधीयते पूर्वस्य लिटः "आमः" ( २ । ४ । ८१ ) इति लुक्त्वात् लुका लुप्ते प्रत्यय-लक्षणाभावात् । कथं तर्हि सलोप्य तेन तस्मिन्नेव कृञनुप्रयुज्यते नैवं शङ्क्यम् । एवं ह्येकपद्यं प्रसज्येत । तथाहि सति चक्षुष्कामं याजयाञ्चकारेत्यामन्तात्परस्य निघातो न स्यात् । 'वा पदान्तस्य" ( ८ । ४ । ५९ ) इति परसवर्णविकल्पश्च न स्यात् । "उत्ताञ्चक्रे नगरस्य मार्गान्" इति भट्टिः । "त पातयां प्रथममास पपात पश्चा द्" इति कालिदासप्रयोगश्चानुपपन्नः स्यात् । न ह्येकपदे पदान्तरस्य प्रयोगः सम्भवति । ननु 'अनुशब्दो विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च' इति वार्तिकात् कथमत्र कृञो व्यवहितस्य प्रयोगः सत्यम् । एवं वदन् वार्तिककार एवाभियोज्यो न सूत्रकारः । स हि अनुशब्दं विपर्यासनिवृत्त्यर्थमेवेच्छति चकारेन्द्रामिति । ये तु तं पातयामित्यत्र पात यातीति पातयास्तं पातयां महिपम् प्रथमम् आस चिक्षिपे इति व्याचक्षते तेषां मयोजया विविवदास समेतवन्तुः[4] विभयां प्रचकाराणौ इत्यादि-प्रयोगा अचिकित्स्याः स्युः । तदेवं पूर्वप्रयोगनिवृत्तेरनुग्रहणेऽस्य[2] प्रयोजनं स्थितम् । सूत्रारम्भस्याप्येतावदेव प्रयोजनम् । यत्तु आमन्तेनैतदनभिव्यक्तार्थकम् । नास्मात् भावकर्मकर्तृविशेषः पुरुषविशेषः सङ्ख्याविशेषो वाऽवगम्यते । केवलं पूर्वापरीभूत-मनद्यतनकाल परोक्षसाधनविशेषाकाङ्क्षं क्रियारूपमर्थमाह । तत्रावश्यं तदपेक्षा-पूरणाय विशेषवाचि[3] सर्वक्रियानुगतक्रियासामान्यवाचिनः कृञोऽनुप्रयोगः सिद्ध एवेति भाष्यादौ स्थितम् । कृञ इति प्रत्याहारस्य ग्रहणं न स्वरूपस्य । शब्दसंज्ञेति निषेधा-दित्याशयेनाह—कृञ्प्रत्याहार इति । क्व पुनः सन्निविष्टाना प्रत्याहार इत्यत आह—अनुलेति । ञकारेणेति । "आदिरन्त्येन सहेता" ( १ । १ । ७१ ) इति वचनात् । यद्यपि "कृञो द्वितीया" ( ५ । ४ । ५८ ) इति सूत्रस्थो ञकारो नेत्संज्ञः संप्रति तथापि क्वचि-दित्संज्ञो दृष्ट आसीदिति । तेनेत्संज्ञोऽलक्षितेनेत्याश्रीयते इति भावः । किमेवं सति सिद्ध्यतीत्यत आह—तेन कृभ्वस्तयो ज्ञेया इति । यद्यपि "अभिविधौ सम्पदा च" ( ५ । ४ । ५३ ) इति सम्पदोऽपि तत्रान्तर्भावोऽस्ति तथापि धातोरित्यनुवृत्तेर्धातू-पसर्गसमुदायस्य संपदोऽनुप्रयोगो न भवति । योऽत्रधातुस्तस्यापि न भवति । अर्थ-विप्रतिषेधात्[5] । प्रत्याहारग्रहणे ज्ञापकमप्याहुः । "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य"

---

१. प्रत्ययेनेति क० पु० ।

२. रेखाङ्कितः पाठो नास्ति क० पु० ।

३. रनुग्रहणस्य प्रयोजनमिति ख० पु० ।

४. विपर्यस्येति क० पु० ।

५. प्रतिषेधादिति क० पु० ।

## १३०. उरत् [ ७ । ४ । ६६ ]

[1]अभ्यास ऋवर्णस्य अत् आदेशः स्यात् । रपरत्वम् । हलादिः शेषः । अचो ञ्णिति इन्दाञ्चकार । परत्वादादौ यणादेशः ।

---

( १ । ३ । ६३ ) इत्यत्र कृञ् ग्रहणं भ्वस्ति-व्यावृत्त्यर्थम् । स्वरूपग्रहणे हि भ्वस्त्योरनुप्रयोगस्यासंभवात् किं तन्निवृत्त्यर्थेन कृञ्ग्रहणेनेति । तेषां द्वित्वादीति। यद्यपि लिडन्तं चकारेत्यादिसिद्धरूपमेवानुप्रयोगविधिना विधीयते न कृञ् लिटावेव तथापि सिद्धरूपमेव प्रसङ्गाद् व्युत्पाद्यते । कृ णल् इति स्थिते परत्वाद् "अचो ञ्णिति" ( ६ । ३ । ११५ ) इति वृद्धौ पूर्वंकृतायां तस्याः 'द्विर्वचनेऽचि" ( १ । १ । ६६ ) इति स्थानिवद्भावात् कृशब्दस्य द्विर्वचनमिति ज्ञेयम् । विशेषाभावान्नात्र स्थानिवत्त्वमुदाहृतमाचार्यैः । तथापि परत्वात् वृद्धिप्रसङ्गो दुर्वारः । तथा च 'उख गतौ' इत्यत्र स्वयमेव वक्ष्यति–उपधागुणः द्वित्वमिति । द्वित्वादीत्यादिशब्देन कुहोश्चुत्वहलादिशेषादिः संगृह्यते ॥ १३० ॥

उरत् । अत्र ऋकारेणाभ्यासो विशिष्यते । ऋकारान्तस्याभ्यासस्येति । तस्य[1] च विधीयमानो "अलोऽन्त्यस्य" ( १ । १ । ५२ ) इति ऋकारस्यैव भवति । ववृते इत्यादौ तु पूर्वं हलादिःशेषे ऋकारान्ततायामुपजातायामद् भवति । ततो रपरत्वे कृते पुनर्हलादिशेषः । न चैवं ननर्तेत्यादिषु दौ ह्रुगादिषु कृतेऽत्रनृकारान्तत्वादत्त्वं न स्यात् इति वाच्यम् । "अभ्यासविकारेष्वपवादा उत्सर्गान् विधीन् न बाधन्ते" ( प० ) इति उरत्त्वे कृते पश्चाद् रुगादय आगमाः क्रियन्ते । तेनानन्त्यस्यापि ऋकारस्यात्त्वं भविष्यति । एवं च ववृत इत्यादौ पूर्वं उरदत्त्वे रपरत्वे च कृते हलादिःशेषेण रेफतकारयोर्द्वयोरपि युगपदेव निवृत्तिर्भवति । तदर्थं 'लक्षणस्यावृत्तिर्न कल्प्या भवति । इति मुधाप्रतिविधानक्लेशेनेत्याशयेनाह–अभ्यास ऋवर्णस्येति । अदिति तकार उच्चारणार्थः । भाव्यमानेनैव सवर्णग्रहणाप्रसङ्गात् । तस्य च रपरत्वम्, ततो हलादिःशेषः । अचो ञ्णितीति वृद्धिरिति । इयं च परत्वात् प्रागेव यद्यपि जायते तथापि तस्या द्वित्वं प्रति स्थानिरूपापत्त्या कृते तस्मिन् पुनरुत्तरभागस्य वृद्धिः प्रवर्तते । द्विर्वचने कर्तव्ये इति कालावधारणात् कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते इति भावः । परत्वादिति । कृताकृतप्रसङ्गित्वेन नित्यत्वाच्चेत्यपि द्रष्टव्यम् । आदौ द्विर्वचनात् पूर्वं-

---

१. तस्य चेत्यारभ्य अलोऽन्त्यस्येत्यन्तो नास्ति क० पु० ।

२. विकारेष्वारभ्य (          ) रेखाङ्कितः नास्ति क० पु० । विकारेष्वपवादा उत्सर्गान् विधीन् न बाधन्ते इति उरत्वे कृते पश्चाद रुगादिप्रवृत्तिरित्याकरः आचार्यस्तु प्रतिपत्तिलाघवाय विशेषणविशेष्यभावे कामचारादभ्यासेन ऋकारो विशेष्यते इति ग० पु० ।

## १३१. द्विर्वचनेऽचि [ १ । १ । ५९ ]

रूपातिदेशोऽयम् । द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवत् स्यात् द्वित्वे कर्तव्ये । इति साकच्कस्य द्वित्वम् । इन्दाञ्चक्रतुः । इन्दाञ्चक्रुः ।

---

मित्यर्थः । यणादेश इति । कृ अतुस इति स्थिते "असंयोगाल्लिट् कित्" ( १ । २ । ५ ) इति कित्वात् गुणे निषिद्धे "इको यणचि" ( ६ । १ । ७७ ) इति यण् ऋकारस्य रेफ इत्यर्थः । एवं चानच्कत्वाद्[1] द्वित्वं न स्यादित्याशङ्क्य समाधातुं स्थानिवद्भाव-मवतारयति । द्विर्वचनेऽचीति ॥ १३० ॥

द्विर्वचनेऽचीति । एकाचो द्वित्वं विधीयमानं नाचः पूर्वस्य विधिरिति "अचः परस्मिन्" ( १ । १ । ५७ ) इत्यस्याप्रवृत्तेरनेन स्थानिवत्त्वं विधीयते । अत्रापि यदि तद्वदेव कार्यातिदेशः स्यात् ततश्चक्रतुरित्यादौ यणि कृतेऽनच्कत्वाद् प्राप्तं द्वित्वम् स्थानिवद्भावात् भवदपि यण्सहितस्यैव स्यात्ततश्च हलादिशेषेण यणो निवृत्ता-वभ्यासे उरदत्वं न श्रूयेतेत्यत आह—रूपातिदेशोऽयमिति । तेन स्थानिनो यद्रूपमृ-कारादि तदेवादेश आपद्यते आदेशरूपं निवर्तत इत्यदोषः । ज्ञापकं चात्राधीति वचनम् । तद्धि जेघ्रीयते 'ई घ्राध्मोः" ( ७ । ४ । ३१ ) इति हलादौ विहितस्येत्त्वस्य स्थानिवत्त्वं मा भूदिति । यद्यत्र[2] रूपं स्थानिवत्ततोऽस्त्यज्ग्रहणे घ्राम् इति द्वित्वं स्यादिति तन्निवृत्त्यर्थमज्ग्रहणमुपयुज्यते । अथ कार्यं स्थानिवत् ततः सत्यपि स्थानि-वत्त्वे ईकारयुक्तस्यैव द्वित्वेन भाव्यमित्यनर्थकमेवाज्ग्रहणं स्यादिति । यद्येवमभ्यास इव परभागेऽपि स्थानिरूपमेव सर्वदा श्रूयेत ततश्चक्रतुः जग्मतुरित्यादि न सिद्ध्येत् । स्यादेतत् । द्विर्वचन इत्युच्यते तच्च-कालावधारणार्थम्, तेन द्विर्वचने एव कर्तव्ये तत्काल एव स्थानिरूपमापद्यते । कृते तु द्विर्वचने पुनरादेशरूपमेवावतिष्ठते इति नोक्तदोष इति । यद्येवं द्विर्वचने इत्यनेन सकृत् श्रुतेनाचीत्यस्य विशेषित्वाद्[3] द्वित्वनिमित्तेऽप्यचि[4] कृतोऽजादेशः स्थानिवत् स्यात् ततश्चाचिकीर्तत् इत्यत्रापि "उपधायाश्च" ( ७ । १ । १०१ ) इतीत्वं "चङि" ( ६ । १ । ११ ) इति द्वित्वे स्थानिवत् स्यात् । दुद्यूषतीत्यत्र चोठि यणादेशः "सन्यङोः" ( ६ । १ । ९ ) इति ततश्चाचकीर्तद् दिद्यूषतीति स्यात् । तस्मात् "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इत्येतदावर्ततेऽत्रैकेनाच् विशेष्यतेऽपरेण कालोऽवधार्यते इति व्याचष्टे द्वित्वनिमित्तेऽचो-

---

१. अनच्कत्वे इति क० पु० ।
२. यदिति भूयः इति क० पु० ।
३. षित्वेति क० पु० ।
४. त्वनि कृते इति क० पु० ।

## १३२. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि [ ७ । २ । १३ ]

क्रादिभ्य एव लिट इण् न स्यात्। अन्यस्मादनिटोऽपि स्यात्। इन्दाञ्चकर्थ। वा णित्त्वम्। इन्दाञ्चकार। इन्दाञ्चकर। इन्दांचकृव। इन्दांचकृम। इन्दांबभूव। "अत आदेः" ( ७ । ४ । ७० ) इन्दामास। विधानसामर्थ्यादस्तेर्भूभावो न। णिदि कुत्सायाम्।

---

स्यादि। द्विर्वचननिमित्तत्वाद् अजेव द्विर्वचनमित्युपचर्यते। द्विर्वचनमस्मिन्नस्तीति द्विर्वचनमित्यर्शआद्यजन्तत्वाद्वा। द्विरुच्यतेऽस्मिन्निति द्विर्वचनमित्यधिकरणल्युटा वा द्विर्वचननिमित्तत्वं लभ्यते इति भावः। अचीति सति सप्तमी। अचि सति योऽजादेशः अज्निमित्तक इति यावत्। परसप्तम्या तु जग्मतुः पपावित्युपधालोपैकादेशयोः स्थानिवत्त्वं न स्यात्। पूर्वस्याचो मकारेण व्यवधानात् परत्र परस्याभावात्। यो ह्यत्र द्वित्वनिमित्तमतुस् नासावच्। यश्चात्राच् न तन्मात्रं द्वित्वनिमित्तम्। क्व तर्हि स्यात् चक्रे इत्यादौ यत्राज्मात्रं प्रत्ययः। नैष दोषः। अचि योऽजादेशः कोऽर्थः? अचि यो[1] दृष्ट इत्यर्थः। यश्चाचि विधीयते यश्चाजादौ? द्वावप्यचि दृष्टावेवेति सर्वत्र सिद्ध्यति। द्विर्वचने कर्तव्ये इति। एतेन कालावधारणं सूच्यते। यावद् द्विर्वचनं क्रियते तावत्कालमेव स्थानिवद्भावो भवति[2] नातः परम्। तेन कृते द्विर्वचने पुनरादेशरूपेणावतिष्ठते। तथा च चक्रतुरित्यत्र परभागे यणेव। यद्येवं निन्यतुरित्यत्रापि द्विर्वचनात्पूर्वमियङि कृते स्थानिवद्भावाद्[3] द्विर्वचने कृते पूर्वप्रयुक्त इयङेव श्रूयेत। अस्तु तस्य "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यसिद्धत्वात् "एरनेकाचः" ( ६ । ४ । ८२ ) इति यण् भविष्यति। यद्वा पूर्वप्रयुक्तोऽप्ययङ् द्विर्वचनकालेऽपहृत इति पुनः प्रवर्तयितव्यः। तस्यां च दशायामनेकाच्त्वाद् यण् बाधिष्यते इत्यदोषः। इति साक्षात्वेन द्वित्वमिति। कृतेऽपि यणि रूपातिदेशात् कृञ्[4]शब्दस्यैव द्वित्वमित्यर्थः। अधिजगे इत्यत्र तु "गाङ् लिटि" ( २ । ४ । ४९ ) इति द्विलकारकनिर्देशेन लकारादौ लिटि गाङादेशविधानाद[5]ज्निमित्तत्वाभावात् स्थानिवत्त्वाभावः ॥ १३१ ॥

कृसृभृ। डुकृञ् करणे। कृञ् हिंसायाम्। सृ गतौ। डुभृञ् धारणपोषणयोः। भृञ् भरणे च, वृञ् वरणे, वृङ् सम्भक्तौ। ष्टुञ् स्तुतौ। द्रु गतौ। स्रु गतौ। श्रु श्रवणे

---

१. अचि योदृष्ट इत्यर्थ इति नास्ति क० पु०।
२. (     ) रेखाङ्कितः पाठो नास्ति क० पु०।
३. द्वित्वे कृते इति क० पु०।
४. नुशब्देन इति क० पु०।
५. अज्निमित्तेति क० पु०।

च। एषां समाहारद्वन्द्वे सौत्रत्वात् पुंस्त्वम्। क्रादीनामेकाच उपदेश इति प्रकृत्याश्रये प्रतिषेधे वृङ्वृञोस्तु "श्र्युकः किति" (७।२।११) इति प्रत्ययाश्रये सिद्धे सत्यारम्भो नियमार्थ इत्याह—क्रादिभ्य एवेत्यादि। सामान्येन प्राप्त इण्निषेधो लिटि चेद्भवति तर्हि क्रादिभ्य एव नान्येभ्यस्तेनान्येभ्य इड् भवत्येवेत्यर्थः। यथा बिभिदिव, लुलुविवेति। अनिटोऽपि निषिद्धे टोऽपीत्यर्थः। अत्र विपरीतस्तु नियमो न भवति क्रादिभ्यश्चेदिण् न भवति लिट्येवेति। कृते ग्रन्थे। परिवृतो रथः। स्तुतस्तोमयोरित्यादिनिर्देशात्। ननु वृञ्ग्रहणं प्रतिषेधविध्यर्थं स्यात्। कथमिति[1]। न ह्यत्र प्रकृत्याश्रयः स सम्भवति वृञ उदात्तत्वात् नापि प्रत्ययाश्रयः थलोऽकित्वात्। ततश्च प्रत्ययाश्रयस्यासति नियमे लुलविवेत्यादिष्वपीड् न स्यात्। सत्यम्। अत्र परिहारं वक्ष्यति। ववर्थेति छन्दसि निपातनात् भाषायां नित्यमिट् इति। अतो वृञ्ग्रहणमपि नियमार्थमेवेत्यदोषः। अत्र च सामान्योक्तावपि कृसृभृवृग्रहणमेव नियमार्थमिति द्रष्टव्यम्। स्तुद्रुस्रुश्रुवां तु विध्यर्थम्। असति हि विधेये नियमो भवति। इह चास्ति विधेयं किम्? तुष्टोथेति थलि भारद्वाजनियमादिह प्राप्तस्य निषेधः। अन्यथा ययिथ ममाथेत्यादाविव भारद्वाजनियमादिट्पक्षे स्यात् प्रतिषेधः। बिभिदिव लुलुविवेत्यादौ तु क्रादीनां चतुर्णां ग्रहणनियमार्थादिड् भविष्यति। यद्येवम् तुष्टुव[2] तुष्टुमेत्यत्रापि क्रादिनियमादिट् प्राप्नोति। नैष दोषः। स्तुद्रुस्रुश्रुवां ग्रहणमुभयोरपि प्रतिषेधार्थम्। यश्च क्रादिनियमादिट् प्राप्तः। यश्च भारद्वाजनियमात्तयोरुभयोरप्ययं निषेधः। भारद्वाजनियमस्तु "अचस्तास्वत्" (७।२।६१) इति 'उपदेशेऽत्वत' (७।२।६२) इति च योगद्वयेन यस्थलि प्राप्तः प्रतिषेधस्तमेव निवर्तयति। "अनन्तरस्य विधिर्वा प्रतिषेधो वेति नियमात् न तु क्रादिनिषेधम्। तेन तुष्टोथेत्यादौ भारद्वाजनियमेन 'अचस्तास्वत्' (३।२।६१) इत्येव प्रतिषेधो निवर्तते न क्रादिप्रतिषेध इति सिद्धमिष्टम्। इन्दाञ्चकर्थेति। गुणे। रपरत्वम्। अत्र कृग्रहणस्य प्रयोजनं वमयोर्ज्ञेयम्। थलि तु क्रादिमानियमेऽपि प्राप्तस्येटो "अचस्तास्वत्" (३।२।६१) इति निषेधेन[3] सिद्धम्। या णित्वमिति। "णलुत्तमो वा" (७।१।९१) इत्यनेन। इन्दाञ्चकरेति। णित्वाभावपक्षे वृद्ध्यभावः। अनुप्रयोगे कृञ् प्रत्याहा[4]र इत्युक्तम्। तदुदाहरति—इन्दांबभूवेति। एतच्च भूधातो व्युत्पादितम्। इन्दामासेति। अस्तेर्लिट्परस्यानुप्रयोगः। द्वित्वम्। हलादिशेषः। "अत आदेः" (७।४।७०) इति दीर्घत्वम्। द्विहल्वाभावात् न

1. निषेधेति क० पु०।
2. ववर्थेति।
3. तुष्टुवेति नास्ति ख० पु०।
4. क्रादिनियमेऽपि प्राप्तस्येन्दोव सास्वादीति ग० पु०।
5. कृञ् इति प्रत्याहारग्रहणमित्युक्तम् इति ख० पु०।

## १३३. वा निंसनिक्षनिन्दाम् [ ८ । ४ । ३३ ]

उपसर्गस्थान्निमित्तादेषां णत्वं वा स्यात्। प्रणिन्दति। प्रनिन्दति। उख गतौ। ओखति। औखत्। औखीत्। उपधागुणः। द्वित्वम्। ह्रस्वः।

---

नुट्। सवर्णदीर्घः। अत्र "अस्तेर्भूः" ( २ । ४ । ५२ ) कस्मान्न भवति इत्याशङ्क्याह—विधानसामर्थ्यादिति। प्रत्याहारग्रहणसामर्थ्यात्, अन्यथा ह्यसन्देहार्थं कृञ्[1] चानुप्रयुज्यते इत्येव ब्रूयादित्यर्थः। इन्दिता। इन्दिष्यति। ऐन्दिष्यत्। णिदि। इदित्वान्नुम्। णो नः। निन्दति। निन्देत्। अनिन्दत्। निनिन्द। निनिन्दतुः। निनिन्दुरित्यादि ॥ १३२ ॥

वा निंस। णिसि चुम्बने। णिक्षि रोपे च। णिदि कुत्सायाम्। "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८ । ४ । १४ ) इति नित्ये णत्वे प्राप्ते विकल्पोऽयम्। इह च "कृत्यचः" ( ८ । ४ । २९ ) इत्यतः कृतीति वर्तते। तेन कृत्येवैषां वा णत्वम्। प्रणिनिन्दनम्। प्रनिनिन्दनम्। एवं हि प्रकरणमबाधितं भवति। णोपदेशश्च सार्थकः। अविशेषेण विकल्पे किं णोपदेशपाठेन। तथा च शाकटायनः। निंसनिक्षनिन्दां कृति चेति। एवं च प्रणिन्दतीत्यादि तिङन्ते नित्यमेव णत्वं णोपदेशलक्षणमित्याकरे स्थितम्। आचार्यैस्त्वन्यमताभिप्रायेणैतदुदाहृतम्।

उख गतौ। ओखतीति। "पुगन्त" ( ७ । ३ । ८६ ) इति गुणः। औखदिति। "आडजादीनाम्" ( ६ । ४ । ७२ ) "आटश्च" ६ । १ । ९० ) उपधागुण इत्यादि। लिटि, उख णल् इति स्थिते परत्वाद।दौ 'पुगन्त" ( ७ । ३ । ८६ ) इति गुणः। ततो द्वित्वम्। हलादिशेषः। 'ह्रस्वः" ( ७ । ४ । ५९ ) इत्योकारस्य "एच इग् ह्रस्वादेशे" ( १ । १ । ४८ ) इत्युकार इत्यर्थः। एतच्च रूपे विशेषाभावात् "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवद्भावमाश्रित्योक्तम्। तदाश्रयणे हि गुणस्य स्थानिवत्त्वात् उख इत्यस्यैव द्वित्वमित्यभ्यासे[2] गुण एव नास्तीति तत्कुतो ह्रस्वप्रसङ्ग इत्याद्युक्तं स्यात्। यद्वा ह्रस्व इत्यत्राभ्यास इति शेषो द्रष्टव्यः। कृतेऽपि गुणे तस्य स्थानिवत्त्वात् उख इत्यस्यैव द्वित्वेन ह्रस्व एवाभ्यासो भवति न स गुण इत्यर्थः॥१३३॥

उवोखेति। अभ्यासस्योवङो विधानसामर्थ्यान्न हलादिशेषः। ननु चात्रोकारस्य "अचः परस्मिन्" ( १ । १ । ५७ ) इति स्थानिवत्त्वादुवङा न भाव्यम्। असवर्ण इति निषेधात्। तत्राहुः अनादिष्टादचः पूर्वस्य विधौ स्थानिवत्। अयं चाभ्यासः आदिष्टादचः पूर्व इत्यदोष इति। एतच्च कृतगुणस्यैव द्वित्वमिति पक्षे द्रष्टव्यम्। यदा

---

१. कृञ् इति क० पु०।

२. द्वित्वेन ह्रस्व एवाभ्यासो भवति न स गुण इत्ययं इति क० पु०।

**१३४. अभ्यासस्यासवर्णे [ ६ । ४ । ७८ ]**

अभ्यासस्य इउवर्णयोरियङुवङौ स्तः असवर्णे अचि । उवोख । ऊखतुः । अञ्चु गतिपूजनयोः । आनञ्च । आनञ्चतुः ।

**१३५. नाञ्चेः पूजायाम् [ ६ । ४ । ३० ]**

इति नलोपाभावः । अञ्च्यात् । गतौ तु अच्यात् । ग्रुचु गतौ ।

---

तु पूर्वप्रवृत्तस्यापि गुणस्य द्विर्वचनकालेऽपहृतत्वात् कृते द्विर्वचने पुनः प्रवृत्तिरिति पक्षस्तदाऽनादिष्टादचः पूर्वत्वेनाभ्यास एवेति स्यादेव स्थानिवद्भावः। अत्र हरदत्तः असवर्णग्रहण[1]सामर्थ्यात् स्थानिवत्त्वं न भविष्यति । अस्ति वचनस्यावकाशः इयत्ति । ऋत इः । नह्येकमुदाहरणं योगारम्भं प्रयोजयति । यद्येतावत् प्रयोजनं स्यादर्ति-पिपर्त्योश्च च ब्रूयादिति । अत्र गुणे कृते "इजादेः" ( ३ । १ । ३६ ) इत्याम्न भवति नित्यं गुरुमतः इति व्याख्यातत्वात् । सन्निपातपरिभाषया वा । लिट्सन्निपातेन जातो गुणो लिटो विघातकमामं न प्रवर्तयति सति हि तस्मिन् "आमः" ( २ । ४ । ८१ ) इति लिटो लुका भाव्यमिति । ऊखतुरिति । अत्र सवर्णदीर्घस्य "अन्तादिवच्च" ( ६ । १ । ८५ ) इत्यभ्यासग्रहणेन ग्रहणाद् "ह्रस्वः" ( ७ । ४ । ५९ ) इति ह्रस्वो न भवति । अभ्यासमात्राश्रयत्वेनान्तरङ्गेऽस्मिन् कर्तव्ये पूर्वपराश्रयत्वे न बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वाद् पिन्तु सर्वत्र गुणे द्वित्वे चोवङादेशः उवोखिथ । ओखिता । उख्यादित्यादि । अत्र च उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्था इति दण्डकपाठे । उखिरिदिदपि पठ्यते । तस्य "इदितो नुम् धातोः" ( ७ । १ । ५८ ) इति नुमि सति उङ्खति । उङ्खेत् । उङ्खतु । औङ्खत् । औङ्खीत् । उङ्खाञ्चकार । उङ्खिता । उङ्ख्यादित्यादि । इन्दतिवत् ज्ञेयम् । अञ्चु । अञ्चति । अञ्च्येदित्यादीन्दिवत् । लिट्युदाहरति—आनञ्च । अञ्च अ इति स्थिते द्वित्वम् । "हलादिः शेषः" "अत आदेः" ( ७ । ४ । ७० ) "तस्मान्नुड्" ( ७ । ४ । ७१ ) इति नुट् । आनञ्चतुरिति । संयोगात् परस्य लिटोऽकित्त्वात् न नलोपः ॥ १३४ ॥

अञ्च्यादिति । "किदाशिषि" ( ३ । ४ । १४० ) इति कित्वाद् नलोपः प्राप्तः पूजायां निषिद्धः । पूजायामिति विशेषणाद् गतौ न निषेध इत्याह—गतौ तु । अञ्चि-ष्यति । आञ्चिष्यत् । ऋुचु । ओचतीत्यादि । जू । जृषु वयोहानौ । स्तम्भु रोधने । सौत्रः । ग्रुचु ग्लुचु गतौ ।[1]ग्रुचु ग्लुचु स्तेय करणे । ग्लुचु गतौ । टुओश्वि गतिवृद्ध्योः ।

---

१. ( ) रेखाङ्कितो नास्ति क० पु० ।

१३६. जस्तम्भुमुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च [ ३ । १ । ५८ ]

एभ्यश्च्लेरङ् वा स्यात् परस्मैपदेषु । अग्रुचत् । अग्रोचीत् । एवं म्लुचु ग्रुचु ग्लुचु ग्लुञ्चु । आछि आयामे । आञ्छतेर्नुड् वेति केचित् । आनाञ्छ । आञ्छ । हुर्छा कौटिल्ये ।

अम्लुचत् । च्लेः सिचोऽपवादेऽङि कृते ङित्त्वाद् गुणाभाव. । अम्लोचीत् इति । अङ-भावे च्लेः सिच् । इट् । ईट् । उपधागुण. । सिचो लोपः । सवर्णदीर्घः । एवमित्यादिः । एभ्योऽप्यङुदाहार्य इत्यर्थ । यथा अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । ग्लुञ्चेस्त्वङि नलोपादग्लुचत् अग्लुचीत् अग्लोचीत् इति त्रैरूप्यसिद्धेरुभयोपादानसामर्थ्याद् ग्लुञ्चेर्नलोपो न भवतीत्यग्लुञ्चदित्युदाहरन्ति । तद्भाष्यविरुद्धम् । तत्र ह्यन्यतरोपादानेऽपि रूपत्रयसिद्धेरन्यतरच्छक्यमकर्तुमिति स्थितत्वात् । [1]यदप्यर्थ-भेदादुभयोपादानमित्याहुः । तदपि न । अनेकार्थत्वाद्धातूनामत्र विषयेऽर्थभेदो न प्रयोजक इति कैयटोक्तेः ॥ १३१ ॥

जृस्तम्भु त्वग्रे दर्शयिष्यति । आछि । इदित्वान्नुम् । आञ्छेत् । आञ्छीत् । आनाञ्छेति । "अत आदेः" ( ७ । ४ । ७० ) इत्यत्रोक्तम् । तपरकरणं स्वाभाविक-ह्रस्वपरिग्रहार्थम् । तेनाञ्छेर्लिट् । अभ्यासह्रस्वेऽपि कृते दीर्घाभावात् "तस्मात्" ( ७ । ४ । ७१ ) नुडभावात् सवर्णदीर्घे आञ्छेत्येव । येषां तु तपरकरणं मुखार्थम्, तेषामत्रापि दीर्घप्रवृत्तेर्भवत्येव नुडिति । मतभेदाद्विकल्प इति भावः । आञ्छिता । आञ्छ्यादिति । हुर्छा ॥ १३६ ॥

"र्वोरुपधायाः" ( ८ । २ । ७६ ) इत्यतोऽनुवर्तमानमपोदम् उपधाग्रहणमिह न संबध्यतेऽसंभवादिति व्याचष्टे—इको दीर्घः स्यादिति । हूर्छति । दीर्घोकारा एव नैवमादय पठ्यन्ते क्विपि हुरौ हुर इति ह्रस्वश्रवणार्थम् । जोहोर्त्ति मोमोर्त्ति तोतोर्त्ति इति यङ्लुकि लघूपधगुणार्थम् । हूर्छति जुहूर्छेत्यादि । माधवस्त्वाह—टुओ स्फूर्जा वज्रनिर्घोषे इत्यस्य दीर्घोपदेशेन "उपधायां च" (८ । २ ।७८) इति दीर्घस्यानित्यत्व-ज्ञापनात् । हुर्छति, मूर्छतीत्यादि भवति । केचिदिति । मैत्रेय इति । वज । वजति । 'अतो हलादेः" ( ७ । २ । ७ ) इति वा वृद्धिः । अवजीत् । अवाजीत् । ववाज । अजति ॥ १३७ ॥

१. यदप्यर्थभेदो न प्रयोजक इति कैयटोक्तेः इति ख० पु० ।

**१३७. उपधायां च [ ८ । २ । ७८ ]**

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। हूर्छति। अहूर्छीत्। जहूर्छ। व्रज गतौ।

**१३८. न शशददवादिगुणानाम् [ ६ । ४ । १२६ ]**

शशेर्ददेर्वकारादीनां गुणभूतस्य चाकारस्य एत्वमभ्यासलोपश्च न स्तः। ववजतुः। ववजिथ। व्रज गतौ। "वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः। अव्राजीत्। अज गतौ क्षेपणे च।

**१३९. अजेर्व्यघञपोः [ २ । ४ । ५६ ]**

अजेरार्धधातुके वीत्यादेशः स्यात् न तु घञपोः परतः। वलादावार्धधातुके वेष्यते।

**१४०. एकाच उपदेशेऽनुदात्तात् [ ७ । २ । १० ]**

उपदेशे यो धातुरेकाच् अनुदात्तस्ततः परस्य वलादेरार्धधातुकस्येट् न स्यात्।

---

न शसददेति। शसेति सान्तः पाठः शसु हिंसायामित्यस्य च ग्रहणम्। यस्तु शश प्लुतगताविति तालव्यान्तस्तस्यैत्वाभ्यासलोपाविष्येते एव। शेशतुः शेशुरित्यादौत्याकरः। आचार्यास्तु तालव्यान्तस्यैव ग्रहणमिच्छन्ति। तथा च तत्रोदाहरिष्यन्ति न शशददेत्युक्तेरेत्वं न। शशशिथेति। दददाते। वादयो वकारादिमवर्णाः। अकारस्य गुणत्वाव्यभिचाराद् गुणग्रहणं तद्भावितपरमिति व्याचष्टे—गुणभूतस्य वेति। गुणशब्देन भावितस्येत्यर्थः। "अत एकहल्मध्ये" ( ६।४।१२० ) इति प्राप्तं निषिध्यते। ववजिथेति। "थलि च सेटि" ( ६।४।१२१ ) इति प्राप्तौ। व्रज। अव्राजीदिति। हलन्तत्वादेव सिद्धे वदव्रजग्रहणं विकल्पबाधनार्थम् इत्युक्तेर्नित्यावृद्धिरिति भावः। वव्राज। ववजतुः। संयुक्तहल्मध्यस्थत्वान्नैत्वाभ्यासलोपौ। अज। अजति। अजेत्। अजतु। आजम्॥ १३८॥

अजेर्व्य। आर्धधातुक इति विषयसप्तमीयम्। तेनार्धधातुके विवक्षिते इत्यर्थः। तेन प्रागेव प्रत्ययोत्पत्तेर्वीभावे हलादित्वाद् यङि वेवीयते इत्यादि सिद्ध्यति। परसप्तम्यां तु न स्यात्। यङलुक् त्वस्मान्न भवति। यतो लुका यङ् आर्धधातुस्य विषयत्वापहारान्नार्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः। वीति दीर्घान्तोऽयम्। वीतम्। वीत्वा। प्रवीयेति किति श्रवणार्थम्॥ १३९॥

एकाच। नास्त्युदात्तो यस्मिन् सोऽनुदात्तः। यद्वा अनुदात्ताच्कत्वाद्धातुरेवानुदात्त उच्यते। उपदेशः प्रकृतेराद्यः पाठः उभयविशेषणं चैतत् इष्यते। देहलीदीपकन्यायात्। तेन भविष्यति इत्युपदेशे एकाचः। प्रत्ययोदात्तत्वे कृते शेषनिघातेन सम्प्रत्यनुदात्त-

ऊदृदन्तरुस्नुक्ष्णुशीयुणुक्ष्णुविडीङ्—श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ताः धातवोऽनिटः ॥ १ ॥
वसतिः शक्लृघसृभ्यमूलभ्यमो रमिमन्यती ।
नमिह निगमी देग्धिद्र् हमिहनहवहलिहो रुहिः ॥ २ ॥
दृहिदिंशिदृशी दंशिस्पृशिमृशविशक्रुशिक्रुशः ।
लिशरिशसिध्यतिरुधूराधसाधयुधः शुध्यति बुध्यती ॥ ३ ॥
क्रुधिक्षुधी व्याधवन्धिः शुष्यति पुष्यतिः रिलपिः ।
दृपिद्विपी विपपिपौ त्विपतुपौ शिपिः कृपिक्रपंतौ ॥ ४ ॥
तपतिः यावापिस्वपलिपलुपरतृप्यतिदृप्यती ।
सृपशपौ छुपक्षिपौ स्कन्दिह दिछिदिभिदिक्षुदः ॥ ५ ॥
अदिः शदिसदी स्विदनुदतुदः स्विद्यविपद्यती ।
विनत्तिविंधतिः पचवचविचिरिचप्रछिरञ्जयः ॥ ६ ॥
निजिः सिचिमुची भञ्जिभजिभृज्जतियजत्यजः ।
युजिः सञ्जिरुजिसञ्जिसृजिमस्जिभुजो विजिर् ॥ ७ ॥
इमे हलन्तेष्वनिटः इत्यनिट्धातुसंग्रहः ।

---

त्वेऽपि न भवति । कर्त्ता । कर्त्तुमिति नित्स्वरेण सम्प्रत्युदात्तादप्युपदेशेऽनुदात्तादिति भवति । तथा बिभित्सतीत्यत्र नित्यत्वाद् द्विर्वचने कृतेऽनेकाचोऽपि श्रूयमाणादुपदेशे एका च इड् न भवति वेभिदितेत्य अत्वल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावान्निषेधो न भवति । अत्रानुदात्तोपदेशस्य पाठेन दुरधिगमत्वाल्लक्षण[1]परिगणनाभ्यां दर्शयितुमुपक्रमते धातवश्च ( [2]द्विविधाः अजन्ता हलन्ताश्च । तत्राजन्तेष्वनुदात्तान् लक्षयति—ऊदृदन्तेत्यादीति । अनिटो ग्रहणमनुदात्तोपदेशलक्षणम् । अन्तशब्दः प्रत्येकं परिसमाप्यते । अदन्ता ऊदन्ता ऋदन्ताश्च ) रुशब्दे । स्नु प्रस्रवणे । क्ष्णु तेजने । शीङ् स्वप्ने । यु मिश्रणामिश्रणयोः । आदादिकोऽत्र गृह्यते शीङादिभिः साहचर्यात् । तेन युञ् बन्धने इति क्र्यादिकोऽनिडेवेति स्थितम् । णु स्तुतौ । क्षु शब्दे । टुओश्वि गतिवृद्धयोः । डीङ् विहायसा गतौ । श्रिञ् सेवायाम् । वृङ् संभक्तौ । वृञ् वरणे । एभिर्विनैकाचो ये स्वरान्ता धातवस्तेऽनिटोऽनुदात्तोपदेशा इत्यर्थः । धातव इति उपदेशावस्थायां सूचयति—कर्ता

---

१. लक्षणमपरिगणनाभ्यामिति क० पु० ।

२. द्विविधा इत्यारभ्य—ऋदन्ताश्चेत्यन्तो रेखाङ्कितः ( ) पाठो नास्ति क० पु० ।

हर्ता इति गुणे रपरत्वे च कृते संप्रत्ययस्वरान्तोऽपि-अनिड् भवति। एकाच्त्वमुपदेशगतमेवापेक्ष्यते न साम्प्रतिकम्। अन्यथा निनीषति तितिक्षतीत्यत्र न स्यात्। एवं चागवीत् इति नःमधातोर्न भवति तस्योपदेशाभावात्। एवं स्थितेऽदन्तग्रहणं न तावदस्वीत् स्वितेत्याद्याचार क्विबन्तस्य स्वादेर्व्यावृत्त्यर्थम्। नापि चिकीर्षिता, बोभूयितेत्यादि निवृत्त्यर्थम्। एकाच्त्वाभावात्।

यत्तु हन्तेर्वधादेशस्यादन्तत्वादवधीत् इत्यादौ—अनिट्त्वव्यावृत्तिप्रयोजनमदन्तग्रहणस्य। तदपि न। उपदेशेऽदन्तत्वे एकाच्त्वाभावात्। न च स्थानिवत्त्वेनैकाच्त्वम्। अल्विधित्वात्। अथ नात्र स्थानिवद्भाव ब्रूमः किं तूपदेशविज्ञानाद् योऽयं धातूपदेशे एकाच् हन्तिः स एवेमामवस्थां प्राप्तः इति वधेरपि प्राप्नोतीति। मैवम्। यस्मिन्नुपदेशेऽयमेकाच् न तत्रादन्तः। यत्र चायमदन्ते न तत्रैकाजिति नास्ति प्रसङ्गः। एवं तर्हि कथञ्चिदेकाच्त्वादन्तत्वयोरुपदेशासम्बन्धेन भाव्यमित्येतावद्विवक्षयादन्तग्रहणमिति ज्ञेयम्। *एकाजुपदेशसंबन्धविवक्षापक्षे[1] तु नास्योपयोगं पश्यामः।* ऊदन्ताः भूप्रभृतयः ॠदन्ताः क्लृप्रभृतयः।

इदानीं हलन्तेषु अनुदात्तोपदेशानाह—वसतिरित्यादि। वस निवासे। शपा निर्देशो वस आच्छादने इत्यादादिकस्य वसु स्तम्भे इति देवादिकस्य निवृत्त्यर्थः। तथा च शाकल्लमल्लः "वस्ता वनान्ते वसिता च वल्कं कः क्षत्रियः श्रोत्रियतामुपेयात्" इति। शक्लृ शक्तौ। अत्र लृदितो ग्रहणात् शक्नोतेः स्वादेर्ग्रहणम्। दैवादिकस्य तु शक्यते शकितेत्येव भवतीति चन्द्रगोमो। घस्लृ अदने शब्विकरणः प्रकृत्यन्तरम्। अत्तेरादेशस्य तु घसेः स्थानिवद्भावेऽपि अनिट्त्वं सिद्धम्। रभ राभस्ये। डुलभष् प्राप्तौ। यभ मैथुने। यम उपरमे। रम क्रीडायाम्। मन ज्ञाने। श्यना निर्देशो दैवादिकस्य ग्रहणार्थः। तेन मनु अवबोधने इति तानादिकस्य मनितेत्येव भवति। णम प्रह्वत्वे शब्दे च। हन हिंसागत्योः। गम्लृ गतौ। दिह उपचये। दुह प्रपूरणे। मिह सेचने। णह बन्धने। वह प्रापणे। लिह आस्वादने। रुह जनौ प्रादुर्भावे च। दह भस्मीकरणे। दिश अतिसर्जने। दृशिर् प्रेक्षणे। दंश दशने। स्पृश संस्पर्शने। मृश आमर्शने। विश प्रवेशने। रुश रिश हिंसायाम्। क्रुश आह्वाने। पिश अल्पीभावे। लिश गतौ च। रिश हिंसायामुक्तः। षिधु संराद्धौ। रुधिर् आवरणे। रुधादिः। अनोरुध कामे। इति दिवादिश्च। राध् साध् संसिद्धौ। युध संप्रहारे। शुध शौचे। बुध अवगमने। सिध्यति-बुध्यत्योः श्यना निर्देशात् भौवादिकयोः सेधतिबोधत्योरिड् भवत्येव। सेधिता बोधितेति। क्रुध क्षुध कोपे। क्षुध बुभुक्षायाम्। व्यध ताडने। बन्ध बन्धने। शुष शोषणे। पुष पुष्टौ। श्यना निर्देशात् पोषतिपुष्यत्योः पोषितेति। श्लिष आलिङ्गने। शुष्यति-पुष्यतिसाहचर्यादस्यापि दैवादिकस्य ग्रहणम्। श्लिषु दाहे इत्यस्य तु श्लेषितेति स्थितं

---

१. भुजिसृजिमृजिरिति क० पु०।

कैयटादिषु। दुप वैकृत्ये। द्विप अप्रीतौ। विप्लृ व्याप्तौ। विष अप्रयोगे च। पिपु संचूर्णने। त्विप दीप्तौ। तृप तुष्टौ। शिष्लृ विशेषणे। कृप विलेखने। तौदादिकसौवादिकौ। तप संतापे। तप ऐश्वर्ये क्यादिः। तप दाहे इत्यपि णिजभावपक्षे। तिपु प्रक्षरणे। आप्लृ व्याप्तौ। आप्लृ लम्भने णिजभावपक्षे। डुवप् बीजसन्ताने। ञिष्वप् शये। लिप उपदेहे। लुप्लृ छेदने। तृप प्रीणने। दृप हर्षविमोचनयोः। तृप्यति दृप्यत्योः "रधादिभ्यश्च" ७।२।४५ इति विकल्पितेट्त्वेऽपि अनिट्सु पाठः "अनुदात्तस्य च" (६।१।५६) इत्यमागमार्थं। सृप्लृ गतौ। शप उपालम्भे। छुप स्पर्शे। क्षिप प्रेरणे। स्कन्दिर् गतिशोषणयोः। हद पुरीषोत्सर्गे। छिदिर् द्वैधीकरणे। भिदिर् विदारणे। क्षुदिर् संपेषणे। अद भक्षणे। शद्लृ शातने। पद्लृ विशरणगत्यवसादनेषु। खिद दैन्ये। खिद्यति। खिन्दति। खिन्तिश्च। नुद प्रेरणे। तुद व्यथने। ञिष्विदा गात्रप्रक्षरणे। श्यना निर्देशात्। ञिष्विदा स्नेहनमोचनयोः इति भौवादिकस्येडेव। स्वेदिता। एवं पद्यतीति श्यना निर्देशात् पद गतौ इत्ययं गृह्यते। यस्तु पद वद स्थैर्ये इति भौवादिकस्तस्य तु पदिते तीडेव। विद विचारणे। विद सत्तायाम्। श्नमा श्यना च निर्देशात् विद ज्ञाने इत्यादादिकस्य चाग्रहणम्। वेदिता विद्यानाम्, वेदिता धनस्येति। चान्द्रास्तु लाभार्थस्यापि विदेरनिट्त्वमाहुः। तथा च तत्सूत्रम्। विदेरलुक् इति। डुपचप् पाके। पच व्यक्तीकरणे। द्वावपि। वच परिभाषणे। ब्रुवो वचिरपि। वचिभ्वादावपीत्येके। विजिर पृथग्भावे। रिचिर् विरेचने। प्रच्छ ज्ञीप्सायाम्। रञ्ज रागे। णिजिर् शौचपोषणयोः। इदितो नुम्करणात् णिजि शुद्धावित्यदादेरग्रहणम्। षिच क्षरणे। मुच्लृ मोचने। भञ्जो आमर्दने। भज सेवायाम्। भ्रस्ज पाके। यज देवपूजादौ। त्यज हानौ। युजिर् योगे।षज सङ्गे। [illegible] टुमस्जो शुद्धौ। भुज पालनाभ्यवहारयोः। [illegible]। इदितो ग्रहणात् ओविजो भयचलनयोरित्यस्य उद्विजितेति भवति। उपसंहरति इमे हलन्तेष्वनिटः इति। ननु यद्यनिट्त्वं कथंचिदिड्रहित्य विवक्षितम्, ततो दिविप्रभृतीनामुदितामूदितां चानिट्कत्वात्संग्रहापत्तिः। अत्यन्तानिट्त्वविवक्षायां तु पचादिष्वत्याप्तिः तेषां क्रादिनियमादिटः संभवात्। अथानिड्ग्रहणमनुदात्तोपदेशोपलक्षणमित्युच्येत। ततो मृजिरप्युपदेश्यः स्यात्। यद् वक्ष्यति-क्वचिदस्यानुदात्तेषु पाठाद् "अनुदात्तस्य च" (६।१।५६) इत्यम् अप्राप्तः इति। तथा चानिट्कारिकासु पठ्यते—भुजिस्वजि[1] सृजि मृजि विद्ध्यनिट्स्वरानिति। सत्यम्। इडभावार्थं येऽनुदात्तोपदेशास्ते एवेह सगृहीता। मृजस्त्वमर्थमेवानुदात्तोपदेशो नानिट्त्वार्थम्। ऊदित्वेन विकल्पितेट्त्वात्। तेनास्यात्रापाठेऽपि न दोषः। एतदेव स्पष्टयितुमाह—इत्यनिट्धातुसंग्रहः इति। अनिट्त्वप्रयोजकानुदात्तामिदं परिगणनम्। न त्वमर्थमेवानुदात्तानामपीत्यर्थः। अन्यथा परत्वे तद्वक्तव्यं स्यात्। इमे हलन्तेष्वनिट् इतीयतैव सिद्धिः। नैतत् सुष्ठूच्यते। एवं हि तृप्यतिदृप्यत्योरप्यम् मात्रार्थः पाठो न कर्तव्यः स्यात्। वस्तुतस्तु मृजेरमर्थमप्यनुदात्तोपदेशत्वं नेष्यते। तदाह वामनः-अमागमोऽप्यस्य न दृश्यते। तदिहास्य पाठे प्रयोजनं चिन्त्यमिति। अत एवास्वरसादाचार्योऽपि तत्र वक्ष्यति केऽप्यमागम नेच्छन्तीति॥१४०॥



**१४१. सिचि वृद्धिः परस्मैपदेषु [ ७ । २ । १ ]**

सिचि परस्मैपदे परे इगन्तस्याङ्गस्य वृद्धिः स्यात् । अवैषीत् । आजीत् । विव्याय । "एरनेकाचः" ( ६ । ४ । ८२ ) इति यण् । "न पदान्त" ( १ । १ । ५८ ) दीर्घयलोपयोर्लोपाजादेश एव न स्थानिवत् । तेन "अचः परस्मिन्" ( १ । १ । ५७ ) इति यणः स्थानिवत्त्वात् वकारस्याच्-परत्वं तेन "उपधायां च" ( ८ । २ । ७८ ) इति न दीर्घः । विव्यतुः । विव्युः ।

सिचि वृद्धिरिति । सिचोत्यङ्गापेक्षया परसप्तमी । परस्मैपदेष्विति तु सिजपेक्षया । इगन्तस्येति । "इको गुणवृद्धी" ( १ । १ । ३ ) इति परिभाषया लभ्यते । ननु सर्वत्र सिच्यन्तरङ्गत्वात् पूर्वं गुणे कृते नेगन्त क्वापि संभवति । मैवम् । "ह्म्यन्तक्षण" ( ७ । २ । ५ ) इत्यत्र णिश्विग्रहणेन ज्ञाप्यते न सिच्यन्तरङ्गमस्ति इति । अन्यथा अौनयीत्, अश्वयीत् इत्यत्राप्यन्तरङ्गत्वात् गुणायादेशयो. कृतयोः यान्तानां नेत्येव निषेधसिद्धेस्तदनर्थकं स्यात् । अवैषीदिति । अजेः लुङ् च्लिस्तस्य सिच् अजेर्वीभावः । स चोपदेशावस्थायाम् एकाच्स्वरान्तत्वेनानुदात्त इत्यनिट् । ततो वृद्धिः । अडागमः षत्वम् । आजीदिति । व्यभावपक्षे अजेरनुदात्तत्वाभावात् सिच इट् ईट् । सिचो लोपः । आडागमः । सवर्णदीर्घः । विव्ययेति । वीभावे लिटो णलि वृद्धौ "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्वात् द्वित्वमायादेशः । विव्यतुरित्यत्र वी अतुसिति स्थिते परत्वादियङ् तस्य स्थानिवत्त्वात् वीशब्दस्य द्वित्वम् । तत्र कृतेऽनेकाच्त्वादियङ् बाधित्वा परत्वाद् यणित्यर्थः । कृतेऽपि वा इयङि तस्य "असिद्धवदत्राभात्" ६।४।२२) इत्यसिद्धत्वाद् यण् भविष्यति । ननु यणि कृते विव्य् अतुसिति स्थिते "उपधायां च" ( ८ । २ । ७८ ) इति दीर्घः स्यात् । न चाचः परस्मिन्" ( १ । १ । ५७ ) इति यणः स्थानिवत्त्वाद्वकारो न हल्पर इति वाच्यम् । दीर्घविधौ तन्निषेधात् अत आह—न पदान्तेति सूत्रेणेत्यादि । अयमर्थः स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् इति वार्तिकम् । स्वरे दीर्घे यलोपे च कर्तव्ये यद्यजादेशः स्थानिवद् भवति तर्हि लोपलक्षण [1]एव न वर्णलक्षणः । तेन चिकीर्षक इत्यत्राल्लोपस्य स्थानिवत्त्वनिषेधात् "लिति" ( ६ । १ । १९३ ) इति स्वरो भवति । पञ्चारत्न्य इत्यत्र तु यणः स्थानिवत्त्वात् इगन्ते द्विगौ इति पूर्वपदप्रकृतिस्वरो भवति । तथा प्रतिदीव्न इत्यत्र "अल्लोपोऽनः" ( ६ । ४ । १३४ ) इत्यल्लोपस्य स्थानिवत्त्वाभावात् "हलि च" ( ८ । २ । ७७ )

---

१. एव न वर्णलक्षणः इति नास्ति क० पु० ।

१४२. अचस्तास्वत् थल्यनिटो नित्यम् [७ । २ । ६१]

उपदेशे यो धातुस्तासौ नित्यमनिट् ततः परस्य थल इट् न स्यात् ।

१४३. ऋतो भारद्वाजस्य [ ७ । २ । ६३ ]

तासौ नित्यानिट् ऋदन्तस्यैव थलि नेट् भारद्वाजस्य मतेन । तेन पक्षे इटोऽनुज्ञा विवेथ । विनयिथ । क्षि क्षये । क्षयति । अक्षैषीत् । चिक्षाय । "अचि श्नुधातु" ( ६ । ४ । ७० ) इतीयङ् । चिक्षियतुः ।

---

इति दीर्घो भवति । किर्योः गिर्योरित्यत्र तु यणः स्थानिवत्त्वान्न भवति । कण्डूतिरित्यत्रातो लोपस्य स्थानिवत्त्वाभावाद् यलोपो भवति । वाय्योरित्यत्र तु यणः स्थानिवत्त्वात् न भवति । एवमिहापि यणो लोपरूपत्वाभावान्न स्थानिवत्त्वनिषेधः । तेन वकारोऽच्परः संपन्न इति दीर्घाभावः । आचार्यस्तु दीर्घयलोपयोरित्येव वदन् वार्तिकस्थस्वरग्रहणं नादृतवान् । पञ्चारत्न्य इत्यादेश्छान्दसत्वात् । तथा च "जसादिषु छन्दसि वा वचनम्" इति "जसि च" ( ७ । ३ । १०९ ) इति गुणश्छन्दसि विकल्पितत्वान्न भवति । तत्र छान्दसत्वादेव रूपवत्स्वरोऽपि सेत्स्यति इति । विव्युरित्यत्र 'असिद्धं बहिरङ्गमन्तरङ्गे" ( प० ) इति यणोऽसिद्धत्वमिति माधवः ॥ १४१ ॥

अचस्तास्वदिति । नित्यग्रहणमनिटो विशेषणम् । क्वचिन्नित्यमनिट् इत्यपेक्षायां तासेः सन्निधानात् तत्रैवेति विज्ञायते इत्याह—तासौ नित्यमनिडिति । सप्तम्यन्ताद्वतिः तासाविव तास्वत् । यथा तासौ न भवति एवं थल्यपि इत्यर्थः । नित्यमनिटः किम् ? दुधविथ । नायं तासौ नित्यमनिट् धोता धवितेति "स्वरतिसूति" ( ७ । २ । ४४ ) विकल्पितेट्त्वात् । अत एव क्रमेरपि चक्रमिथेति भाष्यम् । नहिक्रमिस्तासौ नित्यानिट् "स्नुक्रमोरनात्मनेपदनिमित्ते" ( ७ । २ । ३६ ) इति वचनादात्मनेपदे इड्निषेधेन परस्मैपदेपु सेट्कत्वात् । वतिनिर्देशः किम् ? तासावित्युच्यमाने प्रकृतस्य तासावित्यस्यानुवृत्तावप्येतावदेव लभ्येत तासौ नित्यमनिट् थलोण् न भवति । ततश्च यस्तासावसत् तस्यावसत्वादेव नित्यनिट् तस्यापि निषेधः स्यात् । जघसियेति । अदेरादेशो घसिस्तासौ नास्तीति । वत्करणे तु सति यस्य तासौ प्रयुज्यमानस्य तासौ नेट् तथाभूतस्य थल्यपीण् निषिध्यते न तु तत्राप्रयुक्तस्य । वतेः सादृश्यार्थकत्वात् । तया च तत्र वक्ष्यति-घसस्तासावभावात् थलि नित्यमिट् । जघसियेति । न चास्यापि स्थानिवत्त्वात् तासौ सत्त्वमतिदेष्टुं शक्यम् । तस्याशास्त्रीयत्वात् । अचः किम् ? बिभेदिथ । तास्वत् किम् ? बभूविथ । भवति ह्ययं "श्र्युकः किति" ( ७ । २ । ११ ) इति नित्यमनिट् । थलीति किम् ? विव्यिव विव्यिम ॥ १४२ ॥

ऋतो भारद्वाजस्येति । ऋत इति तपरत्वाद् दीर्घान्तेषु तावन्नायं निषेधः ह्रस्वान्तेषु तु "अचस्तास्वत्' ( ७ । २ । ६१ ) इत्येव सिद्धः । वृङ्वृञो यद्यपि सेटौ तथापि

वृङ्स्थल न संभवति। आत्मनेपदित्वात्। वृञस्तु छन्दसि ववर्थेति निपातनाद् भाषायामिटा भाव्यम्। तस्मात्तयोरपि प्रतिषेधार्थमिदं न युज्यते। न च वृञादिषु गुणे रपरत्वे च कृतेऽनजन्तत्वाद् "अचस्तास्वद्" ( ७।२।६१ ) इत्यस्याप्रवृत्तिः। तत्रोपदेशग्रहणस्यापकर्षणादुपदेशेऽजन्तस्यापेक्षितत्वात्। तस्मात् सिद्धे सत्यारम्भो नियमार्थ इत्याह—ऋदन्तस्यैवेति। तासौ नित्यमनिटां मध्ये ऋत एव भारद्वाजस्येण् न भवति नान्यस्येति। सामान्याकारेण नियम आश्रीयते। तेन "अचस्तास्वत्" (७।२।६१) "उपदेशेऽत्वतः" इत्युभयोरप्ययं नियमः सिध्यति। तत्रायं सग्रहः—

*अजन्तोऽकारवान् वा यस्तास्यनिट् थलि वेडयम्।*
*ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्॥*

तेनेति। विवेथ इति स्थिते वलादित्वात् प्राप्तः इट् एकाच इति निषिद्धस्ततः क्रादिनियमात् पुनः प्राप्तः "अचस्तास्वत्" ( ७।२।६१ ) इति प्रतिषिद्धः पुनः भारद्वाजनियमात् पक्षे प्रतिप्रसूयते इत्यर्थः। *विवयिथ इति। गुणेऽयादेशः। विवयेति।* "णलुत्तमो वा" ७। ।९१) इति वा वृद्धिः। विव्यिव। विव्यिम इति। क्रादिनियमान्नित्यमिट्। वलादित्वात् पक्षे आजिथेति। भारद्वाजनियमात् थलि पक्षे वलाद्यार्धधातुकं संभविष्यतीति पक्षे व्यादेशाभावः। आजिव। आजिम। अत्र वमयोः क्रादिनियमेन नित्यमिटा भाव्यमिति वलादित्वस्यासम्भवान्नित्यं वीभावेन भवितव्यमिति तदयुक्तमित्याहुः। तदुक्त काशिकायाम्-केचिद् वमयोर्वलादित्वस्य क्रादिनियमेनेटा पर्यवसन्नत्वान्न कदाचिदपि वलाद्यार्धधातुकाभिव्यक्तिरिति नायमादेशविकल्पः। थलि तु भवत्येव यतस्तत्रेड् विकल्पितः। वेता। अजिता। आशिष्यवलादित्वान्नित्य वी। वीयात्। वेष्यति। अजिष्यति। अवेष्यत्। आजिष्यत्। क्षि क्षये। अकर्मकोऽयम्। अन्तर्भावितण्यर्थस्तु सकर्मकोऽपि सभवति। तथा च भाष्ये। न क्षीयते इत्यक्षरमिति निरुक्तम्। क्षि निवासगत्योरिति तुदादौ[१]। क्षि हिंसायाम् इति स्वादौ। वैदिकोऽयं भाषायामपि प्रयुज्यते। 'पञ्चबाणः क्षिणोतीति"। क्षयति। क्षयेत्। अस्तं थोदिति। लुङि च्लेः सिच् "एकाचः" ( ७।२।१० ) इतीड्निषेधः। ईट्। सिचि वृद्धिः। चिक्षायेति। लिटो णल्, द्वित्वम्, हलादिः शेषः। "कुहोश्चुः" ( ७।४।६२ ) वृद्ध्यायादेशौ। चिक्षियतुः। संयोगपूर्वत्वात् "एरनेकाचः" ( ६।४।८२ ) इति यणभावे इयङ्। "ऋतो भारद्वाजस्य" ( ७।२।६३ ) इति नियमाद्वेट्। चिक्षयिथ। चिक्षेथ। क्षेता॥ १४३॥

---

१. क्षिष् हिंसायाम् इति क्र्यादौ इति सर्वेषु पुस्तकेषु पाठः किन्तु क्र्यादौ तथापाठाभावादसंगतः प्रतिभाति।

१४४. अकृत्सार्वधातुकयोः [ ७ । ४ । २५ ]

अकृद् यकारे असार्वधातुके च यकारेऽचो दीर्घः स्यात् । क्षीयात् । कटे वर्षावरणयोः ।

१४५. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् [७।२।५]

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेश्च एदितश्च वृद्धिर्न स्यादिडादौ सिचि । गुपू रक्षणे ।

---

अकृदिति । "अयङ् यि क्ङिति" ( ७ । ४ । २२ ) इत्यतः[1] यि क्ङितीत्यनुवर्तते इत्याह—अकृद् यकार इति । अत्र यकारमात्रस्य प्रत्ययस्यासम्भवात् "यस्मिन् विधिस्तदादावल्ग्रहणे" (प०) इति वचनाच्च यकारादावकृत् सार्वधातुके चेति व्याख्येयम् । अकृति किम् ? प्रस्तुत्य । असार्वधातुक इति किम् ? चिनुयात् । क्ङितीति किम् ? उरुयात् । "सुपां सुलुक्" ( ७ । १ । ३९ ) इति टाया यादेशः । क्वचिद्वृत्तौ क्ङितीति न पठ्यते । तत्रायमाशयः—उरुयेत्यादेः छान्दसत्वान्नातिप्रसङ्ग इति । चेष्यति । अचेष्यत् । कटे । कटतीत्यादि ॥ १४४ ॥

ह्म्यन्तक्षणेति । ह् च म् च य् च ह्म्यम्, तदन्ते येषां ते ह्म्यन्ताः हकारान्ताः मकारान्ताः यकारान्ताश्चेत्यर्थ इत्याह—हमयान्तस्येति । हान्ताश्च ग्रहादयः । मान्ताः शमुयमुचमुप्रभृतयः । यान्ताः अय्दय्प्रभृतयः । क्षणादेरिति । क्षणु हिंसायाम् । श्वस प्राणधारणे । जागृ निद्राक्षये । णयन्ताः ऊनयत्यादयः टुओश्वि गतिवृद्धयोः । एदित् एकार इद् येषाम् । अकटीदिति । "अतो हलादेर्लघोः" ( ७ । २ । ७ ) इति विकल्पिता वृद्धिर्निषिध्यते । यस्तु इट किट कटी गतौ इतीदित् पठ्यते तस्यैदित्त्वाभावाद् वृद्धिविकल्पो भवत्येव । अकटीत् । अकाटीत् इति । ईदित्त्वे प्रयोजनं चास्य निष्ठायां "श्वीदितो निष्ठायाम्" ( ७ । २ । १४ ) इतीण्निषेधः । कट्टः कट्टवानिति यथा स्यादिति क्षीरस्वामी । एवं चानेनैव सिद्धे एदितः पृथक्पाठोऽर्थभेदप्रदर्शनार्थः । निष्ठायां सेट्त्वार्थो वेत्याहुः । अन्ये त्विदितमपरं कटिं पठन्ति । तस्येदित्त्वान्नुमि कण्टति अकण्टीत् । चकण्ट । कण्टिता । कण्ट्यादित्याद्युदाहार्यम् । अपरे तु कटी इति पठित्वा ई इति धात्वन्तरस्य प्रश्लेषं वर्णयन्ति । तेन "उदयति विततोर्ध्वरश्मिरज्जौ" इत्यादिप्रयोगः सिद्ध्यति । गुपू । ऊदित् ॥ १४५ ॥

---

१. इत्यतः यि क्ङिति इति नास्ति क० पु० ।

## १४६. गुपूधूपविच्छिपणिपनिभ्य आयः [ ३।१।१८ ]

एभ्य आयप्रत्ययः स्यात् स्वार्थे । उपधागुणः ।

## १४७. सनाद्यन्ता धातवः [ ३ । १ । ३२ ]

सनादयः क्रमेणिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । शप्, तिबादि । गोपायति ।

---

गुपूधूप । गुपू रक्षणे । धूप संतापे । विच्छ गतौ । तुदादिः । पण व्यवहारे स्तुतौ च । पन च । स्वार्थे इति । "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" इति न्यायात् । उपधागुण इति । आयस्य धंधातुकत्वात् "पुगन्त" ( ७ । ३ । ८६ ) इति गुपेर्गुण इत्यर्थः ॥ १४६ ॥

सनाद्यन्ताः । सन् आदिर्येषां ते सनादयः तेऽन्ताः अवयवा येषां ते सनाद्यन्ताः । तद्गुणसंविज्ञानो बहुव्रीहिस्तेन समुदायानामेषां संज्ञा सिध्यति । अन्तशब्दोऽवयववाची । वृत्तौ तु प्रत्यया अन्ते येषामिति प्रत्यासन्नार्थकथनम्, न त्वयं विग्रहः समानाधिकरणानां बहुव्रीहिरिति कथनात् । यद्वा "सप्तमीविशेषणे" ( २ । २ । ३५ ) इति ज्ञापकात् वैयधिकरण्येऽपि सप्तम्यन्तस्य समासः गड्वादित्वादन्तशब्दस्य परनिपातः । अन्तशब्दोऽत्र समाप्तिवचनः । आदिग्रहणग्राह्यानाह—क्रमेणिङन्ताः इति ।

सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विब् णिज्यङौ तथा ।<br>
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ इति ।

धातुसंज्ञा इति । धातुशब्दोऽत्र स्वरूपपरो न भूवादिपरः । अनेकसंज्ञाविधाने प्रयोजनाभावात् । प्रत्ययग्रहणपरिभाषयाऽपि तदन्तविधौ सिद्धेऽन्तग्रहणं संज्ञाविधावपि तदन्तलाभार्थम् । यदि भूवादय इत्यस्यानन्तरं सनाद्यन्ताश्चेत्युच्येत तदा सनादीनामियत्तापरिच्छेदो न स्यात् अतः पुनर्धातुग्रहणम् । यदि तु सनाद्यन्ता धातव इत्यस्यानन्तरं भूवादयश्चेत्युच्येत ततः शक्यं धातुग्रहणमकर्तुम् । धातुसंज्ञायाः प्रयोजनमाह—शप्तिबादीति । धातुसंज्ञायां सत्यां तु "धातोः" इति विहिताः शबादयो विकरणाः सिध्यन्ति तिबादयश्चेत्यर्थः । न ह्येप गोपायतीत्यस्य प्रक्रियाक्रमः तिबाद्युत्पत्तेः पूर्वं शपोऽनुपपत्तेः । यद्वा तिबादयश्च शप् च तयोः समाहारद्वन्द्वः । "अल्पाच्तरम्" ( २ । २ । ३४ ) इति शपः पूर्वनिपातः । गोपायतीति । शपि कृते "अतो गुणे" ( ६ । १ । ६० ) इति पररूपम् । गोपायेदित्यादि ॥ १४७ ॥

१४८. आयादय आर्धधातुके वा [ ३ । १ । ३१ ]

आर्धधातुकविवक्षायामायादयो वा स्युः ।

१४९. अतो लोपः [ ६ । ४ । ४८ ]

अकारस्य लोपः स्यादार्धधातुके । अगोपायीत् । ऊदित्त्वादिड् वा । अगोपीत् । अगौप्सीत् । अगौप्ताम् ।

---

आयादय इति । आर्धधातुके इति । न परसप्तमी, तथा सति यदि गुपादिभ्यः आर्धधातुके परत आयादयो भवन्तीत्यर्थः स्यात् । ततोऽन्तरङ्गत्वादायप्रत्यये कृते तदन्तादार्धधातुके उत्पन्ने सति प्रागुत्पन्नस्यायस्य पुनरुत्पत्तिं विकल्पयितुं न शक्यते इति तुगादिवन्निवृत्तिरेवोक्ता स्यात् । ततश्चायप्रत्ययान्तात् स्त्रीभावविवक्षायाम् 'अप्रत्ययात्' ( ३ । ३ । १०२ ) इत्यकारप्रत्यये कृते तन्निवृत्य भावपक्षे गोपायति कामसिद्धं सिद्ध्यति । निवृत्तिपक्षे तु गोपा इत्यनिष्टं प्राप्नोति । गुप्तिरिति चेष्टं न सिद्ध्यति । लिटि च जुगोपेत्यत्र निवृत्तिपक्षे प्रत्ययलक्षणेन "कास्प्रत्ययात्" ( ३ । १ । ३५ ) इत्याम् स्यात् । ततश्च गोपाञ्चकारेत्येव प्रसज्यते । अतो विषयसप्तमीति व्याचष्टे— आर्धधातुकविवक्षायामिति । आर्धधातुकसामान्येऽवस्थितेऽपि तद्विशेषमिहोत्पादयिष्यामीति बुद्धौ सत्यामित्यर्थः । आयादय इति । "आयादय आर्धधातुके वा" ( ३ । १ । ३१ ) "ऋतेरीयङ्" ( ३ । १ । २९ ) 'कमेर्णिङ्" ( ३ । १ । ३० ) इति त्रय इत्यर्थः । वा स्युरिति । एकवाक्यतया तदुत्पत्तिरार्धधातुके विकल्प्यते इत्यर्थः । तेन यथायथं पश्चादार्धधातुकप्रत्ययाः भवन्ति । तेन गुप्तिः । गोपाया । जुगोपेत्यादि सिध्यतीति भावः । अत एवास्मादायाभावपक्षे यङ् सिध्यति । जोगुप्यते इति । यङ्लुक् न भवति । लुका आर्धधातुकस्य विषयत्वापहारान्नास्यार्धधातुकाभिव्यक्तिरिति । आयपक्षे त्वनेकाच्त्वाद् यङेव नास्ति ॥ १४८ ॥

अतो लोपः । अत्रार्धधातुक इत्यधिक्रियते सा च विषयसप्तमी परसप्तमी चेत्युभयं स्थितमाकरे । अगोपायीदिति । ऊदित्त्वस्य केवले चरितार्थत्वादायान्तान्नेड् विकल्पः एकाच इत्यधिकाराच्च । अगोपीदिति । अयाभावपक्षे ऊदित्त्वादिटि अपृक्तत्वादीटि च "इट ईटि" ( ८ । २ । २८ , इति सिचो लोपः । अगौप्सीदिति । इडभावे "वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः । ताम्रादिषु "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपादगौप्तामिति ॥ १४९ ॥

## १५०. कास्प्रत्ययादाममन्त्रे लिटि [ ३ । १ । ३५ ]

कास्धातोः प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि न तु मन्त्रे । कृञोऽनुप्रयोगः । गोपायामास । जुगोप । जुगोपिथ । गोपायिता । गोप्ता । गोपाय्यात् । गुप्यात् । एवं धूप संतापे । धूपायतीत्यादि । तप संतापे । गोपिता । एकाजनुदात्तत्वान्नेट् । अताप्सीत् । अताप्तम् । तेपतुः ।

## १५१. उपदेशेऽत्वतः [ ७ । २ । ६२ ]

धातुपाठेनाकारवतस्तासौ नित्यानिटः परस्य थलो नेट् स्यात् । "ऋतो भारद्वाजस्य" (७ । २ । ६३) इति पक्षे इट् । तेपिथ । तताथ । चमु अदने ।

---

कास्प्रत्यायादिति । कासृ शब्दकुत्सायाम् । प्रत्ययान्ता धातवः सनाद्यन्ताः । आम् स्यादिति । मान्तः प्रत्यय इति पक्षेणैवमुक्तम् । अदन्तत्वपक्षे त्वामः स्यादित्यवक्ष्यद् । ननु मन्त्रे इति मन्त्रशब्दः ऋग्यजुःसामसु मुख्यः आथर्वणापि ऋग्यजुष एवान्तर्भवन्ति । अन्यत्र गौणः । छन्दसीत्येव तु नोक्तम्, ब्राह्मणेऽपि आमो दर्शनात् । अथाह- शुनः शेपः ईडाञ्चक्र इति । गोपायामासेत्यत्र यद्यप्यवश्यं वक्तव्येन "अनेकाच आम्वक्तव्यः" ( वा० ) इत्यनेनार्थः सिध्यति । तथापि तस्य चुलुम्पादिष्वप्राप्तप्रापणार्थत्वात् चकास्त्यादिष्वेकाज्भ्यः प्रत्ययान्तेषु नियमार्थत्वाद्वा सूत्रमेतदुपन्यस्तम् । जुगोपिथेति । आमोऽभावे गुप्रेर्द्वित्वादि । ऊदित्वेऽपि क्रादिनियमान्नित्यमिट् । यावान् कश्चिदिडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा स सर्वः क्रादिनियमेनापोद्यते इति मतेनेत्तदुदाहृतम् । ये तु क्रादिनियमः प्रतिषेधमात्र विषय इति वदन्ति तेषा विकल्पो भवत्येव । जुगोपिथ । जुगोप्थेति । तथा च वक्ष्यति । ररन्थिव रेध्व । अत्र परत्वादिड् वा । केचित् क्रादिनियमान्नित्यमिटमाहुः । एवं वमयोरपि । एवमिति । आयादिकार्यमस्य पूर्ववदित्यर्थः । गुरूपधत्वादुपधागुणवर्जम् । धूपायतीत्यादि । इत्यादिशब्दात् धूपायेत् । धूपायतु । अधूपायत् । अधूपायीत् । आयाभावे अधूपीत् । अनूदित्वान्नित्यमिट् । धूपायामास । दुधूप । धूपायिता । धूपिता । धूपाय्यात् । धूप्यात् इत्यादि । तप तपतीत्यादि । एकाजनुदात्तत्वादिति । तपति ध्या पिबति इति तेषु पाठादित्यर्थः । अताप्सीमिति । "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । तेपतुरिति । "अत एकहल्मध्य" ( ६ । ४ । १२० ) इत्येत्वाभ्यासलोपौ ॥ १५० ॥

उपदेशे । अनजन्तार्थ[1] आरम्भः । उपदेशे किम् ? कर्ष्टा चकर्षिथ । अत्वतः किम् ? भेत्ता । बिभेदिथ । तपर करण किम् ? राद्धा । रराधिथ । तासौ किम् ?

---

१. मनआतार्थं इति क० पु० ।

## १५२. ष्ठिवुक्लमुचमां शिति [ ७ । ३ । ७५ ]

एषामचो दीर्घः स्यात् शिति । अत्र दैवादिकस्य क्लमो ग्रहणम् । आचामति । आङ् किम् ? चमति । विचमति । मान्तत्वान्न वृद्धिः अचमीत् । क्रमु पादविक्षेपे ।

---

जिघृक्षति । जग्रहिथ । नित्यानिट् किम् ? अङ्क्ता । अञ्जिता । आनञ्जिथ । तेपिथेति । "थलि च सेटि" ( ६ । ४ । १२१ ) इत्येत्वाभ्यासलोपौ । थलो निषेधात् । तेपिव । तेपिम । तप्ता[1] । तप्यादित्यादि । चमु अदने । इतो द्वौ सेट्कौ ॥ १५१ ॥

ष्ठिवुक्लमु । ष्ठिवु निरसने । क्लमुग्लानौ । दिवादिः । चमु अदने । आङ्पूर्वः । अच इति । एतद् "अचश्च" ( १ । २ । २८ ) इति परिभाषया लभ्यते । न चासौ भौवादिषु प्रसिद्ध इत्यत आह—अत्र दैवादिकस्येति । अन्यस्यासम्भवात् साहचर्यं बाध्यते इति भावः । यत्तु दिवादौ वक्ष्यति—भौवादिकस्य क्लमतीति । तत्र भौवादिकग्रहणं शब्वत उपलक्षणम् । तत्र दीर्घाभावस्त्वन्यमताभिप्रायेणोक्त इति ज्ञेयम् । क्रमतीति प्राप्ते इत्यध्याहृत्य योज्यम् । अथवा तु गर्हायाम् । तेन क्रमतीति कौमारा उदाहरन्ति तद्गर्हितमित्यर्थः । अथवैवं योज्यम् । न तु क्लमिर्दैवादिकः तत्र "शमामष्टानां" ( ७ । ३ । ७४ ) इत्येव सिद्धं किं क्लमिग्रहणेनेत्याशङ्क्याह—अत्रेत्यादि श्यन्विकरणस्येति । शब्विकरणोपलक्षणम् । अत्र ग्रहणम् इति च छेदः । तेनात्र शमादित्वादेव सिद्धेः क्लमिग्रहणं न श्यनर्थम्, किं तु शबर्थमित्यर्थः । तदुक्तं काशिकायाम्—क्लमिग्रहणं शबर्थम् इति । न चैवं श्यनोऽप्यनेनैव सिद्धत्वात् क्लमेः शमादिपाठोऽनर्थक इति शङ्क्यम् । शमादिपाठो घिनुणाद्यर्थः इति माधवेनोक्तत्वात् । यद्वा सहवृत्त्या माधवोक्तं दूषयितुमाह—अत्रेत्यादि । अत्र दीर्घविधौ दैवादिकस्य शमादिषु पठ्यमानस्य क्लमेर्ग्रहणमनर्थकमाह-ष्ठिवुक्लम्वित्येव शन्यपि सिद्धेरित्यर्थः । न चास्यासति पाठे "शमामष्टानां" ( ७ । ३ । ७४ ) इति संख्याविरोधः स्यादिति वाच्यम् । क्लमिं मदेरनन्तरमुत्कृष्य सप्तैव शमादीनङ्गीकृत्य शमां सप्तानामित्येव न्यासितुमुचितत्वात् । घिनुण्विधौ चाष्टाभ्य इत्यधिकसंख्योपादानेनानन्तरात् क्लमेरपि घिनुणोऽपि सुसाधत्वादित्याशयात् । इदमेवाभिप्रेयाय हरदत्तोऽपि । यदाह—शमेः श्यनिपूर्वेण सिद्धत्वाच्छमादिषु पाठश्चिन्त्यप्रयोजनः । आचमामित्युपात्तः आङ् किम् ? "संयसश्च" ( ३ । १ । ७२ ) इतिवद् विवक्षित उतोपेयिवानितिवदविवक्षित इति प्रश्नः । इतरः प्रत्युदाहरणव्याजेन विवक्षित इत्युत्तरयति । चमति विचमतीति । केवलस्यान्योपसर्गपूर्वस्य च न भवतीति

---

१. तप्तेति नास्ति क० पु० ।

१५३. वा भ्रासभ्लासभ्रमुक्रमुक्लमुत्रसित्रुटिलषः। [ ३ । १ । ७० ]

एभ्यः श्यन् वा स्यात् कर्तरि सार्वधातुके । पक्षे शप् । क्राम्यति ।

१५४. क्रमः परस्मैपदेषु [ ७ । ३ । ७६ ]

क्रमो दीर्घः स्यात् शपि परस्मैपदेषु । क्रामति ।

---

भावः । मान्तत्वादिति । "अतो हलादेर्लघोः" ( ७ । २ । ७ ) इति विकल्पिताऽपि हलन्त-लक्षणा वृद्धिः "ह्म्यन्त" ( ७ । २ । ५ ) इति निषिध्यते इत्यर्थः । चचाम । चेमतुः । चेमुः । चमिता । चम्यादिति । क्रमु । उदित् । [1]उकार "उदितो वा" ( ७ । ३ । ५६ ) इतीड् [2]विकल्पार्थः । क्रान्त्वा । क्रमित्वेति ॥ १५२ ॥

वा भ्रासेति । भ्रासृ भ्लासृ दीप्तौ । भ्रमु चलने । भ्वादिः ज्वलादिः फणादिः । भ्रमु अनवस्थाने दिवादौ पुषादिः । शमादिः । उभयोरपि ग्रहणम् । तेन भ्वादेर्वा श्यनि भ्रमति । भ्रम्यति । शमादेस्तु दीर्घे भ्राम्यति इति त्रैरूप्यम् । क्रमु पादविक्षेपे । क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ । श्यन् वा स्यादिति । उभयत्र विभाषेयम् । अनवस्थानार्थो भ्रमिः क्लमित्रसी च दिवादयस्तेषा "दिवादिभ्यः श्यन्" ( ३ । १ । ६९ ) इति नित्ये प्राप्ते त्रुटेस्तौदादित्वात् इतरेषां च भौवादिकत्वादप्राप्ते विधानात् । क्रम्यतीति । अशमादित्वात् "शमामष्टानां" ( ७ । ३ । ७४ ) इति न दीर्घः । "क्रमः परस्मैपदेषु" ( ७ । ३ । ७६ ) इत्यपि न भवति । शपीति व्याख्यास्य-मानत्वात् । एतच्च परमतेनोक्तम् । स्वमते तु शिन्मात्रेऽपि दीर्घविधानात् क्राम्यतीत्येव भवति ॥ १५३ ॥

क्रमः परस्मैपदेषु । शपि परस्मैपदेष्विति । अत्र शपीति धात्वपेक्षया पर-सप्तमी । परस्मैपदेष्विति तु शबपेक्षया । अत्र यद्यपि "ष्ठिवुक्लमुचमां शिति" इत्यनुवर्तते इत्याकरे स्थितम् । तथाप्यत्र परमतेन शपीति व्याख्यातम् । तथा च कौमारं सूत्रम्—ष्ठिवुक्लम्वाचमामनि । क्रमः परस्मैपदेषु इति । अनिति शबुच्यते । तन्मतेनैव क्रम्यतीति श्यनि दीर्घाभाव उदाहृतः । स्वमते पुनः शब्ग्रहणं शितीत्यस्योप-लक्षणमिति व्याख्येयम् इत्याहुः । वस्तुतस्तु क्रम्यतीति पूर्वमुदाहृत्य क्राम्यतीति शबर्थ दीर्घमवतारयतां शपीति व्याचक्षाणानामाचार्याणां यथाश्रुत एव तात्पर्य प्रतीमः । युक्तं चैतत् । तथा हि "इषुगमियमां छः" ( ७ । ३ । ७७ ) इत्यत्रानुदित्पाठपक्ते[3] इष्यते-

---

१. उकार इति नास्ति क० पु० ।

२. इतीट कार्यमिड्विकल्पार्थ इति क० पु० ।

३. त्यत्रानुदित्याद्वे ति क० पु० ।

## १५५. स्नुक्रमोरनात्मनेपदनिमित्ते [ ७ । २ । ३६ ]

**यत्रात्मनेपदनिमित्तं नास्ति तत्रैव स्नुक्रमोरिट् स्यात् । अक्रमीत् । यम उपरमे ।**

---

रिच्छतेश्च व्यावृत्त्यर्थं "क्सस्याचि" ( ७ । ३ । ७२ ) इत्यतोऽचीत्यनुवर्त्य शित्यचीति काशिकायां व्याख्यातम् । एवं च संदशपठिते "क्रमः परस्मैपदेषु" ( ७ । ३ । ७६ ) इत्यत्राप्यचि शितीति संवन्धाच्छप्येव भवितुं युक्तमिति । अन्ये त्वाहुः—ष्ठिवुक्लम्वित सिद्धे क्लमः शमादौ पाठः श्यन्येवाष्टाना दीर्घ इति नियमार्थः । तेन क्लमेः श्यनि न भवतीति । क्लमेः शमादिषु पाठश्चिन्त्यप्रयोजन इति वदता हरदत्तेनाप्येपैव चिन्ता सूचिता इति शपीत्युक्तम् । परस्मैपदेष्विति किम् ? आक्रमते । कथं तर्हि क्रामेति । अत्र "अतो हेः" ( ६ । ४ । १०५ ) इति हेर्लुकि कृते दीर्घो न स्यात् । प्रत्ययलक्षणमपि नास्ति । "न लुमता" ( १ । १ । ६३ ) इति निषेधात् । नैष दोषः । प्रत्यासत्तेर्हि तत्रायमर्थो व्यवस्थितः लुमता लुप्ते प्रत्यये यस्याङ्गसंज्ञा[1] तन्निवन्धनं कार्यं न भवतीति । इह तु लुप्ते हौ विकरणान्तमङ्गं न तस्य कार्यं दीर्घः । यस्य तु कार्यं क्रमे न स ह्यावङ्गं किं तु शपि न चासौ लुमता लुप्त इति स्यादेव प्रत्ययलक्षणेन परस्मैपदपरत्वम्[2] ॥ १५४ ॥

स्नुक्रमोरिति । स्नु प्रस्रवणे । क्रमु पादविक्षेपे । अत्र स्नुक्रमोर्वलादेरार्धधातुकस्येड् भवति । आत्मनेपदनिमित्तस्याभावे इत्यक्षरार्थः । तत्रानयोरुदात्तत्वादेवेटः सिद्धेरात्मनेपदनिमित्तम्, इड्निवृत्त्यर्थम् । नियमार्थमेतदिति न[3] च प्रस्नुतः प्रस्नुपति, क्रान्तः इत्यादौ "श्र्युकः किति" ( ७ । २ । ११ ) "सनि ग्रहगुहोश्च" ( ७ । २ । १२) 'यस्य विभाषा" ( ७ । २ । १५ ) इति निषेधविषयेऽपि इड्व्यावृत्त्यर्थमेतत्स्यादिति वाच्यम् पुरस्तात्प्रतिषेधकाण्डकरणेन निषेध एव बलवानिति व्यवस्थितत्वात् इति व्याचष्टे —यत्रेत्यादि । तत्रैवेत्येवकारेण यत्र प्रयोगे आत्मनेपदस्य निमित्तं भावकर्मकर्मकर्तृकर्मव्यतिहाराः क्रमेर्वृत्त्यादयश्चार्थाः उपसर्गविशेषाश्च सन्ति तत्र नेडित्यर्थः । ( [4]न चैवं प्रस्नविस्रोयते इत्यत्रातिप्रसङ्गः । न हीयं सति सप्तमी किं तु प्रथमाद्वितीयान्तः स्नुक्रमोर्विशेषणम् । यत्र स्नुक्रमी आत्मनेपदस्य निमित्ते तत्र नेति । इह तु क्यङो ङकारस्तस्य निमित्तम्, न स्नुः । अत एव निमित्तग्रहणमकृत्वा सति सप्तम्येव नाश्रिता, दुर्लभा च सा "तस्मिन्निति" ( १ । १ । ६६ ) इति नियमात् । परसप्तम्यां तु प्रविक्रंस्यते इत्यत्र न

---

१. यस्याज्ञातस्येति क० पु० ।

२. परमैपदत्वमिति ख० पु० ।

३. न चेत्यारभ्य—व्यवस्थितत्वादित्यन्तो नास्ति क० पु० ।

४. नचैव मित्यारभ्य—धातो स्नुभाभ्यामितोत्यन्तोभागो नास्ति क० पु० ।

## १५६. इषुगमियमां छः [ ७ । ३ । ७७ ]

एषां छोऽन्तादेशः स्याच्छिति । यच्छति ।

स्यात् स्येन व्यवधानात् । धातोस्तूमाभ्यामिति ) निमित्तशब्दश्चायं कुर्वद्रूपवचनः । यत्र स्नुक्रमो आत्मनेपदं प्रवर्तयतस्तत्रैवेण्निषेधः इति न तु योग्यतापरः । तेन कर्मकर्तृविषयात् भावकर्मविषयाच्चास्मात् परस्य कृतः सत्यामप्यात्मनेपदयोग्यताया-मात्मनेपदाभावात् प्रक्रमिता, प्रक्रमितुम् प्रक्रमितव्यमितीड् भवत्येव अत एव "चिक्रमिषया कृत्रिमपत्रिपङ्क्तेः" इत्यपप्रयोगमाहुः । कर्त्रर्थे तु कृतिक्रमे कर्त्तर्यात्मनेपदविषया-दसत्यप्यात्मनेपदे प्रतिषेध इति वाचनिक इडभावे प्रक्रन्ता इति भवतीति कृदन्ते स्वयमेव वक्ष्यति । तेन सत्यात्मनेपदे प्रतिषेधोऽयम् । यथा प्रक्रंस्यते प्रचिक्रंस्यते । वृत्त्याद्यर्थेऽपि क्रस्यते चिक्रंसते इति । न चार्थविशेषा उपसर्गविशेषाश्चात्मनेपदस्य निमित्तं न क्रमतिरिति शङ्कनीयम् । यतस्तेषां विषयतयाविशेषणत्वात् तद्विशिष्टो धातुरेव निमित्तम् । सन्नन्तेऽपि 'पूर्ववत्सनः' ( १ । ३ । ६२ ) इति प्रकृतिगत मेवात्मनेपदस्य निमित्तमतिदिश्यते इति क्रमिरेवात्मनेपदनिमित्तं चिक्रंस्यते इति । भावकर्मणोरपि परत्वात् "पूर्ववत्सनः" ( १ । ३ । ६२ ) इत्येवात्मने पदमितीडभावो भवति । यदा तु सन्नन्ताण्णिच् तदात्मनेपदस्य न क्रमिर्निमित्तमितीड् भवत्येव चिक्रमिषयते इति । तथा कर्मकर्तर्यपि चिक्रमिषते स्वयमेवेति । अत्र हि कर्मवदति-देशनिमित्तमेवात्मनेपदं न क्रमिनिमित्तमिति माधवः । हरदत्तश्चाह—सिद्धं तु स्नोरा-त्मनेपदेन समानपदस्थस्येट् प्रतिषेधात् क्रमेश्चेति वार्तिककारवचनादिहापि आत्मने-पदेन समानपदस्थत्वादिटा न भाव्यमित्याकरादनुमंमयेम् । अक्रमीदिति । नन्वात्मनेपदे निषेधार्थमेतत्सूत्रं न विध्यर्थमित्युक्तम् तत्कोऽत्रास्योपयोगः? । सत्यम् । नियमशास्त्रमपि पूर्वं विधिमुखेनैव प्रवर्ततेऽवघातादिविधिवत् । उत्तरकाल तु कैमर्थ्याकांक्षाया[1] नियमः फलति । तदुच्यते-फलतो नियमभाव इति । परिसंख्या तु निषेधमुखेन प्रवर्तते इत्यस्मा-द्भिद्यते । यत्तु कैयटेनोक्तम्—इह शास्त्रे परिसंख्यैव नियमशब्देनोच्यते इति । तदपूर्वा-यत्वाभावसाम्यात् । तथा च प्रत्यक्षविधित्वानेनैव भवितव्यमिति । शैली चेयमाचार्या-णामन्यत्रापि दृष्टचरी । अक्रमिष्टाम् । चक्राम । क्रमिता । क्रम्यात् । क्रमिष्यति । यम । केचिदमुमुदितं पठन्ति उपरमो निवृत्तिः । इतो द्वावनिटौ ।। १५५ ।।

इषुगमि । इषु इच्छायाम् । गम्लृ गतौ । यमु उपरमे । अत्र धातौ चेषिरुदित् पठ्यते । तस्य प्रयोजनम् । इष गताविति दैवादिकस्येष्यते इष आभीक्ष्ण्ये इति । क्रैयादिकस्येषेश्च मा भूदिति । ये त्वनुदितं पठन्ति तेऽत्र "ष्ठिवुक्लमुचमां शिति" (७ । ३ । ७२ ) इत्यनुवर्तयन्ति । तेन शित्यचि छत्वं विधीयमानम् इष्यति, इष्णातीत्यत्र न भवति ।

१. आत्मनेपदस्य निमित्तमित्यारभ्य इत्येवात्मने इत्यन्तो भागः पाण्डुलिपौ व्यत्यासं गतः ।

## १५७. यमरमनमातां सक् च [ ७ । २ । ७३ ]

यमादेरादन्तान्च सिच इट् स्यात्परस्मैपदेषु एषां सगागमश्च । अयंसीत् । येमिथ । ययन्थ । णमु प्रह्वत्वे शब्दे च । प्रणमति । अनंसीत् । नेमिथ । ननन्थ । हय गतौ । यान्तत्वान्न वृद्धिः । अहयीत् । दल विशरणे ।

## १५८. अतो ल्रान्तस्य [ ७ । २ । २ ]

अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातः स्थाने वृद्धिः स्यात् सिचि परस्मैपदेषु । "नेटि" ( ७ । २ । ४ ) अदालीत् । ञिफला विशरणे ।

---

न चैवमपीप्याततेर्लोटि ह्रौ परे हलः श्नानजादेशे इपाणेत्यत्र प्रसङ्गः । अन्तो विशेष्यत्वेन तदादिविध्यभावेनाऽमात्रे शिति छत्वज्ञापनात् । यच्छतीति । "छे च" ( ६ । १ । ७३ ) इति तुकि श्चुत्वम् ॥ १५६ ॥

यमरम । यम उपरमे । रम क्रीडायाम् । णम प्रह्वत्वे शब्दे च । आत आदन्ता यावाप्रभृतयः । षष्ठीनिर्देशाद् यच्छते सक् भवति । इट् पुनः सिच एवार्धधातुकस्येडित्यधिकारात् इति व्याचष्टे–यमादेरित्यादि । अयंसीदिति "एकाच" ( ७ । २ । १० ) इतीण्निषेधे प्राप्तेऽनेन सिच इटि ईटि च कृते "इट ईटि" ( ८ । २ । २८ ) इति सिचो लोपे एकादेशे च कृते "नश्चापदान्तस्य" ( ८ । ३ । २४ ) इति मस्यानुस्वारः । नन्वत्र इटि सत्यसति[१] वा विशेषो नास्ति । मैवम् । सतीटि "नेटि" ( ७ । २ । ४ ) इति हलन्तलक्षणावृद्धि र्न भवति । असति तु सा स्यात् । अयंसिष्टाम् । अयंसिषुः इत्यादौ इटः श्रवणमप्यस्त्येव विशेषः । ययाम । येमतुः । येमिथ । ययन्थ । यन्ता । यंम्यात् । यंस्यति । णमु । प्रणमतीति । "उपसर्गादसमासेऽपि णोपदेशस्य" ( ८ । ४ । १४ ) इति णत्वम् । अनंसीदिति । "यमरम" ( ७ । २ । ७३ ) इति इट्सकौ । नेमिथेति । "उपदेशेऽत्वतः" ( ७ । २ । ६२ ) इति निषेधस्य "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति नियमेन पक्षे निवृत्तेरिट् । "थलि च सेटि" ( ६ । ४ । १२१ ) इत्येत्वाभ्यासलोपौ । नन्ता । नम्यादित्यादि । हय । हयति । हयेदित्यादि । जहाय । तासौ नित्यं सेट्त्वाद् जहयिथ । हयितेत्यादि ॥ १५७ ॥

अतो । यदन्तवचनेनान्तशब्देन बहुव्रीहिः अङ्गं चान्यपदार्थः । ततोऽन्तग्रहणमनर्थकम् वर्णग्रहणे तदन्तविधेः सिद्धत्वात् । अथ समीपवाचिनान्तशब्देन षष्ठीसमासे रेफलकारयोः समीपभूतस्यातो वृद्धिरिति । ततो लूपिरणिखलिप्रभृतिष्वपि स्यात् ।

---

१. सत्यपि वाग्विशेष इति क० पु० ।

## १५९. आदिर्ञिटुडवः [ १ । ३ । ५ ]

भ्वादेर्धातोराद्या ञिटुड एते इतः स्युः । अफालीत् । अभ्यासचर्त्वस्यैत्वं प्रत्यसिद्धत्वादेत्त्वे प्राप्ते "अभ्यासजश्त्वचर्त्व एत्त्वतुकोः सिद्धे वाच्ये" ( वा० ) इति वचनादेशादित्वेनैत्वनिषेधे प्राप्ते ।

---

यदि चन्तं च तदन्तश्च कर्मधारयः स्यात्तेन ततोऽन्तशब्दस्य विशेषणत्वात्पूर्वनिपातः स्यात् । तस्मात् ल्वेति पृथक्पदम्, लुप्तषष्ठीकम् । अन्तशब्दश्च समीपवाची । तेनातः समीपं यत् ल्वम् । अकार उच्चारणार्थः । रेफलकाराविति यावत् । तेनाङ्गस्य विशेषणात् तदन्तविधिरिति व्याचष्टे–अतः समीपो यौ ल्वाविति । अकारस्य वृद्धिः स्यादिति । ननु सङ्कञ्च्छतमत इत्येतदपि ल्वविशेषण एवापत्तौ कथं स्यानित्वेन[१] निर्दिश्यते । सत्यम् । विशेषणत्वेनापि तावदकारस्य श्रुतत्वात्तस्यैव वृद्धिर्विज्ञायते । अतः किम् ? अक्षोरीत् । लेति किम् ? अगदीत् । लान्तस्याङ्गस्य किम्? अवल्गीत्? योऽत्र लकारोऽका-रस्य समीपभूतो न सोऽङ्गस्यान्तः यश्चान्तो न स समीपभूतः इति । नेटीत्यस्यापवाद इति । प्राथमिकप्राप्त्यभिप्रायेणैतदुक्तम्[१] । अत्र हि "नेटि" ( ७ । २ । ४ ) इति निषेधं बाधित्वा "अतो हलादेर्लघोः" ( ७ । २ । ७ ) इति वैकल्पिकः प्राप्तस्तदपवादोऽयम् । तद्वा "अतो हलादेः" ( ७ । २ । ७ ) इति विकल्पेनापि पक्षे "नेटि" ( ७ । २ । ४ ) इति निषेधः प्राप्नोति तस्याप्ययमपवादः । नित्यार्थं वचनमित्यर्थः । अचालीदिति । चचाल । चेलतुः । चलितेत्यादि । ज्वलेति ॥ १५८ ॥

आदिर्ञिटुडव इति । उपदेश इति वर्तते । तेन ञिकारीयतीत्यादौ न भवति । न ह्ययं समुदायः क्वचिदुपदिशति । एवमपि पृथ्वादिगणे उपदेशात् पटुशब्देऽपि स्यात् । ततश्च पटूयते क्यङन्तात् "द्वितोऽथुच्" ( ३ । ३ । ८९ ) प्रसङ्गः । अत आदि-ग्रहणम्, स चोपदेश आदिर्धातावेव संभवति नान्यत्रेति । भूवादय इति प्रकृतत्वाद्वा तदादिरेव गृह्यते इत्याशयेन व्याचष्टे–भ्वादेर्धातोरित्यादि । सूत्रे प्रत्येकं सम्बन्धाभि-प्रायेणादिरित्येकवचनं प्रयुक्तम् । स्वयं तु द्वन्द्वार्थसमुदायानुरोधात् बहुवचनेन विपरिणमय्य व्याचष्टे–आद्या इति । ञिटुड एते इति । एतत्समुदाया एवैतेऽनुक्रियन्ते ते ञिटुडु इति वर्णमात्रमिति दर्शयति । तेन टु इति वर्णो न गृह्यते उकारस्यानुनासिक-त्वाप्रतिज्ञानेनेत्संज्ञाभावात् "चुटू" ( १ । ३ । ७ ) इति पुनष्टुग्रहणाच्च ।

फलतीति । ञिशब्दस्येत्त्वात्तस्य लोपः । "ञीतः क्तः" ( ३ । २ । १८७ ) इति च प्रयोजनम् । अफालीदिति । "अतो ल्रान्तस्य" ( ७ । २ । २ ) इति नित्या वृद्धिः । ननु "अत एकहल्मध्येऽनादेशादेर्लिटि" ( ६ । ४ । १२० ) इत्यत्राभ्यासादेशः किं रूपा-भेदको गृह्यते ? रूपभेदको वा ? नाद्यः "न शसदद" ( ६ । ४ । १२६ ) इति निषेधा-रम्भात् । नान्त्यः सर्वत्राभ्यासचर्त्वस्यैत्वाभ्यासलोपं प्रत्यसिद्धत्वात् रूपभेदं केऽत्र-

## १६०. "तॄफलभजत्रपश्च" [ ६ । ४ । १२२ ]

एषां क्किति लिटि सेटि थलि च एत्त्वाभ्यासलोपौ स्तः। फेलतुः । फेलिथ । णिक्षु चुम्बने । प्रणिक्षति । प्रनिक्षति । त्सर छद्मगतौ । अत्सारीत् । तत्सार । ष्ठिवु निरसने । "सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः । "ष्ठिवुक्लमु" ( ७ । ३ । ७५ ) इति दीर्घः । ष्ठीवति । अष्ठेवीत् । "ष्ठिवेरभ्यासठकारस्य ठकारो वा" ( वा० ) चर्त्वम् । तिष्ठेव । टिष्ठेव । ष्ठेविता । "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । ष्ठीव्यात् । जि जये ।

---

काशोऽनादेशादेरिति निषेधोऽनर्थकः स्यात् । सत्यम् । रूपभेदकाभ्यासहीनस्यैत्वाभ्यासलोपाविति न तु "पूर्वत्रासिद्धम्" ( ८ । १ । १ ) इत्यसिद्धत्वादित्येतदेवाह—अभ्यासचर्त्वस्येति । "अभ्यासे जश्त्वचर्त्वे एत्वतुकोः सिद्धे वाच्ये" ( वा० ) व्याख्येये इत्यर्थः । सर्वत्राभ्यासचर्त्वस्यैत्त्वाभ्यासलोपं प्रत्यसिद्धत्वादनवकाशादनादेशादेरिति निषेधात् ज्ञापकात् अभ्यासजश्त्वचर्त्वे सिद्धे वाच्ये इति भूतपूर्वसूत्रेऽप्येत्वाभ्यासलोपाप्राप्तौ प्रतिप्रसवमुपन्यस्यतो—तॄफलभजत्रपश्चेति । अस्मद्गुरवो वदन्ति । यथाश्रुतमपि व्याख्यास्यामः । ननु फेलतुः भेजतुरित्यादावेत्वाभ्यासलोपार्थं तॄफलभजेत्यत्र फलभजग्रहणं क्रियते तदनर्थकम् "अत एकहल्मध्ये" ( ६ । ४ । १२ ) इत्येव सिद्धेः । न च फ न अतुसिति स्थिते द्वित्वे "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति पूर्वफकारस्य पत्वे कृतेऽनादेशादेरिति निषेधस्याप्राप्तिः । "पूर्वत्रासिद्धम्" ( ८ । १ । १ ) इति चर्त्वादेरसिद्धत्वेनादेशाभावादित्याशङ्कामनूद्य वार्तिकं न सिद्धत्वाभिधानात् समाधातुमाह—अभ्यासे चर्त्वस्येति । चर्त्वग्रहणं प्रकृताभिप्रायं जश्त्वस्याप्युपलक्षणम् । भजेरपि समानयोगक्षेमत्वाद् वार्तिके जश्त्वचर्त्वे इति वचनाच्च । अभ्यासजश्त्वचर्त्वे इति नात्र यथासंख्यविवक्षितम् । एत्वतुकोरिति द्वन्द्वे "अल्पाच्तरम्" ( २ । २ । ३४ ) इति लक्षणव्यभिचारचिह्नात् । तेनैत्वे जश्त्वचर्त्वयोर्द्वयोरपि सिद्धत्वम्, लुकि तु चर्त्वमात्रस्य । यथोच्छेरुचिच्छिषतीति । चर्त्वस्यासिद्धत्वात् लुक् प्राप्तः सिद्धत्वान्न भवति । आदेशादित्वेनेति । असिद्धत्वस्यापोदितत्वादित्यर्थः । एत्वनिषेधे प्राप्ते इति । पुनरेत्वं प्रतिप्रसूयते इति शेषः ॥ १५६ ॥

तॄफल । तॄ प्लवनतरणयोः । फल निष्पत्तौ । ञिफला विशरणे । द्वयोरपि ग्रहणम् । निरनुबन्धकपरिभाषाया प्रत्ययग्रहणविषयत्वात् । चकारेण सानुबन्धकस्य समुच्चयाद्वा । भज सेवायाम् । त्रपूष् लज्जायाम् । सेटि थलि चेति सूत्रद्वयविहितस्याप्येत्वस्य प्रतिप्रसव इत्यर्थः । तॄग्रहणं गुणभूताकारार्थम् । तेरतुः । त्रपिग्रहणं संयुक्तहल्मध्यस्यार्थम् । त्रेपतुः । क्कितीत्यादि किम् ? पफाल । णिचि । प्रणिक्षति । "उपसर्गादसमा-

## १६१. सन्लिटोर्जेः [ ७ । ३ । ५७ ]

अभ्यासात्परस्य जेः कुत्वं स्यात् सनि लिटि च । जिगाय । जीयात् । तुर्वी हिंसायाम् । "उपधायां च" ( ८ । २ । ७८ ) इति दीर्घः । तूर्वति । रक्ष पालने । प्रनिरक्षति । प्यन्तत्वान्न णः । अक्षू व्याप्तौ संघाते च ।

---

सेऽपि" ( ८ । ४ । १४ ) इति नित्ये प्राप्ते "वा निसनिक्षनिन्दाम्" ( ८ । ४ । ३३ ) इति वा णत्वम् । कृत्ये चैतण्णत्वमित्युक्तम् । परमतमेतदिति ज्ञेयम् । निक्षेत् । निनिक्षतुः । अनिक्षन् अनिक्षीत् । निनिक्ष । निक्षितेत्यादि । पान्तत्वाद् नेनं णत्वम् । प्रतिनिक्षतीत्यादि । त्सर । त्सरति । अत्सारीत् इति । "अतो लान्तस्य" ( ७ । २ । २ ) इति नित्यं वृद्धिः । तत्सार । त्सरितेत्यादि । ष्ठिव् । "धात्वादेः षः सः" (६।१।६४) इति षत्वे प्राप्ते आह—सुब्धात्वित्यादि । सुबन्तावयवको धातुः सुब्धातुः । सुब्ग्रहणेन[1] च तदर्थः कारक लक्ष्यते । तेन प्रातिपदिकाण्णिजन्तस्यापि सग्रहः । अत एव नामधातुरिति चोच्यते यथा पटुमाचष्टे पटयति । ष्टयै शब्दसंघातयोः । ष्वष्क[2] गतौ ष्ठिवु निरसने । एषां सत्वं न भवतीत्यर्थः । तत्रोपदेश इत्यनुवृत्तेः सुब्धातूनां न भवति । ष्वष्कष्ठिवौ षकारादौ उपदिश्येते । तत्र "लोपो व्योर्वलि" ( ६ । १ । ६६ ) इति वलोपेन षस्यादित्वाभावात् सत्वाभाव इत्याहुः । स्त्यै ष्ट्यै इति पृथक् पाठसामर्थ्यात् ष्ट्यै इ यस्यापि सत्वाभाव इत्येके । माधवादयस्त्वस्यापि सत्वमुदाजह्रुः । पृथक् पाठे प्रयोजनं तु तिष्ठ्यासतीत्यादौ षोपधत्वाद् "आदेशप्रत्यययोः" (८ । ३ । ५९) इति षत्वमित्याहुः । तथा च "सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः" इति वार्तिकेष्ट्यायतिर्नोपात्तः । अष्ठेवीदिति । शितीत्युक्तं दीर्घाभावादुपधागुणः । कथं तर्हि निष्ठीवनमिति दीर्घः । पृषोदरादित्वात् पक्षे दीर्घ इति माधवः । तेन ष्ठेवनम् ष्ठेवनमित्युभयमपि । ष्ठिवेर्यदि द्वितीयो वर्णो टकार औपदेशिकस्ततस्तिष्ठेवेत्यभ्यासे तकारो न श्रूयेत अथ थकारस्ततष्टिष्ठेवेति टकारोऽभ्यासे न श्रूयेतेत्यत आह—ष्ठिवेरित्यादि । उभयथाऽप्याचार्येण शिष्याः पठिताः इत्युभयं प्रमाणमिति भावः । चर्त्वमिति । थश्चेत् तकारः । ठश्चेत् टकार इत्यर्थः । तिष्ठिवतुः टिष्ठिवतुरित्यादि । जि जये । अनिट् । जय उत्कर्षप्राप्तिः । अत्रार्थेऽयमकर्मकः । यस्तु जि अभिभवे इति पठ्यते सकर्मकः शत्रून् जयति । जयेदित्यादि ॥ १६० ॥

सन्लिटोर्जेः । जेरिति द्वयोरपि सामान्यग्रहणम् । यत्तु ज्या वयोहानौ इत्यस्य सम्प्रसारणे कृते जीतिरूपम् । जिज्यतुरित्यादौ तस्य लाक्षणिकत्वादग्रहणम् । अभ्यासात्परस्येति । प्रत्यासत्त्या सन् लिट् निमित्तादेवाभ्यासादित्यर्थे बोध्यः । तेन यङ्लुगन्तात्

---

१. सुब्ग्रहणेनेति क० पु० ।
२. ष्वष्क गतौ इति क० पु० ।

## १६२. अक्षोऽन्यतरस्याम् [ ३ । १ । ७५ ]

अक्षो वा श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके। पक्षे शप्। गुणः। अक्ष्णोति। अक्षति। ङित्त्वान्न गुणः। अक्ष्णुतः। "अचि श्नुधातु" ( ६ । ४ । ७७ ) अक्ष्णुवन्ति। अक्ष्णुयात्।

## १६३. उस्यपदान्तात् [ ६ । १ । ९६ ]

अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात्। अक्ष्णुयुः। अक्ष्णोतु। अक्ष्णुहि। आक्ष्णोत्। ऊदित्त्वादिड्वा। आक्षीत्। इडभावपक्षे "स्कोः संयोगाद्योः" ( ८ । २ । २९ ) इति कलोपः।

---

सन्लिटोः परयोरपि कुत्वं न भवति। जेजीय। जेजयिष्यतीति। जीयात् इति "अकृत्सार्व" ( ७ । ४ । २५ ) इति दीर्घः। तुर्वी। ईदित्त्वं निष्ठायामनिट्त्वार्थम्। तूर्णः। अतूर्वीत्। तुतूर्व। तूर्विता। तूर्व्यात्। "हलो यमां यमी" ( ८ । ४ । ६४ ) इति सख्यातानुपदेशात् वलोपो न भवति। अक्ष्। ऊदित्॥ १६१॥

अक्षोऽन्यत। अप्राप्तविभाषाऽयम्। ङित्वान्न गुण इति। तस्मादेः "सार्वधातुकमपित्" ( १ । २ । ४ ) इति ङित्त्वात् श्नुप्रत्ययस्य न गुणः इत्यर्थः। अक्ष्णुयादिति। सार्वधातुकत्वात् "अकृत्सार्वधातुकयोः" ( ७ । ४ । २४ ) इति न दीर्घः। अतः परत्वाभावात् "अतो येयः" ( ७ । २ । ८० ) इत्यपि नास्ति॥ १६२॥

उस्यपदान्तात्। अवर्णादिति। 'आद् गुण"( ६ । १ । ८७ ) इत्यत आदित्यनुवृत्तेर्दीर्घादपोत्यर्थ.। अपदान्तादित्युत्तरार्थम्। दण्डाग्रमिति "अतो गुणे" (६।१।९७) इति पररूप मा भूदिति। यत्तु प्रत्युदाहरन्ति का-उस्रा केस्रेति। तत्रानर्थकत्वादेव। प्रत्ययग्रहण' परिभाषया वा न भविष्यति। यद्येव अक्ष्णुयुरित्यत्रापि न स्यात्। अत्रापि हि यासुटि कृते तदादि· समुदायोऽर्थवान् न तदवयव उस्। मैवम्। प्रक्रियादशायामागमागमिभावादुसोऽप्यर्थवत्तानपायात्। 'अनागमकानां सागमका आदेशाः" इति पक्षे ह्यानर्थक्यवाचोयुक्तिः। स च पक्षः केवलं नित्यतासमर्थनार्थः एवेति स्पष्टमाचष्टे कैयट.। अत्र च' पक्षे अपदान्तग्रहणमनर्थकस्याप्युसो ग्रहणं ज्ञापयतीति हरदत्तेनोक्तम्। अक्ष्णुयुरिति। झेर्जुस्। यासुट्। सलोपे आद्गुणापवादः पररूपम्। अक्ष्णुहीति। लोटः सेर्हिः अनदन्तत्वाद् "अतो हे." ( ६ । ४ । १०५ ) इति हिलोपः। संयोगपूर्वत्वाद्

---

१. (   ) रेखाङ्कितो नास्ति ख० पु०।

२. अत्रवति क० पु०।

१६४. षढोः कः सि [ ८ । २ । ४१ ]

षस्य ढस्य च कः स्यात् सकारे परे । षत्वम् । कषसंयोगे क्षः । आक्षीत् । आक्षिष्टाम् । आष्टाम् । आक्षिषुः । आक्षुः । आक्षीः । आक्षिष्टम् । आष्टम् । आक्षिष्ट । आष्ट । आक्षिषम् । आक्षम् । आक्षिष्व । आक्ष्व । आक्षिष्म । आक्ष्म । आनक्ष । अक्षिता । अष्टा । तक्ष् त्वक्ष् तनूकरणे ।

१६५. तनूकरणे तक्षः [ ३ । १ । ७६ ]

तनूकरणार्थात् तक्षेः श्नुः स्यात् कर्तरि सार्वधातुके । तक्ष्णोति तक्षति वा काष्ठम् । अतक्षीत् । अताक्षीत् । अतक्षिष्टाम् । अताष्टाम् । निर्भर्त्सने तु संतक्षति वाग्भिः । कृष विलेखने । कर्षति । "कृषमृशस्पृशतृपदृपसृपश्च्लेः सिज्वा" ( वा० ) कत्वम् । षत्वम् । अक्राक्षीत् ।

"उतश्च प्रत्ययाद्" ( ६ । ४ । १०६ ) इत्यपि न भवति । आक्षीदिति । इट्पक्षे "नेटि" ( ७ । २ । ४ ) इति वृद्धिनिषेधः । अनिट्पक्षे तु हलन्तलक्षणा वृद्धिः । उभयत्रापि[1] "आटश्च" ( ६ । १ । ९० ) इति वृद्ध्या तुल्यं रूपम् । माङ्योगे त्वस्ति भेदः मा भवानक्षीत् । मा भवानाक्षीदिति ॥ १६३ ॥

षढोः कः सि । अपदान्तेऽयं विधिः । लिट्स्वित्यादौ पदान्ते त्वस्यासिद्धत्वाज्जश्त्वेन भवितव्यमिति । आक्षीदिति । आक्ष् स् त् इति स्थिते सिचि झलि परे क्ष इति क्ष् संयोगस्यादेः कस्य लोपस्ततोऽवशिष्टस्य कत्वम् । ततः परस्य सिचः 'आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वम् । क्ष् संयोगे क्षः इति कषयोः संयोगे एव क्ष इत्युच्चार्यते न वर्णान्तरमित्यर्थः । आष्टामिति । इडभावे 'झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । "स्कोः" ( ८ । २ ।२९) इति कलोपे ष्टुत्वम् । इट्पक्षे "आक्षिष्टामेव । एवमिकारवतीट् पक्षे । अन्यान्यनिट्पक्षे रूपाण्यूह्यानि । आनक्षेति । "अत आदे." (७।४।७०)इति दीर्घे "तस्मान्नुड् द्विहलः" इति नुट् । आनक्षिथ । क्रादिनियमान्नित्यमिट् । येषां तु अक्षस्तास्वदिति योगद्वयविहितनिषेधापवादो नियमस्तेषामूदित्त्वादिड्विकल्पात् आनष्ठेत्यपि । अक्षयात् । अक्षिष्यति । आक्षिष्यत् । आक्ष्यत् । तक्ष् ॥ १६४ ॥

तनूकरणे इति । यद्यपि तक्षिस्तनूकरण एव पठ्यते तथापि पुनर्विशेषणोपादानम् अनेकार्था धातव इति ज्ञापनार्थम् । क्वचिद्धातुष्वनेकार्थपाठस्तु प्रपञ्चार्थः । तक्ष्णोति "रषाभ्याम्" ( ८ । ४ । १ ) णत्वम् । "सार्वधातुके" ( ७ । ३ । ८४ ) गुणः तक्ष्णोति । श्नोरभावे "कर्तरि शप्" ( ३ । १ ।६८ ) । अतक्षीदिति । इट्पक्षे 'नेटि"

1. वृद्धिस्तूभयत्रापीति क० पु० ।

१६६. अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् [६।१।५९]

उपदेशेऽनुदात्तो य ऋदुपधस्तस्य अमागमो वा स्यात् झलादावकिति परे। यणादेशः। अतो वृद्धिः। अक्राक्षीत्। अक्राष्टाम्। अकार्ष्टाम्। सिजभावपक्षे।

---

(७।२।४) इति न वृद्धिः। अतार्षीदिति। ऊदित्वादिडभावे[1] "स्कोः" इति कलोपे "षढोः" (८।२।४१) इति षत्वे कषयोगे क्षः। "वदव्रज" (७।२।३) इति वृद्धिः। अतार्ष्टामिति। इडभावे कलोपे च ष्टुत्वम्। तनूकरणे किम्? अर्थान्तरे मा भूत् इति दर्शयति–निर्भत्सने त्विति। अनेकार्थत्वादिति भाव.। ततक्ष। ततक्षिथ। ततष्ठ। ततक्षिव। तक्षिता। तष्टा। तक्ष्यात्। तक्षिष्यति। अतक्षिष्यत्। अतक्ष्यत्। कृष। विलेखनमाकर्षणम्। द्विकर्मकोऽयम्। चकर्ष शाखा ग्राममिति। सर्वतीति। 'पुगन्त-लघूपधस्य" (७।३।८६) इति गुणः। कर्षति। कर्षतु। लुङि कार्यमाह—कृषेत्यादि। कृष विलेखने। भ्वादिस्तुदादिः। मृश आमर्शने। स्पृश सस्पर्शने। एभ्यः क्से प्राप्ते। तृप प्रीणने। दृप हर्षविमोचनयो। आभ्या पुपादित्वादङि प्राप्ते सृप्लृ गतौ। अस्मादपि लृदित्वादङि प्राप्ते पक्षे सिजप्यनुज्ञायते। अत्र सृपे. पाठो व्यर्थः। स्पृशमृषकृष-तृपदृपा सिच् वा वक्तव्यः" (वा०) इति वार्तिके पञ्चानामेवोपादानात्। सृपेश्च लृदित्वान्नित्यस्याङ आकरे उदाहृतत्वाच्च। अकार्षीदिति। कृषेरेका नुदात्तोपदेशत्वात् सिच इडभ वे 'अस्तिसिचो." (७।३।९६) इतीटि कृते सिचि वृद्धौ "षढोः कः सि" (८।२।४१ इति कत्वे "आदेशप्रत्यययोः" (८।३।३९) इति षत्वे कषसंयोगे क्षः। "झलो झलि" (८।२।२६) इति सिचो लोपे ष्टुत्वे च। अकार्ष्टाम्। अकार्क्षुः। अकार्क्षीः। अकार्ष्ट। अकार्ष्टम्। अकार्क्ष्व। अकार्क्ष्म। सिच्पक्षे एव कार्यान्तरमाह—अनुदात्तेति॥ १६५॥

अनुदात्तस्येति। यद्यत्र साम्प्रतिकमनुदात्तत्वं गृह्येत ततः क्रष्टेत्यादौ तृनि नित्वात् संप्रत्ययमुदात्त इत्यम् न स्यात्। वृह उद्यमने इत्यस्माच्च तृचिशेषानिघातेन धातोः सम्प्रत्यनुदात्तत्वात् वर्ढेत्यत्राप्यम् न स्यात्। तस्मात् "आदेच उपदेशेऽशिति" (६।१।४५) इत्यत उपदेश इति वर्तते तेन नाव्याप्त्यतिव्याप्ती इत्याशयेन व्याचष्टे–उपदेशेऽनुदात्तोऽयम्। ऋदुपध इति। अत्राप्युपदेश इत्यपेक्षते अन्यथा परत्वाद् गुणवृद्धयोः कृतयोः यत्र ऋदुपधत्व दुर्लभमापद्यते तत्र विशेषणसामर्थ्याद् वा पूर्वमेव भविष्यतीति नार्थस्तदपेक्षया "सृजिदृशोः" (६।१।५८) इत्यतः झल्यमकितीति वर्तते इत्याह–अमागम इति। अनुदात्तस्य किम्? वृह। वर्ढव्यम्। अनिट इत्येव तर्ह्युच्यताम् लाघवायेति चेत्। मैवम्। एवं हि वृहेरपि विकल्पितेट्त्वेनानिट्त्वात् प्रसज्येत। ऋदुपधस्य किम्? भेत्ता। झलादौ किम्? कर्षणम्। अकितीति किम्? कृष्टम्। यणादेश इति

---

१. ( ) रेखाङ्कितः ऊदित्वादित्यारभ्य–दर्शयतीत्यन्तो नास्ति क० पु०।

१६७. शल इगुपधादनिटः क्सः [ ३ । १ । ४५ ]

इगुपधो यः शलन्तोऽनिट् तस्मात् च्लेः क्सादेशः स्यात् । क इत् । कत्व-पत्वादि । कित्वान्नाम् । अकृक्षत् । क्रष्टा । कर्ष्टा । रुष रिष हिंसायाम् ।

१६८. तीषसहलुभरुषरिषः [ ७ । २ । ४८ ]

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड् वा स्यात् । रोषिता । रोष्टा । एवं रिषेः । उष दाहे ।

---

मित्त्वादन्त्यादचः परेऽमि कृते परामपि हलन्तलक्षणां वृद्धिं बाधित्वाऽन्तरङ्गत्वात् "इको यणचि" (६ । १ । ७७) इति ऋकारस्य रेफ इत्यर्थः । एतदेव स्पष्टयति—अतो वृद्धिरिति । अतो यणादेशादनन्तरम् अमोऽकारस्यैवेति वा ॥ १६६ ॥

शल इगुपधादिति । इगुपधो यः शलन्तो अनिडिति पञ्चम्यन्तं धातोर्विशेषणमिति दर्शयति । न विद्यते इट् यस्मात् परस्य प्रत्ययस्य सोऽयमनिट् तस्मादिति । नन्वेवं गुहेरघुक्षदित्यत्र न स्यात् ऊदित्त्वेन वेट्कत्वात् गूहिता । अगूहीदित्यत्र ततः परस्य प्रत्ययस्येड्दर्शनात् । मैवम् । गुहादयो विकल्पितेटः इटो भावाभावाभ्यां भिद्यते तत्र ये सेटस्तेभ्यः सिज् भविष्यति । अनिड्भ्यस्तु क्स इति न कश्चिद्दोष इति कैयटेनोक्तत्वात् भाष्यकारमते । न त्वाचार्यैर्धातुविशेषणं व्याख्यातम् । नन्वेवं च्लिविधानमनर्थकम् तद्धि अनिड्ग्रहणमिदं च्लिविशेषणं यथा विज्ञायेत इत्येवमर्थमिति स्थितम् । मैवम् । च्लिविधानं हि "मन्त्रे घसह्वर" ( २ । ४ । ८० ) इत्यत्र लेर्लुको विधानार्थम् । सिचः इति तु लुक्युच्यमाने "आदिः सिचोऽन्यतरस्याम्" ( ६ । १ । १८७ ) इति स्वरः प्रसज्येत इत्यन्यत्र विस्तरः । क इदिति । "लशक्वतद्धिते" ( १ । ३ । ८ ) इत्यनेन । कत्वषत्वादीनि । अकृष् स् त् इति स्थिते "षढोः कः सि" ( ८ । २ । ४१ ) इति षस्य कः । "आदेशप्रत्यययोः" (८ । ३ । ५९) इति सस्य षत्वम् । क्ष्-संयोगे क्षः । अकृक्षत् । अकृक्षताम् । अकृक्षन् । चकर्ष । चकृषतुः । चकर्षिथ । चकृषथुः । क्रष्टा । कर्ष्टेति । "अनुदात्तस्य" (६ । १ । ५९) इत्यम् विकल्पः । अमभावपक्षे उपधा गुणः । क्रक्ष्यति । कर्क्ष्यति । अक्रक्ष्यत् । अकर्क्ष्यत् । अयं तुदादावपि पठ्यते स्वरितेत् । कृषति कृषते इत्यादि । रुष । इतश्चत्वारः सेटः । रोषति । रोषेत् । रोषतु । अरोषत् । अरोषीत् । रुरोष । एवं रेषतीत्यादि ॥ १६७ ॥

तीषसहेति । इच्छत्यादेरिति । एतेन इष इच्छायामिति तौदादिकस्य ग्रहणं नेष्यते । इष्णातेर्वा । सहिनाऽविकरणेन साहचर्यात् । व्यवस्थितविभाषाविज्ञानाद्वेति दर्शयति । अन्ये त्वेतदर्थमिषुमुदितं पठित्वा इहापि तीषुसहेत्युदितो ग्रहणं वर्णयन्ति । उदित्त्वस्य चैतदेव प्रयोजनम् । क्त्वायामिड्विकल्पस्य "तीषसह"

१६९. उषविदजागृभ्योऽन्यतरस्याम् [३ । १ । ३८]

एभ्य आम् वा स्याल्लिटि । ओषांबभूव । उवोष । शश प्लुतगतौ । "न शस" (६।४।१२६) इति एत्वं न । शशशतुः । शशशिथ । मिह सेचने । "शल इगुपधादनिटः क्सः" ( ३ । १ । ४५ ) "हो ढः" कत्वषत्वे । अमिक्षत । इत्वम् । "झषस्तथोः" ( ८ । २ । ४० ) इति धत्वम् । ष्टुत्वम् ।

---

( ७ । २ । ४८ ) इत्येव सिद्धत्वात् । वार्त्तिककारस्तु इष्णातेरपि ग्रहणमभिप्रैति । यदाह—'इषस्तकारे श्यन् "प्रत्ययात्प्रतिषेधः" इति ( वा० ) । तन्मते श्योऽपि निरनुबन्धकाः । तत्र पक्षे इच्छति ग्रहणमिष्णाते'रप्युपलक्षणं व्याख्येयम् । आदिपदात् सह मर्षणे । लुभ गार्द्धे । लुभ विमोहने । द्वावपि । रुष रोषे । रिष हिंसायाम् रोषति । इडभावे ष्टुत्वम् । एव रेषति । रेषिता । रेष्टेत्यादि । रुषिवद् रिषेरपि रूपाणि ज्ञेयानीत्यर्थः । उष । ओषति । ओषेत् । ओषतु । औषत् । औषीत् ॥ १६८ ॥

उषविदेति । उष दाहे । विद ज्ञाने अदादिः । सत्ताविचारणार्थयोरुभयोरात्मनेपदित्वादुभयार्थस्य लाभार्थस्य विद्लृ लाभ इत्यस्योभयपदिनश्च ग्रहणं न भवति । परस्मैपदिभ्यामुषजागृभ्यां जागर्तिनाऽप्यादादिकेन साहचर्यात् । जागृ निद्राक्षये । ओषाम्बभूवेति । आमि उपधागुणः । "कृञ्चानुप्रयुज्यते लिटि" ( ३ । १ । ४० ) इति भवतेरनुप्रयोगः । द्वित्वादि । उवोषेति । णलि गुणे तस्य स्थानिवत्त्वादुषशब्दस्य द्वित्वे पुनः गुणे "अभ्यासस्यासवर्णे" ( ६ । ४ । ७८ ) इत्युवङ् । न चात्र कर्तव्ये गुणस्य स्थानिवद्भावः । आदिष्टादचः पूर्वत्वाद् असवर्णग्रहणसामर्थ्याच्चेति प्रागेवोक्तम् । किति तु सवर्णदीर्घः । ऊषतुः । ऊषुः । उवोषिथ । ऊषिव । ओषिता । उष्यात् । ओषिष्यति । शश । शशति । शशेत् । अशशीत् । अशाशीत् । शशास । "न शसदद" ( ६ । ४ । १२६ ) इत्युक्तेरेत्वं नेति । ये तालव्यान्तं पठन्ति तन्मतेनैतदुक्तम् । आकरे तु शसु हिंसायाम् इति दन्त्यान्तस्यैव निषेधादस्य शेशतुः । शेशुरित्येव भवितव्यमिति स्थितम् । शशिता । शश्यात् । शशिष्यति । इतो द्वावनिटौ । मेहति । मेहतुः । अमिक्षत् । अमिहस्त् इति स्थिते "हो ढः" ( ८ । २ । ३ ) इति हस्य ढः । तस्य 'षढोः कः सि" ( ८ । ३ । ४१ ) इति कः । "आदेशप्रत्यययोः" ८ । ३ । ५९) इति सस्य षः । क्ष्-संयोगे क्षः । अमिक्षताम् । अमिक्षन् । मिमेह । मिमिहतुः । मिमिहिथ । मिमिहिव । क्रादिनियमादिट् ॥ १६९ ॥

## १७०.　ढो ढे लोपः [ ८ । ३ । १३ ]

ढस्य लोपः स्यान् ढे परे । मेढा । मेढारौ । मेक्ष्यति । दह भस्मीकरणे । "दादेः इति घत्वम् । एकाचो बशो भष् इति भष्भावः । अधाक्षीत् । अदाग्धाम् । अत्र सिचि लुप्ते भष्भावो न । तस्य वर्णाश्रयत्वेन प्रत्ययलक्षणाभावात् । देहिथ । ददग्ध । दग्धा । धक्ष्यति । चह परिकल्कने । अचहीत् । हान्तत्वादिह न वृद्धिः । शुच शोके । "भृस्तुशुचमृवस्त्वशम्यः परस्य तादेरार्धधातुकस्य" इति केचित् "चोः कुः" ( ८ । २ । ३० ) शोक्ता । शोचिता । एवं भृस्त्वादीनामपि । ग्लै हर्षक्षये । ग्लायति ।

---

ढो ढे लोपः । ननु[1] मेढेत्यादौ ष्टुत्वस्यासिद्धत्वात् ढ परो नास्तीति कथं लोपः । सत्यम् । वचनसामर्थ्यात्[2] "पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इत्येतदसिद्धत्वं बाध्यते । न च लिढ्ढौकते इत्यादौ यत्रौपदेशिको ढः सोऽवकाशः स्यादिति शङ्क्यम् । तत्रैकपदाश्रयत्वेनान्तरङ्गे जश्त्वे कृते कार्यिणोऽसम्भवात् । न च लोपवचनसामर्थ्यात् जश्त्वमेव बाध्यतामिति वाच्यम् । मेढेत्यादावेव ष्टुत्वस्यासिद्धत्वं पूर्वत्रासिद्धमिति तदेव वचनसामर्थ्येन बाध्यते लाघवात् । लोपस्य तु जश्त्वापेक्षया द्विविधमसिद्धत्वम् । एकं बहिरङ्गलक्षणम्, अपरं पूर्वत्रासिद्धलक्षणम् । तत्रैकासिद्धत्वबाधेन लोपवचनमुपपन्नमिति न द्विविधासिद्धत्वाबाधनाय प्रभवति । मेक्ष्यतीति । 'षढोः कः सि" (८।२।४१) "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वम् । कष्-योगे क्ष. । दह् । दहति । दहेत् । दहतु । अदहत् । अधाक्षीत् । लुङि सिचि "वदव्रज" (७ । २ । ३ ) इति वृद्धिः । "खरि च" ( ८ । ४ । ५५ ) इति चर्त्वं ककारः । षत्वे क्षः । अदाग्धामिति । 'झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः धत्वम् । जश्त्वम् । अधाक्षीदितिवददाग्धामित्यत्रापि भष्भावेन भाव्यमित्याशङ्क्याह—अत्र सिच इति । पदान्तत्वं तावन्नास्ति सकारोऽपि सिचो लोपे नास्तीत्यर्थः । ननु "प्रत्ययलोपे प्रत्ययलक्षणम्" ( १ । १ । ६२ ) इति सकारपरत्वं भविष्यति नेत्याह—तस्य वर्णाश्रयत्वेनेति । वर्णमात्राश्रयत्वेनेत्यर्थः । यत्र तु वर्णो विशेषणम् प्रत्ययस्तु प्रधानत्वेनाश्रीयते[3] भवत्येव तत्र प्रत्ययलक्षणम् । यथा अतृणेट् इतीमागमो हलि पिति सार्वधातुके इति विधीयमानः । इह तु सकार एव प्राधान्येनाश्रितो न प्रत्ययविशेषणत्वेनेति । वर्णमात्राश्रयत्वान्नास्ति प्रत्ययलक्षणम्,

---

१. मेरेति क० पु० ।
२. स्या सामर्थ्यादिति क० पु० ।
३. ( ) अधाक्षीदित्यारभ्यतस्यैतदन्तो नास्ति क० पु० ।

१७१. आदेच उपदेशेऽशिति [ ६ । १ । ४५ ]

उपदेशे एजन्तस्य धातोः आत् स्यात् आदिशितोऽन्यस्मिन् प्रत्यये विवक्षिते यमरमेतीट् सकौ । अग्लासीत् ।

१७२. आत औ णलः [ ७ । १ । ३४ ]

आदन्ताद्धातोर्णल औरादेशःस्यात् । वृद्धिः । जग्लौ ।

---

यथा गवेहितं गोहितमिति समासे ङेर्लुकि कृतेऽज्मात्राश्रयेऽवादेशो कर्तव्ये इत्याशयः । देहतुः । एत्त्वाभ्यासलोपौ । देहिथेति । पूर्वं "एकाच" इतीट्निषेधः क्रादिनियमात् पुनः प्राप्तः "उपदेशेऽत्वतः" ( ७ । २ । ६२ ) इति निषिद्धः "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति नियमात् पुनः पक्षे प्रतिप्रसूयते । तत्र कृते "थलि च सेटि" ( ६ । ४ । १२१ ) इत्येत्त्वाभ्यासलोपौ । ददग्धेति । इडभावे घत्वं धत्वं जश्त्वम् । क्रादिनियमादिट् । देहिव । देहिम । लुटि तासि । घत्वधत्वजश्त्वानि । धक्ष्यतीति । स्यः घत्वं भष्भावः चर्त्वं षत्वं क्षः । चह । परिकल्कनं दम्भः । शाठ्यमित्येके । इमौ द्वौ सेटौ । चहति । चेहतुः । चेहिथ । चहिता । चह्यात् । चहिष्यति । शुच । शोचति । अशोचीत् । शुशोच । शुशोचिथ । भृञित्यादि । भृञ् भरणे । भ्वादिः । ष्टुञ् स्तुतौ । शुच शोके । वस आच्छादने । अदादिः । वस्तोति लुग्विकरणनिर्देशात् अशु भोजने । केचित् इति त्रिमुनेतरे हेमसूर्यादयः । शोकेति । इडभावे चोः कुः । शुच्यात् । शोचिष्यति । ग्लै । इतस्त्रयोविंशतिरनिटः । हर्षक्षयो धातुक्षयः । ग्लायतीति शपि कृते आयादेशः । ग्लायेत् । ग्लायतु । अग्लायत् ॥ १७० ॥

आदेच इति । "लिटि धातोः" ( ६ । १ । ८ ) इत्यतो धातोरित्यनुवर्तते । तस्यैचः विशेषणात् तदन्तविधिरित्याह—उपदेशे एजन्तस्येति । तेन गोभ्याम् । नौभ्यामित्यादौ न भवति । भवति ह्यत्रापि "गमेर्डोस्" उपदेशे एच् न तु धातुः । उपदेशग्रहणाच्च चेता स्तोतेत्यादौ न भवति । भवति ह्ययमेजन्तो धातुः न तूपदेशे । आर्धधातुके गुणविधानं चारितार्थमेव स्यात् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधि[1]र्बाध्यते यस्य च विधेर्निमित्तमेव नासौ बाध्यते इति न्यायात् । कर्तेत्यादौ सावकाशत्वाच्च । ननु चेतेत्यादौ लाक्षणिकत्वादेव न भविष्यति । सत्यम् । उक्तार्थमेतत् । इह तु करणं ज्ञापकं वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयते इति । अन्यथाऽनेनैव सिद्धे किं तेन ? तथा च क्रपयतीत्यात्त्वे कृतेऽपि "अर्तिह्री" ( ७ । ३ । ३२ ) इति पुग्भवति ।

अशितीति । यद्ययं बहुव्रीहिः स्यात्तर्हि जग्ले इत्यादावेशयात्त्वं निषिध्येत ततश्च जग्ला येत्यनिष्टं प्रसज्यते । तस्मात् तत्पुरुषोऽयम् । श् इत् शित् । तस्मिन् शितीति ।

---

१. स विधिरित्यारभ्य — सत्य मित्यन्तो नास्ति क० प० ।

तेन चात्र शित्—धातुग्रहणाभ्यां प्रत्ययो विशिष्यते। "यस्मिन् विधिस्तदादिविधौ" (प॰ इति तदादिविधिर्विज्ञायते। तेनेत्संज्ञकः शकारः आदिर्यस्य प्रत्ययस्य तत्र निषेधो नान्यशिति इति व्याचष्टे—आदिशितोऽन्यस्मिन्निति। अन्यस्मिन्निति व्याख्यानमशितीति पर्युदासं ज्यमिति दर्शयति। शिति नेति प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्चाश्रयितव्यः स्यादिति भावः। यदि पर्युदासः ग्लायन्ति म्लायन्तीति शबन्त्याकारयोरेकादेशे कृते तस्य परं प्रत्यादिवद्भावात् अस्त्यत्र शितोऽन्य इति कृत्वात्त्वं प्राप्नोति। प्रसज्यप्रतिषेधे तु एकादेशस्य पूर्वं प्रत्यन्तवद्भावात् शिद्ग्रहणेन ग्रहणात् शितिनेति निषेधः सिध्यति। नैष दोषः। पर्युदासेऽप्येकादेशस्य पूर्वविधौ स्थानिवत्त्वादशितः परत्वाभावात्। इह तर्हि सुग्लः सुग्ला। सुग्लान इत्याकारान्तलक्षणाः काङ्युवो न स्युः। पर्युदासे हि प्रत्ययनिमित्तमात्वं न ह्यतः प्रागस्तीति। नैतदेवम्। अशितीति विषयसप्तमीयम्। तेनानुत्पन्ने एव तस्मिन्नात्त्वं भविष्यति। ज्ञापकं चात्र "ह्वावामश्च" (३।२।२) इति कबाधनार्थं पुनरणुविधानम्। अत एव जग्ले इत्यादौ अभ्यासे इकारश्रवणप्रसङ्ग इत्यप्यपास्तम्। आत्वस्य द्विर्वचननिमित्तत्वाभावात् स्थानिवत्त्वाप्रसङ्गात्। किञ्च "लिटि वयो यः" (६।१।३८) इत्यत्र द्विलकारको निर्देशः। तथानिर्देशस्य च तत्र प्रयोजनाभावादिहानुवृत्तं वाक्यभेदेन संबध्यते। अशित्येव[1] आत्त्वं भवति। लिटि तु लकारादौ लावस्थायामेवेति। ततश्चान्त्रात्वम् नाजूनिमित्तमिति स्थानिवत्त्वं न भविष्यति। तदेवं पर्युदासेऽपि भाष्ये दोषा उद्धृता इत्याचार्यैः स एवादृतः। अयं च पक्षो बहुप्रतिविधेय इति प्रसज्यप्रतिषेधमेवान्ये आद्रियन्ते। तदाहुः। अनैमित्तिकमात्वं शिति तु प्रतिषेध इति। सुग्ल इत्यादि समाधानुमाह—विवक्षिते इति। भाविनीत्यर्थः, ननु पर्युदासोऽयमित्युक्तम्, तत्र शित्सदृशप्रत्यय आत्वस्य निमित्तं स्यात् न चानुत्पन्नो निमित्तं भवितुमर्हति। अनुत्पन्नस्य च परत्वासंभवः तस्मिन्निति परिभाषाऽपि बाधनीया स्यादिति चेत् मैवम्। पर्युदासेऽपि प्रत्ययसामान्यं निमित्तत्वेनाश्रीयते। तच्च नित्यावस्थितत्वात् परमप्यस्त्येव। किं तु तद्व्यञ्जके विशेषे काङ्युजादिरूपेऽनुत्पन्न एवात्वं प्रवर्तते। सामान्यस्यैव निमित्तत्वेनाश्रितत्वात् तद्विशेषरूपप्रतीक्षायां कारणाभावात्। इदमेवात्र विवक्षितत्वम्। पदुत विशेषस्यानुत्पत्तिः। एतदेवानैमित्तिकत्व यद्विशेषोत्पत्त्यनपेक्षत्वम्। अन्यथा सप्तमी श्रुत्युपस्थापिता निर्दिष्टपरिभाषा बाध्येत। एवंच चार्धधातुके इति विषयसप्तमीत्यादेर्गतिः। एव हि तत्राङ्गाधिकारो न बाधितो भवतीति दिक्॥ १७१॥

---

१. अशितोऽयेवेति क॰ पु०।

२. परत्वादा वित क० पु०।

## १७३. आतो लोप इटि च [६ । ४ । ६४]

अजादावार्धधातुके क्ङिति इटि च परे आतो लोपः स्यात् । ततो "द्विर्वचनेऽचि" (१ । १६३ ) इति स्थानिवत्वात् द्वित्वम् । जग्लतुः । जग्लुः । जग्लिथ । जग्लाथ । जग्लौ । जग्लिव । जग्लिम । ग्लाता ।

---

आत औ णलः इति । णलासिप्तो धातुरात इत्यनेन विशेष्यते तेन च तदन्तविधिरित्याह—आदन्ताद्धातोरिति । प्राथम्यादोकार एव विधातव्ये औकारविधानं ददरिद्राविव्याकारलोपे औत्वश्रवणार्थम् । यद्यपि "सिद्धश्च प्रत्ययविधौ" इति वचनाद् लिटि विवक्षित एवाकारलोपे सत्योत्त्वस्याप्रसङ्गः । "अनेकाचः आम्वक्तव्यः" ( वा० ) इत्यामि सति णल एवासंभवश्च । तथाप्यौत्वविधानसामर्थ्यात् उभयमेतन्न भवतीत्याहुः । तथा च वक्ष्यति दरिद्रातेराम् वेति केचित् इति । अन्ये तु मात्रालाघवे विशेषाभावात् औकार एव कृत इत्याहुः । वृद्धिरिति । ग्ला अ इति स्थिते द्विर्वचनात् परत्वात् सवर्णदीर्घः प्राप्तस्त बाधित्वा अनवकाशत्वादौत्व तत्र कृते द्विर्वचनादपि परत्वादादौ "वृद्धिरेचि" ( ६ । १ । ८८ ) इति वृद्धिरित्यथः । जग्लाविति । वृद्धेरेकादेशस्य "द्विर्वचनेऽचि" ( १ । १ । ५१ ) इति वृद्धिरित्यर्थः । हलादिः शेषः । ह्रस्वः । कुहोश्चुः ॥ १७२ ॥

आतो लोप इति ।"दीङो युडचि क्ङिति"(६।४।६३)इत्यतोऽचि क्ङितीत्यनुवर्तते। आर्धधातुक इति चाधिकृतम्। इटि च इति चकारेण क्ङित समुच्चीयते अजादौ क्ङिति भवति इटि च भवतीति । अच्यार्धधातुके इति तु क्ङितः इटश्च तुल्यविशेषणमित्यमजादावनार्धधातुके च क्ङिति न भवति । ग्लायते । यौताति इटयपि[1] अनजादावनार्धधातुके न भवति दासीम । व्यतिरे[2] इति । एतत्सर्वं पर्यालोच्याह–अजादावित्यादि । इटि चेति । अत्राप्यजादावार्धधातुके इत्युभयमनुषज्यते । प्राचा तु अजादावित्यस्यैवानुषङ्गो दर्शितः । तत्र व्यतिरे इत्यत्रा'तप्रसङ्गः स्यात्। व्यतिपूर्वाद् रा दाने इत्यस्मात् "कर्तरि कर्मव्यतिहारे" (१ । ३ । १४) इत्यात्मनेपदम् । लडुत्तमैकवचनमिट् । आद् गुणः । एत ऐ । इट्ग्रहणम् क्ङिदर्थम्। तेन जग्लिथेत्यत्रापि भवति । ननु ग्ला अतुस् इति स्थिते परत्वान्नित्यत्वाच्चादौ लोपः स्यात्, तत्र च कृतेऽनच्कत्वाद् "एकाच" ( ६ । १ । १ ) इति द्वित्वं न प्राप्नोति तत्राह–तत इति । "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् इति । 'अचः परस्मिन्" ( १ । १ । ५७ ) इत्येतत्तु नास्ति साकच्कस्य द्वित्वं न पूर्वविधिरिति ।

---

१. इहापि इति क० पु० । मूलेस्थितः पाठस्तु ग० पु० ।

२. व्यापरे इति क० पु० व्यत्परे इति ख० पु० । मूलोक्तस्तु ग० पु० ।

१७४. वाऽन्यस्य संयोगादेः [ ६ । ४ । ६८ ]

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एकारः स्याद्वा आर्धधातुके लिङि क्ङिति । ग्लेयात् । ग्लायात् । गै शब्दे । गायति । अगासीत् । जगौ ।

१७५. एर्लिङि [ ६ । ४ । ६७ ]

घुसंज्ञानां मास्थागापाजहातिस्यतीनां च क्ङित्यार्धधातुके लिङि आत ए स्यात् । गेयात् । ष्ट्यै शब्दसंघातयोः । ष्ट्यायति । दैप् शोधने ।

---

जग्लिथ । जग्लाथ । क्रादिनियमादिटः प्राप्तस्य "अचस्तास्वत्" ( ७ । २ । ६१ ) इति निषिद्धस्यापि भारद्वाजनियमात्पक्षेऽभ्यनुज्ञानम् । इटि चातो लोपः । जग्लाविति । उत्तमस्यापि णल औत्त्वम् । जग्लिवेति । क्रादिनियमादिट् । आतो लोपः ॥ १७३ ॥

वाऽन्यस्य । "घुमास्थागापाजहातिसां हलि" ( ६ । ४ । ६६ ) इति घ्वादयः प्रकृतास्तदपेक्षमन्यत्वमित्याह—घुमास्थादेरन्यस्येति । एवं चाप्राप्तविभाषेयम् । संयोगादेरिति । "अङ्गस्य" इत्यधिकारात् अङ्गावयवसंयोगादेरिति ज्ञेयम् । तेन निर्यायात् इत्यत्र न भवति । अन्यस्य किम् ? स्थेयात् । अन्यथा संयोगादौ घ्वादौ सावकाशम् "एर्लिङि" ( ६ । ४ । ६७ ) इत्येतद् बाधित्वा विकल्प एवात्र स्यात् । संयोगादेः किम् ? यायात् । आर्धधातुके किम् ? स्नायात् । स्नायाताम् । स्नायुः । क्ङिति किम् ? ग्लासीष्ट । लिङि किम् ? ग्लायते । गै । गायतीति । शप्ययादेशः । अगासीदिति । सिचि "आदेच" ( ६ । १ । ४५) इत्यात्त्वम् । "यमरम" (७।२।७३) इतीट्सकौ । "गातिस्था" ( २ । ४ । ७७ ) इति सिचो लुक् न भवति । गापोर्ग्रहणे इणपिबत्योर्ग्रहणमित्युक्तत्वात् । जगाविति । जग्लावित्यनेन व्याख्यातम् । जगतुः । जगुः । गाता ॥१७४ ॥

"एर्लिङि" ( ६ । ४ । ६७ ) "घुमास्था" ( ६ । ४ । ६६ ) इत्यादिह्यनुवर्तते इत्याह—घुसंज्ञानामित्यादि । घुसंज्ञाः दाधारूपाः । मा[1] माने । "गामादाग्रहणेऽव्विशेषेऽपि माङ् माने, मेङ् प्रणिदाने, इत्येतौ न गृह्येते । आत्मनेपदित्वेन मेङः क्ङितोरसंभवात् । अत एव गा ग्रहणे गाङ्गतौ न गृह्येते । यस्तु ( इङश्च[2] गाङ् लिटि, यश्च इणो गा लुङि, इण्वदिकः, इति च तेषां लिटघसंभवात् अग्रहणम् । अतः परिशेषात् ) गै शब्दे इत्यय गृह्यते इत्याह गै इति । यस्तु गा स्तुतौ ( छन्दसि तस्य छान्दसत्वादेव सिद्धम् इति मन्यते उपलक्षण वा तस्यापि गै ग्रहणम् । न च लाक्षणिकत्वाद् गायतेर्ग्रहणेन न ) भाव्यम् । "गामादाग्रहणेष्वविशेषः" ( प० ) इत्युक्तेः । पा[3] इति पा पाने

---

१. गन्यमानो इति क० पु० ।

२. इङश्चत्यारभ्य-परिशेषादित्यन्तो रेखाङ्कितो नास्ति क० पु० ।

३. पा इति नास्ति क० पु० ।

१७६. दाधा घ्वदाप् [ १ । १ । २० ]

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । इति घुसंज्ञाभावात् "गातिस्थाघुपा" ( २ । ४ । ७७ ) इति सिचो न लुक् । अदासीत् । अदासिष्टाम् । "यमरमनमातां सक् च" ( ७ । २ । ७३ ) इत्यनेन सिद्धम् । एत्वं च न । दायात् । धेट् पाने । टो ङीबर्थः ।

---

इत्यस्य ग्रहणमित्याह—पिबतीति । पै ओवै शोषणे इत्यस्य तु लाक्षणिकत्वादग्रहणम् । अत एवास्य "पाघ्रा" ( ७ । ३ । ७८ ) इति पिबादेशः । 'गातिस्था' ( २ । ४ । ७७) इति सिचो लुक् च न भवति । पा रक्षणे इत्यस्य तु लुग्विकरणत्वादग्रहणम् । जहातीति । ओहाङ् गताविन्यस्य निवृत्यर्थः । षोऽन्तकर्मणि । स्यति । असास्यत् । ष्ठ्यै । ष्ठ्यायतीति । "सुब्धातु[1] ष्ठ्यैष्वष्कष्ठिवां सत्वप्रतिषेधः" ( वा० ) इति धात्वादेः षस्य सत्वं न भवति । एतच्च धातुपाठे स्त्यै ष्ठ्यै इति पृथग्धातुद्वयपाठसामर्थ्यादिति तत्रैवोक्तम् । माधवस्त्वाह—षोपदेशस्यापि "धात्वादेः षः सः" ( ६ । १ । ६४ ) इति सत्वात् स्त्यायतीत्येव रूपम् पृथक्पाठप्रयोजन तु तिष्ट्यासति । अतिष्ट्यपदित्यादावादेश सकारत्वात् षत्वसिद्धिः । ये तु अस्य सत्व नेच्छन्ति तेषामज्[2] दन्त्यपराः सादयः षोपदेशा इति लक्षणस्याव्याप्तिप्रसङ्गः । किं च "स्त्यः प्रपूर्वस्य" ( ६ । १ । २३ ) "प्रस्त्योऽन्यतरस्याम्" ( ८ । २ । ५४ ) इत्यादौ स्त्यारूपमापन्नयोर्द्वयोर्ग्रहणम् इति वृत्त्यादिमहाग्रन्थविरोधश्च । एवं चोभयोरपि प्रस्तीतः प्रस्तीम इत्यविशिष्टान्येव निष्ठायां रूपाणि भवन्ति । आचार्यास्तु मन्यन्ते नायं षोपदेशः दन्त्याजन्त्यसादित्वाभावात् । टकारस्यैवोपदेशिकत्वात् । षाट्वर्गस्तवर्गजः इत्यस्याः परिभाषायाः उपदेशेन बाधितत्वात् । एवं चाभ्यासे टकारश्रवणमुपपद्यते । टष्ट्यौ । टष्ट्यतुः । टिष्ट्यासति । टाष्ट्यायते इत्यादि । ष्ठ्याता । टष्ट्यायात् । ष्ठ्यास्यति । दैप् पकारोऽदाबिति विशेषणार्थः ॥१७५॥

दाधा घ्वदाप् । इह दाधा[3] इति रूपानुकरणम् इत्याह—दारूपाधारूपाश्च । धारूपा इति बहुत्वमविवक्षितम् । धाञ्धेटोः द्वयोरेव संभवात् । अत एव काशिकायां दारूपाश्चत्वारो धारूपौ द्वाविति । अनुकार्यबहुत्वाभिप्रायं वा बहुत्वमूह्यम् । ननूपदेशे येषां दाधा इति रूपं ते चेदनुक्रियन्ते ततो दो–देङ्–धेटां न प्राप्नोति । अथ प्रयोगे ततोऽनात्त्वविषये शित्येषां न स्यात् । प्रणिद्यति । प्रणिदयते ।

---

१. सुब्धातुष्ठ्योष्ष्कर्ष्यितां सत्व निषेध इति क० पु० ।

२. अवन्तपरा इति क० पु० ।

३. इदाधा रूप मनुकरणम् इति क० पु० ।

१७७. विभाषा धेट्श्व्योः [ ३ । १ । ४९ ]

आभ्यां परस्य च्लेश्चङादेशो वा स्यात् कर्तरि लुङि परे ।

१७८. चङि [ ६ । १ । ११ ]

चङि परे अनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः । चङो ङित्त्वादातो लोपः । अदधत् । अदधताम् । अदधन् । सिच्पक्षे ।

---

प्रणिधयते । दाणदाञ्धाञां च विकृते न स्यात् । प्रणियच्छति । प्रणिदत्तः । प्रणिधत्त इति । उभयोभयेषां ग्रहणम् । ततो दीङस्तादौ "मीनातिमिनोतिदीङां ल्यपि च" ( ६ । १ । ५७ ) इत्यात्वे कृतेऽस्ति प्रयोगे दारूपमिति प्रसज्येत । ततश्च प्रनिदातेति णत्वं स्यात् । "उपादास्तास्य स्वरः शिक्षकस्य" इत्यत्र "स्थाघ्वोरिच्च" ( १ । २ । १७ ) इति स्यात् । एवं तर्हि नोपदेशे न च प्रयोगे यदा धारूपं तस्येदमनुकरणम् । किं तर्हि यावताम्[1] उपदेशस्थानामनुकरणे क्रियमाणे दाधा इति रूपं संभवति तेषामिह ग्रहणम् । संभवति चैतद्दाणदाञ्धाञामनुकरणे दोदेङ्धेटामपि "प्रकृतिवदनुकरणं भवति" ( प० ) इत्येषामनुकरणं स्यादेव 'आत्त्वेन दाधारूपत्वाविशेषात् । लक्षणप्रतिपदोक्तपरिभाषा त्विह न प्रवर्तते अदाबिति निषेधे दैपः सामान्यग्रहणार्थात् पित्त्वात् । अन्यथा लाक्षणिकत्वात् अस्य ग्रहणेन न भवितव्यमिति किं तदर्थेन पित्करणेन । एवं च प्रनिदारयति उपदास्तेत्यादावपि प्रसङ्गः । नहि दृदीङोरनुकरणस्यात्त्वमस्ति । अदाबित्येतद् व्याचष्टे–दाप् दैपौ विनेति । दाप् लवने । दैप् शोधने । दैपोऽप्यात्वे कृतेऽस्ति दाप्रूपम् । 'नानुबन्धकृतमनेजन्तत्वम्" इति ज्ञापितं चैतत् । "उदीचां माङो व्यतीहारे" ( ७ । ३ । ४६ ) इत्यत्र मेङः कृतात्त्वनिर्देशेन । माङ् माने इत्यस्य त्वयं निर्देशो न भवति तस्य कर्मव्यतिहारे वृत्त्यसंभवात् । प्रणिदापयतीत्यत्र तु प्रकृते नायं निषेधः । अन्तरङ्गायां घुसंज्ञाया बहिरङ्गस्य पुकोऽसिद्धत्वादिति । घुसंज्ञाभावाविति । अदाबिति निषेधेनेत्यर्थः । अवासीदिति । 'यमरम" ( ७ । २ । ७३ ) अदासिष्टामित्यादि । एत्वं च नेति । घुसंज्ञाभावादित्यपेक्ष्यते । धेटष्टो ङीबर्थः । स्तनन्धयीत्यत्र 'टिड्ढाणञ्"(४ । १ । १५) इति ङीप् यथा स्यादित्यर्थः । धयति धयेदित्यादि ॥ १७६ ॥

विभाषा धेट्श्व्योः । धेट् पाने । टुओश्वि गतिवृद्ध्योः । कर्तरि किम् ? आधिपाता गावो वत्सेन । अदधादिति । धाअत् इति स्थिते परत्वान्नित्यत्वाद् धातोर्लोपः । तस्य "द्विर्वचनेऽचि" ( १ । १ । ५६ ) इति स्थानिवद्भावात् धाशब्दस्य द्वित्वम् । ह्रस्वः । "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति धस्य दः ॥ १७७ ॥

---

१. पठितानामिति क० पु० ।

२. इत्यात्त्वेनेति क० पु० ।

१७९. विभाषा घ्राधेट्शाच्छासः [ २ । ४ । ७८ ]

एभ्यः परस्य सिचो वा लुक् स्यात् परस्मैपदेषु । अधात् । अधाताम् ।

१८०. आतः [ ३ । ४ । ११० ]

सिज्लुकि आदन्तादेव झेर्जुस् । "उस्यपदान्तात्" (६।१।९६) अधुः । आदन्तादेवेति किम् ? अभूवन् । लुगभावे अधासीत् । धेयात् । पा पाने ।

१८१. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिब-जिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः [७।३।७८]

पादीनां क्रमात् पिबादय आदेशाः स्युः शिति । पिबादेशोऽदन्तस्तेन नोपधागुणः । पिबति । "गातिस्था" (२।४।७७) इति सिचो लुक् । अपात् । पेयात् । घ्रा गन्धोपादाने । जिघ्रति । अघ्रात् । अघ्रासीत् । जघ्रौ । घ्रेयात् । घ्रायात् । ध्मा शब्दाग्निसंयोगयोः । धमति । अध्मासीत् । ध्मेयात् । ध्मायात् । ष्ठा गतिनिवृत्तौ । तिष्ठति । सिचो लुक्, सत्वे कृते प्रकृतिस्तवर्गः स्यात् । "नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चेषाट्टवर्गस्तवर्गजः" । इति । अस्थात् । अड्व्यवायेऽपि षः । नितष्ठौ । स्थेयात् । म्ना अभ्यासे । मनति । दाण् दाने । प्रणियच्छति । प्रण्यदात् । देयात् । ह्वृ कौटिल्ये । ह्वरति । अह्वार्षीत् । जह्वार ।

---

मवयदिति । "ओऽन्तः" इलोपे च कृते संयोगान्तस्य लोपः । "सिजभ्यस्त" (३।४।१०९) इति जुस् तु न भवति । चङा व्यवधानात् चङन्त्योरेकादेशे कृतेऽपि तस्य पूर्वस्मादपि विधौ स्थानिवत्वाद् व्यवधानमेव । सिच्पक्षे इति । ऽपवादेन चङा मुक्ते पक्षे सिचि कृते इत्यर्थः ॥१७८॥

विभाषा घ्रा । घ्रा गन्धोपादाने । धेट् पाने । शो तनूकरणे । छो छेदने । षोऽन्तकर्मणि । परस्मैपदेषु किम् ? व्यत्यच्छित । व्यत्यधिषाताम् ॥ १७९ ॥

आतः । प्रत्ययलक्षणेन "सिजभ्यस्त" (३।४।१०९) इत्येव जुसि सिद्धे नियमार्थं वचनमित्याह-आदन्तादेवेति । अभूवन्निति । प्रत्ययलक्षणेनात्रोस् प्राप्तः । अनङ्गकार्यत्वाद् "न लुमता" (१।१।६३) इति नास्ति । अधासीदिति । "यमरम" (७।२।७३) इतीट्सकौ । दधौ । दधतुः । धाता । धेयात् इति । "एर्लिङि" (६।४।६७) इत्येत्त्वम् । धास्यति । पा पाने ॥१८०॥

पाघ्राध्मा । पा पाने । पा रक्षणे इत्ययं तु न गृह्यते लुग्विकरणत्वात् । घ्रा गन्धो-

---

१. शिल्यपीति । क०पु०

पादाने। ध्मा शब्दाग्निसयोगयोः। ष्ठा गतिनिवृत्तौ। म्ना अभ्यासे। दाण् दाने। दृशिर् प्रेक्षणे। ऋ गतौ। सृ गतौ। जौहोत्यादिकयोस्तु न ग्रहणम् भवति, शितोऽसम्भवात्। चानशः सभवतीति चेत्। नाशिदिति हि कर्मधारयः। शश्चासाविच्च शित्। शितीति वर्णग्रहणे च तदादिग्रहणादित्संज्ञकशकारादौ विज्ञायते। शित्यचीति विशेषणाद् वा। एवं च शतर्यपि न भवतीति। शद्लृ शातने। षद्लृविशरणगत्यवसादनेषु। भौवादिकयोस्तौदादिकयोश्च ग्रहणम्। सद्लृ विशरणगत्यवसादनेषु। भौवादिकयोस्तौदादिकयोश्च ग्रहणम्। दृशेर्धातुमात्रनिर्देशे कर्त्रर्थाविवक्षायां 'ज्ञापकसिद्ध न सर्वत्र" वा शपाऽभावे सौत्रत्वाद् वा लुकि "सृजिदृशोः" (६।१।५८) इत्यमागमे द्रष्टीति निर्देशः साधुः पश्यादेशस्तु न भवति। "वसस्याचि" (७।३।७२) इत्यतोऽचीत्यनुवृत्तेः दृश्यर्त्ति इति युक्तः पाठः। श्तिपा निर्देशे प्रयोजनाभावात्। शितीत्युक्तेरेव यङ्लुक्यप्रसङ्गात्। लघूपधगुणमाशङ्क्याह-पिबादेशोऽदन्त इति। आद्युदात्तत्व च निपातनोयम्। अन्यथा "धातोः" ६।२।१६२) इत्यन्तोदात्तत्वे सति शपा सह "एकादेश उदात्तेनोदात्तः" इति मध्योदात्तं पदं स्यात्। आद्युदात्तं चेष्यते। तेन नोपधागुण इति। शपा सह "अतो गुणे" (६।१।९७) इति पररूपस्य शिद्ग्रहणेन ग्रहणेऽपि तस्य गुण प्रति स्थानिवत्त्वाद् नोपधागुण इति भावः। अन्येत्वङ्गवृत्तपरिभाषया "लोप· पिबतेरीच्चाभ्यासस्य" (७।४।४) इति निर्देशाद्वा गुणाभावमाहुः। आपाताम्। अनार्धधातुकत्वात् "घुमास्था" (६।४।६६) इति नेत्त्वम्। अपुः "आतः" (३।४।११०) इत्युस्। "उस्यपदान्तात्" (६।१।६६) पपौ। पपतुः। "ऋतो भारद्वाजस्य" (६।४।६७२) इति वेट्। पपिथ। पपाथ। क्रादिनियमादिट्। पपिव। पाता। पेयात्। "एर्लिङि" (६।४।६७) पास्यति। घ्रा। अघ्रासीत्। अघ्रात्। "विभाषा घ्राधेट्शाच्छासः" (२।४।७८) इति वा सिचो लुक्। जघ्राथ। जघ्रिव। घ्राता। घ्रायात्। घ्रेयादित। "वाऽन्यस्य संयोगादेः" (६।४।६८) इत्येत्त्वं वा। घ्रास्यति। ध्मा। अग्निसयोगो मुखवायुनाऽग्नेः संधुक्षणम्। ष्ठा। तिष्ठतीति। तिष्ठादेशः। तिष्ठेत्। सिचो लुक् "गातिस्था"(२।४।७७) इत्यादिना। [1]नन्वस्थादित्ययुक्तम्, धात्वादेः षः से कृते ष्ठिवेरिव [2]ठस्य श्रवणप्रसङ्गात् तस्थावित्यत्र चाभ्यासे टश्रुतिप्रसक्तेश्[3]चेत्याशङ्क्याह-सत्वे कृते इति। यतः षकारादेष्टवर्गस्य तवर्गः प्रकृतिः। "ष्टुना ष्टुः" (८।४।४१) इति ष्टुत्वं तु विकृतिः तच्च सत्वे कृते षयोगस्यापाये नैमित्तिकोऽप्यपैति। ततःप्रकृतिभूतस्तवर्ग एवावशिष्यते इत्यर्थः। ननु स्वाभाविकोऽयं टवर्गो न नैमित्तिक इति चेत्। [3]तत्राह-नकारजावित्यादि। परिभाषेयम्। धातुषु झलि परे यावनुस्वारपञ्चमौ श्रूयेते [4]तौ नकारजौ

---

१. नन्वेस्यादि युक्त मिति क०पु०।२

२. कृतेऽपि तस्येति क०पु०।

३. तव आहेति क० पु०

४. नकारज्जातौ इति ख०पु०।

वेदितव्यौ। यथा स्रसुध्वंसु। अत्र नकारस्य "नश्चापदान्तस्य झलि" ( ८ । ३ । २४ ) इत्यनुस्वारः। तेन तस्यासिद्धत्वात् स्रस्तम् ध्वस्तम् इति 'अनिदिताम्" (६।४।२४) इति नलोपः सिद्धयति [1]पञ्चमाः ञमङ्णनमाः यथा अनुपञ्ज दम्भ, अङ्क, लुण्ट, ग्रन्थ इति। अथ पञ्चमोऽपि नकारजः द्रष्टव्यः। तेनाक्रम्, सक्रम, देभतुः, श्रेथतुरिति न लोपः सिद्धयति। आञ्चकदित्यत्र ञकारस्य "नन्द्राः" ( ६ । १ । ३ ) इति निषेधात् द्वित्वाभावः सिद्धयति। एषु "अनुस्वारस्य ययि परसवर्णः" ( ८ । ४ । ५८ ) इति कृतस्य पञ्चमस्यासिद्धत्वाद् नकार एवायामति। यद्यपि अनुस्वारस्य नकारजत्वे उक्ते तन्मूलकस्य पञ्चमस्याप्यर्थात्तत् सिध्यति। तथापि पञ्चमस्य स्वाभाविकत्वं मा सम्भावीति पृथगभिधानम्। अत्र झलीति विशेषणं स्पष्टार्थम्। अझल्यनुस्वारस्या-सभवात्। पञ्चमस्य तु सत्यपि सभवेऽनिष्टादर्शनात्। प्रमितमित्यादौ यस्य नकारजत्वे ' उपसर्गादसमासेऽपि णोपदेशस्य" ( ८ । ४ । १४ ) इति णत्वप्रसङ्ग इति चेत्। मैवम्। परिभाषा खल्वनियमप्रसङ्गे नियमकारिणी। ततश्च यत्र दम्भुप्रभृतिषु मकारः स्वाभाविको नकारजश्च सभाव्यते तत्रैवेयमुपतिष्ठते। न च माप्रभृतौ तथा शङ्काबीजमस्ति इति नकारजत्व नोपदिश्यते। तथा च चकारे परे यः शकारः स सकाराज्जातो वेदितव्य.। तेन व्रश्चे. वृक्णः मुवृगित्यादौ "स्कोः" ( ८।२।२६ ) इति सलोपः सिध्यति। एतच्चोपलक्षणम्। तेन [2]चवर्गयोगेऽपि च'वर्गः तवर्गजो ज्ञेयः। यथा उज्झ त्यागे। दोपधोऽयम्। तस्य [3]उज्जिझिषति। उज्झतीत्युत् इति सिद्धम्। तथा [4]पात् 'रेफषकाराभ्यां परो यष्टवर्ग. सटवर्गयोगे तवर्गाज्जातो ज्ञेयः। [5]तेनोर्णोतेः स्नातेश्च द्वित्वे सत्वे नत्वे च कृते नकारसकारश्रवणं भवति। उर्णुनाव तिष्णासतीत्युपलक्षणम्, तेन टवर्गयोगेऽपि यष्टवर्गः सोऽपि तवर्गजो ज्ञेयः। यथा अट्ट अभियोगे। चुड्ड भावकरणे इति। तेन क्विपि अत् चत् इति भवति। तदेवं तिष्ठतेः सत्वे कृते प्रकृतिस्तवर्गः स्यादित्युपपन्नमिति भाव.। अस्थादिति। लुङ्यडागमः। अड्व्यवायेऽपि षः इति "प्राक् सितादड्व्यवायेऽपि"(८।३।६३) इत्यनेन। अभ्यासव्यवायेऽपि षः इति। "स्थादिष्वभ्यासेन चाभ्यासस्य" ( ८ । ३ । ६४ इत्यनेन। तिष्ठौ इति। "आत औ णलः" ( ७ । १ । ३४ ) इत्यौत्वे वृद्धयेकादेशस्य 'द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् स्था इत्यस्य द्वित्वे "शर्पूर्वाः खयः ( ७ । ४ । ६१ ) इति थकारस्य शेषः। ( ह्रस्वः। चर्त्वम्। अभ्यासात् परस्य षत्वे ष्टुत्वम्। तस्थतुरित्यादि। स्याता। स्येयादिति। 'एर्लिङि" ( ६ । ४ । ७६ ) इत्येत्वम्। स्यास्यति। स्ना अभ्यासपारम्पर्येण-

१. पञ्चमा इत्यारभ्य सिध्यतीत्यन्तो नास्ति क० पु०।

२. चवर्ग इतिनास्ति क० पु०।

३. उज्जिझषतीति क० पु०।

४. तथापतिन वृदर्गयोगे यष्टवर्ग, सोऽत्र वर्गजोज्ञेय इति क० पु०।

५. तेनेत्यारभ्य-ज्ञेय इत्यन्तो रेखाङ्कितः नास्ति क० पु०।

१८२. ऋतश्च संयोगादेर्गुणः [ १ । ४ । १० ]

संयोगादेर्ऋदन्तस्य गुणः स्याद् वृद्धिनिमित्ते लिटि परे। जह्वरतुः। जह्वरुः। "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति थलि नेट्। जह्वर्थ। क्रादिनियमादिट्। जह्वरिव। जह्वरिम। ह्वर्ता।

१८३. गुणोऽर्तिसंयोगाद्योः [ ७ । ४ । २९ ]

अर्त्तेः संयोगादेर्ऋदन्तस्य गुणः स्याद् यकि असार्वधातुके लिङि च। ह्वर्यात्।

---

वर्तनम्। मनतीति। "पाघ्राध्मा" इति मनादेशः। अम्नासीत्। अम्नासिष्टाम्। मम्नौ। मम्नतुः। मम्निथ। मम्नाथ। म्नाता। म्नेयात्। म्नायात् "वाऽन्यस्य" (६ । ४ । ६८ इत्येत्त्व वा। म्नास्यति। दाण्। णकारो "दाणश्च सा चेच्चतुर्थ्यर्थे" ( १ । ३ । ५ इति विशेषणार्थः। प्रणियच्छतीति। "पाघ्राध्मा" ( ७ । ३ । ७८ ) इति यच्छादेशे "नेर्गदनद" ८।४।१७) इति णत्वम्। प्रण्यदात्। लुङि "गातिस्था" ( २ । ४ । ७७ ) इति सिचो लुक्। अदाताम्। अदुः। ददौ। दाता। देयात् इति। "एर्लिङि" ( ६ । ४ । ६७) इत्येत्वम्। ह्वृ। ह्वरति इति। शपि "सार्वधातुक" (७ । ३ । ८४ इति गुणः। रपरः। अह्वार्षीदिति। लुङि सिचि वृद्धावट्। "अस्ति-सिचः" ( ७ । ३ । ९६ ) इतीट्। "एकाच" (७ । २ । १०) इति सिचो नेट्। षत्वम्। अह्वार्ष्टाम्। जह्वारेति। णल् वृद्धिः। तस्याः स्थानिवत्वात् ह्वृशब्दस्य द्वित्वम्। उरत्। हलादिः शेषः। "कुहोश्चु" (७ । ४ । ६२) इति हस्य झः। तस्य। "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति जश्त्वेन जः॥ १८१॥

ऋतश्च। ऋतः[1] प्रतिषेधविषयेऽपि गुणार्थोऽयमारम्भः। ननु च जह्वारेति वृद्धिविषयेऽपि परत्वाद् गुणेन भाव्यमित्याशङ्क्याह—अवृद्धिनिमित्ते इति। पूर्वविप्रतिषेधेन स्वविषये वृद्धिरेव भवतीति भावः। यद्यपि वृद्धिविषये परत्वाद् गुणे रपरत्वे च कृते "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्ध्यापि सिद्ध तथापि अवृद्धिनिमित्ते लिटि गुणविधिरर्थवान्नान्यत्रेति भावः। जह्वरतुरिति। द्वित्वात्परत्वादतुसि गुणे तस्य स्थानिवत्त्वाद् द्वित्वे हलादिशेषादि। गुणविधानसमये संयोगादित्वमस्त्येव। अङ्गस्य कृतेऽपि वा द्वित्वे। हलादि शेषेऽपि कृतेऽङ्गस्य साभ्यासस्य भूतपूर्वसंयोगादित्वमाश्रित्य गुणो भविष्यति॥ ८२॥

गुणोऽर्त्ति। ऋ गतिप्रापणयोः। भ्वादिः ऋ सृ गतौ ह्वादिः। द्वयोरप्ययं छान्दसेन लुका निर्देशः। ऋग्रहणमेव तु न कृतं वैचित्र्यार्थम्। अकारे एव विधेये गुणग्रहणं

---

१. नमोर्दिति इति क०पु०।

२. कित इति क० पु०।

### १८४. ऋद्धनोः स्ये [ ७ । २ । ७० ]

ऋतो हन्तेश्च परस्य स्यस्य इट् स्यात् । हरिष्यति । स्वृ शब्दोपतापयोः। स्वरति । स्वरतिसूतीति वेट् । अस्वारीत् । अस्वार्षीद् । स्वर्ता । स्वरिता । स्वरतेः स्यस्य नित्यमिड् वाच्यः। स्वरिष्यति । सृ गतौ ।"पाघ्राध्मा"(७।३।७८) इति धौरादेशः धावति । सर्तेः शीघ्रगतावेवायमिष्टः । अन्यत्र तु सरति ।

### १८५. सर्तिशास्त्यर्तिभ्यश्च [ ३ । १ । ५६ ]

एभ्यः परस्य च्लेरङादेशः स्यात् । पृथक्सूत्रकरणादुभयपदेषु ।

### १८६. ऋदृशोऽङि गुणः [ ७ । ४ । १६ ]

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । असरत् । ऋसृभ्यामङ् वेति केचित्। असार्षीत् । सस्रतुः । ससर्थ । क्रादित्वान्नेट् । ससृव ।

---

चिन्त्यप्रयोजनम् । असार्वधातुके लिङि इति । यीत्यनुवृत्तेर्यकारादावेव भवति । तेनेह न सस्तृषीष्ट । ह्वर्यादिति । यासुटः किन्वात् "क्ङिति च" ( १ । १ । ५ ) इति तदपवादोऽनेन गुणः । रपरत्वम् ॥ १८३ ॥

ऋद्धनोः स्ये. । ऋत् ऋवर्णान्तः । हन् हिंसागत्योः । "एकाच" ( ७।२।१० ) इतोड्निषेधे प्राप्ते वचनम् । अत एव ऋतिः सौत्रो घृणारूपार्थो गृह्यते तस्य सेट्त्वेन विधिर्वैयर्थ्यात् । स्वृ । स्वरति । स्वरेत् । सस्वार । सस्वरतुः । थलि क्रादिदियमाधित्यमिट् । सस्वरिथ । केचित् "स्वरति" ( ७।२।४४ ) अत्रापि विकल्पमाहुः । सस्वर्थेत्यपि भवति । "गुणोऽर्त्ति" (७ । ४ । २६) इति गुणः । स्वर्यात् । "स्वरति" ( ७ । २ । ४४ ) आदिनाऽस्यापि विकल्पमाशङ्क्याह-स्वरतेरिति । परत्वाद् "ऋद्धनोः स्ये" ( ७ । २ । ७० ) इत्येतदेव विकल्प बाधते इत्यर्थः । सृ ॥१८४॥

सर्तिशा । सृ गतौ । शासु अनुशिष्टौ । ऋ गतौ । "पुषादिद्युतादिलृदित् सर्तिशास्त्यर्तिभ्यश्च परस्मैपदेषु" इत्येकयोगे कर्तव्ये पृथक् योगकरणादनुमीयते । अत्र सूत्रे परस्मैपदेष्विति न संबध्यते इति न विशेषेणेदं विधानमित्याह—पृथगित्यादि । ऋस्टभ्यां वेति केचित् । शासिना लुग्विकरणेन साहचर्यात् सत्यर्तीति लुग्विकरणयोरेव ग्रहणं न भौवादिकयोरिति वादिनः साम्प्रदायिकाः नानयोरङमिच्छन्ति । एवं च द्वैरूप्यमवर्जनीयमित्यर्थाद्विकल्पः फलतीत्यर्थः । असार्षीत् इति सिचि वृद्धिः । "एकाच उपदेशः" ( ७।२।१० इति नेट् । ससार । सस्रतुरिति । परत्वाद् यणि तस्य "द्विर्वचनेऽचि" ( १।१।५९ ) इति स्थानिवत्त्वात् सृ इत्यस्य द्वित्वम् ॥१८५॥

ननु ससर्थ ससृवेत्यादौ "एकाच" (७।२।१०) इति निषिद्धोऽप्येट् इत्यादिनियमात् किं न स्यात् पपिथेतिवत् इत्याशङ्क्याह—क्रादित्वान्नेडिति । क्रादिष्वस्य पाठात्तद्भिन्नेष्वेवेट प्रतिप्रसवादित्यर्थः । सर्ता ॥१८६॥

## १८७. रिङ् शयग्लिङ्क्षु [ ७ । ४ । २८ ]

श यकि यादावसार्वधातुके लिङि च परे ऋतो रिङादेशः स्यात्। रीङं बाधित्वा रिङ्विधिसामर्थ्याद् "अकृत्सार्वधातुकयोः" (७ । ४ । २५) इति न दीर्घः । स्रियात् । सरिष्यति । ऋ गतौ प्रापणे च । ऋच्छति । आरत् । आर्षीत् । द्वित्वम् । उरत् । वृद्धिः । आर ।

## १८८. ऋच्छत्यृताम् [ ७ । ४ । ११ ]

तौदादिकऋच्छेर्ऋधातोर्ॠतां चावृद्धिनिमित्ते लिटि गुणः स्यात् । आरतुः । आरुः ।

---

रिङ्शयक् । श "तुदादिभ्यः शः" ( ३।१।७७ ) "कृञः श च" ( ३।३।१०० ) यक् "सार्वधातुके यक्" ( ३।१।६७ ) यादौ किम् ? कृपोष्ट ? असार्वधातुके किम् ? पिपृयात् । लिङि किम् ? कार्यम् । स्त्रियादिति । कित्त्वाद् गुणे निषिद्धेऽपि "अकृत्सार्वधातुकयोः" ( ७।४।२५ ) इति दीर्घे सति "ॠत" इतीत्त्व स्यादिति दीर्घापवादो रिङ् विधीयते । अथ कृतेऽपि रिङि "पुनः प्रसङ्ग" (प० इति विज्ञानात् दीर्घः स्यादित्याह-रीङं बाधित्वेति । अन्यथा "रीङ् ऋतः" ( ७।४।२७ ) इति रीङेव सिद्धे किमादेशान्तरकरणेनेत्यर्थः। सरिष्यतीति । "ऋद्धनोः स्ये:"(७।२।७०) इतीट् । ऋ । ऋच्छतीति "पाघ्रा" ( ७ । ३ । ७८ ) इति ऋच्छादेशः । आरदिति । लुङि "सर्तिशास्त्यर्तिभ्यश्च" ( ३।१।५६ ) इत्यङ् । "ऋदृशोऽङि गुणः" ( ७ । ४ । १६ ) इति गुणः । "आडजादीनाम्" (६ । ४ । ७२ आर्षीत् । ऋसृभ्यामङ् वेति केचिदित्युक्तः सिच्पक्षे वृद्ध्यादि द्वित्वमित्यादि । अत्र परत्वाद् वृद्धौ कृतायां तस्याः स्थानिवत्त्वाद् ऋशब्दस्य द्वित्वम् । तत उरदत्त्वे हलादिः शेषे "अत आदेः" ( ७।४।७० ) इत्यभ्यासदीर्घे च कृते पुनरुत्तरखण्डवृद्धौ रपरत्वे च सवर्णदीर्घः । एवमारतुः । अरिथेत्यादि गुणविषयेऽप्यूह्यम् ॥१८७॥

ऋच्छत्यृताम् । तौदादिकऋच्छेरिति ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु इत्यस्य एतेन ऋच्छादेशस्य न ग्रहणम्। तस्य लिट्यसम्भवात् । नापि तेनोपलक्षितस्य भौवादिकस्यार्त्तेर्ग्रहणम् । ऋधातोरप्यत्र पृथक्प्रश्लेषात् । स च बहुवचननिर्देशादवसीयते तदेतदाह—ऋधातोरिति । अविशेषाद् भौवादिकजौहोत्यादिकयोर्द्वयोरपि ग्रहणम् । ऋ इति वर्णग्रहणं तु न सम्भवति । ऋकारान्तानां पृथग् ग्रहणात् । अवृद्धिनिमित्ते इति । वृद्धिनिमित्ते तु पूर्वविप्रतिषेधेन वृद्ध्या बाधितत्वादित्यर्थः । निमित्तशब्दोऽत्र कुर्वद्रूपवाची । तेनानर्च्छेत्यत्र णिति वृद्धियोग्यत्वेऽपि गुणो भवति । आरतुरिति यणि वा परत्वाद् गुणे रपरत्वे च द्वित्वम् । हलादिः शेषः । "अत आदेः" ( ७।४।७० ) इति दीर्घः । सवर्णदीर्घः । नन्वसत्यपि गुणे द्वित्वात्परत्वादादौ यणाद्येव । तस्य द्वित्वं

१८९. इडत्त्यर्तिव्ययतीनाम् [ ७ । २ । ६६ ]

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आरिथ। आरिव। अर्ता। "गुणोऽर्ति" ( ७।४।२९ ) इति गुणः। अर्यात्। अरिष्यति। श्रु श्रवणे।

१९० श्रुवः शृ च [३ । १ । ७४]

श्रुवः श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके परे शृभावश्च। शृणोति। शृणुतः।

---

प्रति स्थानिवत्त्वमाह-द्वित्वे कृते पुनरादेशरूपमेवावतिष्ठते इति न्यायात्। ऋ ऋतुसिति स्थिते उरदत्वहलादिशेषाभ्यासदीर्घैरारतुरिति सिद्ध्यत्येव तत् किं ऋकारप्रश्लेषेण। सत्यम्। पूर्वं प्रवृत्तस्यापि यणः स्थानिवत्त्वेन निवृत्तौ ऋइत्यस्य द्वित्वे ऋ ऋअतुसिति स्थिते वार्णादाङ्गं बलीयः" (प०) इति पुनः प्रवृत्त यणं बाधित्वोरदत्व प्राप्तम्। तत्परमपि बहिरङ्गमित्यन्तरङ्गत्वेन वार्णे सवर्णदीर्घे कृते स यद्यभ्यासग्रहणेन गृह्येत तत उरदत्वहलादिशेषाभ्यासदीर्घेषु कृतेषु "आतो लोपः" ( ६।४।६४ ) इत्यालोपे अतुरिति प्रत्ययमात्र श्रूयते। अथ धातुग्रहणेन गृह्येत तत ऋकारान्तत्वात् गुणे कृते अतुरित्यनिष्ट प्रसज्येत। अतः प्रश्लेषेण पूर्वं गुण उच्यते। एतच्च कृते द्विर्वचनेऽजादेशः पुन प्रवर्तते इति पक्षे प्रयोजनम्। यदा तु कृते द्वित्वेऽभ्यासदीर्घसवर्णदीर्घयोः "वस्वेकाजाद्धसाम्" ( ७।२। ३० ) इतीटि आरिवानिति प्रयोजन ज्ञेयम्। अन्यथा पूर्वोपादितप्रक्रियया आरिवानिति स्यात् ॥१८ ॥

इडत्त्यर्तिव्ययतीनाम्। अद् भक्षणे। ऋ गतौ भ्वादिर्ह्वादिश्च। व्येञ् संवरणे। अर्तिव्ययत्योः "ऋतो भारद्वाजस्य" ( ७।२।६३ ) इति नियमादिटि विकल्पेन प्राप्ते नित्यार्थम्। अत्तेस्तु नित्यं प्रतिषेधे प्राप्ते विध्यर्थं वचनमित्याह-नित्यमिट् स्यात् इति आरिवेतो। क्रादिनियमादिट्। अरिष्यति। "ऋद्धनोः स्ये" ( ७। ।७० इतीट् ॥ १८॥

श्रुवः शृ च। शपि प्राप्ते श्नुः। विधीयते। शृभावश्चेति। श्रुव इत्यपेक्षते। पञ्चमीनिर्दिष्टस्यापि [1]षष्ठ्यन्ततया विपरिणामात्। चकारः श्नुप्रत्यय [2]सन्नियोगार्थः। अस्य भ्वादिपाठे प्रयोजनं चिन्त्यम्। स्वादिपाठेनापि[3] श्नोः सिद्धे शृभाव एव विधेय इति। कौमाराः भ्वादिषु पाठसामर्थ्यादस्माच्छपमप्युदाहरन्ति इति। शृणोतीति। श्नोर्ङित्वाद् धातोर्न गुणः। श्नोस्तु पित्सु गुणः णत्वम्। शृणुत इति। तसः ङित्वान्न श्नोर्गुणः। हुश्नुवोः सार्वधातुके इति। "एरनेकाचोऽसंयोगपूर्वस्य" ( ६ । ४ । ८२ )

---

१. षष्ठ्यन्त तयेति क० पु०।

२. सन्निधि योगार्थ इति क०पु०।

३. नौपि इति क० पु०।

## १९१. हुश्नुवोः सार्वधातुके [ ६ । ४ । ८७ ]

हुश्नुवोरनेकाचोऽसंयोगपूर्वोवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति ।

## १९२. लोपश्चास्यान्यतरस्यां म्वोः [ ६ । ४ । १०७ ]

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यात् म्वोः परयोः । शृण्वः । शृणुवः । शृण्मः । शृणुमः । परत्वाद् गुणेन लोपो बाध्यते शृणोमि । शृणुयात् । पररूपत्वम् । शृणुयुः ।

## १९३. उतश्च प्रत्ययादसंयोगपूर्वात् [ ६।४।१०६ ]

असंयोगपूर्वात् प्रत्ययस्योकाराद् परस्य हेर्लुक् स्यात् । शृणु । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणव । अशृणुव । अशृण्म । अशृणुम । अश्रौषीत् । शुश्राव । शुश्रोथ । शुश्रुव । श्रूयात् । षु प्रसवे ।

---

"श्नो" ( ६।४।८२ ) इति चानुवर्तते "अङ्गस्य" ( ६।४।१ ) इति च । तत्रानेकाज्ग्रहणमङ्गस्य विशेषणं हुश्नुभ्यामपि तद्विशेष्यते । श्नु इति प्रत्ययग्रहणात् तदन्तविधिः। ततश्च हुधातुरूपं यदङ्गमनेकाच् श्नुप्रत्ययान्तं च यदङ्गमनेकाच्च तयोरित्यर्थं इत्याह-हुश्नुवोरित्यादि । अनेकाचोरिति अङ्गयोरिति शेषः । असंयोगपूर्वग्रहणं त्वोर्विशेषणम् । तेनाप्नुवन्ति, आप्नुवन्ति इत्युभयत्रापि निषेधसिद्धिरित्याशयेन व्याचष्टे-असंयोगपूर्वोवर्णस्येति । सार्वधातुकग्रहणं ह्वर्थम् । जुहुवतुरित्यादौ मा भूदिति । न श्न्वर्थम् अव्यभिचारात् । ([1]नन्वनेकाच् इति नानुवर्त्यं सार्वधातुके हुश्नुवोरेकाचोऽसंभवात् । सत्यं) हुश्नुग्रहणं यङ्लुको भाषाविषयत्वज्ञापनार्थम् इति भाष्ये स्थितम् । तच्चानेकाज्ग्रहणाननुवृत्तौ बाध्येत । अन्ये तु श्नोः सार्वधातुके संभवात् । योयुवतीत्यादेरनेकाचो व्यावर्त्यस्य संभवात् । सत्यां त्वनेकाच इत्यस्यानुवृत्तौ यङ्लुगेव व्यावर्त्यं परिशिष्यते, स च छन्दस्यार्धधातुकत्तो भाषाविषयत्वं फलतीति सूचयितुमनेकाच इत्यस्यानुवृत्तिराचार्यैर्दर्शिता । एतच्च यङ्लुकि विवरिष्यामः शृण्वन्तीति । उवङि प्राप्ते यण् विधीयते ॥१९१॥

पररूपत्वमिति । शृणुया उसिति स्थिते "उस्यपदान्तात्" ( ६ । १ । ९६ इत्यनेन । [2]यासुटो ङित्त्वान्न गुणः ॥ १९२ ॥

---

१. रेखाङ्कित. नन्वनेकाच इत्यारभ्य बाध्येत इत्यन्तो नास्ति क० पु० ।

२. यासुटो इत्यारभ्य—लुङोत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

१९४. स्तुसुधूञ्भ्यः परस्मैपदेषु [ ७ । २ । ७२ ]

एभ्यः सिच इट् स्यात् परस्मैपदेषु । असावीत् । सुषुविव । रुद्रुस्नुधातूनां लिटं विना इड् वेति केचित् । सोता । सविता । स्रु गतौ ।

१९५. णिश्रिद्रुस्रुभ्यः कर्तरि चङ् [ ३ । १ । ४८ ]

ण्यन्तात् श्र्यादिभ्यश्च्लेश्चङादेशः स्यात् कर्त्रर्थे लुङि । ङित्वम् । उवङादेशः । असुस्रुवत् । "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति प्राप्त इट् क्रादिसूत्रेणापोद्यते । सुस्रोथ । सुस्रुव । स्रूयात् । द्रु गतौ । अद्रावीत् । अद्रौषीत् । दुद्रविथ । दुद्रोथ । मतान्तरे नित्यमिट् । दुद्रुविव । द्रोता । मतान्तरे इड् वा । द्रविता । द्रु गतौ । "णिश्रि" ( ३ । १ । ४८ ) इति चङ् । अदुद्रुवत् । दुद्रोथ । दुद्रुव । द्रोता । गम्लृ गतौ । "इषुगमियमां छः" ( ७ । ३ । ७७ ) इति छः । गच्छति ।

---

गुणावादेशाविति । शृणुमि इति स्थिते "मेर्निः" ( ३ । ४ । ८९ ) "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२, "सार्वधातुक" ( ७ । ३ । ८४ ) इति गुणः । "एचोऽयवायावः" ( ६ । १ । ७८ ) । शृणुयाव इति आटः पित्त्वेनाङित्वाद् गुणः ।

अश्रौषीदिति । लुङि सिच् अनिट् सिचि वृद्धिः । षत्वम् । अश्रौष्टाम् । अश्रौषुः । शुश्रोथेति । क्रादित्वादनिट्त्वम् । अत एव भारद्वाजनियमादपि नेट् । श्रूयादिति "अकृत्सार्व" ( ७ । ४ । २५ ) इति दीर्घः । श्रोष्यति । अश्रोष्यत् । षु । सवति । सवेत् ॥ १९३ ॥

स्तुसुधूञ्भ्यः । ष्टुञ् स्तुतौ । षु प्रसवे । षुञ् अभिषवे । द्वयोर्ग्रहणम् । निरनुबन्धकपरिभाषायाः प्रत्ययग्रहणविषयत्वात् । धूञ् कम्पने । आद्ययोः "एकाच" ( ७ । २ । १० ) इति निषेधे प्राप्ते धूञश्च "स्वरति" ( ७ । २ । ४४ ) इत्यादिना विकल्पे प्राप्ते विधिरयम् । सुषाव । "आदेश" ( ८ । ३ । ५ ) इति षत्वम् । सुषुविथ । स्वमते तासौ नित्यानिट्त्वाद् थलीड्विकल्पः । सुषोथ । सुषुविवेति । क्रादिनियमान्नित्यमिट् ।

स्तुसुधूञ्भ्यः । रुद्रुस्नुधातूनामिति । रु शब्दे । द्रु गतौ । षु प्रसवे । षुञ् अभिषवे । णु स्तुतौ । केचिदिति । त्रिमुनीतरे । सूयात् । सविष्यति । सोष्यति । स्रु गतौ । स्रवति । स्रवेत् । णिश्रिद्रुस्रुभ्यः । णोति प्रत्ययग्रहणात्तदन्तविधिरित्याह—ण्यन्तादिति ।

श्र्यादिभ्य इति । श्रिञ् सेवायाम् । द्रु गतौ । स्रु गतौ । एभ्यश्चेत्यर्थः । कर्तरीति किम् ? अस्रविषातां देवौ भक्तेन । कर्तरीत्यनुवृत्तिः प्राक् "चिण् भावकर्मणोः"

## १९६. पुषादिद्युताद्यॢदितः परस्मैपदेषु [३।१।५५]

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात् परस्मैपदेषु। अनङोऽत्युक्ते रुपधालोपो न। अगमत्। जगाम। "गमहनजन" (६।४।९८) इत्युपधालोपः। तस्य "द्विर्वचनेऽचि" (१।१।५९) इति स्थानिवत्त्वात् साच्कस्य द्वित्वम्। जग्मतुः। जग्मुः। जगमिथ। जगन्थ। जग्मिव। जग्मिम।

---

(३।१।६६) इति भाषावृत्तौ पुरुषोत्तमदेवः। तेनावच्यतां श्लोकौ देवदत्तेनेत्यङ् न भवति ॥ १६४॥

द्विर्वचनमिति। 'चङि" (६।१।११) इत्यनेन। उवङादेश इति। अशुस्तु अत् इति स्थिते चङो ङित्त्वात्तदाश्रये गुणे निषिद्धेऽपि तिबाश्रय उपधागुणः प्राप्नोति। तमपि बहिरङ्गं बाधित्वाऽन्तरङ्गत्वादुवङेव भवतीत्यर्थः। दु। अदावीत् इति। रुद्रसुन्विति वेट्। दुदविथेति। स्वमते भारद्वाजनियमाद्वेट्। मतान्तरेऽपोति। लिटं विनेत्युक्तेः। रुद्रुसुन्वितीड्विकल्पो वस्नसोर्नेत्यर्थः। गम्लृ लृदित् ॥ १६५॥

पुषादि। 'नन्दिग्रहिपचादिभ्यः" (३।१।१३४) इतिवदेकेनैवादिशब्देन प्रत्येकं सम्बन्धादेव सिद्धे द्वयोरुपादाने फलं चिन्त्यम्। इह चतुर्विधः पुषादिः। पुष धारणे। दल विदरणे इत्यादि चुरादिः। पुष पुष्टौ। श्रिषु श्लिषु दाहे इत्यादि स्वादिः। पुषु पुष्टौ इत्यादि क्र्यादिः। पुष पुष्टौ। शुष शोषणे इत्यादि दिवादि। तत्र चुरादेः "णिश्रि" (३।१।४८) इति चङा भाव्यम्। अपूपुषदिति। णिचा च्लेर्व्यवहितत्वादसंभवः। भ्वादेस्तु ग्रहणेन पुषाचनन्तरमेव पाठात् द्युतादीनां पृथग्ग्रहणं न कुर्यात्। क्र्यादिषु चत्वार एव पठ्यन्ते। यदि च त एव जिघृक्षिताः स्युस्तर्हि लृदित एव तान् कुर्यात्। स्वरितत्वादेव तेनैव सिद्धेः। अतः परिशेषाद्दिवादय एव गृह्यन्ते। के च पुनस्ते इत्यत आह—श्यन्विकरणा इति। श्यन् विकरणो येभ्यस्ते श्यन्विकरणाः। प्रकृतिप्रत्यययोरन्तरा भवन् सहकारी विकरणस्तेन भ्वादेः अयादे अपोषीदित्येव भवतीति भावः। द्युतादेरिति। द्युत दीप्तावित्यादेः। लृदितश्चेति। लृदित्संज्ञको यस्येति। लृदित्तृतीयं निमित्तम्। अथ पुषादयो द्युतादयश्च लृदित एव कस्मान्न पठिताः? अत्र हरदत्तः अशक्यास्ते तथा पठितुम्। आदितामीदितामोदितामूदितां च तत्र भावात्। यद्यपि टुओ स्फूर्जा इत्यादिवत् त्रिलृष्विदा इत्येवमनेकानुबन्धा अपि पठितुं शक्यास्तथापि गौरवं प्रसज्येत इति तदाशयो ज्ञेयः। दैवादिकाः पुष्, शुषि, तुष्, दुषु, श्लिष्, शक्, स्विद्, क्रुधक्षुधः, शुध्, षिध, रध, नश्, तृप, दृप, द्रुह, मुह, ष्णुह, ष्णिह, शम्, तम्, दम्, श्रमु, भ्रमु, क्षमु, क्लमु, मदी असु. यसु, तसुवसः। व्युष, प्लुष, विस्, विसु, कुस, बुस्, मुस, मसी, लुठ, तृप, मृष, भ्रंश, वृश, कृश, तृप हृष रुष, रिष, डिप्, कुप्

१९७. गमेरिट् परस्मैपदेषु [ ७ । २ । ५८ ]

गमेः सकारादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । परस्मैपदग्रहणं तङानयोरभावं लक्षयति। तेनासत्यपि परस्मैपदे इट् स्यात् । आत्मनेपद्योग्याद्वेति केचित् । सृप्लृ गतौ । सर्पति । लृदित्त्वादङ् । असृपत् । "कृपमृश" (वा०) इति वा सिच् । "अनुदात्तस्य च" ( ६ । ४ । ८८ ) इत्यम् वा । अस्राप्सीत् । असाप्सीत् । ससर्पिथ । ससृपिव । स्रप्ता । सर्प्ता । स्कन्दिर् गतिशोषणयोः ।

---

गुप् रुप् लुपः । लुभत्तुभौ णभतुभौ क्लिदमिदक्ष्विदा ऋधगृधपुषादयः । लुङि एभ्योऽङ् स्यात् । पञ्चषष्टिः । अन्ये त्वाहुः शमावधेः द्युतश्वितामिदष्विदा क्ष्विदारच् घुट् रुट् लुट् लुठ्, शुभ क्षुभ णभ तुभ स्रस्, ध्वस, भ्रंस् श्रम्भ वृतु वृध, स्यन्दू कृप द्युतादय । नन्वङि सति "गमहनजनखनघसां लोपः क्ङित्यनङि" ( ६ । ४ । ९८ ) इत्युपधालोपः किं न स्यादत आह—अनङीत्युक्तेरिति । अगमदिति । लुङि च्लेः सिचोऽपवादः लृदित्वादङ् । जगामेति । णलि "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्धिः । द्वित्वम् । हलादिः शेषः । कुहोश्चुः । उपधालोप इति । परत्वान्नित्यत्वाच्च पूर्वमिति भावः । यद्येवं तत्र कृते "एकाच" ( ६ । १ । १ ) इति विधीयमानं द्वित्वं न स्यादत आह—तस्येति । साच्कस्य गम् इति समुदायस्य । जगमिथ । जगन्थ । "उपदेशेऽत्वतः" ( ७ । २ । ६२ ) इति निषिद्धोऽपीट् "ऋतो भारद्वाजस्य"(६।२।६३) इति विकल्प्यते । इडभावे "नश्चापदान्तस्य" ( ८ । ३ । २४ ) इत्यनुस्वारः । "अनुस्वारस्य ययि परसवर्णः" ( ८ । ४ । ५८ ) । जग्मिवेति । क्रादिनियमादिट् गन्ता ॥ १९६ ॥

गमेरिट् । गमिरिहादेशोऽनादेशश्च गृह्यतेऽविशेषात् सकारादेरिति । "सेऽसिचि कृत" ( ७ । २ । ५७ ) इत्यतोऽनुवृत्तेः । सिचोऽस्मादसम्भवात् असिचीति न संबध्यते । ननु परस्मैपदेष्वित्युच्यते तेन जिगमिषितुम् जिगमिष ्त्वमित्यादौ कृति परस्मैपदे लुकि च न स्यादत आह—परस्मैपदग्रहणमित्यादि । ततः किमिष्टं न सिद्ध्यतीत्यत आह—तेनेति । असत्यपि अनुत्पन्ने लुकि चेत्यर्थः । तथा च वार्तिकं "सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधः" ( वा० ) इति । इदं चात्मनेपदेऽपि इण्निषेधे एवारभ्यमाणमर्थाद् बोधयति । एवं स्वमतमुक्त्वा[1] पदशेषकारस्य मतमाह—आत्मनेपदयोगाद्वेति । यत्रात्मनेपदस्य निमित्तमस्ति न च तत्प्रयुज्यते स तद्योग्य

---

१. लृदित्वादङ् इति नास्ति क० पु० ।

२. पदे इत्यधिकः क० पु० ।

३. पदशोषकारस्त्विति क० पु० ।

## १९८. वेः स्कन्देरनिष्ठायाम् [ ८ । ३ । ७३ ]

वेः परस्य स्कन्देः षत्वं वा स्यात्, न तु निष्ठायाम् । विस्कन्दति । विष्कन्दति । निष्ठायां तु ।

## १९९. परेश्च [ ८ । ३ । ७४ ]

अस्मात् स्कन्देर्वा षत्वम् । परिस्कन्दति । परिष्कन्दति । निष्ठायामपि

उच्यते । स हि एवं मन्यते गम्युपलक्षणार्थं परस्मैपदस्य ग्रहणम् । परस्मैपदेषु यो गमिर्दृष्टः तस्मात् सादेरिडिति । तेन तन्मते संजिगंसिता । संजिगंसितुमिति भवति । वैमत्याद्विकल्पः फलतीति चेत्युपनिबद्धम् । केचिदिति वचनमस्य पक्षस्योपेक्षणीयत्वसूचनाय । यथाह हरदत्तः—न पुनरयं पक्षः स्थापितो भाष्यवार्त्तिकविरोधादिति । तन्मते संजिगमिषितेत्यत्रेड् न स्यात् । "समो गमृच्छिभ्याम्" ( १ । ३ । २९ ) इत्यात्मनेपदत्वात् । संपूर्वस्य गमेः परस्मैपदेष्वदर्शनात् । तथा जिगमिषाचक्रे इति भावकर्मविषयस्य गमेः परस्मैपदेष्वदर्शनात् इण् न स्यात् । अथ केवलो गमिः परस्मैपदेषु दृष्ट [१]एवोपसर्गवशात्त्वस्यात्मनेपदमस्य भवतीतीड् भविष्यतीति मतं तर्हि सर्वत्र स्यात् । ततश्च सगंस्यते स विशेष इति भाष्यप्रयोगो विरुध्येत । संजिगमिषितेति । सन्नन्तात्तृच् । सृप्लृ । सर्पति । उपधागुणः । असृपदिति । ङित्वान्न गुणः । अताप्सीत् इति । 'अमोऽभावे 'वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः । रपरत्वम् । अस्राप्सीत् । अमि अस् अप् सीदिति स्थिते यण् वृद्धिरकारस्य । "एकाच" ( ७ । २ । १० ) इत्युभयत्र नेट् । सृपिः सर्जनार्थः । कृप् मृपेति वार्तिके पञ्चानामेव ग्रहणादित्युक्तम् । ससर्पिथ । क्रादिनियमादिट् । ससर्प्थ । अमभावपक्षे गुणो रपरः । सृप्यात् । स्रप्स्यति । सर्प्स्यति । अस्रप्स्यत् । असर्प्स्यत् । स्कन्दिर् । इर् इदिति ॥ १९७ ॥

वेः स्कन्देरिति । "सात्पदाद्योः" ( ८।३।१११) इति निषेधे प्राप्ते प्राप्तविभाषेयम् । विष्कन्दतीति । अत्र निष्ठायामिति पर्युदासात् 'नञिवयुक्तन्यायेन कृत्येवायं विकल्पः । तथा च वृत्तिकारेण पर्युदासो व्याख्यातः । कृतश्चोदाहृता इति माधवः । आचार्यास्तु प्रसज्यप्रतिषेधं मन्यमानाः न तु निष्ठायामिति व्याचख्युः । तत्र "नञिवयुक्तन्यायानवतारात्तिङ्प्युदाजह्रुः । परिशिष्टादिसंवादादिति ज्ञेयम् । विष्कन्न इति । "निष्ठा" ( ३।२।१०२ ) इति क्तः । "अनिदिताम्" ( ६ । ४ । २४) "रदाभ्यां" ( ८।२।४२ ) इति नत्वम् ॥१९८॥

परस्तु षत्वं तिङ्यपि भवतीति सर्वसम्मतपृथग्योगकरणादनिष्ठायामित्यस्यासंबन्धेन पर्युदासाविषयत्वात् । तदेतदाह–निष्ठायामपि वा षत्वम् इति । परि-

१. दृश्यते इति क० पु० ।

२. सन्नन्त तृप् इति क० पु० ।

वा षत्वम् । परिष्कण्णः । परिस्कन्नः । इरित्वादङ् वा । अस्कदत । अस्कान्त्सीत् । अस्कान्ताम् । चस्कन्दिथ । "झरो झरि सवर्णे" (८ । ४ । ६५) चस्कन्थ । स्कद्यात् । तॄ प्लवनतरणयोः "ॠत इत्" ( ६ । १ । ११३ ) इतीत्त्वे प्राप्ते इग्वोरुभ्यां गुणवृद्धी विप्रतिषेधेनेति गुणः । तरति । अतारीत् "ॠच्छत्यृताम्" ( ७।४।११ ) इति गुणः । गुणाकारत्वेऽपि "तॄफलभज" ( ६ । ४ । १२२ ) इत्येत्त्वम् । तेरतुः । तेरुः । ॠदन्तत्वात् सर्वत्रेट् तेरिथ । तेरिव ।

## २००. वृतो वा [ ७ । २ । ३८ ]

वृङ्वृञ्भ्यामॄदन्ताच्च इटो दीर्घो वा स्यात् न तु लिटि । तरिता । तरीता । लिटि तु तेरिथ ।

---

ष्कण्णः । "अट्कुप्वाङ्" (८।४।२) इति णत्वम् । क्वचित्तु परिष्कन्न इत्युदाह्रियते । तत्र णत्वाभावश्चिन्त्यः । अस्कददिति[१] । अङि "अनिदिताम्" (६।४।२४) इति नलोपः अङभावे सिचः "एकाचः" ( ७।२।१० ) इति नेट् । "वदव्रज" ( ७।२।३ ) इति वृद्धिः । दस्य "खरि च" ( ८ । ४ । ५५) इति चर्त्वं तकारः । अस्कान्त्सीत् । तामादौ "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । अस्कान्ताम् । अस्कान्त्सुः । चस्कन्द । संयोगान्तत्वान्न कित्त्वम् । चस्कन्दुः । चस्कन्दिथ । "उपदेशेऽत्वतः" ( ७ । २ । ६३ ) इति प्राप्ते "ऋतो भारद्वाजस्य" ( ७।२।६४ ) इति पक्षे इट् । "शर्पूर्वाः खयः" ( ७।४।६४ ) इति कस्य शेषः । चस्कन्थ । इडभावपक्षे क्रादिनियमादिट् चस्कन्दिव । स्कन्ता । स्कद्यात् । यासुटः "कित्त्वात् "अनिदिताम्" ( ६।४।२४ इति नलोपः) स्कन्त्स्यति । अस्कन्त्स्यत् । तॄ । इत्वे प्राप्ते इति । किरतिगिरतीत्यादौ दर्शनादिति भावः यत्तु प्राचोक्तम्-अन्तरङ्गत्वादित्त्वं स्यादिति । तन्न । प्रत्ययाश्रयत्वाविशेषे कथमन्तरङ्गत्वं सति वास्यान्तरङ्गत्वे कथं विप्रतिषेधोऽतुल्यबलत्वात् । प्रत्युत परमपि बाधित्वाऽन्तरङ्गत्वादित्वमेव स्यादिति । विप्रतिषेधेनेति । इग्वोरुभयोरवकाशः । तीर्णम् पूर्णम् । गुणवृद्ध्योरवकाशः चयनम्, चायकः । तरतिपिपर्तीत्यादावुभयप्रसङ्गे "विप्रतिषेधे परं कार्यम्" ( १।४।२ ) इति परत्वात्ते एव भवतः इत्यर्थः । अतारीदिति । सिच इट् "इट ईटि" (८।२।२८) इति सिचो लोपः । सिचि वृद्धिः रपरत्वम् । अतारिष्टाम् । अतारिषुः । ततार । गुणाकारत्वेऽपीति । गुणे कृते "अत एकहल्मध्ये" ( ६।४।१२० ) इति प्राप्तस्यैत्त्वस्य "न शसदद" ( ६ । ४ । १२६ ) इति निषेधेऽपि प्राप्ते इत्यर्थः । ॠदन्तत्वादिति । ॠदुदन्तेति । अनुदात्तत्वपर्युदासादित्यर्थः । तेरिथेति । "वृतो वा" ( ७।२।३८ ) इत्यत्रालिटीत्यनुवृत्तेर्न दीर्घः ॥१६६॥

वृतो वा । वॄ इति वृङ्वृञोः सामान्यग्रहणं न वृवरणे इत्यस्य । तथा सति वॄ इत्येवावक्ष्यत् । ग्रो यङोतिवत् इत्यालोच्याह-वृङ्वृञोरिति । ॠदन्ताच्चेति । ह्रस्वनिर्देशस्त्वत्र

२०१. सिचि च परस्मैपदेषु [ ७ । २ । ४० ]

वृङ्वृञ्भ्यामृदन्ताच्च इटो दीर्घो न स्यात् सिचि परस्मैपदेषु। अतारिष्टाम्।

२०२. न लिङि [ ७ । २ । ३९ ]

वृत इटो लिङि न दीर्घः। तरिषीष्ट। यासुटः कित्त्वान्न गुणः।

२०३. ॠत इद्धातोः [ ७ । १ । १०० ]

ॠदन्तस्य धातोरिकारान्तादेशः स्यात्। रपरत्वम्। "हलि च" इति दीर्घः। तीर्यात्। तरिष्यति। तरीष्यति। षञ्ज सङ्गे।

२०४. दंशसञ्जस्वञ्जां शपि [ ६ । ४ । २५ ]

एषां नलोपः स्याच्छपि। षत्वम्। निषजति। अटोऽन्तरेऽपि षत्वम्। वृद्धिः। चोः कुः। अनुस्वारपरसवर्णौ। न्यषाङ्क्षीत। अभ्यासेनान्तरेऽपि अभ्यासस्य च षत्वम्। निषषञ्ज। ससञ्जतुः। ससञ्जुः। ससञ्जिथ। ससङ्क्थ। सङ्क्ता। सज्यात्। सङ्क्ष्यति।

---

न शङ्क्यः "ॠतश्च संयोगादेः" (७।२।४३) इत्यत्र ॠत इति पुनरुपादानात्। एतदनुवृत्त्यैव सिद्धेरिति भावः। न तु लिटीति। "ग्रहोऽलिटि" (७।२।३७) इत्यतोऽलिटीत्यनुवृत्तेः॥२००॥

अतारिष्टामिति। लुङ् तस्य ताम्, सिच् इट् वृद्धिः रपरत्वम्॥ २०१॥

न लिङि। परस्मैपदे इटोऽसम्भवात् सामर्थ्यादात्मनेपदमुदाहरति - तरिषीष्टेति आशीर्लिङ्। "भावकर्मणोः" (१।३।१३) इत्यात्मनेपदम्। 'लिङः सीयुट्' (३।४।१०२) "सुट् तिथोः" (३।४।१०७) "लोपो व्योर्वलि" (६।१।६६) इट् षत्वम्। ष्टुत्वम्। गुणः, रपरत्वम्। यासुट इति पञ्चमी षष्ठी वा 'ङिच्च' (१।१।५३) इतिवद् व्याख्येया। कित्त्वादीति। "किदाशिषि" (३।४।१०४) न गुण इति। 'क्ङिति च" (१।१।५) इति निषेधात्। एतच्च गुणविषयत्वादित्त्वप्रवृत्त्यर्थमुक्तम्॥ २०२॥

ॠत इद्॥ धातोः किम्? मातॄणाम्। लाक्षणिकस्यापीष्यते। चिकीर्षति। षञ्ज इत्यत्रयोऽनिटः॥ २०३॥

दंशषञ्जस्वञ्जां। दंश दशने। षञ्ज? [१]षञ्जे। स्वञ्ज परिष्वङ्गे। षत्वमिति।

---

१. सङ्गे इति नास्ति क० पु०।

२०५. न दृशः [ ३ । १ । ४७ ]

दृशश्च्लेः क्सो न स्यात्। इरित्त्वादङ् वा। "ऋदृशोऽङि गुणः" (७।४।१६) अदर्शत्। सिच्पक्षे

२०६. सृजिदृशोर्झल्यमकिति [ ६ । १ । ५८ ]

अनयोरमागमः स्यात् झलादावकिति। वृद्धिः। व्रश्चादीनां षत्वम्। अद्राक्षीत्। अद्राष्टाम्।

---

"धात्वादेः षः सः ( ६ । १ । ६४ ) इति सत्वे कृते "उपसर्गात्सुनोति" ८ । ३ । ६५ ) इति भावः। अवान्तरेऽणीति। "प्राक् सितात्" ( ८ । ३ । ६३ ) इत्यनेन। वृद्धिरिति। "वदव्रजहलन्तस्याचः" ( ८। २। ३३ ) इत्यनेन। तत्र हि हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थमित्युक्तम्। अनुस्वारेति। "नश्चापदान्तस्य झलि" ( ८ । ३ । २४) "अनुस्वारस्य ययि परसवर्णः" ( ७ । ४ । ५८ ) इत्याभ्याम्। न्यषाङ्क्षीदिति। लुङ् तिप् सिप्। "एकाचः" ( ७ । २ । १० ) इति नेट्। "इतश्च" ( ३ । ४ । १०० ) इति इलोपे "अस्तिसिच" ( ७ । ३ ९६ ) इतीडागमः। वि षसञ्ज सीदिति स्थिते वृद्धिः। जस्य कुत्वेन गः। धातोः सिचश्च षत्वम्। अनुस्वारः। ततो गस्य "खरि च" ( ८ । ४ । ५५ ) इति चर्त्वेन ककारः। परसवर्णेन ङः। कषसंयोगे क्षः इत्येष क्रमः। "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः। न्यषाङ्क्ताम्। न्यषाङ्क्षुः। अभ्यासेनेति। "स्थादिष्वभ्यासेन चाभ्यासस्य" ( ८ । ३ । ६४ ) इत्यनेन। ससजतुरिति। संयोगात् लिटो वा कित्वम् इति केषाचिन्मते कित्वान्नलोपः। तस्य "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यसिद्धत्वान्नेत्वाभ्यासलोपौ। ससञ्जिथ। ससङ्क्थेति। "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति वेट्। सङ्क्ता। सज्यादिति यासुटः क्त्वाद् "अनिदिताम्" ( ६ । ४ । २४ ) इति नलोपः। सङ्क्ष्यतीति। लृटि स्यः कुत्वचर्त्वानुस्वारपरसवर्णक्षाः। दृशिर्। इर् इत्। प्रेक्षणं चक्षुःकरणकं ज्ञानम्। ज्ञानसामान्यमित्यन्ये। पश्यतीति। "पाघ्राध्मा" ( ७ । ३ । ७८ ) इति पश्यादेशः। शपि। पश्येत्॥ २०४॥

न दृशः "शल इगुपधाद" ( ३ । १ । ४५ ) इति प्राप्तः क्सो निषिध्यते॥ २०५॥

सृजिदृशोः। सृज विसर्गे। दृशिरुक्तः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति प्रत्यय इह सन्निधापितो झला विशेष्यते इति तदादिविधिर्विज्ञायते इत्याशयेनाह-झलादाविति। प्रत्यय इति शेषः। धातुप्रत्यय एव कार्यविज्ञानादिह न भवति। रज्जुसृड्भ्यामिति। देवदृग्भ्याम्। अकितीति। प्रसज्यप्रतिषेधोऽयं किति न भवतीत्यर्थः। पर्युदासे तु सिसृक्षतीत्यत्र सत्यपि "हलन्ताच्च" ( १ । २ । १० ) इति सनः कित्वातिदेशे स्वाश्रयमकित्वमाश्रित्याम् प्रसज्येतेति स्थितम्।

२०७.　विभाषा सृजिदृशोः [ ७ । २ । ६५ ]

आभ्यां थल इड्वा स्यात् । ददर्शिथ । दद्रष्ठ । दंश दशने । दशति । अदाङ्क्षीत । क्षित निवासे रोगापनयने च ।

२०८.　गुप्तिज्किद्भ्यः सन् [ ३ । १ । ५ ]

एभ्यः सन् प्रत्ययः स्यात् ।

२०९.　सन्यङोः [ ६ । १ । ९ ]

अनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः सनि यङि च परे । धातोरित्य-विहितत्वात् सनोऽत्र नार्धधातुकत्वम् । तेनेड्गुणौ न स्तः "सनाद्यन्ताः" ( ३।१।३२ ) इति धातुत्वात् शप्, तिबादि ।

---

लघूपधगुणस्यायमपवादः । अक्तीतिवचनात् नाप्राप्ते तस्मिन्नस्यारम्भात् । हलन्तवृद्धिस्तु न बाध्यते नाप्राप्त्यभावात् । सिचोऽन्यत्र विषये अस्या अप्रसङ्गात् तदेत-दाह–वृद्धिरिति । अमि कृते [1]तस्येत्यर्थः । पूर्वं तु प्रवृत्तौ नित्यत्वादमा बाध्यत एव । झलीति किम् ? सर्जनम् । दर्शनम् । अकिति किम् ? सृष्टम् । दृष्टम् । अद्राक्षीदिति । अदृशसीदिति स्थिते अम्, यण्, रेफ. "व्रश्चभ्रस्ज" ( ७ । २ । ३ ) व्रश्चादि षत्वम् । "षढोः कः सि" ( ८ । २ । ४१ सिचः षत्वम् । कषयोः क्षः । "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपे षत्वम् । ष्टुत्वम् । अद्राष्टुः । ददर्श । ददृशतुः । ददृशुः ॥ २०६ ॥

विभाषा क्रादिनियमान्नित्यमिटि प्राप्ते विभाषेयम् । ददर्शिथेति । अमभावे गुणः । रपरः दद्रष्ठेति । इडभावेऽम् यण् षत्वष्टुत्वे । द्रष्टा । दृश्यात् । द्रक्ष्यति । अद्रक्ष्यत् । दंश । दशनं दन्तव्यापारः । अत एव निर्देशान्नलोपः । "दशनह्" इति ज्ञापकाद् वा । दश-तीति[2] । "दंशसञ्ज" (६।४।२५) इति नलोपः । दशेत् । दशतु । अदशत् । अदाङ्क्षीदिति । सिच्, वृद्धिः, षत्वम्, कत्वम् अनुस्वारपरसवर्णौ स्तः । अदाष्टाम् इति । अदाङ्क्षुः । ददंश । ददंशतुः । भारद्वाजनियमादिड् वा । ददंशिथ । ददंष्ठ । दंष्टा । दश्यात् । दङ्क्ष्यति । अदंक्ष्यत् । क्षित् ॥२०७॥

गुप्तिज् । गुप गोपनकुत्सनयोः । तिज निशाने क्षमायां च । कितिरुक्तः । स्वार्थे इति । अनिर्दिष्टार्थत्वात् ॥२०८॥

सन्यङोः । एकाच इति । हलादेः प्रथमस्याजादेस्तु द्वितीयस्येत्यपि बोध्यते । सनि यङि चेति । सति सप्तमीयम् । सनि यङि च कृते सति यो धातुः "सनाद्यन्ता धातवः"

---

१. अन्तस्येत्यर्थः इति क० पु० ।

२. दशतीति नास्ति क० पु० ।

( ३ । १ । ३२ इति लक्षित इत्यर्थात्तदन्तस्तदवयवस्यैकाच इत्यर्थो ज्ञेयः। तथा च "सन्यङोः" ( ६ । १ । ९ ) इति षष्ठीति स्थितमाकरे। परसप्तम्यां तु प्रतीपिषति। अटाट्यते इत्यादौ "सन्यङोः" ( ६ । १ । ९ ) इति द्वित्वं न स्यात्। पपाचेच्यादौ लिट[१] इव। यत्तु प्राचोक्तम्—सप्तमीव्याख्यानेऽपि सन्नन्तस्य यङन्तस्य च द्वित्वं स्यात्तद्विषयत्वात् सन्यङोरकारोच्चारणसामर्थ्यात् ज्ञापकात्। अत एवाग्रे वक्ष्यति—शपोऽकारेण सिद्धे सन्यङोरकारोच्चारणम् "अजादेः" इति द्वित्वार्थम्, तेन यङ्सनो-र्द्वित्वम् इति तदसत्। तयोरेकलनिमित्तत्वकार्यित्वयोर्विरोधात्। अथ ज्ञापकात्तयोः कार्यित्वमनुमीयते इति मतम्? तर्हि स्फुटं षष्ठ्यन्तमेव ज्ञापयतीत्युच्यताम्। तत्कथं सप्तमीपक्षः समर्थितः। अथ हलादेर्द्वित्वे सन्यङोरिति सप्तमी, अजादिविषये तु षष्ठीति व्याख्यायेत। तन्न। एकत्वाद्विभक्तेरुभयार्थत्वायोगात्। लक्ष्यभेदाल्लक्षणमपि भिद्यते इति चेत्? मैवम्। षष्ठ्यन्ततयैवोपपत्तौ निरर्थकत्वेन लक्षणकल्पने गौरवात्। किं च यदि हलन्तानां द्वित्वे परसप्तम्येषा ततो बोभवीति इति यङ्लुकि यद्वक्ष्यति अनङ्गकार्यत्वाद् "न लुमताङ्गस्य" ( १ । १ । ६३ ) इति न द्वित्वनिषेधे इति तद् बाध्येत। सप्तमीपक्षे तयोः परतः पूर्वस्य विधीयमानं द्वित्वमङ्गकार्यमिति। अतो-ऽविशेषात् षष्ठ्यैवैषां युक्ता। यच्चाकारोच्चारणं ज्ञापकमित्युक्तम्। तदप्यसत्। पापचक इत्यादावल्लोपस्य स्थानिवत्त्वात् "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्धिर्नेष्यते। नवाऽसत्यकारे तदुपपद्यते। किं च दित्सधित्सलिप्सादिभ्यः सन्नन्तेभ्य एकाच्त्वाद् यङ् स्यात्। दित्स्यम्, धित्स्यम्, इत्यत्र 'ऋहलोर्ण्यत्' ( ३ । १ । १२४ ) इति ण्यत् स्यात्। ततश्च "यतोऽनावः" ( ६ । १ । २१३ ) इति यत्स्वरः आद्युदात्तो न स्यात्। यच्च 'अचो यत्' ( ३ । १ । ९७ ) इत्यत्र वक्ष्यति—अज्ग्रहणमजन्त-भूतपूर्वादपि यद् यथा स्यात्। दित्स्यम् इति तद् बाध्येत। तथा पिपठिषि ब्राह्मण-कुलानीति शौ अतो लोपस्य स्थानिवत्त्वात् झलन्तस्येति नुम् न भवति। सनोऽनका-रान्ते तु स्यात्। ततश्च पिपठीषि इति प्रसज्येत। अपि च पापच्यते हलन्तत्वाण्ण्यति यलोपे कृते णित्युपधावृद्धौ पापाच्य इति प्रसज्येत। अदन्तत्वेनाचो यति पापच्य इति चेष्यते। तथा अपापचि फलं स्वयमेव। अपापचिष्ट चेति यङन्तस्याजन्तत्वाभावाद् "अचः कर्मकर्तरि" ( ३ । १ । ६२ ) इति च्लेश्चिण् विकल्पो न स्यात्। तथा "यस्य हलः" ( ६ । ४ । ४९ ) इत्यत्र यस्येतिसंघातग्रहणमिष्यते। अहर्यीत्। अमव्यीत् इति यवयोर्लोपो मा भूदिति तदपि व्याहन्येत। अपापचिष्टेत्यादौ यङोऽपि यकारा-कारसंघातासम्भवात्। तथा यङोऽल्लोपस्य स्थानिवद्भाववर्णनेन धातुलोप इत्यस्य प्रत्याख्यानादिभाष्योक्तमयुक्तमापद्येतेत्यवश्यं कर्तव्यमकारोच्चारणं न ज्ञापकं युज्यते। यच्च शपोऽकारेण सिद्धं इत्यादि वक्ष्यति न तज्ज्ञापनपरमुक्तमुक्तेः किन्त्वकारोच्चारण-प्रयोजनप्रदर्शनपरम्। द्वित्वार्थमिति सूक्ष्मप्रयोजनान्तराणामप्युपलक्षणं ज्ञेयम्।

---

१. पपाचेत्यादौ लिटश्चेति क० पु०।

२१०. पूर्ववत्सनः [ १ । ३ । ६२ ]

पूर्वधातुवत् सन्नन्तादपि पदं स्यात् । गुपादेः क्रमात् निन्दाक्षमारुग्जयेषु सन्निष्यते नान्येषु । चिकित्सति । कित संदेहे च । विचिकित्सति । अचिकित्सीत् । चिकित्सयामास ।

---

अजादेरिति द्वित्वार्थमिति तु सन्यङोरिति षष्ठ्याव्याख्याभिप्रायेणोक्तमित्यालोचयामः । धातोरित्यविहितत्वादिति । यद्यपि वस्तुतो गुपादिभ्यो धातुभ्यो विहितो न तु धातोरित्यधिकृत्य विहित इत्यर्थः ॥ २०९ ॥

पूर्ववत् । पूर्वेण तुल्यं पूर्ववत् । 'तेन तुल्यम्" ( ५ । १ । ११५ ) इति तृतीयान्ताद्वतिः । न तु[1] पञ्चम्यन्तात् लक्षणाभावात् । अर्थात्तु पूर्वस्मादिवेति सन्नन्तादात्मनेपदं भवति । "तुल्यार्थैः" ( २ । ३ । ७२ , इति हि तृतीयासर्वविभक्त्यर्थानिन्त-र्भावयति । सन्नन्तादात्मनेपदं भवति पूर्ववदिति श्रौतोऽन्वयः । कुतः पूर्ववदित्य-पेक्षायां सन्निहितत्वात् सन एव पूर्ववदिति विज्ञायते । सनश्च पूर्वो धातुरेवेत्याशयेनाह-पूर्वधातुवदिति । पदं[2] चात्मनेपदं प्रकृतत्वात् । तत्र यदि शास्त्रं कार्यं चातिदिश्य-मानमिहाप्यतिदिश्येत । शिशत्सति, मुमूर्षति, शीर्यते म्रियते इत्यत्र दृष्टत्वात् । अतो निमित्तातिदेशोऽयम् । येन निमित्तेन पूर्वस्मादात्मनेपदम्, तेनैव सन्नन्तादपीति । यथा आस्ते, शेते । अनुदात्तत्वङित्त्वे चात्मनेपदनिमित्तं सत्सन्नन्तेऽपि[3] भवति । यद्यपि प्रकृतिगतं निमित्तङित्त्वादि सन्नन्ते वचनशतेनापि अतिदेष्टुमशक्यम् शिशयिष ङिदिति तथापि प्रकृतिगतमेव तत्सना व्यवधानेऽपि तदन्तादात्मनेपदं प्रवर्तयतीत्ययमति-देशार्थः संपद्यते । एवं च शिशत्सति, मुमूर्षतीत्यत्र न भवति । न ह्यत्र[4] शदि-म्रियति-मात्रमात्मनेपदस्य निमित्तं किं तर्हि शिदाद्यपि न चैतदिह सन्प्रकृतावस्ति । यस्य च पूर्वमेव निमित्तत्वं निषिद्धं तत्सन्नन्तेऽप्यनिमित्तं यथाऽनुचिकीर्षति पराचिकीर्षति इति । न हि योग्यतामात्रेण निमित्तत्वम्, किं तु कुर्वद्रूपत्वम् । तच्चेह "अनुपराभ्या कृञः" ( १ । ३ । ७९ ) इति परस्मैपदेनापवादेन बाधितम् । यदि तर्हि कुर्वद्रूपं निमित्तं जुगुप्सते मीमांसते इत्यादौ कथम् ? न ह्यत्र प्रकृतिगतमनुदात्तत्वम्, तत्रा-त्मनेपदं कदाचिदपि करोति । नित्यसन्नन्तत्वात् उच्यते । नैवात्रात्मनेपदं किं तर्हि

---

१ तु पूर्वस्य दिवेति पञ्चम्येगिम्यते इति क० पु० ।

२ न दात्मने पदमिति क० पु० ।

३ पदमात्मने पद मिति क० पु० ।

४ निमित्तन्तादपि इति क० पु० ।

५ ह्यत्रेत्येव क० पु० ।

६ भवितव्यमिति क० पु० ।

अनुदात्तङितः इत्यनेनावयवेऽचरितार्थलिङ्गं समुदायस्य विशेषकं भवतीति सन्नन्तस्याप्यस्यानुदात्तत्वात्। गुपादेरित्यादि। अर्थविशेषे नियमोऽयम्। क्रमादिति। गुपेर्निन्दायामेव। तिजेः क्षमायामेव। कितेः रुग्जय एवेत्यर्थः। अर्थान्तरे तु सन् एभ्यो न भवति। गोपयति। तेजयति। केतयति। इति चुरादित्वाण्णिजेव भवति। अथ णिजन्तादपि सन्नन्तादिवात्मनेपदं प्राप्नोति अवयवेऽचरितार्थमिति न्यायात्। अत्राहुः—गुप गोपनकुत्सनयोरित्यादिसहार्थनिर्देशे सत्यपि कुत्सनार्थवृत्तय एवानुदात्तेतो नित्यसन्नन्ता भौवादिकाः। अर्थान्तरवृत्तयस्तु निरनुबन्धकाश्चुरादौ पठितव्यास्तेन णिच्यकृतेऽनुदात्तेत्त्वाभावादात्मनेपदं न भवति। अत एवार्थान्तरे एभ्यः केवलेभ्यो लडादयोऽपि न सम्भवन्ति नित्यणिजन्तत्वात्। तेन गोपते, तेजते, इत्याद्यवद्यमेव। एवं हि केवलादात्मनेपदार्थत्वेनानुबन्धस्य चरितार्थत्वात् सन्नन्तादात्मनेपदं न स्यात्। अन्ये तु नैतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्याम इति भाष्यात् तिङ्शतृशानचामेवाभावः[1] प्रतीयते इति। निन्दादेरन्यत्र कृत उदाहरन्ति। तदयुक्तम्। यदि हि कृतः स्युः तर्ह्यनुदात्तेत्त्वं युजर्थं स्यादिति[2] कथमस्यावयवेऽचरितार्थत्वं संगच्छेतेति। चिकित्सतीति। कितेः सनि "सन्यङोः" (६।१।९) इति [3]द्वित्वम्। हलादिः शेषः कुहोश्चुः। उदात्तेत्त्वात्परस्मैपदम्। तथा चायं परस्मैपदिषु पठ्यते इति कैयटादिभिरुक्तम्। एवं तु स्वाश्रयं कश्चिच्चिकित्सतु इति खण्डने टीकाकृता वर्धमानेन चिकित्सतामिति भवितव्यमित्युक्तम्, तदात्मनेपदित्वं भ्रमादिति बोद्धव्यम्। एवं च "पूर्ववत्सनः" (१।३।६२) इत्यस्यात्रोपन्यासोऽनर्थको गुप्तिजादेरपि नास्योपयोगः इत्युक्तम्। सन्सङ्गात्तु पठितमिति समाधेयम्। अन्ये तु गुपादिष्वनुबन्धकरणमात्मनेपदार्थमिति भाष्यदर्शनादादिपदेन बहुवचनानुरोधात् कितेरपि ग्रहणादात्मनेपदम्। परस्मैपदिषु पाठाच्च परस्मैपदं चेति। चिकित्सति। चिकित्सते इत्युभयमुदाजह्रुः। तद् गुपादिषु बहुवचनं मानवधादिसूत्राभिप्रायं कितिस्तु परस्मैपदीत्याकरविरोधादुपेक्ष्यम्। कितेः रुग्जये सनित्युक्तं प्राक् तदुपलक्षणमपीत्याह—कित संदेहे चेति। सनिति विशेषः। चकारान्निग्रहापनयनयोरपीति ज्ञेयम्। तथा च लक्ष्यम्—

चिकित्सत्यातुरं वैद्यो विचिकित्सति ये मनः।
रिपुं चिकित्सति नृपो दुष्टं क्षेत्रे चिकित्सति॥ इति।

अचिकित्सीदिति। सिच्यतो लोपः। "इट ईटि" (८।२।२८) इति सिचो लोपः। सवर्णदीर्घः। चिकित्सामासेति। "कास्प्रत्ययात्" (३।१।३५) इत्याम्। "कृञ्चानुप्रयुज्यते लिटि" (३।१।४०) इत्यस्तेरनुप्रयोगः। चिकित्सिता। चिकित्स्यात्। चिकित्सिष्यति। अचिकित्स्यत्॥ २१०॥

---

१. तिङन्तत्वादि लि क० पु०।

२. स्यादि कर्ममिति क० पु०।

३. प्रथमैकाचः कित् सन् प्रतीयते इत्यधिकः पाठ क०पु०। परन्त्वसम्बद्धत्वान्निःसारित।

## २११. ऋतेरीयङ् [ ३ । १ । २९ ]

ऋतिः सौत्रो धातुर्घृणार्थः । तस्मादीयङ् प्रत्ययः स्यात् । ङित्त्वात्तङ् । ऋतीयते ।

### इति परस्मैपदप्रक्रिया

ऋतेरीयङ् । ऋतिः सौत्र इति । सूत्र एव पठितो न धातुपाठे इत्यर्थः । ईयङीति । दीर्घोच्चारणात्तान्तोऽयं धातुः इदन्तत्वे तु सवर्णदीर्घेणैव सिद्धेरियङमेव कुर्यात् । ऋतेरिति तिपा निर्देशः । घृणार्थ इति । घृणाजुगुप्साकृपयोरित्यनेकार्थत्वेऽपि घृणाऽत्र जुगुप्सा न कृपा । ऋतीयशब्दस्य जुगुप्सार्थः न कृपा ऋतीयशब्दस्य जुगुप्सायामेव निघण्टुषु प्रसिद्धेरित्याकरः । एवं च भट्टमल्लस्य ऋतीयते इति कृपापर्यायेषु ऋतीयते स्यात् घृणयोरिति नानार्थवर्णेषु चाभिधानं चिन्त्यम् । ऋतीयते इति । ईयङो ङित्त्वान्नोपधागुणः आत्मनेपदं च । छङि विधातव्ये ईयङ्विधानं वैचित्र्यार्थम् । यत्तु वदन्ति ईयङ्वचनं ज्ञापकं धातुप्रत्ययानामादेशा न भवन्तीति तेन शमेः खः शङ्खः, षणो ढः षण्ढः इति "आयनेयीनीयियः" ( ७ । १ । २ ) इत्यादेशा न भवन्ति इति । तदसत् । एवं हि तरपूछमुनाविति वक्तव्ये ईयसुनवचनं ज्ञापकं स्यात् प्रातिपदिकप्रत्ययानामादेशाभावस्य । ऋतीयते । ऋतीयताम् । आर्तीयत । आर्तीयिष्ट । ऋतीयाञ्चक्रे । ऋतीयिता । ऋतीयिषीष्ट । "आयादय आर्धधातुके वा" ( ३ । १ । ३१ ) इति ईयङोऽभावपक्षे तु शेषत्वात् परस्मैपदम् । आर्तीत् । आर्तिष्टाम् । लिटि । आनर्त । आनृततुः । ऋकारैकदेशोऽपि नुड्विधिं प्रति हलिति वक्ष्यमाणत्वान्नुट् । अत्रैव त्वेतत् पठितुं युक्तम् । अर्तिता । ऋत्यात् । अर्तिष्यति । आर्तिष्यत् । यत्तु ईयङभावे आर्तिष्टेत्युदाहृतं प्राचा । तदसत् । आत्मनेपदनिमित्ताभावात् ।

किं चैवं परस्मैपदप्रकरणेऽस्योपन्यासो विरुध्येत । ईयङोऽन्यत्र वा परस्मैपदस्याप्रयोगात् । 'वञ्चिलुञ्च्यृतश्च" ( १। ।२४ ) इति क्त्वः कित्त्वविकल्पनात् । ऋतित्वा । अर्तित्वा । अत् यच्च अर्तिता । अर्तितुम् अर्तितव्यम् । ऋतीयितुम् । ऋतीयितव्यम् । कृत्यप्यार्धधातुके इयङि विकल्प्यते इति परस्मैपदप्रक्रियेति प्रायोवादोऽयम् । भू प्राप्तावात्मनेपदी इत्यात्मनेपदप्रक्रियाया अपि व्युत्पादनात् ॥२११॥

पृथ्वीमण्डलमौलिमण्डनमणिः श्रीरामचन्द्रामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमद् व्याख्या परस्मैपदे ॥ १ ॥

### इति परस्मैपदप्रक्रिया

—o:—

## अथात्मनेपदप्रक्रिया

एधते । ऐधिष्ट । ऐधिध्वम् ।

२१२. आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य [१।३।६३]

आम् प्रत्ययो यस्मात् कृतः तदनुप्रयुज्यमानस्य कृञ आत्मनेपदं स्यात् अकर्तृगामिन्यपि फले । एधाञ्चक्रे । एधाञ्चकृषे ।

---

एध वृद्धौ । इत आरभ्या गाङः प्राग्वद् द्वाविंशतिः सेट्कः स्वञ्जवर्ज्याः । एधते इति । अनुदात्तेत्त्वादात्मनेपदम् । "टित." ( ३।४।७९ ) इति टेरेत्वम् । शप् । एधेते । एधन्ते । एधेत । एधेयाताम् । एधेरन् । एधताम् । एधेताम् । एधन्ताम् । ऐधेत । ऐधेताम् । ऐधिष्टेति । लुङि सिच इट् । आट् । 'आटश्च" ( ६।१।९० पत्वम् । ष्टुत्वम् । ऐधिषाताम् । ऐधिषत । ऐधिध्वम् इति । सिच इट् । 'धि च" ( ८।२।२५ ) इति सलोपः । "इणः षीध्वम्" (८।३।७८) इत्यत्रेड्व्यतिरिक्त इण् गृह्यते इति मते ढत्वाभाव उदाहृतः । हरदत्तमाधवादिमते तु भवितव्यमेवात्र ढत्वेन । ऐधिढ्वम् इति । "अनचि च" (८।४।४७) इति द्वित्वपक्षे त्वैधिड्ढ्वमित्यपि । ध्वे सलोपो वा । सस्य द इति मते तु ऐधिद्ध्वम् इत्यपि ।

आम्प्रत्यय । यदि आम् चासौ प्रत्ययश्चेति कर्मधारयः स्यात्ततः प्रत्ययग्रहणमनर्थकमसंभवश्च स्यात् । आमन्तस्याधातु[1]त्वेन तत आत्मनेपदादर्शनात् । तद्वत्कृञो (ञोऽसम्भवात् । अतोऽतद्गुणसंविज्ञानी बहुव्रीहिरयमित्याह—आम् प्रत्ययो यस्मादिति । धातुरन्यपदार्थः । तेनामः प्रकृतिर्यो धातुस्तस्यैवेत्यर्थः । तद्वत् प्रतियोगिषष्ठी निर्देशा ) "तत्र तस्येव" ( ५।१।११६ ) इति षष्ठ्यन्ताद्वतिः । अनुप्रयुज्यते इत्यनुप्रयोगः । "अकर्तरि च कारके संज्ञायाम्" ( ३।३।१९ ) इति कर्मणि घञ् । घञश्चैतद्विशेषणमिति[2] गाशयेन व्याचष्टे—अनुप्रयुज्यमानस्य कृञ इति । अवधेरपि संबन्धमात्रविवक्षया षष्ठी कृता । कृञ् इति च स्वरूपस्य ग्रहणं न प्रत्याहारस्य । कृञ्ग्रहणात् । तद्धि भ्वस्त्योर्मा भूदिति क्रियते । अस्यापि प्रत्याहारपरत्वे तदनर्थकं स्यात् । व्यावर्त्याभावात् । विपर्ययोऽपि न भवति । अनुप्रयोगे स्वरूपस्य इह प्रत्याहारस्येति । तथाहि सति भ्वस्त्योरनुप्रयोगस्याविहितत्वेन ताभ्यामात्मनेपदविधानानुपपत्तेः । यद्येवं कृञो ञित्वात् "स्वरितञितः" ( १।३।७२ ) इत्येव सिद्धे

---

१. अधातुत्वेन तत आत्मनेपदा इति नास्ति क० पु० ।

२. तद्वत्कृञोऽत्रे त्यारभ्य–निर्देशादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

२१३. इणः षीध्वंलुङ्लिटां धोऽङ्गात् [ ८ । ३ । ७८ ]

इणन्तादङ्गात् परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात्। एधांचकृढ्वे। एधाञ्चकृवहे। कृञः किम्? एधामास। एधाम्बभूव। एधिता। एधिषीष्ट। एधिष्यते। ऐधिष्यत। दद दाने। "न शसदद" (६। ४। १२६) इत्युक्तेरेत्त्वं न। ददद। ष्वष्क गतौ। ष्वष्कते। पष्वष्के। ऋज गतौ स्थैर्ये च। अर्जते। आर्जिष्ट। "अत आदेः" (७। ४। ७०) इति दीर्घः। ऋकारैकदेशो रेफोऽपि नुड्विधिं प्रति हल्। तेन "तस्मान्नुड् द्विहलः" (७। ४। ७१) इति नुट्। आनृजे। अर्जिषीष्ट। तिज निशाने क्षमायां च। तितिक्षते। षञ्ज परिष्वङ्गे। निष्वजते।

---

किमनेनेत्याह—अकर्तृगामिनि क्रियाफलेऽपीति। कर्त्रभिप्राये सिद्धम् अकर्त्रभिप्रायार्थस्त्वयमारम्भ इत्यर्थः। नन्वेव विध्यर्थमेतत् स्यात् ततश्चेन्दांचकारेत्यादौ कर्त्रभिप्राये तङ् प्राप्नोति। अत्राहुः-पूर्ववदित्यप्य[1]त्रानुवर्तते स द्वितीयो[2] वाक्यभेदेन नियमार्थः संपद्यते। यदि कृञ आत्मनेपदं स्यात् तदपूर्ववदेवेति। तेन परस्मैपदिभ्यस्तङ् न भविष्यति। एधाञ्चक्रे इति। लिट् "इजादेः" (३। १। ३६) इत्याम्। "आमः" (२। ४। ८१) इति लेलुक्। "कृञ्" (३। १। ४०) इत्यनेन कृञोऽनुप्रयोगः। लिट् तस्यैशादेशः। यण् तस्य स्थानिवत्त्वात् द्वित्वम्। ऋतोऽत्वम्। एधाञ्चक्रिरे। एधाञ्चकृषे। "थासः से" (३। ४। ८०) क्रादित्वान्नेट्॥ २१२॥

इणः षीध्वमिति। "इण्कोः" इत्यधिकारेऽपि पुनरिड्ग्रहणं कवर्गनिवृत्त्यर्थम्। पक्षीध्वमित्यादौ मा भूत् इति। अङ्गेण इत्यङ्गस्य विशेषणं तच्च[3] षीध्वमित्यादौ षीध्वमादीनां तं च धस्येति व्याचष्टे-इणन्तादङ्गादित्यादि। यदीदं विहितविशेषणं स्यात् इणन्ताद्विहितानामिति तत[4] ऐधिढ्वमित्यत्र न स्यात्। लिहदुहद्रुहनहां च ढत्वधत्वधत्वेषु अपीणन्ताद्विहित इति ढत्वं स्यात्। लिढ्ढ्वम्। धुक्षीध्वम्। नक्षीध्वम् इति। ननु इणो लुङि गादेशे विहितध्वमि कर्मणि अगाढ्वं यूयमनेनेत्यत्र ढत्वं प्रसज्येत इति दोषं दृष्ट्वा परविशेषणमेतदित्याह—परेषामिति। परत्वं चेह श्रुतिकृतमाश्रीयते। तेनैधिढ्वमित्यत्रापि भवतीत्याकरः। अन्ये तु "विभाषेटः" (८। ३। ७९)

---

१. इत्यत्राप्यनुवर्तते इति क० पु०।
२. यत्रो इत्यधिकः क० पु०।
३. न तु इति क० पु०।
४. विविऽध्वमिति क० पु०।

इतीटो विभाषाया उक्तत्वात् गोबलीवर्दन्यायेनेड्व्यतिरिक्तमिणन्तमिह गृह्यते इति वदन्त ऐधिध्वम् इत्यादौ ढत्वं नेच्छन्ति। कृञः किमिति अनुप्रयोगस्येत्येवास्तु, कृञ एव चानुप्रयोगो विहित इति प्रश्नः। तत्र प्रत्याहारग्रहणात् भ्वस्त्योरप्यनुप्रयोगो विहित इति ताभ्यामपि स्यात्। अतस्तद्व्यावृत्यर्थं कृञ्ग्रहणस्वरूपं पराक्रियते' इत्युत्तरयति—एधाञ्चसेत्यादिना। एधिषीष्टेति। आशीर्लिङ् 'लिङः सीयुट्' ( ।४। १०२ )। एधिषीयास्ताम्। एधिषीरन्। एधिषीध्वमित्यत्र ढत्वं न भवति। इटः षीध्वम्भक्तस्य तद्ग्रहणेन ग्रहणात् इणन्तादङ्गात्परः षीध्वं नास्ति इति। शेषं प्राग्वत्। भूवत्साधनायम्। दद। ददते। ददेत्। ददताम्। अददत। अददिष्ट। ददद इति। लिट् तस्येश्। द्वित्वादि। "न शसदद" ( ६।४।१२६ ) इत्येत्वाभावः। ददृदाते। ददृदिरे। ददृदिषे। ददिता। ददिष्यते। ददिषीष्ट। अददिष्यत। दध धारणे इत्यप्यनुदात्तेत् पठ्यते तस्यापि दधते। दधेते। दधन्ते। इत्यादि दद्वत्रूपाणि। ष्वष्क। ष्वष्कते। 'सुब्धातुष्ठिवुष्वष्कतीनाम्" (वा० ) इति सत्वप्रतिषेधः। ष्वष्किरेत्यादि। ऋज। अर्जते इति। 'पुगन्त" ( ७।३।८६ ) इति गुणः। रपरः। अर्जेत। अर्जिता। आर्जत। आर्जिष्टेति। सिच इट्। आट् वृद्धिः। षत्वम्। ष्टुत्वम्। आर्जिषाताम्। दीर्घ इति। ऋज इत्यस्य द्वित्वे उरदत्वे हलादिशेषे दीर्घे च कृते आऋज इति स्थिते "तस्मान्नुड्" ( ७।४।७१ ) इति नुट्। ननु कथमस्य द्विहल्त्वमत आह—ऋकारैकदेश इत्यादि। नन्वेव हलादिशेषेण रेफस्य निवृत्तिरपि स्यादत आह-नुड्विधिं प्रति। नुड्विधिं प्रत्येवेत्यर्थः। उरदत्वविधानसामर्थ्यान्न हलादिशेषः शङ्क्य इति भावः। न चैव "कृपो रो लः" ( ८।२।१८ ) इत्यस्यासग्रहः। तत्र रश्रुतिमतो लश्रुतिमानादेश इत्याश्रयणादपि सिद्धेः। कथं पुनर्वर्णैकदेशो वर्णग्रहणेन गृह्यते। अत्राहुः—नुड्विधौ द्विहल्ग्रहणं गौणस्येदृशस्य हल्छायानुकारिणोऽपि परिग्रहार्थम्। अन्यथा "तस्मान्नुड्" ( ७।४।७१ ) इत्येव ब्रूयात्। न चाटतुरित्यादावपि प्रसङ्गः। 'अश्नोतेश्च" ( ७।४।७२ इत्यस्य नियमार्थत्वात्। अद्विहलो यदि भवति अश्नोतेरेवेति। न चाश्नातेर्निवृत्त्यर्थं तत्। तथा सति हि नाश्न इत्येवावक्ष्यत्। यद्येवमिहापि न स्यादानृजे इति। नैष दोषः। तुल्यजातीयत्वादवर्णोपधस्याद्विहलो नियमः इति कैयटेनोक्तत्वात्। अर्जिता। अर्जिषीष्ट। अर्जिष्यते। आर्जिष्यत। ऋजिभृञ्जी भर्जने इत्यपि पठ्यते। तत्राद्यस्येदितो नुमि ऋञ्जते। ऋञ्जताम्। आञ्जत। आञ्जिष्ट। "इजादेश्च" ( ३।१।३६ ) इत्याम्। ऋञ्जाञ्चक्रे। आनृजे इत्यनवद्यम्। ऋञ्जिता। ऋञ्जिषीष्ट। ऋञ्जिष्यते। भृञ्जी त्वीदित्। तस्य भर्जते। भर्जेत। भर्जताम्। अभर्जत्। अभर्जिष्ट। बभृजे। भर्जितेत्यादि ज्ञेयम्। तिज निशाने। निशानं तीक्ष्णीकरणम्। तितिक्षते इति "गुप्तिज्किद्‌भ्यः" ( ३।१।५ ) क्षमार्थे सन्। द्वित्वादि। षत्वम्, चर्त्वेन कः कृष्संयोगे क्षः। अनुदात्तेत्वात् तङ् शप्। "अतो गुणे" ( ६।१।९७ ) अतितिक्षिष्ट। तितिक्षाञ्चक्रे। इत्यादि गुपिवत्। क्षमाया अन्यत्रार्थे निरनुबन्धकत्वुरादिः। तेन तेजयतीत्यादि उदाहार्यम्। ष्वञ्ज। अनिडयम्। परिष्वङ्ग आलिङ्गनम्।

## २१४. सिवादीनां वाड्व्यवायेऽपि [ ८ । ३ । ७१ ]

परिनिविभ्यः परेषां सिवसहसुट्स्तुस्वञ्जामड्व्यवायेऽपि वा षत्वं स्यात् । "झलो झलि" ( ८ । २ । २६ ) न्यस्वङ्क्त । न्यष्वङ्क्त । स्वसंयोगादपि-लिटो वा कित्त्वम् । सस्वञ्जे । सस्वजे ।

## २१५. सदिस्वञ्ज्योः परस्य लिटि [८ । ३ । ११८ ]

अनयोरभ्यासात् परस्य सस्य षत्वं न स्याल्लिटि । परिसस्वञ्जे । स्वङ्क्ता । स्वङ्क्षीष्ट । त्रपूष् लज्जायाम् । ऊदित्वाद् वेट् । अत्रपिष्ट । अत्रप्त । "तृफल" (६।४।१२२) इत्येत्त्वम् । त्रेपे । त्रपिता । त्रप्ता । जभ गात्रविनामे ।

---

निष्वजते इति । "दंशसञ्जष्वञ्जां शपि" ( ६ । ४ । २५ ) इति नलोपः । "परिनिविभ्यः" ( ८ । ३ । ७२ ) इति षत्वम् । "उपसर्गात् सुनोति" ( ८ । ३ । ६५ ) इत्यादि च परिष्वजते इत्याद्यर्थम् । अनेनैव परिनिविभ्योऽपि सिद्धेऽपि सिवादिषु स्तुष्वजोः पाठोऽड्व्यवायेऽपि विकल्पार्थः ॥ २१३ ॥

सिवादीनामिति । प्रत्यासत्तेः परिनिविभ्य इति सूत्रोपात्ता एव सिवादयो गृह्यन्ते इत्याह—षिवु इत्यादि । षिवु तन्तुसन्ताने । षह मर्षणे । सुडागमः परिष्करोतीत्यादिः । ष्टुञ् स्तुतौ । ष्वञ्जिरुक्तः । उभयत्र विभाषेयम् । स्तुस्वञ्जोः "प्राक् सितात्" ( ८ । ३ । ६३ ) इति नित्ये प्राप्ते इतरेषामप्राप्ते । न्यष्वङ्क्तेति । "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । चोः कुः । अनुस्वारपरसवर्णौ । न्यस्वङ्क्तेति षत्वाभावे । स्वञ्जेरित्यादि वा कित्त्वमिति परमतमेतत् । तथा च 'असंयोगाल्लिट् कित्' ( १ । २ । ५ ) इत्यत्र श्रन्थिग्रन्थिदम्भिस्वञ्जीनाम् इति वार्त्तिकं व्याख्याय हरदत्तः अत्र केचिद्वेति पठन्ति । सस्वजे इति । कित्त्वपक्षे 'अनिदिताम्' ( ६।४।२४ ) इति नलोपः ॥ २१४ ॥

सदिस्वञ्जि । स्वञ्जिग्रहणमिह सूत्रे प्रक्षिप्तम् । सदेर्लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानमिति वार्त्तिके दर्शनात् । परिषस्वजे इति । "स्थादिष्वभ्यासेन" ( ८ । ३ । ६४ ) इति प्राप्तं परस्य निषिध्यते । पूर्वस्य तु भवत्येव । त्रपूष् । षित्वं "षिद्भिदादिभ्योऽङ्" ( ३।३।१०४ ) इत्यर्थः । त्रपा । त्रपते । ऊदित्त्वादितीति । "स्वरति" ( ७ । २ । ४४ ) इत्यनेन । अत्रप्तेति । इडभावे "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । संयुक्तहल्मध्यस्थत्वाभावादाह—तृफलेत्येत्वम् ॥ २१५ ॥

ष्टुभ । विष्टोभते इति । "उपसर्गात्" ( ८ । ३ । ६५ ) इति षत्वम् । व्यष्टोभिष्ट इति । अड्व्यवायेऽपि षः । तुष्टुभे । "शर्पूर्वाः खयः" ( ७ । ४ । ६१ ) इति तकारस्य शेषः । स्तोभिषीष्ट । पण । पणेः स्तुतावेवेति । पण व्यवहारे स्तुतौ च ।

२१६. रधिजभोरचि [ ७ । १ । ६१ ]

अनयोर्नुमागमः स्यादचि । जम्भते । अजम्भिष्ठ । ष्टुभु स्तम्भे । विष्टोभते । व्यष्टोभिष्ट । तुष्टुभे । पण व्यवहारे स्तुतौ च । "गुपूधूप" इत्यायः । पणेः स्तुतावेवायप्रत्ययः । अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । वेति केचित् । पणायते । गोपायति । गोपायते । अपणायीत् । अपणिष्ट । पणायाञ्चकार । पणायाञ्चक्रे । पेणे । पणेर्व्यवहारे तु शतस्य पणते । पन च । पनायतीत्यादि । कमु कान्तौ ।

---

पन चेति पृथङ्निर्देशात् पनिः स्तुतावित्यनेनैव संबध्यते इति स्थितम् । ततश्च "गुपूधूप" ( ३ । १ । २८ ) इत्यत्र स्तुत्यर्थेन पनिना साहचर्यात् पणेरपि स्तुतावेवार्थे आयप्रत्ययो नार्थान्तरे इत्यर्थः[1] । अत एव 'न चोपलेभे वणिजां पणाय्याम्" इति व्यवहारेऽप्यायं प्रयुञ्जानो भट्टिर्भ्रान्त एवेत्युक्तं तरङ्गिण्याम् । ननु पणेरप्यनुदात्तेत्त्वात् जुगुप्सते इत्यादिवत् आत्मनेपदेन भाव्यमित्याशङ्क्याह—अनुबन्धस्येत्यादि । अवयवे ह्यचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति । यथा गुपेः, न चेह तथा[2] पणेर्व्यवहारे आयो नास्तीत्युक्तत्वात् । तत्रैव केवले शतस्य पणते इत्यादावनुदात्तेत्त्वं तङर्थत्वेन चरितार्थमिति नायान्तस्य विशेषकम् । ततः "शेषात्" ( १ । ३ । ७८ ) इति परस्मैपदमेव भवतीत्यर्थः । वेति केचिदिति । ये व्यवहारेऽप्यायं मन्यन्ते साहचर्यं च न नियामकं सर्वत्रेति क्त्वोऽर्थग्रहणेन ज्ञापितत्वात् । तथा च भट्टिकाव्ये व्यवहारार्थादप्यायप्रत्ययः प्रयुक्तः[3] इत्येतावदेव हरदत्तः प्राह—न त्वयमप्रयोग इति । तन्मते चास्ति केवले चरितार्थमिति जुगुप्सते इतिवद् भवत्यात्मनेपदमिति भावः । तथापि पेणे इत्यादौ चरितार्थत्वेन नैतद् युक्तमिति सूचयितुं केचिदित्युक्तम् । क्वचित्तु गोपायते इत्यप्युदाह्रियते तदपाणिनीयमेव । अपणायीत् इति । अतो लोपे सिच इट् । 'इट ईटि" लोपः । अपणिष्टेति । आर्धधातुके आयाभावपक्षे 'अनुदात्तङितः" (१।३।१२) इत्यात्मनेपदम् । अपणिषाताम् । पणा[4]याञ्चकारेति । "कास्प्रत्ययाद्" ( ३।१।३५ ) इत्याम् । कृञोऽनुप्रयोगः । पेणे इति । आयाभावे द्वित्वमेत्वाभ्यासलोपौ । पणायिता । पणायात् । पणिषीष्ट । पणायिष्यते । पणिष्यते । मतान्तरे पणायिषीष्ट इत्याद्यप्युन्नेयम् । शतस्य पणत इति । 'व्यवहृपणोः समर्थयोः" ( २ । ३ । ५७ ) इति कर्मणि षष्ठी । इतं

---

१. इत्यर्थं इति नास्ति क० पु० ।

२. तथा इति नास्ति क० पु० ।

३. प्रयुक्त इति नास्ति क० पु० ।

४. पणायाञ्चकारेत्यारभ्य–अभ्यासलोपावित्यन्तो नास्ति क० पु० ।

## २१७. कर्मेणिङ् [ ३ । १ । ३० ]

कमेर्धातोर्णिङ् प्रत्ययः स्यात् स्वार्थे। उपधावृद्धिः। शप्तिबादि। गुणायादेशौ। कामयते। णयन्तत्वात् च्लेश्चङ्।

## २१८. णौ चङ्युपधाया ह्रस्वः [ ७ । ४ । १ ]

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्।

---

व्यवहरतीत्यर्थः। पन च स्तुतौ वर्तते इत्यनुषङ्गः। पनायतीत्यादि। पणिवदायादीत्यर्थः। ननु चास्मान्नित्यमायप्रत्ययस्तत्र अनुदात्तस्य केवलेऽचरितार्थत्वादायप्रत्ययान्ताद् नित्यमात्मनेपदेन भवितव्यम्। तथा च वोपदेवोऽपि" इति पठित्वा पनायते इत्युदाजहार। तरङ्गिणीकारोऽप्येवं प्रतिपेदे। तत्कथ परस्मैपदमुदाहृतमिति चेत्। सत्यम्। अस्यानुदात्तत्वं गुजर्थ स्यात्। गुपेरिवास्मादपि कृतो न भवन्तीत्याप्रभाषितमस्ति। एव चानुबन्धस्य केवले चरितार्थत्वात्पणेरिव पनेरप्यायप्रत्ययान्तान्नात्मनेपदमित्याशय पश्यामः। कमु। उदित्त्वात् णिङभावपक्षे कमित्वा कान्त्वेति। क्त्वायां "उदितो वा" ( ७ । २ । ५६ ) इति इड्विकल्पार्थम्। कान्तिरिच्छा॥ २१६॥

कर्मेणिङ्। स्वार्थे इति। अनिर्दिष्टार्थत्वात्। णकारो णेरिति सामान्यग्रहणार्थो वृद्ध्यर्थश्च। ङकार आत्मनेपदार्थः। उपधावृद्धिरिति। 'अत उपधायाः" ( ७ । २ । ११६ ) इत्यनेन। अनिग्लक्षणत्वान्न "क्ङिति च" ( १ । १ । ५ ) इति निषेधः शप्तिबादीति। 'सनाद्यन्ताः" ( ३ । १ । ३२ ) इति धातुत्वात् लडादीनां स्थाने तिबादयस्तेषु परेषु शवित्यर्थः। गुणः। "सार्वधातुक" ( ७ । ३ । ८४ ) इत्यादिना। आयादेशः। "एचोऽयवायावः" ( ६ । १ । ७८ ) कामयते इत्यादि। णयन्तत्वादिति। "णिश्रि" ( ३ । १ । ४८ ) णीति णिङोऽपि सामान्येन ग्रहणात्॥ २१७॥

णौ चङ्यु। णावित्यङ्गापेक्षया सप्तमी। चङीति तु व्यपेक्षयेति। व्याचष्टे—चङ्परे णौ यदङ्गमिति। णाविति किम्? चङि यदङ्गमित्युच्यमानेऽपीपचदित्यादौ न स्यात्। पाचीति चङि अङ्गं न तस्योपधाकारः किं तर्हि चकारः। णिलोपेऽपि कृते ( स्था[2]निवद्भावाद् व्यवधानमेव। "चङ्परनिर्ह्रास" (वा०) इति स्थानिवद्भावनिषेधो वार्त्तिककृतो न सूत्रकृत इति। ननु "येन नाव्यवधानम्" ( न्या० ) इति णिव्यवायेऽपि भविष्यति। नैतदस्ति। अलीलवदित्यादावे[3]तद्वचनसामर्थ्यादन्तरङ्गमपि वृद्धिभावादेशं च बाधित्वा ह्रस्वः स्यात्। न च पुनर्गुणेनेष्टसिद्धिः। वृद्ध्या

---

१. अपापचीदिति क० पु०।

२. ( स्थानिवद्भावादित्यारभ्य-इतीत्यन्तो ( ) नास्ति क० पु०।

३. वेकवचनेति क० पु०।

२१९. सन्वल्लघुनि चङ्परेऽनग्लोपे [७ । ४ । ९३]

लघुनि धात्वक्षरे परेऽभ्यासस्य सन्वत् कार्यं स्यात् चङ्परे णौ न त्वग्लोपे ।

२२०. सन्यतः [ ७ । ४ । ७९ ]

अभ्यासस्यात ईकारः स्यात् सनि ।

---

पूर्वं बाधितस्येदानीं प्रष्टावसरत्वेन पुनः प्रवृत्त्ययोगात् । तथादीदपत् इत्यत्र ह्रस्वेन पुक् बाध्येतेति णावित्युक्तम् । चङि किम् ? कामयते कारयति । उपधायाः किम् ? अचकांक्षत् । ह्रस्वश्रुत्योपस्थितमजित्येतत् णावित्यनेन विशेषयिष्यते अङ्गस्यावयवो योऽच् तस्य णौ परे इति । तत्र च येन नाव्यवधानमित्येकेन वर्णेन व्यवधाने भविष्यति नानेकेन । एवं तर्ह्युपधाग्रहणमुत्तरार्थम् इति स्थितमाकरे ॥ २१८ ॥

सन्वल्ल इति । परग्रहणं च बहुव्रीहिप्रतिपत्त्यर्थम् । चङ्परो यस्मात् स चङ्परः । स च सामर्थ्याण्णिरेव गृह्यते । णेरन्यस्य चङ्परस्याभावात् । नन्वचकमतेत्यत्र मकारोऽपि (सम्भ[1]वति अदुद्रुवदिति वकार. संभवति । नैतदस्ति । चङ्पर इत्यङ्गस्य विशेषणम् । चङ्परे यदङ्गं तस्य योऽभ्यासस्तस्य । लघुनि धात्वक्षरे परे इति । न च मकारे वकारे वा पूर्वमङ्गं भवतीति । पर्यालोच्याह—चङ्परे णौ यदङ्गमिति । अक्षरे इति । अनुच्यते "ह्रस्वं लघु" ( १ । ४ । १० ) इति वचनाच्च । सन्वदिति । सनीव सन्वत् "सन्यत" ( ७ । ४ । ७९ ) इत्यादि त्रिसूत्र्या यत्कार्यमुक्तं तदत्रापि भवतीत्यर्थः । न त्वग्लोप इति अगिति प्रत्याहारः । चङ्पर इति सम्बन्धाद् णौ अको लोपे सति नेत्यर्थः । तेन चमुप्रभृतीनामुदित्त्वेऽपि न निषेधः । लघुनि किम् ? अततक्षत् । "संयोगे गुरु" ( १ । ४ । ११ ) इति तकाराकारो गुरुर्न लघुः । चङ्ग्रहणं किम् ? अहं पपच । परग्रहणं किम् ? चङ्येव केवले मा भूत् अचकमतेति । अनग्लोपेति किम् ? अचकथत् ॥ २१९ ॥

सन्यतः ( तपर[2]करणं मुखसुखार्थम् अभ्यासे दीर्घासंभवात् । ये त्वाहुः पापच्यतेः सनि पापचिषते । अत्र मा भूत् तदसत् सनि योऽभ्यासः सन्निमित्त इति विज्ञानादप्यत्राप्रसङ्गात् ॥ २२० ॥

---

१. संभवतीत्यारभ्य: सवतं त्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

२ तपरकरणमित्यरभ्यलघुनोत्यादीत्यन्तो नास्ति क० पु० । किं तु लघुनि चङ्परेऽनग्लोपे इति सर्वमनुवर्तते इत्यभिप्रेत्याह - लघुनीति पाठो वर्तते ।

## २२१. दीर्घो लघोः [ ७ । ४ । ९४ ]

लघुनि धात्वक्षरे परे हलादेर्लघोरभ्यासस्य दीर्घः स्यात् चङ्परे णौ न त्वग्लोपे।

## २२२. णेरनिटि [ ६ । ४ । ५१ ]

अनिडादावार्धधातुके परे णेर्लोपः स्यात्। इयङ्। गुणादेरपवादः। अचीकमत। णिङभावपक्षे "कमेरचङ् वाच्यः" ( वा० ) णेरभावान्न दीर्घ-सन्वद्भावौ। अचकमत।

---

दीर्घो लघोरिति। लघुनि चङ्परेऽनग्लोपे इति सर्वमनुवर्तते इत्यभिप्रेत्याह-लघुनीत्यादि।) हलादेरित्यङ्गस्य विशेषणम्। तेन प्रौर्णुनवदित्यत्र न भवति। एतच्च सामर्थ्यालब्धमाचार्यैर्व्याख्यातम्। तथा हि—अयमत्र सूत्रार्थः। चङ्परे णौ यदङ्गं तस्य योऽभ्यास इति। अजादेस्तु "अजादेर्द्वितीयस्य" ( ६ । १ । २ ) इति वचना-दङ्गावयवस्याभ्यासस्य नाङ्गस्येति माधवोक्तेः। एवं तु अचीचकासत् इत्यत्रापि तदुदाहृते न भवितव्यमिति स्वोक्तिविरोधश्च। अवयवावयवश्च समुदायप्रत्यवयवो दृश्यते इत्यप्यन्यत्र स्थितमिति चिन्त्यमेतत्। यत्तु प्राचोक्तम्—हलादिरित्यर्वाचीन-मतेनोक्तम् इति। एवं तु स्वमते दीर्घो भवतीत्युक्तमित्याभाति। तच्चैतद्धातुवृत्त्यादौ साक्षाद् दूषितत्वादुपेक्ष्यम्। उच्यते। अवयवावयवः समुदायावयव इति न सार्वत्रिकम् यत्त्वचीचकासदित्युदाहृतं तत्परमतेनेति वक्ष्यामः॥ २२१॥

णेरनिटि। णिच्णिङोः सामान्यग्रहणम्—णेरिति। इयङ् गुणादेरपवादः इति। सर्वस्य विषयस्य तैराक्रान्तत्वादनवकाशो लोपस्तान् बाधते इत्यर्थः। तथा च वार्त्ति-कम्-ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन वा०) इति। इमङ्। अत-तक्षत्। यण्। आटिटत्। गुणः। कारणा। वृद्धिः। कारकः। दीर्घः। कार्यते। यद्यपि द्वित्वात् परत्वादादौ णिलोप उदाहर्तुमुचितस्तथाप्युक्तकार्याणां णिसापेक्षत्वात् प्रत्य-यलक्षणेनापि तद्बुद्धेरनपायात् सकलकार्यापवर्ग एव तन्निवृत्तिरुचितेति शास्त्र-प्रासक्रम उपेक्षितः। एष तु न्याय्यः। कम् इ अत इति स्थिते नित्यत्वाण्णिलोप इति वचनाच्च णिलोपः। तस्य स्थानिवत्त्वादुपधावृद्धिः। द्वित्वात्परत्वादुपधा ह्रस्वः। ननु नित्यं द्वित्वम्, कृताकृतप्रसङ्गित्वात्। मैवम्। ह्रस्वोऽप्येवं नित्यः। उभयोश्च नित्ययोः परत्वाद् व्यवस्था। यत्र तर्हि ह्रस्वो नित्यस्तत्र पूर्वं द्वित्वं स्यात्। यथेधतेर्णिचि चङि कृताकृतप्रसङ्गित्वाद् "अजादे" ( ६।१।२ ) इति नित्यं द्वित्वं ह्रस्वः। कृते द्वित्वे ह्रस्व-भाविनी—उपधा नास्तीत्यप्रवृत्तेरनित्यस्ततश्च मा भवानेदिधत् इति प्राप्नोति-इति इदि-धदिति चेच्यते ' न माङ्योगे" ( ६ । ४ । ७४ ) इत्याटो निषेधात्। नैष दोषः। ओणेः

२२३. अयामन्ताल्वाय्येत्न्विष्णुषु [ ६ । ४ । ५५ ]

"आम्-अन्त-आलु-आय्य-इत्नु-इष्णु" एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । चकमे । इडादित्वान्न णिलोपः । कामयिता कमिता । अय गतौ । अयते ।

---

अदित्करणं ज्ञापकं नित्यमपि "अजादेर्द्वितीयस्य" ( ६ । १ । २ ) द्वित्वं बाधित्वा पूर्वमुपधाह्रस्व एव भवतीति । पूर्वं हि द्वित्वे मा भवान् उणिणदित्यत्रापि ह्रस्वभाविनी उपधा नास्तीति ह्रस्वाप्रसङ्गात् किं तन्निषेधार्थेन अदित्करणेनेति । ततो द्वित्वम् । हलादिः शेषः । कुहोश्चुत्वम् अडागमः । सन्वद्भावः इत्वम् । दीर्घः । ननु लघुनीत्युच्यते[1] न चात्राभ्यासात्परं लघुं पश्यामः । ककारेण व्यवधानात् । वचनाद् व्यवधानेऽपि स्यादिति । मैवम् येन नाव्यवधानम् इत्येकेन वर्णेन व्यवधाने भविष्यति [2]नान्येनाप्येकेन । यद्येवमचिकणदित्यत्रापि न स्यात् नैष दोषः । "अत् स्मृदृत्वर" ( ७।४।९५ ) इत्यात्त्वविधानं ज्ञापकं भवति [3]संयोगव्यवधानेऽपीत्वमिति । तेनाज्झलसमुदायव्यवाय एव न भविष्यति । अचीकमेतामित्यादीति । णिङभावपक्षे इति "आयादयः' (३।१।३१) इति विकल्पितत्वात् । चङ् वाच्य इति । "णिश्रि" ( ३।१।४८ ) इत्यस्याप्राप्तेर्वचनम् [4]। अचकमतेति "चङि ( ६ । १ । ११ ) इति द्वित्वम्, अकमिष्टेति त्वप्रयोग एव ॥ २१ ॥

अयामन्त इति । णिलोपापवादः । मात्रालाघवाय नेति वाच्येऽयादेशवचनं "ल्यपि लघुपूर्वात्"(६।४।५६) इत्येवमर्थम् । [5]प्रस्तनय्य । न ह्यत्र गुणायौ संभवत इति । आम् । "कास्प्रत्यय" ( ३। ।३५ ) इति विहितः । अन्तः "झोऽन्तः" ( ७ । १ । ३ ) । गण्डयन्तः । मण्डयन्तः । औणादिको झच् । आलुः स्पृहयालुः । "स्पृह" इत्यादिनौणादिसूत्रेणोक्तः । आय्यः स्पृहयाय्यः । "श्रुदक्षिस्पृहिभ्यः आय्यः" इत्यौणादिकः । इत्नुः औणादिकः । स्तनयित्नुः । इष्णुः पारयिष्णुः "णेश्छन्दसि" (३।२।१३७) इति इष्णुच् । कामयाञ्चक्रे इति । प्रत्ययाञ्चक्रे इति । प्रत्ययान्तत्वादाम् । णोलोपे प्राप्तेऽयादेशः । कृञोऽनुप्रयोगः । आम्प्रत्ययवदित्यात्मनेपदम् । चकमे इति । णिङभावपक्षे लिटि द्वित्वादि । कामयिषीष्ट । कमिषीष्ट । कामयिष्यते । कमिष्यते[6] । अये । अयते इति । अनुदात्तेत्वादात्मनेपदम् । कथं तर्हि "उदयति विततोर्ध्वरश्मिरज्जौ" इति माघः । इण आदादिका

---

१. इत्युच्यमाने इति क० पु० ।

२. नानेकेति ख० पु० ।

३. विधानेऽपि क० पु० ।

४. आपादय इति विकल्पितत्वादिति नास्ति क० पु० ।

५. प्रस्तनध्यने इति क० पु० ।

६. अयतेस्तूदयमान इति स्यात् इति नास्ति क० पु० ।

## २२४. उपसर्गस्यायतौ [ ८ । १ १९ ]

अयतौ परे उपसर्गरेफस्य लत्वं स्यात् । प्लायते । पलायते । पल्ययते । "प्रत्ययः (३।१।१) इति ज्ञापकात् प्रतेर्न । प्रत्ययत । निस्दुस् एतयो रेफस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते । आयिष्ट । आयिढ्वम् । आयिध्वम् ।

---

दुद्यतीति स्यात् । उच्यते । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । तेन लभन्ति पुनरुत्थानम् इत्याद्यपि सिध्यति । अत एव वोपदेवोऽपि एतदनुसारादय गतावित्युभयपदिनमपाठीत् । अयतेः पचाद्यजन्तादाचारक्विपि शतरि रूपम । अन्ये तु इट क्टि कटी गताविति भ्वादिष्विकारमपि धात्वन्तरं प्रश्लिष्यन्ति तस्य च परस्मैपदमुपवर्णयन्ति ॥२२३॥

उपसर्गस्यायतौ । अयताविरयनेन रेफो विशिष्यते प्राधान्यात् न तूपसर्गस्तेन प्रत्ययते इति प्रतेर्न भवति तिशब्देन व्यवधानादित्याह—उपसर्गरेफस्येति । यद्येवं प्लायते पलायते इत्यादावपि न स्यात् अकारेण व्यवधानात् । सवर्णदीर्घ कृते नास्ति व्यवधानम् । अजादेशः पूर्वविधौ स्थानिवदिति व्यवधानमेव । न च पूर्वत्रासिद्धीये न स्थानिवदिति निषेधः । 'तस्य दोषः । 'संयोगादिलोपलत्वणत्वेषु" ( वा० ) इति सापवादत्वात् । सत्यम् । येन नाव्यवधानम्" इत्येकवर्णेन व्यवधानमाश्रयिष्यते नानेकेन । एवं च पल्ययते इति श्रूयमाणेन यकारेणापि व्यवधाने न भवति । ननु निर्दुरो रेफान्तयोरव्यवधानं सम्भवति । मैवम् । यद्येतावत् प्रयोजनं स्यात् निर्दुरोरयतावित्येव वदेत् । उपसर्गग्रहणात्तु व्यवायेऽप्येकेन भवति । ये त्वाहुः अयताविति 'श्रुतत्वादुपसर्गस्य विशेषणम् । अयतौ परे य उपसर्गस्तस्य यो रेफ इति । एवं च व्यवधाने भविष्यति । यद्येवम्, प्रत्ययते इत्यत्रापि प्राप्नोति इत्याशङ्क्य तन्मतेऽपि परिहारमाह—प्रत्यय इति ज्ञापकादिति । 'प्रत्ययः" ( ४ । १ । २ ) "परश्च" ( ४ । १ । ३ ) इति सौत्रनिर्देशादित्यर्थः । प्रतिपूर्वस्यायतेः "पुंसि सज्ञाया घः प्रायेण" ( ३ । ३ । ११८ ) इति घान्त'स्येदं रूपमिति पक्षे ज्ञापकम् । ये तु प्रतिपूर्वादिणः एरचि रूपमेतदित्याहु., तन्मते अयतेरभावात् लत्वाप्रसङ्गान्न ज्ञापकमेतत् । कथं तर्हि प्रत्ययित इति । अजन्तादेवेणः प्रतिपूर्वात्तारकादित्वादितचि भविष्यति-एवं चायतौ प्रतेर्भवत्येव लत्वम् 'प्लत्ययते' इत्याहुः । अन्ये तु प्रतिपूर्व

---

१. अय इति नास्ति क० पु० ।

२. श्रुतत्वादिति क० पु० ।

३. घान्तस्येदम् रूपमित्यत्यारभ्य—इति च भविष्यतीत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० । तत्स्थाने प्रतिपूर्वादित्तचिभविष्यतीति पाठः ।

४. प्लयते इति क० पु० ।

२२५. दयायासश्च [ ३ । १ । ३१७ ]

'दय्-अय्-आस्' एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । दय दान-गतिहिंसादानेषु । अदयिढ्वम् । अदयिध्वम् । दयांचक्रे । स्फायी वृद्धौ । स्फायते । चायस्फायप्यायामिड् वेति केचित् । अस्फायिष्ट । लोपो व्योर्वलि । अस्फात् । पस्फाये । ओप्यायी वृद्धौ ।

---

स्यायतः प्रयोगमेव नेच्छन्ति । अथ निरयते दुरयते इत्यत्र कस्मान्न स्यादत आह—निस् दुस इत्येतयोरिति सान्तयाः "ससजुषो रुः" ( ८।२।६६ ) इति रुत्वम्, तच्च "पूर्वत्रा-सिद्धम्" ( ८ । · । १ इति लत्व प्रत्यसिद्धमित्यर्थः । "निरः कुष." ( ७ । २ । ४६ ) "सुदुरोरधिकरणे" , वा० ) इत्यादिनिर्देशाद् रेफान्तावप्युपसर्गौ स्तस्तयोस्तु भवि-तव्यमेव लत्वेन । आयिष्ट । आयिड्ढ्वम् । आयिध्वमिति । विभाषेटः" ( ८ । ३ । ७६ ) इति वा मूर्धन्यः "ध्वे सलोपो' वा" ( वा ) सस्य दः इति पक्षे आयिद्ध्वमित्यपि । अयिता । अयिषीष्ट । अयिषीध्वमित्यादि नेयम् ॥ २२४ ॥

दयायासश्च । अत्र दय दानगतिरक्षणहिंसादानेषु इति पठन्ति । दयते । अदयिष्ट । अदयिड्ढ्वम् । अदयिध्वम् इति "विभाषेटः" ( ८ । ३ । ७६ ) इति वो मूर्धन्यः । सलोपाभावे अदयिद्ध्वमित्यपि । दयाञ्चक्रे ) "दयायासश्च" ( ३ । १ । ३७ ) इत्याम् । दयिषीढ्वम् । दयिषीध्वमिति । स्फायी । ईदित् । 'श्वीदितो निष्ठायाम्" ( ७ । २ । ·४ ) इति इडभावार्थो भवति । 'स्फायः स्फी निष्ठायाम्" ( ६ । १ । २२ ) इति नित्ये स्फीभावे कृते एकाचः स्वरान्ता इत्येवानिट्त्वसिद्धे तस्मादनुदात्तत्वमाश्रमस्य फलमित्याहुः । अनुदात्तत्वादात्मनेपदी । स्फायते । स्फायन्निर्मोकसन्धरीति मुरारेः परस्मैपदप्रयोगः प्रमादः । अनुदात्तत्वलक्षणात्मने-पदानित्यत्वाद्वा समर्थनीयः । चाय् इति । चायृ पूजानिशामनयोः । स्फायी श्रो प्यायी वृद्धौ । केचित् त्रिमुनीतरे । अस्फास्तेति । इडभावे यलोपः । परस्मैपद इत्युक्ते-र्नट्सको । अस्फासाताम् । अस्फाद्ध्वम् । पक्षे अस्फायिढ्वम्, अस्फायिध्वम् । पस्फाय । "शपूर्वाः खयः" पस्फायिषे । क्रादिनियमान्नित्यमिट् तेन च पस्फासे इति विकल्पो न । ध्वमि' प्राग्वत् । स्फायिता । स्फाता । स्फायिषीष्ट । स्फासीष्ट । षीध्वमि प्राग्वत् । स्फायिष्यते । स्फास्यते । ओप्यायी । ओदित् पीनः इति निष्ठानत्वार्थः । ईदित्त्वम्, आप्यानः, प्रप्यानः इति निष्ठायां पीभावाभावेऽनिट्त्वार्थम् । पीभावे तु स्वरान्ता' इत्येवानिट्त्वसिद्धेः प्यायतेर्लुङि प्रक्रियामाह—॥ २२५ ॥

---

१. ध्वेसलोपाचेति क० पु० ।

२. ध्वमिति इति क० पु० ।

**२२६. दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् [ ३ । ३ । ६१ ]**

दीपादिभ्यश्च्लेश्चिणादेशः स्याद्वा एकवचने तशब्दे परे।

**२२७. चिणो लुक् [ ६ । ४ । १०४ ]**

चिणः परस्य तप्रत्ययस्य लुक् स्यात्। अप्यायि। अप्यायिष्ट। अप्यास्त।

**२२८. लिड्यङोश्च [ ६ । १ । २९ ]**

लिटि यङि च प्यायः पीभावः स्यात्। पिप्ये। प्यायिता। प्याता। तायृ संतानपालनयोः। "दीपजन" ( ३ । १ । ६१ ) इति वा चिण्। अतायि।

---

दीपजनेति। दीपी दीप्तौ। जनी प्रादुर्भावे। बुध अवगमने। पूरी आप्यायने। तायृ संतानपालनयोः। ओ प्यायी वृद्धौ। दीपादिभिरात्मनेपदिभिः साहचर्यादिह जन जनने, बुध बोधने इति परस्मैपदिनो ग्रहणम्। तेनाभ्यां कर्मव्यतिहारे आत्मनेपदे तशब्देऽपि न भवति। तशब्दे इति। "चिण् ते पदः" ( ३ । १ । ६० ) इत्यतोऽनुवृत्तेः। "तस्थस्थमिपाम्" ( ३ । ४ । १०१ ) इति विहितस्य परस्मैपदमध्यमपुरुषबहुवचनभ्रमनिवृत्त्यर्थमाह—एकवचन इति। नित्यात्मनेपदिभ्यो दीपादिभ्योऽन्यस्य तस्यासंभवात्। "चिणः" ( ६ । ४ । १०४ ) इत्यत्रापि तस्यैव ग्रहणादिति भावः। अयं विकल्पः कर्तर्येव। "णिश्रि" ( ३ । १ । ४८ ) इत्यतः कर्तरि इत्यनुवृत्तेः। भावकर्मणोस्तु "चिण् भावकर्मणोः" ( ३ । १ । ६६ ) इति नित्यमेव भवति। परत्वाच्च ॥ २२६ ॥

चिणो लुक्। लुगिति प्रत्ययादर्शनस्य संज्ञा। न च चिणः परोऽन्यः प्रत्ययः संभवति तशब्द एव विधानात्। न त्वयं संभवति, अकारितरामिति। नैवम्। "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इति तल्लोपस्यासिद्धत्वेन तरबादेर्लोपस्याप्रसङ्गात्। व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणभेदेन चिणो लुक् चिणो[2] लुकं प्रत्येवासिद्धो भवतीति सिद्धान्तादित्यालोच्याह—तप्रत्ययस्य लुक् स्यादिति। अप्यायिष्टेति। चिणभावे सिच् इट् षत्वम्। ष्टुत्वम्। आप्यास्तेति। "चायृस्फायप्यायामिड् वा" ( वा० ) इति सिच इडभावे यलोपः। आप्यायिषाताम्। आप्यासाताम्। आप्यायिढ्वम्। आप्यायिध्वम्। अप्याध्वम्। अप्याद्ध्वम् ॥ २२७ ॥

लिड्यङोश्च। पिप्ये इति। परत्वादादौ पीभावे पुनः प्रसङ्गविज्ञानाद् द्वित्वम्। "एरनेकाच" ( ६ । ४ । ८२ ) इति यण्। प्यायिता। प्याता। वेट्। प्यायपीष्ट।

---

१. इष्यान इति क० पु०।

२. चिणो पुरस्येवासिद्धो इति क० पु०।

अतायिष्ट । शल चलने संवरणे च । अशलिढ्वम् । अशलिध्वम् । षेवृ सेवने । "परिनिविभ्यः" ( ८ । ३ । ७० ) इति षत्वम् । परिषेवते । न्यषेविष्ट । निषिषेवे । एभ्यः किम् ? प्रतिसेवते । काशृ दीप्तौ । काश आम् वेति केचित् । काशामास । चकाशे । कासृ शब्दकुत्सायाम् । "कास्प्रत्ययात्" ( ३।१।३५ ) इत्याम् । कासाञ्चक्रे । वेति केचित् । चकासे । ईह चेष्टायाम् । ऐहिढ्वम् । ऐहिध्वम् । ईहाञ्चक्रे । ईहिता । गाङ् गतौ । गातेः शपि कृते प्रकृत्याश्रयत्वादादौ सवर्णदीर्घः । तेन "आतो ङितः"(७।२।८१) इति इय् न । गाते । "आत्मनेपदेष्वनतः" (७।१।५) गाते । गासे । गाथे । गाध्वे । गै आते आलोप इत्येके । गे । गावहे । गामहे । गेत । गेयाताम् । गेरन् । गाताम् । गै । गावहै । गामहै । अगात् । अगाताम् । अगास्त । जगे । गाता । गासीष्ट । रुङ् गतौ भाषणे च । अरविष्ट । अरविढ्वम् । अरविध्वम् । मतान्तरे इड् वा । लिटि तु नित्यम् । रुरुविपे । देङ् पालने । दयते ।

---

प्यासीष्ट । ध्वमि[१] प्राग्वत् । प्यायिष्यते । प्यास्यते । तायृ । संतान । प्रवन्धः । ऋदित्वमततायदित्यत्र "नाग्लोपि" ( ७ । ४ । २ चङि उपधाह्रस्वनिषेधार्थम् । तायते । तायेताम् । तायि इति । चिण्पक्षे "चिणो लुक्" ( ६ । ४ । १०४ ) । अतायिष्टेति । चिणभावे सिच इट् । अतायिढ्वम् । अतायिध्वम् । अतायिद्ध्वम् । तताये । ध्वमि "विभाषेटः" ( ८ । ३ । ७९ ) इति वा ढत्वम् । शल । शलते । अशलिढ्वम् । अशलिध्वम् । इति वा ढत्वम् । शेले । शेलिढ्वे । शेलिध्वे । शलिता । शलिषीष्ट । पाध्वमि वा ढत्वम् । अय गत्यर्थे ज्वलादौ परस्मैपदी । तस्य शलतीत्याद्यपि । षेवृ । "परिनिविभ्यः" ( ८ । ३ । ७० ) इति षत्वमिति । षेवतेः षोपदेशस्य "धात्वादेः षः सः" ( ६ । १ । ६४ ) इति सत्वे कृते "सात्पदाद्योः" ( ८ । ३ । १११ ) इति निषेधे प्राप्तेऽनेन षत्वम् । दन्त्यसकारादिरप्ययमस्तीति न्यासरक्षितादिमतम् । तस्य त्वप्राप्त षत्वमनेन विधीयते इत्यर्थः । न्यषेविष्टेति । "प्राक्सितादड्व्यवायेऽपि" ( ८ । ३ । ६३ ) इति षत्वम् । निषेविढ्वम् । "विभाषेटः ( ८ । ३ । ७९ ) इति वा ढत्वम् । निषिषेविढ्वे । "स्यादिष्वभ्यासेन" ( ८ । ४ । ६४ इति षत्वम् । केवलस्य [illegible] सेवते । सिषेवे । सिषेविढ्वे । सिषेविध्वे । अषोपदेशस्य तु सिसेवे इत्यादौ "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वं न भवति । सेविता । सेविषीष्ट ।

---

१. षीध्वमिति इति क० पु० ।

ध्वमि[1] प्राग्वत् । एध्य[2]: किमिति उपसर्गादित्येवानुवर्तत किं परिनिविभ्य इत्यनेने-त्यर्थः। काशृ। ऋदित्त्वमचकाशदिति चङि ह्रस्वाभावार्थम्। तालव्यान्तोऽयम्। काशते। काश आम्वेति[3] कश्चित्। केचित् काशृप्रत्ययादिति तालव्यान्तं पठन्ति इत्यर्थः। चकाशे। चकाशिध्वे। अनिण्परत्वान्न ढत्वम्। काशिता। काशिषीष्ट। कासृ दन्त्यान्तोऽयम्। कासते। अकासिष्ट। वेति केचित् इति। ये काशृप्रत्ययादिति शान्तं पठन्ति ते दन्त्या[4]न्तादाम नेच्छन्ति इत्यर्थः। ईह्। ईह्ते। ऐहिढ्वम्। ऐहिध्व-मिति। "विभाषेटः" (८।३।७९) इति वा ढत्वम्। ईहाञ्चक्रे इति। "इजादेश्च" (३।१।३६) इत्याम्। ईहिषीष्ट। ईहिषीढ्वम्। ईहिषीध्वम्। गाङ्। अनिट्[5]। गाते इति शप् सवर्णदीर्घः। गाअ आते इति स्थिते सवर्णदीर्घात्परत्वात् "आतो ङितः" (७।२।८१) इतीय् प्राप्नोति। तस्मादगुणे गेते इति स्यात् अत आह— शपि कृते इति। पूर्वं पूर्वं स्यादन्तरङ्गम् परं[6] परं स्याद्बहिरङ्गम् इत्यन्तर्भूतधातु-शबाश्रयत्वाद् वर्णमात्राश्रयत्वाच्चान्तरङ्गे दीर्घे कर्तव्ये बहिर्भूतङिदपेक्षत्वादङ्ग-प्रत्ययङिदाश्रयतया बहूपेक्षत्वेन च बहिरङ्गत्वादियादेशस्य बहिरङ्गस्यासिद्धत्वा-दित्यर्थः, कृते च सवर्णदीर्घेऽतः परम् अकारो नास्तीति इय् न भवतीत्याह—तेनेति। न च सवर्णदीर्घस्यादिवद्भावेनातः परत्वमाकारस्य। वर्णाश्रयत्वेनान्तादिवद्भावा-भाव इति स्थितत्वात्। न च वार्णादाङ्गं बलीय इति सवर्णदीर्घात् प्रागेवेयादेश स्यादिति वाच्यम्। यदयमङ्गात् परस्येत्यङ्गस्य न भवतीति माधवेनाद्युक्तत्वात्। आतमने इत्यादि। अनेन "झस्यादादेश[7] इत्यर्थः। गाते इति। गा अ झ इति स्थिते प्राग्वदादौ सवर्णदीर्घ कृते वर्णाश्रयत्वेनादिवद्भावोऽपि नास्तीत्यनत इति पर्युदासाभावात् झस्याद्भावो भवति। एवं च त्रिष्वपि वचनेषु समानं रूपं भवति। एति[8]आलोप इति केचित्। अर्वाचीनमतमेतत्। गे इति आलोपाभावे "वृद्धिरेचि" (६।१।८८) "अतो गुणे" (६।१।९७) इति पररूपं तु नास्ति पूर्ववत्सवर्णदीर्घे कृतेऽतोऽभा-वात्। "आतो लोप इटि च" (६।४।६४) इत्यपि न भवति। आर्धधातुकस्ये-टस्तत्र ग्रहणात्। गेतेति। लिङः सीयुट् सलोपः। यलोपः। आद् गुणः। गेयातामिति। वल्परो नास्तीति न यलोपः। वचनत्रयेऽपि समानत्वात्तन्त्रेणोदाहृतम्। गास्व।

१. धीध्वमिति क० पु०।
२. एध्य इति किमिति क० पु०।
३. आम्वेति क० पु०।
४. दन्त्यान्तादिम् इति क० पु०।
५. आते इ इति क० पु०।
६. पर स्यादिति क० पु०।
७. झस्यादादेश इति क० पु०।
८. एतौयेव क० पु०।

गाथाम् । गाध्वम् । गै इति । एति आलोप इति तु न भवति एत ऐत्वे कृते एतोऽभावात् । प्रागपि न भवति अन्तरङ्गत्वात् पूर्वं-वृत्तेनाटा व्यवधानात् । अगात । लङ् । अगातामिति । आतामि । झे त्वदादेशे अगातेत्यत्र ज्ञेयम् । अगाथाः । अगाध्वम् । आद् गुणः । अगे । अगावहि । अगास्तेति । लुङि सिच "एकाचः" ( ७ । २ । ७० ) इति नेट् । परस्मैपदेष्वित्युक्तत्वं सगिटौ । अगासाताम् । अगासत । अगास्थाः । अगासाथाम् । "धि च" ( ८ । २ । २५ ) इति सलोपः । वा सस्य दः अगाद्ध्वम् । अगाढ्वम् । अगासि । अगास्वहि । जग इति । "लिटस्तझयोरेशिरेच्" ( ३ । ४ । ८ द्वित्वम् । ह्रस्वः । कुहोश्चुः । "आतो लोप इटि च" ( ६ । ४ । ३४ ) इत्यालोपः । जगाते । जगिरे । जगिषे । जगाथे । जगिध्वे । जगे । जगिवहे । जगिमहे । लिटि क्रादिनियमादिट् । गातेति । 'गाङ्कुटादि" ( १ । २ । १ ) इति सूत्रे इङादेशस्य गाङो ग्रहणादस्मात् परस्य न ङित्त्वम् । तेन ' घुमास्था" (६ । ४ । ६६ इतीत्त्वं न । गासीष्टेति । आशिषि लिङः सीयुट्, सुट् तिथोः यलोपे षत्वम् । ष्टुत्वम् । गासीयास्ताम् । गासारन् । गासीष्ठाः । गासीयास्थाम् । गासीय । गासीवहि । गास्यते । अगास्यत् । अयं च धातुरादादिक इति "गापोष्टक्" ( ३ । २ । ८ ) इत्यत्र स्थितम् । न्यासपदमञ्जर्यादिषु शपि वाऽस्य प्रयोजनं न दृश्यते । स चात एव शपि पाठसामर्थ्यादन्तरङ्गमपि सवर्णदीर्घं बाधित्वा "आतो ङितः" ( ७ । २ । ८१ ) इत्यकाराश्रयकार्यसिद्धिप्रयोजनं स्यादिति वाच्यम्[1] । यत्र क्वचित्पठितत्वस्य तत्र पाठे पाठसामर्थ्यानुपपत्तेरभावात् । न्याय्यप्रक्रियाबाधेनालौकिकप्रयोगकल्पनस्यान्याय्यत्वाच्च । एवं च रूपे फले च विशेषाभावादयमिहैव कैश्चित्पठित इति बोध्यम् । रुङ् भापणे अन्ये च रोपणे चेति पठन्ति । रोपणं कोपोत्पादनम् । सेट् । रवते[2] । अरविष्टेति । लुङि सिच इट् । षत्वष्टुत्वे । अरविषाताम् । अरविषत । अरविढ्वम् इत्यादि "विभाषेटः" ( ८ । ३ । ७६ ) इति वा ढत्वम् । मतान्तरे इड् वेति[3] । रुदुसुनुधातूना लिट विनेड् वेति केचिदित्युक्तेः तेनेडभावपक्षे अरोष्टाम् । अरोषाताम् । अरोढ्वम् । अरापि । अरोष्वहीति नेयम् । लिटि तु रुरुवे । रुरुवाते । रुरुविरे । लिटि तु नित्य लिटं विनेत्युक्तेः । मतान्तरेऽपि न[4] विकल्प इत्यर्थः । रोता । रविता । रोषीष्ट । रविषीष्ट । रविषाध्वम् । रविषीढ्वम् । रविषीद्ध्वम् । रविष्यते । रोष्यते । रुशब्दे इत्यादौ रुः परस्मैपदी । देङ् । अनिट् । दयते इति । शप्ययादेशः ॥ २२८ ॥

---

१. वाच्यमिति नास्ति ख० पु० ।

२. रव इति क० पु० ।

३. अट्टे ति क० पु० ।

४. न इति नास्ति क० पु० ।

## २२९. स्थाघ्वोरिच्च [ १ । २ । १७ ]

अनयोरिदन्तादेशः स्यात् सिच्च कित् स्यादात्मनेपदेषु । कित्त्वान्न गुणः ।

## २३०. ह्रस्वादङ्गात् [ ८ । २ । २७ ]

ह्रस्वादङ्गात् परस्य सिचो लोपः स्याज्झलि । अदित । अदिषाताम् । अदिथाः । अदिढ्वम् ।

## २३१. दयतेर्दिगि लिटि [ ७ । ४ । ९ ]

देङो दिगिरादेशः स्याल्लिटि । दिग्यादेशेन द्वित्वबाधनमिष्यते । दिग्ये । दिग्याते । दाता । दासीष्ट । डीङ् विहायसा गतौ । अडयिष्ट । डिड्ये । डायिता । गुरु गोपनकुत्सनयोः । जुगुप्सते । मान विचारणे ।

---

स्थाध्वोरिति । ष्ठा गतिनिवृत्तौ । दाधा घ्वदाप् । चकारेण सिच् किदिति समुच्चीयते इत्याह—सिच्च कित्स्यादिति । कित्त्वान्न गुण इति । इत्त्वविधानं गुणार्थमेव स्यादिति । न तत्सामर्थ्याद् गुणाभावः शक्यो वक्तुमिति भावः ॥ २२९ ॥

अदितेति । "आदेच उपदेशेऽशिति" ( ६ । १ । ४५ ) इत्यात्त्वम् । अदिढ्वम् इति । "इणः षीध्वम्" ( ८ । ३ । ७८ ) वा ढत्वम् ॥ २३० ॥

दयतेर्दिगि लिटि । देङोऽत्र ग्रहणं न दय दानगतिहिंसादानेषु इत्यस्य । तस्य "दयायासश्च" ( ३ । १ । ३७ इत्याम्विधानाद् इत्याह—देङ् इति दिगिरादेशः स्यादिति । सूत्रे त्वविभक्तिको निर्देशः । अनुकार्यानुकरणयोरभेदविवक्षया सौत्रत्वाद्वा दिग्यादेशेन द्वित्वबाध इति । नाप्राप्ते द्वित्वेऽस्यारम्भात् इति भावः । ननु दयतेर्यत्प्राप्तं द्वित्वं तदादेशेन बाध्यतां नाम यत्पुनरादेशस्य प्राप्तं तत्कथं बाध्यते न ह्येतस्मिन्नाप्राप्तेऽस्यारम्भः कथमन्यथा पिप्ये आचख्ये इत्यादेशस्य द्वित्वं भवति । अत्राहुः बाध्यबाधकभावे द्वैतम् । लक्ष्यं वा लक्षणेन बाध्यते लक्षणं वा । तत्राद्ये पक्षे स्यादेतत् दूषणम् द्वित्वशास्त्रस्याबाधितत्वात् । द्वितीये तु दिग्यादेशशास्त्रेण द्वित्वशास्त्रमेव बाधितमिति न पुनः प्रसङ्गः । पाख्याञ्शास्त्राभ्यां तु पूर्वं प्रवृत्तं लक्ष्यमेव बाधितं न तु शास्त्रमिति तदादेशे पुनः प्रवर्तते । यद्वा पीख्याञौ लिट्यार्धधातुके इति विषयसप्तमीत्यौत्तरकालिकं द्वित्वमिति न ताभ्यां बाध्यते । दिग्यादेशस्तु परसप्तमीत्वात् समकालप्राप्तं द्वित्वं बाधिष्यते इति । तमेव विषयविवेकं दर्शयति—इष्यते इत्यनेन । यत्र बाध इष्यते तत्र लक्षणस्य बाधो व्याख्येयः । परसप्तमी वा । यत्र तु नेष्यते तत्र लक्ष्यस्य बाधो विषयसप्तमी चाश्रयितव्येति । दिग्ये इति । "एरनेकाचः" ( ६ । ४ । ८२ ) इति

२३२. मानबधदान्शान्भ्यो दीर्घश्चाभ्यासस्य [३।१।६]

एभ्यः सन् स्यादभ्यासस्य च दीर्घः। "सन्यतः" (७।४।७९) इतीत्वम्। ततो दीर्घः। मीमांसते। बध निन्दायाम्। भष्भावः चर्त्वम्। बीभत्सते। द्युत दीप्तौ। द्योतते।

---

यण्। डीङ्। विहायसा आकाशेन गमने। "वा तु पुंस्याकाशविहायसी" इत्यमरः। विहायसेति आकाशान्तमव्ययमिति दीर्घाः। तत्राधिकरणमर्थः। विहायसां गतौ इत्याकरः पाठः। इतो दश सेटः। डयते। डयताम्। अडयत। अडयिष्टेति। लुङि सिच इट्। गुणायादेशौ। अडयिषाताम्। अडयिढ्वम्। अडयिध्वम्। गुप्। अनुदात्तेत्। जुगुप्सते इति। "गुप्तिज्किद्भ्यः सन्" (३।१।५) इति स्वार्थे सन्। अनार्धधातुकत्वान्नेड्गुणौ। "सन्यङोः" (६।१।९) इति द्वित्वम्। हलादिः शेषः कुहोश्चुः। धातुसंज्ञाया लट्। अवयवेऽचरितार्थमिति सन्नन्तादात्मनेपदम्। शप्। अतो गुणे। जुगुप्सते। अजुगुप्सिष्ट। जुगुप्साञ्चक्रे। जुगुप्सिता। जुगुप्सिषीष्ट। अस्मान्निन्दायामेव सनित्युक्तम्। निन्दाया अन्यत्र णिजेव। न तु तिङः कृते। वा गुप गोपनकुत्सनयोरिति सहार्थनिर्देशेऽपि निन्दाद्यर्थवृत्तय एवानुदात्तेतो नित्यसन्नन्ताः। गोपनाद्यर्थवृत्तयस्तु निरनुबन्धकाश्चौरादिका एवेति स्थितत्वात्। एवं मान्बधयोरप्युन्नेयम्। मान॥ २३०॥

मा-बध। मान-पूजायाम्। बध बन्धने। दान अवखण्डने। शान तेजने। एभ्यः क्रमाद् विचारनिन्दार्जवनिशामनेषु सनिष्यते। अत एवैतदर्थका एवोदाहृता इहाचार्यैः। नन्वभ्यासस्य दीर्घो विधीयमानो येन नाप्राप्तिन्यायेन "सन्यतः" (७।४।७९) इतीत्व बाधेतेत्याशङ्क्याह—सन्यत इतीत्वम्, ततो दीर्घ इति। "अभ्यासविकारेष्वपवादा नोत्सर्गविधीन् बाधन्ते" इति "दीर्घोऽकितः" (७।४।८३) इत्यत्र ज्ञापितत्वादिति भावः। यत्तु प्राचा ह्रस्वमपि बाधेत इत्यापादितम्। तदसत्। यदि ह्रस्वस्यैव दीर्घो भवति इति पक्षः तत्कथं निमित्तमुपहन्यात् प्रवर्तत वा। अथ दीर्घस्यापि दीर्घो भवतीति मतम्, तर्हि बाधितेऽपि ह्रस्वे का नाम क्षतिः। दीर्घस्य दीर्घविधानसामर्थ्याद् ह्रस्वाभावादित्व बाध्येतेति चेन्न। न ह्यकृते ह्रस्वे दीर्घस्येत्वं प्रसज्यते कृते सेत्तर्हि ईत्वबाध एवानिष्टमापद्यते इति। तदेवाक्षिप्य परिहृतमाचार्यैस्तत्र किं ह्रस्वाक्षेपोपक्षेपेण। मीमांसते इति। पूर्ववदात्मनेपदम्। नस्यानुस्वारः। मीमांसेत। अमीमांसिष्ट। मीमांसाञ्चक्रे। मीमांसिता। मीमांसिषीष्ट। बध। पवर्गीयादिरयम्। निन्दायामिति। बन्धनार्थोऽपि निन्दायामेव सनमुत्पादयतीति भावः। भष्भाव इति। "एकाचो बशः" (८।२।३७) इत्यनेन बस्य भः। चर्त्वमिति। "खरि च" (८।४।५५) धस्य तः। बीभत्सते इति। "सन्यतः" (७।४।७९, इतीत्वे दीर्घः। अनयोरर्थान्तरे णिजेवेत्युक्तमेव। द्योतते इति। शपि "पुगन्त" (७।३।८६) इति गुणः॥२३२॥

२३३. द्युद्भ्यो लुङि [ १ । ३ । ९१ ]

द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि । "पुषादिद्युताद्ि" ( ३।१।५५ ) इत्यङ् । अद्युतत् । अद्योतिष्ट ।

२३४. द्युतिस्वाप्योः संप्रसारणम् [ ७ । ४ । ६७ ]

द्युतेः स्वापेश्चाभ्यासस्य संप्रसारणं स्यात् । पूर्वरूपत्वम् । दिद्युते । वृतु वर्तने । द्युतादित्वाद् अवृतत् । अवर्तिष्ट ।

२३५. वृद्भ्यः स्यसनोः [ १ । ३ । ९२ ]

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात् स्ये सनि च ।

---

द्युद्भ्यो लुङि । बहुवचननिर्देशादाद्यर्थावगतिरित्याह—द्युतादिभ्य इति । लुङीति स्थानिनोऽधिकरणत्वविवक्षया सप्तमी । अद्योतिष्टेति । परस्मैपदेष्वित्युक्तेस्तदभावेऽङ् नास्तीति । सिच इडादि । अद्योतिढ्वम् ॥२३३ ॥

द्युतिस्वाप्योः । स्वापेरिति निर्देशात् स्वपिण्यन्तोऽत्र गृह्यते । तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणमिष्यते । सुष्वापयिषति । इह तु न भवति स्वापयतेर्ण्वुल्—स्वापकः ततः क्यच् स्वापकयति । स्वापकीयतेः सन् सिस्वापकीयिषति । द्युतेः पुनरभ्यासनिमित्तेन प्रत्ययेनानन्तर्यं नापेक्ष्यते तेनादिद्युतदिति । णिचा व्यवधानेऽपि भवति । अत एव देद्युतीति यङ् [1]लुक्यपि भवति । आनन्तर्याश्रयणे तु न स्यात् यङ्प्रत्ययाभावात् । लुका लुप्तत्वाच्च प्रत्ययलक्षणं नास्तीति माधवः । एवं च द्योतकीयतेः सन्यभ्यासस्य संप्रसारणं भवति न वेति चिन्त्यमिति हरदत्तः । पूर्वरूपत्वमिति । "सम्प्रसारणाच्च" ( ६ । १ । १०८ ) इत्यनेन । द्योतिषीष्ट । वृतु । उदित्त्वम् । वर्तित्वा । वृत्त्वेति । क्त्वायामिड्विकल्पार्थम् । वर्तते । ववृते । ननु द्युतादिष्वेव वृतादयः पठ्यन्ते तत्र "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति वक्ष्यमाणो विकल्पो लुङि द्युतादिविकल्पं बाधेत परत्वात्ततश्च लुङि विकल्पो न स्यादित्याशङ्क्याह—द्युतादित्वादङीति । "द्युद्भ्यो लुङि" (१ । ३ । ९१, इति परस्मैपदे कृते इति शेषः । द्युतादिपाठसामर्थ्यात् सोऽपि भवतीति भावः । अन्ये तु "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इत्यत्रापि लुङीत्यनुवर्त्य तत्रापि विकल्पं साधयन्ति । परस्मैपदाभावात् इडभावे अवर्तिष्टेति । ववृते । वर्तिता । वर्तिषीष्ट ॥ २३४ ॥

वृद्भ्यः बहुवचननिर्देशादाद्यर्थो गम्यते इत्याह—वृतादिभ्य इति । वृतु वर्तने । वृधु वृद्धौ । शृधु[2] शब्दकुत्सनयोः । स्यन्दू प्रस्रवणे । कृपू सामर्थ्ये । एतेभ्य इत्यर्थः ॥ २३५ ॥

---

१. यङ्लुक्यपि इति क० पु० ।

२. शब्दकुत्सनयो रिति क० पु० ।

२३६. न वृद्भ्यश्चतुर्भ्यः [ ७ । २ । ५९ ]

वृतुवृधुशृधुस्यन्द्भ्यः सकारादेरार्धधातुकस्येण् न स्यात् । तङानयोरभावे पदद्वयादन्यत्र वेति केचित् । वर्त्स्यति । आत्मनेपदेषु वर्तिष्यते । स्यन्दू प्रस्रवणे ।

२३७. अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु [८।२।७२]

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेर्वा षत्वं स्यात् । अनुष्यन्दते । अनुस्यन्दते एवं विपर्यभिनिभ्यः । अप्राणिषु किम् ? निस्यन्दते हस्ती अस्यदत् । अस्यन्दिष्ट । अस्यन्त । स्यन्दिता । स्यन्ता । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । कृपू सामर्थ्ये ।

---

( एतेषामन्ते[1] द्युतादिवृतादिसमाप्त्यर्थात वृत्करणादिति भावः । स्ये सनि चेति विषयसप्तमी । 'न वृद्भ्यश्चतुर्भ्यः' ( ७ । २ । ५९ ) इत्यत्र चतुर्ग्रहणं कृपेर्व्यावृत्त्यर्थम् इति परिसंख्यानेन दर्शयति—वृतु वृधु इत्यादिना । तत्रादितस्त्रयाणां नित्यमिटि प्राप्ते स्यन्देस्तूदित्वाद्विकल्पे प्राप्ते ) निषेधोऽयम् । अत्रापि 'गमेरिट्' ( ७ । २ । ५८ ) इत्यतः परस्मैपदेषु इत्यनुवर्तते तद्वदेव[2] तङानयोरभाव लक्षयति । तेनासत्यपि परस्मैपदे कृति परस्मैपदलुकि च निषेधः सिध्यति । विवृत्सित्वमित्याशयेनाह—तङानयोरभाव इति । पदद्वयादन्यत्रेति । कृत्सीत्यर्थः । केचित् । त्रिमुनीतरे । अत्र भाष्यवार्तिकयोर्वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनादन्यत्र निषेध इत्युक्तं भवति । तेन विवृत्सिषीष्टते[3] इत्यत्र आत्मनेपदोत्पत्तेः पूर्वं तत्समानपदस्थ[4]त्वाभावात् अन्तरङ्गः प्रतिषेधो भवति । अवर्त्स्यत । अवर्तिष्यत । स्यन्दू । स्यन्दते ॥ २३६ ॥

अनुष । अप्राणिष्विति प्रसज्य[5] प्रतिषेधस्तेन तैलादिपदार्थस्तृत्वतया विवक्ष्यते तदाऽप्ययं विकल्पः। अनुस्यन्दते हस्तीति । हस्त्यत्र प्राणीति न भवति । इह चानुस्यन्दते मत्स्योदके इत्यत्रापि न भवति । प्राण्यप्राणिसमुदायेऽपि प्राण्यस्तीति । अन्ये तु पर्युदासं मन्यमानाः प्राण्यप्राणिसमुदायः प्राणिभिन्नो भवतीत्यत्रापि विकल्पमाहुः ।

---

१. ( ) रेखाङ्कित एतेषामन्ते इत्यारभ्य-विकल्पे प्राप्ते इत्यन्तो नास्ति क० पु० । किन्तु एतेषामते द्युतादिवृतादिसमाप्त्यर्थः वृत्करणादित पाठः ।

२. तत्तदेवेति क० पु० ।

३. विवृत्सीयते इति क० पु० ।

४. पदस्यत्वाभावादिति क० पु० ।

५. नेत्यधिकः क० पु० ।

## २३८. कृपो रो लः [ ८ । २ । १८ ]

कृपेः रेफस्य लकारः स्यात् । रो ल इति सामान्योक्तेर्ऋकारैकदेशस्य रेफस्य ऌकारैकदेशो लः । कृपादौ तु लत्वं नेष्टम् । कल्पते । अक्लृपत् । अकल्पिष्ट ।

---

अस्यदत् । द्युतादित्वादेवाङ् । 'अनिदिताम्' ( ६ । ४ । २४ ) इति नलोपः । अस्यदताम् । अस्यन्दिष्टेति । आत्मनेपदेऽङोऽभावात् सिच् तस्योदित्वात् "स्वरतिसूति" ( ७ । २ । ४४ इति वेट् । पत्वष्टुत्वे । अस्यन्दिषाताम् । अस्यन्तेति । इडभावे ' झलो झलि" ( ८ । २ । २६ ) इति सलोपः । झरो झरि सवर्णे" ८ । ४ । ६५ इति दलोप. । पक्षे दस्य चर्त्वेन तत्वे । अस्यन्त । अस्यन्त्साताामित्यादि । सस्यन्दे । सस्यन्दाते । क्रादिनियमान्नित्यमिट् । सस्यन्दिषे । माधवादयस्तूदित्वाद् विकल्पमेवोदाजह्रुः । तेन सस्यन्त्से । सस्यन्दाथे । सस्यन्दिध्वे । सस्यन्द्ध्वे । सस्यदे । सस्यन्दिवहे । सस्यन्द्वहे । सस्यन्दिमहे । सस्यन्द्महे । स्यन्दिता । स्यन्ता । स्यन्दषीष्ट । स्यन्त्सीष्ट । स्यन्त्स्यताति । "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति परस्मैपदं वा । "न वृद्भ्यः" ( ७ । २ । ५९ ) इतीट्निषेधः । ऊदिल्लक्षणं त्वन्तरङ्गं पीड्विकल्पं चतुर्ग्रहणसामर्थ्यात् बाधते इत्यकरं । स्यन्दिष्यते इति । तङानयोरभाव इत्युक्ते "न वृद्भ्यः" ( ७ । २ । ५९ ) इति नेड्निषेध. । स्यन्त्स्यते इति । ऊदित्वादिडभावे । अस्यन्त्स्यत । अस्यन्दिष्यत । कृप् ॥ २३८ ॥

कृपः । कृपो रो लः इति पाठः । भाष्ये कृपः उः रः ल इत्यपि पद[1]विभागकल्पनात् । ननु रा ल इति वर्णयोरेव स्थान्यादेशभावेन निर्देशात्कल्पयतीत्यादावेव स्यात् न त्ववक्लृपत् अवक्लृप्तेत्यादौ । न ह्यत्र रलौ स्तः वर्णैकदेशौ च न वर्णौ तच्छायानुकारिणा हि वर्णैकदेशाः न पुनस्ते एवेत्युक्तत्वात् । न च वचनाद्भवितव्यम् । कल्पते, चक्लृप्यते इत्यादौ चारितार्थ्यादत आह—रो ल इतीत्यादि । 'लुटि च क्लृपः" ( १ । ३ । ९३ ) 'तासि च क्लृपः" ( ७ । २ । ६० ) "ऋदुपधाच्चाक्लृपिचृतेः" ( ३ । १ । ११० ) इत्यादिनिर्देशादेकदेशस्यापि रस्य लत्वमिष्यते[2] इति भावः । कथं पुनरिष्यमाणमपि लभ्यतेऽत आह—सामान्योक्तेरिति । वर्णत्ववर्णत्वकृतभेदतिरस्कारेण ( वर्णात्मिकाया[3]मवर्णात्मिकाया च रेफव्यक्तौ यत्सामान्यद्वयोरपि तयोरभिधानप्रत्ययहेतुस्तस्य चेह स्थानिभावेनोपादानात्तेन वस्त्वविशेषाणामुपस्थापनात् वर्ण इवावर्णोऽपि ) ऋकारैकदेशो रेफ स्थानित्वं प्रतिपद्यते । एव ल इत्यत्रापि

---

१. पदावपदविभागेति क० पु० ।

२. लत्वमित्येति क० पु० ।

३. ( ) वर्णात्मिकाया इत्यारभ्य वर्ण इवावर्णोऽपि इत्यन्तो भागो नास्ति क०पु० ।

२३९. ल्ङि सिचावात्मनेपदेषु [ १ । २ । ११ ]

इक्समीपाद्धल: परौ झलादी लिङ्सिचौ कितौ स्तस्तङि परे । अक्लृप्त । चक्लृपे ।

---

बोध्यम् । तत्रान्तरतम्यात् वर्णात्मकस्य रेफस्य वर्णात्मको लकार: । यस्तु ऋका॰स्थोऽवर्णात्मको रेफस्तथाऽवर्णात्मको लृकारस्थो लकार: इत्यर्थ: । कथं तर्हि कृत्स्नस्य वर्णस्य कृत्स्नो वर्ण आदिश्यते । सत्यम् । अज्भागसंपुटितयो: रेफलकारयो: निष्कृष्य कर्तुमशक्यत्वात्–एकदेशविकारद्वारेण[१] समुदायस्य समुदायादेश: संपद्यते । ननु क्लृप् सामर्थ्ये इत्येव पठ्यताम् ? किं लत्वविधानेन ? । कृपण: कृपा इत्यादि नि[२] तु क्रप कृपायामित्यस्य "उणादयो बहुलम्" ( ३ । ३ । १ ) इति बाहुलकात् सेत्स्यत ति चेत् । मैवम् । अचीकृपदिति हि न [३]सिद्धयेत् ऋलृवर्णयो: मिथ: सावर्ण्याद् "उर्ऋत्" ( ७ । ४ । ७) लृकारस्य ऋकारे कृते अचीकृपदिति स्यात् । लत्वविधौ तु सिद्धमिष्टम् । "उर्ऋत्" ( ७ । ४ । ७ ) इति ऋकारे कृतेऽपि पुनर्लत्वेन सिद्धे: । तथा चलीक्लृप्यते इति रीकोऽपि लत्वसिद्धि: अवयवावयवस्यापि रीक: क्लृपि प्रत्यवयवत्वात् । यदा च क्लृपेरेव कृपा इत्यादि रूपाणि क्रियन्ते तदापि लत्वमाशङ्क्याह—कृपादौ तु इति आदिपदात् कृपणकृपीटकर्पूरादेर्ग्रहणम् । कृपेति भिदादिष्वङर्थात् पाठादन्येऽपि उणादौ बाहुलकात्सेत्स्यन्त इति भाव: । कल्पते इति । अत्र लत्वस्यासिद्धत्वात् पूर्वमुपधाया गुणे रपर च कृते रो ल: । रो ल इति सामान्योक्तेरित्याद्युक्तिस्तु अक्लृपादत्यर्था बोद्धव्या । अक्लृपदिति । "द्युद्भ्यो लुङि" ( १ । ३ । ९१ ) इति परस्मैपदपक्षे द्युतादित्वादङ् । ङित्वान्न गुण: । ऋकाररेफस्य लृकारैकदेशो ल: । अकल्पिष्टति आत्मनेपदे सिच इट् ॥ २३८ ॥

ऊदित्वादिडभावपक्षे त्वाह—लिङ् सिच् । तङि परे । एतत् सिच एव विशेषणम्, न लिङ: , असम्भवात् । प्रयोजनाभावाच्च । लिङ: परस्मैपदस्याऽझलादित्वेनैव व्यावृत्तिसिद्धे: । अक्लृप्तेति । इडभावे "झलो झलि" ( ८ । २ । २६ ) इति सलोप: । कित्वान्न गुण: चक्लृपे इति । लत्वस्यासिद्धत्वात् कृप्[४] इत्यस्य द्वित्वे उरदत्वे हलादिशेषे लत्वम् । ऊदित्वादिड्वकिल्पे चक्लृपिषे, चक्लृप्से । क्रादिनियमान्नित्यमिड् इत्यन्ये । इत्यादि स्यन्दूवद् ऊह्यम् ॥ २३९ ॥

---

१. विकाराणद्वैनेति क० पु० ।

२. कृपीबीवितीति क० पु० ।

३. अचीक्लृपदिति क० पु० ।

४. उरदिति क० पु० ।

२४०. लुटि च क्लृपः [ १ । ३ । ९३ ]

लुटि स्यसनोश्च कृपो वा परस्मैपदं स्यात् ।

२४१ तासि च क्लृपः [ ७ । २ । ६० ]

कृपेः परस्य सादेरार्धधातुकस्य तसिश्चेण् न स्यात्तङानयोरभावे । कल्प्ता । कल्प्तासि । तङि तु कल्पिता । कल्पितासे । कल्प्तासे । कल्पिपीष्ट । क्लृप्सीष्ट । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । व्यथ दुःखसंचलनयोः ।

२४२. व्यथो लिटि [ ७ । ४ । ६८ ]

व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । विधिबलाद् हलादिः शेषो न विव्यथे । त्विरङा संभ्रमे । अत्वरिद्वम् । अत्वारिष्वम् । पत्लृ पतने । लृदित्त्वादङ् ।

इत्यात्मनेपदप्रक्रिया ।

---

लुटि च क्लृप. । चकारः स्यसनोरनुकर्षणार्थः । इयं प्राप्तिः "वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति पूर्वं प्राप्तिमवाधिष्टेत्याशयेनाह—लुटि स्यसनोश्चेति ॥२४०॥

तासि च । अत्रापि कृपेरात्मनेपदसमानपदस्थादिडिष्यते । तेन परस्मैपदे तल्लुकि कृति च निषेधो भवति । चिक्लृप्सिता । चिक्लृप्सत्वमित्यभिप्रेत्याह—तङानयोरभावे इति । क्लृ[१]तासीत्युदाहरणम् । कल्प्ता[२] कल्प्तासि इति । कल्प्ते-त्युदाहृतस्य परस्मैपदत्वद्योतनाय । पूर्ववदयमूदिल्लक्षणं विकल्पं निषेधो बाधते । कल्प्तासे इति । ऊदित्त्वादिड् वा । कल्पिषीष्टेति । लिङ् । इट्पक्षे उपधागुणे लत्वम् । क्लृप्सीष्टेति । "लिङ्सिचौ" ( १ । २ । ११ ) इति कित्त्वान्न गुणः । कल्प्स्य-तीति । नित्यं निषेधः परस्मैपदे । व्यथ भयचलनयोरिति तु प्रकाशः ॥ २४१ ॥

व्यथते । अव्यथिष्ट । विधिबलादिति । ननु सत्यपि हलादिशेषे वकारे विधिरर्थवान् भविष्यतीति चेन्न । हलादिशेषाद् हि परत्वात् 'संप्रसारणं तदाश्रयं च कार्यं बलवत्' इति । वचनादादौ[३] संप्रसारणेन भाव्यम् । तच्च "न संप्रसारणे संप्रसारणम्" ६ । १ । ३७ ) इति ज्ञापकादन्त्यस्य भवद् येन नाप्राप्तिन्यायेन हलादिशेषं बाधते । इदमेव च संप्रसारणविधेर्बलम् । विव्यथे इति । "संप्रसारणा-

---

१ क्लृप्यते इति क० पु० ।

२. कृपेरित्यादिषु अर्थात् पाठादन्येऽपि उक्तेति इति क० पु० ।

३ कृ इत्येव पाठः क० पु० ।

४. उरदत्वे इति नास्ति क० पु० ।

२४३. पतः पुम [ ७ । ४ । १९ ]

पतः पुमागमः स्यादङि। प्रण्यपप्तत् । पेततुः । पतिता । टु वमु उद्गिरणे। वम । एत्त्वाभ्यासलोपौ वेति केचित् । वेमतुः । ववमतुः । वेमिथ । भ्रमु चलने । "वा भ्राश" ( ३ । १ । ७० ) भ्रम्यति । भ्रमति अभ्रमीत् ।

च्च" ६। १।८८) इति पूर्वरूपम् । व्यथिता । व्यथिषीष्ट । व्यथिष्यते । ञित्वरा । ञि इत् । 'ञीतः क्तः" ३ । २ । १८७ ) इति विशेषणार्थः । आकार "आदितश्च" ( ७ । २ । १६ ) इति निष्ठायामनिट्त्वार्थः इति केचित् । तन्न । "रुष्यमत्वर" ( ७ । २ । २८ ) इति विकल्पारम्भात् । तस्मादस्यादित्त्वमात्मनेपदमात्रफलकमिति हरदत्तादयः । त्वरते । अत्वरिष्ट । अत्वर्ढ्वम् । अत्वरिध्वम् इति । 'विभाषेटः" ( ८ । ३ । ७९ इति वा मूर्धन्यः । तत्वरिषे । तत्वरिध्वे । त्वरिता । त्वरिषीष्ट । त्वरिषीढ्वम् । त्वरिषीध्वम् । त्वरिष्यते । अत्वरिष्यत ॥ २४० ॥

पृथ्वीमण्डलमौलिमण्डनमणियः शेषवंशामलो-
त्तसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तमगमद् व्याख्या तवेकाश्रया ॥ १ ॥

इत्यात्मनेपदप्रक्रिया

पत्लृ । अयः परस्मैपदिनः सेटश्च । लृ इत् । पतति । पतेत् । लृदित्वाद् ङिति । "पुषादिद्युताद्लृदितः" ( ३ । १ । ५५ ) इत्यनेन । प्रण्यपतत् । लुङि । च्लेरङि । धातोः पुमागमः "मिदचोऽन्त्यात् परः" ( १ । १ । ४७ ) । आडागमस्य धातुग्रहणेनाग्रहणेऽपि "अड्व्यवायेऽपि" इत्यनुवृत्तेः "नेर्गदनद" ( ८ । ४ ।१७ ) इति णत्वम् । अपप्ताम् । पपात । पेततुरिति "अत एकहल्मध्ये" ( ६ । ४ । १२० ) इत्येत्वाभ्यासलोपश्च । पेतिथ । पतिता । पत्यात् । पतिष्यति । टुवम । उद्गिरणं चावितस्य निर्गीर्णस्य मुखेन निःसारणम् । अत एव निपातनाद् गुणविपर्ययेऽपि "श्वत इत्" ( ७ । १ । १०० ) इतीत्त्वम् । अन्ये तूद्गरण इति सगुणमेव पठन्ति । टु "ट्वितोऽथुच्" ( ३ । ३ । ८९ ) इत्यर्थः । वमथुः । केचिदमुमुदितं पठन्ति । वान्त्वा । वमित्वेति क्त्वायामिड्विकल्पार्थम् । वान्तः, वान्तवानिति निष्ठायां "यस्य विभाषा" ( ७ । २ । १५ ) इतीड्निषेधार्थं च । तदेतदनाकरम् । अत एव काशिकायाम् आश्वस्तो वान्त इत्यत्र "आदितश्च" ( ७ । २ । १६ ) इति चकारोऽनुक्तसमुच्चयार्थ इति निष्ठायामिडभावः साधितः । तथा च हरदत्तोऽप्याह—भाष्यवार्तिकयोरनुक्तमपि—इद प्रयोगबाहुल्यादुक्तमिति । एवं च क्त्वाया वमित्वेत्यव साधु । वमति । "ह्म्यन्तक्षण" ( ७ । २ । ५ ) इति न वृद्धिः । अवमात् । अवमिष्ट । ववाम । "न शसदद" ( ६ । ४ । १२६ ) इत्येत्वनिषेधात् कथं वमतुरित्युदाहृतम् भागवृत्त्यामित्यत आह—वम एत्वेति ।

२४४. वा जृभ्रमुत्रसाम् [ ६ । ४ । १२४ ]

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः । जेरतुः । जजरतुः । भ्रेमतुः । बभ्रमतुः । भ्रेमिथ । बभ्रमिथ । षह मर्षणे । "परिनिवि" ( ८ । ३ । ७० ) इति षत्वम् । विषहते । सिवादित्वात् षो वा । व्यषहत । व्यसहत । असहिष्ट । सेहे । "तीष सह" इति वेट् । परिषहिता । हो ढः । "झषस्तथोः" इति धत्वम् । ष्टुत्वम् । ढलोपः ।

---

अयमाशयः । न शशददवादिगुणानामिति वक्तव्य[1] वेत्यकारान्तानुकरणम् । तेन वशब्दाकारस्यैव नेत्यर्थः । एवं च वकारादेरेव लाभे पुनरादिग्रहणं धातुपाठे यस्यादौ वकार एव श्रूयते न वर्णान्तरम्, तस्यैव निषेधो यथा स्यात् न वर्णान्तरपूर्वस्य । न त्वनेन धात्ववयवो वर्णान्तरं व्यावर्तयितुमिष्टम् । स्वदादिषु संयुक्तहल्मध्यस्थत्वेन प्राप्तेरेवाभावात् । तस्मादनुबन्धभूतो वमेरेव टुशब्दो व्यावर्त्यते । न चान्यो वादिरनुबन्धपूर्वो निषेधविषयाऽस्तीति नातिप्रसङ्गोऽपीति । यद्वा आदिग्रहणं सौपदेशिकप्रतिपत्त्यर्थम्, वमेश्च वकारः आदिः "लोपो व्योर्वलि" ( ६ । १ । ६६ ) इति लुप्तनिर्दिष्ट[2] इति वादित्वाभावान्न निषेधः । अतोऽन्ये तन्न मन्यन्ते । भाष्यवार्तिकादिष्वदर्शनादित्यर्थाद्विकल्पः पर्यवस्यतीति चेत्युक्तम्[3] । अन्ये पुनराहुः । अनादेशादेरित्यत्रैव शशददवादिगुणानामिति निषेधे कर्तव्ये पृथक्सूत्रकरणाद् वानुवृत्तेः व्यवस्थितविभाषाश्रयणात् वेमुश्च केचिद् रुधिरमित्यादिसभ्यशताप्रयोगाः समर्थनीयाः इति । वमिता । वम्यात् । भ्रमु । भ्रम्यति । भ्वादेरशमादित्वात् "शमामष्टानाम्" ( ७ । ३ । ७४ ) इति दीर्घो न । भ्रमु अनवस्थाने इति दिवादेस्तु शमादित्वाद्दीर्घे भ्राम्यतीति । भ्रमतीति तु श्यनो विकल्पात् पक्षे शपि । तेन त्रैरूप्यम् । अभ्रमीदिति । "ह्म्यन्त" (७ । २ । ५) इति न वृद्धिः अभ्रमिष्टाम् । बभ्राम ॥ २४३ ॥

संयुक्तहल्मध्यस्थत्वादेत्वस्याप्राप्तौ—आह—वा जॄ । जॄष् वयोहानौ । भ्रमु चलने भ्रमु अनवस्थाने इति द्वयोर्ग्रहणम् सामान्यग्रहणार्थाद्विदान्निर्देशात् । तेन साहचर्याद्दिवादेरपि ग्रहणं न शङ्कनीयम् । त्रसी उद्वेगे । भ्रेमतुरित्यादि[4] । षह मर्षणे । मर्षणं

---

१. वादि गुणानामिति क० पु० ।

२. निर्देश इति क० पु० ।

३ दर्शनाद्विकल्पः इति क० पु० ।

४. भ्रामुतोत्यादि क० पु० ।

५. पारषहतीति क० पु० ।

२४५. सहिवहोरोदवर्णस्य [ ६ । ३ । १ । १२ ]

सहिवहोरवर्णस्य ओकारः स्यात् ढलोपे सति ।

२४६. सोढः [ ८ । ३ । ११५ ]

सोढरूपस्य सहेः षो न स्यात् । विसोढा । षद्लृ विशरणगत्यवसादनेषु। निषीदति । व्यषदत् । "सदिस्वञ्ज्योः" इति परस्य न षत्वम् । निषसाद । निषत्ता । अप्रतेरित्युक्तेः प्रतिषीदति । शद्लृ शातने । शीयादेशः ।

---

च क्षमा । सेडात्मनेपदो चायम् । विषहते इति । धात्वादेः षः सत्वे षत्वम् । सहेत । सहताम् । सिवादित्वादित्त । 'सिवादीना वाड्व्यवायेऽपि" ( ८ । ३ । ६३ इत्यनेन प्रसञ्जिष्ट । सेहे । सहिढ्वे । सहिध्वे । परिषहितेति । "परिनिविभ्यः" ( ८ । ३ । ७० ) इति षत्वम् ॥ २४४ ॥

सहिवहोरिति । षह मर्षणे । वह प्रापणे । अवर्णस्य किम् ? ऊढः । वर्णग्रहणं कृतायामपि वृद्धौ यथा स्यात् । उदवोढाम् । उत्पूर्वात् वहेर्लुङि । सिच् । वृद्धौ ढलोपादीनि[1] । असति वर्णग्रहणे दीर्घस्य न स्यात् । तादपि परस्तपर इति तर्हि सहिवहोरस्येत्युच्यताम् । एवं तर्हि ओरवर्णस्येति निर्दिश्य वर्णग्रहणं कुर्वन् ज्ञापयति–तत्कालस्येत्यत्र पञ्चमासमासोऽप्याश्रीयते इति । ढलोपे सतीति । एवं च निमित्तत्वेनाश्रयणादोत्वं प्रति ढत्वादीनि नासिद्धानि भवन्ति ॥ २४५ ॥

सोढः । निष्ठान्तस्य प्रथमया निर्देशोऽयमिति शङ्कां निरस्यन्नाह-सोढरूपस्येति । कर्मधारयोऽयम् । सहेरिति व्यधिकरणे षष्ठी । सहेर्धातोर्यत् सोढ इति रूप तस्येत्यर्थः । यदि तु बहुव्रीहिराश्रीयेत सोढ इति रूप यस्य तस्य सहेरिति । ततः परिषासोढेत्यभ्यासस्यापि षत्वं न स्यात् । तथा च माधवः–परिषासोढेत्यत्राभ्यासस्य सोढरूपत्वादस्य निषेध इति षो न[2] स्यात् इति "परिनिवि" ( ८ । ३ । ७० ) इति प्राप्तः । सहिषीष्टेति । सहिष्यते । अयं चुरादावपि पठ्यते परस्मैपदी । "आ धृषाद्वा" ( ग० ) इति णिचा विकल्पितत्वात् साहयति । सहतीति भवति । "स एवायं नागः सहति कलभेभ्यः परिभवम्" । न सहानि साहसनसहसि कोत्याद्युपपन्नम् । दिवादावपि षह चक्यर्थे इति परस्मैपदिनमन्ये पेठुः । चक्यर्थस्तृप्तिः । तस्य सह्यतीत्युदाहार्यम् । सहेति शबन्तनिर्देशादस्येड्विकल्पषत्वे न स्तः । अन्ये तु शब्निर्देशमनाश्रित्यास्यापि इति ते मन्यन्ते । धातुरेवायं नास्तीति न्यासकैयटहरदत्तमाधवादयः । षद्लृ । अवसादनमनुत्साहः । त्रयः परस्मैपदिनः । द्वावनिटौ । निषीदति । "पाघ्रा" (७।३।७८)

---

१. आवमिति क० पु० ।

२. पौन्तः स्यादिति क० पु० ।

२४७. सदेः शितः [ १ । ३ । ६० ]

शित्संबन्धिनः शदेरात्मनेपदं स्यात् । शीयते । अशदत् । शेदतुः । शत्ता । फण गतौ ।

२४८. फणां च सप्तानाम् [ ६ । ४ । १२५ ]

'फण–राजृ–भ्राजृ–भ्रासृ–भ्लासृ–स्यमु–स्वन' एषां किति लिटि सेटि थलि च एत्त्वाभ्यासलोपौ वा स्तः । फेणतुः । पफणतुः । फेणिथ । पफणिथ । राजृ दीप्तौ । विधिबलादातोऽप्येत्त्वम् । रेजतुः । रराजतुः । रेजे । रराजे ।

---

इति सीदादेशः । "सदिरप्रतेः" ( ८ । ३ । ६६ ) इति षत्वम् । न्यष दद्दिति । लुङि च्लेर्लृदित्वादङ् । 'प्राक्सितादड्व्यवायेऽपि" ( ८ । ३ । ६३ ) इति षत्वम् । निषसा-दैति । 'सदिस्वञ्ज्योः" वा० ) इति न षत्वम् उत्तरखण्डस्येति शेषः । "स्थादिष्व-भ्यासेन" ( ८ । ३ । ६४ ) इति प्राप्तम् । अभ्यासस्य तु भवति । निषेदतुरित्यादौ न निषेधः । अभ्यासस्य लुप्तत्वेन ततः परत्वाभावात् । सेदिथ । ससत्थ । क्रादिनियमा-न्नित्यमिट् । सेदिव । निषत्ता इति लुटि तासि । अनिट्त्वात् "खरि च" इति चर्त्वम् । षत्वम् । सद्यात् । सत्स्यति । अयं तुदादावपि पठ्यते तस्याप्येतदेव रूपम् । पाठे प्रयोजन तु सादती सीदन्तीति "आच्छीनद्योर्नुम्" ( ७ । १ । ८० ) इति नुम्विकल्पः । भ्वादिषु तु पाठः × स्वरभेदार्थ इत्याहुः । धातोरन्त उदात्तः शप्ति-पावनुदात्तौ । तत्र "उदात्तादनुदात्तस्य स्वरितः" ( ८ । ४ । ६६ ) इति शप् स्वरितः 'स्वरितात्संहितायाम्" ( १ । २ । ३९ ) इत्येकश्रुतिरिति । शपि क्रमेणोदात्तस्वरित-प्रचयाः भवन्ति । शे तु विकरणस्याद्युदात्तत्वे धातोः शेषनिघाते तयोरनुदात्तस्य स्वरितत्वे क्रमेणानुदात्तस्वरिता भवन्तीति भावः । चुरादावप्ययमाङ्पूर्वः । आसा-दयति । शद्लृ ॥ २४६ ॥

शदेः शितः । शित इति षष्ठीत्याह–शित्सबन्धिन इति । शिद्भाविन इत्यर्थः । अशददिति । लृदित्वाच्च्लेरङ् । शिदविषयत्वाद्यात्मनेपदम् । शेषं सदिवत् ॥ २४७ ॥

फण इति । इतो[1] दश सेटः । 'अतो हलादेः'इति वा वृद्धिः । अफणीत् । अफा णीत् "अभ्यासे चर्च" इति फस्य पः । पफणे । फणां च सप्तग्रहणाद् बहुवचननिर्देशा-च्चाद्यर्थावगतिरित्याशयेनाह–फणराजेत्यादि । अप्राप्तविभाषेयम् । फणेरादेशादित्वाद

---

× स्वरितात्संहितायामनुदात्तानाम् ( १ । २ । ३९ ) इति सूत्रेण ।

१. इतो इति नास्ति क० पु० ।

२. मनहायावर्णं इति क० पु० ।

भासृ दीप्तौ । "वा भ्राश" ( ३ । १ । ७० ) इति वा श्यन् । भ्राश्यते । भ्रासते । भ्रेशे । बभ्रासे । एवं भ्लासृ दीप्तौ । स्वन शब्दे । विष्वणति । अवष्वणति मांसम् । व्यष्वणत् । विषष्वणतुः । विष्वेणतुः । भोजने किम् ? विस्वनति वीणा । व्यवाभ्यां किम् ? निस्वनत्यन्नम् । खनु अवदारणे । "गमहन" (६ । ४ । ९८) इत्युपधालोपः । चख्नतुः । चख्नुः । चखनिथ ।

---

राजादीनामाकारवत्त्वात् स्यमुस्वनो' संयुक्तहल्मध्यस्थत्वात् । राजृ । ऋदित्त्वमराजदिति उपधाह्रस्वनिषेधार्थम् । स्वरितत्वादुभयपदी । राजते । अराजीत् । रराज । ननु कथमस्यैत्त्वं "फणां च" (६ । ४ । १२५) इत्यत्रात इत्यनुवृत्तेः । अथ नानुवर्तते ततोऽलोऽन्त्यस्य स्यादत आह—विधिबलादिति । अयमर्थः सप्तानामिति तु वचनादनुवृत्तमत इत्येतत्प्रत्येकं सम्बध्यते । तच्च राजादिष्वसम्भवाद् "राधो हिंसायाम्" (६ । ४ । १२३) इत्यत्रेव तपरत्वकृतं कालविशेषमपहाय' वर्णमात्रमुपस्थापयतीति । अथवा "श्नाभ्यस्तयोरातः" (६ । ४ । ११२) इत्यतः आत इत्यप्यनुवर्तयिष्यते । यद्वा उभयं मानुवृतत्' फणादीनामेकहल्मध्ये यत्तस्येत्यध्याहाराद् वर्णमात्रस्य भविष्यति । राजितेत्यादि । अत्र फणादिपाठितोऽपि भ्राजिरुपेक्षितः राजतिना तुल्ययोगक्षेमत्वात् । तेन तस्यापि भ्राजते । अभ्राजिष्ट । बभ्राजे भ्रेजे इत्यादि रूपं नेयम् । अय पुनरस्य विशेषः । अनुदात्तेत्त्वान्नित्यमात्मनेपदं द्विश्च' । तथा च टुभ्राजृ टुभ्राशृ, टुभ्लाशृ दीप्ताविति अयोऽपि फणादिसूत्रे हरदत्तादिभि' ट्वित' उपदर्शिताः । तेन भ्राजथुरित्यथुच् भवति । ऋदित्त्वं पुनरस्यानुदात्तेत्त्वमात्रफलम् । "भ्राजभास" (७ । ४ । ३) इत्यादिनास्य "णौ चङ्युपधायाः" (७ । ४ । १) ह्रस्वविकल्पनात् । अन्ये तु ऋदित्त्वमस्य न पेठुः । अत एव "भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप्" (३ । २ । १७७) इत्यत्र सामान्यग्रहणादस्यान्यस्य च क्विप् भवति । अन्यर्थकानुबन्धत्वादस्मादेव स्यान्नान्यस्माद् द्व्यनुबन्धकत्वात् । वृत्तिकारस्तु द्व्यनुबन्धकत्वेऽप्यस्य क्विप्सूत्रे ग्रहणमिच्छति । यश्चादिपत्वे तु फणादिपठितस्यैव ग्रहणं राजसाहचर्यात् । यस्त्वपर' पठ्यते । एजृ भ्रेजृ भ्राजृ दीप्ताविति तस्य कुत्वेन विभ्राक् । भ्राक्तिः । यङ्लुकि बाभ्राक्ति । बाभ्रक्त । बाभ्रक्त्वेत्यादि भवतीति स्थितमाकरे । एवं चास्यैव विशेषस्य सद्भावात् किमर्थं द्विः पठ्यते इति न नोदनीयम् । भ्रासृ ।

---

१. मानुवृत्तमिति क० पु० ।
२. द्विः द्विरिति क० पु० ।
३. स्थित इति क० पु० ।
४. स्वभ इति क० पु० ।

२४८. ये विभाषा [ ६ । ४ । ४३ ]

जनसनखनामकारोऽन्त्यादेशः स्याद्वा यादौ क्ङिति । खायात् । खन्यात् चायृ पूजानिशामनयोः । अचायीत् । इडभावे यलोपः । अचासीत् । अचास्ताम् । अचायिष्ट । लष कान्तौ । श्यन् वा । लष्यति । गुहू संवरणे ।

---

अत्र टुभ्रश् टुभ्लश् इति फणादिसप्तके तालव्यशकारान्त वाकरे पठ्येते । 'वा भ्राशभ्लाश" ( ३ । १ । ७० ) इति श्यन्विधावपि तथैव पठितौ । वोपदेवस्तु—परमतमनुसृत्योभयत्र दन्त्यसकारान्तावपाठीत् । आचार्यैरपि तदेवानुसृतम् । भ्रासितेत्यादि । स्वन[1] । स्यमुस्वन शब्दे इति फणादिषु सहपाठेऽपि श्यमिरपेक्षितो विशेषान्तराभावात् । सेटौ परस्मैपदिनौ चेतौ । स्यमे । श्यमति । अश्यमीत् । "ह्मयन्त" (७।२। ) इति न वृद्धिः । सस्याम । सस्यमतु । स्येमतु । सस्यमिथ । स्येमिथ । स्यमितेत्यादि विष्वणति । 'वेश्च स्वनो भोजने" ( ८ । ३ । ६९ ) इति षत्वम् । णत्वम् । चकारादवष्वणतीत्यत्रापि । सशब्दं भुङ्क्ते इत्यर्थः । अत्र भोजनं धात्वर्थः । शब्दो विषयः भुञ्जान किंचित् शब्दं करोतीत्यन्ये । स्वननविशिष्टाभ्यवहारक्रियाविशेषोऽभिधीयते । अनेकार्थत्वाच्छब्दमात्रेऽपीत्यपरे । व्यष्वणादिति । "प्राक् सितात्" ( ८ । ३ । ६३ ) इति षत्वम् । अस्वनीत् । अस्वानीत् । विषष्वणतुरिति । "स्थादिष्वभ्यासेन" ( ८ । ३ । ४ ) इत्युभयो' षत्वम् । विष्वेणतुरिति । फणादित्वादेत्वाभ्यासलोपौ । स्वनिता । स्वन्यात् । स्वनिष्यति । खनु । इतो द्वे अजन्ताः उभयपदिनः । खनति । खनते । अखनत् । अखानीत् । अखनिष्ट । चखान । चख्नतुरिति । उपधालोपस्य 'द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वाद् द्वित्वम् । चख्ने । खनिता । खनितासि । खनितासे ॥ २४८ ॥

ये विभाषा । यकारेकार उच्चारणार्थः । तेनाल्ग्रहणे सप्तमीनिर्देशात् तदादिविधिरित्याह—यादाविति । धातुपारायणे तु "लोपो यि" ( १ । ४ । ११८ ) इतिवत् यि विभाषेति निर्देष्टव्ये य इत्यतोऽनिर्देशात् । (यङः[2] यकार एव भवति, न तु यासुटीत्युक्तम् । खनिषीष्ट । खनिष्यति । चायृ । ऋदित्त्वमचचायत् इति णिचि उपधाह्रस्वाभावार्थम् । चायति । चायते । इडभावे इति । चायस्फायप्यायामिट् चेति केचिदत्युक्तत्वात् । ) यलोप इति । 'लोपो व्योर्वलि" ( ६ । १ । ६६ ) इत्यनेन । चचाय । चचाये । चायिता । चाता । चाट्यात् । चासीष्ट । चायिष्यति । चास्यति । चायिष्यते । चास्यते । लष । कान्तिरिच्छा । श्यन् वेति । "वा भ्रासभ्लास" ( ३ । १ । ७० )

---

१. णत्वमिति नास्ति क० पु० ।

२. यङो यकार इत्यारभ्य—इत्युक्तत्वात् इत्यन्तो भागः नास्ति क पु० । तत्स्थाने यदिदमात्वं यङ्यकार एव भवति, न तु याटीत्युक्तत्वादिति पाठः ।

२५०. ऊदुपधाया गोहः [ ६।४।८९ ]

गुह उपधाया ऊकारादेशः स्यात्, गोह इति निर्देशात् गुणहेतावचि परे। गूहति। गूहते। इट्पक्षे। अगूहीत्। अगूहिष्ट। अन्यत्र क्सः। अघुक्षत्।

२५१. लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये [७.३ ७३]

एषां क्सस्य सर्वस्य लोपो वा स्याद् दन्त्ये तङि परे। ढत्वम्। धत्वम्। ष्टुत्वम्। ढलोपः। दीर्घः। अगूढ। अघुक्षत्।

---

इत्यादिना। लप्यते। लपते। अलपीत्। अलपिष्ट। ललाप। लेपे। लेपिता। लप्यात्। लपिषीष्ट। खनादयस्त्रयः परस्मैपदिनः। इति नैमिषीयः। माधवोऽप्येवम्। गुहू ॥ २४६ ॥

ऊदुपधायाः। ऊदिति तपरकरणं "णौ चङ्युपधायाः" ह्रस्वबाधनार्थम्। तेनाजुगूहदित्युदाहरन्ति। अन्ये त्वेतद्भाष्यादौ न दृष्टमिति तकारमुच्चारणार्थं वदन्तोऽजुगुहदिति ह्रस्वमिच्छन्ति। तदनुसृत्याह—ऊकारादेशः स्यादिति। अत्र पक्षे दीर्घविधाने प्रयोजनं चिन्त्यम्। आन्तरतम्यादूकार एवौकारस्य भविष्यतीति। उपधाग्रहणमलोऽन्त्यस्य निवृत्त्यर्थम्। ऊद[1] गोह इति तु नोक्तम्, जोगुहीति इत्यभ्यासौकारस्य मा भूदिति। लाघवाय गुह इति वक्तव्ये गोह इति विकृतनिर्देशो विषयावधारणार्थः। यत्रास्यैतद्रूपं तत्र यथा स्यात्। क्वचास्यैतद्रूपमत आह—गुणहेतावचीति। अचि अजादौ प्रत्यये इत्यर्थः। तेन ङ्किति न भवतीति भावः। गूहतीति। गोह इति। विषयोपलक्षणपक्षे[2] परत्वात् पूर्वं गुणः। तत ऊत्वम्। तद्धि शब्दान्तरप्राप्त्याऽनित्यम्। ये तु गोह इति रूपानुकरणमाहुस्तेषामपि पूर्वं गुणे कृते एव ऊत्वम्। गूहते इति। स्वरितत्वादात्मनेपदम्। इट्पक्षे इति। ऊदित्वादिड् वेति भावः। अन्यत्रेड्भावे[3] क्सः। "शल इगुपधा" ( ३।१।४५ इत्यनेन। अघुक्षदिति। गुह स् त् इति स्थिते होढः। भष्भावः "षढोः कः सि" ( ८।२।४१ ) षत्वम्। कृष् संयोगे क्ष। अघुक्षताम्। अतो लोपः। अघुक्षत। अघुक्षाताम्। अघुक्षाः ॥ २५० ॥

लुग्वेति। दुह् प्रपूरणे। दिह उपचये। लिह आस्वादने। गुहू संवरणे। 'क्सो'र्लोप"[4] ( ६।१।६६ ) इति प्रकृते लोपे लुग्वचनं सर्वस्य लोपार्थमित्याशयेनाह—क्सस्य सर्वस्येति। यद्यप्यन्त्यस्य लोपेऽपि कृते अगूढेत्यादौ "झलो झलि" ( ८।२।२६ ) इति

१. ऊदोगो हि इति क० पु०।

२. पक्षे इति नास्ति क० पु०।

३. अन्यत्रेड्भावे इति क० पु०।

४. क्सोर्लोप इति क० पु०।

२५२. क्सस्याचि [ ७ । ३ । ७६ ]

अजादौ तङि परे क्सस्यान्तस्य लोपः स्यात् । अघुक्षाताम् । अघुक्षत । बहुवचने क्सान्तलोपाभाव इति केचित् । अघुक्षन्त । अगूढाः । अघुक्षथाः । अघुक्षाथाम् । अघूढ्वम् । अघूक्षध्वम् । अघुक्षि । अगुह्वहि । अघुक्षावहि । दन्त्ये किम् । अघुक्षामहि । हृञ् हरणे । अहार्षीत् ।

२५३. उश्च [ १ । २ । १२ ]

ऋवर्णात् परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । कित्त्वान्न गुणः । सिच् लोपः । अहृत । अहृषाताम् । हृषात् । हृषीष्ट । भृञ् भरणे । भरति ।

---

सलोपे सिद्धम् । अल्लोपस्य स्थानिवद्भावस्तु नास्ति । "पूर्वत्रासिद्धे न स्थानिवत्" (वा० ) इति निषेधात् । तथाप्यगुह्वहीत्यझल्परे न सिध्यतीति लुग्ग्रहणम् । अघुक्षतेति । एकवचने तशब्दे परे क्सलोपाभावे ढत्वभष्भावकत्वषत्वानि ॥ २५१ ॥

क्सस्याचि । अघुक्षातामिति । अन्तलोपे कृतेऽतः परत्वाभावात् 'अतो ङितः" ( ७ । २ । ८१ ) इतीय् न भवति । अघुक्षतेति । अचीति विषयसप्तमी । तेन पूर्वमेवान्तलोपे कृते 'आत्मनेपदेष्वनतः" ( ७ । १ । ५ ) इत्यदादेशः । बहुवचने इत्यादि । अत्रा-[1]चीति परसप्तमीत्याश्रयणादन्तलोपात्पूर्वमन्तादेशस्ततोऽतोलोपस्तस्य च पूर्वस्मादपि-विधौ स्थानिवद्भावात् पुनरादेशो न भवति । फलतस्त्वन्तलोपाभाव इत्युच्यते अघुक्षन्त इति । अन्तलोपाभावेऽतः परत्वाद् झोऽन्तः । अगूढा इति । थासि क्सलोपे ढत्वधत्वष्टुत्वढलोपदीर्घाः । 'अघूढ्वमिति[2] । क्सलोपे "एकाच", ( ८ । २ । ३७ ) भष् भावः । अगुह्वहीत । ताविति वक्तव्ये दन्त्यग्रहणं दन्त्योष्ठ्यस्य वकारस्यापि परिग्रहार्थम् । 'तेनात्रापि क्सलोपः[3] । जुगूह । जुगुहतुः । जुगुहे । जुगुहाते । जुगुहिता । गोढा । इडभावे ढत्वादिः[4] अचोत्युक्ते नोत्वम् । गाढासि । गाढासे । गुह्यात् । गूहिषीष्ट । इडभावे "लिङ् सिचौ" ( १ । २ । ११) इति कित्वान्न गुणः । ढत्वादि । घुक्षीष्ट । घुक्षीयास्ताम् । गूहिष्यति । घोक्ष्यति घोक्ष्यते । अगूहिष्यत्[5] । अघोक्ष्यत् । अगूहिष्यत । अघोक्ष्यत । हृञ् । द्वावनिटौ । अहार्षीदिति । "एकाच" ( ७ । २ । १० ) इति नेट् । सिचि वृद्धिः । रपरत्वम् । षत्वम् । अहार्ष्टाम् । अहार्षुः ॥२५२ ॥

उश्चेति । व्याप्तेर्न्यायाद् ऋवर्णमात्रं गृह्यते, न तु ऋगतावित्ययमेवेत्याह – ऋवर्णात्पराविति । ऋवर्णान्ताद्धातोरित्यर्थः । लिङ्सिज्भ्यामाक्षिप्तस्य धातोर्ऋवर्णेन

---

१. अत्रीति क० पु० ।
२. अगूढ्वमिति क० पु० ।
३. तेना क्सलोप इति क० पु० ।
४. ढत्व हि इति क० पु० ।
५. अगूहिष्यत् अघोक्ष्यत् इति नास्ति क० पु० ।

अभार्षीत् । अभृत । बभ्रुः । भर्ता । भरिष्यति । दान आर्जवे । दीदांसते । शान तेजने । शीशांसते । भज सेवायाम् । भेजतुः । भेजिथ । बभक्थ । श्रिञ् सेवायाम् । "णिश्रिद्रु" ( ३ । १ । ४८ ) इति चङ् । अशिश्रियत् । श्रयिता । रञ्ज रागे ।

---

विशेषणात् तदन्तविधेः । सिज्लोप इति । 'ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इत्यनेन । अझल्परत्वान्न सिचो लोपः । अहृषाताम् । अहृषत । ' इणः षीध्वम्" ८ । ३ । ७८ ) इति ढत्वम् । अहृढ्वम् । जहार । जह्नतुः । जह्रुः । जहर्थ । क्रादिनियमादिट् । जह्रिव जह्रिषे । हर्त्ता । हर्ता । हर्तासि । हर्तासे । ह्रियात् । यासुटः कित्वान्न गुणः । 'रिङ् शयग्लिङ्क्षु" ( ७ । ४ । २८ ) इति रिङादेशः । रिङ्विधानसामर्थ्यान्न दीर्घः । हृषीष्टेति । ' उश्च" ( १ । २ । १२ ) इति कित्वान्न गुणः ' ऋद्धनोः स्ये" (७ ।२। ७०) इतीट् । हरिष्यति[1] । हरिष्यते । भृञ् । भरतीति । शपि गुणः । भरते । अभार्षीदिति । "एकाच" ( ७ । २ । १० ) इति नेट् । सिचि वृद्धिः । षत्वम् । अभृतेति । "उश्च" ( १ । २ । १२ ) इति कित्वान्न गुणः । 'ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इति सिचो लोपः । अभृषाताम् । बभार । बभ्रतुः । क्रादित्वान्नेट् । बभर्थ । भर्तासि । भर्तासे[2] । भ्रियात् । भृषीष्ट । भरिष्यतीति) । "ऋद्धनोः स्येः" ७ । २ । ७० ) इतीट् । भरिष्यते । अभरिष्यत । दान सेट् आर्जवे इति । दान अवखण्डने इति स्वरितेत् पठ्यते । तस्मादार्जवे एव सन् भवतीति भावः । दीदांसते इति । "मान्बध" ( ३ । १ । ६ ) इत्यादिना सन् । द्वित्वम् । हलादिः शेषः । ह्रस्वः । 'सन्यतः" ( ७ । ४ । ७९ इती- त्वम् । दीर्घश्चाभ्यासस्य । अस्य सनोऽनार्धधातुकत्वादिडभावः । 'नश्चापदान्तस्य झलि" ( ८ । ३ । २४ ) इत्यनुस्वारः । अदीदांसीदिति । अदीदांसिष्ट । दीदांसाञ्चक्रे । दीदांसिता । दीदांस्यात् । दीदांसिषीष्ट । दीदांसिष्यति । दीदांसिष्यते । एवं शान तेजने इत्यपि व्याख्येयम् । अयमपि स्वरितेत्त्वादुभयपदी । नित्यसन्नन्तावेतौ । अर्थान्तरे तु चुरादिणिजन्ताद् दानयति । शानयतीत्युदाहार्यम् । अत एवानुबन्धस्य केवलेऽचरि- तार्थत्वात् सन्नन्तादात्मनेपदम् । एतेनावखण्डने तु दानति । दानते इति वदन्तः परास्ताः । भज । अनिट् । स्वरितेत् । अभाक्षीदिति । अनिट्त्वात् "वदव्रज" (७।२।३) इति वृद्धिः । चोः कुः । षत्वम् । कृष् संयोगे क्षः । अभाक्ताम् । "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । अभक्त । अभक्षाताम् । बभाज । भेजतुरिति । आदेशादित्वेऽपि 'तृफलभज" ( ६ । ४ । १२२ ) इत्येत्वाभ्यासलोपौ । भेजथ ।

---

१. हरिष्यतीत्यारभ्य—भरिष्यतीत्यन्तो नास्ति ख० पु० ।

२. भरिता इति भृतेस्त्विटि पक्षे इति क० पु० । परन्त्व सङ्गत एव ।

## २५४.　　रञ्जेश्च [ ६ । ४ । २६ ]

रञ्जेरुपधाया नकारस्य लोपः स्यात् शपि परे । रजति । रजते । अराङ्क्षीत्, अरङ्क्त । अरङ्क्षाताम् । ररञ्जतुः । ररजतुः । रङ्क्ता । त्विष दीप्तौ । त्वेषति । त्वेषते । अत्विक्षत् । अत्विक्षत । "क्सस्याचि" ( ७ । ३ । ७६ ) इति क्सान्तलोपः । अत्विक्षाताम् । "लिङ्सिचौ" ( १ । २ । ११ ) इति कित्त्वम् । त्विक्षीष्ट । यज देवपूजासंगतिकरणदानेषु । "व्रश्च" ( ८ । १ । ३६ ) इति षत्वम् । अयाक्षीत् । अयष्ट । जश्त्वेन डः । ष्टुत्वम् । अयड्ढ्वम् ।

---

बभक्थेति । "ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति वेट् । क्रादिनियमान्नित्यमिट् । भेजिव । भेजे । भक्तासि । भक्तासे । भज्यात् । भक्षीष्ट । भक्ष्यति । भक्ष्यते । भञ्जो आमर्दनेति । रुधादौ भनक्ति । अभाङ्क्षीत् । भजि भासार्थे । चुरादिरिदित् । भञ्जयति । भासते इत्यर्थः । श्रिञ् । सेट् । श्रयतीति । शपि[1] गुणायादेशौ । शिश्रयिथ । शिश्रियिव । "श्र्युकः किति" ( ७ । २ । ११ ) इति निषेधः क्रादिनियमेन बाध्यते इत्याह । शिश्रिये । "अकृत्सार्वधातुकयोः दीर्घः" ( ७ । ४ । २५ ) श्रीयात् । श्रयिषीष्ट । श्रयिष्यति । अश्रयिष्यत् ॥ २५३ ॥

रञ्ज । स्वरितेत् । इतो नवानिटः । अराङ्क्षीदिति । सिचोऽनिट्त्वाद् "वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः । चोः कुः । षत्वम् । क्षः । अनुस्वारपरसवर्णौ । "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः । अराङ्क्ताम् । अराङ्क्षुः । अरङ्क्त । ररञ्ज । ररजतुरिति । संयोगाल्लिटो वा कित्त्वमिति केचिन्मते कित्त्वान्नलोपः । तस्यासिद्धत्वात् "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यसिद्धत्वान्नैत्त्वाभ्यासलोपौ । ररञ्जे । ररजे । रङ्क्तासि । रङ्क्तासे । यासुटः कित्त्वान्नलोपः । रज्यात् । रङ्क्षीष्ट । रङ्क्ष्यति । रङ्क्ष्यते । अयं दिवादावपि ङित्त्वान्नलोपः । रज्यति । रज्यते । इत्यादि । त्विष । स्वरितेत् । त्वेषति । त्वेषते । [2]अत्विक्षत् । "शल इगुपधादनिटः क्सः" ( ३ । १ । ४५ ) क्सः । "षढोः कः सि" ( ८ । २ । ४१ ) षत्वम् । क्षः । अत्विक्षाताम् इति । आत्मनेपदे आतामि क्सस्यान्तलोपाद् "आतो ङितः" ( ७ । २ । ८१ ) इतीय् न भवति । आत्वचातेत्यदादेशोऽपि न भवति । तित्वेष । तित्विषे । त्वेष्टा । त्विष्यात् त्वेक्ष्यति । त्वेक्ष्यते । यज । स्वरितेत् । अयाक्षीदिति । अनिट्त्वाद् "वदव्रज" ( ७।२।३ ) इति वृद्धावडागमे "व्रश्च" ( ८ । २ । ३६ ) इति षत्वे "षढोः कः सि" ( ८।२।४१ ) इति कत्वे च क्षः ।

---

१. शपि गुणायादेशौ इति नास्ति क० पु० ।

२. अत्विक्षत् इति नास्ति क० पु० ।

२५५. लिटयभ्यासस्योभयेषाम् [ ६ । १ । १७ ]

वच्यादीनां ग्रहादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । इयाज ।

२५६. वचिस्वपियजादीनां किति [ ६ । १ । १५ ]

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति । ईजतुः । ईजुः । इयजिथ । इयष्ठ । इज्यात् । टुवप् बीजतन्तुसंताने । प्रण्युवाप । ऊपतुः । उप्यात् । वह प्रापणे । प्रण्यवाक्षीत् । अवर्णस्येत्युक्तेः कृतायामपि वृद्धावोत्वम् । अवोढाम् । अवाक्षुः । अवोढ । उवाह । ऊहे । वोढा । उह्यात् । वक्षीष्ट । वेञ् तन्तुसंताने । अवासीत् । अवास्त ।

---

'झलो झलि" (८।२।२६) इति सलोपे षत्वम् । ष्टुत्वम् । अयाष्टाम् । अयाक्षुः । अयष्टेति । आत्मनेपदे इति । अयक्षाताम् । अयक्षत । जश्त्वेन[1] ड इति । "व्रश्च" ( ८।२।३६ ) इति षत्वे तस्य 'झला जश् झशि" ( ८।४।५३ ) इत्यनेन । ष्टुत्वमिति । "झलो झलि" ( ८।२।२६ ) इति सलोपे धस्य ढत्वमिति भाव ॥ २५४ ॥

लिटयभ्यासस्येति । अधिकारादेवोभयेषामिति लब्धे पुनस्तत्करणं परमपि हलादिः शेषं बाधित्वा संप्रसारणं यथा स्यात् । अन्यथा वव्रश्चेत्यादौ सति हलादि शेषे रकार (रेफ) स्यैव स्यात् । इयाजेति । "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्धिः । "संप्रसारणाच्च" ( ६ । १ । १०८ ) इति पूर्वरूपम् । हलादिः शेषः । वचि स्वपि । आदिग्रहणं यजिनैव सबध्यते । न च वचिस्वपिभ्यामपि स्वपेः पृथङ्निर्देशात् । अन्यथा वच्यादित्वेनैव गृह्णीयात् । तस्माद्वचिस्वपि इति स्वरूपेणैव गृह्यते इति दर्शयति—वचिस्वप्योः यजादीना चेति । वच परिभाषणे । ब्रुवो वचिश्चापि । ञिष्वप् शये ।

'यजिर्वपिर्वहिश्चैव वसिर्व्येञ्व्येञ् इत्यपि ।
ह्वेञ्वदीश्वयतिश्चैव यजाद्याः स्युरिमे नव" ॥ २५५ ॥

कितीति । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्" तेनेह न भवति । वाच्यति । वाचिकमिति । ईजतुरिति । परत्वात् संप्रसारणे कृते पुनः प्रसङ्गविज्ञानाद् द्वित्वम् । हलादिः शेषे । सवर्णदीर्घः । नन्वत्र 'संप्रसारणाच्च" ( ६ । १ । १०८ ) इति पूर्वरूपेण भाव्यम् । अत्र वृत्तिः । अन्तरङ्गे वचि कृतार्थं वचनमिति बाह्ये पश्चात् सन्निपतिते पूर्वत्वं न भवति । शकह्वौ शकह्वर्थम् इति यथेति । हरदत्तस्त्वाह—शकह्वावित्यादौ यणः स्थाने य इक् तत्संप्रसारणम् । एकादेशस्तु न यण्स्थानिकः वर्णो यत्वात् अन्तादिवद्भावोऽपि नास्ति । एवं च पूर्वत्वमेव तावन्न संप्रसारणम् किं पुनस्तत्, स्थानिकः उकार इति पूर्वदिशाभावः । संप्रसारणदीर्घत्वे तु वचनसाम-

1. यत्वेन ड इति क० पु० ।

२५७. वेञः [ ६ । १ । ४० ]

**वेञो न संप्रसारणं स्याल्लिटि। ववौ। ववतुः। ववथ। ववाथ।**

ध्यदिकादेशस्यान्तवद्भावात् संप्रसारणव्यपदेश इति। इयजिथ। भरद्वाजमते इति। इयष्ठ। लिडिडभावे षत्वम्। ईजिव। क्रादिनियमादिट्। ईजे। यष्टासि। यष्टासे[1]। यासुटः किन्वात् संप्रसारणम्। इज्यात्। यक्षीष्ट। यक्ष्यति। यक्ष्यते। अयक्ष्यत्। अयक्ष्यत। डुवप्। बीजस्य संतानः क्षेत्रे विस्तारणम्। गर्भाधानं च। छेदनेऽपि दृश्यते। केशान् वपतीति। डुइत्। उप्त्रिमम्। ड्वितः क्त्रियंया स्यात्। स्वरितेत्। वपति। वपते। अवाप्सीत्। अवप्त। प्रण्युवापेति। लिटि द्वित्वे "लिट्यभ्यासस्य" (६।१।१७) इति सम्प्रसारणम्। पूर्वरूपम्। उपधावृद्धिः। "नेर्गदनद" (८।४।१७) इति णत्वम्। ऊपतुरिति। यजादित्वात् सम्प्रसारणे द्वित्वादि। उवपिथ। उवप्था ऊपे। ऊपाते। वप्ता। उप्यात् इति। यासुटः। किन्वात् सम्प्रसारणम्। वप्सीष्ट। वप्स्यति। वह प्रापणे। स्वरितेत्। वहति। वहते। प्रण्यवात्सात् इति। सिच्यनिट्त्वाद् हलन्तवृद्धिः। ढत्वम्। कत्वम्। षः। "नेर्गदनद"(८।४।१७) इति णत्वम्। अवर्गास्येत्यादि "सहिवहोरोदवर्णस्य" (६।३।११२) इत्यत्रैव व्याख्यातम्। अवोढाम्। वह् स्ताम् इति स्थिते ढत्वादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः। "झलो झलि" (८।२।२६) इति सिचो लोपः। होढः। ष्टुत्वम्। ढलोपः। "सहिवहोः" (६।३।११२) इत्योत्त्वम्। ढलोपस्यासिद्धत्वात् पुनरोकारस्य हलन्तलक्षणा वृद्धिस्तु न भवति, पूर्वप्रवृत्त्या चरितार्थत्वेन पुनः प्रवृत्त्ययोगात्। अवोढेति। आत्मनेपदैकवचनम्। अत ओत्त्वम्। ढत्वादि पूर्ववत्। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाताम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि। उवाहेति। णलि उपधावृद्धौ। लिट्यभ्यास सम्प्रसारणम्। उवहिथ। उवोढ। थलोड्विकल्पः। इडभावे ढत्वधत्वष्टुत्वढलोपौत्त्वानि। उवाह। उवह। ऊहिव। ऊहिम। क्रादिनियमादिट्। वोढेति। लुटि तासि ओत्त्वम्। उह्यात् इति। किन्वात् सम्प्रसारणम्। वक्षीष्टेति। ढत्वं, कत्वं, षत्वं, क्षः। वक्ष्यति। वेञ्। वयति। वयते। अवासीत् इति। "आदेच" (६।१।४५) इत्यात्त्वम्। यमरमनमा" (७।२।७३) इतीट्सकौ। अवासिष्टाम्। अवास्तेति। "एकाच" (७।२।१०) इतीडभावः। अवासाताम्। अवाध्वम्। अवाढ्वम्। अवासि॥ २५६॥

वेञः। किति धातोरकिति वाभ्यासस्य प्राप्तं सम्प्रसारणं निषिध्यते। ववाविति। "आत औ णलः" (७।१।३४) इत्यात्त्वम्। "वृद्धिरेचि" (६।१।८८) ववतुरिति। "आतो लोप इटि च" (६।४।६४) इत्यालोपः। ववथ। ववथेति। "ऋतो भारद्वाजस्य" (७।२।६३) इति वेट्। क्रादिनियमान्नित्यमिट्। ववित्व॥२५७॥

१. यष्टासे इति नास्ति क० पु०।

२५८. वेञो वयिः [ २ । ४ । ४१ ]

वेञो वयिरादेशो वा स्याल्लिटि । इकार इत् । उवाय ।

२५९. ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च [ ६ । १ । १६ ]

एषां किति ङिति च संप्रसारणं स्यात् । यस्य संप्रसारणे प्राप्ते ।

२६०. लिटि वयो यः [ ६ । १ । ३८ ]

वयो यस्य न संप्रसारणं स्यात् लिटि । ऊयतुः । ऊयुः ।

२६१. वश्चास्यान्यतरस्यां किति [ ६ । १ ३९ ]

वयो यकारस्य वो वा स्यात् किति लिटि । ऊवतुः । ऊवुः । उवयिथ । वाता । ऊयात् । व्येञ् संवरणे ।

---

वेञो वयि । इकार इत् । एतोति इत् । क्रियाशब्दोऽयम् । तेनोच्चारणार्थं इत्यर्थः । न त्वित्संज्ञक इति । नुम्प्रसङ्गात् प्रयोजनान्तरासंभवाच्च । उवायेति । उपधा वृद्धिः। अभ्यासस्य सप्रसारणम् । अत्र स्थानिवद्भावाद्वेञ इतिनिषेधो नास्ति ग्रहिज्या" ( ६ । १ । १६ इत्यत्र वपेः पृथगुपादानात्तेनास्य वेञ् कार्यं न भवतीति ज्ञापनात् । अन्यथा यजादित्वादेव सिद्धे किं वपिग्रहणेन ॥ २५८ ॥

ग्रहिज्या । ग्रह उपादाने । ज्या वयोहानौ । वयिरादेशः नत्वयवयगताविति । अस्यात्मनेपदित्वात्, पूर्वपरसाहचर्याच्च । यस्य परस्मैपदं भवति तस्यैव वयेर्ग्रहणं न्याय्यम् । व्यध ताडने । वश् कान्तौ । व्यच व्याजाकरणे । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । भ्रस्ज पाके । चकारः कितः परामर्शार्थः इत्याह—एषां किति ङिति चेति । यस्येत्यादिः "न संप्रसारणे" इति ज्ञापकादन्त्यस्य यस्यैव प्राप्त इत्यर्थं ॥ २५९ ॥

लिटि वेति । वयादेशस्य लिट्येव विधानात् । लिड्ग्रहणमुत्तरार्थम् । ऊयतुरिति । संप्रसारणे कृते द्वित्वम् । हलादिः शेषः । सवर्णदीर्घः ॥ २६० ॥

वश्चा । अस्य ग्रहण यकारमात्रनिर्देशार्थम् । अन्यथादेशेऽकारस्योच्चारणार्थत्वे प्रमाणाभावाद् वयेः सर्वं स्यात् । ऊवतुरिति । अकारान्तादेशे अतो लोपः । पररूपं च । उवयिथेति । वयेस्तासावभावात् "उपदेशेऽत्वतः" ( ७ । २ । ६२ इत्येतन्न भवति । अत एव भारद्वाजविकल्पोऽपि न भवतीति नित्यमिट् । वयादेशस्य स्थानिवत्त्वेन ञित्त्वादात्मनेपदे । ऊये । ऊयाते । "विभाषेटः" ( ८ । ३ । ७९ ) इति ढः । ऊयिढ्वे । एवम् । ऊवे । ऊवाते । ऊविढ्वे । ऊविध्वे । ऊयादिति । कित्त्वात् संप्रसारणम् । "अकृ-

## २६२.　न व्यो लिटि [ ६ । १ । ४६ ]

व्येञ् आत्त्वं न स्याल्लिटि। वृद्धिः। विव्याय। व्येञोऽन्त्यभागस्य किति लिटि संप्रसारणं वेति केचित्। विव्यतुः। विव्यायतुः। विव्ययिथ। "इडत्त्यर्तिव्यय" (७। २। ६६) इति नित्यमिट्। व्याता। वीयात्। ह्वेञ् स्पर्धायां, शब्दे च।

## २६३.　लिपिसिचिह्वश्च [ ३ । १ । ५३ ]

एभ्यश्च्लेरङ् स्यात्। आतो लोपः। अह्वत्।

---

त्सार्व" (७। ४। २५) इति दीर्घः। वासीष्ट। वास्यति। वास्यते। व्येञ्। व्ययति। व्ययते। "आदेचः" ६। १।४५) इत्यात्त्वम्। सगिटौ। अव्यासीत्। अव्यास्त ॥ २६१ ॥

विव्यायेति। अभ्यासस्य संप्रसारणेन यस्येकारः। पूर्वरूपम्। "न सम्प्रसारणे संप्रसारणम्" (६। १। ३७) इति न[1] वस्योत्त्वम्। "अचोञ्णिति" ७। २। ११५) इति वृद्धिरैकारः। व्येञोऽन्त्यभागस्येति। अन्त्यभाग उत्तरखण्डः तेन य्यासस्य नित्य-मित्यर्थः। कितीत्यनेन यजादित्वात् नित्य प्राप्ते[2] विकल्पोऽयम् इति दर्शितम्। केचि-दिति। विमुनीतरे। विव्युतुरिति। किति यकारस्योकारे सम्प्रसारणे पूर्वरूपे इयङो "द्विर्वचनेऽचि" (१। १। ५६) इति स्थानिवत्वात् विशब्दस्य द्विर्वचने "एरनेकाच" (६। ४। ८२) इति यणादेशः। विव्यतुरिति। अन्त्यभागस्य सम्प्रसारणाभावे आत्वाभावान्वैकारस्यायादेशः। विव्युः। विव्ययुः। अस्य तासावनिट्त्वात्थलि भारद्वाजनियमा दङ्विकल्पे प्राप्तेऽत आह—इडत्यर्तीं इति नित्यमिट्ति। विव्ययिथेति। अकित्वान्नान्त्यभागस्य सम्प्रसारणस्य विकल्पशङ्का। विव्ये इति। एशि परभागस्य सम्प्र-सारणपत्ते। विव्यये इति तु तदभावे। क्रादिनियमान्नित्यमिट्। विव्यिये। विव्य-यिष्ये। विव्यिद्वे। विव्यिध्वे। विव्ययिद्वे। वीयादिति। कित्त्वात् संप्रसारणे पूर्वत्वे च "हलः" (६। ४। २) इति दीर्घ इति माधवः। परत्वात् "अकृत्सार्व" (७।४।२५) इति दार्घ इति तु न्याय्यम्। ह्वेञ् ॥ २६२ ॥

लिपि सिचि ह्वश्च। लिप उपदेहे। पिच क्षरणे। ह्वेञुकः। लिपिसिचिसहितो ह्वेति मध्यमपदलोपी समासः। ङसौ "आतो धातोः" (६। ४। १४० इत्यालोपः। समाहारद्वन्द्वे तु नपुंसकत्व स्यात् इतरेतरयोगे तु बहुवचनम्। अत्र च "णि श्रि" (३। १। ४८) इत्यतः कर्तरीत्यनुवृत्तेः। कर्मणि अह्वायि अह्वासातामित्यादौ चिण्सिचावेव भवतः। कर्मकर्तरीति तु "अचः कर्मकर्तरि" (३। १। ६२) इति णिचो

---

१. नेति नास्ति क० पु०।

२. प्र सेति क० पु०।

२६४. आत्मनेपदेष्वन्यतरस्याम् [ ६ । १ । ५४ ]

लिपि सिचि ह्वः परस्य च्लेरङ् वा स्यात् तङि । अह्वत । अह्वेताम् । अह्वास्त । अह्वासाताम् ।

२६५. अभ्यस्तस्य च [ ६ । १ । ३३ ]

अभ्यस्तस्य ह्वयतेः संप्रसारणं स्यात् । जुहाव । जुहुवतुः । जुहुविथ । जुहोथ । वस निवासे ।

---

विकल्पात् तदभावे "आत्मनेपदेष्वन्यतरस्याम्" ( ६ । १ । ५४ ) इति पक्षेऽङ् भवति । तदभावे सिजपि । अह्वाथ । अह्वत । अह्वास्त । चिण्वदिटि अह्वायिष्ट स्वयमेवेत्याद्यूह्यम् । आलोप इति । आतो लोप इटि च" ( ६ । ४ । ६४ ) इत्यनेन । अह्वत् । "आदेच" इत्यात्त्वम् । अह्वाताम् । अह्वन् ॥ २६३ ॥

आत्मने । अत्रापि कर्तरीत्यनुवृत्तेः कर्मणि विकल्पो नेति ज्ञेयम् । प्राप्तविभाषा चेयम् । अह्वतेति । अङि सर्वत्रालोपः । अह्वेतामिति । 'आतो ङितः" ( ७ । २ । ८१ ) इत्ताय् । अनत इत्युक्तं झस्य नादादेशः । अह्वन्त । अह्वावहि । अह्वामहि । अह्वास्तेति । अङभावे सिच अनिट् ॥ २६४ ॥

अभ्यस्तस्य च । अभ्यस्तस्य ह्वयतेरिति । व्यधिकरणे षष्ठ्यौ । अभ्यस्तस्य कारणम् यो ह्वयतिस्तस्येत्यर्थः । तेन द्वित्वनिमित्तप्रत्यये द्वित्वात् पूर्वमेव संप्रसारणम् । ततो द्वित्वम् । यदीयं समानाधिकरणषष्ठी स्यात् ततो द्वित्वे सत्यभ्यस्तसंज्ञेति । ततः संप्रसारणं स्यात् तथा सति अभ्यासस्य न स्यात् । "न संप्रसारणे संप्रसारणमिति" ( ६ । १ । ३७ ) निषेधात् । तत्र हि विदेशस्थनिषेधार्थकात् पुनः संप्रसारणग्रहणाद् व्यवधानेऽपि निषेध इति स्थितम्, यून इति यथा । अत्रापि हि सवर्णदीर्घस्य पूर्वविधौ स्थानिवत्त्वाद् व्यवधानमेवेति । नचैवमुपोषुष इति उपपूर्वस्य वसेः क्वसौ सकारव्यवधानेऽपि निषेधप्रसङ्गः । समानाङ्गग्रहणस्य चोदितत्वात् । यत्रैकस्मिन्नेवाङ्गे निमित्तनिमित्तिनो स्तस्तत्रैव निषेधः । इह तु क्वसौ धातुरङ्गं क्वसन्तं च शसीति न निषेध इति स्थितम् । वस्तुतस्तु सामानाधिकरण्येऽपि न दोषः । जुहुवुरित्यादौ तु व्यवधानादेव न निषेधः । एवमुपेयुष इत्यत्रापि अन्तरङ्गत्वाद्वात्र पूर्वं धातोर्भविष्यति । ततः क्वसोरित्यदोषः । एवं च समानाङ्गग्रहणमपि न कर्तव्यं भवति । यून इत्यादौ तु संप्रसारणग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति । स्थानिवत्त्वकृतमीदृशं वा व्यवधानमाश्रयिष्यते नान्यकृतम्। जुहावेति । संप्रसारणे पूर्ववृद्ध्यावादेशयोश्च 'द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् हु इत्यस्य द्वित्वम् । कृते वा द्वित्वे संप्रसारणम् । जुहुवुरिति । उवङ् । "हुश्नुवोः" ( ६ । ४ । ८७ )

२६६. सः स्यार्धधातुके [ ७ । ४ । ४९ ]

सस्य तः स्यात् सादावार्धधातुके परे । अवात्सीत् । अवात्ताम् । अवात्सुः । उवास ।

२६७. शासिवसिघसीनां च [ ८ । ३ । ६० ]

इण् कोः । परस्यैषां सस्य षः स्यात् । ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । उष्यात् । वत्स्यति । वद व्यक्तायां वाचि । अच्छ वदति । "वदव्रज" इति वृद्धिः । अवादीत् । उवाद । ऊदतुः । ऊदुः । उवदिथ । वदिता । उद्यात् । टुओश्वि गतिवृद्ध्योः । श्वयति । "जृस्तम्भु" ( ३ । १ । ५८ ) इत्यङ् वा ।

---

इति यण् तु न भवति । आर्धधातुकत्वात् ( ला[1]क्षणिकत्वादनर्थकत्वाच्च । अत्र च संप्रसारणपूर्वत्वमेवान्तरङ्गत्वाद्भवति नातो लोपः । सति तस्मिन् अस्य पूर्वविधौ स्थानिवत्त्वात् उवङ् न स्यात् । जहविथ । जुहोथेति । "ऋतो भारद्वाजस्य" (७।·।६३) इति वेट्) । क्रादिनियमादिट् । जुहुविव । ह्वातेति । "आदेच" ६ । १ । ४५) इत्यात्वम् । हूयात् । ह्वासीष्ट । ह्वास्यति । ह्वास्यते । वम । इतस्त्रय परस्मैपदिनः ॥२६५॥

स. स्यार्ध । स इति षष्ठी । सीति सप्तमी । अलुग्रहणं तेनार्धधातुकस्य विशेषणात्तदादिविधिरित्याह—सादाविति । अवात्सीदिति 'वदव्रज" (७ । २ । ३) इति वृद्धिः । णल्युपधावृद्धिः । "लिट्यभ्यासस्योभयेषाम्" (६ । १ । १७) इति सम्प्रसारणम् ॥२६६॥

शासिवसि । शासु अनुशिष्टौ । वस निवासे । घसिरादेशः । यस्त्वनादेशो घस्लृ अदने इति तस्येह न ग्रहणम्, विरलप्रयोगत्वादित्याहुः । एषा सकारो नादेश इति वचनम् । ऊषतुरिति । वसेः किति "वचिस्वपि" ( ६ । १ । १५ ) इति संप्रसारणे वा पूर्वत्वे च द्वित्वे हलादिः शेषे सवर्णदीर्घे षत्वम् । उवसिथ । उवस्थेति । 'ऋतो भारद्वाजस्य" ( ७ । २ । ६३ इति नियमाद् वेट् । क्रादिनियमादिट् । ऊषिव । वस्तेति । 'एकाचः" ( ७ । २ । १० इतोऽड्निषेध । उष्यात् । यासुटः कित्वात् सम्प्रसारणम् । "शासिवसि" ( ८ । ३ । ६० ) इति षत्वम् । वत्स्यति । "सः स्यार्धधातुके" (७।४।४९) इति तत्त्वम् । वद । द्वौ सेटौ । अच्छ वदतीति । "अच्छगत्यर्थवदेषु" ( १ । ४ । ६९ ) इति गतिसंज्ञा । "ते प्राग्धातोः" ( १ । ४ । ८० ) इति पूर्वप्रयोगः । गतिसंज्ञाप्रसङ्गे उदाहृतमप्येतत् पुनरुदाहृतं लब्धावसरत्वात् । वदव्रजेति वृद्धिरिति । अतो हलादेर्लघोः"

---

१. ( ) रेखाङ्कितः लाक्षणिकत्वादित्यारभ्य—इति वेट् इत्यन्तोभागः नास्ति क॰ पु । तत्स्थाने अस्य हुरूपस्य लाक्ष इत्येवास्ति ।

**२६८. श्वयतेरः [ ७ । ४ । १८ ]**

श्वयतेरिकारस्य अः स्यादङि । ततः पररूपम् । अश्वत् । पक्षे सिच् । तस्येट् । अश्वयीत् । "विभाषा धेट्श्व्योः" ( ३ । १ । ४९) इति चङ् वा । इयङादेशः । अशिश्वियत् ।

**२६९. विभाषा श्वेः [ ६ । १ । ३० ]**

श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । ततो द्वित्वम् । शुशाव । शुशुवतुः । शुशविथ । शिश्वाय । शिश्वियतुः । शिश्वयिथ । श्वयिता । यजादित्वात् शूयात् । इति मिश्रप्रक्रिया

इति भ्वादयः ।

---

( ७ । २ । ७ ) इति विकल्पबाधनार्थं वदव्रजग्रहणम् । तेन नित्या वृद्धिरिति भावः । अवादीदिति । सेट्त्वात् इट ईटि" इति सिचो लोपः । अवादिष्टाम् । उवादेति । णल्युपधाया वृद्धिः । अभ्यासस्य सम्प्रसारणम् । ऊदतुरिति । यजादित्वात् सम्प्रसारणे कृते द्वित्वादि । उवदिथेति । तासौ सेट्कत्वान्न निषेधविकल्पौ । उद्य दिति । कित्वात् संप्रसारणम् । वदिष्यति । अवदिष्यत् । टुओश्वि । श्वयथुरित्यपु ,र्थः । ओइत् शून इति निष्ठानत्वार्थः । श्वयति । श्वयेत् ॥ २६७ ॥

श्वयतेर. । पररूपमिति । अत्वे कृते अश्व अत् इति स्थिते सवर्णदीर्घं बाधित्वा 'अतो गुणे" ( ६ । १ । ९७ ) इति ।ररूपमित्यर्थः । अतः लोपस्तु न भवति । आर्धधातुकोपदेशे यदकारान्त तस्य लाप इति स्थितेः । अश्वताम् । अश्वन् । पक्षे सिजिति । अङो वक्ष्यमाणस्य चङश्चाभावपक्षे इत्यर्थः । तस्येडिति । श्वयतेरनुदात्तोपदेशपर्युदासादित भाव.। तस्येत्यनेनाङ्चङारवलादित्वाद् व्यतिरेक द्योतयति । अश्वयीदिति । "ह्ययन्त" ( ७ । २ । ५ ; इति वृद्धिनिषेधाद् गुणायादेशौ । अश्वयिष्टाम् । अश्वयिषुः । इयङादेश .ति । संयोगपूर्वत्वात् न "एरनेकाचो" ( ६ । ४ । ८२ ) इति यणिति भावः । आशिश्वियदिति । इयङो "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् श्वि इत्यस्य द्वित्वम् । पुनरियङ् । अशिश्वियताम् ॥ ६८ ॥

विभाषा श्वेः । यङ्यप्राप्तं पक्षे विधीयते[1] । लिटि तु किति यजादित्वान्नित्यं प्राप्त पक्षे निवर्त्यते । पिति त्व प्राप्त पक्षे प्रवर्तते । "न वेति विभाषा"( । । ४४ ) इति वचनात् पूर्वं निषेधेन समीकृते विषये पश्चाद् विधिमुखे न सर्वत्र विभाषा प्रवर्तते

---

१. विधते इति ख० पु० ।

२. अङि श्वप्रासमिति क० पु० ।

इत्युभयत्र विभाषेयमिति स्थितम् । ततो द्वित्वमिति । परत्वान्नित्यत्वाच्चादौ संप्रसारणमिति भावः । शुश्वेत्यादि । संप्रसारणम् संप्रसारणाश्रयं च बलवदिति वा "लिड्यङोश्च" ( ६ । १ । २९ ) इति विषयसप्तमीत्वात् वा पूर्वं संप्रसारणे परपूर्वत्वे च कृते ततो यथायोगं वृद्धिगुणयोरवावोश्च कृतयोः "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् । शु इत्यस्य द्वित्वम् । ततो वृद्धयादि । एवं शुशुवतुरित्यादावपि किन्तूवङः स्थानिवदूह्यम् । शिश्वायेति । संप्रसारणाभावे । अत्रापि पित्सु यथायोगं वृद्धिगुणयोरायावौ किन्तु इयङ् पूर्ववत् स्थानिवद्भावात् शिवशब्दस्य द्वित्वम् । "लिट्यभ्यासस्योभयेषाम्" ( ६ । १ । १७ ) इति अभ्यासस्य संप्रसारणं न भवति संप्रसारणमात्रस्य निषेधात् । तथा च वार्तिकम् । "श्वयतेर्लिट्यभ्यासप्रतिषेध इति । शूयात् इति । यासुटः कित्वात्संप्रसारणम् । दीर्घः । श्वयिष्यति । अश्वयिष्यत् । इति मिश्रप्रक्रियेति । यद्यपि परस्मैपदात्मनेपदप्रक्रियानिरूपणेनैवेयं गतार्था तथाप्युभयपदिनामत्रोदाहरणात् कथंचिद् भेदो विवक्षितः । यद्यत्र केवलात्मनेपदि केवलपरस्मैपदि निरूपणम् तद्रूपोऽभ्यासेन संस्कारपाटवमाधातुमिति वर्णनीयम्, विशेषादर्शनात् ।

भ्वाद्यदादिह्वादिदिवादयः　　　स्वादितुदादय ।
रुधादितन्वादिक्र्यादि चुरादयश्च गणाः क्रमात् ॥

इति निरूपणीयेषु दशगणेषु निरूपितं भ्वादिगणमुपसंहरति—इति भ्वादयः । इति शब्दः प्रकारे । एवं प्रकाराः भ्वादयः ऊह्या इत्यर्थः, न पुनः समाप्तौ । धातुपाठेऽपठितानामप्याप्तप्रयोगसिद्धानां चुलुम्पतीत्येवमादीनां दर्शनात् । तदाहुरद्यापि वर्द्धते शिवधातु[2] गण इति । यत्तु टुओश्विगतिवृद्धयोरित्यस्यानन्तरं वृत्करणं तद् यजादेः परिसमाप्त्यर्थम्, न भ्वादेरिति धातुवृत्त्यादिषु स्थितम् ॥ १९ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः　　शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत्　　प्रश्नपवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ　　सत्प्रक्रिया व्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् मिश्राभिधा प्रक्रिया ॥ १ ॥

श्रीरस्तु । कल्याणमस्तु । शुभं भूयात् लेखकवाचकपाठकानाम् ।
श्रीः । श्रीः । श्रीः । भ्वादिः २६०० ॥

---

१. लिडिड्योरचेति क० पु० ।
२. शिव इति नास्ति ख० पु० ।

# अथादादय.

अद् भक्षणे

**२७०** अदिप्रभृतिभ्यः शपः [ २ । ४ । ७२ ]

अदादेः परस्य शपो लुक् स्यात् । चर्त्वम् । अत्ति । अत्तः । अदन्ति । अद्यात् । अत्तु । अत्ताद् वा ।

**२७१.** हुझल्भ्यो हेर्धिः

होर्झलन्ताच्च हेर्धिः स्यात् । अद्धि ।

**२७२.** अदः सर्वेषाम् [ ७ । ३ । १०० ]

अदः परस्यापृक्तसार्वधातुकस्य अडागमः स्यात् सर्वेषां मतेन । आदत् । आत्ताम् । आदन् । आदः ।

---

अद् । इतो द्वावनिटौ । सप्तविंशतिः परस्मैपदिनः ।

अदिप्रभृतिभ्यः । अदादिभ्य इति वाच्ये प्रभृतिग्रहणं पर्यायशब्देषु गौरवलाघव-चिन्ता नाद्रियते इति ग्रन्थाधिक्येनानित्यताज्ञापनार्थं वा । तेन "न विश्वसेदविश्व-स्तम्" इत्याद्युपपन्नं भवति । चर्त्वमिति । "खरि च" ( ८ । ४ । ५५ ) इत्यनेन । अत्तीति । अदेर्लटस्तिप् । "कर्तरि शप्" ( ३ । १ । ६८ ) तस्य लुक् । दस्य चर्त्वेन तः । अदन्तीति । "झोऽन्तः" (७।१।३) अत्सि । अत्थः । अद्मि । अद्वः । अद्मः । अद्यादिति । शपो लुप्तत्वाद् "अतो येयः" ( ७ । २ । ८० ) इतीय् न भवति । अद्याताम् । अद्युः । अद्याः । अद्यातम् । अद्यात । अद्याम् । अद्याव । अद्याम । अत्तु इति । लोटस्तिपः "एरुः" इत्युत्त्वम् । अत्तादिति । "तुह्योस्तातङाशिष्यन्यतरस्याम्" (७।१।३५)। अत्ताम् । अदन्तु ॥ २७० ॥

हुझल्भ्यो । हु दानादनयोः । "घ्वसोरेद्धावभ्यासलोपश्च" ( ६ । ४ । ११९ ) इत्यतो हलि इत्यनुवृत्तेरिडादेर्न । रुन्द्धि । स्वपिहीति । अत्तादित्यत्र तु परत्वाद् हेस्तातङि कृते स्थानिवद्भावात्पुनः धित्वं न भवति । सकृद्गतिन्यायात् । अन्ये त्वाहुः । हेर्धिरिति स्थान्यादेशयोरपीकार उच्चारणार्थः । हकारस्य धकारादेशस्तेन हलीत्ययिनानुव-र्त्यम् । नापि तातङि प्रसङ्ग इति । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥ २७१ ॥

अदः सर्वेषाम् । सर्वेषां ग्रहणं नित्यार्थम् । गार्ग्यगालवयोरित्यस्यानुवृत्तिर्मा शङ्कीति । आददिति । लङस्तिप् । "इतश्च" ( ३ । ४ । १०० ) इतोकारलोपः । शपो लुक् । तिपोऽडागमः । धातोराट् । "आटश्च" ( ६ । १ । ९० ) इति वृद्धिः । आत्ताम् । आदन् । आद इति । सिप इकारलोपे रुत्वविसर्गौ । आत्तम् । आत्त । आदम् । आद्व ॥ २७२ ॥

२७३. लुङ्सनोर्घस्लृ [ २ । ४ । ३७ ]

अदेर्घस्लादेशः स्यात् लुङि सनि च। लृदित्वादङ्। अघसत्।

२७४. लिट्यन्यतरस्याम् [ २ । ४ । ४० ]

अदो घस्लृ वा स्याल्लिटि। जघास। "गमहन" इत्युपधालोपः। उपधालोपस्य चर्विधिं प्रति स्थानिवत्त्वाभावात् घस्य चर्त्वम्। "शासिवसि" ( ८ । ३ । ६० ) इति षत्वम्। जक्षतुः। जक्षुः। घसस्तासावभावात् थलि नित्यमिट्। जघसिथ। पक्षे "अत आदेः" (७।४।७०) आद। आदतुः। आदुः। आदिथ। अत्ता। अद्यात्। अद्यास्ताम्। अत्स्यति। प्सा भक्षणे। प्रणिप्सति। प्सायात्। प्सायुः। प्सातु। प्साहि। अप्सात्।

---

लुङ्सनोर्घस्लृ। लृदित्वादङिति। घस्लादेशस्य लृदित्व पुषादीत्यङर्थमित्यर्थः। अघसदिति। अनङोत्युक्तेः "गमहन" ( ६ । ४ । ९८ ) इति नोपधा लोपः। ननु च घसिः प्रकृत्यन्तरमस्ति तेनैव सिद्धमेतत्। सत्यम्। अदेरात्सीत्। आत्सिषतीत्यनिष्टप्रयोगो माभूदित्यारम्भः। अघसन् इत्यादि ॥ २७३ ॥

लिट्यन्यतरस्याम्। प्रकृतिद्वयेन प्रयोगद्वये सिद्धेऽपि विकल्पारम्भः प्रकृत्यन्यतरस्यासर्वविषयतां ज्ञापयति। तेन यत्र लिङ्गवचन च नास्ति तत्र तस्य प्रयोगो न भवति। तत्र लृदिरकरणं लुङि प्रयोगस्य लिङ्गम्। घसिश्च सान्तेष्विति "वसति· शकलृघसृभ्भ् 'यभ्लभ्यमो" इत्यनिट्सु पाठो वलाद्यार्धधातुके। 'सृघस्यदः क्मरच्"(३ । २ । १६०) इति वचन क्मरचि। भ्वादौ परस्मैपदिषु वा पाठ· परस्मैपदप्रयोगे। जघासेति। "अत उपधायाः" (७ । २ । ११६) इति वृद्धिः। तस्याः स्थानिवत्त्वात् घस् इत्यस्य द्वित्वम्। हलादिः शेषः। "कुहोश्चुः" ( ७ । ४ । ७२ ) इति घस्य झः। तस्य "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति जश्त्वेन ज.। नन्वतुसादौ घसेः पूर्वमुपधालोपे कृते तस्य द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वात् साच्कस्य घस् इत्यस्य द्वित्वेऽभ्यासकार्ये च कृते जघस् इति स्थिते "खरि च" ( ८ । ४ । ५५ ) इति चर्त्वं न स्यात्। अत उपधालोपस्य "अचः परस्मिन्" ( १ । १ । ५७ ) स्थानिवत्त्वाद् अत आह—उपधालोपस्येत्यादि। स्थानिवत्त्वाभावादिति। "न पदान्त" इति निषेधेनेत्यर्थः। षत्वमिति। न च षत्वं प्रत्युपधालोपस्य पूर्वस्मादपि विधाविति स्थानिवत्त्वम् षत्वविधिसामर्थ्यात्, "पूर्वत्रासिद्धे न स्थानिवत्" ( वा० ) इति निषेधाच्च। नन्वस्य थलि क्रादिनियमात् प्राप्तोऽप्योड् "उपदेशेऽत्वतः" ( ७ । २ । ६२) इति निषिध्यते ततो भारद्वाजनियमो नैव कल्प्येत चेत्याशङ्क्याह—घसस्तासावभावादित्यादि। तास्वदिति वतिना तासौ सत एव थलीड्निषेध इत्युक्तम्। घस्लादेशश्च तासौ नास्तीति नास्य म निषेधः प्रवर्तते।

२७५. लङः शाकटायनस्यैव [ ३ । ४ । १११ ]

आतः परस्य लङो झेर्जुस् वा स्यात् । अप्युः । अप्सान् । अप्सासीत् । पप्सौ । प्साता । वश कान्तौ । वष्टि । ग्रहिज्यादित्वात् संप्रसारणम् उष्ठः । उशन्ति । वक्षि । उष्ठः । उश्यात् । उश्यास्ताम् । उश्युः । वष्टु । उष्टाद् वा । हेधिश्वम् । पत्त्वम् । जरत्वम् । एत्वम् । उड्ढि । वशानि । वशाव । वशाम । "हल्ङ्याब्" ( ६ । १ । ६८ ) इति तिलोपः । जश्त्वचर्त्वे । अवट् । अवड् । औष्टाम् । औशन् । अवट् । अवड् । औश्म् । औश्व । औश्म । अवाशीत् । अवशीत् । उवाश । ऊशतुः । उवशिथ । वशिता । उश्यात् । उश्यास्ताम् । हन हिंसागत्योः । प्रणिहन्ति ।

---

ततश्च तद्विषयो भारद्वाजनियमोऽप्यत्र नास्तीति । क्रादिनियमागत 'औत्सर्गिकनित्य एवेड्भवतीत्यर्थः । स्थानिवद्भावादिति । "इडत्त्यर्तिव्ययतीनाम्" (७ । २ । ६६) इति नित्य इड्भवतीति नोक्तम् । तस्य निषेधापवादत्वात्, निषेधस्यैवाप्रसङ्गे तस्यानवसरत्वात् । स्थानिवद्भावात् "इडत्त्यर्तिव्ययतीनाम्" ( ७।२।६६ ) योऽपि घसिः तस्यापि तासौ थलि वा प्रयोगोऽभावंनित्कत्वाद् नास्तीति जघस्थेति न भवति । जक्षतुः । जक्षुः । जघास । जघस । जक्षिव । जक्षिम । पक्षे इति । घस्लादेशाभावे इत्यर्थः । आदेति । अदेर्लिटि द्वित्वम् हलादिः शेषाभ्यासदीर्घोपधावृद्धिसवर्णदीर्घाः । आदियेति । क्रादिनियमादिट् प्राप्तोऽपि भारद्वाजनियमाद्विकल्पित इति ।'इडत्त्यर्तिव्ययतीनाम्' इति नित्यं विधीयते । अत्ता । अत्तारौ । अत्तारः । अद्यात् अद्यास्ताम् । अत्स्यति । आत्स्यत् । आत्स्यताम् । आत्स्यन् । प्सा । प्रणिप्साति । इति । शब्लुक् । "नेर्गदनद" ८।४।१७ इति णत्वम् । प्सातः । प्सान्ति । प्सायादिति । तपरत्वाद् न "अतो येयः" (७।२।८० ) लिङः सलोपः । प्सायाताम् । प्सायुरिति झेर्जुस् । प्साहीति । तपरत्वान्न अतो हेर्लुक् । प्सातात्वा । प्साता । प्सानि ॥ २७४ ॥

लङः शाक । अप्राप्ते विभाषेयम् । एवकारस्तूत्तरार्थः । "लिट् च" (३।४।११५) इत्यादौ आर्धधातुकसंज्ञैव यथा स्यात् । अन्यथैकसंज्ञाधिकाराभावात् सार्वधातुकसंज्ञापि समाविशेत् अप्सुरिति । "उस्य पदान्तात्" ( ६ । १ । ९६ ) इति पररूपम् । अप्सान् इति । "झोन्तः" ( ७ । १ । ३ ) झलोपे च कृते संयोगान्तलोपः । अप्सासीदिति सिचीट्सकौ । अप्सासिष्टाम् । अप्सासिषुः । पप्साविति । "हलादिः शेषः" ( ७।४।६० ) "आत औ णलः" ( ७ । १ । ३४ ) "वृद्धिरेचि" (६ । १ । ८८ ) 'आतो लोप इटि च'

---

१. आत्स्यताम् आत्स्यन्निति नास्ति क० पु० ।

**२७६. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक-लोपो झलि क्ङिति [ ६ । ४ । ३७ ]**

अनिटां वनतेस्तनोत्यादेश्चानुनासिकस्य लोपः स्याज्झलादौ क्ङिति

च" ( ६ । ४ । ६४ इति आलोपे । पप्सतुः । पप्सुः । "ऋतो भारद्वाजस्य" (७।२।६३) इति वेट् । पप्सिथ । पप्साथ । प्सातेति । "एकाच" ( ७ । २ । १० ) इति नेट् । "वाऽन्यस्य" ( ६ । ४ । ६८ ) इत्यत्वं वा । प्सेयात् । प्सायात् । प्सास्यति । वश । कान्तिरिच्छा । सेट् । वष्टीति । शब्लुकि । "व्रश्च" ८ । २ । ३६ ) इति षत्वम् । ष्टुत्वम् । उष्ट इति । "सम्प्रसारणाच्च" ६ । १ । १०८ ) इति पूर्वरूपम् । वक्षीति । अङित्वान्न सम्प्रसारणम् । षत्वम् । कत्वम् । सत्वम् । उष्ठः । उष्ठ । वश्मि । उश्वः । उश्मः । उश्यात् । यासुटो ङित्वात्संप्रसारणम् हेर्धित्वमिति । "हुझल्भ्यो हेर्धिः" (६ । ४ । १०१) इत्यनेन । षत्वमिति । "व्रश्च" (८ । ३ । ३६) इत्यादिना । जश्त्वम् । "झलां जश् झशि" ( ८ । ४ । ५३ ) ष्टुत्वम् । "ष्टुना ष्टुः" (८ । ४ । ४१ ) उड्ढीति । हेरपित्त्वेन ङित्वात्सम्प्रसारणम् । वशानीत्यादि । 'आडुत्तमस्य पिच्च" (३ । ४ । ९२ ) इति ङित्वात् । जश्त्वचर्त्वे इति । षत्वे कृते 'झलां जशोऽन्ते" ८ । २ । ३९ ) इति जश्त्वम् । तस्य "वाऽवसाने" ( ८ । ४ । ५६ ) इति चर्त्वं इत्यर्थः । औष्टामिति । वश-स्तामि संप्रसारणे पूर्वरूपे च कृते "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यटोऽ-सिद्धत्वादजादित्वादाडागमः । यद्वा लङि कृते लकारमात्रापेक्षत्वेऽनान्तरङ्गत्वाति-वादयः । अडागमस्तु लकारविशेषमङ्गं चापेक्ष्य इति बहिरङ्गः तत्र कृताकृतप्रसङ्गित्वेन नित्यत्वाद्विकरणः । अडागमस्तु शब्दान्तरप्राप्त्याऽनित्यः । कृते विकरणे तदन्तस्य अकृते तु धातुमात्रस्येति । ततो नित्यत्वादेव विकरणलुकि सम्प्रसारणे च कृते प्राप्तमटं बाधित्वाऽजादित्वादाडे[1]व भवति । "आटश्च" ( ६ । १ । ९० ) इति वृद्धिः । एव ऐष्यत । औष्यत इत्यादावप्यूह्यम् । अवडिति । सिपि तिव्वत् ज्ञेयम । अवशमिति मिपि सम्प्रसारणाभावादट् । अवाशीरिति । "अतो हलादेः" ( ७ । २ । ७ ) इति वा वृद्धिः । उवाशेति । अभ्यासस्य सम्प्रसारणम् । उपधावृद्धिः । ऊशतुरिति । परत्वान्नित्यत्वाच्च संप्रसारणे कृते द्वित्वम् । हलादि शेषः । सवर्णदीर्घ । उवशिथेति । तासौ सेट्कत्वा-त्थलि नित्यमिट् । ऊशिव । उश्यात् । उश्यास्ताम् । वशिष्यति । अवशिष्यत् । वशि-श्छान्दसः इति भाष्यम् । भाषायामप्यस्य प्रयोगो दृश्यते । 'जयाय सेनान्यमुशन्ति देवाः" इति । हन । इतो द्वावनिटौ । प्रणिहन्ति इति । शपो लुकि कृते ' नश्चापदा-न्तस्य झलि" ( ८ । ३ । २४ ) इत्यनुस्वारपरसवर्णौ । "नेर्गदनद" ( ८ । ४ । १७ ) इति णत्वम् ॥ २७६ ॥

अनुदात्त । अनुदात्तोपदेशानाम्"एकाच उपदेशे"इतीण्निषेधादाह–अनिटामिति । अनिटामित्येव तु नोक्तम् । उदितां क्त्वायां पक्षे सेट्त्वस्यापि सम्भवात् । [2]वनतेरिति ।

१. अडि चेत्येव क० पु० ।
२. वनेरिति क० पु० ।

यमिरमिनमिहनिमन्यत्तयोऽनुदात्तोपदेशाः । तनु षणु क्षिणु क्षणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । "गमहन" ( ६ । ४ । ९८ ) इत्युपधालोपः । "हो हन्तेः" ( ७ । ३ । ५४ ) इति कुत्वम् । घ्नन्ति । हन्मि ।

२७७. वमोर्वा [ ८ । ४ । २३ ]

उपसर्गस्थान्निमित्तात् परस्य हन्तेर्नस्य णो वा स्यात् वमोः परयोः । प्रहण्मि । प्रहन्मि । प्रहण्वः । प्रहन्वः । प्रहण्मः । प्रहन्मः । "हन्तेरत्पूर्वस्य" (८।४।२२) इति णत्वम् । प्रहण्यात् । हन्तु । हतात् वा । हताम् । घ्नन्तु ।

२७८. हन्तेर्जः [ ६ । ४ । ३६ ]

हन्तेर्जादेशः स्यात् हौ परे ।

---

वनु मभक्तौ । अनुनासिकेति पृथक्पदं लुप्तषष्ठीकम् । तेनानुदात्तोपदेशादीनां विशेषणात्तदन्तविधिस्ततश्चानुनासिकान्तानामेषां लोपो भवति, अलोऽन्त्यस्येत्यन्तरार्थः । अर्थादनुनासिकलोपः फलतीत्याशयेनाह—अनुनासिकलोप स्यादिति । एकपदत्वे तु नमिमन्यत्योर्मिहनहसुचमस्जादीनामनन्त्यस्यापि लोपप्रसङ्गात् । अत एव चानुनासिकान्तानेवानुदात्तोपदेशादिषु निष्कृष्य दर्शयति—यमिरमीत्यादिना । यम उपरमे । रम क्रीडायाम् । णम प्रह्वत्वे शब्दे च । गम्लृ गतौ । हन हिंसागत्योः । मन ज्ञाने । एत[1] एवानुदात्तोपदेशालोपविधौ योग्या इत्यर्थः । तनोत्यादिष्वप्यनुनासिकान्तान्निष्कृषति । तनु इत्यादि । तनु विस्तारे । क्षणु क्षिणु हिंसायाम् । ऋणु गतौ । तृणु अदने । घृणु दीप्तौ । वनु याचने । मनु अवबोधने । एते एव तनोत्यादयो लोपविधौ योग्या इत्यर्थः । एषामेव किम् । शान्तः । उपदेशे किम् । इहापि यथा स्यात् । गतिः । क्तिनि नित्स्वरेणायमाद्युदात्तः । शान्त इत्यत्र च माभूत् । प्रत्ययाद्युदात्तत्वे कृते शेषनिघातेनायमनुदात्तः । झलि किम् ? घ्नन्ति । क्ङिति किम् ? हन्ति । हत इति । शब्लुकोऽपरनिमित्तत्वान्न स्थानिवत्त्वम् । शपाक्षिप्तस्यापि सार्वधातुकस्य वस्तुसतोऽपि निमित्तत्वेनाश्रयणात् । घ्नन्तीति । नकारपरत्वात्कुत्वम् । विधिसामर्थ्यादुपधालोपो न स्थानिवत् । स्थानिवद्भावकृतं वा व्यवधानमाश्रयिष्यते ॥ २७६ ॥

हन्तेर्जः । श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः ॥ २७८ ॥

---

१. एत इति क० पु० ।

२७९. असिद्धवदत्राभात् [ ६ । ४ । २२ ]

अत ऊर्ध्वमापादसमाप्तेः कार्यमाभाच्छास्त्रीयं, तस्मिन् कर्तव्ये तत्रत्यं कार्यमसिद्धवत् स्यात्। इति जस्त्वस्यासिद्धत्वात् न हेर्लुक्। जहि। हनानि। हनाव। अहन्। अहताम्। अघ्नन्।

असिद्धवद्। अभिविधावाङ्। भाधिकारमभिव्याप्येत्यर्थः। पृथक्पद चेदम्। समासे ह्याभमिति स्यात्। अधिकारश्चायम्। अत्र ग्रहणं समानाश्रयप्रतिपत्त्यर्थम्। आभाद् ग्रहणं[1] विषयनिर्देशार्थम्। तथाहि–अनुदात्तोपदेशेत्यत्रास्योपस्थाने सत्ययमर्थो भवति। अनुदात्तोपदेशादीनामनुनासिकस्य लोपो भवति झलादौ क्ङिति परे सचासिद्धो भवति। आभाद् यच्छास्त्र) तत्र कर्तव्ये। अत्र यदाभात् तत्र कोऽर्थ.। क्ङित्यनुनासिकलोपो भवतीत्युक्तम्। अत्रैव क्ङिति निमित्ते सति यदाभीयं प्राप्नोति तत्र कर्तव्ये। एवं सर्वत्र। एवं च समानाश्रयमसिद्ध, व्याश्रयं तु नासिद्धमित्युक्त भवति। तेन पपुष। चिच्युषे। लुलुविषे इत्यत्र "वसोः संप्रसारणम्" ( ६। ४। ३१। आल्लोपे यणि उवङि च कर्तव्ये नासिद्धं भवति, व्याश्रयत्वात्। आल्लोपादीनि हि वसौ वस्वन्तस्य विभक्तौ सप्रसारणमिति। "असिद्धं बहिरङ्गमन्तरङ्गे" इत्येतदपीह नास्ति कथम्। एषा हि परिभाषा 'वाह ऊठ्" ( ६। ४। १३२ ) इत्यत्र ज्ञापितत्वादाभाच्छास्त्रीया। तस्या प्रवर्तमानायां संप्रसारणादीनामाभाच्छास्त्रीयाणामेवासिद्धत्वात्, अन्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं नास्तीति वा सिद्धत्वमुपतिष्ठते। नन्वधिकारेऽस्मिन् यत्रास्योपस्थानं तत एवारभ्य यदाभात्तत्रैव तस्य सिद्धत्वं स्यात्, न तु तस्मात् पूर्वेषु यद्देशस्थेन हि वक्त्रा आङुच्चार्यते तत एवारभ्य मर्यादाभिविधिप्रतिपत्तिर्भवति। यथा आपाटलिपुत्राद् वृष्टो देव इति। ततश्च ध्वसोरेत्व पूर्वस्मिन् धित्वे कर्तव्ये नासिद्ध स्यात्। सत्यम्। स्यादयं दोषः शब्दाधिकारे। अर्थाधिकारे त्वस्मिन्नेव प्रदेशे आङर्थं प्रतिपादयन् "श्नान्न लोपः ६। ४। २३ ) इत्येतमेवावधिमाश्रयति। स एव च प्रतिसूत्रमुपतिष्ठते। उपस्थितश्च तत्र तत्रोपस्थितेनात्र ग्रहणेन विशिष्यते। तदयमर्थः सपन्नः। "श्नान्नलोपः" (६। ४। २३, इत्यारभ्यापादसमाप्तेर्यानि सूत्राणि तान्यन्योन्यस्मिन्नसिद्धवद्भवन्ति। तानि च तुल्यनिमित्तानीति। तदेतत्सर्वमभिप्रेत्याह—इत ऊर्ध्वमित्यादि। इतः 'श्नान्नलोपः" ( ६। ४। २३ ) इत्यस्मात्। आपादपरिसमाप्तेः "[2]अत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि" ( ६। ४। १७५ ) इति यावत्। कार्यम्। क्रियतेऽनेनेति

१. ग्रहणमित्यारभ्य–यच्छास्त्रमित्यन्तः ( ) रेखाङ्कितो नास्ति क० पु०।

२. ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्यानि छन्दसि इति यावदिति नास्ति क० पु०। ऋतचस्त्येत्येवमेतम् इति क० पु०।

## २८०. लुङि च [ २ । ४ । ४३ ]

हनो वध इत्यादेशः स्याल्लुङि । अतो लोपः । अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः । अवधीत् । "हो हन्तेः" ( ७ । ३ । ५४ ) इति कुत्वम् । जघान । जघ्नतुः । जघ्नुः ।

---

कार्यम् शास्त्रमिह विवक्षितम् । तेन शास्त्रे शास्त्रमसिद्धं भवति । तेन एधि शाधीत्यत्र त्वशाभावशास्त्रयोरेवासिद्धत्वेन स्थानितो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं धित्वं सिद्ध्यति । कार्यस्य त्वसिद्धत्वे तु[1] पूर्वप्रवृत्तेनैत्त्वेन झलन्तस्य निवृत्तत्वात् धित्वं न स्यात् । जहोत्यादाविव परजादेशस्यासिद्धत्वेन तन्निबन्धनं हिलोपादि निवर्तितं स्यात् । अत शास्त्रासिद्धत्वमेवोभयसंग्रहार्थमाश्रितमाभादिति शास्त्रस्यैव विषयत्वेन निर्देशादित्याकरे स्थितम् । आभाच्छास्त्रे भवमाभाच्छास्त्रीयं सूत्रस्यापि प्रकरणैकदेशत्वेन तत्र भवत्वात् । तस्मिञ्छास्त्रे तत्रत्यं तस्य य आश्रयस्तत्रभव समानाश्रयमित्यर्थः । कार्यमुपस्थितिविषयभूत शास्त्र सिद्ध निष्पन्नम् । असिद्धमनिष्पन्नम् । यत्तुन सिद्धमपि सिद्धकार्यं न करोति तत्तेन तुल्यं वर्तते इत्यसिद्धवत् । वत्करण सुखार्थम् । विनापि तेन "पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इत्यादावतिदेशदर्शनात् । अस्येहोपन्यासे प्रयोजनमाह–इतीत्यादि । भवति त्वेतदुभयमाभीयं समानाश्रयं च हि सापेक्षत्वादित्याशयः । भाष्ये त्वेतत्सूत्र प्रत्याख्यातम् । तत्र पक्षे "अतो हेः" ( ६ । ४ । १०५ ) इत्यत्र "उतश्च प्रत्ययात्" ( ६ । ४ । १०६ ) इत्यत प्रत्ययग्रहणापकर्षणेन प्रत्ययतः परस्य हेर्लुग्विधानात् जहोत्यत्र न भवतीति समाधेयम् । हतादित्यत्र तु जादेशात् परत्वात्तातङि कृते तस्य स्थानिवद्भावेन हित्वात् पुनर्जादेशः सकृद्गतिन्यायेन बाध्यते । हतानि इति । "मेनिः"[2] ३ । ४ । ८६ ) "आनि लोट्" । अहन्निति हन्तेर्लङस्तिपो हल्ङ्यादिलोपेऽडागमः । अहतामिति । अनुनासिकलोपः ॥ २७६ ॥

लुङि । अतो लोपः इति । अदन्तो वधादेशः । हलन्तत्वे तूच्चारणार्थमिकारमेवोच्चारयेत् "अदो जग्धि." ( २ । ४ । ३६ ) इत्यादिवत् नत्वकारम् । आदेशेषु तथादर्शनाद् इति भावः । स्थानिवत्त्वादिति । "अचः परस्मिन्" ( १ । १ । ५७ ) इत्यनेन न वृद्धिरिति । "अतो हलादेः" ( ७ । २ । ७ ) इति प्राप्ता । अवधीत् इति । वधादेशस्यानेकाच्त्वान्नेणिनषेधः । अल्विधित्वाच्च स्थानिवद्भावेनाऽप्येकाच्त्वं[3] नास्ति ।

---

१. तु झलन्तत्वेनेति नास्ति क० पु० ।
२. मेनिः इति नास्ति क० पु० ।
३. एकारस्य नास्तीति क० पु० ।

२८१. अभ्यासाच्च [ ७ । ३ । ५५ ]

अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ । जघन्थ । जघ्निव । हन्ता ।

२८२. हनो वध लिङि [ २ । ४ । ४२ ]

हनो वधः स्यादार्धधातुके लिङि । अतो लोपः । वध्यात् । "ऋद्धनोः" ( ७ । २ । ७० ) इतीट् । हनिष्यति । यु अभिगमने ।

२८३. उतो वृद्धिर्लुकि हलि [ ७ । ३ । ८९ ]

लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलि नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । युयात् । यौतु । युतात् वा । युहि । यवानि । यवाव । यवाम । अयौत् । अयुताम् । अयुवन् । अयौषीत् । योता । यूयात् । यु मिश्रणे । अयावीत् । यविता । णु स्तुतौ अनौषीत् । नविता । अन्यमते ऽत्र वेट् । नोता । नुनविथ । क्ष्णु तेजने । अक्ष्णावीत् । क्ष्णविता । ष्णु प्रस्रवणे। सत्वे कृते रषयोगाभावात् न णः । स्नौति । "स्नु क्रमोः" ( ७ । २ । ३३ ) इतीट् । अस्नावीत् । स्नविता । इण् गतौ । एति । इतः ।

---

अवविष्टामित्यादि । कुत्वमिति । णलो णित्वात् । उपधावृद्धिः । जघ्नतुरिति । उपधालोपस्य "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वेन साच्कत्वात् हन् इत्यस्य द्वित्वम् । घत्वम् ॥ २८० ॥

अभ्यासाच्चेति । अभ्यासेनाक्षिप्तेन प्रत्ययेन हन्तेरङ्गस्य विशेषणादिह न भवति । जिहननीयिषतीति । हननशब्दात् क्यचि कृते तदन्ताच्च सनि रूपम् । अत्र चाभ्यासनिमित्ते सनि परे हननीयशब्दोऽङ्गं न हन्तिरिति । अघ्निण्णन्तार्थश्चारम्भः । जघनिथेति । "उपदेशेऽत्वतः" ( ७ । २ । ६२ ) इति निषेधे प्राप्ते 'ऋतो भारद्वाजस्य" ( ७ । २ । ६३ ) इति पक्षे इट् । जघ्निवेति । क्रादिनियमादिट् । हन्तेति । अनुस्वारपरसवर्णौ हना वधादेशोऽदन्त इत्युक्तम् ॥ २८१ ॥

ततश्च "अकृत्सार्वधातुकयोर्दीर्घः" ( ७ । ४ । २५ ) इति दीर्घेण भाव्यमित्याशङ्क्याह—अतो लोपः इति । "यल्लोपाबियङ्यणगुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन" ( वा० ) इत्युक्तेरिति भावः । यु इति ॥ २८२ ॥

उतो वृद्धिः । लुकोऽभावरूपस्य मुख्यपरत्वासम्भवादाह—लुग्विषये इति । "नाभ्यस्तस्य" ( ७ । ३ । ८७ ) इत्यनुवृत्तेराह—न त्वभ्यस्तस्येति । तेन योयोतीत्यादौ न ।

द्युन इति । 'क्ङिति च" ( १ । १ । ५ ) इति न गुणः । पितीत्युक्तेर्न वृद्धिः । द्युवन्ति । उवङ् । द्युयादिति । सार्वधातुकत्वान्न दीर्घः । यासुटो ङित्वान्न वृद्धिः । ङिच्च[1] पिन्न भवतीति द्युतादित्यपि । द्युहीति । 'सेर्ह्यपिच्च" ( ३ । ४ । ८७ ) इत्यपित्वान्न वृद्धिः । द्यवानीति[2] । आट पित्त्वेऽप्यहलादित्वान्न वृद्धिः । गुणावादेशौ । अद्यौपीदिति । सिचि वृद्धिः । अद्यौष्टामित्यादि । दुद्यावेति । हलादिः शेषः णिति वृद्धिः । दुद्युवतु । दुद्युवु । भारद्वाजनियमाद्वेट् । दुद्यविथेति । दुद्योयेति । क्रादिनियमादिट् । दुद्युविव । द्यूयात् इति । "अकृत्सार्व" ( ७ । ४ । २५ ) इति दीर्घः । द्यूयास्ताम् । द्योष्यति । यु । इतश्चत्वार सेटः । मिश्रणे इति । मिश्रणामिश्रणयोरित्यार्षः पाठः । तथा च दृश्यते अयुतसिद्धयोः सम्बन्धः समवाय इति । यौतीत्यादि द्युवत् । अयावीदिति । इट ईटि" ( ८ । २ । २८ ) इति सिचो लोपे वृद्धयावौ । अयाविष्टामित्यादि । युयाव । युयविथ । युयुविव । 'श्र्युकः किति" ( ७ । २ । ११ इत्यपि निषेधः क्रादिनियमेन बाध्यते । यूयात् । यविष्यति । युञ् बन्धने । क्र्यादिरनिट् । युनाति । युनीते । यौतेत्यादि । युजुगुप्सायामित्याकुस्मीयश्चुरादावात्मनेपदी[3] । यावयते इत्यादि गुस्तु । नौतीत्यादि युवत् । उपसर्गात्" ( ८ । ३ । ६१ ) इति णत्वम् प्रणौति । अनावीदिति अदूदरूददादिपर्युदासात्[4] सेडयम् । तेन "इट ईटि" ( ८ । २ । २८ ) सिचो लापे वृद्धयावौ । अन्यमत इति । स्दुसुनुधातूना लिटं विनेड् वेति केचिदित्युक्तेः । अत्र पूर्वोदाहृते लुङादौ । तेनानौषीत् । नोतेत्यपि । लिटि त्विति । लिटं विनेत्युक्तेर्नात्र विकल्प इत्यर्थ. । नूयात् । नविष्यति । नोष्यति । णु स्तुताविति दीर्घान्तोऽयं तुदादौ नुवतीत्यादि । क्ष्णु तेजने । क्ष्णौति क्ष्णौतु अक्ष्णौत् । चुक्ष्णाव । क्ष्णविता । क्ष्णूयात् । क्ष्णविष्यति । ष्णु । सत्वे कृते इति । 'धात्वादेः पः स." इति कृते निमित्तापायात् णत्वं नास्तीत्यर्थं. । रग्रहण प्रकृतानुपयोग्यपि[5] षत्वे निमित्ततया श्रुतत्वात् सम्पातायातम् । "स्नुक्रमोः" ( ७ । २ । ३६ ) इतीट् इति । यद्यपि स्नु स्वतः सेट् आत्मनेपदे त्विण् निषेधार्थः । स्नुक्रमोरित्यारभ्यते नियमस्तथा फलतो नियमभावेऽपि विधिरूपेणैवादावस्य प्रवृत्तिरुपदर्शिता । सुस्नाव । तासौ सेट्त्वात् सुष्णविथ । स्नूयात् । स्नविष्यति । भावकर्मणोस्त्वस्यात्मनेपदनिमित्तत्वादिडभावः[6] । अस्नोष्ट । अस्नोषाताम् इति । आत्मनेपदेन समानपदस्थस्यैव निषेधविज्ञानादिह न प्रस्नवितेवाचरति प्रस्नवित्रीयते इति । इण् । णकारः 'इणो गा लुङि" (२ । ४ । ४५) इत्यादौ विशेषणार्थः । इतः सप्तानिट. एतीति । शपो लुकि गुणः ॥ २८३ ॥

१. ङिच्च पिन्न भवतीति द्युतादिति इत्यपीति नास्ति क० पु० ।
२. द्यवानीति नास्ति क० पु० ।
३. आकुस्मीयस्करादाविति क० पु० ।
४. अदुदादि इति क० पु० ।
५. अनुपयोग्यविषयतया इति क० पु० ।
६. दिडप्तुभाव इति ख० पु० ।

## २८४. इणो यण् [ ६ । ४ । ८१ ]

इणोऽङ्गस्य यण् स्यादचि । इयङोऽपवादः । यन्ति । इयात् । इयाताम् । एतु । इतात्‌ । इहि । अयानि । अयाव । अयाम । ऐत् । ऐताम् । आयन् । ऐः । ऐतम् । ऐत । आयम् । ऐव । ऐम ।

## २८५. इणो गा लुङि [ २ । ४ । ४५ ]

इणो लुङि परे गा स्यात् । "गातिस्था" ( २ । ४ । ७७ ) इति सिचो लुक् । अगात् । द्वित्वम् । वृद्धिः । "अभ्यासस्य" इतीयङ् । इयाय । इणो यणि कृते द्वित्वम् ।

## २८६. दीर्घ इणः किति [ ७।४।६९ ]

इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इयजिथ । इयेथ । ईयिव । ईयिम । ईयात् । ईयास्ताम् ।

---

इणो यण् । इणिति धातुर्गृह्यते न प्रत्याहार, व्याख्यानात् । यत्तु "एरच्" ( ३ । ३ । ५६ ) "ओरावश्यके" ( ३ । १ । १२५ ) "उरत् ( ७ । ४ । ६६ ) इत्यादि निर्देशादिति प्राञ्चः । तत्र गुणादिविषये कथ यणः प्रसङ्ग इति चिन्त्यम् । इयङोऽपवाद इति । इयङ एवायमपवादो न परयोर्गुणवृद्धयोरपि "मध्येऽपवादाः" इति न्यायात् । तेनायनम् आयक इत्यादि सिद्धिरिति भाव । यन्तीति । न चान्तरङ्गत्वाद् 'इको यणचि" ( ६ । १ । ७७ ) इत्येव यण् सिद्ध इति वाच्यम् "वार्णादाङ्ग बलीयः" इतीयङ एव प्रवृत्तेः । इहीति । ङित्वान्न गुणः । एहीति त्वाङ्पूर्वस्य । अयानीति । गुणायादेशौ । ऐदिति । "आडजादीनाम्" (६ । ४ । ७२, "आटश्च" (६ । १ । ९०) इति वृद्धिः । आयन्निति । अन्तरङ्गत्वात्त्वादेशेऽन्तभावे च कृते परत्वादिणो यण् । तस्य "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यसिद्धत्वादजादित्वेनाडागमः । अन्ये तु "लुङ्लङ्लृङ्क्षु" ( ६ । ४ । ७१ ) इत्यत्रोपदेश इत्यनुवृत्तेर्द्विल ।१निर्देशाश्रयणाद्वा लकारावस्थायामेवाटि कृते ततो यणा सिद्धिमाह—आयन्निति । परत्वाद् गुणायादेशौ ॥ २८४ ॥

इणो गा । पुनर्लुङ्ग्रहणमविशेषेण नित्य गादेशो यथा स्याद् "आत्मनेपदेष्वन्यतरस्याम्" ( २ । ४ । ४४ ) इत्यस्यानुवृत्तिर्मा भूदिति । द्वित्वं वृद्धिरिति । परत्वादादौ कृताया वृद्धेः "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्वादिकारस्य द्वित्वे कृते ततः पुनर्वृद्धिरित्यर्थः । इणो यणि कृते द्वित्वमिति । किति परत्वादादौ यण् । तस्य "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वादिकारस्य द्वित्वमित्यर्थः ॥ २८५ ॥

दीर्घ इणः । ईयतुरिति । दीर्घविधानसामर्थ्यान्नाभ्यासस्य ह्रस्वः । नाप्युत्तरखण्डस्य पुनः प्रवर्तमानं यणं बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घोऽपि भवति । इययिथ ।

२८७. एतेर्लिङि [ ७ । ४ । २४ ]

उपसर्गात्परस्येणो ह्रस्वः स्यादाशिषि लिङि क्ङिति । एत्यति । इक् स्मरणे । "इणवदिक इति वक्तव्यम्" इतीणवत् कार्यम् रूपं च तद्वत् । इङिकावध्युपसर्गतो न व्यभिचरतः । अध्येति । मा माने । प्रणिमाति । लङि । अमुः । अमात् । मेयात् । ख्या प्रकथने ।

---

इयेथेति । भारद्वाजनियमादिड्विकल्प । ईयिवेति । क्रादिनियमादिट् । एता । एतारौ । ईयात् इति । 'अकृत्सार्व" ( ७ । ४ । २५ इति दीर्घः ॥ २८६ ॥

एतेर्लिङि । सार्वधातुक लिङि दीर्घस्यासम्भवाद् आह—आशिषीति । प्रतीयाव अभीयादित्येकादेशस्य तु ह्रस्वो न भवति व्यपवर्गाभावात् । उपसर्गात्परस्यैतेरित्युभयत्र आश्रयणे चान्तादिवद्भावो नास्ति । इह तु आ इयात् एयात् समेयादित्याङेकादेशस्य परादिग्रहणादेकार स्यैते' सम उपसर्गात्परत्वेन ह्रस्वः प्राप्नोति । तस्मादणः इत्यप्यनुवर्तनीयमिति स्थितम् । एवं क्ङितीत्यस्यानुवृत्तिः स्पष्टार्था । व्यत्येपीष्टेत्यत्र ङिति लिङि गुणेन भाव्यम् । तस्मादनण्त्वादेव ह्रस्वाप्रसङ्गात् । काशिकायां तु लिङि यकारादौ क्ङितीति व्याख्यातम् । तत्राप्यण' इत्येव सिद्धेः क्ङितीत्यनुवृत्तिः स्पष्टार्था । योऽत्यस्यानुवृत्तिस्तूत्तरार्था । 'अकृत्सार्वधातुकयोः" ( ७ । ४ । २५ ) इत्यत्र विच्छेदो मा शङ्कि इति । इह त्वनुपयोन्नाचार्यैरन्ववर्ति । अन्वियात् इति । अकृत्सार्वधातुकयो" ( ७ । ४ । २५ ) इति दीर्घे कृते ह्रस्वोऽयम् । कथ तर्हि समीयादित्यादि प्रयोगः । ई गताविति भौवादिकस्य भविष्यति । ऐष्यत् । इक् । क । कारोऽधीगर्थेति विशेषणार्थः[१] । इणवदिक इति वक्तव्यम् इति । नन्वियदेव वाच्यम् किं विशेषोपन्यासेन । उच्यते । केचिदाहुः । "इणो गा लुङि" ( २ । ४ । ४ ) इत्यत्रैव तद्वार्त्तिकं पठ्यते । तेन तत्प्रकरणोक्तमेवैणकार्यमिकोऽतिदिश्यते, न प्रकरणान्तरस्थम् 'इणो यण्" ( ६ । ४ । ८१ ) तेनेयङि सत्यधीयन्तीत्यादि भवति । तथा च भट्टिः प्रायुङ्क्त 'ससीतयोः राघवयोरधीयन्निति । तन्मतमपाकर्तुमाह ( इतीणवत्[२] कार्यमिति । इणिदृष्टं कार्यमात्रमित्यर्थः । यदाह—हरदत्तः यद्यस्यैव प्रकरणस्यायं शेषः स्यात् इणिको लुङि चेति सूत्रन्यासः कर्तव्य इत्येवावक्ष्यत् । यतस्तु खलु पृथगेव "इण्वदिक" इत्याह) ततो मन्यामहे सर्वशास्त्रस्य शेषोऽयमिति । एवं च भट्टिप्रयोगस्तु चिन्त्यः । यत्पुनः 'दीर्घं इणः किति" ( ७ । ४ । ६९ ) "एतेर्लिङि:" ( ७ । ४ । २४ ) इतयोरतिदेशे नैव दोषो न प्रयोजनमधिपूर्वत्वेन रूपे विशेषाभावादित्याह ) रूपं च तद्वदिति । तत्

---

१. विशेषार्थः इति क० पु० ।

२. ( ) इतीणवत्कार्यमित्यारभ्य—इत्याहेत्यततो रेखाङ्कितो नास्ति क० पु० ।

## २८७. अस्यतिवक्तिख्यातिभ्योऽङ् [ ३ । १ । ५२]

एभ्यश्च्लेरङ् स्यात्। "आतो लोप इटि च" ( ६ । ४ । ६४ ) अख्यत् । चख्यौ । ख्येयात् । ख्यायात् । या प्रापणे । प्रणिमाति । एवं वा गतिगन्धनयोः । द्रा कुत्सायां गतौ । प्रणिद्राति । विद ज्ञाने ।

क्रिमेतीत्यादि अस्य रूपं नेयम्, नेत्याह—इङिकावित्यादि । अधिपूर्वाविव प्रयोज्या-वित्यर्थः । तथैवोदाहरति-अध्येतीति । यणादेशः । अधीतः । अधियन्ति । अधीयात् । अधीयाताम् । अधीयुः । अध्येतु । अधियन्तु । अधीहि । अध्ययानि । अध्यैत् । अध्यै-याताम् । अध्यायन् । अध्यायम् । अध्यैव । अध्यैम । अध्यगात् । अध्यगुः । अधीयाय । अधीयतुः । अधीययिथ । अधीयेय । अध्येता । अधीयात् । अधीयास्ताम् । अध्येष्यति । अध्यैष्यत् । मा । मानमिहान्तर्भवनम् । अत्र चार्यं त्र्यमकर्मकः । 'तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः" ( माघ ) इत्यादि दर्शनात् । गृहं निर्माति, तण्डुलान् परिमातीत्यादावुपसर्गवशादर्थान्तरवृत्तित्वेन सकर्मकोऽपि । प्रणिमातीति । नेदं "नेर्गदनद" ( ८ । ४ । १७ ) इति नित्यं णत्वम् । तत्र माङ्मेङोरेवग्रहणम् नास्यापि लुग्विकरणस्यत्वादिति स्थितम् । णत्वविधौ अयाणामपि ग्रहणमिति तु वृत्त्यादिमहाग्रन्थविरोधादुपेक्ष्यमिति माधवोक्तेश्च । तस्मात् "शेषे विभाषा"(८।४।१८) इति पाक्षिकणत्वोदाहरणम् । तेन पक्षे प्रनिमातीत्यपि भवतीत्युन्नेयम् । मायात् । मातु । मातु । अमात् । अमुः । अमान् इति । "लङः शाकटायनस्यैव" (३ ।४ । १११) इति वा जुस्[1] । परस्पम् । अमासीत् । अमासिष्टाम् । ममौ । ममतुः । माता । मेया-दिति । "एर्लिङि" ( ७ । ४ । २४ ) इत्येत्त्वम् । मास्यति । ख्या । खशादिरयम् । "ख्शाञः शस्य यत्वमार्धधातुके तु विकल्पा इत्यादि चक्षिङि वक्ष्यामः । ख्याति । ख्यायात् । ख्यातु ॥ २८६ ॥

अस्यतिवक्तीति । असु क्षेपणे । वच परिभाषणे[2] । ब्रुवे वचिश्च । ख्या प्रकथने । चक्षिङः ख्याम् च । अस्यतेः पुषादित्वादेव सिद्धेः वचनमात्मनेपदार्थम् । पर्यास्थत । पर्यास्थेताम् । उपसर्गादस्यत्यूह्योर्वा वचनम् इति । लङ श्तिया निर्देशो यङ्लुग्नि-वृत्त्यर्थः । अख्यासीदिति । अख्यदिति । अङि "आतो लोप इटि च" ( ६ । ४ । ६४ ) इत्यालोपः । चख्याविति । "आत औ णलः" ७ । १ । ३४) हलादिःशेषादि । चख्यिय । चख्याथ । ख्याता । ख्येयात् इति । 'वाऽन्यस्य" ( ६ । ४ । ६८ ) इत्येत्त्व वा । ख्यास्यति । "समि ख्यः" ( ३ । २ । ७ ) इति सूत्रे न्यासकारेणोक्तम् सपूर्वस्य ख्यातेः प्रयोगो नास्तीति । संख्या । संख्यातुमित्यादिप्रयोगस्य चक्षिङो ज्ञेयः। ये तूपसर्गपूर्वकस्य

१. जुस् इति नास्ति ख० पु० ।
२. अवाद्या सोनिति क० पु० ।

## २८८. विदो लटो वा [ ३ । ४ । ८३ ]

वेत्तेर्लटः परस्मैपदानां णलादयो नवादेशाः क्रमाद्वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे वेत्ति । वित्तः । इत्यादि । विद्यात् । वेत्तु । विद्धि । वेदानि । वेदाव । वेदाम ।

## २८९. विदाङ्कुर्वन्त्वित्यन्यतरस्याम् [३।१।४१]

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । अविवक्षिते पुरुषवचने ।

---

प्रयोगो नेत्याहुः, तेषां व्याख्याति व्याख्यानमित्यादिप्रयोगोऽसाधुः स्यात् । या । प्रापणमिह गतिः । प्रणियातीति । "नेर्गदनद" ( ८ । ४ । १७ ) इति णत्वम् । यायात् । यायातामित्यादि । यायुरित्यस्यानभिधानादप्रयोगः इत्यात्रेय इति माधवीये । यातु । अयात् । अयुः । अयान् । अयासीत् । अयासिष्टाम् । ययौ । ययिथ । ययाथ । ययिव । याता । यायात् । यास्यति । वा । गन्धनं सूचनम् । मर्दनमित्येके । प्रणिवातीत्यादि यातिवत् । "ह्वावामश्च" ( ३ । २ । २ ) इत्यत्राकर्मकत्वादस्याग्रहणमिति न्यासे उक्तम् । तदयुक्तम् । "वाताः वान्ति दिशो दश" इति भाष्ये सकर्मकत्वदर्शनात् । द्रा । कुत्सा कुत्सिता गतिः । पलायनम् निद्रा च । प्रणिद्राति । अद्रुः । अद्रान् । अद्रासीत् । दद्रौ । द्राता । द्रेयात् । द्रायात् । द्रास्यति । विद । इतस्त्रयः सेटः ॥ २८७ ॥

विदो लटो वा । विद इति पञ्चमी । तया परस्मैपदानि विशेष्यन्ते । वेत्तेरनन्तराणामिति । तच्चानन्तर्यं ज्ञानार्थस्यैव विदेः सम्भवति, नान्येषाम् विकरणेन व्यवधानादित्याह—वेत्तेरिति । वेद । "पुगन्त" ( ७ । ३ । ८६ ) इति गुणः । विदतुरिति । ङित्वान्न गुणः । वेत्थेति । सार्वधातुकत्वान्नेट् । सिपि विद्धीति । "हुझल्भ्यो हेर्धिः" ( ६ । ४ । १०१ ) । वेदानीति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ ) इति ॥२८८॥

विदाङ्कुर्वं० । लिट्याम् विहितो लोटि न प्राप्नोतीति वचनम् । सिद्धरूपनिर्देशान्निपातनमिदम् । अत्र निपात्यं दर्शयति—वेत्तेरित्यादि । विद ज्ञाने इत्यस्य । अन्येषां तु विकरणाभावोऽपि निपात्यः स्यात् इति गौरवप्रसङ्ग इति भावः । लोटीति । अनुप्रयोगानुसारात् स एवोन्नीयते इति भावः । गुणाभव इति । आम्निमित्तस्योपधागुणस्याप्रवृत्तिः । लोटो लुगिति । "आमः" ( २ । ४ । ८१ ) इति लेर्विहितो लोटो न प्राप्नोति । लोडन्तकरोत्यनुप्रयोगश्चेति । लिटीति वचनाल्लोडन्तस्यानुप्रयोगो न प्राप्नोतीति निपात्यः पूर्वैः संबध्यते । अविवक्षिते इति । सूत्रे इतिकरणः प्रकारप्रदर्शनार्थः । तेन मध्यमोत्तमौ । एकवचनद्विवचनेऽपि भवतः । प्रयोगप्राचुर्यात्तु सूत्रे बहुवचनमुपात्तमिति भावः ॥ २८९ ॥

२९०. तनादिकृञ्भ्य उः [ ३ । १ ७९ ]

तनादेः कृञश्च उप्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोऽपवादः । तनादित्वादेव सिद्धे कृञोग्रहणमन्यत्तनादिकार्यं नास्येति ज्ञापयति । गुणः लोट्कार्यम् । विदाङ्करोतु ।

२९१. अत उत् सार्वधातुके [ ६ । ४ । ११० ]

उप्रत्ययान्तस्य कृञोऽकारस्य उत् स्यात् सार्वधातुके ङ्किति । विदाङ्कुरुतात् वा । विदाङ्कुर्वन्तु । "उतश्च" ( ६ । ४ । १०६ , इति हेर्लुक् । विदाङ्कुरु । विदाङ्करवाणि । विदाङ्करवाव । अवेत् द् । अविताम् । "सिजभ्यस्त" ( ३ । ४ । १०९ ) इति झेर्जुस् । वेत्तेर्लङ्‌ो झेर्जुस् वेति केचित् । अविदुः । अविदन् ।

२९२ दश्च [ ८ । २ । ७५ ]

धातोर्दस्य पदान्तस्य सिपि परे रुः स्याद्वा । अवेः । अवेद् त । अवेदम् । अवेदीत् । "उषविद"(३ । १ । ३८) इति वाम् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाम्बभूव । विवेद । वेदिता । अस भुवि । अस्ति ।

---

तनादि । अन्यत्तनादि कार्यं नास्येति । तनादिकार्यपिक्षो नियमो विज्ञायते इति भावः । अन्यः "तनादिभ्यस्तथासोः" ( २ । ४ । ७९ ) ःति लुग्विकल्पः तदेतद् वक्ष्यति—कृञस्तनादित्वेऽपि सिचो वा न लुगिति । ननु नेतत् प्रयोजनम् सत्यपि विकल्पे पक्षे "ह्रस्वादङ्गात्" ८ । २ । २७ ) इति लोपेनैवेष्टसिद्धेः । न च विकल्पेनास्य बाधः, विकल्पं प्रति नित्यस्यासिद्धत्वात् । किं चैव ज्ञायते तनादिपाठोऽस्यानर्थक· प्रत्युत विकरणविधौ कृञो ग्रहणे सति तनादिषु कृञः पाठस्यानन्यार्थत्वात् येन नाप्राप्तन्यायेन विकल्पो नित्यं विधिं बाधेत । तस्मात् कृञ्ग्रहणं प्रपञ्चार्थमित्येव साधीयः । ज्ञापनोक्तिस्तु परोक्तानुवादमात्रम् । गुण इति । उप्रत्यये कृते तन्निमित्तः "सार्वधातुक" ( ७ । ३ । ८४ ) इत्यादिना गुण इत्यर्थः । स च रपरः । लोट्कार्यमिति मिति । तिप् । एरुः । उप्रत्ययस्य च गुण इत्यर्थः । विदाङ्करोत्विति । आम्प्रत्ययवदिति नियमात् कर्तृगेऽपि क्रियाफले करोतेर्नात्मनेपदम् ॥ २९० ॥

अत उत् । इह कस्मान्न भवति करिष्यावः कर्तारावित्ति । करोतेः स्यतासिभ्यां सार्वधातुकस्य व्यवधानादिति चेत्; कुरुत इत्यत्रापि उप्रत्ययेन व्यवधानान्न स्यात् । तस्मात् सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम् ।

२९३. श्नसोरल्लोपः [ ६ । ४ । १११ ]

श्नस्यास्तेश्चाकारस्य लोपः स्यात् सार्वधातुके क्ङिति । स्तः । सन्ति । "तासस्त्योः" (७ । ४ । ५०) इति सलोपः । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । स्यात् । अस्तु । स्तात् वा ।

---

ततश्च स्यतास्यन्तेऽपि प्रसङ्ग इत्याशङ्क्य विशिनष्टि-उप्रत्ययान्तस्येति । अङ्गस्येति प्रकृतस्यैतद्विशेषणम् । उप्रत्ययान्तस्याङ्गस्यावयवस्य करोतेरित्यर्थः । एतच्च "उतश्च प्रत्ययात्" ( ६ । ४ । १०६ इत्यनुवृत्तेर्लभ्यते । एवं तु सार्वधातुके इति स्पष्टार्थम् । तत्रैवोप्रत्ययसंभवात् । यत्तु वदन्ति कुर्वित्यत्र नित्यत्वाद्धि लुकि कृते ङितः परत्वाभावादुत्वं न स्यात् । प्रत्ययलक्षणं च नास्ति । "न लुमता" ( १ । १ । ६३ ) इति निषेधात् । तस्मात् सार्वधातुकग्रहणं भूतपूर्वेऽपि यथा स्यात् इति । तदसत् । यतो "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इत्यसिद्धो हि लुक् सूत्रकृन्मतेनोत्वं भविष्यति । उदिति-तपरत्वं युप्रत्ययाश्रयो लघूपधगुणो माभूदिति । अन्यथा ह्यान्तर्यतो हि मात्रिकस्यातो मात्रिक एवोकारो भविष्यतीति किं तपरकरणेन' विदाङ्कुर्वाणेति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ ) इत्यङित्त्वान्नात उत् । अवेदिति । लङि अडागमः । "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः । हल्ङ्यादिलोपः । "वाऽवसाने" (८।४।५६) ॥२९१॥

अवेदोदिति । लुङि सिचि "इट ईटि" ( ८।२।२८ ) इति लोपः । उपधागुणः । अवेदिष्टाम् । अवेदिपुरित्यादि । विदेरदन्तत्वप्रतिज्ञापनादिति । "उपविद" (१।१।२८) इत्यकारस्य विवक्षितत्वादिति भावः । यदुक्तम्—"अगुणत्वं विदेस्तथा" इति । विदाम्बभूवेति । लिडन्तस्य कृञोऽनुप्रयोग । विवेदेति । आमोऽभावे द्वित्वमुपधागुणः । वेदितेति । सेट्त्वमस्य दर्शयति—यथा चानिट्कारिकासु विनत्तिविद्यतिरिति विकरण-निर्देशो वेत्तेर्व्यावृत्त्यर्थः कृतः । एवं च ज्ञानार्थे पट्दर्शनवेत्तेत्याद्यपशब्दः । विचारणार्थे तु स्यात् । विद्यात् । वेदिष्यति । अवेदिष्यत् । अस् । भवनं भूः सत्ता तस्याम् । अस्तीति । शपो लुक् । "खरि च" ( ८ । ४ । ५५ ) इति चर्त्वेऽप्यान्तर्यात् सस्य स एव । तथा च "सः स्यार्धधातुके" ( ७ । ४ । ४९ ) इति तत्त्वमारभ्यते इत्युक्तमेव प्राक् ॥ २९२ ॥

श्नसो । श्नइत्युत्सृष्टानुबन्धस्य श्नमो ग्रहणम् । शकन्ध्वादित्वाच्च पररूपम् इत्याशयेन व्याचष्टे—श्नस्यास्तेश्चेति । अदिति तपरत्वमाटो लोपो मा भूदिति । आस्ताम् । नन्वाटोऽसिद्धत्वादेव लोपो न भविष्यतीति । एवं तर्हि एतदेव तपरत्वं ज्ञापकमनित्यमाभीयमसिद्धमिति । सार्वधातुक इति । एतत्तु स्पष्टार्थमुक्तम् । नत्वस्या-त्रानुवृत्तावुपयोगोऽस्ति । यतः सार्वधातुके एव श्नम् विधीयते । अस्तेरप्यार्धधातुके भूभावो भाव्यम् । एयामासतुरित्यनुप्रयोगे यद्यपि भूभावो नास्ति तथापि परत्वादल्ला-

## २९४. ध्वसोरेद्धावभ्यासलोपश्च [ ६ । ४ । १११ ]

घोरस्तेश्चैत्त्वं स्याद्धौ परे अभ्यासलोपश्च । "असिद्धवद्" (६।४।२२) इत्येत्त्वस्यासिद्धत्वात् "हुझल्भ्यो हेर्धिः" (६।४।१०१) इति हेर्धिः । एधि । असानि । असाव । असाम । "अस्तिसिचः" (७।३।९६) इतीट् । आडागमः । आसीत् । श्नसोरल्लोपस्य "असिद्धवदत्राभात्" (६।४।२२) इत्यसिद्धत्वादाडागमः । आस्ताम् । आसन् ।

## २९५. अस्तेर्भूः [ २ । ४ । ५२ ]

अस्तेर्भूरादेशः स्यादार्धधातुके । "स्थानिवदादेशोऽनल्विधौ" (१ । १ । ५६) इत्यनेन स्थानिवत्त्वात् "अस्तिसिचः" ( ७ । ३ । ९६ ) इतीटि प्राप्ते अस्तेर्भुवश्चेट् नेष्यते । अभूत् । बभूव इत्यादि ।

---

पेऽपि तस्य "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वेनोज्जीवनात् द्वित्वे हलादिः शेषे च कृते येन नाप्राप्तिन्यायेनातो गुणे पररूपं बाधित्वा "अत आदेः" ( ७ । ४ । ७० ) इति दीर्घे कृते परस्यातो लोपेऽपि न कश्चिद् दोषः । उत्तरसूत्रेष्वपि नास्योपयोग इत्याकरे स्थितम् ।। २९३ ।।

घ्वसोः । घोरिति । दाञ् धाञोरेव । दो देङ् दाण् धेटां तु विकरणे व्यवधानाद्धिः परो न संभवति । अभ्यासलोपश्चेति । एतत्तु घोरित्यनेनैव संबध्यते नास्तिना तस्य ह्यावभ्यासाभावात् । लोपश्चायं सर्वस्य भवति नालोऽन्त्यस्य । "नानर्थकेऽलोऽन्त्यविधिः" इत्युक्तेः । लोपश्च न विकारः लोपागमवर्णविकारा इति भाष्ये पृथगुपादानादित्युक्तं प्राक् । तेनाय लोपः शिष्यते सर्वार्थमिति प्राचोक्तमनादेयम् । ननु परत्वान्नित्यत्वाच्च पूर्वमेत्त्वे कृते झलन्तत्वविघाताद् द्वित्वं न स्यादत आह—असिद्धवदत्रेत्यादि । एत्त्वस्यासिद्धत्वादिति । एत्त्वशास्त्रस्यैवासिद्धत्वेनेत्वस्यापि निवृत्तत्वेन स्थानिनो झलोऽनिवृत्तत्वादित्यर्थः । एधीति । अस्तेर्हौ श्नसोरल्लोपे समात्रस्यैत्वम् । अन्ये त्वाहुः—श्नसोरल्लोप इत्यतो विपर्यार्थमल्लोप इत्यनुवर्तते । तेनाल्लोपविषये भवदकारस्यैवैत्वं भवति । ततो "धि च" ( ८ । ० । २५ ) इति सलोपे सिद्धमेधीति । *तदर्थमसिद्धत्वं न वक्तव्यमिति । हेस्तातङ्पक्षे त्वेत्त्वं न भवति । परेण तेन बाधात् ।* कृते तु तस्मिन् स्थानिवत्त्वेन न भवति "सकृद्गतौ विप्रतिषेध" इति । असावेति । आटः पित्त्वेनाङित्त्वादल्लोपाभावः । नन्वास्तामित्यादौ परत्वान्नित्यत्वाच्चातो लोपे कृतेऽनजादित्वादाटा न भाव्यमत आह—श्नसोरित्यादि ।। २९४ ।।

अस्तेः । भवतिनैव भवितेत्यादिसिद्धावस्ते रसितेत्यनिष्टप्रयोगनिवृत्तये वचनम् । आर्धधातुके इति । विवक्षिते इत्यर्थः । यदि तु परसप्तमी स्यात् ततो भव्य-

**२९६. उपसर्गप्रादुर्भ्यामस्तिर्यच्परः [ ८ । ३ । ८७ ]**

उपसर्गेभ्यः प्रादुषश्च परस्यास्तेः सस्य षः स्यात् यकारे अचि च परे । निष्यात् । प्रादुःष्यात् । निषन्ति । प्रादुःषन्ति । यच्परः किम् । अभिस्तः । मृजूष् शुद्धौ ।

**२९७. मृजेर्वृद्धिः [ ७ । २ । ११३ ]**

मृजेरिको वृद्धिः स्यात् सार्वधातुकार्धधातुकयोः । गुणापवादः । "व्रश्च" ( ८ । २ । ३६ ) इति षः । मार्ष्टि । "क्ङिति च" ( १ । १ । ५ ) इति न वृद्धिः । मृष्टः । क्ङित्यपि मृजेर्वृद्धिरिष्यते । मृजन्ति । मार्जन्ति । मार्क्षि । मृज्यात् । मार्ष्टु । मृष्टात् वा । मृजन्तु । मार्जन्तु । मृड्ढि । अमार्ट् ड् । "नेटि"

---

मिति न सिद्धयेत् । हनन्तस्यास्तेण्यंति कृते तत्र परतो भूभावे वृद्धौ सत्यां भाव्यमिति स्यात् । अस्यानुप्रयोगे भूभावो न भवतीति तत्रैवोक्तम् । "प्रादुरास बहुलक्षणाच्छविः" इत्यादौ स्वस गताविल्यस्य प्रयोगः । आसेति बभूवार्थे तिङन्तप्रतिरूपको निपात इति विस्तरः । आस्तभु वश्चेति "ब्रुव· पञ्चानाम्" ( ३ । ४ । ८४ ) इति सूत्र आहादेशस्य भुवश्चास्त्यादेशस्य स्थानिवत्त्वनिषेधादिण् न भवतीत्यर्थः । स्थानिवत् सूत्रे चेद वार्तिक पठ्यते । 'आहि भुवोरीट् प्रतिषेधः" वा० ) इति । अभूदिति । 'गातिस्था" ( २ । ४ । ७७ ) इति सिचो लुक् । प्रत्ययलक्षणेन सिजाश्रयोऽपीट् न भवति । श्रूयमाणसिच एव तत्राश्रयणात् । सिचि वृद्धिर्लुका लुप्तत्वान्न भवति । बभूवेति ।"भुवो वुग्"(६।४।८८) इति वुक् । आदिपदात् भविता । भूयात् । भविष्यति । अभविष्यत् ॥ २९५ ॥

उपसर्ग । "इण्कोः" ( ८ । ३ । ५७ इत्यनुवृत्तमपि प्रादुः शब्देऽसंभवात् उपसर्गेणैव संबध्यते इत्याह—उपसर्गेण इति । अस्तिः किम् । अनुसूते इत्यनुसूः । तस्यापत्यं आनुसेयः । शुभ्रादित्वाड् ढकि "ढे लोपोऽकद्र्वाः" ( ६ । ४ । १४७ ) इत्यूलोपे सकारमात्रस्य क्रियावाचित्वाद् "उपसर्गात्" ( ८।३।६५ ) इति षत्वं स्यात् । निष्यादिति । विध्यादौ लिङ् । प्रनिषन्तीति । लटो झिः । मृज् । केचिदङ्यं पितममुं पठन्ति । तदनाकरम् भिदादिपाठानर्थक्यापत्तेः ॥ २९७ ॥

मृजेरिति । इक्परिभाषोपस्थानाद् अलोऽन्त्यविधिर्न भवतीत्याह–मृजेरिक इति । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्याशयेन व्याचष्टे—सार्वधातुकयोरिति । तेन कंसपरिमृड्भ्यामिति सुप् प्रत्यये न भविष्यति । इह तु कंसपरिमृजमिच्छति कंसपरिमृज्यति ततस्तृचि "क्यस्य विभाषा" ( ६ । ४ । ५० ) इति यलोपे कंस-

( ७ । २ । ४ ) इति सिच्कृतवृद्ध्यभावेऽपि प्रत्ययकृता स्यादेव । अमार्जीत् । अमार्क्षीत् । क्वचिदस्यानुदात्तेषु पाठाद् "अनुदात्तस्य च" ( ६ । १ । ५९ ) इत्यम् वा । अम्राक्षीत् । ममार्ज । ममार्जतुः । ममृजतुः । मार्जिता । मार्ष्टा । केऽप्यमागममिच्छन्ति । म्रष्टा । म्रक्ष्यति तन्मते । वच परिभाषणे । वक्ति । क्त्विस्वाभावात् "वचिस्वपि" ( ६ । १ । १५ ) इति नोत्त्वम् । वक्तः वक्तः । नहि वचिरन्तिपरः प्रयुज्यते । उच्यात् । वक्तु । वग्धि । अवक् ग् । "अस्यतिवक्ति" ( ३ । १ । ५२ ) इत्यङ् ।

२९८. वच उम् [ ७ । ४ । २० ]

वचोऽङ्गस्य उमागमः स्यादङि । आद्गुणः । अवोचत् । उवाच । ऊचतुः । उवचिथ । उवक्थ । ऊचिव । वक्ता । उच्यात् । रुदिर् अश्रुविमोचने ।

---

परिमृजितेत्यतो लोपस्य स्थानिवत्वान्न भवति । क्यस्येति समुदायलोपेऽपि वा "न धातुलोप" ( १।१।४ ) इति वृद्ध्यभावः । गुणपक्षाद इति । तेन क्ङिति न भवतीति । सूचितम् । मार्ष्टि इति । ऋकारस्य वृद्धिराकारो रपरः । षत्वे ष्टुत्वम् । क्ङित्यचीति । अचीत्यल्ग्रहणे सप्तमीनिर्देशात्तदादिविधेरजादावित्यर्थः । तेन मार्जन्तीत्यादि सिद्धम् । तथा चेष्टिः । मृजेरजादौ संक्रमे विभाषावृद्धिरिष्यत इति । सङ्क्रमो नाम गुणवृद्धिप्रतिषेधविषयः । अत्राजादावित्यादिग्रहणं न्याय्यप्राप्तानुवादः । अत्र हरदत्तः- यस्मिन् विधिरित्येव लब्धेऽजादिग्रहणं मुख्याजादिपरिग्रहार्थम् । तेन व्यपदेशिवद्भावाद- जादौ यूयं ममृज तुन्दपरिमृज इत्यत्र न भवति । अन्ये त्वत्रापि वृद्धिमाहुः । यदाह— मैत्रेयः-मृजेति भिदादिपाठादङ् । गणपाठादेव वृद्ध्यभाव इति । तथा च ' इको गुण- वृद्धी" ( १ । १ । ३ ' इत्यत्र भाष्ये मृजेर्वृद्धिरचः । ततोऽचि क्ङिति मृजेर्वृद्धिर्भवति । परिमृजन्ति । परिमार्जन्ति । किमर्थमिदम् । नियमार्थम् । अजादावेव क्ङिति नान्यत्र । क्व माभूत् ? मृष्टः । मृष्टवानिति । ततो वा । वाचि क्ङिति मृजेर्वृद्धिर्भवति । ममार्जतुः ममृजतुरित्यादिमपहायैव योगविभागो व्याख्यातः । तदेवानुसृत्याचार्यैरपि । क्ङित्य- चीत्येवोक्तम् । वृद्धिर्वेष्यते इति । अप्राप्तविभाषेयम् । मार्क्षि इति । सिपि वृद्धौ षत्वे "षढोः कः सि" इति कत्वे कप योगे क्षः । मृष्टः । मृष्ट । मार्ज्मि । मृज्वः । मृष्टादिति । तातङो ङित्वान्न गुणः । मृड्ढि इति । "हुझल्भ्यो हेर्धिः" ( ६ । ४ । १०१ ) इति हेर्धिः । "व्रश्च" ( ८ । ४ । ५६) इति षत्वम् । जश्त्वम् । ष्टुत्वम् । मार्जानि । मार्जाव । अमार्ट् इति । लङि तिप्सिपौ । हल्ङ्यादिलोपः । वृद्धिः । षत्वम् । जश्त्वम् । शत्वम् । 'वाऽवसाने" ( ८ । ४ । ५६ ) इति वा चर्त्वम् । "रात्सस्य" ( ८ । २ । २४ ) इति नियमात् न संयोगान्तलोपः । अमृष्टाम् । अमृजन् । अमर्जिम् । प्रत्ययकृता स्यादेवेति ।

२९९. रुदादिभ्यः सार्वधातुके [ ७ । २ । ७६ ]

रुद् स्वप् श्वस् अन् जक्ष एभ्यः परस्य वलादेः सार्वधातुकस्येट् स्यात् । रोदिति । रुदितः । रुद्यात् । रोदितु । रुदिताद्वा । रुदिहि । रोदाव ।

३००. रुदश्च पञ्चभ्यः [ ७ । ३ । ९८ ]

रुदादेरपृक्तस्य प्रत्ययस्य ईडागमः स्यात् । अरोदीत् ।

---

"नेटि" (७ । २ । ४) इति निषेधो हलन्तलक्षणाया एव वृद्धेर्नमृजेरित्यस्या अप्यनन्तस्येति न्यायादित्यर्थः । अमार्जीदिति । इडभावे वृद्धिषत्वकत्वानि । अमार्ष्टाम् अमार्क्षुः । क्वचिदित्याद्येति । (तथा 'चानिट् कारिकासु पठ्यते । भृजिमृजिविद्धयनिट् स्वरानिति )। क्वचिदिति । स्वस्यासम्मतिं दर्शयति । अम्राक्षीत् इति । अमि कृते यणादेशः । हलन्तवृद्धि । कत्वषत्वादि । अम्राष्टाम् इत्यादि । क्रादिनियमान्नित्यमिट् । ममार्जिथ । परत्वादिड्विकल्प इति पक्षे ममार्ष्ठ । ममृजिव । केऽपि अनुदात्तेत्त्वं पठन्ति । अष्टेति । इकोऽभावान्न मृजे वृद्धि । वच । वक्तीति । चोः कुः । नोत्वमिति । सम्प्रसारणमिति वस्योत्त्वं नेत्यर्थः । नहि वचिरन्तिपरः प्रयुज्यतेऽनभिधानादिति भोजक्षीरस्वामिप्रभृतयः । अन्तीति लट्प्रथमपुरुषबहुवचनस्यानुकरणम् । तेन लिङादि प्रथमपुरुषबहुवचने प्रयोगो न निषिध्यते । तथा च ऊचुः । वचन्तु । अवचन् । अवोचन् इत्यादि माधवादयः उदाजह्रुः । आत्रेयस्तु—एकवचनान्युदाहृतान्यन्यत्रानभिधानमित्येके इत्याह । तदप्रमाणमिति सूचयन् द्विवचनमुदाहरति—( वक्त' इति । वग्धीति । हेर्धित्वं चो कुः । जश्त्वम् । अवगिति । लङ्तिप्सिपोर्हल्ङ्यादिलोपः । अद्, कुत्वं । "वाऽवसाने" (८ । ४ । ५६) उवाचेति । द्वित्वे "लिट्यभ्यासस्य" (६ । १ । १७) इति सम्प्रसारणम् । ऊचतुरिति । "वचिस्वपि" (६ । १ । १५) इत्युत्त्वे द्वित्वं सवर्णदीर्घः । उवचिथेति । भारद्वाजनियमादिट् वा । ऊचिवेति । क्रादिनियमादिट् । उच्यादिति । "किदाशिषि" (३ । ४ । १०४) इति कित्त्वादुत्त्वम् । वक्ष्यति । रुदिर् । सेट् ॥ २९८ ॥

रुदादिभ्यः । रुदादयः क्रमेण वक्ष्यमाणाः । रोदितीति । उपधागुणः । रुद्यादिति । अत्र रुदादिप्रकृतिविशेषं प्रत्ययविशेषं च अपेक्षमाणाभ्यामिडड्भ्यां लिङ्मात्रापेक्षत्वेनान्तरङ्गत्वात् पूर्वमेव यासुड् भवति । पूर्वविप्रतिषेधाद्वा । तत्र कृतेऽवलादित्वादनपृक्तत्वाच्च नेटौ । रुदिहीति । परत्वादिटि सकृद्गतिन्यायाद् हल्ग्रहणानुवृत्तेर्वा धिभावो न भवति ॥ २९९ ॥

---

१. पाठो नास्ति क० पु० ।

२. ( ) वक्त इत्यारभ्य—ऊचतुरित्यन्तं नास्ति क० पु० ।

## ३०१. अड् गार्ग्यगालवयोः [ ७ । ३ । ९९ ]

रुदादेरपृक्तस्य अडागमः स्याद् गार्ग्यगालवयोर्मतेन । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । अरुदिम । इरित्वादङ् । अरुदत् । अरोदीत् । ञिष्वप् शये । स्वपिति । स्वपितः । स्वपन्ति । स्वप्यात् । स्वपितु । अस्वपत् । अस्वाप्सीत् ।

## ३०२. सुविनिर्दुर्भ्यः सुपिसूतिसमाः [ ८ । ३ । ८८ ]

एभ्यः सुप्यादेः षः स्यात् । कृतसंप्रसारणे स्वपि सुपिरित्युच्यते । "पूर्वत्रासिद्धीयमद्वित्वे' इति षत्वे कृते द्वित्वम् । विषुषुपतुः । दुः षुषुपतुः । सुपेरभावान्नषः । विषुष्वाप । सुषुप्यात् । सुपीति किम् । निः स्वप्ता । श्वस् प्राणने । श्वसिति । श्वसितः । श्वस्यात् । श्वसितु । न्यश्वसीत् । न्यश्वसत् । न्यश्वसिताम् । अश्वसीत् । निशश्वास । श्वसिता । अन च ।

---

अरोदीरिति । अरोद इति लङ्. सिप इलोपे कृतेऽड्विसर्गः । अरोदीदिति । लुङि अङभावे सिच "इट ईटि" ( ८ । २ । २८ ) इति लोपः । रुरोद । रोदिता । रुद्यात् । रोदिष्यति । ञिष्वप् । स्वप्यादिति । अकित्वान्नोत्त्वम् । अस्वपीदिति । लङि तिपो "रुदश्च पञ्चभ्यः" ( ७ । ३९८ ) इतीट् । अस्वपदिति ॥ ३०० ॥

'अड् गार्ग्यगालवयोः" ( ७ । ३ । ९९ ) इत्यट् । अस्वाप्सीत् इति । "वदव्रज" इति वृद्धिः । अनिट्त्वात् "नेटि" ( ७ । २ । ४ ) इति न निषेधः । अस्वाप्तामित्यादि ॥ ३०१ ॥

सुविनिर्दुर्भ्यः । सूतीति क्तिन्नन्तः । षूङ् प्राणिगर्भविमोचने । समेत्यपि स्वरूपग्रहणम् । ननु षम ष्टम वैक्लव्ये इति धातुः । धातुनिर्देशार्थयोरिक्श्तिपोरभावात् सुपि व्याचष्टे—कृतसंप्रसारण इत्यादि । सुषुपतुरित्यादौ यदस्य कृतसंप्रसारण रूप तस्येदमनुकरणम् । आगन्तुकेनेकारेण चाय निर्देशो नेका । तत्र हि 'वचिस्वपि" (६।१।१५) इति लक्षणप्राप्तेन सप्रसारणेन धातोरेवायं निर्देशः स्यात् । ततश्च यत्रास्यैतद्रूप तत्रैव षत्वमित्यर्थो न लभ्येतेति भावः । तथा च "विस्वपन्ति पराधीना" इत्यादावपि स्यात् । सुपिरित्युच्यते । आगन्तुकेनेकारान्तेनानुक्रियते इत्यर्थः । अथ किमर्थं विकृतोऽनुक्रियते अत आह—सुपेरभावान्न ष इति । विष्वप् णल् इति स्थिते कित्वाभावाद्धातोः संप्रसारणप्रसङ्गादादौ द्वित्वं ( तत्र[1] "लिट्यभ्यासस्योभयेषाम्" ( ६।१। ७ )

---

१. तत्रेत्यारभ्य—उपसर्गाश्रय इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

## ३०३. अनितेः [ ८ । ४ । १९ ]

उपसर्गस्थान्निमित्तात् परस्यानितेर्णत्वं स्यात् । प्राणिति । विभाषानुवृत्तेरिति केचित् । प्रानिति । जक्ष भक्षहसनयोः । जक्षिति । जक्षितः ।

---

इति वकारस्य कृतेऽपि संप्रसारणे 'पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इति षत्वात्पूर्वं हलादि· शेषेण निवर्तितपकारः सुविति रूपस्याभावात् अभ्यासस्योपसर्गाश्रयं ) षत्वं न भवति । परस्य तु "आदेशप्रत्ययोः" ( ८ । ३ । ५९ ) इति भवत्येवेत्यर्थः । नन्वेवं कित्यपि षत्वस्यासिद्धत्वाद् हलादिः शेषे कृते सुप्रूपाभावात् षत्व न स्यात् । मैवम् । किति हि द्वित्वात्परत्वादादौ सम्प्रसारणे कृते परत्वात् षत्वमेव तावद् भवति । ततः कृतषत्वस्यैव द्वित्वम् । न च द्वित्व प्रति षत्वस्यासिद्धत्वम् । "पूर्वत्रासिद्धीयमद्वित्वे"[1] इत्युक्तत्वात् । अकिति तु द्वित्वे सम्प्रसारणे षत्वस्यासिद्धत्वाद् हलादिः शेषे च कृते षत्वेन भवितव्यम् । नचेदानी सुप्रूपमस्तीति[2] तन्न भवति । कृतसंप्रसारणत्वादिति । सुपीति न पकारान्तत्वमपि विवक्षितम् किं तु कृतसंप्रसारणत्वमात्रम् । तेन सत्यपि हलादिः शेषेऽभ्यासे कृतसंप्रसारणत्वाद्भवितव्यमेव षत्वेनेति तदाशयः । न चैवमपि "स्यादिषु" ( ८।३।६४ ) इति नियमात् षत्वाप्रसङ्गः[3] । यतः प्राक्सितादयं नियमः । ततः परश्च स्वपिरिति । केचिदित्यस्मिन् पक्षेऽसम्मतिं द्योतयन्ति । यतोऽर्थवत एव सुपे ग्रहणं युक्तम् । विपुतो दुःसुप्तः, सुषुप्तिरिति यथा । अभ्यासस्त्वनर्थकः । द्विर्वचने हि समुदायोऽर्थवान्, द्विः प्रयोगेऽपि अर्थप्रत्ययस्यानावर्तनात्[4] । द्वाभ्यामर्थः प्रत्याय्यते इत्येकस्यानर्थक्यमेव । विपुषुपतुरित्यादौ तु प्रागेव द्वित्वादेकस्यैवार्थवत्वात् षत्वमित्युक्तमेव । एतच्च पूर्वं धातुरुपसर्गेण युज्यते इति पक्षे । पूर्वं धातु· साधनेन युज्यते इति पक्षे तु पूर्वं द्वित्वेऽनर्थकत्वात् षत्वाभावे सुसुपुपुरित्याद्यप्युन्नेयम् । सुष्वपिश । सुष्वप्य । सुषुप्यात् इति । "किदाशिषि" ( ३ । ४ । १०४ ) इति कित्वात्सम्प्रसारणम् । सुषीति षत्वम् । निःस्वसेति । सम्प्रसारणाभावान्न षत्वम् । स्वप्स्यति । अस्वप्स्यत् । श्वस् । श्वसिति इति । "रुदादिभ्यः सार्वधातुके" ( ७ । २ । ७६ ) इतीट् । अश्वसीदिति । लङि "रुदश्च पञ्चभ्यः" (७ । ३ । ९८) इतीट् । अश्वसीत् इति । अड् गार्ग्यगालवयोः" ( ७ । ३ । ९९ ) इति पक्षे । अश्वसीदिति । लुङि सिचि "इट ईटि" ( । २ । २८ ) इति लोपे अश्वसिष्टामित्यादि । अन च । चकारात् प्राणने इत्यनुकृष्यते ॥३०२ ॥

अनितेः । असमानपदत्वाद् वचनम् । अणोपदेशत्वाच्च 'उपसर्गादसमासेऽपि" ( ८ । ४ । १४ ) इत्यप्रसङ्गः । अत्र केचिदाहुः—'अन्त" ( ८ । ४ । २० ) इत्युत्तरसूत्रस्यमन्तग्रहणमिहापकृष्यते[5] तच्च समीपार्थम् । तेनोपसर्गस्थान्निमित्तात् समी-

---

१. पूर्वत्रासिद्धीयमसिद्धत्वमिति ख० पु० ।
२. स्वरूपमस्तीति तन्न भवतीति क० पु० ।
३. षत्वप्रसङ्ग इति ख० पु० ।
४. अर्थप्रत्ययस्यानार्थवर्तनादिति ख० पु० ।
५. मिहाकृष्यते इति क० पु० ।

३०४. अदभ्यस्तात् [ ७ । १ । ४ ]

अभ्यस्तात् परस्य झस्य अत् स्यात् । अन्तापवादः । जक्षति । जक्षितु । "सिजभ्यस्त" ( ३ । ४ । १०९ ) इति झेर्जुस् । जक्षुः । अजक्ष । जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । जागृयात् । जागर्तु । गुणः । "हल्ङ्याभ्यो" इति लोपः । विसर्गः । अजागः । अजागृताम् । अभ्यस्तत्वात् झेर्जुस् ।

३०५. जुसि च [ ७ । ३ । ८३ ]

जुसि परे इको गुणः स्यात् । अजागरुः । शृणुयुरित्यादौ यासुटो ङित्त्वान्न गुणः । वृद्धौ प्राप्तायाम् ।

पदस्य नस्येत्यर्थ आश्रीयते । तेन येन नाव्यवधानमिति न्यायात् प्राणितीत्यत्र ककारेण व्यवाये णत्वं भवति । न तु पर्यनितीत्यनेकेनापीति । प्राणितीत्यादि । इह इट् प्राग्वत् । प्रन्यात् । प्रनितु । प्रनिहि । प्रानीत् । प्रानन् । प्रानिताम् । प्रानन् । प्रानीत् । प्रानिष्टाम् । प्रान । प्रानतुः । प्रनिथ । क्ष गता । जक्ष ॥३०३॥

अदभ्यस्तात् । झोऽन्तापवाद इति । "झोऽन्तः" ( ७ । १ । ३ ) इत्यनुकरणस्यैकपदत्वात्षष्ठीसमासः । "झोऽन्तः" ( ७ । १ । ३) इत्यस्यैवापवादोऽनन्तरत्वान्न जुसे[1] इत्यर्थः । तदेव स्फोरयति—सिजभ्यस्तेति । झेर्जुसिति । निरवकाशत्वात्[2] पूर्वोऽपि जुस् परमप्यन्तादें शसदादेशं[3] च बाधते इति भावः । जागृ । जागर्तीति । सार्वधातुकार्ध" ( ७ । ३ । ८४ इति गुणः । जागृतः । "अदभ्यस्तात्" ( ७ । १ । ४ ) ङित्त्वान्न गुणः । यण् । जाग्रति । यासुटो ङित्त्वान्न गुणः । जागृयात् । जागृयाताम् । जागर्तु । जागृतात् । जागृताम् । जाग्रतु । जागृहि । जागराणि । हल्ङ्यादिलोप इत्यादि । लङ्तिपि परत्वाद् गुणे रपरे "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपे रेफस्य "खरवसानयोः" ( ८ । ३ । १५ ) इति विसर्जनीय इत्यर्थः ॥ ३०४ ॥

जुसि च । इको गुणः स्यादिति । इक्परिभाषोपस्थितेनेग्ग्रहणेनाङ्गस्य विशेषणेन तदन्तविधेरिगन्तस्याङ्गस्य गुणोऽलोऽन्त्यस्येत्यर्थः । तेन हलन्तस्य न भवति । अनेनिजुः । पर्यवेविशुरिति । अजागरुरिति । "क्ङिति च" ( १ । १ । ५, इति निषेधापवादोयम् गुणः । यद्येवम् । शृणुयुः जागृयुरिहापि प्राप्नोति तत्राह—शृणुयुरित्यादि ।

१. इदोऽद्यः प्राग्वदिति ख० पु० ।
२. अनन्तरत्तरत्वादिति क० पु० ।
३. जसिति क० पु० ।
४. निरवासत्वादिति क० पु० ।
५. अदादेशमिति नास्ति क० पु० ।

## ३०६. जाग्रोऽविचिण्णल्ङित्सु [ ७ । ३ । ८५ ]

जागर्तेर्गुणः । स्यात् सर्वत्र, न तु विचिण्णल्ङित्सु । अजागरीत् । "उषविद" ( ३ । १ । ३८ ) इत्याम् वा । जागरामास । जजागार । "जाग्रोऽविचिण्" ( ७ । ३ । ) इति गुणः । जजागरतुः । जजागरिथ । जागरिता । जागर्यात् । दरिद्रा दुर्गतौ । दरिद्राति ।

अय भावः—द्वे अत्र ङित्वे आद्यमपित् सार्वधातुकाश्रयम् अपरं यासुडाश्रयम् तदुपजीवी "क्ङिति च" ( १ । १ । ४ ) इति निषेधोपि तद्भेदाद् भिद्यते । तत्र ङिद्विषय आरभ्यमाणोऽपि जुसि गुणः स्वविषये सर्वत्र नित्यप्राप्तं पूर्वमेव बाधते न परम् । तस्मिन् प्राप्ते चास्यारम्भात् । अन्ये तु "वसस्याचि" ( ७ । ३ । ७२ ) इत्यतोऽचीत्यनुवृत्ते रजादौ जुसि गुणोऽयमित्याहुः । वृद्धौ प्राप्तायामिति । लुङि "सिचि वृद्धिः" ( ७ । २ । १ ) इत्यनेन । "ह्म्यन्तक्षण" ( ७ । २ । ५ ) इति निषेधस्तु "अतो ल्रान्तस्य" ( ७ । २ । २ इति नित्याया वृद्धे पुनर्नरस्याः । तथा हि अजागृ ईदिति स्थिते पूर्वं यण् प्राप्तः स सार्वधातुकगुणो बाधते । तं च सिचि वृद्धिस्तां च जागर्तिगुणः । तत्र कृते ह्म्यन्तलक्षणा प्राप्ता वृद्धि "नेटि" ( ७ । २ । ४ ) इति निषेधः । तमपि "अतो हलादेः" ( ७ । २ । ७ ) इति विकल्पः । "तमप्यतो ल्रान्तस्य" ( ७ । २ । २ ) इति नित्या वृद्धिः ता च "ह्म्यन्तक्षण" ( ७ । २ । ५ ) इति निषेधः इत्येष प्राप्तिक्रमः । तदुक्तम्—

> "गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
> पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव" ॥

जाग्रो । सर्वत्रेति । वृद्धिविषये प्रतिषेधविषये चेत्यर्थः । तत्र चिण्णलोः प्रतिषेधो वृद्धिविषय[१]यत्वमुन्नयति । ङिति प्रतिषेधात्तु प्रतिषेधविषयत्वम् । न तु विचिण्णल्ङित्स्विति । एतेन प्रसज्यप्रतिषेधतामस्य दर्शयति । यद्येवम् अजागरुः । अहं जजागरेत्यादौ "जसि च" ( ७ । ३ । ८३ ) "सार्वधातुक" ( ७ । ३ । ८४ ) इत्यपि गुणो निषिध्येत । नैष दोषः । "अनन्तरस्य विधिर्वा भवति प्रतिषेधोवेत्यनन्तरा या प्राप्तिः जाग्र इति साऽनेन निषिध्यते, न 'जुसि च" ( ७ । ३ । ८३ ) इत्यादिरपि । अन्ये तु पर्युदासमाहुः । विचिण्णल्ङिद्भ्योऽन्यत्र भवतीति । तेषु तु न विधिर्न प्रतिषेधः । तेन जुसि णलि च लक्षणान्तरेण प्राप्तो गुणो भवत्येवेति । जजागारेति । णल्पर्युदासात् गुणाभावे वृद्धिः । ननु कृतेऽपि गुणे "अत उपधायाः" ( ७ । २ । ११६ ) इति वृद्धया सिद्धम् । तत् किं णल्पर्युदासेन । मैवम् । सति गुणे तद्विधानसामर्थ्यात् अङ्गवृत्त परिभाषया वा पुनर्वृद्धिर्न स्यात् । जागरयति, जागरक 'इत्यत्रे[२]वेति तदर्थं

१. तत्रचिण्णलोः प्रतिषेधाद् वृद्धिविषयत्वमुन्नीयते इति ख० पु० ।
२. इत्यत्रे चेति क० पु० ।

**३०७. इद्दरिद्रस्य [ ६ । ४ । ११४ ]**

दरिद्रातेरात इकारः स्यात्, सार्वधातुके क्ङिति हलि । दरिद्रितः ।

**३०८. श्नाभ्यस्तयोरातः [ ६ । ४ । ११२ ]**

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके । दरिद्रति । दरिद्रियात् । दरिद्रातु । दरिद्रितात् वा । अदरिद्रात् । अदरिद्रुः । "दरिद्रातेरार्धधातुके आलोपो वाच्य" ( वा० ) अदरिद्रीत् । अदरिद्रासीत् । "अनेकाच आम् वक्तव्य": ( वा० ) दरिद्रामास । दरिद्रातेराम् वेति केचित् । ददरिद्र । दरिद्र्यात् । चकासृ दीप्तौ । चकास्ति । चकास्तः । चकासति । चकास्मि । हेर्धित्वम् । सस्य जश्त्वेन दः । चकाद्धि । भाष्यकारमतेन "धि च" (८।२।२५) इति सलोपः । चकाधि ।

---

प्रतिषेधः कृतः जागरिता । जागर्यात् इति । आशिषि यासुटः कित्वाद् गुणः । अय च पूर्वविप्रतिषेधेन रिङं बाधते । एवं जागर्यते इति । भावकर्मणोर्यक्यपि इति माधवः । जागरिष्यति । दरिद्रा ॥ ३०६ ॥

इद्दरिद्रस्येति । दरिद्रस्येति छान्दसेन ह्रस्वेन निर्देशः । सार्वधातुक इति । आर्धधातुके लोपविधानात् अधिकारस्त्वतेल्लभ्यते । ङितीति । क्ङितीत्यधिकारेऽपि सार्वधातुकस्य कितोऽसम्भवादेवमुक्तम् ॥ ३०७ ॥

श्नाभ्यस्तयोरिति । आत इत्यनेन स्नाऽभ्यस्तयोर्विशेषणादाकारान्तयोर्लोप इति व्याख्येयम् । तेन जाग्रति, शासति चकासतीत्यत्र नानन्तस्य न भवति । अलोऽन्त्यस्यैव भवतीत्याशयेन व्याचष्टे—अनयोरात इति । दरिद्रताति । "अदभ्यस्तात्" ( ७ । १ । ४ ) इत्येतत्परत्वादित्वमोत्व च बाधते । तत्र कृत आलोपः । दरिद्रिताविति तातङो ङित्वादित्वम् । दरिद्रिहि । दरिद्राणि । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुरिति । "सिजभ्यस्त" (३।४।१०९) इति झर्जुस् । "लङः शाकटायनस्यैव" (३।४।११७) इत्यादन्तलक्षणो विकल्पस्तु न भवति । परत्वात् "श्नाभ्यस्तयोः" ( ६ । ४ । ११२ ) इत्यालोपे आकारान्तस्यैवाभावादिति माधवः । न च दरिद्रा झि इति स्थिते आलोपात् परत्वादपवादत्वाच्च [1]हलोतोत्व स्यादिति वाच्यम् । कृताकृतप्रसङ्गित्वेन नित्येन जुसा बाधितत्वात् । सोऽपि च नित्येन परेणाल्लापेन बाधित इत्यनादन्तत्वम् । दरिद्रातेरित्यादि । तेन दरिद्रातीति दरिद्र इति "श्याद्व्यध" ( ३ । १ । १४१ )

---

१. हल्यात्वमिति क० पु० ।

३०९. तिप्यनस्तेः [ ८ । २ । ७३ ]

पदान्तस्य सस्य दः स्यात् तिपि परे न त्वस्तेः । अचकात्-द् ।

३१०. सिपि धातोरुर्वा [ ८ । २ । ७४ ]

पदान्तस्य धातोः सस्य रुः स्याद्वा सिपि । पक्षे दः । अचकाः । अचकात्-द् । अचकासीत् । चकारसमास । शासु अनुशिष्टौ । शास्ति ।

---

इत्यादन्तलक्षणो णो न भवति, पचाद्यजेव तु भवति । तथा च वार्तिकम्—सिद्धश्च प्रत्ययविधौ इति । अस्या अपवादमाह–लुङि वेति । तथा च भाष्यम् । अद्यतन्यां वेति वक्तव्यम् इति । सनीत्यादि । तदुक्तं भाष्ये—

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥ इति ।

अदरिद्रीदिति । आर्द्धधातुकविवक्षायामेवाकारलोपे कृते नादन्तत्वात्सगिटौ । अदरिद्रासीदिति । आलोपाभावे "यमरम" ( ७ । २ । ७३ ) सगिटौ । "एकाच" ( ७ । २ । १० ) इति तत्रानुवर्तते इति मतान्तरमित्याशयेनोदाहृतम् । अनेकाच इति । "कास्यनेकाच् ग्रहणं चुलुम्पाद्यर्थम्" इति वर्तिकात् इति । ददरिद्रेति । आमोऽभावे आलोपे कृते "आत औ णलः" ( ७ । १ । ३४ ) इत्यात्त्व न भवति । अन्ये त्वाहुः इत्वोत्त्वेनापि वृद्धौ पणो इत्यादिसिद्धेरौकारवचनं दरिद्रातेरालोपेऽपि श्रवणार्थम् । तेन ददरिद्राविति भवितव्यमिति । एवदेव दरिद्रातेराम् विकल्पस्यापि लिङ्गम् । ये तूच्चारणे विशेषाभावात् औकारविधान मन्यन्ते, तेषां पूर्वमातो लोपे ददरिद्रेत्येव भवति । चकास्[1] इति । "नाग्लोपि" ( ७ । ४ । २ ) इति णौ चङ्युपधाह्रस्वनिषेधार्थः । चकासतीति । चकासतीति अदभ्यस्तात् । चकास्यात् । चकास्तु । सस्येत्यादि । चकास् हि इति स्थिते "हुझल्भ्यो हेर्धिः" ( ६ । ४ । १०१ ) इति हेर्धित्वम् । "धिसकारे सिचो लोपश्चकाधीति प्रयोजनम्" इति वार्तिकात् सस्य लोपाभावात् "झलां जश् झशि" ( ८ । ४ । ५३ ) इति दः । "चकाधीत्येव भवितव्यम्" इति भाष्येऽभ्युपगमादाह—भाष्यकारेत्यादि ॥ ३०८ ॥

तिप्यनस्तेः तिपि किम् । चकास्तीति चकाः क्विप् । अनस्तेः किम् । "आप एवेदं भुवनं सर्वमा" . श्रुति ) । लङि तिपि "बहुलं छन्दसि" ( ७ । ३ । ९० ) इतीडभावे हल्ङ्यादिलोपे अस्तरा इति रूपम् । अचकादिति । "वाऽवसाने' ( ८ । ४ । ५६ ) इति चर्त्वम् । इति वाततवम् । अचकास्ताम् । अचकासुः ॥ ३०९ ॥

स्याद्वेति । "स सजुषो रुः" ( ८ । २ । ६६ इति नित्ये प्राप्ते विभाषेयम् इति भावः । पक्षे दः इति । जश्त्वेन । आकरे तु "वसुस्रंसु" ( ८ । २ । ७२ ; दोऽनुवृत्य

---

१. अदद् इत्यधिकः स० पु० ।

३११. शास इदङ्हलोः [ ६ । ४ । ३४ ]

शास उपधाया इकारः स्यादङि हलादौ च ङ्किति । "शासिवसि" इति षः । शिष्टः । शासति । शास्सि । शिष्यात् ।

३१२. शा हौ [ ६ । ४ । ३५ ]

शास्तेर्हौ परे शादेशः स्यात् । शाभावस्यासिद्धत्वाद्धेर्धिः । शाधि । शासानि । शासाव । अशात्-द् । अशिष्टाम् । अशासुः । अशाः । अशात् । अशिष्टम् । "सर्तिशास्ति" ( ३ । १ । ५६ ) इत्यङ् । अशिषत् । अशिषताम् । शशास । शासिता । शिष्यात् ।

इति परस्मैपदप्रक्रिया ।

---

विधीयते । यद्येवम् दत्वे विकल्पिते पक्षे रोः सिद्धत्वाद् रुग्रहणमनर्थकम् । रुग्रहणं "दश्च" (८ । २ । ७४) इत्यत्रानुवृत्त्यर्थमिति स्थितम् । अचकाः इति । रुत्वे विसर्गः । अचकासीदिति । लुङि सिजादि । चकासामासेति 'अनेकाच" ( वा० ) इत्याम् । शासु । उदित्व शासित्वा' शास्त्वेत्यत्र "उदितो वा" ( ७ । २ । ५६ ) इताड्विकल्पार्थम् । अनुशिष्टिः विविच्य ज्ञापनकम्[१] । अक्षेत्रविद् क्षेत्रविद सप्राट् स प्रैतिक्षेत्रविदानुशिष्ट" इति संपूयणत्रिदुपानययोः अञ्जसाऽनुशासतात्यादो तथादर्शनात् ॥ ३१० ॥

शास इदिति । अत्रासाधारणेन निमित्तेनाङा संबन्धाद् यस्माच्छासेरङ् विहितस्तस्येह ग्रहणम् । अङ्विधौ च परस्मैपदिभ्यामर्तिसर्तिभ्यां साहचर्यात् परस्मैपदिनः शासु अनुशिष्टौ इत्यस्यैव शासेर्ग्रहणम् । तेनाङः[३] शासु इच्छायाम् इत्यात्मनेपदिनः इत्वं न भवति । आशास्ते आशास्यमान इति । तथाच" आशीरयम् ' आशास. क्वावुपधायाः इत्वम्" इत्युपसंख्यानं वक्ष्यति । "शासिवसि" ( ८ । ३ । ६० ) इति षः । तत्र शासिमात्रस्य ग्रहणम् ) तेनाशिषि लिङ्लोटौ इत्यादिनिर्देशोपपत्तिरिति ज्ञेयम् । शासतीति । अदभ्यस्तात्" ( ७ । १ । ४ ) ॥ ३११ ॥

शा हौ । शास्तेरिति स्थाने षष्ठीयम् । उपधाग्रहणस्य निवृत्तेः शब्दाविकाराश्रयणाच्च । शाभावस्यासिद्धत्वादिति । "असिद्धवदत्राभात्" इत्यनेन । अन्ये तु शास् इति

---

१. शास्त्वशाढवेति क० पु० ।

२. ज्ञानमिति क पु० ।

३. तेनाङः शासु इत्यारभ्य ग्रहणमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

४. इत्यदादावित्यादि नास्ति क० पु० ।

## अथात्मनेपदप्रक्रिया

चक्षिङ् व्यक्तायां वाचि। इकार उच्चारणार्थः। "स्कोः संयोग" ( ) कलोपः। चष्टे। चक्षाते। चक्षे। चड्ढ्वे। चक्षीत। चष्टाम्। अचष्ट।

---

सान्त आदेशः। 'धि च" ( ८। २। २५ ) इति सलोपः। शासः शासुविधानमित्त्वबाधनार्थम् इत्याहुः। अशादिति। लङि तिपो हल्ङ्यादिलोपे 'तिप्यनस्तेः"(८।२।७३) इति दत्वम्। वाऽवसाने। अशासुरिति। "सिजभ्यस्तविदिभ्यश्च" ( ३। ४। १०४ ) इति झेर्जुस्। अशा इति। "सिपि धातो" ( ८। २। ७४ ) इति वा रुत्वम्। अशादिति। पक्षे द। 'सर्तिशास्ति" ३। १। ५६ इत्यङ्। अत्र चकारेण परस्मैपदानुकर्षणमुत्तरार्थम्। अयन्तु पृथक् सूत्रकरणादुभयपदेऽपीत्युक्तत्वात् कर्मव्यतिहारे व्यत्यशिषत व्यत्यशिषेतामित्यादावपि भवति ॥ ३ २॥

### इत्यदादौ परस्मैपदप्रक्रिया

चक्षिङ्। इदित्त्वम् विचक्षण इत्यत्र अनुदात्तेतश्च हलादेः" ( ३। २। १४९ ) इति युजर्थम्। नुम् तु न भवति। अन्ते इदित इति व्याख्यानात्। यद्येवम् "अनुदात्त" ( १। ३। १२) इत्येवात्मनेपदमपि सिद्धम् ङित्वन्तु अन्ते इदित्ववारणार्थमिति चेन्न। तन्मात्रार्थत्वे हि चक्ष इत्यकारमेवानुदात्तमासज्जेत्। एवं तर्हि अन्तेदित्त्वविधानार्थः सन् "अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्" इत्यपि ज्ञापयति। तेन 'प्रार्थयन्ति शयनोत्थितं प्रियाः" इत्याद्युपपन्नं भवति। इत एकादशात्मनेपदिनः। चष्ट इति। ष्टुत्वम्। चक्षते इति। 'आत्मनेपदेष्वनतः" ( ७। १। ५ ) इत्यदादेशः। चक्षे इति। कलोपे 'षढोः कः सि" ( ८। २। ४१ ) इति कत्वे षत्वे च कषसंयोगे क्षः। चक्षाथे। चड्ढ्वे इति। कलोपे ष्टुत्वे च षस्य जश्त्वेन ड.। चक्षे। चक्ष्वहे। चक्ष्महे। चष्टामिति। लोट्। "आमेतः" ( ३। ४। ९० )। कत्वे क्षः। ष्टुत्वम्। चक्ष्व। चड्ढ्वम्। चक्षै। चक्षावहै। चक्षामहै। अचष्टेति। लङ्। अट्। ष्टुत्वम्। अचक्षाताम्। अचक्षत। अचष्ठाः अचड्ढ्वम्। अचक्ष्महि। चक्षिङः ख्याञ्। आर्धधातुके इति। विषयसप्तमीयम्। तेनाख्येयम्, आचक्षेयमित्यजन्तलक्षणो यत् भवति। प्रागेव प्रत्ययोत्पत्तेः ख्याञादेशात्। ननु स्थानिवद्भावेन ङित्वादेवात्मनेपदं सिद्धं तत्किं ञित्त्वेनेत्यत आह—ञित्त्वादुभयपदमिति। अकर्तृगक्रियाफले परस्मैपदं यथा स्यादित्यर्थः। न च तत्रापि स्थानिवत्त्वेन ङित्वात्तङ्प्रसङ्गः। तथा सति ञित्करणमेवानर्थकं स्यादिति भावः। आख्यदिति। "अस्यतिवक्ति" ( ३। १। ५२ ) इत्यङ्। ख्यातेति। प्रकथनार्थख्यानादेशस्य च ग्रहणमित्याकरे स्थितत्वात्। आतो लोपः। अख्यताम्। अख्यन्। अख्यतेति। आत्मनेपदेऽप्यङ्। अख्येतामिति। अख्यन्त। वधात्रपोष्टः। अयं भावः—चक्षिङः ख्शाञ् इत्यादेशो विधीयते। तत्र "पूर्वत्रासिद्धम्" ८। २। १ ) इत्यधिकारेण विधानानन्तरं "ख्शाञः शस्य यो वा" ( वा० ) इति वार्त्तिकेन यत्वं क्रियते। तेन यत्वाभावपक्षे

३१३. चक्षिङः ख्याञ् [ २ । ४ । ५४ ]

चक्षिङः आर्धधातुके ख्याञादेशः स्यात् । ञित्त्वादुभयपदम् । अख्यत् । अख्यत । क्साञपीष्टः । अक्सासीत् । अक्सास्त । वर्जने निषेधः । समचक्षिष्ट ।

३१४. वा लिटि [ २ । ४ । ५५ ]

चक्षिङः ख्याञ्-क्साञौ वा स्तो लिटि । चख्यौ । चख्ये । चक्सौ । चक्से । चचक्षे । ख्याता । क्साता । ईड स्तुतौ । ईड्डे ।

"खरि च" ८ । ४ । ५५) इति खस्य चर्त्वे क्शातेत्यादि भवति । अस्याश्च कल्पनायाः प्रयोजनानि भाष्ये सुबहूनि प्रदर्शितानि । तद् यथा—सुप्रख्यस्य भावः सौप्रख्यमिति । यत्वस्यासिद्धत्वाद् "योपधाद् गुरूपोत्तमाद् वुञ्" (५ । १ । १३२) इति वुञभावे ष्यञेव भवति । सुप्रख्येन निर्वृत्तो देशः सौप्रख्यस्तत्र भवः सौप्रख्यीयः इति यत्वस्यासिद्धत्वात् "धन्वयोपधाद् वुञ्" ( ४ । २ । १२१ ) इति वुञभावे 'वृद्धाच्छ" एव भवति । पुम्ख्यानमिति यत्वस्यासिद्धत्वात् अम्परत्वाभावात् "पुमः खयि" ( ८ । ३ । ६ ) इति रुत्वं भवति । नमः ख्यात्रे इत्यत्र यत्वस्यासिद्धत्वेन 'शर्परे विसर्जनीयः" (८ । ३ । ३५) भवति । पर्याख्यानमित्यत्र यत्वस्यासिद्धत्वात् अनटा व्यवायात् "कृत्यचः" (८।४।२९) इति णत्वं न भवति । 'न ख्याख्या" ( ८ । २ । ५७ ) इति णत्वनिषेधे ख्याग्रहणं च न कर्तव्यं भवति । यत्वस्यासिद्धत्वेन यण्वत इत्यस्याप्रसक्तेरिति दिक् । ख्या प्रकथने इत्ययमपि ख्शादिरेव, तेन तमादाय नैते दोषाः प्रसज्जन्तीत्याकरः। अस्य च कस्य "चयो द्वितीया शरि पौष्करसादेः" ( वा० ) इति खकारो न भवति । अस्मिन् कर्तव्ये चर्त्वेन जातस्य कस्यासिद्धत्वेन चयोऽभावात्[1] । न पुनरस्य कादिरिति भ्रमितव्यम् । तथा सति यत्वपक्षे खकारो न श्रूयेत । अथवा ख्शादिर्भविष्यति । केनेदानीं क्शादिर्भविष्यति चर्त्वेनेति भाष्यविरोधाच्च । अक्शासीदिति । ख्यातीति कृतयत्वस्य विकृतस्य निर्देशाद् "अस्यतिवक्ति" ( ३ । १ । ५२ ) इत्यङ् न भवति । "यमरम" ( ७ । २ । ७३ ) इतीट्सकौ । अक्सासिष्टाम् । अक्सास्त । "एकाच" इति नेट् । समचचिष्टेति । न्यषेधीत् इत्यर्थः । "आर्धधातुस्य" ( ७ । २ । ३५ ) इतीट् ॥ ३१३ ॥

वा लिटि । ख्याञ्क्शाञाविति । यत्वविकल्पेन द्वैरूप्यमनेन दर्शितम् । चख्यौ इति । 'आत औ णलः" ( ७ । १ । ३४ ) । चख्यिथ । चख्याथ । चख्ये इति । आतो लोपः । चख्यिरे । चख्यिषे । चख्यिढ्वे । "विभाषेटः" ( ८ । ३ । ७९ ) इति तु न भवति । यत्वस्यासिद्धत्वेनेणः परत्वाभावात् । "वाऽन्यस्य" ( ६ । ४ । ६८ ) इति वा

1. योऽभावादिति ख० पु० ।

३१५. ईड्जनोर्ध्वे च [ ७ । २ । ७८ ]

आभ्यां परस्य सस्य ध्वस्य च सार्वधातुकस्येडागमः स्यात् । ईडिषे । ईडिध्वे । ईड्वहे । ईश ऐश्वर्ये । ईष्टे ।

३१६. ईशः से [ ७ । २ । ७७ ]

ईशः सस्य सार्वधातुकस्येट् स्यात् । ईशिषे । "ईड्जनोर्ध्वे च" ( ७ । २ । ७८ ) इत्यत्र ईशोऽप्यनुकर्षः । ईशिध्वे । ऐशिष्ट । आस उपवेशने । आस्ते । आस्से । आध्वे । आद्ध्वे । "दयायासश्च" (३ । १।३७)

---

एत्वम् । स्येयात् । स्यायात्। स्यासीष्ट । स्यास्यति । स्यास्यते । एव 'क्ष्णोऽप्युन्नेयम्। ईट् । ईट्टे । ष्टुत्वम् । चर्त्वम् ॥ ३१४ ॥

ईड्जनोर्ध्वे च । चकारेण "ईशः से" ( ७ । २ । ७७ ) इत्यनुकृष्याह—सस्य ध्वस्य चेति अत्र सेध्वे इत्येदन्तयोरनुकरणम् । अविभक्तिकश्च निर्देशः । तेनात्मनेपदे एवायं विधिर्न परस्मैपदे । तथा च[1] वृत्तावुक्तम् । ध्वे इति कृतटेरेत्वस्य ग्रहणाल्लङि ध्वमि न भवितव्यमिटा । लोटि पुनरेकदेशविकृतस्यानन्यत्वात् भवितव्यमिटेति । एवं जन जनने इति श्लुविकरणस्य सिपि न भवितव्यमिटेति जं जसीति भवतीत्याकरे स्थितम् । आचार्यस्तु इति सेध्वे इति सप्तम्या निर्देशं मन्यमानः सस्य ध्वस्य चेति व्याचक्षाणस्तमेरपोटं मन्यते । तथा च ह्वादौ उदाहरिष्यति । ईड्जनोरितीट् । जजनिषेति । तदेतदन्यमतेनेति कथचिद् वर्णनीयम् । स्वमतेनात्मनेपदे एदन्तत्वे एव च भवितव्यम् । न च जनेस्तत्संभवः । जायसे इति श्यना व्यवधानात् । ह्वादेश्च परस्मैपदित्वादिति वाच्यम् । छान्दसत्वात् श्यनो लुकि उपधालोपाभावे च जनिषे । जनिध्वे इति [2]श्लुविकरणस्य च कर्मव्यतिहारे व्यतिजनिषे व्यतिजज्ञिध्वे इति सम्भवात् । न चेड्विधौ निरनुबन्धकत्वाज्जन इति ह्वादेरेव ग्रहणमिति शङ्क्यम् । ईडिना साहचर्यादात्मनेपदिनोऽपि ग्रहणमिति स्थितिः । ईडिष्व । ईडिध्वम् । ईडै । ईडावहै । ऐट्ट । लङ् । आट्, वृद्धिः । ऐडाताम् । ऐडत । ऐड्ढाः । ऐडाथाम् । टेरेत्वाभावान्नेट् । ऐड्ढ्वम् । ऐड्वहि । ईडाञ्चक्रे इति । "इजादेश्च" ( ३ । १ । ३६ ) इत्याम् । ईश । ईष्टे इति । "व्रश्च" ( ८ । २ । ३६ ) इति षत्वम् । ष्टुत्वम् ॥ ३१५ ॥

ईशः से । से इत्यविभक्तिको निर्देशः इति हरदत्तः । तथा च वृत्तौ व्याख्यातम् । ईश उत्तरस्य सेइत्यस्य सार्वधातुकस्येति । आचार्यस्तु से इति सप्तमीं मन्यमान आह—सस्य सार्वधातुकस्येति । व्यधिकरणे षष्ठ्यौ । सार्वधातुकावयवस्य सस्येति ।

---

१. क्षायोऽप्युन्नेयमिति क० पु० ।

२. श्नुविकरणस्येति क० पु० ।

इत्याम् । आसाञ्चक्रे । वस आच्छादने । वस्ते । वसिता । वस्ता । णिसि चुम्बने । प्रणिंस्ते । प्रनिंस्ते । पूङ् प्राणिप्रसवे । "भूसुवोस्तिङि" (७।३।८८) इति न गुणः । सुवै । सुवावहै । सुवामहै । "स्वरतिसूति" (७ । २ । ४४) इति वेट् । असविष्ट । असोष्ट । शीङ् स्वप्ने ।

---

सादेः सार्वधातुकस्येति न्याय्यम् । तदेतत्परमतेन व्याख्यातमित्युक्तम् । यद्यप्यत्र सकारमात्रग्रहणेऽपि दोषो नास्ति परस्मैपदस्यास्मादसंभवात् । तथापी-ड्जनोरित्यत्रास्यानुवृत्तेर्जनेर्जजसीत्यत्रातिप्रसज्येतेत्युक्तमेवेति सेग्रहणमेव न्याय्यम् । ईशोऽप्यनुकर्ष इति । ननु चकारेण यदीश इत्यनुकृष्यते । तत से ईड्जनोर्न स्यात् । से इत्यस्य परामर्शे ईशो ध्वे न स्यात् । न चोभयमेकेन समुच्चेतु शक्यम् । भिन्न-कक्षत्वात् । सत्यम् । कृत्स्नमेव पूर्वसूत्रमनुवर्तयिष्यते इत्यदोषः । अन्ये तु ईड्जनोः से ध्वे चेति सूत्रं पठन्ति । तत्र सेध्वयोः सूत्रे एवोपादानात् चशब्दो भिन्नक्रमः ईशेरप्य-नुकर्षणार्थो विज्ञायते इत्याहुः । एवमीडाशजना सेध्वयोरित्येव सूत्रणीयम् । तथा तु न कृतम्, वैचित्र्यार्थम् । ईशीत । ईशिषीष्टाम् । ईशिष्वेति । सवाभ्यां वामौ । एकदेशविकृतस्यानन्यत्वात् सेशब्द एवायमितीट् । ईशिध्वम् । ईशे । ऐष्ट । टेरेत्वाभा-वान्नेट् । ऐड्ढ्वम् । ऐशिष्ट । ईशाञ्चक्रे । ईशिता । आस् । आस्ते इति । अत्र माधवः—"अनचि च" (८ । ४ । ४७) इति द्वित्वपक्षे द्वौ सकारौ अन्यदा त्वेकः । न च द्वित्वे "स्कोः" (८ । २ । २९) इति लोपप्रसङ्गः । द्वित्वस्यास्मिन्नसिद्धत्वात् । आस्से इत्यत्रापि द्वित्वपक्षे त्रयः सकाराः । न च "झरो झरि" (८ । ४ । ६५) इति लोपान् द्वावेवेति मन्तव्यम् । तस्यापि विकल्पितत्वात् इति । तच्चिन्त्यम् । "दीर्घादा-चार्याणाम्" (२ । ४ । ५२) इति द्वित्वस्य निषेधात् । एतेन आध्वे इति भाष्यकारमते "धि च" (८ । २ । २५) इति सलोपे धकारस्य द्वित्वे जश्त्वमित्यपि प्रयुक्तम् । आध्वे इति । सिचो लोप इति पक्षे सस्य जश्त्वेन दः । आस्ताम् । आस्व । आध्वम् । आड्ढ्वम् । आस्त । आसि । आसिष्ट । आसिढ्वम् । "धि च" (८ । २ । २५) इति सिचो लोपे "इणः षीध्वम्" (८ । ३ । ७८) इति ढत्वम् । ध्वे सलोपो वा सस्य दः इति केचित् । आसिढ्वम् । आसिषि । वस । वस्ते इति अत्र "अनचि च" (८ । ४ । ४७) इति द्वित्वे द्वौ सकारौ । पक्षे एकः । वस्से इति । अत्र त्रयः । लोपपक्षे द्वौ । वध्वे । धि चेति । "धि च" (८ । ४ । २५) इति सलोपपक्षे "अनचि च" (८ । ४ । २५) इति धस्य द्वित्वे पूर्वस्य जश्त्वेन दः । सलोपाभावेऽप्येवम् । द्वित्वाभावे त्वेकधकारमेव । ववसे इति । "न शसदद" इत्येत्वाभ्यासलोपौ न । वसितेति । "वसतिः शक्लृ घस" इति शब्विकरणस्यानिट्सु पाठादादादिकस्येट् । 'भृस्तुशुन्वस्तश्य:" तादेरार्ध-धातुकस्येड् वेति केचिन्मते वस्ता । वसिषीष्टेति । णिसि इदित्वान्नुम् । प्राणिंस्ते इति । कृत्यैवायं णत्वविकल्प इत्युक्तत्वान्मतान्तराभिप्रायमिति ज्ञेयम् । निंसीत ।

३१७. शीङः सार्वधातुके गुणः [ ७ । ४ । २१ ]

शीङो गुणः स्यात् सार्वधातुके । "क्ङिति च" ( १ । १ । ५ ) इत्यस्यापवादः । शेते । शयाते ।

३१८. शीङो रुट् [ ७ । १ । ६ ]

शीङो झादेशस्यातो रुडागमः स्यात् । शेरते । अशयिष्ट । इङ् अध्ययने । अधीते । अजादावियङ् । अधीयाते । अधीयते । अधीयीत । अधीयीयाताम् । अध्ययै । अध्येत । परत्वादियङि कृते पश्चादाट् । अध्यैयाताम् । अध्यैयत ।

---

निस्ताम् । अनिंस्त । अनिसिष्ट । निनिसे । निंसिता । निंसिषीष्ट । पूङ् । सूते । सुवीत । सूताम् । सुवै इति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ ) इति पित्वात्प्राप्तो गुणो "भूसुवोः" ( ७ । ३ । ८८ ) इति निषिध्यते । उवङ् । असूत । असविड्ढ्वम् । असविध्वम् । सुषुवे । सविता । सोता । सविषीष्ट । सविष्यते । सोष्यते । शीङ् ॥३१६॥

शीङः इति । अनुबन्धनिर्देशो यङ्लुक्निवृत्त्यर्थः । शेशीति इति ॥ ३१७ ॥

शीङो रुट् । अनुबन्धनिर्देशाद् यङ्लुकि न भवति । व्यतिशेश्यते इति । शीङ इति पञ्चम्या अनुवृत्ताया अदिति प्रथमाया षष्ठी प्रकल्प्यते इत्याह–झादेशस्यात इति । यदि तु झस्यैव विधीयते ततस्तेनैव व्यवधानाद् झस्यादादेशो न स्यात् । शेरते इति । रुटः सार्वधातुकग्रहणेन ग्रहणाद् गुणः । यदि तु रुक् पूर्वान्तः क्रियते ततोऽनिगन्तत्वात् गुणो न सिद्ध्येत । शेताम् । शयाताम् । शेरताम् । शेष्व । शेये । शयै । अशेत । अशायाताम् । अशेरत । अशयि । अशयिष्ट । अशयिड्ढ्वम् । अशयिषि । शिश्ये । शिश्याते । शिश्यिरे । शिश्यिष्वे । शिश्यिढ्वे । शिश्ये । शिश्यिवहे । "एरनेकाच" (६ । ४ । ८२) इति यण् । शयिता । शयिषीष्ट । शयिषीढ्वम् । शयिषीध्वम् । शयिष्यते । इङ् । अधीते । इङिकावध्युपसर्गतो न व्यभिचरतः इत्यधेः प्राक् प्रयोगः । सवर्णदीर्घः । अजादावियङ् । अधि ई आते इति स्थिते सवर्णदीर्घात् परत्वादियङ् । पूर्वं धातुरुपसर्गेण युज्यते इत्यपि दर्शने 'वार्णादाङ्गं बलीयः'(प०) इति पूर्वमियङ् । ततः सवर्णदीर्घ इत्यर्थः । लिङ्गं चात्र प्रत्ययः । "गेरध्ययने वृत्तम्" ( ७ । २ । २६ ) इत्यादि निर्देशः । अधीताम् । अधीयाताम् । अधीष्व । अध्ययै इति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ ) इत्यादि गुणायादेशयोर्यणादेशः । अध्येतेति । आटिवृद्धौ यणः परत्वात् इति । पूर्वं त्वाटि अन्तरङ्गत्वाद् वृद्ध्यायादेशयोश्चाध्यैयातामिति स्यादिति भावः । घुमास्थेति । हल्ग्रहणं ज्ञापकं विप्रतिषेधेन व्यवस्थायां क्रियमाणायां "असिद्धवदत्र" ( ६ । ४ २२ ) इति न प्रवर्तते इति स्थितमाकरे । तेनाटि कार्ये इयङ् सिध्यति ॥ ३१८ ॥

## ३१९. विभाषा लुङ्लृङोः [ २ । ४ । ५० ]

इङो गाङादेशो वा स्यात् लुङ् लृङोः परयोः ।

## ३२०. गाङ्कुटादिभ्योऽञ्णिन्ङित् [ १ । २ । १ ]

गाङादेशात् कुटादिभ्यश्च परेऽञ्णिन्ङितः प्रत्ययाः ङितः स्युः ।

## ३२१. घुमास्थागापाजहातिसां हलि [६ । ४ । ६६]

एषामात ईत् स्याद्धलादौ क्ङिति । अध्यगीष्ट । अध्यैष्ट ।

## ३२२. गाङ् लिटि [ २ । ४ । ४९ ]

इङो गाङ् स्याल्लिटि परे । अधिजगे । अध्येता । अध्येषीष्ट । अध्येष्यते । अध्यगीष्यत । अध्यैष्यत । दीधीङ् दीप्तिदेवनयोः । दीधीते । "एरनेकाच" ( ६ । ४ । ८२ ) इति यण् । दीध्याते ।

---

विभाषा । अप्राप्तविभाषेयम् । गाङो ङकारो विशेषणार्थः ॥ ३१९ ॥

गाङ् कु० । गाङादेशादिति । अस्मिन् ङकारस्यानर्थकत्वादादेशस्यैव ग्रहणम् । न तु धातोर्गाङ् गतावित्यस्येति भावः। कुट कौटिल्ये इत्यकारान्तानुकरणेन बहुव्रीहिः। तेनापदान्तत्वाज्जश्त्वाभाव.। ङितः स्युरिति । परस्मिन् परशब्दप्रयोगादतिदेशोऽयम्। ङित इव कार्यमेतेऽपि कुर्युरित्यर्थः। न चैवमुच्चुकुटिषतीति सनो ङित्त्वादात्मने[1]-पदमपि स्यात् इति वाच्यम्। "अनुदात्तङित" ( १ । ३ । १२ ) इत्यत्रोपदेशे इत्यनुवृत्तेः ॥ ३२० ॥

घुमास्थेति । घुसंज्ञाः दाधारूपाः मेङ् प्रणिदाने, मा माने, माङ् माने, ष्ठा गतिनिवृत्तौ, गाङ् गतौ, गै शब्दे, गा स्तुतौ इणो गा, इङो गाङ् च सर्वं गृह्यते, गामादाग्रहणेष्वविशेषः(प० इति । पा पाने. पा रक्षणे. इत्ययं तु न गृह्यते लुग्विकरणत्वात् । ओहाक् त्यागे, षोऽन्तकर्मणि । हलि किम् ? ददतु । क्ङिति किम्? ददाति । अध्यैष्टेति। आङोऽभावे गुणः । आट् । वृद्धिः ॥ ३२१ ॥

गाङ् लिटि । अधिजगे इति । एशि[2] आतो लोपः । तस्य "द्विर्वचनेऽचि" ( १ ।१ ।५९ ) इति स्थानिवत्त्वात्साक्षस्य द्वित्वम् । गाङादेशस्य तु न स्थानिवत्त्वम् । "गाङ् लिटि" ( २ । ४ । ४९ ) इति द्विलकारनिर्देशेन लकारादौ लिटि लावस्थायामेव विधीयमानस्य तस्याज्निमित्तकत्वाभावात् । क्रादिनियमादिट् । अधिजगिषे । अधिजगिध्वे । दीधीङ् ॥ ३२२ ॥

---

१. दात्मनेपदमपित्यारभ्य—गै शब्दे इत्यन्तो रेखाङ्कितो नास्ति क० पु० ।

२. एतीति क० पु० ।

## ३२३. यीवर्णयोर्दीधीवेव्योः [ ७ । ४ । ५३ ]

दीधीवेव्योरन्त्यस्य लोपः स्याद् यकारे इवर्णे च परे । दीधीत । दीधीयाताम् । "दीधीवेवीटाम्" (१। १ । ६) इति न गुणः । दीध्यै । अदीधीत । अदीधिष्ट । दीध्याञ्चक्रे । एवं वेवीङ् वेतिना तुल्ये ।

इत्यात्मनेपदप्रक्रिया

---

यीवर्णयोरिति । यकारेकार उच्चारणार्थः । इत्यभिप्रेत्याह—यकारे इति । ( वर्णग्रहण[1] श्रूयमाणे एव इकारे यथा स्यात् । आदीधयतेराण्वुंल्नि आदीध्यक इति । णिलोपे स्थानिवत्त्वान्मा भूदिति न्यासहरदत्तौ । भाष्यकैयटयोस्तु 'नाग्लोपि" (७।४।२) सूत्रे स्थितं वर्णग्रहणसामर्थ्याद् भूतपूर्वगत्याश्रयणाद् णिलोपे 'यीवर्णयोः" ( ७ । ४ । ५३ ) इतीकारलोपादादीध्यक पावेवक इत्येव भवति । इह दीध्ये इत्यादावुत्तमे ईटि लोपोऽत्र न भवति । नित्यत्वाट्टेरेत्त्वे इटोऽदिति च कृते इवर्णस्याभावात् । दीध्यै इति । लोटयाटः पित्त्वादगुणः । अदीध्याताम् । अदीध्यन् । दीध्याञ्चक्रे । "अनेकाच" वा० ) इत्याम् । दीधिता । दीधिषीष्ट । दीधिष्यते । एवमिति । दीधीवद् वेवीङप्युदाहार्यः इत्यर्थः । वेतिनेति वीगतिप्रजनकान्त्यसनखादनेषु इति धातुः । तेन तुल्येऽर्थे वर्तत इत्यर्थः । वेवीते । वेव्याते । वेवीत । वेवीयाताम् । अवेवीत । अवेव्याताम् । अवेविष्ट । अवेविषाताम् । वेव्याञ्चक्रे । वेविता । वेविषीष्ट । वेविष्यते । दीधीवेव्यौ छान्दसावेवेति भाष्यादिषु स्थितम् । कौमारास्त्वेतौ भाषायामनुमन्यन्ते इति तन्मतानुसारेणाचार्यैरप्युदाहृतौ । द्वावपि सेटौ ॥ ३२३ ॥

इत्यात्मनेपदप्रक्रिया ।

—:०:—

---

१. वर्णग्रहणमित्यारभ्य—दीधिष्यते इत्यन्तो नास्ति क० पु० ।
तत्स्थाने दीध्ये इत्यादावुत्तमे इटि लोपो न भवति नित्यत्वादित्येव पाठः ।

## अथोभयपदप्रक्रिया

द्विष अप्रीतौ । द्वेष्टि । द्विष्टे । द्विड्ढि । अद्वेट्-ड् ।

३२४. द्विषश्च [ ३ । ४ । ११२ ]

द्विषो लङो झेर्जुस् वा स्यात् । अद्विषुः । अद्विषन् । अद्विष्ट । अद्विक्षत् । अद्विक्षत । दुह प्रपूरणे । दादेर्घः । दोग्धि । धोक्षि । दुग्धि । धुक्ष्व । धुग्ध्वम् । दोहै । अधोक् । अधुक्षत् । अधुक्षत । "लुग्वा दुह" ( ७ । ३ । ७३ ) इति क्सस्य वा लुक् । अदुग्ध । "क्सस्याचि" ( ७ । ३ । ७२ ) अधुक्षाताम् । धुक्षीष्ट । एवं दिह उपचये । प्रणिदेग्धि । अधिक्षत् ।

लिह आस्वादने । घत्वढत्वादि । लेढि इत्यादि दुहवत् । ऊर्णुञ् आच्छादने ।

---

द्विष । इतश्चत्वारोऽनिटः । षडुभयपदिनः । द्वेष्टि । द्विष्टः । द्वेक्षि । द्वेष्टे । द्विषाते । द्विक्षे । सादौ ष्टुत्वस्यासिद्धत्वात् "षढोः कः सि" ( ८ । २ । ४१ ) इति कत्वम्, षत्वम्, चर्त्वम् । द्विष्यात् । द्विषीत । द्विषीयाताम् । द्वेष्टु । द्विष्टु । द्विड्ढि इति । "हुझल्भ्यो" ( ६ । ४ । १०१ ) इति धित्वम् । ष्टुत्वम् । जश्त्वेन डः । द्वेषाणि । द्विष्टाम् । द्विक्ष्व । द्विषै । अद्वेडिति । लङि तिपि हल्ङ्यादिलोपे अडागमे गुणः । वाऽवसाने । अद्विष्टेति । लङात्मनेपदम् । अद्विक्षदिति । "शल इगुपध" ( ३ । १ । ४५ ) इति क्सः । कत्वषत्वचर्त्वानि । अद्विक्षत । अद्विक्षाताम् इति । "क्सस्याचि" ( ७ । ३ । ७२ ) इत्यन्तलोपात् "आतो ङितः" ( ७ । २ । ८१ ) इतीय् न । अद्विक्षत । बहुवचने क्सान्तलोपाभाव इत्येके । अद्विक्षन्त । अद्विक्षथाः । अद्विक्षाथाम् । अद्विक्षध्वम् । अद्विक्षि । अद्विक्षावहि । दिद्वेष । द्वेष्टा । द्विष्यात् । "लिङ्सिचौ" ( १ । २ । ११ ) इति कित्त्वम् । द्विक्षीष्ट । द्विक्षीयास्ताम् । द्वेक्ष्यति । द्वेक्ष्यते । दुह । प्रपूरणं रिक्तीकरणम् । दोग्धीति । "झषस्तथोः" ( ८ । २ । ४० ) इति धत्वम् । जश्त्वेन गः । दुग्धः । दुहन्ति । अत्र "पूर्वत्रासिद्धम्" ( ८ । २ । १ ) इति प्रागेवान्तादेशेऽझल्परत्वान्न धत्वम् । एवं दुहते इत्यदादेशेऽपि । "एकाचो बश" ( ८ । २ । ३७ ) इति स्ध्वोर्भष्भावः । धोक्षि । दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुग्धे । दुहाते । धुक्षे । धुग्ध्वे । दुह्यात् । दुहीत । दोग्धा । दुग्धीति । "हुझल्भ्यो" ( ६ । ४ । १०१ ) इति हेर्धित्वम् । जश्त्वम् । दोहानि । दोहाव । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्वेति । "सवाभ्यां वामौ" ( ३ । ४ । ९१ ) धत्वं भष्भावः । षत्वं चर्त्वं च । दोहै इति । आटः पित्त्वात्

३२५. ऊर्णोतेर्विभाषा [ ७ । ३ । ९० ]

ऊर्णोतेर्वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति । ऊर्णोति । ऊर्णुतः ।

---

गुणः । अधोगिति । लङि तिप्सिपोरितो लोपे हल्ङ्यादिलोपे गुणः । घत्वम् । भष्भावः । "वाऽवसाने" ( ८ । ४ । ५६ ) अदुग्धाम् । अदुग्ध । अदुग्धाः । अघुग्ध्वम् । अदुहि । अधुक्षदिति । लुङि च्लेः "शल इगुपध" ( ३ । १ । ४ ) इति क्सः । भष्भावे त्तः । अदुग्धेति । क्सलुकि वर्णाश्रयत्वाल्लुका लुप्तत्वाच्च प्रत्ययलक्षणाभावान्न भष्भावः । अधुक्षन्त । अधुक्षत । अधुक्षथाः । अदुग्धाः । अधुक्षाथाम् । अधुग्ध्वम् । अधुक्षध्वम् । अधुक्षि । ताविति वक्तव्ये दन्त्यग्रहणाद् वकारेऽपि क्सस्य वा लुक् । अदुह्वहि । अधुक्षावहि । दोग्धासि । दोग्धासे । दुह्यादिति । यासुटः कित्त्वान्न गुणः । धुक्षीष्टेति । लिङः सीयुटि भष्भावः । 'लिङ्सिचौ" ( १ । २ । ११ ) इति कित्त्वान्न गुणः । धक्षीध्वम् । अत्र "इणः षीध्वम्" ( ८ । ३ । ७८ इति ढत्वं न भवति । घत्वे षत्वस्य पूर्वत्रासिद्धत्वेन षीध्वमोऽभावात् । कृते तु धत्वादौ सत्यपि षत्वे षीध्वमिणः परो न भवतीति । धोक्ष्यते । एवं दिह उपचये इति । उपचयो लेपः । प्रणिदेग्धीति "नेर्गद" ( ८ । ४ । १७ ) इति णत्वम् । धेक्षि । दिग्धे । धिक्षे । धिग्ध्वे । दिह्यात् । दिहीतदेग्धु । दिग्धि । दिग्धाम् । धिक्ष्व । दिहै । अधेक् । अदिग्ध । अधिग्ध्वम् । अधिक्षदिति । लुङ् च्लेः क्सः । अधिक्षत । [1]अदिग्ध । ( अधिक्षाताम् । अधिक्षध्वम् । अधिक्षि । अदिह्वहि । अधिक्षावहि । दिदेह । दिदिहे । देग्धा । दिह्यात् । धिक्षीष्ट । धेक्ष्यति । धेक्ष्यते । लिह् । ढत्वधत्वादीनि ) लिहति इति स्थिते उपधागुणे कृते 'हो ढः" ( ८ । २ । ३१ ) इति ढत्वम् । "झषस्तथोर्धः" (८ । २ । ४०) इति धत्वम् । आदिपदात् ष्टुत्वम् । ढो लोपः । आदिपदात् लीढः । ङित्वाद् गुणाभावे 'ढ्लोपे" इति दीर्घः । लेक्षि । लेह्मि । लिह्वः । लीढे । लिहाते । लिहते । लिक्षे । लिह्यात् । लिहीत । लेढु । लीढाद् वा । लीढि । हेर्धित्वे ष्टुत्वढलोपदीर्घाः । लेहानि । लीढाम् । लिहाताम् । लिक्ष्व । लाढ्वम् । लेहै अलेट्—रास्रलोढ । अलिहि । अलिक्षत् । अलिक्षत । अलीढ । अलिक्षाताम् । अलिक्षत । अलिक्षन्त । अलिक्षथाः । अलीढाः । अलिक्षध्वम् । अलीढ्वम् । अलिक्षावहि । अलिह्वहि । लिलेह । लिलिहे । लेढा । लिह्यात् । लिक्षीष्ट । लिक्षीध्वम् । लेक्ष्यति । लेक्ष्यते । ऊर्णुञ् ॥ ३२४ ॥

ऊर्णोतिर्विभाषा । हलि । हलादौ । श्तिपानिर्देशो यङ्लुकि निवृत्त्यर्थः । ऊर्णोति । ऊर्णोतीति । वृद्ध्यभावे गुणः । ऊर्णुतः इति । ङित्त्वान्न गुणः । ऊर्णुते । ऊर्णुयात् । ऊर्णुवीत । ऊर्णोतु । ऊर्णुहि । ऊर्णवानि । ऊर्णुत । ऊर्णुष्व । ऊर्णवै । ऊर्णवावहै ॥ ३२५ ॥

---

१. अदृति इति क० पु० । एवं अधिक्षतामित्यारभ्य—धत्वादीनीत्यन्तो नास्ति क० पु० ।

## ३२६. गुणोऽपृक्ते [ ७ । ३ । ९० ]

ऊर्णोतेरपृक्ते पिति हलि सार्वधातुके गुणः स्यात् । वृद्धेरपवादः । और्णोत् । और्णोः ।

## ३२७. ऊर्णोतेर्विभाषा [ ७ । २ । ६ ]

इडादौ सिचि परे ऊर्णोतेर्वृद्धिः स्यात् परस्मैपदेषु । और्णावीत् । और्णवीत् ।

## ३२८. विभाषोर्णोः [ १ । २ । ३ ]

ऊर्णोतेरिडादिप्रत्ययो वा ङित् स्यात् । और्णुवीत् । और्णविष्ट । और्णुविष्ट । "ऊर्णोतेराम्निषेधो वक्तव्यः" ( वा० ) ।

## ३२९. अजादेर्द्वितीयस्य [ ६ । १ । २ ]

अजादेर्धातोर्द्वितीयस्यावयवस्यैकाचो द्वे स्तः ।

---

गुणोऽपृक्ते । और्णोत् इति । लङ्व्याट् । "आटश्च" ( ६ । १ । ९० ) इति वृद्धिः । और्णवम् । और्णुत । और्णुवाताम् । और्णुवि ॥ ३२६ ॥

ऊर्णोतेः । सिचि वृद्धौ प्राप्तायां विभाषेयम् ॥ ३२७ ॥

और्णुवीदिति । ङित्वेन गुणवृद्ध्योर्द्वयोरपि निषेधादुवङ् । और्णविष्टेति । परस्मैपदेष्विति वचनान्न वृद्धिः । और्णुविष्टेति । ङित्वपक्षे उवङ् । "ऊर्णोतेराम्निषेधो वक्तव्यः" ( वा० ) इति । ऊर्णोतेर्णुवद्भावो वाच्य इति कृदन्ते वक्ष्यति । ततो नुवद्भावेनानेकाच्त्वाभावादि[१]जादित्वाभावाच्चेति भावः । तदुक्तम्—

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात् ॥ ३२८ । इति ।

अजादेरिति । "एकाचो द्वे प्रथमस्य" ( ६ । १ । १ ) इति[२] प्राप्तस्य प्रथमद्विर्वचनस्यापवादः । विहितविशेषणं चैतत् । अजादेर्धातोर्विहिते लिडादाविति । तेनेयाय, उवायेत्यादावप्रसङ्गः । न चास्तेर्भूभावे सनि बुभूषतीत्यादावपि द्वितीयस्य प्रसङ्गः । आर्धधातुके इति विषयसप्तमीत्वात् सनोऽजादेरविधानात् । अथवाऽनभ्यासस्येति बहुव्रीहिस्तेन साभ्यासस्य न भविष्यति । अत्र चैकाच्सूत्रविरोधः शब्दालङ्कारे परिहृतः ॥ ३२९ ॥

---

१. एकाच्त्वाभावादजादित्वादिति क० पु० ।

२. प्राप्तस्येति नास्ति क० पु० ।

३३०. न न्द्राः संयोगादयः [ ६ । १ । ३ ]

द्वितीयस्यैकाचोऽवयवाः संयोगादयो नदराः द्विर्नोच्यन्ते । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुनुविव । ऊर्णुविता । ऊर्णविता । ष्टुञ् स्तुतौ ।

३३१. तुरुस्तुशम्यमः सार्वधातुके [ ७ । ३ । ९५ ]

एभ्यः पितो हलः सार्वधातुकस्य ईडागमो वा स्यात् । स्तवीति । स्तौति । अभिष्टौति । अस्तवीत् । अस्तौत् । न्यस्तावीत् । न्यष्टावीत् । अस्तोष्ट । तुष्टोथ । तुष्टुव । स्तोता । स्तोषीष्ट । टु क्षु शब्दे । क्षविता । रु शब्दे । रौति । रवीति । अरावीत् । रविता । इड्वेत्येके । रोता । णु स्तुतौ । नुरुस्त्विति पाठाश्रयणादीड् वेति केचित् । नौति । नवीति । नविता । एकीयमते वेट् । नोता । ब्रूञ् व्यक्तायां वाचि ।

---

न न्द्राः इति । द्वितीयस्यैकाच इति । एतच्च द्वितीयस्येत्यनुवृत्तेर्लभ्यत इति वृत्तिकारः इन्द्रीयिपतीत्यादिष्वावृत्त्यर्थमजादेरित्यवश्यमनुवर्तनीयम् । कर्मधारयश्चायम् । तेनादिभूतादचः परस्यैकाचः संयोगादयो नदरा इत्युक्तेः । पर्यवसन्नमेतत् । द्वितीयस्येत्याचार्याणामभिप्रायः स्फुटीकरिष्यते चायम्[1] ण्यन्तप्रक्रिया नदरा इति । नकारदकाररेफा इत्यर्थः । ऊर्णुनावेति । ऊर्णु अ इति स्थिते "र्पाट्टवर्गस्तवर्गजः" इति वचनात् नकारस्थाने जातस्य णकारस्य "पूर्वत्रासिद्धम्" (८ । २ । १) इत्यसिद्धत्वात् नु शब्दस्य द्वित्वम्[2] । कृते तु तस्मिन् पूर्वस्य णत्वम्, द्वितीयस्य तु व्यवधानान्न भवति । "पूर्वत्रासिद्धीयमद्वित्वे" (प० ) इत्येतत्तु णत्वविषये नास्ति । "उभौ साभ्यासस्य" ( ८ । ४ । २१ ) इति ज्ञापकात् । ऊर्णुनविथ । ऊर्णुनुविथ[3] । वा ङित्त्वम् । ऊर्णुनविवेति । वस्मसोः "असंयोगाल्लिट् कित्" ( १ । २ । ५ ) इति नित्यकित्त्वादुवङेव । ऊर्णुनुवे । ऊर्णुनुविषे । ऊर्णुनुविष्वे । ऊर्णुनुविढ्वे । ऊर्णुवितेत्यादि । णुवद्भावातिदेशेऽपि । उपदेश एकाजनुदात्तत्वाभावान्नेड्निषेधः । ऊर्णूयात् । ऊर्णविष्यति । ऊर्णविष्यते । ष्टुञ् ॥ ३३० ॥

तुरुस्तु । तु इति सौत्रो धातुः वृद्ध्यर्थः । हिंसार्थ इत्येके । गत्यर्थ इत्यपरे । रु शब्दे । ष्टुञ् स्तुतौ । शमु उपशमे । अमु गत्यादौ । अत्र शम्यमोश्छन्दसि विकरणलुकि हलादिसार्वधातुकमनन्तरं भवति । शमीध्वम्[4] । अभ्यमिति । आपिशलास्तु

---

१. चायमिति नास्ति क० पु० ।
२. द्वित्वे इति ख० पु० ।
३. ऊर्णुनुविथेत्यारभ्य ऊर्णुनुविषे इत्यन्तो (     ) रेखाङ्कितो नास्ति क० पु० ।
४. अभिप्रगोशमीढ्वम् अभ्यमिति इति क० पु० ।

## ३३२. ब्रुव ईट् [ ७ । ३ । ९३ ]

ब्रुवः परस्य पितो हलः सार्वधातुकस्य ईडागमः स्यात् । ब्रवीति । ब्रूते ।

## ३३३. ब्रुवः पञ्चानामादित आहो ब्रुवः [३।४।८४]

ब्रुवो लडादिपञ्चानां णलादिपञ्चादेशाः वा स्युः, ब्रुव आहादेशश्च । आह । आहतुः । आहुः ।

---

सर्वेषामपि छन्दस्येवेड्विधानमिदमिदमित्याहुः । एभ्य. पित इति । अतः पित इति परमतेनेदम् । "नाभ्यस्तस्य" ( ७ । ३ । ८७ ) इत्यतः सार्वधातुक इति वर्तमाने पुन सार्वधातुकग्रहणमपिदर्थम् इत्याकरे स्थितत्वात्। तेनाविशेषात् पित्यपीति चेड् भवति स्तौतीति । "उतो वृद्धिर्लुकि हलि" ( ७ । ३ । ८९ ) इति वृद्धि. । ईट्पक्षेऽहलादित्वात् गुण एव । अभिष्टौतीति । "उपसर्गात् सुनोतीति" (८ । ३ । ६५ ) इति षत्वम् । स्तुतः । ईट्पक्षे स्तुवीतः । अहलादित्वान्नेट् । स्तुवन्ति । स्तवीषि । स्तौषि । स्तुथः । स्तुवीथः । स्तुवीथ । स्तवीमि । स्तौमि । स्तुवः । स्तुवीवः । स्तुते । स्तुवीते । स्तुषे । स्तुवीषे । स्तुध्वे । स्तुवीध्वे । स्तुवहे । स्तुवीवहे । इत्याद्युन्नेयम् । स्तुयात् । स्तुवीयात् । स्तुवीत । स्तुवीतु । स्तुहि । स्तुवीहि । स्तवानि । अस्तौत् । अस्तवीत् । अस्तुताम् । अस्तुवीताम् । अस्तुवन् । न्यष्टावीदिति । लुङि सिच्, "इट ईटि" ( ८ । २ । २८ ) सिचि वृद्धिः । अट् । "सिवादीनां वाऽड्व्यवायेऽपि" ( ७ । १ । ७१ ) इति षत्वं वा । अस्तोष्टेति । आत्मनेपदित्वादिडभावः । तुष्टाव । तुष्टोथ । तुष्टुव । तुष्टुम । तुष्टुवे । तुष्टुषे । तुष्टुवहे । स्तोता । स्तूयात् । स्तोषीष्ट । स्तोष्यति । स्तोष्यते । टु क्षु । टु इत् क्षवथुरित्यथुजर्थः । इतस्त्रयः परस्मैपदिनः । चत्वारः सेटः । क्षौति । क्षुयात् । क्षौतु । अक्षौत् । अक्षावीत् । चुक्षाव । क्षवितेति । सेट्कत्वमस्य दर्शयति । क्षूयात् । क्षविष्यति । रु । रौति । रवीतीति । तुरुस्तुशम्यमः ( ७ । ३ । ९५ इति वेट् । रुतः । रुवीतः । रुयात् । रुवीयात् । रौतु । रुवीतु । रुहि । रुवीहि । रवाणि । अरवीत् । अरौत् । अरावादिति । सिचि वृद्धिः रुराव । रुरविथ । रुरुविव । इड् वेत्येके इति । रुदुसुतुधातूनां लिटं विना इड् वेति केचित् इत्युक्तत्वात् । तेनारोषीत् । अरोष्टाम् इत्यपि ज्ञेयम् । णु । रुवत् प्रक्रिया । ब्रूञ् ॥ ३३१ ॥

ब्रुव ईट् । पितो हल इति । हलादेः पित इत्यर्थः ॥ ३३२ ॥

ब्रुवः पञ्चानामिति । पञ्चानां लडादेशानामिति संबन्धादन्यत्र क्लृप्तसंबन्धः[1] पञ्चैव णलादयोऽत्र भवन्तीत्याह—णलादिपञ्चादेशा इति । आहादेशश्चेति । णलादिसन्नियोगेनेत्यर्थः । ब्रुव इति पुनर्वचनं पर्यायेण प्रकृतानां णलादीनामेवाय[2]मादेशो मा विज्ञायीति ॥ ३३३ ॥

---

१. क्लृप्तसंबन्धादिति क० पु० ।

२. मेवादेश इति क० पु० ।

## ३३४. आहस्थः [ ८ । २ । ३५ ]

आहो हस्य थः स्यात् झलि । चर्त्वम् । "ब्रुव ईट्" ( ७ । ३ । ९३ ) इति प्राप्ते आहो ब्रुव ईट् न । आत्थ । आहथुः । पक्षे सुगमम् ।

## ३३५. ब्रुवो वचिः [ २ । ४ । ५३ ]

ब्रुवो वच्यादेशः स्यादार्धधातुके । इकार इत् । अवोचत् । अवोचत । उवाच । ऊचे ।

### इत्यदादिप्रक्रिया

---

आहस्थः । "नहो धः" ( ८ । २ । ३४ ) इति प्रकृतधत्वं विहाय थकारकरणं झपस्तथोर्धस्य मा भूदिति । पक्षे इति । ब्रूत । ब्रुवन्ति । ब्रवीषि । ब्रूथः । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूते । ब्रूषे । ब्रूयात् । ङिच्च पिन्न भवतीत्यपित्त्वादीडभावः । ब्रुवीत । ब्रुवीयाताम् । ब्रवीतु । ब्रूतात् । ब्रूहि । ब्रुवाणि । ब्रूताम् । ब्रूष्व । ब्रुवै । अब्रूत । अब्रुवाताम् । अब्रुवि ॥ ३३४ ॥

ब्रुवो वचिः । इकार इत् इति । एतोति इत् इकार उच्चारणार्थः । तेन "इदित" ( ७ । १ । ५८ ) इति ( नुम्[१] न भवति । आर्धधातुक इति विषयसप्तमी । तेन वाच्यमित्यत्र प्रागेव प्रत्ययोत्पत्तेः वच्यादेशे "ऋहलोर्ण्यत्" भवति । परसप्तम्यां तु अचो यत् स्यादिति । अवोचत् इति ) लुङि "अस्यतिवक्ति" ३ । १ । ५२ ) इति च्लेरङ् । "वच उम्" इत्युमागमः । अवोचतेति आत्मनेपदे । उवाचेति । वचेर्द्वित्वे कृते "लिट्यभ्यासस्य" ( ६ । १ । १७ ) इति सम्प्रसारणम् । "अत उपधायाः" ( ७ । २ । ११ ) इति वृद्धिः । ऊचतुः । ऊचुः । किति "वचिस्वपि" ( ६ । १ । १५ ) इति संप्रसारणे कृते द्वित्वम् । उवचिथ । ऊचिव । क्रादिनियमादिट् । थलि "उपदेशेऽत्वतः" ( ७ । २ । ६२ ) इतीण्निषेधो न भवति । उपदेशग्रहणस्य धातूपदेशपरत्वात् । अयं त्वादेशोत्तरकालं धातुर्नोपदेश इति । वक्ता । उच्यात् । उच्यास्ताम् । वक्षीष्ट । वक्ष्यति । अवक्ष्यत् ॥ ३३५ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूरिरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् सादादिकी प्रक्रिया ॥ १ ॥

इत्यदादिः ॥ ७०० ॥

---

१. नुम् न भवतीत्यारभ्य—अवोचदिन्ता (   ) रेखाङ्कितो नास्ति क० पु० ।

## अथ ह्वादिप्रक्रिया

३३६. जुहोत्यादिभ्यः श्लुः [ २ । ४ । ७५ ]

जुहोत्यादेः परस्य शपः श्लुः स्यात् । लुकोऽपवादः ।

३३७. श्लौ [ ६ । १ । १० ]

श्लौ सत्यनभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः । जुहोति । जुहुतः । "अदभ्यस्तात्" (७।१।४) "हुश्नुवोः" (६।४।८७) इति यण् । जुह्वति । जुहुधि । जुहवाव । "जुसि च" (७।३।८३) इति गुणः । अजुहवुः । अहौषीत् ।

३३८. भीह्रीभृहुवां श्लुवच्च [ ३ । १ । ३९ ]

एभ्यो लिटयाम् वा स्यात् आमि श्लाविव कार्यं च । जुहवामास । जुहाव । उवङ् जुहुवतुः । ञिभी भये । बिभेति ।

---

हु । दानं हविषः प्रक्षेपमात्रम्, न हविर्विशिष्टम् । तथा सति हविषो धात्वर्थेऽन्त[1]र्भूतत्वादकर्मकत्वं स्यात् । ततश्च यवागूं जुहोति इति कर्मणि द्वितीया नोपपद्येत । इतः षट् परस्मैपदिनः । त्रयोऽनिटः । जुहोत्यादिभ्य इति । यद्यनन्तरस्य यङ एव श्लुर्विधीयते । ततः "श्लौ" (६ । १ । १०) इति द्विर्वचनविधानमनर्थकं प्रत्ययलक्षणेन "सन्यङोः" ( ६ । १ । ९ ) इत्येव सिद्धेः । तस्माच्छप एव व्यवहितस्यापि विधीयते इत्याह—शपः श्लुः स्यादिति । लुकोऽपवादः इति । "अदिप्रभृतिभ्यः" ( २ । ४ । ७२ ) इति प्राप्तस्य । अदादिसमाप्तौ वृत्करणाभावादिति भावः ॥ ३३६ ॥

श्लौ । श्लुरिति प्रत्ययादर्शनमुच्यते । तस्याभावरूपस्य साक्षात् परत्वं न संभवतीत्यतो विषयसप्तमीयमित्याह—श्लौ सतीति । जुहोतीति । "कुहोश्चुः" ( ७ । ४ । ६२ ) इति । हस्य झः । तस्य "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति जश्त्वेन जकारः । जुहुयात् । जुहोतु । जुहुधीति । "हुझल्भ्यः" ( ६ । ४ । ८७ ) इति हेर्धिः । जुहवानि इति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ इति पित्त्वाद् गुणः । अजुहोत् । अजुहवुरिति । "सिजभ्यस्त" ( ३ । ४ । १०९ ) इति झेर्जुस् । अहौषीदिति । सिचि वृद्धिः ॥ ३३७ ॥

भीह्रीभृहुवामिति । श्लुवत्कार्यपेक्षया सूत्रे षष्ठी । सन्नियोगशिष्टत्वात्त्वामपि तेभ्य एव विज्ञायते इत्याह—एभ्य इत्यादि । श्लाविव श्लुवत् । "तत्र तस्येव" (५ । १ । ११६) इति सप्तमीसमर्थाद् वतिरित्याह—आमि श्लाविवेति । तत्पुनर्द्वित्वं भृञामित्त्वं च । जुहावेति । आमभावे "लिटि धातोः" ( ६ । १ । ८ ) इति द्वित्व वृद्धिः । जुहोथ । भारद्वाजनियमादिड् वा । जुहुविव । क्रादिनियमादिट् । होता । हूयात् । होष्यति । ञिभी । ञि इत् । ओतः क्रार्थः । बिभेतीति । श्लौ द्वित्वम् । ह्रस्वः । "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति जश्त्वेन बकारो गुणः ॥ ३३८ ॥

---

१. धात्वर्थेऽन्वयंभूतत्वादिति क० पु० ।

### ३३९. भियोऽन्यतरस्याम् [ ६ । ४ । ११ ]

भिय इकारान्तादेशो वा स्यात् सार्वधातुके क्ङिति हलि । बिभीतः । बिभितः । बिभ्यति । बिभियात् । बिभीयात् । अबिभयुः । बिभयामास । बिभाय । ह्री लज्जायाम् । जिह्रेति । जिह्रियति । जिह्रयामास । जिह्राय । पॄ पालनपूरणयोः ।

### ३४०. अर्तिपिपर्त्योश्च [ ७ । ४ । ७७ ]

अनयोरभ्यासस्येदन्तादेशः श्लौ । पिपर्ति ।

### ३४१. उदोष्ठ्यपूर्वस्य [ ७ । १ । १०२ ]

ओष्ठ्यपूर्वस्य ॠत उत् स्यात्क्ङिति । रपरत्वम् । "हलि च" (८।२।७७) इति दीर्घः । पिपूर्तः । पिपुरति । पिपूर्यात् । अपिपः । अपिपरुः । अपारीत् ।

---

भियो । सार्वधातुके क्ङिति हलीति । अनुवृत्तिसौकर्यादितदुक्तम् । पुनरस्य प्रयोजनमस्ति । अभ्यस्तस्येत्यधिकाराद् आर्धधातुकेऽस्याप्रसङ्गात् । बिभेतीति । बिभ्यतु इत्यादौ क्ङित्यजादौ च सत्यपीत्वे दोषाभावात् । यत्तु ह्रस्वसामर्थ्याद् गुणो यण् च न स्यादिति प्राचोक्तम् । तदसत् । बिभिव इत्यादौ क्ङिति हल्यादौ ह्रस्वस्य चरितार्थत्वात् । बिभेतु । बिभितात् । बिभीतात् । बिभीताम् । बिभिहि । बिभीहि । बिभयानि[1] । अबिभेत् । अभैषीत् । बिभयामासेति । "भीह्री" ( ३ । १ । ३९ ) इति आमश्लुवद्भावौ । बिभाय । बिभ्यतु । बिभयिथ । बिभेथ । भारद्वाजनियमाद्वेट् । क्रादिनियमादिट् । बिभ्यिव । भेता । भेष्यति । ह्री । जिह्रियति । "अदभ्यस्तात्" ( ७ । १ । ४) इत्यत् । संयोगपूर्वत्वाद् "एरनेकाचो" (६ । ४ । ८२) इति यण् न । इयङ् । जिह्रीयात् । जिह्रेतु । जिह्रीहि । जिह्रयाणि । अजिह्रेत् । अह्रैषीत् । जिह्रयामास । "भीह्री" ( ३ । १ । ३९ ) इत्याम् । श्लुवद्भावः । ह्रेता । ह्रीयात् । ह्रेष्यति । पॄ ॥ ३३९ ॥

अर्तिपि । ॠ गतौ । पॄ उक्तः । पिपर्तीति परत्वाद् गुणे रपरे च श्लौ द्वित्वे हलादिः शेषः । अकारस्येत्वम् ॥ ३४० ॥

उदोष्ठ्य । अङ्गस्येति वर्तते । तेनौष्ठ्यो विशेष्यते । ततश्चाङ्गावयवो य ओष्ठ्यः स पूर्वो यस्माद् ॠकारात्तदन्तस्य धातोरुत्वम् । अलोऽन्त्यस्येत्यर्थः संपद्यते, तेन समीर्ण-

---

१. बि बिभयामीति क० पु० ।

२. अभ्यस्तोदित्यसंयोगेति क० पु० ।

पपार । "ऋच्छत्यृताम्" (७।४।११) पपरतुः । गुणत्वान्नेत्त्वम् । परीता । परिता । पूर्यात् । ह्रस्वोऽपि पिपर्तिरस्ति । पिपृतः । पिप्रति । पिपृयात् । पिप्रतु । पर्ता । प्रियात् । "रिङ् शयग्लिङ्क्षु" (७।४।२८) ओहाक् त्यागे । जहाति ।

३४२. जहातेश्च [ ६ । ४ । ११६ ]

जहातेरात इद् वा स्यात् सार्वधातुके क्ङिति इति । जहितः ।

मित्यादौ न भवति । क्ङितीति । गुणवृद्धिभ्यां स्वविषये वाधितत्वात्तद्भिन्नोऽस्य विषय इति भावः । क्ङितीति चोपलक्षणं तेन पृ इत्यस्यानुकरणेऽपि भवति । पूः । पुरौ । पुरः इति । पिपुरति । "अदभ्यस्तात्" (७।१।४) इत्यत् । पिपर्षि । पिपर्तु । पिपूर्तात्-त्वा । पिपुरतु । पिपूर्हि । पिपराणि । अपिपरिति । लङि तिपि गुणे रपरे हल्ङ्यादिलोपे विसर्गः । अपिपरुरिति । 'जुसि च" (७।३।८३) इति गुणे अपिपरम् । अपारीत् । अपारिष्टाम् । पपार । पपरतुः इति । यदा तु "शृदृप्रां ह्रस्वो वा" (७।४।१२) इति ह्रस्वस्य भविष्यति तदा गुणाभावात् पप्रतुरित्यपि भवति । किं तु ह्रस्वोऽपि पिपर्तिरस्तीति वक्ष्यमाणेन गतार्थत्वादयं विशेषो न दर्शितः । गुणत्वादिति "न शसदद" (६।४।१२६) इत्यादिनिषेधादित्यर्थः । परिता । परीतेति । 'वृतो वा" इति दीर्घः पूर्यात् । परिष्यति । ह्रस्वोऽपीति । ह्रस्वान्तोऽपीत्यर्थः । तेनायमनिट् अस्तीति क्षीरस्वाम्यादिमते इत्यर्थः । वृत्तिन्यासपदमञ्जरीप्रदीपादिषु दीर्घान्त एवेति स्थितम् । सति हि ह्रस्वान्ते 'शृदृप्रां" (७।४।१२) इति ह्रस्वस्य विधानमनर्थकं स्यात् । धातुद्वयमादाय रूपद्वयोपपत्तेः । ह्रस्वानारम्भे च पपृवानिति क्वसौ न सिद्धयेदिति प्रयोजनान्तराभिधानं चायुक्तं स्यात् । ह्रस्वान्तधात्वन्तरेणाप्युपपत्तेः । पिपृतः इति ऋतोऽभावान्नोत्वम् । पिप्रतीति । अदादेशे यण् । पप्रतुरिति । 'ऋतोऽभावान्न गुणः । पपर्थ । पप्रिव । प्रियात् । रिङ् । परिष्यति । "ऋद्धनोः स्ये" (७।२।७०) इत्तीट् । ओहाक् । ककारो "हश्च व्रीहिकालयोः" (३।१।१८) इत्यत्र हाको हाङश्च सामान्यग्रहणविघातार्थः[1] । जहातीति । श्लौ द्वित्वेऽभ्यासस्य ह्रस्वे "कुहोश्चुः" (७।४।६२) ॥ ३४१ ॥

जहातेरिति । जहातेरिति निर्देशो जिहीतेर्निवृत्त्यर्थः । जहातु । जहीतात् । अजहिताम् । अजहीताम् । अजहुः । अहासीत् । अहासिष्टाम् । "यमरम" (७।२।७३) इतीट्सकौ । जहौ । जहतुः । जहिव । हाता ॥ ३४२ ॥

---

१. विघातार्थः इति ख० पु० ।

३४३. ई हल्यघोः [ ६ । ४ । ११३ ]

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलि न तु घुसंज्ञकस्य । जहीतः । "श्नाभ्यस्तयोः" ( ६ । ४ । ११२ ) इत्यातो लोपः । जहति ।

३४४. लोपो यि [ ६ । ४ । ११८ ]

जहातेरातो लोपः स्यात् सार्वधातुके ये परे । जह्यात् ।

३४५. आ च हौ [ ६ । ४ ११७ ]

जहातेर्हौ परे आकारान्तादेशो वा स्यात् । पक्षे इ ई च । जहाहि । जहिहि । जहीहि । हेयात् । ऋ इत् । "अर्तिपिपर्त्योः" ( ७ । ४ । ७७ ) इतीत्त्वम् । "अभ्यासस्यासवर्णे" इयर्ति । इयृतः । इयृति । इयृवः । इयृयात् । इयराणि । ऐयः । ऐयृताम् । ऐयेरुः । ऐयरम् । आर्षीत् । आरत् । आर । णिजिर् शौचपोषणयोः ।

३४६. णिजां त्रयाणां गुणः श्लौ [ ७ । ४ । ७५ ]

णिजविजविषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्ते । नेनिक्तः । नेनेग्धि ।

---

हेयादिति । "एर्लिङि" ( ६ । ४ ६७ ) इत्येत्त्वम् । हास्यति ऋ । इयर्तीति । गुणो द्वित्वम्, हलादिः शेषः । इत्त्वम् । इयङ् । इयृतः इति । ङित्वान्न गुणः । द्वित्वम् । उरत् । हलादिः शेषः । इत्त्वम् । इयङ् । इयृतीति । "अदभ्यस्तात्" ( ७ । १ । ४ ) इत्यत् । इयर्तु इति । गुणः इयृहि । इयराणीति । "आडुत्तमस्य पिच्च" ( ३ । ४ । ९२ ) गुणः । रपरः । ऐयः इति । लङि । तिपि । गुणः । रपरः । द्वित्वम् । हलादिः शेषे इत्त्वम् । इयङ् । आट् । वृद्धिः । तिलोपः । रेफस्य विसर्गः । ऐयरुरिति । जुसि गुणः । ऐयरिति । मिपोऽम् गुणः । आर्षीदिति । सिचि वृद्धिः । "ऋसृभ्यामङ् वा" इति केचिदिरमुक्तेः । सिच् । आर्षीमिति । "सर्तिशास्त्यर्तिभ्यश्च" ( ३ । १ ५६ ) इत्यङ्पक्षे । "ऋदृशोऽङि गुणः" ( ७ । ४ । १६ ) इति गुणः । आरत् । "ऋच्छत्यॄताम्" ( ७ । ४ । ११ ) इति गुणः । आरतुः । "इडत्त्यर्ति" ( ७ । ४ । ६६ इतीट् । आरिथ । क्रादिनियमादिट् । आरिव । अर्ता । "गुणोऽर्ति" ( ७ । ४ । २९ ) इति गुणः । अर्यात् । अरिष्यति । णिजिर् । इतो द्वावुभयपदिनौ ॥ ३४५ ॥

णिजां त्रयाणामिति । त्रयाणां ग्रहणं "भृञामित्" ( ७ । ४ । ७६ ) इत्येतदर्थम् । त्रय एव णिजादयो वृत्करणात् । नेनेक्ति इति । नेनिक्तः । ङित्वान्नोपधाले

३४७. नाभ्यस्तस्याचि पिति सार्वधातुके [७।३।८७]

लघूपधस्याभ्यस्तस्य गुणो न स्यादचि पिति सार्वधातुके। नेनिजानि। नेनिजाव। नेनिजाम। अनेनेक्। अनेनिजुः। अनेनिजम्। अनिजत्। "इरितो वा" (३।१।५७) इत्यङ्। अनैक्षीत्। एवं विचिर् पृथग्भावे। वेवेक्ति। वेविक्तः। विष्लृ व्याप्तौ। वेवेष्टि। लृदित्त्वादङ् वेति केचित्। अविषत्। अविक्षत्। जन जनने। जनन्ति।

३४८. जनसनखनां सञ्झलोः [ ६ । ४ । ४२ ]

एषामाकारोऽन्तादेशः स्यात् झलादौ सनि क्ङिति च झलि। जजातः। "गमहन" ( ६ । ४ । ९८ ) इत्युपधालोपः। जज्ञति। "ईड्जनोर्ध्वे च" ( ७ । २ । ७८ ) इतीट्। अजजनिषि। अजज्न्मि। अजन्ध्वः। "ये विभाषा" ( ६ । ४ ४३ ) जजन्यात्। जजायात्।

गुणः। नेनिजायात इति। नेनिजीत। नेनेक्तु। नेनिग्धि इति। हेर्धिः। अपित्त्वान्न गुणः। नेनिजानीति। आटः पित्त्वाद् गुणः प्राप्तः नेनिक्तम्। अनेनेगिति। उपधागुणः। हलङ्यादिलोपे चोः कुः। वाऽवसाने। अनेनिक्ताम्। अनेनिजुरिति। अनिगन्तत्वान्न जुसि गुणः। अनेनिजानीति। "नाभ्यस्तस्या" ( ७ । ३ । ८७ ) इति न गुणः। अनेनिक्त। अनैक्षीत् इति। सिच्पक्षे हलन्तस्येति वृद्धिः। कुत्वं षत्वं चः। "झलो झलि" ( ८। २। २६ ) इति सिचो लोपः। अनिक्त। अनिक्षाताम्। अनिग्ध्वम्। निनेज। निनेजिथ। निनिजे। नेक्ता। णिज्यात्। निक्षीष्ट। "लिङ्सिचौ" (१।२।११) इति कित्त्वम्। नेक्ष्यति। नेक्ष्यते॥ ३४६॥

एवमिति वेवेक्ति। वेविक्ते। वेक्ता। विज्यात्। विक्षीष्ट। "लिङ् सिचौ" (१।२।११) इति कित्त्वम्। वेक्ष्यति। वेक्ष्यते। इत्यादि। उन्नेयम्। विष्लृ। एषोऽपि स्वरितेत् इति माधवः। वेवेष्टीति द्वित्वेऽभ्यासस्य गुणः। उपधा गुणः। ष्टुत्वम्। वेविषति। वेवेक्षि। वेवेष्मि। वेविष्यात्। वेवेष्टु। वेविड्ढि। हेर्धिः। षस्य जश्त्वेन ढः। ष्टुत्वम्। वेविषाणि। अवेवेट्। अवेविषुः। वेति केचिदिति। स्वामिधनपालादयो ह्युदितमेनं प्रतिपन्नास्तन्मते लृदित्त्वाभावादङ् नास्तीत्यर्थः। अविक्षदिति। "शल इगुपधात्" ( ३। १। ४५ ) इति क्सः। अविक्षताम्। अविक्षत। अविक्षाताम्। अविक्षत। अविक्षन्त। विवेष। वेष्टा। विष्यात्। वेक्ष्यति। जन। सेट्। परस्मैपदी। जनन्तीति द्वित्वे हलादिः शेषे चानुस्वारपरसवर्णौ॥ ३४७॥

जनसन। अङ्गाक्षिप्तस्य प्रत्ययस्य झला विशेषणात्तदादिविधौ झलादौ प्रत्यये इत्यर्थो भवति। स च क्ङितीत्यनेन विशेष्यते। अनुदात्तोपदेशेत्यनुवृत्तं तु झल्ग्रहणं सनो विशेषणम्। झलादौ सनीति। तेन सिसनिषतीत्यत्र "सनीवन्तर्ध" (७।२।४९)

डु दाञ् दाने । "नेर्गद" ( ८ । ४ । १७ ) इति णत्वम् । "श्नाभ्यस्तयोः" ( ६ । ४ । ११२ ) इत्यातो लोपः । दत्तः । ददति । दद्व । दत्ते । घ्वसोरेत्त्वाभ्यासलोपौ । देहि । अददात् । अदात् । "स्थाघ्वोरिच्च" ( १ । २ । १७ ) अदित । अदिषाताम् । देयात् । डुधाञ् धारणपोषणयोः । प्रणिदधाति । अन्तर्दधाति । श्रद्दधाति ।

## ३४९. दधस्तथोश्च [ ८ । २ । ३८ ]

द्विरुक्तस्य झषन्तस्य धातोर्बशो भष् स्यात् तथयोः स्ध्वोश्च परतः । वचनसामर्थ्यादालोपस्य न स्थानिवत्ता । धत्तः । धत्थः । धत्से । धद्ध्वे । धेहि । अधित । धेयात् । डुभृञ् धारणपोषणयोः ।

इतीट् पक्षेऽझलादित्वात्त्व[1] दा न भवतीत्याशयेन व्याचष्टे—सेट्त्वेन सनो झलादेरसंभवात् । जजाव इति । आत्वे सवर्णदीर्घः । जज्ञति इति । अदादेश. श्नुरत्वेनऽः । जज्ञोऽशः । "ईड्जनोर्ध्वे च" ( ७ । २ । ७८ ) इतीट् इति । एतत् परमतेनोक्तम् । सेध्वेशब्दयोरेवेड्विधानाज्जनसीत्येन भवतीत्याकरे स्थितत्वादिति तत्रैवोक्तम् । जजन्व इति । अझलादित्वान्नात्त्वम् । जजन्तु । जजातात् वा । जजाताम् । जज्ञतु । जजाहि । जजनानि । अजनम् । अजजाताम् । अजनुः । अजजनम् । अजनीत् । अजानीत् । जजान । जज्ञतु । जनिता । जायात् । जन्यादित्यादि । छान्दसोऽयम् । "गणान्ते छन्दसि" इति वचनात् । तच्च घृ क्षरणे दीप्तौ चेत्यादीनां पूर्वेषामपि शेष इति माधवादयः । डुदाञ् । इतो गणान्ता अनिटः । डुइत् । "ड्वितः क्त्रिः" ( ३ । ३ । ८८ ) "क्त्रेर्मम्नित्यम्" ( ४ । ४ । २० ) इति प्रयोजनम् । ञित्वमुभयपदार्थम् । प्रणिददाति । "नेर्गद" ( ७ । ४ । ४५ ) इति णत्वम् । दत्त इति । अघोरिति निषेधादिह ई हल्यघोः" (६ । ४ । ११३) इति नास्ति ।आलो.पस्य "न पदान्त" ( १ । १ । ५८ ) इति स्थानिवत्त्वनिषेधाच्चर्त्वम् । दद्यात् । ददीत । ददातु । देहीति । ददाहि इति स्थिते आलोपात्परत्वदेत्त्वमाक ।रस्य ।दत्तात् । अत घ्वसोरेत्त्वात् परत्वादेत्त्वात्तङि कृते पुनरेत्त्वं न प्रवर्तते 'सकृद् गतौ' इति न्यायात् । अददात् । अदत्तम् । अददुः । अदत्त । अदादिति । लुङि "गातिस्था" ( २ । ४ । ७७ ) इति सिचो लुक् । अदितेति । लुङि आत्मनेपदे अदास्त इति स्थिते इत्त्वम्, सिच्च कित् इति न गुणः । "ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इति सिचो लोपः । अदिद्ध्वम् । अदिड्ढ्वम् । अदिषि । ददौ । ददतु । ददाथ । ददिथ । दाता । देयादिति । "एर्लिङि" (६।४।६७) इत्येत्त्वम् । दास्यति । डुधाञ् । प्रणिदधाति । "नेर्गद" (८।४।१७) "अदन्तरोरुपसर्गवद्वृत्तिर्वाच्या" इति वचनात् तयोः प्राक्प्रयोगमुदाहरति श्रद्दधातीत्यादि ॥३४८॥

दधस्त । दध इति कृतद्वित्वस्याभ्यासकार्यस्य धाञोऽनुकरणम् । न तु दध धारणे इत्यस्य व्याख्यानात् इति व्याचष्टे-द्विरुक्तस्य झषन्तस्येति तेन दधातीत्यत्र न भवती-

1. झलादित्वो न धात्वमिति ख० पु० ।

## ३५०.　　भृञामित् [ ७ । ४ । ७६ ]

'भृञ्-माङ्-ओहाङ्' एषामभ्यासस्येत् स्यात् श्लौ । बिभर्ति । बिभृतः । बिभ्रति । बिभृध्वे । अबिभः । अबिभरुः । अभार्षीत् । अभृत । बिभरामास । बभार । बभर्थ । बभृव । भर्त्ता । माङ माने शब्दे च । ईत्त्वम् । प्रणिमिमीते । अचि आलोपः । मिमाते । मिमते । अमास्त । एवं ओहाङ् गतौ ।

इति ह्वादिप्रक्रिया ।

---

त्यर्थः । यद्येवम् धत्त इत्यत्रापि न स्यात् अल्लोपस्य स्थानिवत्त्वेनाझन्तत्वात् अत आह वचनसामर्थ्यादिति । नहि विना अल्लोपे धाञ् झयन्तः संभवति । सति च स्थानिवत्त्वे वचनमनवकाशं स्यादित्यर्थः । सत्यपि वा स्थानिवत्त्वे ईदृशं व्यवधानमाश्रयिष्यते न श्रुतिकृतमिति वा परिहरणीयम् । पूर्वत्रासिद्धे न स्थानिवत् इति तु न परिहृतम् सवर्णादिषु निषेधारम्भेणास्य प्रायिकत्वात् । धत्त इति । "खरि च" ( ८ । ४ । ५५ ) इति चर्त्वम् । दधाति । दधामि । दध्वः । दध्मः । धत्ते । धड्ढ्वे इति । धस्य जश्त्वेन दः । दध्यात् । दधीत । दधातु । धेहीति । "घ्वसो" ( ६ । ४ । ११९ ) इत्ये-त्वाभ्यासलोपौ । अदधात् । अधत्ताम् । अदधुः । अधात् । "गातिस्था" (२ । ४ । ७७) इति सिचो लुक् । अधाताम् । अधुः । अधितेति । "स्थाघ्वोरिच्च" ( १ । २ । १७ ) इतीत्वम् । अधिषाताम् । अधिषाथाम् । अधिढ्वम् । अधिषि । दधौ । दधिथ । दधाथ । दधिव । दधे । दधिषे । दधिध्वे । दधिवहे । धाता । धेयादिति । "एर्लिङि" ( ६ । ४ । ६७ ) इत्येत्त्वम् । धासीष्ट । धास्यति । धास्यते । डुभृञ् । डु इत् । भृत्रिम-मिति । ड्वितः क्त्र्यर्थः । चान्द्रास्तु द्वितं भरयुमुदाहरन्ति ॥ ३४९ ॥

भृञामित् । बहुवचननिर्देशात् त्रयाणामिति चानुवृत्तेराह—भृञित्यादि । बिभर्त्तीति । गुणे रपरत्वे द्वित्वम् । अभ्यासस्य जश्त्वेन चर्त्वम् इत्वं च । बिभृव इति । ङित्त्वान्न गुणः । बिभ्रतीति । अदादेशे यण् । बिभ्रते । बिभ्राते । बिभृयात् । बिभृयाताम् । बिभ्रीत । बिभर्तु । बिभृतात् वा । बिभृहि । बिभराणि । अबिभरिति । लिङि तिपि गुणे रपरे च कृते हल्ङ्यादिलोपे रस्य विसर्गः । अबिभरुरिति । जुसि गुणः । अबिभृत । अबिभ्राताम् । अबिभृध्वम् । अबिभ्रि । अभार्षीदिति । सिचि वृद्धिः । अभार्ष्टाम् । "उश्च" ( १ । २ । १२ ) सिचो लुक् । अभृत । अभृषाताम् । बिभरामासेति । "भीह्रीभृहुवां श्लुवच्च" ( ३ । १ । ३९ ) इत्याम् । श्लुवद्भावात् द्वित्वे । बभारेति । आमभावे । बभ्रतुः । बभर्थेति । क्रादिनियमादिह भावः । बभ्रे । भ्रियात् । भृषीष्ट । "ऋद्धनोः स्ये" ( ७ । २ । ७० ) भरिष्यति । भरिष्यते । माङ् । ङित्त्वादात्मनेपदम् । "भृञामित्" ( ७ । ४ । ७६ ) इत्यनेन । प्रणिमिमीते इति । "घुमास्था" ( ६ । ४ । ६६ ) इतीत्त्वम् । "नेर्गद" ( ८ । ४ । १७ ) इति णत्वम् । अभ्यालोप इति । "श्नाभ्यस्तयोः" ( ६ । ४ । ११२ ) इत्यनेन । मिमते इति । ईत्त्वा-

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ।

३५१. दिवादिभ्यः श्यन् [ ३ । १ । ६९ ]

दिवादिभ्यः श्यन् प्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोऽपवादः । शनाविती । "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । दीव्यति । षिवु तन्तुसन्ताने । निषीव्यति । न्यषेवीत् "सिवादीनाम्" ( ८ । ३ । ७१ ) इति वा षत्वम् । न्यसेवीत् । नृती गात्रविक्षेपे । नृत्यति । ङित्त्वान्न गुणः ।

---

त्परत्वात् "आत्मनेपदेष्वनत" ( ७ । १ । ५ ) मिमे । मिमीवहे । मिमीत । मिमीयाताम् । मिमीताम् । मिमाताम् । मिमीध्व । मिमै । मिमावहै । अमिमीत । अमिमाताम् । अमिमि । अमास्तेति । अङित्त्वादीत्वाभावः । ममे । माता । मासीष्ट । मास्यते । एवमिति । जिहीते । जिहाते । जिहते । जिहीत । जिहीताम् । अजिहीत । अहास्त । जहे । हाता । हासीष्ट । हास्यते । ॥ ३५० ॥

॥ इति ह्वादयः ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो—
त्तंसः श्रीनरसिंहसूनुरभवत् 'प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् साह्वादिकी प्रक्रिया ॥ ११ ॥

॥ ह्वादिः ११५ ॥

—: ० :—

दिवु । इतो त्रिमिदान्ताश्चतुर्विंशतिः परस्मैपदिनः । पञ्च सेटः । उकारः "उदितो वा" (७ । ३ । ५६) इति क्त्वायामिड्विकल्पार्थम् । व्यवहारः क्रयादिः । मोदमदस्वप्नेष्वपि स्मरन्ति ॥३५०॥

दिवादिभ्यः श्यन् । शपोऽपवादः । ह्वाद्यन्ते वृत्करणात् । लुलुकोरप्राप्तौ शप्येव प्राप्तेःस्यारम्भात् । शनाविती । "लशक्वतद्धिते" (१ । ३ । ८), "हलन्त्यम्" (१।३।३) इत्यासभाम् । शकारः सार्वधातुकसंज्ञार्थः । नकारो "ञ्नित्यादिर्नित्यम्" (६ । १ । १८७) इति स्वरार्थः । दीव्यतीति । नित्यत्वाच्छ्यनि कृते तस्यङि त्वाल्लघूपधगुणाभावः । दीव्यत इत्यादि । दीव्येत् । दीव्यतु । "अतो हेः" (६ । ४ । १०५) दीव्यः । अदीव्यत् । लुङि सिच "इट ईटि" (८ । २ । २८ ) इति लोपे "नेटि" (७ । २ । ४) इति वृद्धिनिषेधः । उपधागुणः । अदेवत् । दिदेव । दिदिवतुः । दिदेविथ । दिदेव देविता । दीव्यात् । दीव्यास्ताम् । देविष्यति । अदेविष्यत् । षिवु । निषीव्यति । "धात्वादेः षः सः" (६ । १ । ६४) श्यन् दीर्घः । "परिनिविभ्यः" (८ । ३ । ७० इति षत्वम् । सीव्येत् । सीव्यतु । असीव्यत् । न्यषेवीदित्यादि । "सिवादीनां वाड्व्यवायेऽपि" (८ । ३ । ७१) इति वा षत्वम् । निषिषेव । सेविता । सीव्यात् । सेविष्यति । नृती । ईदित्करणं "यस्य विभाषा" (७ । २ । १५) इत्यस्यानित्यत्वज्ञापनार्थम् । तेन धावित इत्यादि सिद्धमित्येके । अन्ये त्वाहुः—नरीनृत्त इति यङ्लुकोऽणिनिषेधार्थम् । "यस्य

## ३५२. सेऽसिचि कृतचृतछृदनृतः [ ७ । २ । ५७ ]

एभ्यः परस्य एकारादेरार्धधातुकस्य सिज्वर्जितस्येड् वा स्यात्। नर्तिष्यति। नर्त्स्यति। सिचि तु अनर्तीत्।

त्रसी उद्वेगे। "वा भ्राश" ( ३ । १ । ७० ) इति श्यन्वा। त्रस्यति। तत्रास। "वा जृभ्रमुत्रसाम्" ( ६ । ४ । १२४ ) इत्येत्त्वं वा। तत्रसतुः। त्रेसतुः। जॄष् वयोहानौ। "ॠत इद्धातोः" ( ७ । १ । १०० ) जीर्यति। "जृस्तम्भु" ( ३ । १ । ५८ ) इत्यङ् वा। अजरत्। अजारीत्। जजरतुः। जेरतुः। जरिता। जरीता। शो तनूकरणे।

---

विभाषा"ऽस्ति। "सेऽसिचा" (७ । २ । ५७) इत्यत्र एकाच इत्यनुवृत्तेरिड्विकल्पस्यैवाभावात्। "पुगन्त" (७।३। ८६) इति गुणमाशङ्क्याह-ङित्वान्न गुण इति। नित्यत्वात् पूर्वं श्यनि कृते तस्य 'सार्वधातुकमपित्" (१। २।४) इतिङि त्स्वात्" क्ङिति च" (१ । १ । ५) इति निषेध इत्यर्थः। एतत्तु दीव्यतावेव युक्तम्, तत्रापि हि दीर्घस्यासिद्धत्वादादौ गुणः प्राप्नोति। दीर्घस्य तु प्रतिदीव्येत्यादिरवकाशः। नृत्यतु। अनृत्यत्। ननर्त। नर्तिता। नृत्यात् ॥३५१॥

सेऽसिचीति। कृती छेदने। तुदादिः। कृती वेष्टने रुधादिः। द्वयोरपि ग्रहणम्। चृती ग्रन्थे हिंसायां च। उच्छृदिर् दीप्तिदेवनयोः। उतृदिर् हिंसानादरयोः। अनर्तीदिति। "नेटि" (७ । २ । ४) इति वृद्धिनिषेधः। त्रसी। त्रसतीति। श्यनभावे शप्। अत्रसीत्। अत्रासीत्। तत्रासेति। "अत उपधायाः" (७ । २ । ११६) इति वृद्धिः। सयुक्तहल्मध्यस्यत्वादाह-वा जृभ्रमु इत्यादि। तत्रसिथ। त्रेसिथ।तत्रसिथ। त्रसिता। त्रस्यात्। त्रसिष्यति। जॄष्। षित्वम् जरेत्यङर्थम्। जीर्यतीति इत्वे रपरे "हलि च" (८ । २ । ७७) इति दीर्घः। जीर्यत्। जीर्यतु। अजीर्यत्। अजरदिति। लुङि च्लेरङि "ॠदृशोऽङि गुणः" (७।४।१६) अजारीदिति। अङभावे सिचि वृद्धिः। अजारिष्टाम्। अजारिषुः। "सिचि परस्मैपदेषु" (७ । २ । ४०) इति निषेधात् "वृतो वा" (७।२।३८) इतीटो दीर्घो न। जजार। जजरतुः। जेरतुरिति। "वा जृभ्रमुत्रसाम्" (६ । ४ । १२४) इत्येत्त्वाभ्यासलोपौ। जेरिथ। जजरिथ। जरीता। "वृतो वा" (७ । २ । ३८) इति वा दीर्घः। जीर्यात्। जरिष्यति। जरीष्यति। शो। इत आरभ्याष्टावानद् ॥३५२॥

३५३. ओतः श्यनि [ ७ । ३ । ७१ ]

श्यनि परे ओकारस्य लोपः स्यात् । श्यति । "विभाषा घ्राधेट्" (२।४।७८) इति सिचो वा लुक् । अशात् । अशासीत् । शायात् । एवं छो छेदने षोऽन्तकर्मणि । अध्यवस्यति प्रणिष्यति । न्यषात् । न्यषासीत् । दोऽवखण्डने प्रण्यदात् । देयात् । राध संसिद्धौ । राध्यति । अरात्सीत् । अराद्धाम् ।

३५४. राधो हिंसायाम् [ ६ । ४ । १२३ ]

हिंसार्थस्य राधेरेत्त्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि परे । विकल्पोऽन्नेति केचित् । रेधतुः । रराधतुः । रेधिथ । रराधिथ । हिंसायां किम् ?

श्यति । श्येत् । श्यतु । अश्यत् । अशादिति । "आदेच उपदेशेऽशिति (६।१।४५) इत्यात्वम् । "यमरम" (७।२।७३) इतीट्सकौ । अशासिष्टा इत्यादि । शशौ । शशिथ । शशाथ । शाता । शायात् । एवमिति । छ्यति । छ्येत् । छ्यतु अछ्यत् । अच्छासीत् । चच्छौ । छाता । छायात् । षोऽन्तकर्मनाश[1] । प्रणिष्यतीति "नेर्गद" (७।४।४५) इति णत्वम् । स्येत् । स्यतु । अस्यत् । न्यषादिति । "विभाषा घ्राधेट्शाच्छासः" (२।४।७८) इति वा सिचो लुक् । "प्राक्सितादड्व्यवायेऽपि" (८।३।६३) इति षत्वम् । न्यषासदिति । सनिटौ । ससौ । ससिथ । ससाथ ससिव । साता । सेयादिति । "एर्लिङि" (६।४।६०) इत्येत्वम् । दो । द्यति । द्येत् द्यतु । अद्यत् । प्रण्यदात् इति । "गातिस्था" (२।४।७०) इति सिचो लुक् । णत्वा "नेर्गद" (८।४।४५) इति णत्वम् । दाता । देयात् । राध् । राध्यतीति । यद प्राचोक्तम् "राधोऽकर्मकाद् वृद्धावेव" इति धातु[2]सूत्राद् वृद्ध्यर्थे श्यन् । अन्यत्र श्नुरेव राध्नोत्योदनमिति ।तदसत् । कर्मवत् सूत्रभाष्ये राध्यत्योदनः स्वयमेवेत्यवृद्धावपि श्य उदाहरणात् । अत्र हि संसिद्धिरर्थः । तथा भाष्येऽपि । "न दूये सात्वतीसूनुर्यन्मा मपराध्यति" इति । तथा "क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" । अत्र द्रोहोऽर्थः । तथा दैवपर्यालोचनेऽपि दृश्यते । कृष्णाय राध्यतीति । एतच्च "राधीक्ष्यो (१।४।३९) इत्यत्र प्रपञ्चितम् । अयं तु धातुसूत्रार्थः । एवकारो भिन्नक्रमः । राधे ऽकर्मकादेव श्यन् भवति । वृद्धिग्रहणं प्रदर्शनार्थम् । यथा वृद्धावकर्मकः एवमर्थान्तरेऽ अकर्मकत्वे सति श्यन्, न सकर्मकात् इति । अरात्सीदिति । अनिट्त्वादस्य चर्त्वेन तः अराद्धाम् । "झलो झलि" (८।२।२६) इति सलोपे "झषस्तथोः" (८।२।४० इति धत्वम् । जश्त्वम् ॥३५३॥

राधो । अनेकार्थत्वाद्धिंसायामप्ययं वर्तते इत्याशयेनाह—हिंसार्थस्येति

१. षोऽन्तकर्मणि इति ख० पु० ।

२. सूत्राद्वृत्येव ख० पु० ।

आरराधतुः । व्यध ताडने । "ग्रहिज्या" ( ६ । १ ।१६) इति संप्रसारणम् । विध्यति । विव्याध । विविधतुः । पुष पुष्टौ । "पुषादि" ( ३ । १ । ५५ ) इत्यङ् । अपुषत् । श्लिष आलिङ्गने । पुषाद्यङ् । अश्लिषत् ।

**३५५. श्लिष आलिङ्गने [ ३ । १ । ४६ ]**

श्लिषश्च्लेः क्सः स्यादालिङ्गनेऽर्थे । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गने किम् ? अश्लिषज्जतु काष्ठम् । रध हिंसायाम् । रध्यति । पुषादित्वादङ् । "रधिजभोः" ( ७ । १ । ६१ ) इति नुम् । अरन्धत् । ररन्ध । ररन्धतुः ।

---

(अत्र[3] माधवः 'राधो हिंसायाम्" (६ । ४ । २३) इत्येत्त्वाभ्यासलोपौ भौवादिकस्य) यतो हिंसार्थस्य सकर्मकत्वाद् दैवादिकत्वमेव न भवतीति । रेधतुरिति । यथा पुनराकारस्याप्येत्त्व लभ्यते तथा राजतावुक्तम् । राद्धा । राध्यात् । रात्स्यति । अथ स्वादिश्चुरादिश्च । व्यध । विध्यतीति । श्यनो ङित्वात् सप्रसारणम् । "संप्रसारणाच्च" (६ । १ । १०८) इति पूर्वरूपेण "न सप्रसारणे" (६ । १ । ३७) इति निषेधात् यकारस्य न भवति । विध्येत् । विध्यतु । अविध्यत् । "वदव्रज" इति वृद्धिः । अव्यात्सीत् । "झलो झलि" (८ । २ । २६) इति सलोपः । जश्त्वम् । अव्याद्धाम् । विव्याधेति । उपधावृद्धेः स्थानिवत्त्वाद् द्वित्वम् । हलादिशेष बाधित्वा यस्य पूर्व "लिट्यभ्यासस्य" (६ । १ । १७) इति संप्रसारणम् । विविधतुरिति । 'ग्रहिज्या" (६ । १ । १६) इति संप्रसारणे कृते द्वित्वम् । हलादिः शेष । विव्यधिथ । विव्यद्ध । विविधिव । व्यद्धा । व्यध्यात् । व्यत्स्यति । पुष । पुष्यति । पुष्येत् । पुष्यतु । अपुष्यत् । पोक्ष्यति । श्लिष । श्लेक्ष्यति । श्लिष्येत् । श्लिष्यतु । अश्लिष्यत् । अश्लिषज्जतु काष्ठेनेति शेषः ॥३५४॥

श्लिष । आलिङ्गनं प्राणिकर्तृकमुपगूहनम् । अङोऽपवादः । अश्लिक्षत् । कन्यां देवदत्त इति शेषः । इहतु भावकर्मणोरात्मनेपदे मयाश्लेषि कन्या देवदत्तेनेति । एवं वचने परत्वाच्चिण्णेव । अन्यत्र समाश्लिक्षाताम् । समाश्लिक्षतेति क्सो भवत्येव । यद्येवमनालिङ्गनेऽपि "शल इगुपधाद" (३ । १ । ४५) इति क्सः प्राप्नोति इष्यते सिच् । समाश्लिक्षत जतुभि काष्ठैरिति ? अत्राह्-श्लिष इति । श्लिषः क्सः इति योगविभागः अयं पुरस्तादपवादन्यायेनाङं बाधते चिण्म् । तत आलिङ्गने इति द्वितीयो योगः । तेन "श्लिष" इति वा "शलः" इति वा यावती क्सस्य प्राप्तिः सा सा नियम्यते । आलिङ्गने एवेति । तेनानालिङ्गने पदद्वयं यथायोगमङ्सिचौ भवत इति । रध । चकारात् संराद्धौ । रध्यत्योदनं पचतीत्यर्थः । इतः पञ्चसेटः "रधिजभोः" (७ । १ । ६१) इति नुमिति । तत्र कृते "अनिदिताम्" (६ । ४ । २४) इति न लोप इति द्रष्टव्यम् । गम्य-

---

३. अत्रमाधवइत्यारभ्य-भौवादिकस्य इत्यन्तोनास्ति ख० पु० ।

## ३५६. रधादिभ्यश्च [ ७ । २ । ४५ ]

रधनशतृपदृपद्रुहमुहष्णुहष्णिह एभ्यो वलादेरार्धधातुकस्येड् वा स्यात् ।

## ३५७. नेट्यलिटि रधेः [ ७ । १ । ६२ ]

लिड्वर्जे इटि रधेर्नुम् न स्यात् । रधिता । रद्धा । अनिटीति किम् ? ररन्धिव । रेध्व । अत्र परत्वादिड् वा । केचित्तु क्रादिनियमान्नित्यमाहुः । तृप प्रीणने । तृप्यति । अतृप्यत् । अतर्पीत् । अतार्प्सीत् । अतृपत् । "अनुदात्तस्य चर्दुपधस्याम्" ( ६ । १ । ५९ ) इत्यम् वा । अत्राप्सीत् । तर्पं ।

मानत्वात्तु तत्र नोक्तम् । न च नुमो वैयर्थ्यम् । रन्धयति रन्धनमित्यविङति चरितार्थत्वात् । प्रायेण त्वरन्धदिति नुमनुपक्तमेव पठ्यते । तत्र नलोपाभावश्चिन्त्यः । अन्ये त्वाहुः—"रधिजभोरचि" ७ । १ । ६१) इत्यत्र जभेरचि ततो रधेरिति न्यसनीयम् । एतदेव रधिग्रहणं "नेट्यलिटि रधेः" (७ । १ । ६२) इत्यत्रानुवर्तिष्यते इति पुनः रधिग्रहणं न कर्तव्यं भवति । यद्वा जभेरचि रधेर्लिटि च नेटीति न्यासोऽस्तु । न च ररन्धिवेत्यादावपि निषेधप्रसङ्गः । अचीत्येव सिद्धे पुनर्लिटीति वचनस्य नेटीति निषेधबाधनार्थत्वात् । एवं सिद्धे पुनरधिग्रहणसामर्थ्यात् रधेर्नुम् भवत्येव श्रूयते एव न लुप्यते इत्युन्नीयते । तेनारन्धदित्यादिनलोपाभाव उपपन्नो भवतीति । तेषां क्वसौ रन्धिवानिति नुमः श्रवणं प्रसज्येत । क्वसोरौपदेशिककित्त्वाश्रयो न लोप इति वामनोक्तिविरोधश्च । येषां तु छान्दसः क्वसु[१]स्तेषां नैतद्दुष्यति । "दृष्टानुविधिश्छन्दसि" इति । ररन्धतुरिति । नित्यत्वा[२]न्नुमि कृते संयोगात् परत्वेन लिटः कित्त्वाभावान्नलोपाभावः ॥३५५॥

रधादिभ्यश्च । द्रुह जिघांसायाम् । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । अन्ये स्पष्टाः । तृप्यतिदृप्यतोरनिट्कत्वादन्येषां च नित्येट्कत्वाच्च विकल्पोऽयम् ॥३५६॥

नेट्यलिटि । अनिटीति किम् ? ररन्धिवेत्यादौ हि सतीटि नुमा भाव्यम्, अचीति वचनात् । प्रागेव चेटोऽसंयोगान्तेन लिटः कित्त्वं जातस्यापि श्रवणं न भविष्यतीति नार्थो लिटीत्यनेनेति प्रश्नः । ररन्धिवेति नात्र पूर्वं कित्त्वं लभ्यते धातोरित्यनुवृत्तेरुपदेश एव नुम्विधानात् । अचीत्येषा तु विषयसप्तमीति भावः । रेध्वेति । इडभावेन नुमोऽभावाडेत्त्वाभ्यासलोपौ । ननु यावान् कश्चिदिडभावः प्रतिषेध-

१. उभयपदिवृत्यते इति क० पु० ।
२. मनुप्यार्दिति क० पु० ।

ततृपतुः । तृपदृपोरनिट्सु पाठः "अनुदात्तस्य चर्दुपधस्य" इति विकल्पार्थः । त्रप्ता । तर्प्ता । तर्पिता । एवं दृप हर्षणमोहनयोः । मुह वैचित्ये । अमुहत् । "वा द्रुहमुह" ( ८ । २ । ३३ ) इति घत्वढत्वे । मोग्धा । मोढा । मोहिता । णश अदर्शने । प्रणश्यति । नशेरत एत्वमङि वा । अनेशत् । अनशत् । नेशतुः ।

---

निबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिनियमेनापोद्यते इति स्थितम् । तत्कथं विकल्प इत्यत आह—अत्रेति । लिटीत्यर्थः । परत्वादिति । तत्र नियमस्यावकाशः बिभिदिव । विकल्पस्यावकाश । रधिता । रद्धेति । लिटि तूभयप्रसङ्गे परत्वादयमेव विकल्प इत्यर्थः । प्रतिषेधाधिकारे कृतो नियमः । प्रतिषेधप्रसञ्जितमेवेडभावं निवर्तयति न विकल्पकृतमपीत्यर्थः । केचिदिति । पुरस्तात्प्रतिषेधकाण्डकरणसामर्थ्याद्रनारभ्याधीतेन प्रतिषेधेनेडभावमात्रमनयोर्विहितविधानविशेषं निवर्तयति इति वादिन इत्यर्थः । तेषां वल्यपि ररन्धिथेत्येव भवति । अन्येषां तु ररद्धेत्यपि । रन्धिष्यति । रत्स्यति । तृप । प्रीणनं साहित्यकरणं तृप्तिश्च । उभयमपि[1] दृश्यते "पितॄनताप्सीत् । सममंस्त बन्धूनिति" । "नाग्निस्तृप्यति काष्ठानाम्" इति । तृप्येत् । तृप्यतु । अतृप्यत् । अतृपदिति । पुषादित्वादङ् । ङित्वान्न गुणः । तृप्यादिति[2] । "कृप् मृश् स्पृश तृप् दृपः च्लेः सिज्वा" इति । पक्षे ,सच "इट ईटि" ( ८ । २ । २८ ) इति लोपः । "नेटि" ( ७ । २ । ४८ ) इति न वृद्धिः । लघूपधगुणः । अत्राप्सीदिति । "रधादिभ्यश्च" ( ७ । २ । ४५ ) इतीडभावपक्षे "अनुदात्तस्य" ( ६ । ४ । ८८ ) इत्यमागमे "वदव्रज" इति वृद्धिः । अताप्सीत् इति । अमोऽभावे हलन्तवृद्धौ रपरत्वम् । तामि "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपात् । अत्राप्ताम् । अतार्प्तामित्यादि । ननु तृपदृपोः रधादित्वादिड्विकल्पेन भाव्यम् । तत्किमनिट्सु पाठेनेत्याशङ्क्याह—तृपदृपोरित्यादिना । अनिट्[3]सु पाठोऽनुदात्तोपदेशत्वज्ञापनार्थस्तत्फलं चाम्विकल्प इत्यर्थः । ततर्प । ततृपतुः । ततर्पिथ । तत्रप्थ[4] । ततर्प्थ । ततृपिव । ततृप्व । तर्पिता । तर्प्ता । तृप्यात् । तर्पिष्यति । त्रप्स्यति । तर्प्स्यति । अतर्पिष्यत् । अत्रप्स्यत् । अतर्प्स्यत एवमिति । दृप्यति । दृप्येत् । दृप्यतु । अदृप्यत् । अदर्पीत् । अदार्प्सीत् । अद्रपसीत् । ददर्प । ददर्पिथ ददर्प्थ । दद्रप्थ । ददर्पिव । ददृप्व । दर्पिता । दर्प्ता । द्रप्ता । दर्पिष्यति । दर्प्स्यति ।

---

१. उभयपदि दृश्यते इति क० पु० ।

२. अतृप्यादिति क० पु० ।

३. अनिट् पाठ इति क० पु० ।

४. तत्रप्थ इति नास्ति क० पु० ।

३५८. नशेः षान्तस्य [ ८ । ४ । ३६ ]

षान्तस्य नशेर्णत्वं न स्यात्।

३५९. मस्जिनशोर्झलि [ ७ । १ । ६० ]

अनयोर्नुमागमः स्याज्झलि। प्रनंष्टा। "नशेर्वा" ( ८ । २ । ६३ ) इति झल्यपि वा कुत्वम्। णत्वं तु नेति केचित्। प्रनङ्क्ता। प्रणशिता। भूतपूर्वषान्तस्यापि णत्वं न। प्रनङ्क्ष्यति। नशिष्यति। शमु उपशमे।

द्रक्ष्यति। मुह। मोहनं गर्वः इति स्वामी। मुह्यति। मुह्येत्। अमुहत्। पुषादित्वादङ्। मुमोह। मुमोहिथ। मुमोग्ध। मुमोढ। मुमुहिव। मुमुह्व। मोग्धेति। ढत्वे कृते 'झषस्तथो." (८।२।४०) इति धत्वम्। जश्त्वेन गः। मोढेति। ढत्वधत्वष्टुत्वढलोपाः। मुह्यतु। मोहिष्यति। मोक्ष्यति। णश्। प्रणश्यतीति। "उपसर्गादसमासेऽपि" ( ८ । ४ । ४५ ) इति णत्वम्। नश्येत्। नश्यतु। अनश्यत्। नशेरत एत्वमङि वेति। एतत्तु दुर्गादिमतेनोक्तम्। "अत एकहल्मध्ये" ( ६ । ४ । १२० ) इति सूत्रे भाष्ये तूक्तम् "नशिमन्योरलिट्येत्वं छन्दस्यमि पेचिरपि"। अनेशन्मेनकेत्येतत् व्येमानं लिड्भिः पेचिरन्निति। अत्रान्मिटीति पादपूरणार्थानुवाद इति हरदत्तः। अनेशन्निति। नशेर्लुङि पुषादित्वादङ्। झोऽन्तादेशः। अनेशमिति पाठे मिपोऽमादेशः मेनकेति। 'मनेराशिषि वा" इति वुन्। "वुनश्च न" इति प्रत्ययस्थादितीत्वाभावः। अत्र कैयटहरदत्तौ छन्दसीति पूर्वेणापि संबन्धात् भाषायामेत्वाभावः। एवं मेनकेत्यपि भाषायां न भवति। यदीष्यते पृषोदरादिषु द्रष्टव्य इति। व्येमानमिति। विपूर्वान्मतेस्ताच्छील्यादिषु चानश् छान्दसः शपो लुक्। पेचिरन्निति पचेरन्निति प्राप्ते छान्दसे एत्वह्रस्वत्वे क्रियेते। ननाश। नेशतुरिति। "णो नः" ( ६ । १ ।६५) इति नत्वस्यालिड्निमित्तत्वादेत्वाभ्यासलोपौ। नेशिथ। ननंष्ठ। नेशिव। नेश्व। नेशिम। नेश्म। रधादित्वादिड्विकल्पः ॥ ३५७ ॥

झलि नुम्। प्रनंष्टेति। व्रश्चादिना षत्वम्। ष्टुत्वम्। "नशेर्वा" (८।२।६३) इति झल्यपि वा कुत्वम्। णत्वं, तु नेति केचिदिति। यद्यपि[1] "नशे वा" (८।२।६३) इति पदान्ते एव कुत्वमुक्तम्, न झलि सति[2]। अपि च कुत्वेन गकारे झषन्तत्वाभावेन तथोर्धत्वं न प्राप्नोति। तथाप्येतन् परमतोपलक्षणम्। तेहि "मुहां घङ् भो" इति घत्वमेव विहितवन्तः। भावितिभ झलुच्यते। एवं तु तन्मतेन नंष्टा। नंष्ट्वा। नष्टिः इत्यादावपि भवितव्यमित्याहुः। प्रनङ्ग्धेति। नुम्

१. यद्यपीति क० पु०।

२. सत्यपिचेति क० पु०।

### ३६०. शमामष्टानां दीर्घः श्यनि [ ७ । ३ । ७४ ]

शम् दम् अम् तम् श्रम् क्षम् क्लम मद् एषां दीर्घः स्यात् श्यनि । प्रणिशाम्यति । अशमत् । अशमीत् । क्लमु ग्लानौ । क्लाम्यति । क्लामति । अक्लमत् । भौवादिकस्य तु क्लमति । असु क्षेपणे । अस्यति "अस्यतिवक्ति" ( ३ । १ । ५२ ) इत्यङ् ।

### ३६१. अस्यतेस्थुक् [ ७ । ४ । १७ ]

अस्यतेरङि परे थुगागमः स्यात् । आस्थत् । आसिथ । यसु प्रयत्ने ।

### ३६२. यसोनुपसर्गात् [ ३ । १ । ७१ ]

अनुपसर्गाद्यसो वा श्यन् स्यात् कर्तरि सार्वधातुके । यस्यति । यसति । अयसत् । अनुपसर्गात् किम् ? प्रयस्यति ।

---

घत्वं धत्व जश्त्वम् । यद्यपि नायं संप्रति पान्तो न वा भूतपूर्वस्तथापि तैस्तालव्यशकारान्तस्यैव नशेर्णत्वविधानात् विकृतस्य गत्वानङ्गीकाराण्णत्वं तु नेति केचिदित्युक्तम् । भूतपूर्वस्यादि । तत्रान्तग्रहणस्य भूतपूर्वपान्तस्यापि परिग्रहणार्थत्वादिति भावः । प्रनङ्क्ष्यतीति । व्रश्चादिषत्वे "षढोः कः सि" ( ८ । २ । ४१ ) इति कत्वे षः । शमु । इतः सप्त सेटः ॥ ३५९ ॥

शमामष्टानामिति । शमु दमु उपशमे । श्रमु तपसि खेदे च । तमु ग्लानौ । भ्रमु अनवस्थाने । क्षमूष् सहने । क्लमु ग्लानौ । मदी हर्षे । प्रणिशाम्यतीति । "नेर्गद" ( ८ । ४ । १७ ) इति णत्वम् । शाम्येत् । शाम्यतु । अशाम्यत् । आगणान्ताः पुषादय इति मतेऽङ् । अशमत् । शमाद्यवयः पुषादयः इति मते सिचि अशमीत् । "ह्म्यन्त" ( ७ । २ । ५ ) इति न वृद्धिः । शशाम । शेमतुः । शेमिथ । शेमिव । शमिता । शम्यात् । शमिष्यति । क्लमु । क्लामतीति शप्पक्षे "ष्ठिवुक्लमु" (७।३।७५) इति वा दीर्घः । भौवादिकस्य तु क्लमतीत्यादि । एतत्तु परमतेनाक्तमिति ष्ठीवतीति प्रपञ्चितम् । अक्लमत् । अक्लमीत् । चक्लाम । क्लमिता । असु अस्यति वक्तीत्यङिति । यद्यपि पुषादित्वादेव सिद्धयति तथापि यदास्माद् भावकर्मणो "रुपसर्गादस्यत्यूह्योर्वेति" यात्मनेपदं भवति तदाप्यङर्थं लस्य ग्रहणम् । निरास्थत । आस्थत शरश्चैत्रेण येषां तु शमावधयः पुषादयस्तेषां परस्मैपदार्थं च । आस । आसतुः । आसुः । अस्यात् । असिस्यति । अत्र केचित् "नेगद" ( ८ । ४ । १७ ) इत्यादौ सवर्णदीर्घेणायमपि प्रश्लिष्ट इति प्रणश्यतीत्यादौ णत्वमिच्छन्तीति माधवः ॥ ३६० ॥

## ३६३. संयसश्च [ ३ । १ । ७२ ]

संपूर्वाद्यसः श्यन्वा । संयस्यति । संयसति । लुभ गार्ध्ये । लुभ्यति । अलुभत् । "तीषसह" ( ७ । २ । ४८ ) इति वेट् । लोब्धा । लोभिता । ञिमिदा स्नेहने ।

## ३६४. मिदेर्गुणः [ ७ । ३ । ८२ ]

मिदेः शिति परे गुणः स्यात् । मेद्यति । अमिदत् । षूङ् प्राणिप्रसवे । सूयते । "स्वरतिसूति" ( ७ । २ । ४४ ) इति वेट् । असविष्ट । असोष्ट । दीङ् क्षये ।

## ३६५. मीनातिमिनोतिदीङां ल्यपि च [६ । १ । ५०]

एषामात्वं स्यात् ल्यपि । चकारादशित्येज्निमित्ते । अदास्त ।

---

संयसश्च । अनुपसर्गादिति निषेधापवादः । ययसत् । अयसीत् । अयासीत् । ययास । येसतुः । यसिता । लुभ । गार्ध्यमिहाकाङ्क्षा । लुभ्यति । अलुभत् । अलोभीत् । लुलोभ । लोभिष्यति । ञिमिदा । ञित्वात् "ञीतः क्तः" (३ । २ । १८७) इति वर्तमाने कार्यम् । मिन्न इति । आदित्त्वान्नेडभावः । अमिदत् । अमेदीत् । मेदिता । अथ द्युतादिष्वपि । भ्वादावात्मनेपदी पठ्यते । तस्य "द्युद्भ्यो लुङि" ( १ । ३ । ९१ ) इति परस्मैपदे द्युतादित्वादेवाङि सिद्धे पुषादिपाठोऽमेदीदिति निवृत्त्यः[1] । एवं तु द्युतादिपाठे प्रयोजनं चिन्त्यम् । पुषादेरमिदत् इति भविष्यति । भ्वादेस्त्वमेदिष्टेति[2] । हरदत्तस्तु मिदि भौवादिकं[3] नेच्छति । पुषादयः संपूर्णाः । पूङ् । इत आत्मनेपदिनः । प्राणिग्रहणमुपलक्षणम्[4] । प्रसूताः शालयः इत्यादिदर्शनात् । अन्ये तु तत्रापि चैतन्यमाहुः । सूयेत । सूयताम् । असूयत । असविष्टेति । गुणोऽवादेशः इति । असविढ्वम् ।असविध्वम् । असोष्टेति । इडभावे गुणः । असोषाताम् । असोषत । असोढ्व । सुषुवे । सुषुविषे । सुषुविवहे । सुषूवहे । अत्रापि परत्वादिड् वा । केचित् क्रादिनियमान्नित्यमिटमाहुः । सोता । सविता । सोषीष्ट । सविषीढ्वम् । सविषीध्वम् । सोष्यते । सविष्यते । दीङ् । अनिट् । दीयते । दीयेत । दीयताम् । अदीयत ॥ ३६३ ॥

मीनाति । मीञ् हिंसायाम् । क्र्यादिः । डुमिञ् प्रक्षेपणे । स्वादिः । दीङ् क्षये ।

---

१. निवृत्त्यर्थमिति क० पु० ।

२. भ्वादिस्त्वमेदिष्टे क० पु० ।

३. मिदं भौवादिकमिति ख० पु० ।

४. प्रमाणिग्रहणमिति क० पु० ।

३६६. दीङो युडचि क्ङिति [ ६ । ४ । ६३ ]

दीङः परस्याजादेः क्ङितो युडागमः स्यात् । दिदीये । दाता । जनी प्रादुर्भावे ।

३६७. ज्ञाजनोर्जा [ ७ । ३ । ७८ ]

अनयोर्जादेशः स्यात् शिति । जायते । "दीपजन" ( ३ । १ । ६१ ) इति वा चिण् ।

---

एज्निमित्ते इति । गुणवृद्ध्यादिप्रवर्तके इत्यर्थः । इय च विषयसप्तमी । यत्र प्रत्यये एच् स्यात् तस्मिन् बुद्धिस्थे इत्यर्थः । परसप्तम्या तु-उपदायो वर्तते इत्यत्र "एरच" स्यात् न घञ् । प्रदास्तेति[1] । "स्थाघ्वोरिच्च" ( १ । २ । १७ ) इत्येतत्तु न भवति । दीङोऽनुकरणे दारूपासम्भवेनाघुत्वात् । एव चास्य प्रणिदातेत्यादौ[2] "नेर्गदनद" ( ८ । ४ । १७ ) इति णत्वमपि न भवतीत्युक्तम् । अन्ये तु "दङीः प्रतिपेधः स्थाघ्वोरित्वे" इति वार्त्तिके विषयविशेषे एव घुसंज्ञानिषेधादन्यत्र कृतात्वस्य घुत्वात् प्रणिदातेत्यादौ णत्वं भवतीत्याहुः । अदासाताम् । परस्मैपदेष्वित्युक्तर्न सगिटौ ॥३६६॥

दीङो । दीङ इति पञ्चमी व्याख्यानात् । तथा चार्चीत सप्तम्या पष्ठी कल्प्यते "तस्मादित्युत्तरस्य" ( १ । १ । ६७ ) इति वचनात् । सप्तमीनिर्देशस्तूतरार्थः । तदादिविध्यर्थश्चेति मनसिकृत्य व्याचष्टे—दीङ. परस्याजादेरित्यादि । दिदीयेति । परमपि यणं बाधित्वा नित्यत्वादादौ युट् । स च "एरनेकाच" ( ६ । ४ । ८२ ) इति यणि कर्तव्ये "असिद्धवदत्र" ( ६ । ४ । २२ ) इति नासिद्ध. । "वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" ( वा० ) इति वचनात् युड्विधानसामर्थ्याच्च । सति हि यणि दिय इति भाव्यम् । तत्र किं युटा? न च यद्वयश्रवणे विशेषः । "यणो मयो द्वे वाच्ये"(वा०) इत्यपि सिद्धेः । मयः परस्य यण इत्यपि व्याख्यानात् । व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषो नास्तीत्यप्याहुः । दिदीयाते । दिदीयिढ्वे । दिदीयिध्वे । "विभाषेटः" ( ८ । ३ । ७९ ) इति वा ढत्वम् । युटः एवेण परत्वात् । ये तु तत्राङ्गादित्यनुवर्तयन्ति तेषां युटः प्रत्ययभक्तत्वादिणन्तादङ्गात्परत्वं धस्य युटा विहितमिति "इणः षीध्वम्" ( ८ । ३ । ७८ ) इति नित्यमेव ढत्वं भवति । द्वयमप्येतदाकरे स्थितम् । दासीष्ट । दास्यते । जनो ईदित्त्वं निष्ठायामनिडर्थम् । प्रादुर्भावः[3] उत्पत्तिरभिव्यक्तिर्वा । अत्रायमकर्मकः । अन्तर्भावितण्यर्थत्वे तु सकर्मकोऽपि भवति । तथा "अचः कर्तृयकि" ( ६ । १ । १९५ ) इत्यत्र भाष्ये जायते स्वयमेवेति कर्मकर्तोदाहृतः ॥३६६॥

ज्ञाजनोर्जा । ज्ञाऽवबोधने । शितीति कर्मधारयात्सप्तमी । तेनेत्संज्ञकशकारादावित्यर्थो ज्ञेयः । तथा च जज्ञे इत्येशि न भवति । "अतो दीर्घो यञि" ( ७ । ३ । १०१ )

---

१. प्रदास्तेति नास्ति क० पु० ।
२. त्यादे रिति ख० पु० ।
३. प्रादुर्भाव न मुत्पत्तिरिति क० पु० ।
४. मकर्तृकमिति क० पु० ।

## ३६८. जनिवध्योश्च [ ७ । ३ । ३५ ]

अनयोरुपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च । अजनि । अजनिष्ट । जज्ञे । दीपी दीप्तौ । अदीपि । अदीपिष्ट । एवं पूरी आप्यायने । पद गतौ । पद्यते ।

## ३६९ चिण् ते पदः [३ । १ । ६० ]

पदश्लेश्चिण् स्यादेकवचने तशब्दे परे । प्रापपादि । अपत्साताम् । पेदे । बुध अवगमने । अबोधि । "लिङ्सिचौ" (१। २। ११) इति कित्वम्।

---

इत्येव सिद्धे दीर्घोच्चारणं "ष्वादीनां ह्रस्वः" ( ७ । ३ । ८० ) इति ह्रस्वो मा भूदिति । जायते । "ये विभाषा" ( ६ । ४ । ४३ ) इत्यात्वविकल्पस्तु न भवति । जादेशविधानसामर्थ्यात् ॥३६७॥

जनिव । वध हिंसायामिति । भ्वादिषु प्रकृत्यन्तरमस्ति "भवकश्चेन्न विद्येत वधकोऽपि न विद्यते" इति दर्शनात् । तस्यायं वृद्धिनिषेधः । यस्तु हनादेशो वधिस्तस्यादन्तत्वादेव वृद्धेरप्रसङ्ग एव । उपधाया वृद्धिर्न स्यादिति अनन्तरस्य निषेध्यस्याभावात् व्यवहिताऽपि वृद्धिरेव निषिद्ध्यते इति भावः । कृति किम् ? जजान । अजनि इति । च्लेश्चिणि कृते "चिणो लुक्" (६।४। १०४, इति तशब्दस्य लोपः । अजनिषाताम् । अजनिषत । जज्ञे इति । "गमहन" ( ६ । ४ । ९८) इत्युपधालोपः । तस्य स्थानिवत्त्वाद् द्वित्वम् । श्चुत्वेन नस्य ञः । जज्ञाते । जज्ञिध्वे । जज्ञिवहे । जनिता जनिषीष्ट । जनिष्यते । दीपी । दीप्यते । अदीपीति "दीपजन" ( ३ । १ । ६१ ) इति चिण् । अदीपिष्टेति । चिणभावे सिच् । दिदीपे । दीपिता । दीपिषीष्ट । दीपिष्यते । एवमिति । पूर्यते । अपूरिष्ट । पुपूरे । पूरिता । पूरिषीष्ट । पूरिष्यते । पद । इतस्त्रयोऽनिटः ॥३६८॥

चिण् ते । एकवचने तशब्दे इति । अस्यात्मनेपदित्वेनान्यस्यासंभवादिति भावः । प्रापपादीति । "चिणो लुक्" ( ६ । ४ । १० ) "अत उपधायाः" (७।२।११०) "नेर्गद" ( ८ । ४ । ४५ ) णत्वम् । अपत्साताम् । अपत्स्यत । "झलो झलि" ( ८ । २ । २६ ) इति सलोपः चर्त्वम् । अपत्याः । पेदे । पत्ता । पत्सीष्ट । पत्स्यते । बुध । बुध्यते । अबोधीत् । "दीपजन" ( ३ । १ । ६१ ) इति वा चिण् । पक्षे सिच् । अबुध्स्त इति स्थिते उपधाग्रहणमाशङ्क्याह—"लिङ्सिचौ" ( १ । २ । ११ ) इति कित्वम् । अबुद्धेति । "झलो झलि" (८ । २ । २६) इति सलोपः धत्वम् । अभुत्साताम् इति । "एकाचो बशो भष्" इति भष्भावः । अबुद्धाः । अभुत्साताम् । अभुद्ध्वम् । अभुत्सि । बुबुधे । बोद्धा । "लिङ्सिचौ" ( १ । २ । ११ ) इति कित्वान्न

अबुद्ध । अभुत्साताम् । बुबुधे । बोद्धा । भुत्सीष्ट । भोत्स्यते । णह बन्धने । "नहो धः" ( ८ । २ । ३४ ) अनात्सीत् । अनद्ध ।

इति दिवादिप्रक्रिया

—:०:—

---

गुणः । भुत्सीष्ट । भोत्स्यते । अभोत्स्यत । णह । उभयपदी । नह्यति । नह्यते । अनात्सीदिति । "वदव्रज" ( ७ । २ । ३ ) इति । धस्य चर्त्वेन तः । अनद्धाम् । "झलो झलि" ( ८ । २ । २६ ) इति सलोपः । "झषस्तथोः" इति धत्वम् । ननाह । नेहतुः । नेहिथ । ननद्ध । नेहे । नेहिषे । नेहिढ्वे । नेहिध्वे । नद्धा । ॰ ह्यात् । नत्सीष्ट । नत्स्यति । नत्स्यते ॥३६६॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रिया व्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमद् दैवादिकी प्रक्रिया ॥१॥

इति दिवादिः ॥२००॥

सं० १९१४ । वर्षे फाल्गुनवदि ॥४॥

—:०:—

# अथ स्वादयः

षुञ् अभिषवे

**२७०. स्वादिभ्यः श्नुः [ ३ । १ । ७३ ]**

स्वादेः श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके। शपोऽपवादः। अभिषुणोति। सुनुतः। सुन्वन्ति। सुन्वः। सुनुवः। सुनुवहे। सुन्वहे। असावीत्। असोष्ट। सुषुविथ।

---

षुञ्। अभिषवः पीडनं, स्नानं, सुरासन्धानादिः। स्नानेऽयमकर्मकः। इत आरभ्य धूञन्ताः षडुभयपदिनः। स्तृञन्ताश्चत्वारोऽनिटः।

स्वादिभ्यः। अभिषुणोतीति "धात्वादेः षः सः" (६।१।६४) "उपसर्गात्सुनोति" (८।३।६५) इति षत्वम्। णत्वम्। श्नोः सार्वधातुकत्वात् "सार्वधातुकमपित्" (१।२।४) इति ङित्त्वान्न धातोर्गुणः। तिपि तु[1] श्नोर्गुणः। सुनुत इति। तसो ङित्त्वान्न गुणः। सुन्वन्तीति। "हुश्नुवोः" (६।४।८७) इति यण्। सुन्वः। सुनुवः। "लोपश्चास्यान्यतरस्यां म्वोः" (६।४।१०७) इति वा उलोपः। सुनोमीत्यत्र तु परत्वाद् गुणे कृते उर्नास्तीति लोपाभावः। सुनुते। सुन्वाते। सुन्वते। सुन्वहे। सुनुवहे इति वा उलोपः। सुनुयात्। सुन्वीत। सुनोतु। सुनुतात् वा। "उतश्च प्रत्ययात्" (६।४।१०६) इति हेर्लुक्। सुनु। सुनवानि। आटि पित्त्वाद् ङित्त्वं बाधित्वा गुणः। सुनुताम्। सुन्वाताम्। सुनुष्व। सुनुते। असुनोत्। असुनवम्। असुनुत। असुन्वि। असावीत्। अनिट्त्वेऽपि "स्तुसुधूञ्भ्यः" (७।२।७२) इतीट्। सिचि वृद्धिः। "प्राक्सितादड्व्यवायेऽपि" (८।३।६३) इति षत्वम्। असोष्टेति। परस्मैपदेष्वित्युक्तेरिडभावः। "स्नुसुधातूनां लिटं विना इड् वा" इति केचिदिति मते असविष्ट। सुषाव। सुषुविथ इति। क्रादिनियमादिट्। लिटं विनेत्युक्तेर्मतान्तरेऽपि न्याय्यमिट्। सोता। सविता। सूयात्। सोषीष्ट। सविषीष्ट ॥ १७० ॥

---

१. तिपि तु श्नोर्गुणः इति नास्ति ह० पु०।

३७१. सुनोतेः स्यसनोः [ ८ । ३ । ११७ ]

स्ये सनि च परे सुञः षो न स्यात्। विसोष्यति। मतभेदे वेट्। डुमिञ् प्रक्षेपणे। "मीनातिमिनोति" (६ । १ । ५०) इत्यात्त्वम्। अमासीत्। अमास्त। ममौ। मिम्युतुः। चिञ् चयने।। अचैषीत्। अचेष्ट।

३७२. विभाषा चेः [ ७ । ३ । ५८ ]

अभ्यासात् परस्य चिञः कुत्वं वा स्यात् सनि लिटि च। प्रणिचिकाय। चिचाय। चिक्ये। चिच्ये। चेषीष्ट। स्तृञ् आच्छादने।

३७३. ऋतश्च संयोगादेः [ ७ । २ । ४३ ]

ऋदन्तात् संयोगादेः परयोर्लिङ्सिचोरिड् वा स्यात्तङि। अस्तरिष्ट। अस्तृत। स्तरिषीष्ट। स्तृषीष्ट। वृञ् वरणे। अवारीत्।

---

सुनोतेः। विसोष्यतीति। "उपसर्गात्" (८ । ३ । ८७) इति प्राप्तं षत्वं निषिध्यते मतान्तरे सेडिति। तेन विसविष्यति। विसविष्यते। विसोष्यते इत्याद्यपि भवति। 'स्तुसुधातूनां लिटं विनेड् वेति" केचित् इत्युक्तेरिति भावः। डुमिञ्। डुइत्। "ड्वितः क्त्रिः" (३ । ३ । ८८) मिनोति। मिनुते। मिनुयात्। मिन्वीत। मिनोतु। मिनुताम्। अमिनोत्। अमिनुत। अमासीत् इति। "यमरम" (७ । २ । ७३) इतीट्सकौ। अमासिष्टाम्। अमास्तेति। आत्मनेपदेति। अमासाताम्। ममाविति। प्रागेव प्रत्ययोत्पत्तेरात्वम्। तस्यानैमित्तिकत्वात् "द्विर्वचनेऽचि" (१ । १ । ५९) इति न स्थानिवत्त्वम्। मिम्यतुरिति। एज्निमित्तत्वाभावान्नात्वम्। "एरनेकाचो" (६ । ४ । ८२) इति यण्। ममिथ। ममाथ। मिम्यिव। मिम्ये। मिम्याते। मिम्यिरे। माता। मीयात्। मासीष्ट। मास्यति। चिञ्। चिनोति। चिनुते। अचैषीत्। अचेष्ट ॥ ३७१ ॥

विभाषा। प्रणिचिकायेति। वृद्ध्यायादेशौ। "नेर्गद" (८ । ४ । ४५) इति णः। चिचयिथ। चिचेथ। चिकेथ। चिच्यिव। चेता। चीयात्। चेषीष्ट। चेष्यते। स्तृञ्। स्तृणोति। स्तृणुते। स्तृणुयात्। स्तृण्वीत। स्तृणोतु। स्तृणवानि। स्तृणुताम्। स्तृणवै ॥ ३७२ ॥

ऋतश्च। अप्राप्तविभाषेयम्। तङीति। एतच्च सिच एव विशेषणम्। न लिङः असम्भवात्। न चैवं तस्य परस्मैपदे प्रसङ्गः। वलादेरित्यधिकारात्। आस्तृतेति। इडभावे "उश्च" (१ । २ । १२) इति कित्त्वाद् गुणाभावे 'ह्रस्वादङ्गात्" (८ । २ । २७) इति सिचो लोपः। अस्तरिषाताम्। अस्तरिष्टेति। अस्तृताम्।

## ३७४. लिङ्सिचोरात्मनेपदेषु [ ७ । २ ४२ ]

वृङ्वृञोर्ऋतश्च परयोर्लिङ्सिचोरिट् वा स्यात्तङि। "वृतो वा" (७ । २ । ३८ ) इति वा दीर्घः। अवरिष्ट । अवरीष्ट । अवृत । तासौ सेट्कत्वात् थलीट्। ववरिथ। क्रादित्वान्नेट्। ववृव। "न लिङि" (७।२।३९) वरिषीष्ट । वृषीष्ट । धूञ् कम्पने । अधावीत् । अधविष्ट । अधोष्ट । हि गतौ वृद्धौ च

तस्तार। "ऋतश्च सयोगादेर्गुणः" (७ । ४ । १०) इति गुणः। तस्तरतुः। तस्तर्थ। "अचस्तास्वत्" ( ७ । २ । ६१ ) इति इतीण्निषेधः। तस्तरिव। क्रादिनियमादिट्। तस्तरे। तस्तरिषे। तस्तरिढ्वे। तस्तरिध्वे। तस्तरिवहे। स्तर्ता। "गुणोऽर्तिसंयोगाद्योः" ( ७ । ४ । २९ ) इति गुणः। स्तर्यात्। स्तरिषीष्टेति। "ऋतश्च संयोगादेः" ( ७ । २ । ४३ ) इति वेट्। स्तृषीष्टेति। इडभावे "उश्च" ( १ । २ । १२ ) इति किस्वान्न गुणः। "ऋद्धनोः स्ये" ( ७ । २ । ७० ) इतीट्। स्तरिष्यति। स्तरिष्यते। वृञ्[१]। इतो द्वौ सेटौ। वृणोति। वृणुते। अवारीदिति। सिचि वृद्धिः। "इट ईटि" (८ । २ । २८ ) इति सिचो लोपः। अवारिष्टाम्। "सिचि च परस्मैपदेषु" ( ७ । २ । ४० ) इति निषेधात् "वृतो वा" ( ७ । २ । ३८ ) इति न दीर्घः। अवृतेति। इडभावे "उश्च" ( १ । २ । १२ ) इति किस्वान्न गुणः। "ह्रस्वादङ्गात्" (८ । २ । २७ ) इति सिचो लोपः। अवरिषाताम्। अवरीषाताम्। अवृषाताम्। ध्वमोडभावे नित्यं ढत्वम्। अवृढ्वम्। इट्पक्षे तु "विभाषेटः" ( ८ । ३ । ७९ ) इति वा। अवरिध्वम्। "वृतो वा" ( ७ । २ । ३८ ) इति दीर्घपक्षे अवरीढ्वम्। अवरीध्वमिति पञ्च रूपाणि। ववार। वव्रतुः। वव्रुः।

ननु क्रादिनियमात् कथं ववरिथेति इट्? तत्राह—सेटकत्वात्थलीट्। क्रादित्वादेव सिद्धे "बभूवाततन्थजगृम्भववर्थ" इति निगमे ( ७ । २ । ६४ ) इति वृञस्थलीडभावनिपातनं नियमार्थम्। छन्दस्येव ववर्थेतीडभावः साधुस्तेन भाषायां वृञस्थलीडस्त्येवेति भावः। ववरिथेति। अलिटोत्युक्तेरिटो न दीर्घः। ववृव। ववृम। वव्रे। ववृषे। ववृवहे। वरिता। वरीता। रिङादेशः व्रियात्॥ ३७३॥

न लिङि। वृत इटो लिङि न दीर्घः। वरिष्यति। वरीष्यति। धूञ्। अमुं ह्रस्वान्तमपि पठन्ति। तथा च कविरहस्ये—

'धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्। वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चम्पकमञ्जरीश्च" ॥१॥ इति।

३७५ हिनुमीना [ ८ । ४ । १५ ]

उपसर्गस्थान्निमित्तात् परस्य हिनुमीना एतयोर्नस्य णः स्यात्। प्रहिणोति।

३७६. हेरचङि [ ७ । ३ । ५६ ]

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। अचङि किम्? अजीहयत्। जिघ्यतुः।

३७७. धिन्विकृण्व्योर च [ ३ । १ । ८० ]

आभ्यामुप्रत्ययः स्यादकारोऽन्तादेशश्च कर्तरि सार्वधातुके। उप्रत्ययस्याशित्त्वादतो लोपः। अल्लोपस्य स्थानिवत्त्वान्नोपधागुणः। कृणोति।

---

धूनोति। धूनुते। अधावीदिति। दीर्घान्तस्य "स्तुसुधूञ्भ्यः परस्मैपदेषु" (७।२।७२) इति नित्यमिट्। ह्रस्वान्तस्य त्वनिट्त्वादधौषीत्। अधोविष्टामिति विशेषः। अधविष्ट। अधोष्टेति। "स्वरत्यादिना" (७।२।४४) वेट्। दुधाव। दुधुवतुः। दुधविथ। दुधोथ। अत्र "परत्वादिड् वा" इति वादिनां द्वयोरपि तुल्यं रूपम्। ये तु क्रादिनियमान्नित्यमिटमाहुः। तेषां ह्रस्वान्ते द्वैरूप्यमेव भारद्वाजनियमात्। दुधुवे। धोता। धविता। धूयात्। ,धोषीष्ट। धविषीष्ट। इतश्चत्वारः परस्मैपदिनः। आद्योऽनिट्॥ ३७४॥

हिनुमीना। हि गतौ। स्वादिः। मीञ् हिंसायाम्। क्र्यादिः। रूपानुकरणार्थमविभक्तिको निर्देशः। यद्येवम्, प्रहिणुत इत्यादाविव स्यात्, न प्रहिणोतीत्यत्र नैष दोषः। एकदेशविकृतस्यानन्यत्वात् विकृतेऽपि भविष्यति। अहैषीत्॥ ३७५॥

हेरचङि। निघायेति। "कुहोश्चुः"। "अभ्यासे चर्च"। वृद्धयादि। जिघ्यतुः। जिघयिथ। जिघेथ। अचङीति किम्? अजीहयत्। [( हेरचङि[1] प्रतिषेधानर्थक्यं ण्यन्तस्य शब्दान्तरत्वात्। ज्ञापनाया तु) हेरचङोऽन्यत्र ण्यधिकस्यापि ग्रहणं भवतीति। तेन जिघापयिषति[2] इत्यत्रापि सिद्धम्। हाता। हायात्। हेष्यति। कृवि। इत आगणान्ताः सेटः॥ ३७६॥

धिन्विकृण्व्योर च। धिविकृण्व्योरित्येव वाच्ये नुमनुषक्तयोर्ग्रहणं नुम औपदेशिकत्वज्ञापनार्थमित्यन्ये। अत्र सौत्रक्रमानुरोधात् पूर्वमकारोऽन्तादेशार्थस्ततउप्रत्यय इति व्याख्येयम्। पूर्वमुप्रत्यये सतो लोपो न स्यात्। आर्धधातुकोपदेशे यदकारातं तस्यातो लोप इति स्थितेः। उप्रत्ययस्येति अशित्त्वादार्धधातुकत्वं तेनातो

---

१. हेरचङि प्रतिषेधानर्थक्यं ण्यन्तस्य शब्दान्तरत्वात् ज्ञापनाया तु इति पाठो नास्ति ख० पु०।
२. जिघापयिषतीति क० पु०।

अकृण्वीत् । चकृण्व । कृण्विता । कृण्व्यात् । धिवि प्रीणने । धिनोति । अधिन्वीत् । दम्भु दम्भने । "श्रन्थिग्रन्थिदम्भिभ्यः परो लिपित् किद् वक्तव्यः" (वा० ) । "असिद्धवदत्राभात्" ( ६ । ४ । २२ ) इति नलोपस्यासिद्धत्वादेत्त्वाप्राप्तौ "किति लिटि दम्भ एत्त्वं वक्तव्यम्" । देभतुः । देभुः । ददम्भिथ । केषांचिन्मते ददम्भतुः । ददम्भुः । श्रन्थग्रन्थदम्भां थलि लोपैत्त्वे चेति केचित् । देभिथ । दम्यात् । अशूञ् व्याप्तौ । अश्नुते । संयोगपूर्वत्वादुलोपो न । अश्नुवहे । आशिष्ट । आष्ट । आक्षाताम् । अत आदेः ।

---

लोप इत्यर्थः । यद्यप्यङ्कित्युप्रत्ययस्य गुणे कृते "अतो गुणे" इति पररूपेणापि सिद्धम् । तथापि ङ्कित्यतोर[1] लोपस्योपयोगो ज्ञेयः । ननु यद्ययमशित्ततो ङिदपि न स्यात् । ततश्च "पुगन्त" ( ७ । ३ । ८६) इति गुणेन भाव्यम्, अत आह—अतो लोपस्य स्थानिवत्त्वादिति । "अचः परस्मिन्" ( १ । १ । ५७ ) इत्यनेन । तदर्थमेव चाकारो विधीयते । अन्यथा प्रक्रियालाघवाय लोप एव विधीयेत । कृणोतीति । "ऋवर्णान्निस्य णत्वं वाच्यम्" ( वा० ) इति णत्वम् ।

कृणोतीति । "ऋवर्णान्निस्य णत्वं वाच्यम्" ( वा० ) इति णत्वम् । कृणुतः[2] कृण्वन्ति । कृणुयात् । कृणोतु । अकृणोत् । कृञ् हिंसायामित्यपरः पठ्यते । तस्याप्येतान्येव सार्वधातुके रूपाणि । आर्धधातुके तु करोतिवन्नेयानि । धिवि । धिनोतीति । इदित्वान्नुम् । वकारस्याकारः । एतौ च धिन्वकृण्वी भ्वादौ पठ्येते । स्वादावप्यनयोः पाठं केचिदाहुः । तन्मताश्रयेणेह चार्थौ दर्शितौ । स्वादिपाठे त्वनयोः प्रयोजनं चिन्त्यम् । दम्भु । दम्भेः लोकरञ्जनार्थमेव कर्मानुष्ठानम् । दभ्नोतीति । "अनिदिताम्" ( ६ । ४ । २४ ) दभ्नुतः उवङ् । दभ्नुवन्तीति । संयोगपूर्वत्वान्न उलोपः दभ्नुयात् । दभ्नोतु । संयोगपूर्वत्वान्न हेर्लुक् । दभ्नुहि । दभ्नवानि । अदभ्नोत् अदम्भीत् । ददम्भ । श्रन्थीत्यादि । श्रन्थ ग्रन्थ सन्दर्भे । संयोगान्तत्वादप्राप्तौ वचनम् । कित्वान्नलोपः । एत्त्वाप्राप्ताविति । "अत एकहल्मध्ये" ( ६ । ४ । १२० ) इति विहितस्यैत्वस्य संयुक्तहल्मध्यस्थत्वेनाप्राप्तौ सत्यामुच्यते इत्यर्थः । एत्त्वं वाच्यमिति । अभ्यासलोपस्याप्युपलक्षणम् । यद्यप्यस्मिन्नप्येत्त्वे नलोपोऽसिद्ध एव । तथापि आरम्भसामर्थ्यात् संयुक्तहल्मध्यस्थस्यापि भविष्यति । ददम्भिथेति । "अपित् किद् वक्तव्य" इति वचनात् कित्वान्नलोपः । किति लिटीति वचनान्नैत्त्वमिति भावः ।

---

१. अतो लोपस्येत्यारभ्य—आहेत्यन्तो नास्ति ( ) रेखाङ्कितो भागः ख० पु० ।

२. कृणुतः । कृण्वन्तीति नास्ति क० पु० ।

## ३७८. अश्नोतेश्च [ ७ । ४ । ७२ ]

दीर्घादभ्यासवर्णात् परस्याश्नुतेर्नुडागमः स्यात् लिटि । आनशे ।

## इति स्वादिप्रक्रिया

केचित्तु श्रन्थि:ग्रन्थिदम्भिस्वञ्जीना वेति वार्त्तिकं पठन्तः कित्त्व विकल्पयन्ति, तन्मतेनाह—केषांचिन्मते ददम्भतुरिति । कित्त्वाभावपक्षे नलोपः एत्वं च नास्तीत्यर्थः । ञिडपित् किदिति न्यासादिमतमुदाहृत्य पितोऽपि लिटः कित्त्वमेतदिति सुधाकरादिमतमुपदर्शयति श्रन्थेत्यादिना । अत्र पक्षे थलोत्युपलक्षणम् पिन्मात्रस्य । तेन तिप्सिपोरप्युदाहार्यम् । हरदत्तस्तु कि'मद पिदर्थमुतापिदर्थं (मुतापि चेति[1] संदिह्यार्थं सतत्त्वं देवा ज्ञातुमर्हन्तीत्याह ) । दम्भिता । दम्भ्यादिति । कित्त्वान्नलोपः । अशू । आत्मनेपदी वेट्कः । अश्नुनेति । ङित्त्वान्न गुणः । सयोगपूर्वत्वान्न यण् । "उवङ् । 'शात्" ( ८ । ४ । ४४ ) इति श्चुत्वनिषेधः । अश्नुवति । "आत्मनेपदेष्वनतः" ( ७ । १ । ५ ) इत्यदभावः । अश्नुवते । सयोगपूर्वत्वादुलोपो नेति । "लोपश्चास्यान्यतरस्यां म्वोः" ( ६ । ४ । १०७ ) इति प्राप्तः । एतत्तु दम्नोतावपि समानत्वात्तत्रैव वक्तुं युक्तम् । अश्नुवीत । अश्नुवीताम् । अश्नुवै । आश्नुत[2] । आशिष्ट । आष्ट । "झलो झलि" ( ८ । २ । २१ ) इति सिज्लोपः । "व्रश्च" ( ८ । २ । ३६ ) इति षत्वम् । ष्टुत्वम् । आक्षाताम् । षत्वं कत्वं षः । आक्षत । आशिष्ठाः । आष्ठाः । आक्षाथाम् । आड्ढ्वम् । आक्षि ॥३७७॥

आनशे इति । द्वित्वे हलादिः शेषेऽभ्यासदीर्घः । आनशिषे । आनक्षे । आनशिध्वे । आनड्ढ्वे । आनशिवहे । आनश्वहे । केचित् क्रादिनियमान्नित्यमिटमाहुः । अशिता । अष्टा । अशिषीष्ट । अक्षीष्ट । अशिष्यते । अक्ष्यते[3] । आशिष्यत् । आक्ष्यत् ॥ ३७८ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शैववंशान्वतो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् स्वाद्याश्रया प्रक्रिया ॥ १ ॥ इति ।

इति स्वादिगणः । स्वादि १२५ । श्रीः ।

— :०: —

१. अन्ये ञानद्योर्नुमो विकल्प इति क० पु० ।
२. उतापिवेति सत्वदेवाः इति क० पु० ।
३. अक्ष्यते इति क० पु० ।

# अथ तुदादयः

तुद व्यथने

३७९. तुदादिभ्यः शः [ ३ । १ । ७७ ]

तुदादेः शः प्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोऽपवादः । ङित्त्वान्न गुणः । तुदति । तुदते । भ्रस्ज पाके । "ग्रहिज्या" इति संप्रसारणम् । सस्य जश्त्वेन दः । श्चुत्वम् । भृज्जति । "व्रश्च" इति षत्वम् । संयोगादिलोपः । अभ्राक्षीत् । अभ्रष्ट ।

---

तुद व्यथने । इतः परस्मैपदिनः पञ्चानिटः उभयपदिनः । तुदादि । शपैव सिद्धे किं शेनेत्याह–ङित्त्वान्न गुणः इति । "सार्वधातुकमपित्" इत्यपित्त्वात् ङित्त्वमस्य भवतीत्यर्थः । प्रयोजनान्तरमप्यस्ति तुदती तुदन्ती स्त्रीकुले वेति "आच्छीनद्योर्नुम्" ( ७ । १ । ८० ) इति नुमो विकल्पः । शपि तु "शप्श्यनोर्नित्यम्" ( ७ । १ । ८१ ) इति स्यात् । तुदेत् । तुदतु । तुद । तुदताम् । तुदस्व । अतुदत् । अतुदत । अतौत्सीत् । अतौत्ताम् । अतुत्त । अतुत्साताम् "लिङि सिचौ" ( १ । २ । ११ ) इति कित्त्वम् । अतुद्ध्वम् । तुतोद । तुतोदिथ । तुतुदिव । तुतुदे[1] । तुतुदिषे । तुतुदिवहे । क्रादिनियमादिट् । तोत्ता । तुद्यात् । तुत्सीष्ट । तोत्स्यति । तोत्स्यते । भ्रस्ज । भ्रस्जो इत्यपपाठः । भृष्ट इत्यत्र "ओदितश्च" ( ८ । २ । ४५ ) इति निष्ठानत्वप्रसङ्गात् । संप्रसारणम् । शप्रत्ययस्य ङित्त्वात् । सस्य जश्त्वेन दः इति । "झलां जश् झशि" ( ८ । ४ । ५३ ) इत्यनेन । श्चुत्वमिति । "स्तोः श्चुना श्चुः" ( ८ । ४ । ४० ) इत्यनेन । दस्य ज इत्यर्थः । श्चुत्वं प्रति जश्त्वस्यासिद्धत्वं तु न भवति । "न मु ने" ( ८ । २ । ३ ) इत्यत्र नेति योगविभागादिति भावः । यद्वा जश्त्वस्यासिद्धत्वादादौ सस्य श्चुत्वं शकारः । तस्य जश्त्वेन जकारो भविष्यति । अत्र पक्षे एवं योज्यम् । सस्य जश्त्वे कृते दो भवति इति यदुच्यते तन्न । अत्र हेतुमाह—श्चुत्वमिति । जश्त्वस्यासिद्धत्वादादौ श्चुत्वमेव भवति । ततो जश्त्वमित्यर्थः । भृज्जते । भृज्जेत् । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत । "व्रश्च" ( ८ । २ । ३६ ) इति षत्वम् । संयोगादिलोपः । अत्र षत्वस्यासिद्धत्वादादौ "स्कोः" ( ८ । २ । २९ ) इति सलोपः ततः षत्वमिति क्रमो ज्ञेयः । अभ्राक्षीदिति । लुङ् सिच इट् । "वदव्रज" ( ७ । २ । ३ ) इति वृद्धिः । "षढोः कः सि" ( ८ । २ । ४१ ) षत्वम् । षः । अभ्राष्टाम् । अभ्राक्षुः । अभ्रष्टेति । तशब्दे "झलो झलि" इति सिचो लोपे संयोगादिलोपे षत्वं ष्टुत्वम् । अभ्रक्षाताम् । अभ्रड्ढ्वम् । अत्र पक्षे वक्ष्यमाणो रमागमोऽपि

---

१. तु तुदे इति नास्ति क० पु० ।

## ३८०. भ्रस्जो रोपधयो रमन्यतरस्याम् [ ६ । ४ । ४७ ]

भ्रस्जो रेफस्य उपधायाः सकारस्य च स्थाने रमागमो वा स्यादार्धधातुके। "मिदचोऽन्त्यात् परः" ( १ । १ । ४७ )। रोपधयोः स्थाने विहितत्वात् तयोर्निवृत्तिः। अभार्क्षीत्। क्ङिति तु संप्रसारणं बाधकम्। अभ्यासस्य संप्रसारणम्। उरत्। बभर्ज। बभ्रज्ज। संयोगात्परस्य लिटोऽकित्त्वादतुसादौ न संप्रसारणम्। बभर्जतुः। बभ्रज्जतुः। बभर्जे। बभ्रज्जे। भर्ष्टा। भ्रष्टा। भृज्यात्। मुच्लृ मोक्षणे।

---

द्रष्टव्यः। तेनाभ्राक्षीत्। अभ्राष्टाम्। अभर्ष्ट[1]। अभार्ष्टामित्याद्यूह्यम्। अत्रोदाहरणं तु आचार्याणां वैचित्र्यार्थम् ॥ ३७९ ॥

भ्रस्जो। भ्रस्ज इति संबन्धे षष्ठी। रोपधयोरिति तु स्थानषष्ठीत्याह—भ्रस्जेरित्यादि। स्थाने इति। ननु रोपधे द्वौ स्थानिनौ तद्वदादेशावपि द्वौ स्याताम् चलीक्लृप्यते इति लत्ववत्। अथाप्युपादेय गतसंख्या विवक्ष्येत। तथापि यथाक्रम भिन्नदेशयोर्द्वयोरेकं कर्तुमत आह—रमागम इति। नायमादेशो मित्करणसामर्थ्यादिति भावः। नन्वागमोऽपि द्वयोर्भिन्नदेशयोरेकः कर्तुं न शक्यते इत्यत आह—"मिदचोऽन्त्यात्परः" ( १ । १ । ४७ ) इति। भ्रस्ज एवायमागमः स च तस्यान्त्यादचः परः क्रियते इत्यर्थः। यद्येवं रोपधयोः श्रवणं प्रसज्येत तत्राह–रोपधयोरित्यादि। अयं भावः मित्त्वसामर्थ्यादन्त्यादचः परस्ताद् भवति। स्थानषष्ठीनिर्देशसामर्थ्याच्च देशान्तरे प्रयुज्यमानेऽपि रोपधे निवर्तयति। स्थानं दि प्रसङ्गः। रोपधयोः प्रसङ्गे रम् प्रयुज्यते। रोपधे न प्रयोक्तव्ये इत्यर्थात्। ननु रमोऽनवकाशः भ्रष्टा। भर्ष्टा। भर्ष्टुमिति। संप्रसारणस्य तु भृज्जतीति। भृज्ज्यात्। भृज्ज्यते। बरीभृज्यते इत्यत्रोभयप्रसङ्गे परत्वाद रम् प्राप्नोति तत्राह—क्ङिति त्विति। पूर्वविप्रतिषेधादिति भाव। अभ्यासस्य संप्रसारणमिति। लिटि द्वित्वे कृते हलादिःशेषं बाधित्वा बलीयस्त्वात् पूर्वं संप्रसारणम्। ततः उरदत्वे रपरत्वे हलादिः शेषेऽभ्यासे जश्त्वे रमित्यर्थः। बभ्रज्जेति। रमोऽभावे। ननक्तं क्ङिति संप्रसारणं बाधकमिति तत्कथमतुसादौ रम् स्यादत आह—संयोगादित्या द। संयोगात्परस्य लिटो वा कित्त्वमिति मते तु संप्रसारणे कृते बभृज्जतुः। बभृज्जे। इत्याद्यपीत्याहुः। थलि "ऋतौभारद्वाजस्य" ( ७ । २ । ६२ ) इति वेट्। बभर्ष्ठ। बभृष्ट। बभ्रष्ट। बभर्जिथ। बभ्रज्जिथ। क्रादिनियमान्नित्यमिट्। बभ्रज्जिव। बभ्रज्जिम। भृज्यात्। भ्रक्षीष्ट। भर्क्षीष्ट। भ्रक्ष्यति। भर्क्ष्यति। भ्रक्ष्यते। भर्क्ष्यते। मुच्लृ ॥ ३८० ॥

---

1. अभर्ष्टेति नास्ति क० पु०।

## ३८१. शे मुचादीनाम् [ ७ । १ । ५९ ]

मुच् लुप् विद् लिप सिच् कृत् पिश् खिद् एषां नुमागमः स्यात् शे परे। मुञ्चति। लृदित्त्वादङ्। अमुचत्। अमुक्त। लिप उपदेहे। लिम्पति। "लिपिसिचि" ( ३ । १ ।५३ ) इत्यङ्। अलिपत। "आत्मनेपदेष्वन्यतरस्याम्" ( ३ । १ । ५४ ) अलिपत। अलिपेताम्। अलिप्त। अलिप्साताम्। षिच क्षरणे। निषिञ्चति। अभिषिञ्चति। न्यसिञ्चत्। न्यसिचत्। न्यषिचत। न्यषिक्त। निषषे च। कृती छेदने। कृन्तति। "सेऽसिचि कृत" ( ७ । २ । ५७) इति वेट्। कर्तिष्यति। कर्त्स्यति। पृ प्रेरणे। विपुवति। व्यपावीत्। ओव्रश्चू छेदने। "ग्रहिज्या" ( ६ । १ । १६ ) वृश्चति। अव्रश्चीत्। अव्राक्षीत्। अभ्यासरेफस्य ऋत्वम्। उरत्। अत्वस्य स्थानिवत्त्वात् "न संप्रसारणे" ( ६ । १ । ३७ ) इति वस्योत्त्वं न। वव्रश्च। वव्रश्चतुः।

---

शे मुचादीनाम्। लुप्लृ छेदने। विद्लृ लाभे। लिप उपदेहे। षिच क्षरणे। कृती छेदने। पिश अवयवे। खिद परितापे। मुञ्चतीति। नुम्विधानसामर्थ्यात् "अनिदिताम्" ( ६ । ४ । २४ ) इति नलोपाभावः। अनुस्वारपरसवर्णौ। मुञ्चेत्। मुञ्चेत। मुञ्चतु। मुञ्चताम्। अमुञ्चत्। अमुञ्चत। लृदित्त्वादङ् इति। "पुषादि" ( ३ । १ । ५५ ) इत्यनेन। अमुचदिति। अङो ङित्त्वान्न गुणः। अमुचेति। "झलो झलि" ( ८ । २ । २६ ) इति सिचो लोपः। चोः कुः। अमुक्षाताम्। अमुग्ध्वम्। मुमोच। मोक्ता। मोक्ता। मुच्यात्। मुचीष्ट। मोक्ष्यति। मोक्ष्यते। लिप उपदेहो वृद्धिः। लिम्पतीति। शे नुम्। लिम्पते। अलिप्तेति। "झलो झलि" ( ८ । २ ।२६ ) इति सिचो लोपः। लिलिपे। लेप्ता। लिप्यात्। लिप्सीष्ट। लेप्स्यति। षिच्। क्वचित् 'षस्येरित्पाठः' प्रामादिकः। प्रयोजनाभावात्। निषिञ्चतीति। "धात्वादेः षः सः" ( ६ । १ ।६४ ) "उपसर्गात्" ( ८ । ३ । ६५ ) इति षत्वम्। सिञ्चते। व्यसिचदिति। "लिपिसिचिह्वश्च" ( ३ । १ । ५३ ) इत्यङ्। "प्राक्सितादड्व्यवायेऽपि" ( ८ । ३ । ६३ ) इति षः। न्यषिचतेति। "आत्मनेपदेष्वन्यतरस्याम्" ( ३ । १ । ५४) इत्यङ् वा। न्यषिक्तेति। "झलो झलि" ( ८ । २ । २६ ) सिचो लोपः। न्यषिक्षाताम्। सिषेच। सिषिचे। सेक्ता। सिच्यात्। सिक्षीष्ट। कृती। इत एकविंशतिणू-पर्यन्ताः परस्मैपदिनः। 'तृम्फन्ताः' सप्तसेटः। कृन्तेत्। कृन्ततु। अकृन्तत्। अकर्तीत्। चकर्त। कर्तिता। कृत्यात्। पृ। विपवतीत्यादि। उवङ्। "उपसर्गादि"

ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । "छे च" ( ६ । १ । ७३ ) इति तुक् । ऋच्छति । अनृच्छ इत्युक्तेर्नाम् । "तस्मान्नुट्" ( ७ । ४ । ७१ ) इति नुट् । आनर्छ । "ऋच्छत्यॄताम्" ( ७ । ४ । ११ ) आनर्च्छतुः । तुक्संयोगान्नोपधागुणः । ऋच्छिता । कॄ विक्षेपे । "ॠत इद्धातोः" ( ७ । १ । १०० ) किरति । व्यकारीत् । चकरतुः । करिता । करीता ।

(८ । ३ । ६५) इति षत्वम् । व्यसावीदिति । सिचि वृद्धिः । आवादेशः । "प्राक्सिताद्ड्व्यवायेऽपि" ( ८ । ३ । ६३ ) इति षत्वम् । सुषाव । सुषविथ । सविता । सूयात् । सविष्यति । ओव्रश्चू । ओदित्त्वं निष्ठानत्वार्थम् । वृक्ण इति । "ग्रहिज्या" (६।१।१६) इति संप्रसारणम् इति शेषः । वृश्चतीति । संप्रसारणे पूर्वरूपम् अव्रश्चीत् अव्राक्षीत् इति । ऊदित्त्वादिड् वा । इट्पक्षे "इट ईटि" (८ । २।२८) इति सिचो लोपः । "नेटि" (७ २ । ४) इति न वृद्धिः । अव्रश्चिष्टाम् । इडभावे हलन्तलक्षणा वृद्धिः । "स्कोः" (८ । २ । २) इति सलोपः । "व्रश्चादि" ( ८ । २ । ३६ ) षत्वम् । "षढोः कः सि" ( ८ । २ । ४१ ) षत्वम् । क्षः । अव्राष्टाम् । अव्राक्षुः । ननु वव्रश्चेत्यत्र परत्वाद्धलादिःशेषे कृते वकारस्य संप्रसारणं प्राप्नोतीत्यत आह—अभ्यासरेफस्य ऋत्वमिति । उभयेषां ग्रहणसामर्थ्याद्धलादिःशेषात्प्रागेव संप्रसारणं भवदन्त्यस्य यणो रेफस्य तावद् भवति । तत्र कृते "न संप्रसारणे" ( ६ । १ ।३७ ) इति निषेधात् । वस्य न भवतीत्यर्थः । यद्येवमभ्यासेऽकारो न श्रूयेत तत्राह-उरदिति । तस्य रपरत्वे कृते हलादिः शेषः । यद्येवमकारस्यासंप्रसारणत्वाद् "न संप्रसारणे"(६।१।३७) इति निषेधो न प्राप्नोति । अल्विधित्वाच्च न स्थानिवद्भावः इत्यत आह—अत्वस्येत्यादि । स्थानिवत्त्वादिति । "अचः परस्मिन्" (१ । १ । ५७) इत्यनेन । तद्धि अल्विध्यर्थमिति स्थितम् । आसप्तमाध्यायपरिसमाप्तेरङ्गाधिकार इत्याश्रयणाद् अङ्गाक्षिप्ते प्रत्यये विधानादत्वं परनिमित्तं भवतीति भावः । वव्रश्चतुरिति । संयोगात्परस्य लिटोऽकित्त्वान्न संप्रसारणम् । सयोगाल्लिटः कित्त्वपक्षेऽपि प्रच्छभ्रस्जव्रश्चां लिटि न संप्रसारणमिष्यते इत्याहुः । वव्रश्चिथ । वव्रष्ठ । केचित् क्रादिनियमान्नित्यमिटमाहुः । व्रश्चिता । व्रष्टा । वृश्च्यात् । व्रश्चिष्यति । व्रक्ष्यति । ऋच्छ । ऋच्छतीति । तुक् । 'स्तोः श्चुना श्चुः" (८।४।४०) इति श्चुत्वम् । ऋच्छेत् । ऋच्छतु । आर्च्छत् । आर्च्छीत् । "इजादेः"[1] ( ३ । १ । ३६ ) इत्याममाशङ्क्याह—अनृच्छ इत्युक्तेर्नाम । इति । "तस्मान्नुड्" ( ७ । ४ । ७१ ) इति नुडिति । द्विहल्ग्रहणं तत्रानेकहलुपलक्षणार्थम् इति भावः । आनर्च्छेति । गुरूपधत्वाद् गुणप्राप्तिमाशङ्क्याह—ऋच्छत्यॄतामिति । वृद्ध्यविषयत्वाण्णल्यपि गुणः इत्यर्थः । एतच्च आनर्च्छतुरित्यादावपि संबध्यते । ऋच्छ्यात् । ऋच्छिष्यति । आर्च्छिष्यत् । कॄ । किरतीति गुणविषयत्वादित्वे रपरत्वम् । अकारीत् । अकारिष्टाम् । चकरतुरिति । "ऋच्छत्यॄताम्" ( ७ । ४ । ११ ) इति गुणः । णलि तु पूर्वविप्रतिषेधेन वृद्धिरेव । कृतेऽपि वा गुणे "अत

१. इजादित्वामुमामिति क० पु० ।

३८२. किरतौ लवने [ ६ । १ । १४० ]

उपात् परस्य किरतेः सुडागमः स्याच्छेदेऽर्थे । उपस्किरति ।

३८३. अडभ्यासव्यवायेऽपि [ ६ । १ । १३६ ]

अड्व्यवायेऽभ्यासव्यवायेऽपि सुट् कात्पूर्व एव स्यात् । उपास्किरत् । उपचस्कार ।

---

उपधायाः" (७ । २ । ११६) इति वृद्धिः । चकरिथ । करीता । "वृतो वा" (७ । २ । ३८) इति इटो न दीर्घः । "हलि च" (८ । २ । ७७) इति दीर्घः । कीर्यात् । करिष्यति । करीष्यति ॥ ३८१ ॥

किरतौ । उपादिति पञ्चम्या किरताविति सप्तम्यां षष्ठी प्रकल्पते इत्याह— किरतेरिति । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः । उपचाकर्त्तीति[1] । छेदेऽर्थे इति । विषयसप्तमी । उपस्किरतीति । लवनानुबन्धिनं[2] विक्षेपं करोतीत्यर्थः । णमुल्यत्र वक्तव्यः उपस्कारं मद्रका लुनन्ति विक्षिप्य लुनन्तीत्यर्थः । आभीक्ष्ण्यादेर्णमुलर्थस्याभावाद् वचनम् ॥ ३८२ ॥

अडभ्यासेति । ननु धातूपसर्गयोः कार्यमन्तरङ्गमित्यादौ सुट् भविष्यति तत्र कृतेऽडभ्यासयोः[3] सिद्धमिष्टम् । अत्राहुः । सुटष्टित्वादेव कात्पूर्वत्वे लब्धेऽपि कात्पूर्वग्रहणं सुटोऽभक्तत्वज्ञापनार्थम् । टकारस्तु सुट्स्तुस्वज्ञामिति विशेषणार्थः । अत्र पक्षे सुटि कृते ततो भवन्तौ अडभ्यासौ सुटः परौ स्याताम् । सुटो धात्ववयवत्वात् । अस्मिंस्तु सूत्रे सत्यस्मादेव वचनात् कृतयोरडभ्यासयोस्तद्व्यवायेऽपि[4] सुट् कात्पूर्व इति सिद्धमिष्टम् । नन्वस्मादेव वचनात् कृतयोरडभ्यासयोस्तद्व्यवायेऽपि सुट् कात्पूर्वोऽस्तु । यस्तु सकृ इत्यस्यामवस्थायां सुट्कात्पूर्व इत्यनेन प्राप्नोति स केन वार्यताम् ? सति तु तस्मिन् सकारात्परावडभ्यासौ श्रूयेयाताम् इत्याशङ्क्याह— कात्पूर्व एव स्यादिति । नाप्राप्ते तस्मिन्नस्यारम्भात् तस्यानेन बाध इत्यर्थः फलितो नियमोऽनेन दर्शितो न पुनर्नियमार्थमेतद् विध्यर्थत्वस्य विवक्षितत्वात् ॥ ३८३ ॥

---

१. उपाच्चा इति छेदेऽर्थे इति क० पु० ।
२. वचनानुवेपनमिति ख० पु० ।
३. ततोऽनन्तरौ अडभ्यासाविति क० पु० ।
४. तद्व्यवाये इत्येव क० पु० ।

३८४. हिंसायां प्रतेश्च [ ६ । १ । ४१ ]

उपात् प्रतेश्च किरतेः सुट् स्यात् हिंसायाम्। उपस्किरति। प्रतिस्किरति। गॄ निगरणे।

३८५. अचि विभाषा [ ८ । २ । २१ ]

गॄ इत्यस्यरो लत्वं वा स्यादजादौ परे। गिरति। गिलति। तृम्प तृप्तौ। "अनिदिताम्" ( ६ । ४ । ५४ ) इति नलोपः। "तृम्पतुम्पतृम्फतृफ-

---

हिंसायामिति। चकारेणोपः समुच्चीयते इत्याह—उपात् प्रतेश्चेति। एवं तु प्रतेरुपाच्चेति युक्तं पठितुम्। फलतस्तु भेदो नास्तीत्येवमुक्तम्। हिंसायामिति। अत्रापि विषये इत्यर्थः। उपस्किरतीति। तथा विक्षिपति यथा हिंसामनुबध्नातीत्यर्थः। प्रतिस्किरतीति। परिनिविभ्य एव सुटः षत्वम् न प्रतेः। गॄ॥ ३८४॥

अचि विभाषेति। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानाद्" (प०) धात्वाक्षिप्तप्रत्ययोऽचा' विशेष्यते ततश्च तदादिविधिर्भवतीत्याह—अजादौ परे इति। व्यवस्थितविकल्पश्चायम्। गल इति कण्ठे नित्यम् विषे तु गर इति। इह तु निगार्यते, निगाल्यते इति। अन्तरङ्गत्वाज्जपेक्षत्वेनान्तरङ्गत्वात् पूर्वं लत्व तथा णिलोपः। यद्वा कृतेऽपि णिलोपे प्रत्ययलक्षणेन लत्वं भविष्यति। "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" (प०) इति तु नास्ति। वर्णस्याप्राधान्यात्। स्थानिवद्भावेन वा लत्व भविष्यति। "पूर्वत्रासिद्धे न स्थानिवत्" (वा०) इति तु नास्ति, "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" (वा०) इत्यपवादस्मरणात्। अगारीत्। अगालीत्। अगारिष्टाम्। अगालिष्टाम् 'सिचि च परस्मैपदेषु" (७।२।४०) इति निषेधादिटो न दीर्घः। जगार। जगाल। जगरतुः। जगलतुः। जगरिथ। जगलिथ। गरिता। गरीता। 'वॄतो वा" (७ । २ । ३८) इति दीर्घः। गलिता। गलीता। गीर्यात्। गरिष्यति। गरीष्यति। गलिस्यति। गलीष्यति। अयं शब्दार्थः। क्र्यादौ गृणातीति। ज्ञानार्थश्चुरादावात्मनेपदी। गारयतीति। गरतीति शपि भ्वादौ ह्रस्वान्तः। तृम्प। तुम्प तर्पंति। तृप तृम्प तृफ तृम्फ तृप्तौ। तुप तुम्प, दृफ दृम्फ उत्क्लेशे। गुफ गुम्फ ग्रन्थे। उभ उम्भ पूरणे। शुभ शुम्भ शोभार्थो। एषु नुमनुषक्ताः पठ्यन्ते तेषामिह नुम् विधीयते। सानुषङ्गापदशस्तु आर्धधातुके तृम्पितेत्याचार्यः। अथ निरनुषङ्गाणामेव किं नुम् न विधीयते। एवमपि सानुषङ्गाणां न लोपेन द्वैरूप्यं सिद्ध्यति। सत्यम्। अपूर्वविधेः प्रतिप्रसवो बलीयान्। एतच्च "अइउण्" इत्याकरे स्थितम्। यद्यपि पकारान्तौ तृम्पतृम्पौ धातुपाठे न पठ्येते तथापि कैश्चित् पठिनावितीहोपात्तौ। ननु नुमषकाना स्वतः सिद्धत्वात् किं नुम्विधानेन? न। औपदेशिकस्य "अनिदिताम्" (६।४।२४) इति लोपे श्रवणार्थं नुम्, अथ तस्यापि शनिमित्तो लोपः किं न स्यात् अत आह—विधानसाम-

गुम्फतुम्फशुम्भां शे वा नुम्वाच्यः' ( वा० ) नुम्विधिसामर्थ्याल्लोपो न। तृम्पति। अतृम्पीत्। स्पृश संस्पर्शने। अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्
चृती ग्रन्थे हिंसायां च। "सेऽसिचि" ( ७। २। ५७ ) इति वेट्। चर्तिष्यति। चर्त्स्यति। प्रच्छ ज्ञीप्सायाम्। "ग्रहिज्या" ( ६। १। १६ ) इति संप्रसारणम्। पृच्छति। अप्राक्षीत्। पप्रच्छ। पप्रच्छतुः।

---

ध्य.न्नलोपो नेति। एतत्तु परिहारसौकर्यादुक्तम्। वस्तुतस्तु "श्नान्नलोपः" इत्यनेन नलोपे कर्तव्ये पूर्वं नलोपस्य "असिद्धवदत्राभात्" ( ६। ४। २२ ) इत्यसिद्धत्वात् प्रसङ्ग एव नास्ति। तृम्पेत्। तृम्पतु। अतृम्पत्। निरनुषङ्गस्य तु अतर्पीत्। ततर्प। तर्पिता। तृप्यात्। तर्पिष्यति। अतृम्पीत्। ततृम्प। यासुटः कित्वान्न लोपः। तृप्यात्। तृम्पिष्यति। अयं सेट्। अनिट्कारिकासु तृप्यति दृप्यति इति श्यना निर्देशेन तौदादिकपर्युदासात्। निरनुषङ्गस्य तु तृम्पतीत्यादि। आर्धधातुकेऽपि अतर्पीत्। ततर्प। तृप्यात्। स्पृश। अस्प्राक्षीत्। "स्पृशमृशकृष" ( वा० ) इति सिच्पक्षेऽनिट्त्वात् "अनुदात्तस्य चर्दु" ( ६। १। ५६ ) इतीत्वम्। यणादेशे "वदव्रज" (७। २। ३) इति वृद्धिः। "व्रश्च" (८। २। ३६) आदिना षत्वम्। कत्वम्। सः। अस्प्राष्टाम्। अस्प्राक्षुः। अस्पार्क्षीत् इति। अमभावे वृद्धौ रपरत्वम्। अस्पार्ष्टाम्। अस्पार्क्षुः। अस्पृक्षदिति। सिजभावे "शल इगुपधात्" ( ३। १। ४५ ) इति क्सः। अस्पृक्षाताम्। अस्पृक्षत। पस्पर्श। पस्पृशतुः। पस्पर्शिथ। पस्पृशिव। क्रादिनियमादिट्। अम्वा। स्प्रष्टा। स्पर्ष्टा। स्पृश्यात्। स्प्रक्ष्यति। स्पर्क्ष्यति। चृतो। सेट्। चृतति। अचर्तीत्। चचर्त। चर्तिता। चृत्यात्। प्रच्छ। इतस्त्रयोऽनिटः। पृच्छतीति। "संप्रसारणाच्च" ( ६। १। १०८ ) इति पूर्वरूपम्। "छे च" ( ६। १। ७३ ) इति तुक्। श्चुत्वम्। अप्राक्षीदिति। "वदव्रज" ( ७। २। ३ ) इति वृद्धिः। "व्रश्च" इति षत्वम्। कत्वषत्वसः। "झलो झलि" ( ८। २। २६ ) इति सिच्लोपः। छत्वम्। अप्राष्टाम्। पप्रच्छतुरिति। संयोगात् परस्य लिटोऽकित्त्वात् न संप्रसारणम्। "लिट्यभ्यासस्य" (६।१।१७) इति अभ्यासस्य संप्रसारणे उरदत्वे हलादिः शेषः। पप्रच्छिथ। पप्रष्ठ। पप्रच्छिव। प्रष्टा। पृच्छ्यात्। प्रक्ष्यति। सृज। सृजति। असाक्षीदिति। असाष्टामिति। "झलो झलि" ( ८। २। २६ ) इति लोपः। व्रश्चादिषत्वम्। "विभाषा सृजिदृशोः" ( ७। २। ६५ ) इतीड्विकल्पस्थलीति शेपः। ससृजिव। स्रष्टा। सृज्यात्। स्रक्ष्यति। टुमस्जो। टु इत्। मज्जथुः। ओदित्वात् मग्न इति निष्ठानत्वम्। मज्जतीति। सस्य श्चुत्वम्। जश्त्वम्। "मस्जेरन्त्यात् पूर्वम्"(वा०) सकारात् परो जकारात् पूर्व इत्यर्थः। किमेवं सति सिद्ध्यतीत्यत आह—संयोगादिलोपः इति यदि ह्यन्त्यादचः परः स्यात्ततो नसजानामेका संयोगसंज्ञेति पक्षे सस्यासंयोगादित्वाल्लोपो न स्यादिति भावः। यदा तु बहूनां हलामनन्तराणां मध्ये द्वयोरपि संयोगसंज्ञेतिपक्षः, तदा सजयोरपि संयोग-

(७) सृज विसर्गे। "सृजिदृशोर्झल्यमकिति" (६।१।५८) इत्यम्। अस्राक्षीत्। अस्राष्टाम्। "विभाषा सृजिदृशोः" (७।२।६५) ससर्जिथ। सस्रष्ठ।

टुमस्जो शुद्धौ। मज्जति। "मस्जिनशोः" (७।१।६०) इति नुम्। "मस्जेरन्त्यात् पूर्वं नुममिच्छन्ति" (वा०) संयोगादिलोपः। चोः कुः। अमाङ्क्षीत्। ममज्जिथ। ममङ्क्थ। विच्छ गतौ। "गुपूधूप" (३।१।२८) इत्यायः। तुग्योगान्न गुणः। विच्छायति। विच्छेरायो वेति केचित्। विच्छति। अविच्छायीत्। अविच्छीत्। मृश आमर्शने। अमार्क्षीत्। अम्राक्षीत्। अमृक्षत्। इषु इच्छायाम्। "इषुगमियमां छः" (७।३।७७) इच्छति। इयेष। "तीषसह" (७।२।४८) इति वेट्। एषिता। एष्टा। कुट कौटिल्ये। "गाङ्कुटादिभ्योऽञ्णिन्ङित्" (१।२।१) ङित्वान्न गुणः। अकुटीत्। अञ्णिति किम्? चुकोट। चुकुटिथ। कुटिता। व्यच व्याजीकरणे। "ग्रहिज्या" (६।१।१६) विचति। "व्यचेः कुटादित्वमनसि" (वा०) इति वक्तव्यम्। अविचीत्। विव्याच। विविचतुः।

संज्ञा तदाश्रयसलोपः सिद्धयत्येव। अत्र तु पक्षे यद्यप्येतन्न प्रयोजनम्, तथापि मग्न इत्यत्र "अनिदिताम्" (६।४।२४) इत्यनुपङ्गलोपार्थम् अन्त्यात् पूर्वं नुमेषितव्यः। अन्यथा "स्कोः" (८।२।२९) इति सलोपे तस्यासिद्धत्वादनुपधानकार इति लोपो न स्यादिति हृदयम्। अमाङ्क्षीदिति। हलन्तवृद्धिः। नुमोऽनुस्वारपरसवर्णौ। पत्वम्। चोः। "झलो झलि" (८।२।२६) अमाङ्क्ताम्। ममज्ज। ममज्जिथ। ममङ्क्थेति। "उपदेशेऽत्वतः" (७।२।६२) इति नेट् थलि। "ऋतो भारद्वाजस्य" (७।२।६३) इतीड्विकल्पः। ममज्जिव। मङ्क्ता। मज्ज्यात्। मङ्क्ष्यति। विच्छ। विच्छायतीति। विच्छिरयं तुदादौ पठ्यते। तत्सामर्थ्यादायप्रत्ययान्तादपि[1] शविकरणे न शप्। यथा जुगुप्सते इत्यात्मनेपदम्। तेन विच्छायता। विच्छायन्ता। इति "आच्छीनद्योर्नुम्" (७।१।८०) इति नुम्विकल्पो भवति। अन्ये तु तुदादिपाठसामर्थ्यादायप्रत्ययस्यैव विकल्पः कल्प्यते। तेन विच्छती विच्छन्तीति नुम्विकल्पः सिद्धयतीत्याहुः। तदिदमुक्तम् विच्छेरायो वेति केचिदिति। सार्वधातुके इति शेषः। एवं वादिनां मते तु आयान्ताद्विच्छेः शवेव। अवयवे एव तुदादिपाठस्य चारितार्थ्यात्। तेन 'विच्छायन्तीति नुम् नित्यमेव भवति। अविच्छीदिति। "आयादय आर्धधातुके वा"

१. मग्निनिषेध इति क० पु०।

विचिता । असुप्रत्यये तु उरुव्यचाः । त्रुट छेदने । "वा भ्राश" (३ । १ । ७०) इति श्यन् वा । त्रुट्यति । त्रुटति । अत्रुटीत् । स्फुर स्फुरणे ।

३८६. स्फुरतिस्फुलत्योर्निर्निविभ्यः [ ८ । ३ । ७६ ]

निर्निविभ्यः परयोरनयोः सस्य षो वा स्यात् । निस्फुरति । निष्फुरति । पुस्फोर । एवं स्फुल संचये च । णू स्तवने । नुवति । अनुवीत् । नुनाव । मृङ् प्राणत्यागे ।

---

( ३ । १ । ३१ ) इत्यायाभावपक्षे "नेटि" ( ७ । २ । ४ ) इति वृद्ध्यभावः । विच्छायाञ्चकार । विविच्छ । विच्छायिता । विच्छिता । विच्छाय्यात् । विच्छ्यात् । मृश आमर्शने । स्पर्शः । मृशति । अम्राक्षीदिति । "स्पृशमृशकृष" ( वा० ) इति सिच्पक्षे "अनुदात्तस्य च" ( ६ । १ । ५६ ) इत्यम् । वृद्धिः । षत्वकत्वादि । अमार्क्षीदिति । अमभावे वृद्धौ रपरः । अमृक्षदिति । सिजभावे पक्षे क्सः । ममर्श । ममृशतुः । ममर्शिथ । ममृशिव । म्रष्टा । मर्ष्टा । मृश्यात् । म्रक्ष्यति । मर्क्ष्यति । इषु । इतः सप्त सेटः । अमु केचिदुदितं पठन्ति । तस्य च प्रयोजनमिड्विकल्पे छ्वविधौ चोदितोऽनुवादस्तेन देवादिकक्रैयोर्न भवत इति । न च क्त्वायामिड्विकल्प. फलम् । "तीषसह" (७ । २। ४८) इत्येव सिद्धेः । ये त्वनुदितं पठन्ति । "तीषसह" इत्यकारमात्रविकरणेन सहिना साहचर्यात्तादृशस्तौदादिक एव गृह्यते नेतरावित्याहुः छ्त्वेऽपि "वसस्यार्चि" ( ७ । ३ । ७२ ) इत्यनुवृत्तेः श्नाश्यनोर्न भविष्यतीत्याहुः । इच्छतीति । तुक् । श्चुत्वम् । तुक्संयोगान्न गुणप्रसङ्गः । इच्छेत् । इच्छतु । ऐच्छत् । ऐषीत् । इयेषेति । ए लिटि गुणे कृते तस्य स्थानिवत्त्वात् द्वित्वे हलादि शेषे च कृते "अभ्यासस्यासवर्णे" (६ । ४ । ७८) इतीयङ् । किन्तु सवर्णदीर्घः । ईषतुः । इयेषिथ । एषिता । एषिष्यति । कुट । कुटति । चुकोटेति । णलो णित्त्वान्न ङित्वम् । उत्तमे तु णलि । 'णलुत्तमो वा' ( ७ । १ । ६१ ) इति णित्वाभावपक्षेऽस्त्येव ङित्वम् । तेन चुकुट चुकोटेत्युभयं भवति । थलि तु ङित्वाच्चुकुटिथेति । तासि ङित्वान्न गुणः । कुट्यात् । कुटिष्यति । व्यच । व्यचेरित्यादि । अयं तुदादिषु कुटादिभ्यः प्राक् पठ्यते इत्यप्राप्त कुटादित्वं विधीयते इति हरदत्तः । अञ्ञानसाति पर्युदासादसदृशे कृत्ये च कुटादित्वम् । तेनाव्यचात् । विव्यचि पतीत्यादौ न ङित्वमिति हरदत्तः । माधवोऽप्याह—तासि स्यसिच । सनश्चाकृत्वान्न ङित्वमिति न संप्रसारणमिति । आचार्यास्तु कातन्त्रानुसारिणः प्रसज्यप्रतिषेध मन्यमानाः ञित्वमुदाहरन्ति । यत्पुनर्माधवेनोक्तम् प्रसज्यप्रतिषेधाश्रयणे प्रमाणं मृग्यम्, वाक्यभेदापत्तेरिति[१] । अत्र ब्रूमः । स्यादेतदेवम् । यदि कुटादित्वमपि विधीयेत तत्तु न तथा, तस्य कुटादिपाठादेव सिद्धत्वात् । परैस्तस्य कुटादिषु पठितत्वात् ।

१. वालेति क० पु० ।

## २८७. म्रियतेर्लुङ्लिङोश्च [ १ । ३ । ६१ ]

म्रियतेः शिदन्ताच्च लुङ्लिङोश्चात्मनेपदं स्यान्नान्यत्र। रिङियङादेशौ। म्रियते। अमृत। मृषीष्ट। एषु किम्? मरिष्यति। ओविजी भयचलनयोः। विजते।

---

अत एवाचार्यैः कुटादिभिः सपुटीकृत्योदाहृतः। यद्वा अनेसीति निषेध एव कुटादित्वं ज्ञापयिष्यति। नापि परिसंख्या, असत्सदृशे कृत्येव कुटादित्वम्, नान्यत्रेति त्रिदोषदुष्टत्वात्। तस्मात् प्राप्तं कुटादित्वमनूद्यासि निषिध्यते। लाघवादिति। विधेयभेदाभावे नववाक्यभेदापादनम्। अविचोदिति। 'संप्रसारणाच्च" ( ६। १। १०८) इति पूर्वरूपम्। ङित्त्वाभाववादे तु "अतो हलादेर्लघोः" (७। २। ७) इति वा वृद्धिः। अव्यचीत्। अव्याचीत्। णिदन्यत्र[१] ङित्त्वम्। विव्याच। विविचतुः। विव्यचिथ। विविचिव। व्यचिता। यासुटः कित्त्वात् संप्रसारणम्। विच्यात्। व्यचिष्यति। उरुव्यचाः[२] इति बहुव्रीहिः। गतिकारकपूर्वस्यापि इत्यसुन् प्रत्ययः। स्फुर। स्फुरति। निष्फुरति इत्यादि। निर्निसोः साधारणमुदाहरणम्। अस्फुरीदिति। सिचो ङित्त्वान्न गुणः। पुस्फोरेति। "शर्पूर्वाः खयः" (७। ४। ६१) 'अभ्यासे चर्च" (८। ४। ५४) पुस्फुरिथ। स्फुरिता। स्फूर्यात्। स्फुरिष्यति। एवं स्फुलेति। स्फुलतीत्यादि। स्फुलीत्। स्फुल्यात्। "हलि च" (८। २। ७०) इति दीर्घत्वमस्य नास्ति अरेफान्तत्वात्। णू दीर्घान्तोऽयम्। तथा च कुटादिसूत्रे भाष्यम्—तस्मान्नूत्वा धूत्वेत्येव भवितव्यमिति। तत ऊदन्तत्वात्सेडयमित्याशयेनोदाहरति—अनुवीदिति। सिचो ङित्वादुवङ्। नुनुविथ। नुविता। नूयात्। नुविष्यति। मृङ् इत्यात्मनेपदिनौ आद्योऽनिट्[४]॥ १८६॥

म्रियतेरिति। शिदन्तादिति[३]। शिद्विषयादित्यर्थः।) ङित्त्वादेवात्मनेपदे सिद्धे सत्यारम्भो नियमार्थ इत्याह—नान्यत्रेति। यद्येवम् विधिरेवास्तु किं ङित्त्वेन। सत्यम्। "मा हि मृत" इत्यत्र "तास्यनुदात्तेद्" ( ६। १। १८६) इति ङिल्लक्षणं सार्वधातुकस्यानुदात्तत्वं यथा स्यादित्येवमर्थम्। तत्र च कृते धातोरन्तोदात्तत्वं भवति। 'तिङ्ङतिङः" ( ८। १। २८) इति निघातस्तु न भवति। "हि च" (८। १। ३४) इति निषेधात्। "न माङ्योगे" ( ६। ४। ७४) इति निषेधादडुदात्तोऽपि[५] नास्ति। रिङि-

१. ङित्त्वादिति क० पु०।

२. उरुचाति।

३. ( ) पाठो नास्ति।

४. आद्योऽनिट् इत्यारभ्य—इत्ययं इत्यन्तो रेखाङ्कितः ( ) नास्ति क० पु०।

५. निषेधादनुवत्तोऽपि ह्यस्तीति क० पु०।

३८८. विज इट् [ १ । २ । २ ]

विजे परो णिद्वर्जं इडादिप्रत्ययो ङिद्वत् स्यात् । अविजिष्ट । विजिता ।

## इति तुदादिप्रक्रिया

यङादेशाविति । "रिङ् शयग्लिङ्क्षु" । (७ । ४ । २८ ) "अचि श्नुधातु" (६।४।७७) इत्याभ्याम् । म्रियेत । म्रियताम् । अम्रियत । अमृतेति । अकुटादित्वेऽपि "उश्च" ( १ । २ । १२ ) इति किस्त्वान्न गुणः । "ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इति सिचो लोपः । अमृषाताम् । अमृड्ढ्वम् । ममार । मम्रतुः । ममर्थ । मम्रिव । मर्ता । मृषीष्टेति । "म्रियतेः" ( १ । ३ । ६१ ) इत्यात्मनेपदम् । "उश्च" ( १ । २ । १२ ) इति किस्त्वान्न गुणः । मरिष्यतीति । "ऋद्धनोः स्ये" (७ । २ । ७०) इतीट् । ओविजी । ओदित्वाद्विग्न इति निष्ठानत्वम् । ईदित्वादनिट्त्वं च भवति । प्रायेणाय-मुत्पूर्वः ॥ ३८७ ॥

विज इट् । विजिर् पृथग्भावे इति जोहोत्यादिकोऽत्र न गृह्यते । तस्मादिटोऽस-म्भवात् । ङिद्वर्जमिति । यद्यप्यस्यानुवृत्तौ प्रयोजनं नास्ति व्यावर्त्यासम्भवात् । तथा चान्यैर्न व्याख्यातम् । तथापि दोषो नास्तीत्येतावता तथोक्तम् । "वृद्धिर्यस्य" ( १ । १ । ७३ ) इत्यतो यस्यादिरिति वर्तते । तेन प्रत्ययो विशेष्यते इत्यभिप्रेत्याह— इडादिप्रत्यये इति । तेनागममात्रमुत्तमैकवचनं चेड् न गृह्यते इति भावः[१] । अविजि-ष्टेति । सिचो ङित्त्वान्न गुणः । अझलादित्वात् "लिङ्सिचौ" ( १ । २ । ११ इति कित्त्वं तु नास्ति । विविजे । विजिषीष्ट । विजिष्यते । अविजिष्यत ॥ ३८८ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत्प्रक्रियावाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् तौदादिकी प्रक्रिया ॥ १ ॥ इति ।

—: ० :—

१. अविजिष्टेति । सिचो ङित्त्वान्न गुणः इति नास्ति क० पु० ।

# अथ रुधादयः

३८८. रुधादिभ्यः श्नम् [ ३ । १ । ७८ ]

रुधिर् आवरणे । रुधादिभ्यः श्नम् प्रत्ययः स्यात् कर्तरि सार्वधातुके न शप् । मित्त्वादन्त्यादचः परः । रुणद्धि । "श्नसोरल्लोपः" ( ६ । ४ । १११ ) धत्वम् । "झरो झरि सवर्णे" ( ८ । ४ । ६५ ) परत्वात् कृतस्यापि णत्वस्यासिद्धत्वादनुस्वारः । तदादेशस्य परसवर्णस्यासिद्धत्वात् न णत्वम् । अनुस्वारपरसवर्णौ प्रति श्नस्याल्लोपो न स्थानिवत् । रुन्धः ।

---

अथ रुधादयः

रुधिर् । रुधादिभ्य इति । श्नम् प्रत्ययः स्यादिति । मित्त्वादागमत्वेऽपि प्रत्ययाधिकारे विधानात् प्रत्यय संज्ञाऽपि न विरुध्यते । तत्प्रयोजनं तु प्रत्ययादित्वेन शस्येत्संज्ञा । शकारोच्चारणं तु "श्नान्नलोपः" (६। ४।२३) इत्यत्र विशेषणार्थम् इति । वक्ष्यते । न शबिति । यद्यपि देशभेदेनोभयोरपि संभवोऽस्ति । तथापि "येन नाप्राप्ते" ( प० ) न्यायेन शबनेन बाध्यते इत्यर्थः । ननु यद्ययं प्रत्ययस्ततः प्रकृतेः परः प्रसज्येत तत्राह–अन्त्यादचः पर इति । तत्र हेतुर्मित्त्वादिति । अन्यथा मित्करणमनर्थकं स्यात् । नात्र मकारः श्रवणार्थः । "तृणह इम्" (७।३।९२) इति निर्देशादिति भावः । रुणद्धीति । श्नमयं नित्यत्वात् पूर्वं भवति । "झषस्तथोः" ( ८ । २ । ४० ) इति धत्वम् । णत्वम् । जश्त्वेन धस्य दः । 'श्नसोरल्लोपः" इति ( ६ । ४ । १११ ) रुन्ध् तस् इति स्थिते धत्वादेरसिद्धत्वादादावल्लोपः । ततो "झषस्तथो" (८।२।४०) इति धत्वम् । जश्त्वम् । "झरो झरि" ( ८ । ४ । ६५ ) इति दकारस्य लोप इत्यर्थः । ततोऽनुस्वारपरसवर्णौ । यद्यपि लोपस्यासिद्धत्वादनुस्वारपरसवर्णाभ्यां प्राग् भाव्यम् । तथापि फले विशेषादर्शनान्नयाय्योऽपि क्रम आचार्यैर्नादृतः । न च लोपे कृते तयोर्निवृत्तिः स्यात् "निमित्तापाय" (प० ) इति न्यायात् इति वाच्यम् । न ह्यसिद्धत्वे जागरूके निमित्तापायोऽस्ति इति । अथास्य न स्यात् "अट्कुप्वाङ्"[1] ( ८ ।४ ।२ ) इति णत्वं प्राप्नोति तत्राह—परसवर्णस्यासिद्धत्वान्न णत्वमिति 'पूर्वत्रासिद्धम्" (८ । २। १) इत्यसिद्धत्वात् । नन्वनुस्वारपरसवर्णविधावत्र दुर्लभौ तौ प्रति श्नसोरल्लोपस्य "अचः परस्मिन्" (१ । १ । ५७) स्थानिवत्त्वप्रसङ्गात् आह—अनुस्वारेत्यादि । न स्थानिवदिति । "न पदान्त" ( १ । १ । ५८ ) इत्यनेन प्रतिषेधादित्यर्थः ।

---

१. न स्यात्तो कथं इति णत्वं प्राप्नोति इति क० पु० ।

रुन्धन्ति । रुन्ध्यात् । अरुणत् । "दश्च" ( ८ । २ । ७५ ) इति वा रुत्वम् । अरुणन् । अरुणः । अरुधत् । अरौत्सीत् । एवं भिदिर्, छिदिर्, रिचिर्, विचिर्, क्षुदिर्, युजिर् । उछृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट । "सेऽसिचि" ( ७ । २ । ५७ ) इति वेट् । छर्दिष्यति । छर्त्स्यति । एवं तृदिर् हिंसानादरयोः । शिष्लृ विशेषणे । शिनष्टि । हेर्धिः । पस्य जश्त्वेन डः । ष्टुत्वम् । "झरो झरि" ( ८ । ४ । ६५ ) इति डलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । अशिनट् । अशिषत् । शेष्टा । एवं पिष्लृ संचूर्णने । तृह हिंसायाम् ।

---

नन्वादिष्टादचः पूर्वस्य विधौ स्थानिवदित्युक्तम् । परसवर्णस्य च स्थान्यनुस्वारः न चासावनादेशादच पूर्वो दृष्ट इति चेत् । सत्यम् । परसवर्णे स्थानिवत्त्वनिषेधसामर्थ्यात् क्वचित् स्थानिद्वारकमपि पूर्वत्वमाश्रीयते इत्यदोषः । "खरि च" ( ८ ।४। ५५ ) इति चर्त्वम् । रुणत्ति । रुध्यादिति । यासुटो ङित्त्वाद् "श्नसोरल्लोपः" ( ६ । ४ । १११ ) रुन्धीत । रुणद्धु इति । घत्वम् । जश्त्वम् । हेर्धित्वम्[१] । जश्त्वम् । रुणद्धि । अरुणदिति । हल्ङ्याबिलोपे कृते जश्त्वे "वाऽवसाने" ८ । ४ । ५६ ) इति वा चर्त्वम् । अरुण इति । सिलोपे जश्त्वे च कृते रुत्वे विसर्जनीयः । अरुन्धम् । अरुधदिति । "इरितो वा" (३ । १ । ५७ ) इत्यङ् । अरौत्सीदिति । अङ भावे वृद्धिः । चर्त्वम् । रुरोध । रुरोधिथ । रुरुधिव । क्रादिनियमादिट् । रोद्धा । रुध्यात् । रोत्स्यति । रुन्धे । रुन्धाम् । अरुन्ध । अरुद्ध । अरुत्साताम् । रुरुन्धे । रोद्धा । रुत्सीष्ट । रोत्स्यते । अरोत्स्यत । अनो रुध कामे इति दिवादौ पठितः । अनुरुध्यते । इच्छतीत्यर्थः । उच्छृदिर् । उकारः क्त्वायामिड्विकल्पार्थः । छृत्त्वा । छर्दित्वा । छृणत्तीति । 'अत्वर्णान्तस्य" ( वा० ) इति णत्वम्[१] । चर्त्वम् । छृन्तः । च्छृणत्ति । छृते इति । अलोपे चर्त्वे "झरो झरि" ( ८ । ४ । ६५ ) इति तलोपः । छन्दाते । छृन्त्से । छृन्धे । छृद्यात् । छृन्दीत । छृणत्तु । छृन्धि । छृणदानि । छृन्ताम् । छृन्त्स्व । छृणदै । अच्छृणत् । अच्छृन्त । इरित्वादङ् वा । अच्छृदत् । सेट्कत्वात् । अच्छर्दीत् । अच्छर्दिष्ट । चच्छर्द । चच्छृदे । चच्छृदिषे । "सेऽसिचि" ( ७ । २ । ५७ ) इति विकल्पे चच्छृत्से । केचित् क्रादिनियमान्नित्यमिटमाहुः । चच्छृदिध्वे । चच्छृदिवहे । छर्दिता । छृद्यात् । छर्दिषीष्ट । छृत्सीष्ट । "लिङ्सिचौ" (१ । २ । ११) इति किन्त्वान्न गुणः । एवमिति । तृणत्ति । तृन्ते । तृन्द्यात् । तृन्दीत । तृन्ताम् । अतृणत् । अतृन्त । अतर्दत् । अतर्दीत् । ततर्द । ततृदे । ततृदिषे । ततृत्से । ततृद्ध्वे । तर्दिता । तृद्यात् । तर्दिषीष्ट । तृत्सीष्ट । तर्दिष्यति । तर्त्स्यति । शिष्लृ । इतश्चत्वारः परस्मैपदिनः । शिनष्टि । शिष्टः ।

१. एत्व मिति क० पु० ।

३८९. तृणह इम् [ ७ । ३ । ९२ ]

तृहः श्नमि कृते इमागमः स्यात् पिति हलि सार्वधातुके । तृणेढि । तृण्ढः । तृंहन्ति । तृणेक्षि । तृणेह्मि । तृंह्वः । तृंह्मः । तृणेढु । अतृणेट् । अतृंहीत् । हिंसि हिंसायाम् ।

३९०. श्नान्नलोपः [ ६ । ४ । २३ ]

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । अहिंसीत् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अङ्ग्धि ।

---

शिनक्षि । शिष्यात् । शिनष्टु । शिनषाणि । अशिनडिति । हल्ङ्यादिलोपे षस्य जश्त्वेन डः । चर्त्वम् । अशिंष्टाम् । अशिनट् । अशिनषम् । अशिषदिति । लृदित्वादङ् । शिशेष । शिशेषिथ । शेष्टा । शिष्यात् । शेक्ष्यति । तृह ॥ ३८८ ॥

तृणह । अथ किमर्थं सश्नम्को निर्दिश्यते । तृह हिंसायामिति तौदादिकनिवृत्त्यर्थम् । हरदत्तस्तु तस्य सानुबन्धकत्वादेवाग्रहणं सिद्धमित्याह—तच्चिन्त्यम् । अनुबन्धपरिभाषायाः प्रत्ययविषयत्वात् । प्रयोजनान्तरमाह—तृहः श्नमि कृते इति । अयमर्थः—यद्यागमः श्नम्को न निर्दिश्येत ततो नाप्राप्ते श्नम्यारभ्यमाण इम् तस्य बाधकः स्यात् । अथापि न बाधेत एवमपि श्नमि कृते इमागम इतीष्टव्यवस्था न प्रकल्प्येत विपर्ययोऽपि स्यात् पूर्वमिम् ततः श्नमिति । अतः श्नमि सत्येनेमागमो यथा स्यात् न तु श्नम बाधित्वा न वा ततः प्राक् इत्येवमर्थः । सश्नम्को निर्दिश्यते इति । एवं च कृत्वा रौधादिकस्यापि यङ्लुकि न भवति । श्नमोऽभावादेव । हलि हलादावित्यर्थः । तृणेढीति । इमि कृते आद्गुणः । ढत्वधत्वष्टुत्वढलोपाः । तृणह इति श्नसोरल्लोपे ढत्वादि । तृणेक्षीति । ढत्वे "षढोः कः सि" ( ८ । २ । ४१ ) इति कत्वम् । षत्वम् । तृंह्वः । तृंह्यात् । तृणेढु । तृण्ढात्[1] । तृण्ढि । तृणहानि । लङि अतृणेट् । हल्ङ्यादिना तिप्सिपोर्लोपेऽपि प्रत्ययलक्षणेनेमागमः । वर्णाश्रये नास्ति प्रत्ययलक्षणम्" ( प० ) इति तु नास्ति । यत्र वर्णाः प्राधान्येनाश्रीयन्ते तत्रैवायं निषेध इति स्थिते प्रत्यय आश्रीयते न हल्मात्रम् इति । अतृणहमिति । मिपि नित्यत्वात्पूर्वममादेशे कृतेऽहलादित्वान्नेमागमः । ततर्ह । तर्हिता । तृह्यात् । तर्हिष्यति । हिंस । इदित्वान्नुम् । नुम्विधावुपदेशिवद्वचनात् श्नमः पूर्वं नुमिति भावः ॥ ३८९ ॥

श्नान्नलोपः । श्नमयमुत्सृष्टमकारो गृह्यतेऽन्यस्यासम्भवात् इत्याह—श्नमः परस्येति । नेति लुप्तषष्ठीक पदमित्याशयेनाह—नस्येति । शकारवता ग्रहणं किम् ? यज्ञानामिति दीर्घेऽपि कृते एकदेशविकृतस्यानन्यत्वात् नुटो लोपः स्यात् । हिंस्तः । हिंसन्ति । हिनस्मि । हिंस्यात् । हिनस्तु । "धि च" ( ८ । २ । २५ ) इति

---

१. तृण्ढात् । तृण्ढ इति नास्ति क० पु० ।

३९१. अञ्जेः सिचि [ ७ । २ । ७१ ]

अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् । आनञ्ज । आनञ्जतुः । अङ्क्ता । अञ्जिता । ञि इन्धी दीप्तौ । इन्धे । इन्धाते । इन्धाञ्चक्रे । विद विचारे । विन्ते । एवं खिद दैन्ये ।

इति रुधादिप्रक्रिया

---

सलोपः । हिन्धि । हिनसानि । "तिप्यनस्तेः" ( ८ । २ । ७३ ) इति दः । अहिनत् । "सिपि धातोः" (८।२।७४) इति वा रुत्वम् । अहिनः । अहिनत् । जिहिंस । हिंसिता । हिंस्यात् । हिंसिष्यति । अञ्जू । अनक्ति इति श्नान्नलोपः । अङ्क्ता । अञ्जति । अनक्ति । अञ्ज्यात् । अनक्तु । अङ्ग्धि । हेर्धित्वम् । चोः कुः । अनुस्वारपरसवर्णौ । जश्त्वम् । अनजानि । आनक् । आनग् । आञ्जम् । आनजम् ॥ ३९० ॥

अञ्जेः सिचि । ऊदित्वादिड्विकल्पे प्राप्ते नित्यार्थं वचनम् । आनञ्ज । "अत आदेः" ( ७ । ४ । ७० ) इति दीर्घः । "तस्मान्नुड्" ( ७ । ४ । ७२ ) इति नुट् । आनञ्जिथ । आनङ्क्थ । आनञ्जिव । अञ्जितेति । ऊदित्वादिड् वा । अङ्क्त्वा । अज्यात् । अञ्जिष्यति । अङ्क्ष्यति । ञि इन्धी । ञित्व ञीतः कार्थम् इन्ध इति । ईदित्वान्निष्ठायामिडभावः । अनुदात्तेत्वादात्मनेपदी । इन्धी इन्धते इति स्थिते श्नम् । "श्नान्नलोपः" ( ६ । ४ । २३ ) "श्नसोरल्लोपः" ( ६ । ४ । १११ ) धत्वम् । जश्त्वम् । अनुस्वारपरसवर्णौ । "झरो झरि" (८ । ४ । ६५ ) इति दलोपः । इन्धे । इन्ध्वहे । इन्धीत । इन्धाम् । इन्त्स्व । इन्धै । ऐन्ध । ऐन्धाताम् । ऐन्धिष्ट । इन्धाञ्चक्रे इति । "इजादेश्च" ( ३ । १ । ३६ ) इत्याम् । कृञोऽनुप्रयोगः । "आम् प्रत्ययवत्" ( १ । ३ । ६३ ) इत्यात्मनेपदम् । इन्धिता । इन्धिषीष्ट । इन्धिष्यते । ऐन्धिष्यत् । अनेन्धेश्छन्दोविषयत्वात् इति वार्त्तिकदर्शनात् भाषायामस्य प्रयोगाभावः । इति केचिदिति । तदसत् । यतस्तस्यायमर्थः—इन्धेर्भाषायामनन्तरो लिड् नास्ति "इजादेः" ( ३ । १ । ३६ इत्यामो विधानात् । किं तु छन्दस्येव संभवति । तत्रामन्त्रे इत्यामो निषेधात् । छन्दसि च लिट् सार्वधातुकमपि भवति । तत्र ङित्त्वादपि समीधे इत्यादौ नलोपादिसिद्धेर्नार्थः कित्त्वेनेति न पुनरस्य भाषायां प्रयोग एव नास्तीत्युच्यते इति स्थितमाकरे ॥ ३९१ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् रौधादिकी प्रक्रिया ॥ १ ॥ इति ।

इति रुधादयः । रुधादि ८० ।

—:०:—

## अथ तनादयः

तनु विस्तारे ।

३९२. तनादिकृञ्भ्य उः [ ३ । १ । ७९ ]

तनादिभ्यः उः स्यात् । तनोति । तनुतः । तन्वन्ति । तन्वः । तनुवः । अतानीत् । अतनीत् ।

३९३. तनादिभ्यस्तथासोः [ २ । ४ । ७९ ]

तनादेः सिचो वा लुक् स्यात् तथासोः परयोः "अनुदात्तोपदेश" ( ६ । ४ । ३७ ) इति अनुनासिकलोपः । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । षणु दाने । सनोति । 'जनसनखनां सञ्झलोः' (६ । ४ । ४३)

---

तनु विस्तारे । इतः षडुभयपदिनः । पञ्च सेटः उदित्वम् । तनित्वा तन्त्वेति इड्विकल्पार्थम् ।

तनादिकृञ्भ्यः इति । एतत्तु पूर्वं व्याख्यातम् । तनोति । पिति सार्वधातुके उप्रत्ययस्य गुणः । तनुत इति । "सार्वधातुकमपित्" ( १ । २ । ४ ) इति ङित्वान्न गुणः । तन्वन्ति । तनोषि । तन्वः । तनुवः इति । "लोपश्चास्यान्यतरस्यां म्वोः" ( ६ । ४ । १०७ ) इत्युलोपः । तन्मः । तनुमः । तनुते । तन्वाते । तन्वते । तन्वहे । तनुवहे । तनुयात् । तन्वीत । तनोतु । तनुतात् "उतश्च प्रत्ययादसंयोगपूर्वात्" ( ६ । ४ । १०६ ) इति हेर्लुक् । तनु । तनुतात् । तन्वाताम् । तनवानि । तनवै । अतनोत् । अतनुताम् । अतनवम् । अतन्व । अतनुव । अतनुत । अतन्वाताम् । अतन्व । अतन्वि । अतनोत् । अतानीत् इति । "अतो हलादेर्लघोः" ( ७ । २ । ७ ) इति वा वृद्धिः ॥ ३९२ ॥

तनादिभ्य इति । थासा साहचर्यात्तशब्दस्यात्मनेपदस्य ग्रहणम्, न परस्मैपदस्य, तेनेह न अतनिष्ट यूयमिति । अतनिषाताम् । अतनिध्वम् । ततान । तेने । तेनिध्वे । तनिता । तन्यात् । तनिषीष्ट । तनिष्यति । तनिष्यते । षण । उदित्वात् क्त्वायां

असात् । असनिष्ट । असाथाः । असनिष्ठाः । "ये विभाषा" (६ । ४ । ४३) सायात् । सन्यात् । क्षणु हिंसायाम् । क्षणोति । 'ह्म्यन्तक्षण' (७ । २ । ५) इति न वृद्धिः । अक्षणीत् । अक्षत । अक्षणिष्ट । क्षिणु हिंसायाम् । उप्रत्यये तनादेर्नोपधागुणः । उपधाऋकारस्य तु वा । क्षिणोति । अक्षेणीत् । अक्षित । अक्षेणिष्ट । ऋण गतौ । ऋणोति । अर्णोति । ऋणुयात् । अर्णुयात् । ऋणोतु । अर्णोतु । आर्णोत् । आर्णोत् । आर्णिष्टाम् । आर्त । आर्णिष्ट । आनर्ण । आनृणतुः । डुकृञ् करणे । करोति । "अत उत्सार्वधातुके" (६ । ४ । ११०) कुरुतः । यणादेशः । "न भकुर्छुराम्" इति न दीर्घः । कुर्वन्ति ।

## ३९४. नित्यं करोतेः [ ७ । ४ । १०८ ]

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः । कुर्वः । कुर्मः ।

---

वेट् । सनित्वा । सत्वा । सनोतीति "धात्वादेः षः सः" ( ६ । १ । ६४ ) नैमित्तिकत्वात्णत्वस्याप्यपायः । सनुते । सनुयात् । सन्वीत । सनोतु । सनुताम् । असनोत् । असनुत । असातेति । "तनादिभ्यस्तथासोः" ( २ । ४ । ७९ ) इति सिचो लोपः । आत्वम् । असनिष्ट । सिचो लुगभावे इट् । ससान । सेने । सनिता । सनिषीष्ट । सनिष्यति । सनिष्यते । क्षणु । क्षणुयात् । क्षण्वीत । क्षणोतु । क्षणुताम् । अक्षणोत् । अक्षणुत । अक्षतेति । "तनादिभ्यस्तथासोः" ( २ । ४ । ७९ ) इति सिचो लोपे 'अनुदात्तोपदेश" ( ६ । ४ । ३७ ) इति अनुनासिकलोपः । अक्षणिष्टेति । लुगभावे । अक्षथाः । अक्षणिष्ठाः । चक्षाण । चक्षणे । क्षणिता । क्षण्यात् । क्षणिषीष्ट । क्षिणु । उप्रत्यय इत्यादि । उप्रत्ययनिमित्त उपधागुणः । इत्यनेनान्त्यगुणः करोतेर्न वार्यते इत्युक्तम् । एतच्च "संज्ञापूर्वको विधिरनित्य" ( ५० ) इत्यात्रेयरक्षितमाधवादिभिरुक्तम् । तथा चापिशलिदुर्गादयोऽपि शप्येवोपधागुणमसूचयन् । यत्तु प्राचोक्तम् । एतत्तु दुर्गमतम् । तथा चानिच् विकरण इति शप्येव गुणं विदधाति इति । तदसत् । स्वमते गुणस्वीकारप्रसङ्गात् । न चेष्टापत्तिः । अभियुक्ताभिधानविरोधेनापसिद्धान्तात् ।

३९५. ये च [ ६ । ४ । १०९ ]

कृञ उलोपः स्याद् यादौ प्रत्यये। कुर्यात्। कृञस्तनादित्वेऽपि सिचो वा लुक् न। अकृत।

---

अत एवामुं धातुं शाकटायनक्षीरस्वाम्यादयो न पठन्ति। "पञ्चबाणः क्षिणोति" न त्वद्यशः शस्त्रभृतां क्षिणोति" इति प्रयोगस्तु स्वादिषु छान्दसेषु रिक्ष, चिरि, जिरि, दाश दृ हिंसायामिति दण्डकपठितस्य भाषायामपि प्रयोगाङ्गीकारेण-मैत्रेयमैत्रेयादिभिः समर्थितः। अन्ये तु क्षिणोतीति प्रयोगं भाषायामसाधुमेव मन्यन्ते। तथा च शाब्दिकाभरणे क्षेणोतीति गुण उदाहृतः। उपधाऋकारस्य तु वेति एतदप्य-नित्यप्रपञ्चादागतम्। अत एव ऋणिप्रभृतीनुदाहृत्य क्षीरस्वाम्याह—सार्वधातुके संदिग्धगुणा एते इति। द्वावप्येतौ दन्त्यान्तौ। लाक्षणिकं च णत्वम्। तेन यङ्लुकि चाक्षन्ति चेक्षेन्ति इतीडभावपक्षे "नश्चापदान्तस्य" (८।३।२४) इत्यनुस्वारः सिद्ध्यतीति स्थितम्। ऋणु। ऋणुते। ऋणुयात्। अर्णुयात्। ऋण्वीत। आर्णोत्। अर्णवीत। आर्णुत। आर्तेति सिचो लुक्। नलोपः। आट्वृद्धिः। आर्णिष्टेति। सिचो लुगभावे इट्। आनर्णोति। "अत आदेः" ( ७ । ४ । ७० ) "तस्मान्नुड् द्विहलः" ( ७ । ४ । ७१) ऋकारैकदेशोऽपि रेफो नुड्विधिं प्रति हल्। उपधागुणः। आनृणतुः। आनर्णिथ। आनृणिव। आनृणे। आनृणिषे। अर्णिता। ऋण्यात्। अर्णिषीष्ट। अर्णिष्यति। अर्णिष्यते। डुकृञ्। डुइत्। कृत्रिममिति। क्त्रिप्रत्ययार्थं। करोतीति। "सार्वधातुक" ( ७ । ३ । ८४ ) इति गुणः। कुरुत इति। उत्वे तु कृते उपधागुणो न भवति विकार-निवृत्त्यर्थात् तपरकरणात् संज्ञापूर्वकत्वेनानित्यत्वाद्वा। यणादेश इति। कुरु अन्तीति स्थिते "इको यणचि" ( ६ । १ । ७७ ) इत्यनेन वकार इत्यर्थः। "न भकुर्छुराम्" इति न दीर्घ इति। एतत्तु कुर्वे इत्यादौ वमुचितम्। इह तु यणो "अचः परस्मिन्" ( १ । १ । ५७ ) इति स्थानिवत्त्वमपि सिद्धम्। न च दीर्घविधौ न स्थानिवत्त्वनिषेधः। तस्य लोपाजादेशविषयत्वात्। न च स्थानिवद्भावे सिद्धेऽप्यस्मिन् पर्जन्यवल्लक्षण-प्रवृत्त्या प्रतिपदोक्तत्वाच्च निषेध उदाहृत इति वाच्यम्। स्थानिवद्भावं प्रति निषे-धस्यासिद्धत्वात्। यद्वा "पूर्वत्रासिद्धीये न स्थानिवत्" ( वा० ) इति स्थानिवत्त्वाप्रस-ङ्गान्नैवमुक्तम्। कुरुते। कुर्वीत। करोतु। कुरुताम्। अकरोत्। अकुरुत। अकार्षीत्। कृञस्तनादित्वेऽपि इति। उक्तं हि प्राक्—तनादित्वादेव सिद्धे कृञो ग्रहणमन्यत् तनादिकार्यं नास्येति ज्ञापयति। अस्तु वा विकल्पः तथाप्यनेन मुक्ते "ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इति लोपो भविष्यति। न च विकल्पेन बाधः। लोपस्यासिद्धत्वात्। नापि विकल्पविधिवैयर्थ्यम्। अतत। अतनिष्टेत्यादौ चरितार्थत्वात्॥ ३९३॥

अकृतेति। "उश्च" (१।२।१२) इति कित्वान्न गुणः। चकार। चकर्थ। चकृव। चक्रे। चकृवहे। कर्ता। क्रियात्। "ऋद्धनोः स्ये" (७।२।७०)करिष्यति॥३९५॥

## ३१६. संपर्युपेभ्यः करोतेर्भूषणे [ ६ । १ । १३७]

एभ्यः करोतेः सुडागमः स्यात् भूषणेऽर्थे। संस्करोति। "अड्भ्यास-व्यवायेऽपि" सुट्। उपदेशाधिकारत्वात् "ऋतश्च संयोगादेः" (७।२।४३) इति लिङ् सिचोर्नेट्। समस्कृषाताम्। संचस्कार। "ऋतश्च संयोगादेर्गुणः" (७।४।१०) इत्यत्र संयोगोपधग्रहणं कर्तव्यम् कृञर्थमिति गुणः। संचस्करतुः। "कृसृभृवृ" (४।२।१३, इति सूत्रे "ऋतो भारद्वाजस्य" (७।२।६३) इति सूत्रे च "कृञोऽसुट इति वक्तव्यम्"[1] (वा०) इति नियमात् ससुट्कस्येट्। संचस्करिथ। संचस्करिव।[2] सुटो बहिरङ्गत्वात् "गुणोऽर्तिसंयोगाद्योः" (७।४।२९) इति गुणो न। संस्क्रियात्।

---

संपर्युपेभ्यः। संस्करोतीति—अलङ्करोतीत्यर्थः। सुटि कृते "समः · सुटि" (८।३।५) इति रुः। "अत्रानुनासिकः पूर्वस्य तु वा" (८।३।२) पक्षे "अनु-नासिकात्परोऽनुस्वारः" (८।३।४) रोर्विसर्जनीयः। "विसर्जनीयस्य सः" (८।३।३४) 'वा शरि" (८।३।३६) इति प्राप्ते "संपुंकानां सो वक्तव्यः" (वा०) इति सः। संपूर्वस्य क्वचिदभूषणेऽपि सुडिष्यते। संस्कृतमन्नम्। सूत्रकारो निर्देशयति—संस्कृतं भक्षाः' इति। ननु समस्कृषाताम्। सस्कृषीष्टेत्यत्र सुटि कृते संयोगादित्वाद् "ऋतश्च" (७।२।४३) इतोटा भाव्यमित्याशङ्क्याह—उपदेशा-धिकारत्वादिति। "एकाच उपदेशेऽनुदात्तात्'" (७।२।१०) इत्यत उपदेशे इत्यनुवृत्तेरुपदेशावस्थायां यः संयोगादिस्तस्येड् विधीयते। न च करोतिस्तथा, सुट उपदेशोत्तरं विहितत्वादित्यर्थः। एतच्च भक्तः सुडिति भाष्यकारपक्षे परिहृतम्। कात् पूर्वग्रहणेन सुडभक्त इति ज्ञापितमिति वृत्तिकारमते त्वप्रसङ्ग एव सुटः कृञोऽनवयवत्वेन संयोगादित्वाभावात्। अत्र तु पक्षे एवं योजना—उपसमीपे ककारस्य देशो यस्य सुटः स चासावधिकश्च तत्त्वात् अभक्त एवायं कात्[3] पूर्वः समीपदेशे एव प्रयुज्यते इत्येतावत् न त्ववयव इत्यर्थः। अयं च परिहारः पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति पक्षे। पूर्वं धातुः साधनेन युज्यते इति पक्षे तु सुटो बहिरङ्गत्वेनासिद्ध-त्वात् संयोगादित्वं नास्तीत्यपि परिहारोऽस्ति। संचस्कारेति। अभ्यासव्यवायेऽपीति।

---

१. भवतीति क० पु०।

२. उपदेशेऽनुदात्तादिति क० पु०।

३. कात् पूर्वग्रहणेन ज्ञापितत्वादिति एतत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन इति क० पु०।

संस्कृपीष्ट । "परिनिविभ्यः" ( ८ । ३ । ७० ) इति षः । परिष्करोति । "सिवादीनाम्" (८ ।३ । ७१) इति षत्वं वा । पर्यष्कार्षीत् । पर्यस्कार्षीत् । उपस्करोति ।

२९७. उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु च [६।३।१३९]

उपात् कृञः सुट् स्यात् पुनर्गुणाधाने विकारेऽध्याहारेऽर्थे । उपस्कुरुते ।

## इति तनादिप्रक्रिया

—:०:—

---

ननु संचस्करतुरित्यत्राङ्गस्यासंयोगादित्वाद् गुणो न स्यादित्याशङ्क्याह—ऋतश्चेत्यादि । "संयोगोपधग्रहणं कर्तव्यम्" इति । संयोगोपधग्रहणमपीत्यर्थो द्रष्टव्यः । ननु संयोगादिग्रहणं तर्हि न कर्तव्यम्, सस्वरतुरित्यादावपि संयोगोपधत्वेनैव सिद्धेः । भवेत् सिद्धं सस्वरतुरिति, इह तु न सिद्ध्यति सचस्करतुरिति । बहिरङ्गलक्षणस्य सुटोऽसिद्धत्वेनासंयोगोपध इति गुणाप्राप्तेः । संयोगादिग्रहणे तु क्रियमाणे सयोगोपधग्रहणस्यार्थत्वात् सुटोऽसिद्धत्व बाध्यते इति गुणसिद्धिः । यद्यप्यल्मात्रमुपधा[1] न संयोगः तथाप्यवयवगतमुपधात्वं समुदाये उपचर्यते । ननु सुटोऽभक्तत्वान्नाङ्गस्य संयोग उपधा । सत्यम् । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणाददोषः । सुटो बहिरङ्गत्वादिति । पूर्वं धातुः साधनेन युज्यते इति पक्षे पश्चादुपनतोपसर्गपेक्षस्य सुटो बहिरङ्गत्वेनाऽसिद्धत्वात् संयोगादित्वाभावादित्यर्थः । यदा तु पूर्वं धातुरुपसर्गेण युज्यते इति पक्षस्तदा । यद्यपि सुडन्तरङ्गस्तथापि सुटोऽभक्तत्वादिति परिहारो ज्ञेयः । भक्तत्वपक्षे तु "नित्यं छन्दसि" ( ७ । ४ । ८ ) इत्यतो नित्यमित्यनुवृत्तेर्नित्यं यः संयोगादिस्तस्य[2] गुण इति विज्ञानात् सुटि कृते न भविष्यतीति बोध्यम् । संस्क्रियात् । 'रिङ् शयग्लिङ्क्षु" ( ७ । ४ । २८ ) संस्कृपीष्टेति । "उश्च" ( १ । २।१२ ) इति कित्वान्न गुणः । सस्कर्ष्यति । पर्यष्कार्षीदिति "अडभ्यासव्यवायेऽपि" इति सुट् । परिचस्कारेत्यत्र तु "स्थादिष्वभ्यासेन चाभ्यासस्य" (७।३।६५) इति षत्वं न भवति । प्राक्सितादित्यनुवृत्तेः ।

समवाये च । समवायं व्याचष्टे—सङ्घेऽर्थे इति ॥ २९६ ॥

उपात् प्रतियत्नं व्याचष्टे—गुणाधाने इति । लब्धसत्ताकस्य वृद्धये वृद्धस्य च तादवस्थ्याय गुणान्तराधानहेतुरिह प्रतियत्न इत्यर्थः । विकृतमेव वैकृतम् ।

---

१. यद्यप्य मात्रमिति क० पु० ।

२. तस्येति गुण विज्ञानादिति क० पु० ।

## तिङन्ते क्र्यादयः

डुक्रीञ् द्रव्यविनिमये । विनिमयः परिवर्त्तः । इतो द्वावनिटावुभयपदिनौ च ।

३६८. क्र्यादिभ्यः श्ना [ ३ । १ । ८१ ]

क्र्यादिभ्यः श्नाप्रत्ययः स्यात् कर्तरि सार्वधातुके । शपोऽपवादः । क्रीणाति । "ई हल्यघोः" (६ । ४ ।११३) क्रीणीतः । "श्नाभ्यस्तयोरातः" ( ६ । ४ । ११२ ) क्रीणन्ति । क्रीणीते । स्कुञ् आप्रवणे ।

३६९. स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च [ ३ । १ । ८२ ]

एभ्यः श्नुः स्यात् श्ना च कर्तरि सार्वधातुके । स्कुनोति । स्कुनाति ।

---

"प्रज्ञादिभ्यश्च" (५ । ४।३८) इति स्वार्थेऽणित्याशयेन व्याचष्टे—विकार इति । प्रर्थ-प्रकरणादिना गम्यमानार्थस्य वाक्यैकदेशस्य स्वरूपेणोपादानम् । वाक्याध्याहारस्तु प्रतीकेनोपादत्ते—अध्याहारे चेति । उपस्कुरुते इति । अलङ्कुरुते । सङ्घीकरोति । गुणान्तरमाधत्ते । विकरोति । वाक्यैकदेशमध्याहरतीति वार्थे तन्त्रेणोदाहरणं योज्यम् ॥ ३६७ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् तानादिकप्रक्रिया ॥ १ ॥ इति ।

इति तनादयः । तनादि १० ।

—:o:—

क्र्यादिभ्यः । क्रीणाति । श्नः "सार्वधातुकमपित्" ( १ । २ । ४ ) इति ङित्वान्न गुणः । णत्वम् । क्रीणन्तीति । झौ परत्वादन्तरङ्गत्वात्पूर्वमन्तादेशे आल्लोपः । एवं झेऽपि ज्ञेयम् । क्रीणीयात् । क्रीणीत ।-क्रीणीयाताम् । क्रीणीतात् । क्रीणीहि । क्रीणानि । क्रीणीताम् । क्रीणीध्व । क्रीणै । क्रीणावहै । अक्रैष्ट । चिक्राय । इयङ् चिक्रियतुः । चिक्रयिथ । चिक्रेथ । चिक्रियिव । चिक्रिये । चिक्रियिषे । चिक्रियिढ्वे । चिक्रियिध्वे । चिक्रियिवहे । क्रेता । क्रीयात् । क्रेषीष्ट । क्रेष्यति । क्रेष्यते । स्कुञ् । आप्रवणमुद्धारणम्[1] ॥ ३६८ ॥

स्कुनोतीति सुनोतिवत् । स्कुनातीति । क्रीणातिवद्रूपाणि ज्ञेयानि । स्तम्भु । एषु प्रथमतृतीयौ स्तम्भार्थौ । द्वितीयो निष्कोषणार्थः । चतुर्थो धारणार्थ इति माधवः ।

---

१. आप्रवणमुद्धारणम् इति नास्ति क० पु० ।

स्तम्भु स्तुम्भु स्कम्भु स्कुम्भु रोधने। एते सौत्राः। "अनिदिताम्" (६।२।२४) इति नलोपः। विष्टभ्नोति। अवष्टभ्नाति। "जृस्तम्भु" (३।१।५८) इत्यङ् वा। व्यष्टभत्। व्यष्टम्भीत्। अवतष्टम्भ। स्तुभ्नोति। स्कभ्नोति।

## ४००. वेः स्कभ्नातेर्नित्यम् [ ८ । ३ । ७७ ]

वेः परस्य स्कभ्नातेः सस्य षः स्याद् नित्यम्। विष्कभ्नाति। स्कभ्नाते-

---

उदित्वं क्त्वायामिड्विकल्पार्थम्। अत एव श्नुश्नाव्यतिरिक्तविषयेऽपि प्रयोग एषामिति गम्यते। एते सौत्रा इति। सूत्रे एवोपात्ताः, न धातुपाठे पठ्यन्ते इत्यर्थः। (ते "हलः[1] श्नः शानज् हौ" (३।१।३८) इति सूत्रे क्र्यादेरित्यनुवृत्तेः धातोः क्र्यादिगणपठितस्यैव हल उत्तरस्य श्नः शानजादेशो भवति, नान्यत्र सौत्रेष्वपीति जयादित्यादयः।) सर्वे परस्मैपदिनः सेट्काश्च। विष्टभ्नोतीति। "स्तन्भेः" (८।३।६७) इति षत्वम्। अवष्टभ्नातीति। श्ना। "अवाच्चालम्बनाविदूर्ययोः" (८।३।३८) इति षत्वम्। स्तभ्नुवन्ति। संयोगपूर्वत्वान्न "हुश्नुवोः" (६।४।८७) इति यण्। अत एव हि नलोपहिलोपौ। स्तभ्नुहि। स्तभ्नवानि। अस्तभ्नोत्। स्तभ्नीयात्। स्तभ्नीहि। (ये तु हल. श्न इत्यत्र क्र्यादिभ्य इत्यनुवृत्य[2] क्र्यादिभ्यश्च शानचं प्रत्ययं कुर्वते तेषां सौत्रेभ्यः स नास्तीति। माधवस्तु स्तभानेत्युदाजहार। शानज्विधौ क्र्यादिभ्य इत्यनुवृत्तिं नेच्छति तेन सौत्रेभ्योऽपि भवति) अस्तभ्नात्। अस्तभ्नीताम्। व्यष्टभत् इति। अङि नलोपः। व्यष्टम्भात्। अङभावे सिचः "इट ईटि" (८।२।२८) इति लोपः। उभयत्र "प्राक्सितादड्व्यवायेऽपि" (८।३।६३) इति षत्वम्। अवतष्टम्भेत्यादि[2]। (द्वित्वे। "शर्पूर्वाः खयः" (७।४।६१) "स्थादिष्वभ्यासेन" (८।३।६४) इति षत्वम्। तस्तम्भिथ। तस्तम्भिव। श्नाश्नुवोर्नलोपः। स्कुभ्नोति। व्यष्टम्भीत्। तस्तम्भ। स्तम्भिता। स्तभ्यात्। स्तम्भिष्यति॥ ३९६॥

वेः स्कभ्नातेरिति। स्कभ्नोतेर्वेति। ननु श्नानिर्देशो यदि श्नान्तरूपानुकरणार्थस्ततो विष्कम्भिताः विष्कम्भितमित्यादावपि न स्यात्। अथ धातूपलक्षणम्।

---

१. ते इत्यारभ्य—जयादित्यादयः इत्यन्तो नास्ति क० पु०।

२. ये तु इत्यारभ्य—भवतीत्यन्तो रेखाङ्कितो ( ) नास्ति क० पु०।

रित्युक्तेः स्तुम्नोतेर्न। विस्कम्नोति। स्कुम्नोति। मीञ् हिंसायाम्। "हिनुमीना" (८।४।१५) प्रमीणाति। "मीनातिमिनोति" (६।१।५०) इत्यात्त्वम्। अमासीत्। अमास्त। ममौ। मिम्यतुः। पूञ् पवने।

**४०१. प्वादीनां ह्रस्वः [ ७ । ३ । ८० ]**

प्वादीनां द्वाविंशतेर्ह्रस्वः स्यात् शिति परे। प्वादीनां ह्रस्वो वेति केचित्। पुनाति। पुनीते। अपावीत्। अपविष्ट। कॄञ् हिंसायाम्।

---

ततो विस्कभ्नोतीत्यत्रापि भवितव्यम्। यतः स एवायं धातुर्विकरणद्वययोगी[1]। न चास्य गणपाठोऽस्ति येन श्नानिर्देशात् क्रैयादिको गृह्यते न सौवादिक इति कल्प्येत। अत एव माधवेन विष्कभ्नोतीति श्नुप्रत्ययान्तपक्षेऽपि षत्वमुदाहृतम्। श्नानिर्देशश्च स्कम्भतेर्भौवादिकस्य निवृत्त्यर्थस्तेन विष्कम्भ इत्यादावपि भवतीति चोक्तम्। एवं तु स्तभ्नोतेर्नेत्येतन्मतान्तरेणोक्तमिति बोद्धव्यम्। मीञ्। उभयपदी, अनिट्[2] च। हिनुमीना इति। अनेन णत्वमित्यर्थः। प्रमीणीतः। प्रमीणन्तीत्यत्र त्वेकदेशविकृतस्यानन्यत्वात् मीनारूपाश्रयमपि णत्वमीत्वाल्लोपयोरपि कृतयोर्भवति। मीनीते। मीनीयात्। मीनीत। मीनीयाताम्। मीनातु। मीनीहि। मीनानि। मीनीताम्। मीनीष्व। मीनै। अमीनात्। अमीनीत। अमासीदिति। "यमरम" (७।२।७३) इतीट्सकौ। अमासिष्टाम्। ममाविति। आत्त्वम्। "आत औ णल" (७।१।३४) वृद्धिः। मिम्यतुरिति। अनेजन्तनिमित्तत्वान्नात्त्वम्। इयङ्। तस्य स्थानिवत्त्वात् "एकाच" (७।२।१०) इति द्वित्वम्। यण्। ममिथ। ममाथ। मिम्ये। माता। मीयात्। मासीष्ट। मास्यति। मास्यते। पूञ्। पवनं शुद्धिकरणम्, न शुद्धिमात्रम्। तथा च पुनीते आत्मानम् कर्पकेण। वलजं पुपूयत इत्यादौ सकर्मकत्वं दृश्यते। इतः सप्त सेटः। चत्वार उभयपदिनः॥ ४००॥

प्वादीनामिति-। आगणान्ताः प्वादयः, कथं ज्ञायते ? "ज्ञाजनोर्जा" (७।३।७९) इति दीर्घनिर्देशसामर्थ्यात्। अन्यथा ह्रस्वान्तोऽपि "अतो दीर्घो यञि" (७।३।१०१) इति दीर्घेण जानाति जायते इत्यादि सिद्धम्। तत् क्रियते प्वादीनां ह्रस्वो मा भूदिति। यदि तु ग्रोपर्यन्ता एव प्वादयः स्युस्ततो ह्रस्वाप्रसङ्गादनर्थकं दीर्घोच्चारणं स्यात्।

---

१. योग इति क० पु०।

२. अनिड्वेति क० पु०।

अकारीत्। अकरीष्ट। अकरिष्ट। "लिङ्सिचोः" (७।२।४२) इति वेट्। अकीर्ष्ट। करिषीष्ट। कीर्षीष्ट। धूञ् कम्पने। अधावीत्। अधौषीत् इत्यपि केचित्। तासौ नित्यानिट्त्वाभावात् थलि नित्यमिट्। दुधविथ। ग्रह उपादाने। "ग्रहिज्या" (६।१।१६) इति संप्रसारणम्। गृह्णाति।

---

एव च ली श्लेषणे इत्यस्यानन्तरं यद् वृत्करण तत्तु ल्वादिपरिसमाप्त्यर्थम् आनन्तर्यात्, न तु प्वादिसमाप्त्यर्थमित्याकरः। केचित्तु प्वादिसमाप्त्यर्थमपि वृत्करणमित्याहुस्तन्मतमाश्रित्याह—प्वादीनां द्वाविंशतेरिति। ते च पूञ् पवने। लूञ् छेदने। धूञ् कम्पने। स्तॄञ् आच्छादने। कॄ सॄ हिंसायाम्। वॄञ् वरणे। पॄ हिंसायाम्। वॄ वरणे भृत्सुर्सने। पॄ पालनपूरणयोः। दॄ विदारणे। जॄष् वयोहानौ। नॄ नये। ॠ गतौ। गॄ शब्दे। ज्या वयोहानौ। व्री वरणे। री गतिरेषणयोः। प्ली गतौ। ली श्लेषणे। वृत्। इत्यन्ताः। अत्र पक्षे इत उत्तरेषां व्री वरणे इत्यादीनां ह्रस्वो नास्ति। आगणान्त। इति पक्षे भवतीति मतभेदात् फलितं विकल्पमुपदर्शयति। प्वादीनामिति। ते च व्री वरणे। भ्री भये। क्षीष् हिंसायामिति त्रय एव। ज्ञा इत्यस्य तु जादेशे दीर्घोच्चारणसामर्थ्याद् ह्रस्वेन न भाव्यम्। परे तु हलन्ता इति। पुनीयात्। पुनीत। पुनातु। पुनीताम्। अपुनात्। पुपाव। पुपविथ। पुपुविव। पुपुविढ्वे। पुपुवे। पुपुविध्वे। पविता। पूयात्। पविपीष्ट। पविष्यति। कॄञ्। कृणाति। कृणीते। अकरिष्ट। अकरीष्टेति। "वॄतो वा" (७।२।३८) इति वा दीर्घः। इडभाव इति। "लिङ्सिचोरात्मनेपदेषु" (७।२।४२) इतीटो विकल्पनात्। अकीर्ष्टेति। "उश्च" (१।२।१२) इति किरवे "ॠत इद्धातोः" (७।१।१००) इतीत्त्वम्। "हलि च" (८।२।७७) इति दीर्घः। पत्वम्। ष्टुत्वम्। चकार। चकरतुः। चकरिथ। चकरे। करिता। करीता। कीर्यात्। करिषीष्टेति। "न लिङि" (७।२।३९) इतीटो न दीर्घः। कीर्षीष्टेति। "लिङ्सिचोः" (७।२।४२) इतीडभावपक्षे। करिष्यति। करीष्यति। धूञ्। धुनाति। धुनीते। धुनीयात्। धुनीत। धुनातु। धुनीताम्। अधुनात्। अधुनीत। अधावीदिति। स्वरत्यादिविकल्पं बाधित्वा "स्तुसुधूञ्भ्यः परस्मैपदेषु" (७।२।७२) इति नित्यमिट्। अधौषीदित्यपीति। "स्तुसुधूञ्भ्यः" (७।२।७२) इत्यत्र सुसाहचर्यात् स्वादेरेव धूञो ग्रहणम्। तेनास्य "स्वरति" (७।२।४४) इत्यादिनेड् विकल्प्यते इति तेषामाशयः। अधविष्ट। अधोष्ट। दुधाव। तासौ नित्यानिट्त्वाभावादिति। "स्वरति" (७।२।४४) इत्यादिना विकल्पितेट्त्वाद् इत्यर्थः। दुधुवे। धविता। धोता। धूयात्। धविषीष्ट, धोषीष्ट। धविष्यति। धोष्यति। ग्रह। गृह्णातीति। 'सम्प्रसारणाच्च" (६।१।१०८) इति पूर्वरूपम्। णत्वम्। गृह्णीतः। गृह्णीते। गृह्णीयात्। गृह्णीत। अगृह्णात्॥४०१॥

४०२. हलः श्नः शानज्झौ [ ३ । १ । ८३ ]

हलः परस्य श्नः शानजादेशः स्यात् हौ परे । गृहाण । अगृह्णात् । अग्रहीत् । हान्तत्वान्न वृद्धिः । जग्राह । जगृहतुः । जग्रहिथ ।

४०३. ग्रहोऽलिटि दीर्घः [ ७ । २ । ३७ ]

ग्रहेरिटो दीर्घः स्यान्न तु लिटि । ग्रहीता । शॄ हिंसायाम् । शृणाति ।

४०४. शॄदॄप्रां ह्रस्वो वा [ ७ । ४ । १२ ]

एषां ह्रस्वो वा स्याल्लिटि किङति । शशार । ह्रस्वाभावे "ऋच्छत्यॄताम्" ( ७ । ४ । ११ ) इति गुणः । शशरतुः । शश्रतुः । शशरिथ । शरीता ।

हलः श्नः । श्न इति स्थानिनिर्देशादादेशोऽयमित्याह—शानजादेशः स्यादिति । यदि श्न इत्यकृत्वा प्रत्यय एवायं विज्ञायते तत्रापि न दोषः । न चैवं हलन्तमात्रात् प्रसङ्गः । क्र्यादिभ्य इत्यनुवृत्तेः । ननु यदायं प्रत्ययः स्यात्तदा भिदानेति "व्यत्ययो बहुलम्" ( ३ । १ । ८५ ) इति शानचि कृते "मिदेर्गुणः" ( ७ । ३ । ८२ ) इति गुणः प्राप्नोति । स हि प्रतिषेधविषय आरभ्यमाणो मेद्यतीतिवत् इहापि स्यात् । आदेशत्वे तु स्थानिवद्भावेन सिद्धेऽपि शित्वे पुनः शित्करणात् ङित्त्वमपि पुनर्भवतीति गुणो न भवति । तस्मादादेश एव एष्टव्य इति चेन्न । यदि व्यत्ययेन तत एव गुणविषये इकारोऽपि भविष्यतीति सुवचत्वात्[1] । गृहाणेति । सन्निपातपरिभाषाया अनित्यत्वात् "अतो हेः" ( ६ । ४ । १०५ ) इति हेर्लुक् । गृह्णीताम् । अगृह्णीत् । अग्रहीष्ट । जग्राहेति । "लिट्यभ्यासस्य" ( ६ । १ । १७ ) इति संप्रसारणम् । "उरत्" ( ७ । ४ । ६६ ) हलादिः शेषः । जगृहे । ४०२ ॥

ग्रहोऽलिटीति । अलिटीति किम् ? जगृहिव । प्रकृतस्येटो दीर्घत्वम् । तेन चिरण्वदिटो न दीर्घ इति वक्ष्यति । गृह्यात् । ग्रहीषीष्ट । ग्रहीष्यति । ग्रहीष्यते । शॄ । इतो दश परस्मैपदिनः । शृणाति । "प्वादीनां ह्रस्वः" ( ७ । ३ । ८० ) शृणीयात् । शृणातु । अशृणात् । अशारीत् । अशारिष्टाम् । "सिचि च परस्मैपदेषु" इति न दीर्घः । शशार ॥ ४०३ ॥

शॄदॄप्रां । शशरतुरिति । "ऋच्छत्यॄताम्" ( ७ । ४ । ११ ) शश्रतुः । ह्रस्वपक्षे यण् । शशरिथ । शशरिव । शश्रिव । शरिता । शरीता । शीर्यात् । शरिष्यति ।

1. स्ववचनत्वादिति क० पु० ।

शीर्यात् । शरिष्यति । शरीष्यति । एवं दॄ विदारणे । पॄ पालने । ज्या वयोहानौ । "ग्रहिज्या" ( ६ । १ । १६ ) ।

## ४०५. हलः [ ६ । ४ । २ ]

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात् । इति दीर्घत्वे कृते प्वादीनां ह्रस्वः । जिनाति । जिज्यौ । जिज्यतुः । जीयात् । व्री वरणे । व्रीणाति । ज्ञा अवबोधने । "ज्ञाजनोर्जा" ( ७ । ३ । ७९ ) जानाति । श्रन्थग्रन्थ सन्दर्भे । श्रथ्नाति । "श्रन्थिग्रन्थ्योः किति लिटि सेटि

शरीष्यति । एवमिति । दृणाति । भदारीत् । ददार[1] । ददरतुः । दद्रतुः । दरिता । दरीता । दीर्यात् । पॄ । पपार । पपरतुः । पप्रतुः । पपरिथ । परिता । परीता । "उदोष्ठ्यपूर्वस्य" ( ७ । १ । १०२ ) इत्युत्वम् । रपरत्वम्[2] । दीर्घः । पूर्यात् । परिष्यति । परीष्यति । ज्या इत्यादि ॥ ४०४ ॥

हलः । अङ्गस्येति । प्रकृतमिहावर्तते । तेनैकेन हल् विशेष्यते । तेन च सम्प्रसारणम् । तेन चाङ्गम् । ततश्च तदन्तविधिर्भवतीत्याशयेन व्याचष्टे—अङ्गावयवादित्यादि । अङ्गावयवात्किम् ? निरुतम् । दुरुतम् । हल. उत्तर किम् ? उतम् । संप्रसारणं किम् ? चितम् । स्तुतम् । तदन्तस्याङ्गस्य किम् ? विद्धः । विचितः। इति । दीर्घत्वे इत्यादिनाऽस्य प्वादिषु[3] पाठे प्रयोजनं समर्थ्यते । अज्यासीत् । जिज्यौ इति । "लिट्यभ्यासस्य" ( ६ । १ । १७ ) इति संप्रसारणम् । 'आत औ णल:" ( ७ । १ । ३४ ) जिज्यतुरित्ति । "ग्रहिज्या" ( ६ । १ । १६ ) इति संप्रसारणे दीर्घे चेयङ् । तस्य स्थानिवत्त्वात् द्वित्वम् । यण् । जिज्यिथ । जिज्याय । ज्याता । जीयात् । ज्यास्यति । व्री । व्रीणाति । व्रिणातीति । प्वादीनां ह्रस्वो वेति केचिदित्युक्तम् । अव्रैषीत् । विव्राय । व्रेता । व्रीयात् । व्रेष्यति । ज्ञा । अज्ञासीत् । जज्ञौ । जज्ञिथ । जज्ञाथ । जज्ञिव । ज्ञाता । ज्ञेयात् । ज्ञायात् । ज्ञास्यति । श्रन्थ ग्रन्थ इतो गणान्ताः सेट्काः । श्रथ्नातीति । 'अनिदिताम्" ( ६ । २ । २४ ) इति नलोपः । अश्रन्थीत् । शश्रन्थ । श्रेथतुरिति 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' "ग्रन्थिग्रन्थिदम्भिभ्यः परो लिडपित् किद्वक्तव्यः" ( वा० ) इति कित्त्वान्न लोपः । तस्यासिद्धत्वादप्राप्तमेत्त्वमुपसंख्यानयति'—वेति केचिदिति । श्रन्थिग्रन्थि इति कित्त्ववार्त्तिके वेति केचित्पठन्ति इत्युक्तम् । तेन कित्त्वस्य विकल्पितत्वादेत्वमपि विकल्प्यते इत्यर्थः । यदि त्वेत्त्वस्यैव विकल्पो व्याख्येयेत

१. ददारेति नास्ति क० पु० ।

२. रपरत्वमिति नास्ति क० पु० ।

३. उपसंख्यातमिति क० पु० ।

धलि च एत्वं वक्तव्यम्" ( वा० ) चेति केचित् । श्रेथतुः । शश्रन्थतुः । श्रेथिथ । शश्रन्थिथ । एवं ग्रन्थ । कुप निष्कर्षे । कुष्णाति । कुषाण ।

४०६. निरः कुषः [ ७ । २ । ४६ ]

निरः परात् कुषो वलादेरार्धधातुकस्येड् वा स्यात् । निरकोषीत् । निरकुक्षत् । नित्यं किम् ? कोषिता । अश भोजने । अश्नाति । अशान । अशिता । अशिष्यति । वृङ् संभक्तौ । अवरिष्ट । अवरीष्ट । अवृत । ववृषे । वरिषीष्ट । वृषीष्ट।

इति क्र्यादिप्रक्रिया । इति नवगणाः ।

---

ततः कित्वपक्षे एत्वाभावे शश्रथतुः । शश्रथुः । शश्रथियेत्यपि प्रसज्येत । शश्रन्थतुरिति । कित्वाभावपक्षे न नलोपः । पिद्वचनेऽपि कित्त्वमिति सुधाकरादयः । श्रन्थिता। श्रथ्यात् । श्रन्थिष्यति । एवमिति । ग्रथ्नाति । अग्रन्थीत् । जग्रन्थ । ग्रेथतुः । जग्रन्थतुः। ग्रेथिथ । जग्रन्थिथ । ग्रेथिव ।ग्रन्थिता । ग्रथ्यात् । कुष । निष्कोषणं बहिर्निःसारणम् । कुष्णातीति । 'रषाभ्याम्" ( ८ । ४ । १ ) इति णत्वम् । कुष्णीयात् । कुषाणेति । "हलः श्नः शानज्झौ" ( ३ । १ । ८३ ) ॥ ४०५ ॥

निरः कुष. । प्राप्तविभाषेयम् । निरकुक्षदिति । इडभावपक्षे "शल इगुपधात्" ( ३ । १ । ४५ ) इति क्सः । "षढोः कः सि" ( ८ । २ । ४१ ) षत्वं क्तः । चुकोष । चुकुषतुः । कोषिता । कुष्यात् । कोषिष्यति । अश् । अश्नातु । अशानेति । श्नः शानच् । आशीत् । आश । मतान्तरे अष्टा । अश्यात् । अशिष्यति । वृङ् । आत्मनेपदी । वृणीते। वृणाते । वृणते । वृणीत । वृणीताम्। वृणीष्व । वृणै । अवृणीत । अवरिष्ट । अवरीष्ट । "वृतो वा" ( ७ । २ । ३८ ) इति दीर्घः । अवृतेति । "लिङ्सिचोरात्मनेपदेषु" ( ७ । २ । ४२ ) इतीडभावे "उश्च" ( १ । २ । १२ ) इति कित्वम् । "ह्रस्वादङ्गात्" ( ८ । २ । २७ ) इति सिचो लोपः । ववृषे इति । क्रादित्वान्नेट् । वरिता । वरीता । वरिषीष्ट । वरिष्यते ॥ ४०६ ॥

पृथ्वीमण्डलमौलिमण्डनमणिः श्रीवंशामलो-
त्तंसः श्रीनरसिंहसुनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समासिमगमत् क्र्यादिकप्रक्रिया ॥ १ । इति ।

इति क्र्यादयः । क्र्यादिः १०० ॥

—: ० :—

# अथ चुरादयः

## चुर स्तेये

४०७ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् [ ३ । १ । २५ ]

एभ्यश्चुरादिभ्यः स्वार्थे णिच् प्रत्ययः स्यात् । णकारो वृद्धयर्थः, चकारः "चितः" ( ६ । १ । १६३ ) इत्यन्तोदात्तार्थः । उपधागुणः । धातुसंज्ञायां शप्तिबादि । गुणायादेशौ । चोरयति ।

४०८. *णिचश्च [ १ । ३ । ७४ ]*

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । चोरयते ।

---

अथ चुरादयः । चुर स्तेये ।

सत्यापपाश । अत्र चूर्णान्तानि प्रातिपदिकानि तेषां "प्रातिपदिकाद् धात्वर्थे" इत्येव सिद्धे एषां ग्रहणं प्रपञ्चार्थम् । एभ्यो णिचं तु नामधातुप्रक्रियामुदाहरिष्यति । इह तु चुरादिभ्यो णिजर्थमुपन्यस्तमेतत् सूत्रम् । ननु चुरादेः "हेतुमति च" ( ३ । १ । २६ ) इत्येव सिद्धम्, तत् किमनेनेत्याह—स्वार्थे इति । एतत्तु चुरादिभिरेव संबध्यते सत्यापादिभिः तेषु धात्वर्थ इत्यादिनार्थनिर्देशात् । उपधागुणः इति । "पुगन्त" ( ७ । ३ । ८६ ) इत्यादिना । धातुसंज्ञायामिति । "सनाद्यन्ता धातवः" ( ३ । १ । ३२) इत्यनेन । तिप्शबादि इति । धातोरिति विहितस्य लडादेः "तिप्तस्झि" (३ । ४ । ७८) इति तिबादयः आदेशा भवन्ति । तेषु च परेषु शप् प्रत्ययः । आदिपदादनुबन्धलोपसार्वधातुकसंज्ञादि । गुणायादेशाविति । "सार्वधातुक"(७।३।८४) इति गुणः । "एचोऽयवायावः" ( ६ । १ । ७८) इत्यय् चोरयतीति । णिच् । णस्य "चुटू" ( १ । ३ । ७ ) इतीत्संज्ञा । चकारस्य "हलन्त्यम्" ( १ । ३ । ३ ) इति । चोरयतः । चोरयन्ति । चोरयेत् । चोरयतु । अचोरयत् ॥ ४०७ ॥

णिचश्च । केचिदाहुः—"स्वरितेत् स्याद् ग्रहिः क्र्यादौ लक्षिश्चैकश्चुरादिषु" इति वचनात् लक्षेः स्वरितेत्त्वात् लिङ्गाद् अन्येभ्यश्चुरादिभ्यो णिचश्चेति तङ् नेति हेतुमण्णिजन्तादेवायं विधिरिति तदप्रमाणमित्याह—हरदत्तः । एष विधिर्न चुरादिणिजन्तात् स्यादिति कश्चन निश्चिनुते स्म । आप्तवचोऽत्र न किंचन दृष्टम् । लक्षयतेः स्वरितेत्त्वमनार्षमिति, तदेतदभिसन्धायोदाहरति-चोरयते इति । चोरयेत । चोरयताम् ।

"णिश्रिद्रुस्रुभ्यः" ( ३ । १ । ४८ ) इति चङ् । द्वित्वम् । उपधाह्रस्वः । अभ्यासदीर्घः । णिलोपः । अचूचुरत् । चोरयामास । चोरयिता । चोर्यात् । चुरादेर्णिज्वेति केचित् । पक्षे चोरतीत्यादि । कुत्स संशब्दने ।

---

अचोरयत । कामयतावुक्तं लुङि प्रक्रियां स्मारयति—णिश्रीति चङित्यादिना । अयं तु प्रासिक्रमः । चोरि, इति स्थिते । च्लिः । चङ् । ततः परत्वाद् "णेरनिटि" ( ६ । ४ । ५१ ) इति णिलोपः । तस्य स्थानिवत्त्वाद् "णौ चङि" ( ६ । १ । ११ ) इत्युपधाह्रस्वो द्वित्वात् परत्वात् पूर्वं भवति । स च "एच इग्घ्रस्वादेशे" (१। १।४८) इत्योकारस्य ह्रस्व उकारः । "चङि" ( ६ । १ । १० ) इति द्वित्वम् । हलादिः शेषः "दीर्घो लघोः" ( ७ । ४ । ९४ ) इत्यभ्यासस्य दीर्घः । यस्तु प्राचा सन्वद्भावोऽप्युक्तः । तस्य प्रकृते क उपयोग इति चिन्त्यम् । अचूचुरत् । अचूचुरताम् । चोरयामासेति । "कास्प्रत्ययात्" (३ । १ । ३५ ) इत्याम् । कृञोऽनुप्रयोगः । "णेरनिटि" (६ । ४ । ५१) इति लोपापवादः "अयामन्ताल्वाय्येत्न्विष्णुषु" ( ६ । ४ । ५५ ) इत्ययादेशः । चोरयितेति । एयन्तस्यानेकाच्त्वेन सेट्त्वादिटि कृते‌ऽनिटीति निषेधान्न णिलोपः । अयादेशः । चोर्यात् इति णिलोपः । चोरयिष्यति । अचुचुरत । अचूचुरेताम् । चोरयाञ्चक्रे । चोरयिषीष्ट । चोरयिष्यते । चुरादेर्णिज्वेति केचित् । अत्रार्थे ज्ञापकं चिन्तयतेरिदित्करणम्, तदाह हरदत्तः–चितिः स्मृत्यामितोदित्त्वमत्र हि ज्ञापकम् । अस्य हि फलं चिन्तितमित्यादौ नलोपो मास्य भूदिति । नित्ये तु णिचि सत्यत्र नलोपस्याप्रसङ्गतः चिन्त स्मृत्यामितीत्येव पठितव्यं भवेदिहेति पक्षे चोरतीति । शप्युपधागुणः । आदिपदात् चोरतु । अचोरीत् । चुचोर । चोरिता । चूर्यात् । चोरिष्यति । अचोरिष्यत् । एतच्च ज्ञापकं सामान्यापेक्षमिति वादिनां मतेनेदमुदाहृतम् । सिद्धान्ते तु विशेषापेक्षं ज्ञापकमिति स्थितम् । तथा हि घुषिर् विशब्दने इत्यत्र भाष्ये—किमर्थममविशब्दने इत्युच्यते । ननु विशब्दने घुषेर्णिना भवितव्यम् । एवं तर्हि सिद्धे सति यदविशब्दनग्रहणं करोति तज् ज्ञापयत्याचार्यः ? विशब्दने विभाषा घुषेर्णिज् भवतीति, किमेतस्य ज्ञापने प्रयोजनम् ? "महीपालवचः श्रुत्वा जुघुषुः पुष्यमानवाः" इत्येष प्रयोगः उपपन्नो भवतीति विशिष्टविषयत्वमुक्तम् । अनित्यण्यन्ताश्चुरादय इत्यस्य तु सामान्यापेक्षत्वेऽविशब्दनार्थस्यापि घुषेरण्यन्तस्य सम्भवात् । तद्व्यावृत्त्यर्थमविशब्दनोक्तिः कथं ज्ञापिका स्यात् । तथा च "णेरणौ" ( १ । ३ । ६७ ) इत्यत्रापि गणिं प्रकृत्य भाष्यम् । यस्माण्णेः कर्मकर्ता वा विद्यते । न चैतस्माण्णेः प्राक् कर्म कर्ता वा विद्यते गणेर्नित्यण्यन्तत्वमुक्तम् । एतद्व्याख्याने च कैयटः । नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावात् इति । तस्माद् यत्र लिङ्गं वचनं त्वाघृषाद्वेत्यादि । एवं च तदुभयाभावाच्चुरेर्णिज्विकल्पोऽप्रामाणिक इति वदन्ति । परमतेन त्वेतदुदाहृतं

## ४०९. उपधायाश्च [ ७ । १ । १०१ ]

**धातोरुपधाया ऋकारस्य इदादेशः प्रत्यये परे । कीर्तयति । अचिकीर्तत् । अथ अदन्ताः । गण संख्याने । अतो लोपः । तस्य स्थानिवत्वान्नोपधावृद्धिः । गणयति ।**

---

द्रष्टव्यम् । 'अत'[1] एव 'एकहल्मध्ये" ( ६ । ४ । १२ ) इत्यनुवृत्तौ यज्जगणतुः, जगणुरिति लिङ्गवचनयोरभावेऽपि अयथन्तमुदाहृतम्, तदपि ) परमतेनेति माधवः । कृत ॥ ४०८ ॥

उपधा । अङ्गस्येत्यधिकारेण स्वनिमित्तप्रत्यय आक्षिप्यते इत्याशयेनाह—प्रत्यये परे इति । अत्र कृत इति सूत्रणीयम् । ऋत इति सूत्रणीयम् । न चान्य ऋदुपधोऽस्ति तत्किम् ' उपधायाश्च" ( ७ । १ । १०१ ) इति गुरुणा तथा तु न कृतमित्येवाहुः । कीर्तयति ।-इत्वे रपरत्वे "उपधायां च" ( ८ । २ । ७८ ) इति दीर्घः । तिप्, शप् । गुणायादेशौ । कीर्तयेत् । कीर्तयतु । अकीर्तयत् । कीर्तयते । कीर्तयेत् । कीर्तयेयाताम् । अकीर्तयत । अचिकीर्तदिति । लुङि । "णिश्रिद्रुस्रुभ्यः" (३ । १ । ४८) इति चङ्, द्वित्वम् । न च तत्र कर्तव्ये "द्विर्वचनेऽचि" ( १ । १ । ५६ ) इति स्थानिवत्वादभ्यासेऽकारश्रवणप्रसङ्गः इत्वस्या चङ्निमित्तत्वात् । णौ कृते स्थानिवद्भवतीत्यस्य तु नायं विषयः । यत्र द्विरुक्तौ क्रियमाणायां परभागस्याजवर्णस्तत्रैवेयं परिभाषेत्याकरे स्थितत्वात् । सामान्येन प्रवृत्तावप्यस्यानित्यत्वादत्राप्रवृत्तिरिति सीरदेवाः । अत्रैव "उरत्" ( ७ । ४ । ६६) इत्यदादेशपक्षे द्वित्वे उरदत्व-हलादिशेषसन्वद्भावाभ्यासदीर्घत्वैरचीकृतत् । अचीकृततामित्याद्यपि ण्यन्ते उदाहरिष्यति । अचिकीर्तत् । अचीकृतत् । कीर्तयामास । कीर्तयतु । कीर्त्यात् । कीर्तयिषीष्ट । कीर्तयिष्यति । अस्माच्च णिजनित्यस्तेन कीर्ततीत्यपि भवति । अत्र च लिङ्गम् "ऋदुपधाच्चाक्लृपिचृतेः" ( ३ । १ । ११० ) इत्यत्र ऋकारोपधः । कीर्तयति व्यावृत्त्यर्थं तपरकरणम् । नित्ये तु णिच्यनुपधा ऋकार इत्येव क्वचन भविष्यतीति किं तद्व्यावृत्त्यर्थेन तपरकरणेनेति । अथादन्ता इति । इतः परं वक्ष्यमाणेषु धातुषु अन्त्योऽकारो विवक्षितो न तूच्चारणार्थो नापीत्संज्ञकोऽनुनासिकप्रतिज्ञानादित्यर्थः । यत्तु प्राचोक्तम् धातुसूत्रमेतत् इति । न त्वेतद् धातुवृत्त्यादावुपलब्ध्व्याख्यातं वा । क्वचिदुपलब्धावप्यनेनादन्तत्वं विधीयते इत्ययुक्तम् । उक्तरीत्यानुवादत्वस्यैवोचितत्वात् । गण । संख्यानं नाम संख्यानिमित्तो ज्ञानविशेषः । भागशोऽवस्थापनं च । तत्राद्योऽर्थः कर्तृस्थो भाव इति । कर्तृस्थभावकत्वात् कर्मकर्ता नास्तीति । गणयतीति गणः स्वयमेवेति । "णेरणौ" ( १ । ३ । ६७ ) इत्यत्र वृत्तावुदाहृतम् । द्वितीये त्वर्थे

---

१. अत एवेत्यारभ्य—तदपि इत्यन्तो भागो नास्ति क० पु० ।

४१०. ई च गणः [ ७ । ४ । ९७ ]

गणयतेरभ्यासाकारस्य वा ई स्याच्चङ्परे णौ । अजीगणत् । अग्लोपित्वान्न सन्वद्भावः । अजगणत् । कथ वाक्यप्रबन्धे । कथयति । कथोऽभ्यासस्य ईत्वं वेति केचित् । अचीकथत् । अचकथत् । अङ्क पदे लक्षे च । अङ्कयति । चङि तु

---

कर्मस्थभावकत्वात् गणयतेर्गणः स्वयमेवेति कर्मवद्भाव उदाहृतो भाष्ये । भागशोऽव-स्थाप्यमानो गणस्तत्रानुकूल्यात् स्वयमेव भागशोऽवतिष्ठते इत्यर्थः । अवस्थानं कर्म-स्थो भावः इति न वृत्तिभाष्ययोर्विरोधः शङ्क्यः । ननु यद्ययमदन्तस्ततो णिचि "अाद् गुणः" (६ । १ । ८७) स्यात् अत आह—अतो लोप इति । किमर्थं तर्ह्यदन्तत्वं प्रतिज्ञायते अतस्तत्प्रयोजनमाह—तस्य स्थानिवत्त्वादिति । "अचः परस्मिन्" (१ । १ । ५७) इत्यनेन । उपधावृद्धिरिति । "अत उपधायाः" (७ । २ । ११६) इति प्राप्ता ॥ ४०६ ॥

ई च गण इति षष्ठ्यर्थे प्रथमा । चकारो "विभाषा वेष्टिचेष्टयोः" (७ । ४ । ९६) इति विकल्पस्यानुकर्षार्थः इत्याशयेनाह-वा ई स्यादिति । गणेरग्लोपित्वात् सन्वद्भा-वाभ्यासदीर्घयोरप्रसङ्गादीत्वमिदमारभ्यते । अजीगणदिति । णिच्यतो लोपः चङि णिलोपः । अदन्तत्वे प्रयोजनान्तरमप्याह—अग्लोपित्वान्न सन्वद्भाव इति । अज-गणदिति । ईत्वाभावपक्षे "सन्वल्लघुनि" (७ । ४ । ९३) इति प्राप्तः "दीर्घो लघोः" (७ । ४ । ९४) इत्यप्यत एव न । नन्वतो लोपस्य स्थानिवद्भावात्तेन व्यव-धानादेव सन्वद्भावादि न भविष्यति किमग्लोपित्वादित्यभिधानेनेति चेन्मैवम् । परत्वादन्तरङ्गत्वाच्च प्रागेवातो लोपे ततो द्वित्वेनाभ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवद्भावाप्रसङ्गात् । गणयामास । गणयिता । गण्यात् । गणयिषीष्ट । णिज्विकल्पस्तु—अस्मान्न भवति । लिङ्गवचनयोरभावात् । यत्तु "अत एक-हल्" (६ । ४ । १२०) इत्यत्र जगणतुः, जगणुरिति प्रत्युदाहृतम् । तत्सामान्येना-'नित्यण्यन्ताश्चुरादय इति ज्ञापकवादिमते वेति प्रागेवोक्तम् । कथ । कथयतीति । अतो लोपः गुणायादेशौ । कथोऽभ्यासस्येति । "ई च गणः" (७ । ४ । ९७) इत्यत्र चो भिन्नक्रमोऽनुक्तसमुच्चयार्थः इति भावः । क्षीरस्वामी त्वाह—कथमचीकथत् । प्रकृत्यन्तरमन्वेष्टव्यमिति । अचकथदिति । अग्लोपित्वान्न दीर्घसन्वद्भावौ । कथया-मास । कथयितेत्यादि । अङ्क पदं संख्यास्थानमेकत्वादि । तेन च तन्निष्ठः क्रियाविशेषो लक्ष्यते । लक्षणं विन्दुकरणम् । अङ्कयतीति । अतो लोपः । चङि त्विति । अकि अत् इति स्थिते "चङि" (६ । १ । ११) इत्यनेनाकारवतः ककारस्य द्वित्व-मित्यन्वयः । "अजादेर्द्वितीयस्य" (६ । १ । २) इति वचनात् कशब्दस्यैकाचो द्वित्वम् । न तु सणिच्कस्य किशब्दस्येत्यर्थः । ननु किमुच्यतेऽकारवत इति यावता प्रागेव लुप्तोऽकारस्तत्राह—अल्लोपस्य स्थानिवत्त्वादिति । ननु स्थानिवद्भावोऽपि

"ओः पुयण्ज्यपरे" ( ७ । ४ । ८० ) इति ज्ञापकात् अद्वित्वनिमित्तेऽपि णौ कृतमभ्यासस्य स्थानिवत् भवतीति ज्ञायते। तेनाल्लोपस्य स्थानिवत्त्वात् अकारवतः ककारस्य द्वित्वम्। अग्लोपित्वान्न सन्वद्भावः। अच्कत्। केचिदेवमाहुः। "ओः पुयण्" ( ७ । ४ । ८० ) इत्युवर्णनिर्देशात् णौ कृत उवर्णादेशे आकार आवादेशश्चाभ्यासस्य स्थानिवत् स्यान्नान्य इति नियमादजादित्वेन सणिच्कस्यैव ककारस्य द्विस्त्वम्। आञ्चिकत्।

---

न तावत् "अचः परस्मिन्" ( १ । १ । ५७ ) इत्यनेन, एकाच इति विहितद्वित्वस्य पूर्वविधित्वाभावात्। नापि "द्विर्वचनेऽचि" ( १ । १ । ५९ ) अतो लोपस्याचङ्निमित्तत्वात्। णेश्चाद्वित्वनिमित्तत्वात्। द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवदित्युक्तेरत आह—तेनेति। यत एव विज्ञायते तेन कारणेनेत्यर्थः। किं पुनर्विज्ञायतेऽत आह—अद्वित्वनिमित्तेऽपि णौ कृतमित्यादि। यद्यपि णिर्न द्वित्वनिमित्तं तथापि तत्र निमित्तभूते यत्कृतमतो लोपादि तदभ्याससंबन्धिनि कार्ये द्वित्वादौ कर्तव्ये सति स्थानिवद् भवतीति। ननु वचनाभावात् कथमिदं विज्ञातमत आह—"ओः पुयण्ज्यपरे" ( ७ । ४ । ८० ) इति ज्ञापकादिति। अनेन हि बिभावयिषति, लिलावयिषति, जिजावयिषतीत्यादावभ्यासोवर्णस्येत्वं विधीयते, तच्च प्रायेण णिच्येव तत्रैव पवर्गयण्जानामवर्णपराणां सम्भवात्। यद्यपि पिपविषते यियविषतीत्यत्र संभवति। तथापि वर्णग्रहणेन (प्रत्याहारग्रहणेन[1] जकारग्रहणेन च पकारयकारभिन्नाना) मवर्णपराणां न संभवो विना णिचम्। तत्र वृद्ध्यावादेशयोः कृतयोर्यद्यन्द्वित्वनिमित्तत्वेन स्थानिवद्भावो न स्यात् ततस्तत्सहितयोरेव[2] द्वित्वे कृतेऽभ्यासे उकारो न संभवति[3], संभवति चाकारस्तस्य "सन्यतः" ( ७ । ४ । ७९ ) इतीत्वेनैव सद्धमितोऽत्वविधानमनर्थकं स्यात्। तस्मादेतदेव ज्ञापयत्यद्वित्वनिमित्तेऽपि णौ कृतं स्थानिवद् भवतीति तेन नुनावयिषति, जुहावयिषति—इत्यादावभ्यासे उकारश्रुतिः सिद्धा। तथा च प्रकृतेऽपि अल्लोपस्य स्थानिवत्त्वात् कशब्दस्यैव द्वित्वमिति सिद्धम्।

नन्वस्तु नामैवम् सन्वद्भावादित्त्वेन भाव्यमेवेत्यत आह—अग्लोपित्वादित्यादि ततश्च *"सन्यतः" ( ७ । ४ । ७९ ) इतीत्त्वं न भवतीति भावः। आञ्चकदिति।* न लोपः। 'नन्द्राः संयोगादयः" ( ६ । १ । ३ ) इति न नकारस्य द्वित्वम्। एतेन वहेः क्रान्तस्य णिच्योजादित्यपि व्याख्यातम्। न चैवमचिकीर्तत् इत्यत्रेत्त्वस्यापि

---

१. प्रत्याहारग्रहणेनेत्यारभ्य—भिन्नान मित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

२. संभवतीति वारमेकमेव पठ्यते क० पु०।

३. तत इति नास्ति क० पु०।

न च अस्मिन् अदन्तत्वं व्यर्थम् । यतोऽग्लोपित्वं स्थानिवत्त्वं चादन्तत्व-प्रयोजनम् । यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम् । अदन्तत्वसार्थकत्वाय वा अल्लोप इत्यर्थः । अङ्कयति । अल्लोपाभावे "अचो ञ्णिति" ( ७।२।११५ ) इति वृद्धिः ।

---

स्थानिवत्त्वप्रसङ्गः । सजातीयविषयत्वात् ज्ञापकस्यावर्णपर एव धात्वक्षरे परेऽस्य प्रवृत्तेः । तदेतत् काशिकाकारमतमुदाहृत्य त्रिमुनिमतमुत्तरयन्नयन् केचिदेवमाहुरिति । एवं वक्ष्यमाणं केचिदिति भाष्यतत्त्वविदः । यद्वा पूर्वपक्षशेषोऽयं ग्रन्थः । केचिद्वाम-नाश्रयः । एवं पूर्वोक्तमाहुरित्यर्थः । सिद्धान्तस्तर्हि कीदृश इत्यपेक्षायामाह—श्रोः पुयण्यादि । सजातीयत्वाद् ज्ञापकस्य णौ कृत उवर्णस्यैवादेशोऽभ्यासस्य संबन्धिनि कार्ये द्वित्वे स्थानिवत् स्यादिति संबन्धः । उवर्णादेशमुदाहरति-—आकार आवादेश-श्चेति परम्परयेति भावः । आकारः "चिस्फुरोर्णौ" ( ६।१।५४ ) पुस्फारयति । क्वचिदौकार इति पाठः । सेन साधीयान् तस्या सत्यपि स्थानिवत्त्वे "ह्रस्वः" ( ७।४।५९ ) इति ह्रस्वेनाभ्यासे उकारश्रवणे विशेषाभावात् । आवादेशस्य सत्यसति च विशेषोऽस्तीति स उदाहृतः । नान्य इति । अतो लोपादिः । अस्मिस्तु पक्षेऽचिकीर्तत् इत्यत्र स्थानिवत्त्वप्रसङ्गो नास्ति । अनुवर्णादेशत्वात् । उत्तरभागेऽवर्णा-भावादिति परिहारस्तु भाष्यकृतः स्वपक्षविषयो ज्ञेयः । ननु मा नाम भूत् स्थानिवद्भाव-स्तथापि ककारस्याद्याकारेणैव साच्कत्वादस्तु द्वित्वम्-तत्राह अजादित्वेनेति । "अजादे-र्द्वितीयस्य" ( ६।१।२ ) इति वचनात् परस्यैव भाव्यमित्यर्थः । स्यादेतत् । द्वितीय-स्यैकाचोऽसम्भवात् प्रथमस्यैव भविष्यति । आटतुरित्यादिवदित्यत आह—सणिच्कस्यै-वेति । णयन्तस्यापि धातुत्वात् संभवति द्वितीय एकाजिति भावः । ननु तथापि ङ्कारादेर्द्वितीयैकाचो द्वित्वादभ्यासे ङ्कारः श्रूयेत आञ्चिङ्किदित्याह—ककारस्येति । "नकारजावनुस्वारपञ्चमौ" इत्युक्ते नकारोऽयं न प्रतिपदोक्तोऽकारस्तेन "न न्द्राः" इति नकारस्य द्वित्वं नास्तीति आञ्चिकदिति सणिच्कस्य कृते द्वित्वे पुनरादेशरूपमेवावति-ष्ठते इति परभागे णिलोपः । एतेनौजिढदित्यपि व्याख्यातम् । एवं तर्हि अदन्तत्व-प्रतिज्ञानमनर्थकं स्यादित्याशङ्क्य निराकरोति—न चेति । अस्मिन् मते सणिच्कस्य द्वित्वमिति पक्षे कुतो न व्यर्थमत आह—यत इति । यस्माद्धेतोरित्यर्थः । अग्लोपित्व-मित्यादिद्वयमदन्तत्वस्य फलम् । तत्राचकथदित्यत्राग्लोपित्वान्न दीर्घसन्वद्भावौ । कथयति, गणयतीत्यादौ तु स्थानिवत्त्वान्नोपधावृद्धिः । अङ्कयतेस्तु द्वयमप्येतत् न संभवति । आञ्चिकदित्यत्र सणिच्कस्य द्वित्वे कृते "सन्यतः" इत्यस्याप्रसङ्गेना-ल्लोपस्यानपेक्षणात् । स्थानिवत्त्वं च नापेक्षितम् । अङ्कयतीत्यत्राकारस्यानु-पधात्वेन वृद्ध्यप्रसङ्गात् । सर्वविधे विषये सर्वत्राप्यल्लोपविकल्पः कल्पनीयः । अन्यथाऽदन्तत्वोपदेशो व्यर्थः स्यादिति तदेव स्पष्टमाचष्टे—अदन्तत्वेत्यादि । वाल्लोप

४११. अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ [७।३।३६]

अर्त्यादेरदन्तानां च पुगागमः स्यात् णौ परे। अर्पयति। अर्थं

इति। ननु यद्यल्लोपेऽदन्तत्वमनर्थकमापद्यते ततस्तत्सामर्थ्यात् नित्यलोपो बाध्यताम्, न पुनर्विकल्पोऽतुल्यत्वात्। अतो लोपस्य चिकीर्षक इत्यादौ सावकाशत्वात्। सत्यम्। वाचनिक एवात्र इति प्रामाणिकाः। अर्ति ह्री। ऋ सृ गताविति भ्वादिह्वाद्योर्द्वयो-र्ग्रहणम्। ह्री लज्जायाम्॥ ४१०॥

ब्ली गत्याम्। री गतिरेषणयोः। रीङ् स्रवणे। क्नूयी शब्दे। क्ष्मायी विधूनने। पुकः पूर्वान्तकरणं[2] माश्चिकपदित्यादावुपधाह्रस्वार्थम्। अर्पयामास। अर्पयिता। अर्प्यात्। अर्थ। अर्थापयते इति। एतेन नित्यात्मनेपद्यम् सूचयति। अतो लोपः। अर्थापयते इति। अतो लोपाभावे पुक्। आर्तथतेति। अर्थ अस्माल्लुङि च्लिस्तस्य "णिश्रिद्रुस्रु" (३।१।४८) इति चङ्। अल्लोपस्य स्थानिवत्त्वाद् "अजादेः" (६।१।२) इति थशब्दस्य द्वित्वम्। "अभ्यासे चर्च" (८।४।५४) (णिलोपः[1] णौ कृते उवर्णादेश एव स्थानिवदिति पक्षे तु सणिच्कस्य द्वित्वम्। आतिथत। आर्तिथपतेति। अर्थापि अत इति स्थिते "णौ चङि" (७।४।१) इति उपधाह्रस्वः। अजादेः "न न्द्राः" (६।१।३) इति थप इत्यस्य द्वित्वम्। हलादिः शेषः। चर्त्वम्, सन्वद्भावः। इत्वम्। हलादेरित्युक्तेर्न "दीर्घो लघोः" (७।४।९४) इति। णिलोपः अर्थयाञ्चक्रे। अथ कथमस्मादात्मनेपदं यावता नात्रानुदात्तेत्त्वादीनि निमित्तानि सन्ति। सत्यम्। आगर्वादात्मनेपदिनः इति धातुसूत्रमस्ति तेन भविष्यति। भू प्राप्तावात्मनेपदीतिवत्। न चैवमेधते इत्यादावपि "आत्मनेभाषा" इत्यादि धातु-सूत्रैरेव सिद्धे किम् "अनुदात्तङितः" (१।३।१२) इत्यादिनेति वाच्यम्। "आत्मनेभाषा" इत्यादिपाठस्यापाणिनीयत्वात् अत्र ह्येधादय अनुदात्ताः इत्यादेव पठ्यते स चानुवादः। अत्र "अनुदात्तङित" (१।३।१२) इत्यादिनैवात्मनेपदं विधास्यते। "आगर्वादात्मनेपदिन" इति पुनरपूर्वविधिः विधायकान्तरादर्शनात्। तथापि "अनुदात्तङित" (१।३।१२) इत्यादिलक्षणस्याव्याप्तिर्दुरुद्धरा। सामान्य-

---

१. णिलोप इत्यारभ्य—सूति थप् इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

२. पूर्वान्तकमाश्चिकवदिति क० पु०।

उपयाच्ञायाम् । अर्थयते । अर्थापयते । आर्तयत । आर्तिथत इत्यादि । इति चुरादयः ।

---

लक्षणसंगृहीतस्य गणसूत्रेण विधानस्यान्यत्र दर्शनात् । तस्मात् "कर्तरि कर्मव्यतिहारे" ( १ । ३ । १४ ) इत्यत्र कर्तरि इति योगो विभज्यते । तेनानुदात्तत्वादिरहितेभ्योऽपि अदन्तेभ्य ईदृग्भ्यः क्वचिदात्मनेपदं भवतीति साध्यते । तदेतदागर्वादात्मनेपदिन इत्यनेन सूच्यते इति कथंचित् संगमयितव्यम् । इत्यादीनि । अन्येऽपि चुरादिषु पठिता ग्राह्या इत्यर्थः ।

यद्वा भ्वादिगणपठितेभ्योऽपि स्वार्थे णिज् विज्ञेय इत्यर्थः । तथा च गणसूत्रम्—बहुलमेतन्निदर्शनमिति । चुरादिपाठस्तु निदर्शनमात्र मित्यर्थः । रामो राज्यमचीकरदित्याद्यपि भवति । अन्ये तु व्याचक्षते—वर्धते धातुगणपाठः भ्वादिगणपाठस्तु दिङ्मात्रप्रदर्शनार्थः इति ॥४९१॥

इति चुरादयः

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् चौरादिकप्रक्रिया ॥ १ ॥ इति ।
इति दशगणी समाप्ता । चुरादि १६० ॥

—:o:—

# अथ ण्यन्तप्रक्रिया

## ४१२. हेतुमति च [ ३ । १ । २३ ]

हेतुः प्रयोजकः तद्व्यापारः प्रेषणादिर्हेतुमान् तस्मिन् वाच्ये धातोर्णिच् स्यात् । कुर्वन्तं प्रेरयति कारयति । अचीकरत् । णिजन्ताण्णिच् । चोरयन्तं प्रेरयति चोरयति ।

---

### अथ ण्यन्तप्रक्रिया

एवं दशगणीं निरूप्य स्वार्थे णिच्प्रसङ्गात् हेतुमण्णिचमप्युदाहरन्ति—हेतुमति । यत्तु प्राचोक्तम्—

"स्याच्छुद्धा प्रकृतिर्ण्यन्ता सन्नन्ता णिचि सन्परा ।
यङन्ता यङ्लुगन्ता च नातोऽन्या निष्प्रयोजना" ॥ इति ।

क्रममभिप्रेत्य शुद्धप्रकृतिरूपाण्यभिधाय ण्यन्ताया रूपाण्यभिधातुमारभते इति । तदसत् । चुरादिण्यन्ताया उदाहृतत्वेन शुद्धप्रकृतिरूपाण्यभिधायेत्याद्यभिधानव्याघातात् । यदि तु स्वार्थिकास्वार्थिकभेदे तात्पर्यम् । ततो मदुक्तमेवानुगृहीतं स्यात् शुद्धेत्याद्युपन्यासवैयर्थ्यं च । न चैतावत्येव प्रकृतिरित्यपि नियमः । तथा हि यदि शुद्धेति धातुपाठपठिताऽभिमता तर्ह्यायाद्यन्ताया असङ्ग्रहः । अथ स्वार्थिकप्रत्ययान्ताऽपि शुद्धेति विवक्षिता ण्यन्तेति च हेतुमण्णिजन्तात् ( 'सनि णिचि शुद्धाच्च यदि यङ्लुकि वृत्याचारक्विपि) सन्नन्तेति चेच्छासन्नन्ता ततो णिच् सन्परेत्यनर्थकम् । उक्तेनैव सङ्ग्रहात् । अथ प्रत्ययसन्निवेशेन कृतोऽस्य भेदः ततः क्यजन्तात्सनि णिचि यङि यङ्लुकि पुनस्तेषामेव व्यस्तसमस्तक्रमव्युत्क्रमैरुत्पत्त्याऽनेकभेदत्वान्नातोऽन्येति भावः । आचारक्विबन्तायाश्चासंग्रहान्न्यूनता । अथ क्विपो लुकि कृते शुद्धैवावशिष्यते इति चेत् हन्तैवं यङ्लुगन्तेति पृथग्ग्रहणमनर्थकमिति दिक् ।

हेतुमति च । हेतुरत्र पारिभाषिको गृह्यते । "तत्प्रयोजको हेतुश्च" (१।४।५५) इति कृत्रिमत्वात् । न तु फलसाधनयोग्यः पदार्थो हेतुरिति लौकिको गृह्यते । तेनेह न । अध्ययनेन वसति—इत्येतदभिप्रेत्य व्याचष्टे—हेतुः प्रयोजक इति । कर्तुरिति शेषः, "तत्प्रयोजको हेतुश्च" (१।४।५५) इति वचनात् । ननु यथा पितृमान् इत्युक्तेयं प्रति पितृत्वं स एवावगम्यते तथेहापि यं प्रति हेतुः स एव कर्ता हेतुमानिति यावत् प्राप्तं कारकाधिकारात्तु क्रियापेक्षत्वाच्च कारकभावस्य यो यस्मिन् व्यापारे प्रयोजकरूपेणोपयुज्यते स एव हेतुमानित्युच्येत । स च प्रयोज्यव्यापारोऽधिश्रयणादिसर्वसाधनसाध्यो विक्लित्त्यादिर्वेति तत्रैव णिच् स्यादित्याशङ्क्याह—तद्व्यापार

इति। तस्य प्रयोजकस्य व्यापारः प्रवर्तनारयः। तस्यावान्तरभेदमाह—प्रेषणादिरिति[1]। भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम्। आज्ञेति यावत्। आदिपदादध्येषणम् तत्समर्थाचरणं च गृह्यते। तत्र गुर्वादेराराध्यस्य प्रवर्तना अध्येषणम्। प्रार्थनेत्यर्थः। तत्समर्थाचरणं तदनुकूलव्यापारकरणम्। तच्चानेकधा। अनुमतिरुपदेशोऽनुग्रह[2] इति। अनुमतिं विनाऽर्थो निवर्तते तस्य राजादेरनुमत्या प्रयोजकत्वम्। वैद्यादेस्तु "मुस्तापर्पटकं पिबेत् ज्वरितः" इत्याद्युपदेशेन। यः पुनः जिघांसितं पलायमानं निरुणद्धि निरुद्धश्च हन्यते तत्र निरोद्धा हन्तुरनुग्रहेण[3] प्रवर्तकः। सर्वस्यास्यमर्थोऽर्थप्रकरणादिगम्यः। एषु सर्वेषु—अनुगत प्रवर्तनामात्रं णिजर्थोऽर्थः। भिक्षा वासयति। कारीषोऽग्निरध्यापयति—इत्यादावचेतनस्याप्यनुकूलाचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते। यतो भिक्षाः प्रचुरा व्यञ्जनवत्यश्च लभ्यमाना वा सम्प्रयुङ्क्ते तथा कारीषान् सम्प्रयुङ्क्ते। तथा कारीषोऽग्निरेकान्ते निवाते सुप्रज्वलितः शीतकृतमध्ययनविरोधिनमुपद्रवभयमपनयन्नध्ययनेऽनुकूलो भवतीति। तद्व्यापारो हेतुमान् इति। अत्र विवक्षित इति शेषः। अत्र चाभिधानस्वभाव एव हेतुः। स्वभावतो हि णिच् प्रत्ययः प्रयोजकव्यापारमेवाचष्टे नान्यदितः। तस्मिन् वाच्ये इति। एतेनाधिश्रयणादिवत्तादर्थ्यात्प्रयोजकव्यापारोऽपि पच्यादीनामेवार्थः णिच्प्रत्ययस्तु द्योतक इति मतमपाकरोति। तथाहि सति पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति द्वयोः कर्त्रोरभिधानं प्राप्नोति। धातुवाच्यव्यापारवत्त्वेन[4] द्वयोरपि तुल्यकर्तृत्वात् पाचयतो देवदत्तयज्ञदत्ताविति स्यात्। प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य ण्यर्थस्य प्राधान्यात् तस्यैव कर्तरि लः सिद्धयतीति भावः। यदि न प्रकृत्यर्थस्तत् कथं तूष्णीमासीनोऽपि पञ्चभिर्हलैः कृषतीति प्रयुज्यते। अत्राहुः—अनेकार्थत्वाद्धातूनां कृषिरेव प्रतिविधानेऽपि वर्तत इति विनापि णिचं प्रयोजकव्यापारावगतिरिति। कुर्वन्तं प्रयतीति। इदं कुरु ईदृशं कुरु इति स्वाभिप्रायेऽवस्थापयतीत्यर्थः। कुर्वन्तमित्यनेन प्रयोज्यस्य[5] कर्तृत्वं दर्शयति। अन्यथाऽस्याकर्तृत्वे प्रयोजकस्य हेतुत्वमपि नास्तीति णिच् नोत्पद्येत। यथा पृच्छतु मां भवान्, अनुयुङ्क्तां मां भवानित्यादौ। अत्र हि प्रश्नप्रयोज्यमीदृशं ब्रुविति ब्रूतेऽतो प्रयोज्यो नासौ कर्ता न ह्यसौ संप्रति पृच्छति तूष्णीमास्ते। तस्य च निर्व्यापारत्वात् कारकत्वमेव नास्ति कुतस्तद्विशेषः कर्तृत्वमिति प्रयोजकोऽपि न हेतुरिति णिचोऽप्रसङ्गात् लोडत्र भवति। उक्तं च—

---

१. प्रेषणादिभिरिति ख० पु०।
२. अनुग्रह इति नास्ति क० पु०।
३. रनुग्रहं करोतीति ख० पु०।
४. धातुवाच्यव्यापारवत्त्वेनेति क० पु०।
५. प्रयोजकस्येति क० पु०।

## ४१३. नाग्लोपिशास्वृदिताम् [ ७ । ४ । २ ]

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोङ् विधीयते ।
सक्रियस्य यदा प्रैषस्तदा स विषयो णिचः ॥ इति ।

ननु यदि प्रयुक्तेः पूर्वमेव प्रयोज्यः सक्रियस्तद्[1] व्यर्था प्रयुक्तिः । सत्यम् । तथाप्युपरतिशङ्कया क्वचित् प्रयुक्तेरर्थवत्त्वम् । यद्येवम् यत्राप्रवृत्तो बलात् प्रवर्त्यते ततो णिच् न स्यात् न ब्रूमः प्रवृत्तप्रवर्तने एव णिजिति. किं तु प्रवर्तितोऽपि प्रयोज्यो यत्र प्रवर्तत एव न तु निवर्तते तत्र णिच्[2] भवतीति । एवं च प्रयोज्यप्रवृत्त्युपहिता प्रयुक्तिर्णिजर्थः, केवला तु लोडर्थ इति भिन्नविषयत्वाण्णिचो लोटश्च न पर्यायता शङ्क्या । किं च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः । अनियत[3]कर्तृका तु सा णिजर्थ इति । कारयतीति । डुकृञ् करणे । अस्माण्णिच् । णित्वात् "अचोञ्णिति" ( ७ । २ । ११५ ) इति वृद्धिराकारः । रपरत्वम् । "सनाद्यन्ता धातवः" ( ३।१।३२ ) इति धातुत्वम् । तिप्, शप्, गुणायादेशौ । कारयेत् । कारयतु । अकारयत् । कर्तृगामिनि तु क्रियाफले "णिचश्च" ( १ । ३ । ७४ ) इत्यात्मनेपदे कारयते इत्यादि[4] ज्ञेयम् । अचीकरदिति । कारि, अस्माल्लुङ्स्तिप् । "इतश्च" ( ३ । ४ । १०० ) इतीकारलोपः । च्लिः । "णिश्रि" ( ३ । १ । ४८ ) इति चङ् । णिलोपः । अत्र द्वित्वात् परत्वात् "णौ चङि" ( ७ । ४ । १ ) इत्युपधाया ह्रस्वः । ततो द्वित्वम् । अत एवाभ्यासस्यादिष्टादचः पूर्वत्वात् सन्वद्भावे दीर्घे च कर्तव्ये उपधाह्रस्वो न स्थानिवद्भवति । द्वित्वं च णौ कृतस्य स्थानिवत्त्वात् कृ इत्यस्य । "उरत्" ( ७ । ४ । ६६ ) अत्वम् । "कुहोश्चुः" ( ७ । ४ । ६२ ) सन्वद्भावः, "सन्यतः" ( ७ । ४ । ७९ ) इतीत्वम् । "दीर्घो लघोः" ( ७ । ४ । ९४ ) इति दीर्घः । अचीकरताम्[5] । अचीकरन्नित्यादि । आत्मनेपदे अचीकरत । अचीकरेतामित्यादि । कारयामास । कारयिता । कार्यात् । कारयिष्यति । कार्यविशेषं दर्शयितुमाह—णिजन्ताण्णिजिति । चोरयति इति । चुर स्तेये । अस्मात् स्वार्थे णिचि उपधागुणे च कृते ततो हेतुमण्णिच् । "णेरनिटि" पूर्वं णिलोपः । तिप्, शप्, गुणायादेशौ ॥ ४ २ ॥

नाग्लोपीति । अक्प्रत्याहारस्तस्य लोपो यस्मिंस्तदग्लोप्यङ्गम् । शासु अनुशिष्टौ । ऋकार इद् यस्य तद् ऋदित् । अत्र णाविति सन्निधानादग्लोपोऽपि णिनिमित्तक[6] एव विवक्ष्यते । तदाह हरदत्तः—यत्र णौ परतोऽग्लोपस्तदिहाग्लोपि गृह्यते । दीव्यतिप्रभृतेर्नायं निषेधः शास्वृदिद्ग्रहणात् । तथा—

"शक्यः शासिग्रहोऽकर्तुमृदित्येव पठिष्यते ।
ऋ शासु अनुशिष्टावित्येवमेके प्रचक्षते ॥ १ ॥
वदन्त्यन्ये तु सूत्रेऽस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोऽस्य यङ्लुक्यपि भवेदिति" ॥ २॥ इति ।

ह्रस्वाप्राप्ताविति । पूर्वस्य णेरको लुप्तत्वेनाङ्गस्याग्लोपित्वादिति भावः ।

---

१. द्रव्यमेति क० पु० । २. न भवतीति क० पु० । ३. अनियतकर्तृकानुसारीति पाठः क० पु० ।
४. इत्यात्मेय इति ख०पु० । ५. अचीकरताम् इति नास्ति क०पु० । ६. णिनिमित्तकमेवेति क०पु० ।

अग्लोपिनः शास ऋदितश्चोपधाह्रस्वो न स्यात् चङ्परे णौ। इति ह्रस्वाप्राप्तौ णेर्णिचि नाग्लोपित्वमिति ह्रस्वादि। अचूचुरत्। णिलोपेऽग्लोपित्वमिति केचित्। अचुचोरत्। अशशासत्। ऋदितः। अडुढौकत्।

---

ननु कथमग्लोपित्वं यावता चोरि इ अत् इति स्थिते शब्दान्तरप्राप्त्याऽनित्याणिलोपात् पूर्वं परत्वाद् वृद्धौ कृतायामिकारस्य लोपेन भाव्यम्। तन्नाग्लोपित्वम् भवति। नैष दोषः। "णिलोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्" (वा०) इति परामपि वृद्धिं बाधित्वा पूर्वं णिलोप एव भवति। यत्तु "सन्वल्लघुनि" (७।४।९३) इत्यत्र भाष्ये णेः परत्वाद् वृद्धौ कृतायां लोप इत्यग्लोपित्वाभावादित्व भवति इति। तत्प्रौढिवादमात्रम्, परमतेन वा। "णौ चङि" (७।४।१) इत्यत्र "वृद्धेर्लोपो बलीयान्" इति स्वयमेवोक्तत्वात्[1] इति ज्ञेयम्। णेर्णिचीति। लोप इति शेषः। णिचि परे णेर्लोपे सति तत्कृतमग्लोपित्वं नाश्रीयते इत्यर्थः। यदि तु ण्यन्तात् परे णिचि विहितेऽग्लोपित्वं नेति निःशेषं व्याख्यायेत ततोऽममालदित्यादावपि द्वितीये णौ कृते आकारलोपकृतमप्यग्लोपित्वं निषिध्येतेत्युपधाह्रस्वः स्यात्। नाग्लोपित्वमिति। "णौ चङि" (७।४।१) इत्यत्रोपधाह्रस्वत्वे "णेर्णिच्युपसंख्यानम्" इति मूलवार्त्तिकम्। तदपि नाप्राप्तह्रस्वविधानार्थम्। किं तर्हि "नाग्लोपि" (७।४।२) इति निषेधबाधनार्थमित्यभिप्रेत्यैवमुक्तम्। तथा च तत्र भाष्ये अग्लोपित्वाद् ह्रस्वत्वं न प्राप्नोतीति तद् व्याख्यातम्। तत्र वाचनिकोऽयमर्थः इत्येके। वृत्तिकारस्तु न्यायेन साधयति स्म। "आकृतिनिर्देशात् सिद्धमिति" णिजातेर्निमित्तत्वेनाश्रयणात्। तस्याश्चैकत्वाद् गोबलीवर्दन्यायेन णयाकृतेरन्यस्याको[2] लोपः प्रतिषेधविषयत्वेनाश्रीयत इत्यर्थः। नन्वेवमप्युपधाह्रस्वो न प्राप्नोति। तत्र कर्तव्ये पूर्वणिलोपस्य "अचः परस्मिन्" (१।१।५७) इति स्थानिवद्भावाद् यश्चङ्परो णिः न तत्रोपधा ह्रस्वभाविनी यत्र चोपधा ह्रस्वभाविनी न स चङ्परः द्वितीयेन णिचा व्यवधानात्। नैष दोषः। प्रतिषिध्यतेऽत्र स्थानिवद्भावः। "क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्" (वा०) इति। कथं तर्हि वृत्तिकृतोक्तम्—योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावादुपधाह्रस्वो न प्राप्नोतीति। सत्यम्। सूत्रकारमते वार्तिकं नास्तीत्येवमुक्तम्। का तर्हि सूत्रकृतो गतिः, आकृतिनिर्देशाद् सिद्धमित्येव। णिजातिरेका निमित्तत्वेनाश्रीयते। तत्र सत्यपि स्थानिवत्त्वे आकृतेरेकत्वाद् यश्चङ्परो णिः स एव पूर्वः परश्च स एव चङ्परः इति नास्ति व्यवधानमिति। इति

---

१. अग्लोपित्वादिति ख० पु०।
२. अन्यस्याकेर्लोप इति क० पु०।

## ४१४. णौ च संश्चङोः [ ६ । १ । ३१ ]

सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात्। "संप्रसारणं तदाश्रयं च कार्यं बलवत्" इति वचनादादौ संप्रसारणम्। वृद्ध्यावादेशौ। द्वित्वम्। आवादेशस्याभ्यासे स्थानिवत्त्वादुकारदीर्घः। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्।

---

ह्रस्वादि। आदिना—अचूचुरदिति "दीर्घो लघोः" (७।४।९४) इत्यभ्यासस्य दीर्घः। अचीकरद्वीणा[1] परिवादकेनेत्यादौ सन्वदाद्यपि[2] अचूचुरदिति द्वितीयस्यापि णेश्चङि लोपः। णिलोपेऽग्लोपित्वमिति केचिदिति। णाविति व्यक्तिरेव निमित्तत्वेनाश्रीयते न जातिरिति वदन्तो वचनं चानाश्रयन्त[3] इति भावः। अचुचोरदिति। अग्लोपित्वान्नोपधा ह्रस्वाभ्यासलोपौ। अडुढौकदिति। ढौकृ त्रौकृ गतौ। चङि द्वित्वेऽभ्यासस्य ह्रस्व उकारः। "अभ्यासे[4] चर्च" (८।४।५४) इति ढस्य डः। अलघुपरत्वान्न दीर्घः। न च ऋदितोऽप्यग्लोपित्वादेव सिद्धमिति वाच्यम्। णिनिमित्ताग्लोपिनामेव तत्र ग्रहणात्। अत्र च प्रमाणमृदिद्ग्रहणमेव। तेनाचोचकासत्, अनोनृतत् इत्यादौ न निषेधः। ऋदिद्[5] ग्रहणेन लृदितो न गृह्यन्ते। पृथगनुबन्धकरणसामर्थ्यादित्येतद् ऋलृवर्णयोः सवर्णसंज्ञायामेवोक्तम्॥ ४१३॥

णौ च संश्चङोः। णाविति वेरपेक्षया परसप्तमी। संश्चङोरिति तु ण्यपेक्षया। विपर्यस्तं न भवति चङ्यसंभवादित्याशयेन व्याचष्टे—सन्परे इत्यादि। श्वयतेरिति। टुओ श्वि गतिवृद्ध्योरित्यस्य। ननु श्वि इ अदिति स्थिते चङपेक्षात्तु संप्रसारणात्तु पूर्वं णिमात्रापेक्षत्वेनान्तरङ्गौ वृद्ध्यायौ स्याताम् अत आह—संप्रसारणं तदाश्रयं चेत्यादि। तदाश्रयं 'संप्रसारणाच्च" (६।१।१०८) इति पूर्वरूपम्। वचनादिति। "लिट्यभ्यासस्योभयेषाम्" (६।१।१७) इत्यत्राधिकारादेवोभयेषामिति लब्धे पुनरुभयेषां ग्रहणेन भाष्ये साधितया परिभाषयेत्यर्थः। तथा च वव्रश्चेत्यत्र हलादिशेषं बाधित्वा पूर्वं संप्रसारणमेव भवति। तथा जुहुवतुरित्यत्रातो लोपं च बाधित्वा संप्रसारणपूर्वरूपत्वे भवतः। अन्यथातो लोपस्य "असिद्धवदत्राभात्"

---

१. भावीचद्वदयोरणमिति क० पु०।
२. सादाद्यपि इति क० पु०।
३. वचनं वचनाश्रयन्त इति क० पु०।
४. अप्रभ्यासे इति क० पु०।
५. ऋदिग्रहणेनेति क० पु०।

## ४१५. स्तम्भुसिवुसहां चङि [ ८ । ३ । ११६ ]

एषां षो न स्यात् चङि । "उपसर्गादिति वाच्यम्" ( वा० ) एषामुपसर्गनिमित्तः षो नेष्यते नाभ्यासकृत इत्यर्थः । अव्यतस्तम्भत् ।

---

( ६ । ४ । २२ ) इत्यसिद्धत्वादुवङ् न स्याद् इति । प्रत्याख्याता चैषा भाष्ये । पूर्वविप्रतिषेधाद्याश्रयेणाभ्याससंप्रसारणादेः साधितत्वात् । अत्र पक्षे "णौ च संश्चङोः" ( ६ । १ । ५१ ) इति च विषयसप्तम्याश्रयणादन्तरङ्गत्वादादौ संप्रसारणमिति बोध्यम् । किमेव कृते कृतं स्यादत आह—वृद्ध्यायादेशाविति । पूर्वं तु वृद्धावैकारस्याय् स्यात् । यद्यव शावित्यस्य द्वित्वेऽभ्यास इत्येव श्रूयेतेत्याशङ्क्याह—आवादेशस्येत्यादि । णौ कृतं स्थानिवद् भवतीति ज्ञापनादित्याशयः । संप्रसारणस्य त्वनजादेशत्वान्न स्थानिवत्त्वशङ्का । यद्यपि वृद्धेरौकारस्यापि स्थानिवद्भावः प्राप्नोति, तथाप्यौकारवतो द्वित्वेऽपि ह्रस्वेनाप्युकार एव भविष्यतीति विशेषाभावात् तथा नोक्तम् ।

उकारदीर्घं इति । संप्रसारणस्य वृद्ध्यावादेशयोः[1] स्थानिवत्त्वाद् शुशब्दस्य द्वित्वम् । तेनाभ्यासे उकारः सिद्ध्यति । तस्य च दीर्घ इत्यर्थः । अशूशवदिति । चङि णौ संप्रसारणेऽन्तरङ्गत्वात् वृद्ध्यावादेशयोः स्थानिवत्त्वात् शु इत्यस्य द्वित्वे परभागस्य[2] वृद्ध्यावादेशयोः "णौ चङ्युपधायाः" ( ७ । ४ । १ ) इत्युपधाह्रस्वे 'दीर्घो लघोः" ( ७ । ४ । ९४ ) इत्यभ्यासस्य दीर्घे सन्वद्भाव इति । संप्रसारणपक्षे शिव इ अत् इति स्थिते वृद्ध्यावादेशयोर्द्वित्वेऽभ्यासस्य ह्रस्वे उपधाह्रस्वे च सन्वद्भावात् "सन्यतः" ( ७ । ४ । ७९ ) इतीत्वमिति भावः । न च वृद्ध्यावादेशयोः णौ कृतत्वे स्थानिवत्त्वं शङ्क्यम् । उवर्णादेशस्यैव स्थानिवत्त्वमिति पक्षेऽतस्याभिधानात् । णौ कृतादेशमात्रं स्थानिवदिति पक्षे तु शिव इत्यस्य द्वित्वे हलादिशेषे च प्राकृत एवेकार इति कष्टं[3] नास्ति । "दीर्घो लघोः" ( ७ । ४ । ९४ इति मभ्यासदीर्घमाशङ्क्याह—अलघुत्वान्न दीर्घ इति । "संयोगे गुरु" ( १ । ४ । ११ ) इति लघुसंज्ञाया बाधितत्वादित्यर्थः ॥ ४१४ ॥

स्तम्भुषिवु । स्तम्भ रोधने । षिवु तन्तुसंताने । षह मर्षणे । चङि इति विषयसप्तमी परसप्तमी वा । तत्र "येन नाव्यवधानम्" इति णिचा व्यवधानेऽपि चङ्-

---

१. संप्रसारणे दीर्घवृद्ध्यावादेशानामिति ख० पु० ।

२. परभागस्य द्वित्वे इत्यधिकः ख० पु० ।

३. इति नास्ति । कथं ता इति क० पु० ।

पर्यसीषिवत् । व्यसीषहत् । सुब्धातोरनेकाचश्च सन्वद्भावो वेति केचित् । अचचकासत् । अचीचकासत् । "न न्द्राः संयोगादयः" (६ । १ । ३) इति नदराणां न द्वित्वम् । उन्दी क्लेदने । औन्दिदत् । अड्ड अभियोगे । आड्डिडत् । आर्चिचत् । ककारस्यापि न द्वित्वम् । उब्ज आर्जवे । औब्जिजत् । अजादेरित्येव । नेह अदिद्रयत् ।

---

परत्वं स्तम्भादेर्न विहन्यते इति ज्ञेयम् । ननु 'व्यसीषिवदित्यादौ अभ्यासस्यैव परभागस्याप्यनेन षत्वं किं न निषिध्यते इत्याशङ्क्याह—उपसर्गादितीत्यादि । अनेन च सस्य विशेषणादुपसर्गात् परस्य सस्य षत्वं निषिध्यमानमभ्यासस्यैव निषिध्यते । तच्चोपसर्गनिमित्तमेव संभवति । यस्तु परभागस्य सो नासावुपसर्गात्परः इति नायं निषेध इति फलितं व्याचष्टे—एषामित्यादि । उपसर्गनिमित्तं स्तम्भेः । "अवाच्च" (८ । ३ । ६८) "परिनिविभ्य." (८ । ३ । ७०) इत्यादिना प्राप्तः । अवातस्तम्भत् इति । 'अवाच्चालम्बनाविदूर्ययो. (८ । ३ । ६८) "प्राक्सितादड्व्यवायेऽपि" (८ । ३ । ६३) "स्थादिष्वभ्यासेन" (८ । ३ । ६४) च प्राप्तिः । पर्यसीषिवदिति । सिवेश्चङि णौ लघूपधगुणे णौ चङ्युपधाया" (७ । ४ । १) इत्युपधाह्रस्व इकारः "सिवादीनां वाऽड्व्यवायेऽपि" (८ । ३ । ७१) इति प्राप्तेऽभ्यासस्य षत्वेऽपि "आदेशप्रत्यययोः" (८ । ३ । ५९) इत्यभ्यासाश्रयं षत्वं परभागस्य भवति । व्यसीषहदिति । सहेरपि "अत उपधायाः" (७ । २ । ११६) इति वृद्धौ उपधाह्रस्वः, सन्वद्भावः, द्वित्वम्, दीर्घः, पूर्ववत् षत्वव्यवस्था । सुब्धातोरिति । पूर्वं सुबन्तान्निष्पन्नो धातुः सुब्धातुस्तस्य । यथा पटयति । अपीपटत् । अत्र वृद्धेः पूर्वं पश्चाद्वा टिलोप इति मतभेदात् फलितो विकल्पः । अनेकाचमुदाहरति—अचकासदिति । चकासृ दीप्तौ । [3]ऋदित्वान्नोपधाह्रस्वः । अस्य च विकल्पस्य मूलं व्याख्यानभेदः । तथाहि चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सन्वद्भावः दीर्घोऽप्येवमित्यर्थवादिनां हरदत्तादीनां मते अचीचकासत् इति भवति । चङ्परे णौ यल्लघु तत्र परतो योऽभ्यासस्तस्य सन्वद् दीर्घोऽप्येवमिति वादिनां सन्वद्भाव[4]दीर्घयोरभावादचचकासदिति भवितव्यम् ।

---

१. वसीषिवदित्योविति क० पु० ।

२. ङ्योरिति क० पु० ।

३. ऋदित्वादिति क० पु० ।

४. सन्वद्भाव इति नास्ति क० पु० ।

कासृशब्देन लघोर्णिचश्च व्यवधानात्। एतेन सन्वद्भावाभावपक्षे "दीर्घो लघोः" (७।४।६४) इति दीर्घः प्राप्नोतीत्यपि चोद्यमलानकम्। सन्वद्भावेन तुल्ययोगक्षेमत्वात्। अन्ये पुनः परिहरन्ति—सन्वद् भवत्यस्मिन् इति सन्वद्भावः। सन्वद्भावस्य निमित्तं यो लघुः ■ चेति केचिदिति सामर्थ्याल्लघुत्वस्यैव विकल्पोऽतिदिश्यते। तेन लघुत्वपक्षे दीर्घसन्वद्भावौ द्वावपि न भवतस्तुल्ययोगक्षेमत्वात् इति। दरिद्रातेस्त्वार्धधातुके आतो लोपो वाच्य इत्यग्लोपित्वाद् सन्वद्भावो नास्तीति—अदरिद्रदिति भवति। जागर्तेरपि न भवति। अजजागरदिति। योऽत्र चङ्परणिपरो लघुर्ण इति न तस्मिन् परतोऽभ्यासो जा इत्यनेन व्यवधानात्। औन्दिदर्दिति। उन्दी क्लेदने। णिचि उन्दि अत् इति स्थिते 'अजादेर्द्वितीयस्य" (६।१।२) इत्युकारस्य न द्वित्वम्। "न न्द्राः" (६।१।३) इति नकारस्यापि न द्वित्वम् इति। दिशब्दस्यैव द्वित्वम्। णिलोपः आट्। "आटश्च" (६।१।६०) इति वृद्धिः। अत्र प्राचोक्तम्—अजादित्वात् "दीर्घो लघोः" (७।४।६४) इति दीर्घो नार्वाचीनमतेन स्वमते स्यादिति। तदसत्। अभ्यासे चङ्परणिपरस्य लघोः परत्वाभावात्। न च चङ्परे णौ यदङ्गमिति पक्षे णिचमेव लघुमाश्रित्य स्यादिति वाच्यम्। "णेरनिटि" (६।४।५१) इति प्रागेव लुप्तत्वात्। वर्णाश्रयत्वाच्च प्रत्ययलक्षणं नास्ति। स्थानिवद्भावोऽपि न भवति। अभ्यासस्यादिष्टादचः पूर्वत्वाद् दीर्घविधौ न स्थानिवदिति निषेधाच्च। आड्डिडदिति। अड्ड अभियोगे। दकारोपधः। अजादित्वाद् "न न्द्राः" (६।१।३) इति निषेधाच्च डिशब्दस्य द्वित्वे[1] डस्य ष्टुत्वेन डः। णिलोपः। आर्चिचदिति। अर्च पूजायाम्। रस्य निषेधात् चिशब्दस्य द्वित्वम्। चकारस्यापि इति। पवर्गीयस्य। उब्ज आर्जवे इत्येनमुपध्मानीयोपधं[2] प्राह दोपधमप्येके बोपधं केचिद्ब्रुचिरे। तथा च भाष्यम्—उब्जिरयमुपध्मानीयोपधः पठ्यते इति। तत्रायोगवाहानामट्स्विव शर्षु जश्भावपक्षे इति शर्पूपदेशचोदना[3]। तेन भन्त्वे "झलां जश् झशि"(८।४।५३) इति जश्त्वेनौष्ठ्यस्यौष्ठ्ये बकारे, उब्जिता। उब्जितुमित्यादि सिद्धयति। द्वित्वे तु जश्त्वस्यासिद्धत्वात् बकारस्य द्वित्वाभाव इति सिद्धम्। नन्वत्र पक्षे उपध्मानीयादेरेव द्वित्वं प्राप्नोति ततश्च हलादिशेषेण जकारस्य लोपे "अभ्यासे चर्च" (८।४।५४) इति जश्त्वेनाभ्यासस्य जश्त्वे परस्यापि "झलां जश् झशि" (८।४।५३) इति जश्त्वे औविब्जदिति स्यात्। नैष दोषः। व्यञ्जनान्तानां द्वन्द्वे "न न्द्राः (६।१।३)

१. द्वित्वे ष्टुत्वमिति क० पु०।

२. उपध्मानीयकोपधमिति क० पु०।

३. चोदनात्वे इति क० पु०।

इति निर्देशसामर्थ्याद् उपध्मानीयस्यापि प्रश्लेषो विज्ञास्यते। अविभक्तिकश्च निर्देशस्तेनास्य द्वित्वं न भविष्यति। कथमभ्युद्गः समुद्ग इति। अभ्युत्पूर्वस्य[1] गमेर्डप्रत्यये एतद्रूपम्, नोब्जेस्तस्य अभ्युब्गः समुब्ग इत्येव भवितव्यम्। यस्याप्ययं बोपधस्तेनाप्येतद् वाच्यम्। अन्ये त्वेतदर्थं दकारोपधं मन्यन्ते उद्ज इति। "भुजन्युब्जो पाण्युपतापयोः" (७।३।६१) इत्यकुत्वविषये दस्य वत्वं निपात्यते। यद्वा अस्मात् बकारोच्चारणाल्लिङ्गात् "स्तोः श्चुना श्चुः" (८।४।४०) इत्यस्यानन्तरं उद्भेर्दस्य वः इति वाक्यशेषोऽनुमीयते। तत्र "पूर्वत्रासिद्धम्" (८।२।१) इति वत्वस्यासिद्धत्वात्[1] दस्य "न न्द्राः" (६।१।३) इत्येव निषेधः सिद्धः। कैयटेन उक्तम्—निपातनपक्षेऽपि दकारोपधनिर्देशसामर्थ्याद् द्विर्वचने दकारस्य वत्वं प्रवर्त्यते इति। अभ्युद्गः समुद्ग इति गमे रूपं भविष्यतीत्याशयः। येषां त्वयं बकारोपधस्तेषां प्रतिषेध आरब्धव्यः सूत्रेणासिद्धेः। केचित्तु बकारस्यापि संयोगान्तलोपेन सूत्रनिर्देशं वर्णयन्ति। द्वयोः संयोगसंज्ञेति पक्षे दकारोऽपि किं न लोपित इति चेत्। विचित्रा हि सूत्राकृतिः पाणिनेः। अजादेरित्येवेति। अजादेरित्यनुवृत्तौ शङ्का न कार्येत्यर्थः। तेन हलादौ प्रथमस्यैकाचोऽवयवस्य यत्र द्वित्वं तत्र संयोगादीनामेषां नायं निषेधः। अदिद्रिपत् इति। द्रा कुत्सायां गतौ। णौ पुगागमः। चङ्युपधाह्रस्वः। द्वित्वम्। हलादिः शेषः। अदुद्रवदिति। "णिश्रिद्रुस्रुभ्यः" (३।१।४८) इति चङ्। द्वित्वम्। उवङ्। ननु इन्द्रमिच्छति इन्द्रीयति क्यच्। इन्द्रीयितुमिच्छति सन्। इन्दिद्रीयिषति[2] इति "न न्द्राः" (६।१।३) इति दकारस्यापि द्वित्वं निषिध्येतेति चेत् मैवम्। यत्र बहवो हलोऽनन्तरास्तत्र बहूनामेव संयोगसंज्ञेति पक्षे दकारस्य संयोगादित्वाभावात्। द्वयोरपीति पक्षेऽपि न भवति कथमजादेरित्यनुवर्तते। तच्च पञ्चम्यन्तम्, कर्मधारयश्चायम्। अच्चासावादिश्चाजादिस्तस्मादजादेरिति। तत्र "तस्मादित्युत्तरस्य" (१।१।६७) इत्यनन्तराणामेव नदराणां द्वित्वनिषेधः इत्यनन्तरस्यैव नस्य[3] निषेधो न दस्येति। अथवा अजादेरित्येवेत्यस्यायमर्थः अदिद्रपदित्यादिव्यावृत्त्यर्थं वृत्तिकारैर्द्वितीयस्येत्यनुवर्तितम्।

---

१. वत्वस्येति क० पु०।

२. इन्द्रीयिषतीति क० पु०।

३. नस्येति नास्ति क० पु०।

४१६. रभेरशब्लिटोः [ ७ । १ । ६३ ]

रभेर्नुमागमः स्यादचि, न तु शब्लिटोः । लघुनीत्युक्तेर्न सन्वत् । अररम्भत् ।

४१७. लभेश्च [ ७ । १ । ६४ ]

लभेर्नुम् स्यादचि न तु शब्लिटोः । अललम्भत् । अचङीत्युक्तेर्न कुत्वम् । अजीहयत् ।

---

तथापीन्दिद्रीयिषतीत्यत्र दकारस्य निषेधो दुर्वारः । तदर्थमजादेरित्यनुवर्तनीयमिति वदन्ति । यद्येवमावश्यकत्वाल्लाघवाच्चाजादेरित्येवानुवर्त्यताम्, न द्वितीयस्येत्यपि इति । ननु असति द्वितीयस्येत्यस्मिन् आनञ्च, आनर्च, आनृजद्वे इत्यादावप्यजादेः प्रथमस्याप्येकाचः संयोगाद्याः नदरा न द्विरुच्येरन् । अस्त्वेवमकारमात्रस्यैव द्वित्वे दीर्घे नुटि च सिद्धमानञ्चेत्यादि । सत्यम् । एकाच इति तद्गुणसंविज्ञानो बहुव्रीहिः समुदायश्चान्यपदार्थः । एकः कार्यी[1] न प्रत्येकं वर्णास्तत्र अच, अर्च इति समुदाये द्विरुच्यमाने आभ्यन्तरश्च समुदायेऽवयवो भवतीति नदरविशिष्ट एव द्विरुच्यते न पुनरेते मुञ्जेषीकावदुद्धर्तुं शक्यन्ते इत्यर्थेन द्वितीयैकाचोऽवयवेष्वेव निषेधः पर्यवस्यति । अनेनैवाभिप्रायेण तत्र व्याख्यातं द्वितीयैकाचोऽवयवा इति ॥ ४१५ ॥

रभेरशब्लिटोः । रभ राभस्ये । अचि किम् ? आरब्धुम्[2] । अशब्लिटोः किम् ? आरभते । आरेभे । अररम्भत् इति । रभेर्णौ नुम् । चङि द्वित्वम् । हलादिः शेषः ॥ ४१६ ॥

एवं लभेरप्यूह्यम् । अचङीत्युक्तेर्न कुत्वमिति । "हेरचङि" ( ७ । ३ । ५६ ) इत्यनेन । अजीहयदिति । हि गतौ वृद्धौ च । अस्माण्णौ वृद्ध्यायादेशौ हायि इति । अस्माच्चङि उपधाह्रस्वे द्वित्वसन्वदित्वदीर्घत्वानि[4] ॥ ४१७ ॥

---

१. एकः कार्यो न प्रत्येकमिति क० पु० ।
२. आरभतु रिति क० पु० ।
३. अशिटिटोरिति क० पु० ।
४. द्वित्वमत्वदित्वदीर्घत्वानीति क० पु० ।

४१८. नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः [४।१।५१]

एभ्यश्च्लेश्चङ् न स्याच्छन्दसि । औनयीत् । अध्वनयीत् । ऐलयीत् । आर्दयीत् । लोके तु औनिनत् । अदध्वनत् । ऐलिलत् । आर्दिदत् । द्वयमपि लोके इति केचित् ।

नोनयतीति । ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अयश्चुरादयः तेषु निवद् । ध्वनिरदन्तः पठ्यते । तेन नोपधावृद्धि । घटादावपि पठ्यते । अर्द गतौ याचने च । अर्द हिंसायामित्यपि । हेतुमण्ण्यन्तावेतौ । चङ् न स्यादिति । "णिश्रि" (३।१।४८) इति प्राप्त । छन्दसीति । "गुपेश्छन्दसि" (३ । १ । ५०) इति प्रकृतत्वादिति[1] भावः । औनयीदित्यादि । चङो निषेधात् । च्लेः सिच् । "इट ईटि" ( ८ । २ । २८ ) इति लोपे सवर्णदीर्घः । अनिटीति निषेधान्न णिलोप । गुणायादेशौ । सिचि वृद्धिस्तु "ह्म्यन्तक्षण" ( ७ । २ । ५) इति निषेधः । आडागमः । "आटश्च" (६ । १ । ९० ) इति वृद्धिः । छन्दसीत्यनुवृत्तेर्व्यावर्त्यमाह—लोके त्विति । ( औनिनदिति[2] । ऊन इ अत इति स्थितेऽतोऽग्लोपित्वान्नोपधाह्रस्वस्ततो "अजादेः"(६। १।२) इति निशब्दस्य द्वित्वादि । तेन) तेन मा भवानूनिनदिति भवति । इलेस्तूपधागुणेना[3]ग्लोपित्वादुपधाह्रस्वे ततो द्वित्वे मा भवानिलिलदिति—आटोऽभावे ह्रस्वश्रवण भवति । पूर्वं द्वित्वे सति ततो ह्रस्वभाविन्युपधाविहतेति[4] ह्रस्वो न प्रवर्तेत । ( अदध्वनदिति । अग्लोपित्वान्न सन्वदित्वम् । यस्तु घटादिस्तस्यानग्लोपित्वाददिध्वनदिति भवति ) । ननु युक्तमचीकरदपीपचदित्यादौ द्वयोरपि शब्दान्तरप्राप्त्याऽनित्ययोर्ह्रस्वद्वित्वयोः परत्वादादौ ह्रस्वो भवतीति । अजादिषु तु द्वितीयस्य द्वित्वम् । तच्च कृताकृतप्रसङ्गित्वेन नित्यम् । न चास्ति शब्दान्तरप्राप्तिः ह्रस्वस्त्वनित्यः । कृते ह्रद्वित्वे ह्रस्वभाविन्युपधा विहनेति[5] तदप्रवृत्तेः । अन्तरङ्गं च द्वित्व बहिरङ्गो ह्रस्वो बह्वपेक्षत्वात् ततश्चादौ द्वित्वेनैव भाव्यम्, न ह्रस्वेनेति चेत् । सत्यम् । ओणेर्ऋदित्करण तु ज्ञापकमजादिषु द्वित्वात्पूर्वमुपधाह्रस्व एव भवतीति । तद्धि मा भवान् ओणिणदित्यत्र "नाग्लोपि" ( ७।४।२ ) ह्रस्वनिषेधार्थं कृतम् पूर्वं तु द्वित्वे ह्रस्वभाविन्युपधा नेति । किं निषेधेनेति । तथा च एधतेर्मा भवानिदिधदित्युदाहरन्ति । ( द्वयमपीति[6] । छन्दसीति नानुवर्तते विभाषेति चानुवर्तते इति भावः ) ॥ ४१८ ॥

१. प्रकृततत्वादिति क० पु० ।
२. औनिनदित्यारभ्य—तेनेत्यन्तो नास्ति ख० पु० ।
३. गुणेनाग्लोपित्वादिति क० पु० ।
४. विहितेति क० पु० ।
५. विहितेति क० पु० ।
६. द्वयमपीत्यारभ्य—भाव इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

**४१९. अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् [७ । ४ । ९५]**

एषामभ्यासस्य अकारोऽन्तादेशः स्याच्चङ्परे णौ । इत्वापवादः । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

**४२०. विभाषा वेष्टिचेष्टयोः [ ७ । ४ । ९६ ]**

अनयोरभ्यासस्याद्वा स्याच्चङ्परे णौ । अववेष्टत् । अविवेष्टत् । "एच इग्घ्रस्वादेशे" ( १ । १ । ४८ ) अचचेष्टत् । अचिचेष्टत् ।

**४२१. भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् [ ७ । ४ । ३ ]**

एषामुपधाया ह्रस्वो वा स्यात् चङ्परे णौ । अबिभ्रजत् । अबिभ्राजत् । अदीदिपत् । अदिदीपत् इत्यादि । "कणरणवणभणश्रणह्वेल्लपलुपलुठहेठां च"

---

अतुस्मृ । स्मृ चिन्तायाम् । भ्वादिः । आध्याने तु घटादिः । दॄ विदारणे क्र्यादिः । ञित्वरा संभ्रमे । प्रथ प्रख्याने । म्रद मर्दने । त्रयो घटादयः । स्तृञ् आच्छादने । स्पश बाधने । इत्वापवाद इति । सन्वद्भावे सति "सन्यतः" ( ७ । ४ । ७९ ) इति प्राप्तम् इत्वम् । असस्मरदिति । हलादिः शेषः । अलघुत्वान्न दीर्घः । अथाददरदिति[1] अत्वे कृते तस्य "दीर्घो लघोः" ( ७ । ४ । ९४ ) इति दीर्घः प्राप्नोति । तत्राह— तपरत्वसामर्थ्यादिति । स्थानिनो ह्रस्वत्वात् भास्यमानत्वेन सवर्णग्रहणाप्रसङ्गात् लक्षणान्तरप्राप्तोऽपि दीर्घोऽनेन निवर्त्यते इति भावः ॥ ४१९ ॥

विभाषा । वेष्ट वेष्टने । चेष्ट चेष्टायाम् । लघुपरत्वाभावादप्राप्त एव सन्वद्भावेऽभ्यासस्य "एच इग्घ्रस्वादेशे" ( १ । १ । ४८ ) इति ह्रस्वे प्राप्ते पक्षेऽत्वं विधीयते ॥ ४२० ॥

भ्राजभासेति । भ्राजृ भासृ दीप्तौ । भाष्लृ कथने । दीपी दीप्तौ । जीव प्राणधारणे । मील मीलने । पीड अवबाधने । चुरादिः । प्राप्तविभाषेयम् । भ्राजभासोर्ग्रहणमपाणिनीयमिति काशिका । अवश्यमनयोरनुदात्तोऽनुबन्ध आसञ्जनीय

---

१. अथाददरिति क० पु० ।

२. ह्रस्व इत्यस्यैवेगिति ख० पु०

(वा० ) अचीकणत् । अचकाणत् । अरीरणत् । अराणत् । अबीभणत् । अबभाणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजूहवत् । अजुहावत् । अलीलपत् । अललापत् । अलूलुपत् । अलुलोपत् । अलूलुठत् । अलुलोठत् । अजीहिठत् । अजिहेठत् ।

## ४२२. उर्ऋत् [ ७ । ४ । ७ ]

उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ । अचीकृतत् । अवीवृतत् । अमीमृजत् । पक्षे इद्गुणवृद्धयः । अचिकीर्तत् । अववर्तत । अममार्जत् ।

---

आत्मनेपदार्थं इति फले विशेषाभावाद् ऋकारः केश्चिदनुबध्यते । अबभ्रजत् इति । ह्रस्वपक्षे सन्वदित्वम् अलघुपरत्वान्न भवति । अदीदपदिति । ह्रस्वपक्षेऽभ्यासदीर्घः । पक्षे अदिदोपदित्याद्यूह्यम् । काण्यादीना वेति वार्त्तिकमर्थतः पठति । कणरणेति । आद्याश्चत्वारः शब्दे । श्रण दाने । ह्वेञ् स्पर्धाया[1] शब्दे च । लप परिभाषणे । लुप लोपने । लुठ लोठने । हेठ बाधने । एषामुपधाया ह्रस्वो वा स्यादित्यर्थः । अचीकणदिति । उपधाह्रस्वत्वेऽभ्यासस्य सन्वदित्वदीर्घादि । पक्षे तदभावः । अजूहवदित्यत्र "ह्वः सम्प्रसारणम्" ( ६ । १ । ३२ ) इति वस्योत्त्वे पररूपत्वे च वृद्धयादेशयोः स्थानिवत्त्वात् हु' शब्दस्य द्वित्वेऽभ्यासकार्यम् । पक्षेऽजुहावत् । एवमजीहठत् इति । उपधाह्रस्वे इति तस्य स्थानिवत्त्वाद् द्वित्वेऽभ्यासह्रस्वदीर्घचुत्वादि । पक्षेऽजिहेठत् । शेषमूह्यम् ॥ ४२१ ॥

उर्ऋत् । उरिति षष्ठी । ऋवर्णस्येत्याह—ऋकारस्येति । ॠ गतावित्यस्य ग्रहणं तु न भवति तपरकरणात् । तद्धि दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यादिति क्रियते । अचीकृतदिति । कृत सशब्दने । णौ चङि । अन्तरङ्गमपि ॠत इत्वं वचनसामर्थ्याद् बाधित्वा ऋत् भवति सवर्णग्रहणे ऋत[2] ॠकारस्यापि ग्रहणात् । अवीवृतदिति[3] । वृतु वर्तने । अत्र गुणः प्राप्तः । अमीमृजदिति । मृजेर्वृद्धिः प्राप्ता । पक्षे इद्गुणवृद्धय इति यथासंख्येनान्वयः । अचिकीर्तदिति । णौ कृतमपि इत्त्व न स्थानिवत् यत्र यत्र हि द्विरुक्ते परभागस्याद्योऽजवर्णास्तत्र स्थानिवत्त्वम् । तथा च

---

१. द्वजस्याह् यार्मिति क० पु० ।
२. ॠवर्णस्येति ख० पु० ।
३. चित इति क० पु० ।
४. अचीकृतदिति क० पु० ।

**४२३. स्वपेश्चङि [ ६ । १ । १८ ]**

ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात्। असूषुपत्।

**४२४. शाच्छासाह्वाव्यावेपां युक् [ ७ । ३ । ३७ ]**

एषां युगागमः स्यात् णौ। शाययति। अशीशयत्। छाययति। अचिच्छयत्। साययति। असीसयत्। ह्वाययति।

**४२५. ह्वः संप्रसारणम् [ ६ । १ । ३२ ]**

सन्परे चङ्परे च णौ ह्वयतेः संप्रसारणं स्यान्नित्यम्। संप्रसारणस्य बलीयस्त्वान्न युक्। अजूहवत्। व्याययति। वाययति। पाययति।

---

"ओः पुयण्ज्यपरे" ( ७ । ४ । ८० ) इति ज्ञापकमप्येतादृशमेव। अवयतंत इति। अलघुपरत्वान्न सन्वदित्वदीर्घौ। तपरकरणमादेशत्वप्रतिपत्त्यर्थम्। अन्यथा आन्तरतम्याद् दीर्घस्य दीर्घविधानं विकारबाधनाय स्वरूपाभ्यनुज्ञार्थं संभाव्येत। अपूर्वविध्यपेक्षया प्रतिप्रसवस्य लघुत्वात्। अत एव भाव्यमानत्वं नास्तीति भाव्यमानोऽण् सवर्णान्न गृह्णातीत्यपि न प्रवर्तेतेति ॥ ४२२ ॥

स्वापेश्चङि। स्वापिः प्रकृतिपाठेन प्रसिद्धोऽतो व्याचष्टे—ण्यन्तस्य स्वापेरिति। सुपूर्वस्यापेस्तु ग्रहणमनाशङ्क्यम्, धातोरित्यधिकारात्। अथ स्वपेरित्येव किं नोक्तम्? न ह्यण्यन्ताच्चङस्ति। सत्यम्। स्वापशब्दात् घञन्तादपि णौ चङि स्वापशब्दस्याविशिष्टत्वात् संप्रसारणं यथा स्यात्। अतो विकृतनिर्देशः। तत्रैतावान् विशेषः। अस्मात्तो लोपेनाग्लोपित्वादभ्यासदीर्घो नास्तीत्यसुषुपदिति भवति। केवलण्यन्तस्य तु दीर्घोऽस्ति। असूषुपदिति। स्वपेर्णिच् चङ्। संप्रसारणस्य बलीयस्त्वादादौ संप्रसारणे तत्र कृते लघूपधगुणे ओकारः। तस्योपधाह्रस्व उकारस्ततो द्वित्वे "दीर्घो लघोः" ( ७ । ४ । ९४ ) षत्वम् ॥ ४२३ ॥

शाच्छासा। शो तनूकरणे। छो छेदने। षोऽन्तकर्मणि। ह्वेञ् स्पर्धायां शब्दे च। व्येञ् संवरणे। वेञ् तन्तुसन्ताने। पा पाने। पै शोषणे। पा रक्षणे इत्यस्य[1] तु लुग्विकरणत्वादग्रहणम्। शाययतीति। "आदेच उपदेशेऽशिति" ( ६ । १ । ४५ ) इत्यात्वम्। "अर्त्तिह्री" ( ७ । ३ । ३६ ) इति पुकि प्राप्ते युक् विधीयते। तिप्शपोः कृतयोर्णेर्गुणायादेशौ। पुकः पूर्वान्तकरणमशीशयदित्युपधाह्रस्वो यथा स्यादिति। अत्र कृतात्वानां निर्देशः पुकः प्राप्तिं सूचयति। तस्य च प्रयोजनमिह प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापनम्। तेन क्षापयति। अध्यापयतीत्यादौ पुक् सिद्ध्यति। वे इत्यनुकृतात्वस्य निर्देशो वातिवायत्योर्निवृत्त्यर्थः ॥ ४२४ ॥

ह्वः संप्रसारणम्। ष्यङः संप्रसारणमित्यधिकारेऽपि पुनः संप्रसारणग्रहणं विभाषाधिकारनिवृत्त्यर्थमित्यभिप्रेत्याह—नित्यमिति। नन्वत्र "अभ्यस्तस्य च"

---

१. इत्यस्य तु इति क० पु०।

## ४२६. लोपः पिबतेरीच्चाभ्यासस्य [ ७ । ४ । ४ ]

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ। अपीप्यत्। "अर्तिह्रीब्ली" (७।३।३६) इति पुक्। "पुगन्त" (७।३।८६) इति गुणः। अर्पयति। ह्रेपयति। ब्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति।

---

( ६ । १ । ३३ ) इत्येव सिद्धे तत्र ह्यभ्यस्तनिमित्ते प्रत्यये विवक्षितेऽभ्यस्तीभवतो द्वित्वात् पूर्वमेव संप्रसारणमित्यर्थः स्थितस्तत् किममेन। सत्यम्। ज्ञापनार्थं तु अनभ्यासनिमित्तेन प्रत्ययेन व्यवाये यदि भवति णावेवेति। तेनात्मनो[1] ह्वायकमिच्छति ह्वायकीयति ततः सनि जिह्वायकीयिषतीत्यत्र[2] क्यचा ण्वुला व्यवाये न भवति। एव च सन्परे चङ्परे च णौ "अभ्यस्तस्य च" ( ६ । १ । ३३ ) इत्येव संप्रसारणमित्याहुः। आचार्यास्तु अभ्यस्तसंज्ञायामसत्यां संप्रसारणमिच्छन्त इदमेवोदाजह्रुः। अन्यथा परत्वाद् युकि कृते द्वित्वेऽनिष्टं रूपं स्यादिति। नन्वेवमपि ह्वा इ अत्[4] इति स्थिते परत्वाद् युक् प्राप्नोति तत्राह—संप्रसारणस्य बलीयस्त्वादिति। संप्रसारणं तदाश्रयं कार्यं बलीय इत्युक्तेरित्यर्थः। संप्रसारणे तु कृते परत्वेनादन्तत्वं विहितमिति[5] पुकोऽप्रवृत्तेस्तदपवादो युगपि न भवति। अजूहवदिति। संप्रसारणे कृते दीर्घः वृद्ध्यावौ। स्थानिवत्वाद् हु इत्यस्य द्वित्वे उपधाह्रस्वेऽभ्यासस्य दीर्घः। अजुहावदिति। कणरणेति उपधाह्रस्वत्वात् ॥ ४२५ ॥

लोपः पिबतेरिति। श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। अपाययत्। अपीप्यदिति। पा पाने। णौ युकि चङि उपधाह्रस्वे प्राप्ते तदपवादो लोपः। णौ कृत स्थानिवदित्युपधालोपस्य[6] स्थानिवत्त्वात् पाय इत्यस्य द्वित्वे हलादिशेषे ह्रस्वे वाग्लोपित्वादलघुपरत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्तयोरीत्वमनेन विधीयते। येषां णौ कृत उवर्णादेश एव स्थानिवदिति पक्षस्तेषां यद्युपधालोपस्य स्थानिवत्त्वं नास्ति। तथापि णि इत्यस्य द्वित्वे हलादिशेषेऽग्लोपित्वेन दीर्घाप्राप्तावनेनाभ्यासस्येत्वं भवतीत्यदोषः। अर्पयतीति

---

१. आत्मन इति नास्ति क० पु०।
२. ह्वायतीति क० पु०।
३. जिह्वायकोपतीति क० पु०।
४. ह्वा, इ, अ इति स्थिते इति क० पु०।
५. विहितमिति क० पु०।
६. उपधालोपस्यानिवत्त्वादिति क० पु०।

४२७. तिष्ठतेरित् [ ७ । ४ । ५ ]

तिष्ठतेरुपधाया इदादेशः स्यात् चङ्परे णौ । अतिष्ठिपत् ।

४२८. जिघ्रतेर्वा [ ७ । ४ । ६ ]

जिघ्रतेः प्रागुक्तं वा स्यात् । अजिघ्रपत् । "पातेर्णौ लुगागमो वक्तव्यः" ( वा० ) पालयति ।

४२९. वो विधूनने जुक् [ ७ । ३ । ३८ ]

जुक् स्यात् णौ कम्पनेऽर्थे । वाजयति । कम्पे किम् ? केशान् वापयति । "धूञ्प्रीञोरिति केचित्" ( वा० ) । धूनयति । प्रीणयति । प्रापयति ।

---

तिष्ठतेरित् । ईच्चाभ्यासस्येति न स्वर्यते । श्तिपनिर्देशोऽत्तास्थदिति[१] यङ्लुक्निवृत्यर्थः । अतिष्ठिपदिति । उपधाह्रस्वापवाद इत्येतीत्त्वस्य[२] स्थानिवत्वात् स्थाप् इत्यस्य द्वित्वम् । सन्वदित्त्वं[३] सत्वं ष्टुत्वम् । अत्र प्राचोक्तम्—स्था इति स्थिते पुक्[४] । चङ् । इकारोऽन्तादेश इति । तन्नोपधाय । विधीयमानः कथमन्तादेश इति चिन्त्यम् ॥ ४२७ ॥

जिघ्रतेर्वेति । घ्रा गन्धोपादाने । अजिघ्रपदिति । इत्वाभावे उपधाह्रस्वः पतेरिति । पा रक्षणे इत्यस्य पुको बाधनार्थं लुग् विधीयते । पाल रक्षणे इत्यनेनापि पालयतीति सिद्धत्वात् ॥ ४२८ ॥

वो विधूनने । वा गतिगन्धनयोः । अत्रापि कम्पे पुक्[५] मा भूदिति जुक् विधीयते । वज गतावित्यनेनापि वाजयतीति सिद्धेः । केशान् वापयति इति मुण्डयतीत्यर्थः धूञ्प्रीञोरिति । धूञ् कम्पने । प्रीञ् तर्पणे । धूञ्प्रीञोर्नुग् वक्तव्य इति वार्तिकम् । अत्र यद्यपि नित्यो नुक् स्मर्यते तथापि तत्र आन्तानुकरणादननुबन्धकस्य कुटादेः धू कम्पने इति चाधृषीयस्य चुरादेः प्रीङ् प्रीतौ इति ङनुबन्धस्य दिवादेश्चाग्रहणाज्जुगभावे धावयति प्राययतीत्यपि[४] भवतीति हरदत्तादिभिरुक्तत्वात् अर्थफलितो विकल्प आचार्यदर्शितः । एक इति हरदत्तादयः ॥ ४२९ ॥

विभाषा । ली श्लेषणे । क्र्यादिः । लीङ् श्लेषणे दिवादिरूभावपि गृह्येते । यकारनिर्देशस्य सामान्यग्रहणार्थत्वात् । श्तिपः शितकरणसामर्थ्यात् सुनोतीत्यादिना-

---

१. इत्यत्यपर्यवेति क० पु० ।

२. इत्येत्वस्येति क० पु० ।

३. सत्वं द्वित्वमिति क० पु० ।

४. पुग इति क० पु० ।

५. कम्पे जुक विधीयते इति क० पु० ।

## ४३०. विभाषा लीयतेः [ ६ । १ । ५१ ]

लीङोरात्त्वं वा स्यात् ल्यपि एज्निमित्ते अशिति च । विलीनयति । विलायति वा घृतम् ।

## ४३१. लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने [ ७ । ३ । ३९ ]

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेहद्रवे । विलीनयति । विलाययति । विलालयति । विलाययति वा घृतम् । स्नेहद्रवे किम् ? लोहं विलापयति । "प्रलम्भनाभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम्" ( वा० ) ।

---

ऽभावकर्मवाचिन्यपि यग् भवति । यथाऽकर्तृगेऽपि शप् । "भवतेरः[1]" ( ५ । १ । ३ ) इत्यत्र । यदि तु लीङ एव श्यनाय[2] निर्देशः स्याल्लीङ[3] इत्येवावक्ष्यदित्याशयेनाह—लीलीङोरिति । विलाययति इति । परत्वात् गुणे कृते एवात्त्वम् । "आदेच" ( ६ । १ । ४५ ) इत्यधिकारात् । युक् ॥ ४३० ॥

लीलोरिति । लीलीङोर्द्वयोर्ग्रहणम् । निरनुबन्धपरिभाषायाः प्रत्ययग्रहणविषयात् । लातेरिति । ला आदाने इत्यस्य, कृतात्त्वस्य लीयतेश्च ग्रहणम् । ली ई इतीकारप्रश्लेषादीकारान्तस्यैव नुग् भवति । तेनास्य "विभाषा लीयतेः" ( ६ । १ । ५१ ) इत्यात्त्वम् पक्षे न भवति । विलीनयति इति । लिय आत्त्वा"भावपक्षे नुक् । विलाययतीति । तस्यैवानुगभावे वृद्धिः । विलालयतीति[4] । यातेर्लीङश्चात्त्वपक्षे लुक् । तयोरेव लुगभावे आदन्तत्वात् पुक् । लम्भनेति । प्रलम्भनं वञ्चनम् । अभिभवः पराभवः । पूजा सत्कारः । नित्यमात्त्वमिये । "विभाषा लीयतेः" ( ६ । १ । ५१ ) इति विकल्पस्यापवादः । एतच्च व्यवस्थितविभाषा विज्ञानाल्लभ्यते ॥ ४३१ ॥

लियः संमाननेति । ण्यन्तयोरिति । "णेरणौ यत्कर्म" ( १ । ३ । ६७ ) इत्यतो

---

१. भवयते । र इति क० पु० ।
२. श्यनायामिति क० पु० ।
३. स्या स्लाङ इति क० पु० ।
४. लियो मात्त्वपक्षे इति क० पु० ।
५. विभाते रित्येच क० पु० ।

## ४३२. लियः संमाननशालीनीकरणयोश्च [१ । ३ । ७०]

लियोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजामिभवयोः प्रलम्भने चार्थे। लापयते। श्येनो वर्तिकामुल्लापयते । बालमुल्लापयति ।

## ४३३. बिभेतेर्हेतुभये [ ६ । १ । ५६ ]

आत्वं वा स्यात् प्रयोजकाद् भयं चेद्वाच्यम् ।

## ४३४. भीस्म्योर्हेतुभये [ १ । ३ ६८ ]

आत्मनेपदं स्यात् हेतुभये । युगागमः । पुगागमः । मुण्डो भाययते ।

---

णेरित्यनुवृत्तेः[1] । नहि "णिचश्च" ( १ । ३ । ७४ ) इत्यनेन सिद्धमत आह—अकर्तृगेऽपि फले इति । चकारेण "गृधिवञ्च्योः प्रलम्भने" ( १ । ३ । ६९ ) इति प्रवृत्तोऽप्यर्थः परामृश्यते इत्याह—प्रलम्भने चार्थे इति । जटाभिर्लापयते । पूजामधिगच्छतीत्यर्थः । तङ् आत्वसन्नियोगेनैव प्रवर्तते । श्येन इत्यादि । अभिभवतीत्यर्थः । बालमुल्लापयतीति । मिथ्याफलोपदर्शनेन वञ्चयतीत्यर्थः[2] ॥ ४३२ ॥

बिभेतेरिति । ञिभी भये । हेतुरिह पारिभाषिकः "तत्प्रयोजको हेतुश्च" ( १ ४ । ५५ ) इति गृह्यते । हेतुभय इति । "पञ्चमी भयेन" ( २ । १ । ३७ ) इति समासः, इत्याह—प्रयोजकाद् भयं चेदिति । वाच्यमिति प्रकरणादिना गम्यमित्यर्थः ॥ ४३३ ॥

ऋ गतौ । णिचि[3] पुकि गुणे रपरत्वम् । चङि[4] । मार्पिपत् । ह्रेपयतीति । ह्री लज्जायाम् । पुकि "पुगन्त" ( ७ । ३ । ८६ ) इति गुणः । ब्लेपयतीति । ब्ली वरणे । रेपयतीति । रीङ् स्रवणे । यलोप इति । "लोपो व्योर्वलि" ( ६ । १ । ६२ ) इत्यनेन । क्नोपयतीति । क्नूयी शब्दे । यलोपे उपधागुणः । क्ष्मापयतीति । क्ष्मायी विधूनने । पुकि यलोपः । स्थापयतीति । ष्ठा गतिनिवृत्तौ । आदन्तत्वात् पुक् ।

भीस्म्योरिति । ञिभी भये । ष्मिङ् ईषद्धसने । हेतुभये इति । भयग्रहणं धात्वर्थोपलक्षणम् । तेन भयं विस्मये । वा यदि हेतोरेव विवक्ष्यते इत्यर्थः । मुण्डो भाययते इति । अत्र मुण्डः स्वरूपेणैव प्रयोजकत्वात् इन् हेतुः । तत एव भयं विवक्षितमित्यात्वं तङ् सन्नियुक्तम् ॥ ४३४ ॥

---

१. इत्यतोऽपीत्यनुवृत्तेरिति क० पु० ।

२. वञ्चयतीत्यर्थ इति क० पु० ।

३ [illegible]

## ४३५. भियो हेतुभये पुक् [ ७ । ३ । ४० ]

पुक् स्यात् णौ हेतुभये । इयङा निर्देशान्नात्त्वपक्षे पुक् ।।भीषयते ।

## ४३६. नित्यं स्मयतेः [ ६ । १।५७ ]

स्मयतेरेचो नित्यमात्त्वं स्यात् णौ हेतुभये । जटिलो विस्मापयते । हेतुभये किम् ? कुञ्चिकयैनं माययति । विस्माययति ।

## ४३७. स्फायो वः [ ७ । ३ । ४१ ]

अस्य वान्तादेशः स्यात् णौ । स्फावयति । अपिस्फवत् ।

## ४३८. शदेरगतौ तः [ ७ । ३ । ४२ ]

शदेर्णौ तान्तादेशः स्यान्न तु गतौ । शातयति । गतौ तु गाः शादयति गोविन्दः ।

---

भियो हेतुभय इति । आत्वाभावपक्षेऽयं विधिः । अथात्वपक्षेऽप्येकदेशविकृतत्वात् किं न स्यादत आह–ईदन्तनिर्देशादिति । भी ई भी इत्येकारः प्रश्लिष्यते । तेनेकारान्तस्यैव भियः पुक् विधीयते इत्यर्थः ॥ ४३५ ॥

नित्यं स्मयतेः । पृथग्योगकरणादेव विकल्पो निवर्तयिष्यते तत् किं नित्यग्रहणेन[1] । नैवम् । एवं हि हेतुभय इत्यस्यैव कदाचिन्निवृत्तिः सभाव्येत । हेतुभय इति । भयमत्र धात्वर्थो[2] लक्षितस्तेन हेतोर्विस्मये प्रतिपाद्ये इत्यर्थो भवति । जटिलो विस्मापयते इति । अत्र जटिलादेव विस्मयो न करणात्[1] । कुञ्चिकया[2] एनमिति । कुञ्चिकाऽत्र करणम् भये विस्मये च न हेतुः । यश्च हेतुः देवदत्तादिर्न ततो भयविस्मयौ । तेन स्माययतीत्यात्त्वमात्मनेपदं, भातीति[1] पुक् च न भवतीति । वृद्धयायौ । एवं च "विस्मापयन् विस्मितमात्मवृत्तौ" इत्यपपाठः । मनुष्यवाचेति करणादेव विस्मयात् । अन्यथाऽऽत्मनेपदमपि न स्यात् ॥ ४३६ ॥

स्फायो वः । स्फायी वृद्धौ । अपिस्फवत् इति । "शर्पूर्वाः खयः" ( ७ । ४ । ६१ ) "अभ्यासे चर्च" ( ८ । ४ । ५४ ) ॥ ४३७ ॥

शदेरगतौ । अत्र प्राचा शद्लृ शातने इति निपातनादेव तत्त्वं भविष्यतीति शङ्कित्वा—अवाचकान्यपि निपातनानि भवन्तीति ( प० ) ज्ञापनार्थमेतदिति

---

१. भाष्ययत् इति क० पु० ।

२. धर्मोर्था इति क० पु० ।

४३९. रुहः पोऽन्यतरस्याम् [ ७ । ३ । ४३ ]

रुहः पः स्याद्वा णौ । रोपयति । रोहयति ।

४४०. क्रीङ्जीनां णौ [ ६ । १ । ४८ ]

क्री-इङ्-जि एषामेच आत्त्वं स्याण्णौ । क्रापयति । अध्यापयति ।

४४१. णौ च संश्चङोः [ २ । ४ । ५१ ]

सन्परे च णौ इङो गाङ् वा स्यात् । अध्यजीगपम् । अध्यापिपत् ।

---

परिहृतम् । तदसत् । अर्थनिर्देशस्याधुनिकत्वेन ज्ञापकत्वासम्भवात् । शातयतीति । "अत उपधायाः" (७।२।११६) इति वृद्धिः । गाः शादयति । गमयतीत्यर्थः ॥४३८॥

रुहः पो । रुह जन्मनि प्रादुर्भावे च । यद्यपि रूप विमोहने इति दैवादिकस्तस्य ण्यन्तेऽनेकार्थत्वाद् धातूनां जन्म निर्वर्त्यते तस्य रोपयतीति, रुहेस्त्वारोहयतीति ।तथापि विस्पष्टार्थं सूत्रम् । यत्त्वत्र प्राचोक्तम्—"अनेकार्था हि धातवः" अतः सर्वे सर्वार्था इति । सोऽयमनुक्तोपालम्भः । नहि सर्वार्थत्वमापादितमस्माभिः। अनेकार्थत्वं तु त्वयापि स्वीकृतं तावतैव सिद्धं नः समीहितम् । कथमेतदर्थत्वमवगतमिति चेत् ? अनादिप्रयोगात् । अन्वयव्यतिरेकाभ्यां हि लोकेऽर्थावसायः । गवादिष्विवेति प्रसिद्धतरं स्वयं चान्यत्र तथैव व्युत्पादितम् इति न किञ्चिदेतत् ॥ ४३९ ॥

क्रीङ्जीनां णौ । डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । ईङ् गतावित्ययं तु न गृह्यते साहचर्यात् । अत एव करोतेः कृतयणो ग्रहणं नाशङ्कनीयम् । दीर्घश्रवणानुपपत्तेः । एच इत्यधिकाराच्च । क्रापयतीत्यादि । णौ वृद्धौ कृतायामात्वे पुक् ॥ ४४० ॥

णौ च संश्चङोः । अध्यजीगपत् इति । अधिपूर्वस्य इङो णौ गाङ् पुक् । "णौ चङ्युपधाया ह्रस्वः" ( ७ । ४ । १ ) द्वित्वे सन्वदित्त्वाभ्यासदीर्घौ चुत्वम् । अध्यापिपदिति । गाङोऽभावे इङः आत्वं पुक् । अजादित्वात् पि इत्यस्य द्वित्वम् ॥ ४४१ ॥

सिध्यते । षिधू संराद्धौ । दिवादिः । श्यना निर्देशात् षिध गत्यामिति भौवादिको न गृह्यते । परलोकप्रयोजनमस्य स पारलौकिकः । "प्रयोजनम्" ( ५ । १ । १०९ ) इति ठक् । "अनुशतिकादीनां च" ( ७ । ३ । २० ) इत्युभयपदवृद्धिः । परलोकग्रहणं शरीरान्तरोपलक्षणम् । इह वा भवतु स्वर्गादौ वा यच्छरीरान्तरेणोपभोग्यं फलं तत्साधनं पारलौकिकमुच्यते । तत्रार्थे विषयीभूते वर्तमानस्य सिध्यतेरित्यर्थः । पारलौकिकत्वं च धात्वर्थविषयस्य निष्पाद्यमानस्य विवक्षितम् । न चेह जन्मकृतस्य कर्मण आशुविनाशिनस्तत्साधनशरीराद्यगमः जन्मान्तरे फलसाधनत्वमदृष्टद्वार-

## ४४२. सिध्यतेरपारलौकिके [ ६ । १ । ४९ ]

अस्यैव आत्वं स्याण्णौ न तु पारलौकिकेऽर्थे। अन्नं साधयति। अदृष्टार्थे तु तपः सेधयति।

## ४४३. चिस्फुरोर्णौ [ ६ । १ । ५४ ]

चिञः स्फुरश्चैव आत्वं वा स्याण्णौ। चापयति। चाययति। स्फारयति। स्फोरयति। आत्त्वस्याभ्यासे स्थानिवत्त्वात्। अपुस्फरत्। अपुस्फुरत्।

---

मन्तरेण सम्भवतीत्यतोऽर्थतः फलितमेतद् मददृष्टसाधनं कर्म तद्विषयस्य सिध्यतेरयं पर्युदासो न दृष्टार्थविषयस्येति। एतदेवाभिप्रेत्य प्रत्युदाहरति—अदृष्टार्थे तु तपः सेधयतीति। अत्राप्यन्नं साधयतीतिवत् सिद्धयतेर्निष्पत्तिरेवार्थो विशिष्टं तपः सिद्धयति निष्पद्यते तत्तापसः प्रयुङ्क्ते निष्पादयतीति। तथापि निष्पद्यमानं तपः कृच्छ्रचान्द्रायणादिरूपमदृष्टद्वारा शरीरान्तरे स्वर्गसाधनं, न साक्षात्। अत्र तु निष्पद्यमानं साक्षादेव[1] तृप्त्यादिफलं साध्यतीति।

न पारलौकिकमित्युच्यते। यत्राप्यन्नं साधयति ब्राह्मणेभ्यो दास्यामीत्यभिसन्धिना तत्रापि निष्पाद्यमानस्यान्नस्य फलं दानं तदपि दृष्टमेव। दानं तु स्वर्गादिफलकत्वाद् यद्यप्यदृष्टार्थम्। तथापि न तत् सिद्धयतेरर्थः। न च साक्षात् परलोकफले सिद्धयतेरर्थे कृतावकाशो निषेध एवंविधे विषये प्रवर्तितमुत्सहते इति तावदाचार्याणां हृदयम्। आकरे त्वन्यथा व्याख्यातम्। तद्यथा—उदाहरणे निष्पत्तिरित्यर्थः। प्रत्युदाहरणे तु सिध्यतेर्ज्ञानविशेषोऽर्थः। तापसमिति च शेषः। तदयमर्थः। तापसः सिध्यति हेयमुपादेयं च तत्त्वतो ज्ञातुकामः प्रवर्तते। त तपः प्रयुङ्क्ते। ज्ञानविशेषवन्तं करोतीत्यर्थः। स च ज्ञानविशेष उत्पन्नः परलोकेऽभ्युदयलक्षणं फलमुपनयन् परलोकप्रयोजनो भवति। अन्नं साधयति ब्राह्मणेभ्यो दास्यामीत्यत्र तु सिध्यतेरर्थो निष्पत्तिस्तस्याः प्रयोजनं सन्नेतस्य यद्दानं तत्पारलौकिकमपुनर्निष्पत्तिरेवेति। अत्र मते पारलौकिकत्वं धात्ववयवस्यैव साक्षाद् विवक्षितम्, तद्विषयस्येति विवेकः॥ ४४२॥

चिस्फुरोर्णौ। चित्र् चयने। स्फुर संचलने। चापयतीति[1]। णौ वृद्धावात्त्वम् पुक्। चाययतीति। आत्त्वाभावे आयादेशः। स्फारयतीति। स्फुरेरुपधागुणे आत्त्वम्। आत्त्वस्येत्यदि। "ओः पुयण्ज्यपरे" (७।४।८०) इत्युवर्णनिर्देशाण्णौ कृत उवर्णादेश आकार आवादेशश्चाभ्यासस्य स्थानिवदित्युक्तेः स्फुर इत्यस्य द्वित्वम्

---

१. चापतीति क० प्र०।

**४४४. प्रजने वीयतेः [ ६ । १ । ५५ ]**

अस्यैच आत्वं वा स्यात् णौ प्रजनेऽर्थे । वापयति वाययति । वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । स्तावयति । आवादेशस्य स्थानिवत्त्वात् । अतुष्टवत् । भावयति । सन्वद्भावे ।

**४४५. ओः पुयण्ज्यपरे [ ७ । ४ । ८० ]**

अभ्यासोवर्णस्य सनि परे इत्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अयीयवत् । अजीजवत् ।

---

इत्यर्थः । अपुस्फरत् । "णौ चङि" ( ७ । ४ । १ ) इत्युपधाह्रस्वः । अपुस्फुरदिति । आत्वाभावे स्फोर इत्यस्य द्वित्वे ह्रस्वेनोकारः ॥ ४४३ ॥

प्रजने । अस्येति । 'वी गतिप्रजनकान्त्यसनखादनेषु" इत्यस्य वीयतेति यका निर्देशः । लीयतेरितिवत् स्मर्यते: वेतेरादादिकत्वेन श्यनोऽसंभवात् । वापयतीति ।[1] वी इत्यस्य णौ वृद्धावात्वे पुक् । प्रजनो जन्मन उपक्रमो गर्भग्रहणमिति व्याचष्टे गर्भं ग्राहयतीत्यर्थं इति । गृहीतो हि गर्भो जायते ततो गर्भग्रहणं जन्मन उपक्रमत्वात् प्रजन इत्युच्यते इति भावः । अथ योगः शक्योऽवक्तुम् । यदि वातिरनेकार्थत्वात् प्रजने वर्तते सदा वातेर्वापयतीति सिद्धम् । वेतेस्तु वाययतीति । स्तावयतीति । ष्टुञ् स्तुतौ । णौ वृद्धयावादेशौ । ननु चङि कृतावादेशस्य द्वित्वात् । "सन्यतः" ( ७ । ४ । ७९ ) इतीत्त्वेऽतिष्टवदिति स्यात् इत्याशङ्क्याह—आवादेशस्येत्यादि ।

णौ कृत आदेशः आकार आवादेशश्चेत्युक्तेः । अतुष्टवदिति[2] । स्तु इ अत्[3] इति स्थिते आवादेशस्य णौ कृतस्य स्थानिवत्त्वात् स्तु इत्यस्य द्वित्वम् । उपधाह्रस्वः । "शर्पूर्वाः खयः" ( ७ । ४ ६१ ) । षत्वष्टुत्वे । अलघुत्वान्नाभ्यासस्य दीर्घः । भावयतीति । भू सत्तायाम् । णौ वृद्धयावौ । सन्वद्भावः । भाव् इ अत् इति स्थिते उपधाह्रस्वः । द्वित्वम् प्रत्यावादेशस्य स्थानिवत्त्वात् भू इत्यस्य द्वित्वेऽभ्यासे उकारश्रवणं प्रसजति तत्र "सन्वल्लघुनि" ( ७ । ४ । ९३ ) इति सन्वद्भावे कृते इत्वं लभ्यते इत्यर्थः ॥ ४४४ ॥

ओः पुयण्जीति । पुयण्जकाराणां समाहारद्वन्द्वः । पुयण्जीति । "द्वन्द्वाच्चुदषहान्तात् समाहारे" ( ५ । ४ । १०६ ) इति टच् तु न भवति समासान्त-

---

१. वायतीति क० पु० ।

२. अतुष्टवदिति क० पु० ।

३. स्तु इ इ अत् इति क० पु० ।

४४६. स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा [ ७ । ४ । ८९ ]

एषामभ्यासस्योकारस्येत्त्वं वा स्यात्पवर्ग सन्यवर्णपरे धात्वक्षरे परे। असिस्रवत् । असुस्रवत् । इत्यादि । गूहयति । अजूगुहत् ।

४४७. दोषो णौ [ ६ । ४ । ९० ]

दुष्यतेरुपधाया ऊदादेशः स्याण्णौ । दूषयति ।

---

विधेरनित्यत्वात् । अः परो यस्मा[3]त्पुयण्जस्तत् परं तस्मिन् तदेतद् व्याचष्टे—पवर्ग-त्यादिना । पवर्गमुदाहरति अबोभवदिति । इत्वे कृते "दीर्घो लघोः" ( ७ । ४ ९४ ) वर्णग्रहणस्य प्रयोजनमेतत् । अत्रास्त्यवर्णपरः पवर्गो भकारः । अपीपवदिति । पूञ् पवने । भवतेः ऋकान्तत्वात् वर्गप्रथमोऽपि पकारश्चरममुदाहृतः । पुनातिरेव तु प्रक्रमितुमुचितः । अयीयवदिति । यु मिश्रणामिश्रणयोः । यण उदाहरणम् । प्रत्याहार-ग्रहणात् अरीरवत् । अलीलवत् इत्यपि योज्यम् । अजीजवदिति । जु गतौ । सौत्रो धातुः । "जुचङ्क्रम्य" ( ३ । २ १५० ) इत्यत्र निर्दिष्टः ॥४४५॥

स्रवति । श्रु श्रवणे । अन्ये सर्वे गत्यर्थाः । अत्रावर्णपरे इत्यनुवर्तते । ननु पुयण्-जीति पवर्गजकारयोरसम्भवाद् यणि रेफयलाः सम्भवन्ति । तदप्यभिचारान्न संबध्यते किं त्वपर इत्यनेनान्यपदार्थतया वर्णमात्रं संबध्यते इत्याशयेन व्याचष्टे—अवर्णपरे धात्वक्षरे परे इति । अक्षरशब्दो वर्णपरः । यत्तु प्राचोक्तम् व्यञ्जनसहितोऽजक्षर-मिति । नैतल्लोकवेदयोः प्रसिद्धम् । अक्षरसमाम्नायेत्यादावदर्शनात् । प्रातिशाख्ये चोभये त्वक्षराणीति परिभाषणात् । प्रकृते तथा लक्ष्यते इति चेत् । अस्तु तर्हि वर्णमात्रपरता । एवं हि अवर्णपरोऽन्त्योऽवयवोऽस्येति न क्लिष्टकल्पनाश्रयणीया स्यादिति । परे इति । ननु सोऽपि सकारादिभिर्व्यवहितत्वात् कथमभ्यासात् परेत्युच्यते । सत्यम् । वचनसामर्थ्यादेकेन वर्णेन व्यवधानमाश्रयिष्यते इत्यदोषः । अत्राप्तविभाषेयम् । पूर्वसूत्रे अनन्तर एव यणि भाव्यम् । गूहयति इति । गुहू संवरणे । णावुपधाया गुणे कृते "ऊदुपधाया गोहः" ( ६ । ४ । ८९ ) इत्यूत्त्वं चङि ह्रस्वः । अजूगुहत् ऊदिति तपरत्वान्न ह्रस्व इति मते अजुगूहत् ॥ ४४६ ॥

दोषो णौ । दोष इति कृतगुणस्यानुकरणं गोह इति प्रक्रमवैरूप्यार्थम् । दुष इत्येव सिद्धेः । णावित्युक्तेर गुणविषयेऽस्याप्रसङ्गात् । दूषयतीति । दुष वैकृत्ये ॥४४७॥

---

३. यः परोऽस्मात् इति क० पु० ।

४. पुचङ् क्रम्येति क० पु० ।

५. अत्रैवेति नास्ति ख० पु० ।

४४८. वा चित्तविरागे [ ६ । ४ । ९१ ]

चित्तविरागेऽर्थे वा उत् स्यात् णौ । चित्तं दूषयति दोषयति वा कामः ।

४४९. मितां ह्रस्वः [ ६ । ४ । ९२ ]

घटादयो मितः इति कृतसंज्ञायामुपधाया ह्रस्वः स्यात् णौ । घटयति । व्यथयति । एवं पञ्चपञ्चाशतो रूपम् । "जनी जृक्नसुरञ्जोऽमन्ताश्च" । जन्मादयोऽमन्ताश्च मितो ज्ञेयाः । जनयति । जरयति । क्नसयति रञ्जेर्णौ मृगरमणे रजयति मृगान् । अन्यत्र तु रञ्जयति वस्त्रम् । दमयति । "मारणतोषणनिशामनेषु ज्ञा । एष्वर्थेषु ज्ञा मित् स्यात । ज्ञपयति । अन्यत्र तु ज्ञापयति । ज्वलह्वलह्मलनमोऽनुपसर्गा वा । "ग्लास्नावनुवमश्च" । ज्वलादयो ग्लादयश्च मितो वा स्युः अनुपसर्गाः । ज्वलयति । ज्वालयति । ग्लपयति । ग्लापयति । स्नपयति । स्नापयति । अनुपसर्गाः किम् ? प्रज्वालयति । प्रग्लपयति । "न कम्यमिचमः" । अमन्ता अपि एते मितो न स्युः ।

---

वा चित्तविरागे । चित्तस्य विरागोऽप्रतीता । प्राप्तविभाषेयम् ॥ ४४८ ॥

मितां ह्रस्वः । के पुनर्मित इत्याह–घटादयो मित इति । धातुसूत्रमेतद् । ते च घट चेष्टायाम् । व्यथ भयसंचलनयोः । प्रथ प्रख्याने । प्रथ विस्तारे । म्रद मर्दने । स्खद स्खदने । क्षजि गतिदानयोः । दक्ष गतिहिंसनयोः । क्रप कृपायां गतौ । कदि क्रदि क्लदि वैकल्ये । ञित्वरा संभ्रमे । ज्वर रोगे । गड सेवने । हेड वेष्टने । वट भट परिभाषणे । ष्टके[1] प्रतिघाते । चक[2] तृप्तौ । कखे[3] हसने । रगे शङ्कायाम् । लगे सङ्गे । हगे ह्लगे षगे ष्टगे संवरणे । कगे नोच्यते । अस्यायमर्थः—अर्थविशेषो नोच्यते । क्रियासामान्यमस्यार्थः । अनेकार्थ इति यावत् । अक अग कुटिलायां गतौ । कण रण गतौ । चण शण दाने[4] च । श्रथ क्रथ[5] क्लथ हिंसार्थाः । वन च । वनु नोच्यते । ज्वल दीप्तौ[6] । हल ह्मल चलने । स्मृ आध्याने । दॄ भये । नॄ नये । श्रा पाके । मारण-

---

१. षुक इति क० पु० ।
२. ष्टक इति क० पु० ।
३. कखे हसने इति क० पु० ।
४. श्रण इति क० पु० ।
५. क्नथ इत्यधिकः क० पु० ।
६. वस इति क० पु० ।

कामयति। आमयति। चामयति "शमो दर्शने"। शमोऽदर्शने मित् स्यात्। शमयति। दर्शने तु निशामयति। यमोऽपरिवेषणे"। यमयति। अन्यत्र तु यामयति। "स्खदिरवपरिभ्याम्"। अवस्खदयति। परिस्खदयति। सोपसर्गात् स्खदेः फणश्च मित्त्वं वेति केचित्। प्रस्खदयति। प्रस्खादयति। फणयति। फाणयति।

---

सोपणनिशामनेषु ज्ञा। कम्पने चलि। छद ऊर्जने। जिह्वोन्मथने[1] लडिः। मदो हर्षग्लेपनयोः। ध्वन शब्दे। स्वन अवतंसने। फण गतौ। एषु स्वरान्ताः सेटः आत्मनेपदिनः पितश्च। पित्वफलं तु घटेत्यादौ "षिद्भिदादिभ्योऽङ्" (३। ३ १०४) इत्यङ्। इह ये केचित् गणान्तराधीनाः पठ्यन्ते, तेषामिहोपात्त एवार्थे मित्त्व नियम्यते। यथा स्मृ आध्याने इति पठ्यते। तस्य मित्त्वात् स्मरयति। यश्च स्मृ चिन्तायामित्यन्यत्र पठितस्तस्यामित्त्वात् स्मारयतीति। ये त्वपूर्वाः पठ्यन्ते तेषामुपात्ते चानुपात्तेऽर्थे मित्त्वम्। यथा घटयति। विघटयतीति। तथा येऽत्र संयोगान्ता दक्षादयः पठ्यन्ते तेषा मित्त्वसामर्थ्यादनुपधात्वेऽपि "चिण्णमुलोः" (६। ४। ९३) इति दीर्घविकल्पो भवति। अदक्षि। अदाक्षि। दक्षम् दक्षम्। दाक्षम् दाक्षम्[2] इति। तथा कदि क्रदि क्लदीनामाह्वानरोदनयोः। परस्मैपदिषु पूर्वत्र पठितानां पुनरिहापि पाठो न केवल मित्त्वार्थः[3] किं तु आत्मनेपदिषु पाठसामर्थ्यात्तदर्थोऽपि। तेन क्रन्दते इत्याद्यपि भवति। अर्थनियमार्थ एव पाठश्चेत् परस्मैपदिष्वेवामून् अनुवदेत्। एवं हेडृ अनादरे इत्यात्मनेपदिषु पूर्वपठितस्येह परस्मैपदिष्वनुवादसामर्थ्यात् परस्मैपदमपि भवति। अर्थनियमाच्च वेष्टने हिडयति।[4] अनादरार्थस्य तु हेडयति। तथा वेष्ट[5] वेष्टने भटभृतावित्यन्यत्र पठितयोः परिभाषण एव मित्त्वार्थोऽनुवादः। नटनृत्ताविति पूर्वं पठ्यते घटादावपि।
तत्रैव विवेचयन्ति [6]
नर्तकव्यपदेशस्तत्रैव

---

१. जिह्वोन्मादार्थः किन्तु आदानेलिगिति। पु० क०
२. दाक्षमिति नास्ति क० पु०।
३. मित्त्वावात्मनेपदिषु इति क० पु०।
४. हिंहियतीति क० पु०।
५. वेवेति क० पु०।
६. नृत्तेति नास्ति ख० पु०।

प्रणाटयतीति । एवं पठितस्य तु नाटयमर्थः यत्कारिषु नटव्यपदेशः । चतु[1]र्धाऽभिनयोपेतो नाट्यम् । तस्यामित्त्वान्नाटयतीत्यादिप्रयोगः । योऽपि नट अवस्कन्दने चुरादिः । अवस्कन्दनं नाट्यमिति माधवः । तस्यापि नाटयतीत्येव भवति । 'नान्ये मितावहेतौ' इति चुरादिर्णिचि मित्त्वनिषेधात् । अमितश्च णोपदेशणत्वं[2] प्राक् पर्युदस्तम् । नृति नन्दीति णोपदेशपर्युदासो भाष्ये नाटीति सवृद्धिकस्योपादानात् । तत्र वाक्यार्थाभिनयो नाट्यम् । पदार्थाभिनयो नृत्यम् । गात्रविक्षेपमात्रं यत् सर्वाभिनयवर्जितम् शास्त्रोक्ताङ्गमङ्गल्यं तन्नृत्तमिति भेदः । अन्ये तु घटादौ नटनृत्ताविति पठन्ति । कथेस्तु 'जासिनिप्रहणनाटक्राथपिषाम्' (२।३।५६) इति निर्देशात् मित्त्वेऽपि वृद्धिरिति वृत्त्यादौ स्थितम् । मित्त्वफलं अकथि अकाथि इति 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६।४।९३) इति दीर्घविकल्पः । यत्तु हरदत्तेनोक्तम्-घटादिपाठस्तु घटादयः षित इत्यातिदेशिकोऽङ् यथा स्यात् इति । तच्चिन्त्यम् । स्वरान्तानामेव षित्त्वातिदेशात् परेषां तदभावात् । तथा च नेर्मित्त्वं सोपसर्गार्थम् । अनुपसर्गस्य ज्वल ह्वलेति वक्ष्यमाणत्वात् । एवं ज्वलह्वलह्मलामपि । तथा दृ भये दरयति । अन्यत्र दारयति । तथा नृ नये । नरयति । अन्यत्र नारयति । श्रा पाके । श्रपयति । स्वेदे तु[3] श्रापयति । धातूनामनेकार्थत्वादर्थान्तरेऽपि वृत्तिः । तथा कम्पने चलिः । चलयति शाखाम् । अन्यत्र शील चालयति । अन्यथा करोतीत्यर्थः । हरतीति वा । सूत्रं चालयति क्षिपतीत्यर्थः । "चालयन् सकलां पृथ्वीं" उच्चाटयन्नित्यर्थः । तथा छद ऊर्जने । ऊर्जनं बलम् । छदयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः । छद अपवारणे इत्यस्य तु छादयति । बलप्राणनयोरपि यदा स्वार्थण्यन्तस्तदापि 'नान्ये मितोऽहेतौ' इत्यमित्त्वात् छादयतीति भवति । तथा मदी हर्षग्लेपनयोः । अन्यत्र मादयति चित्तविकारमुत्पादयतीत्यर्थः । तथा ध्वन शब्दे । ध्वनयति घण्टाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः । अत्र "दलिवलिस्खलिरणिध्वनित्रपिक्षपश्च" इत्यत्रान्यानपि श्रीभोजः पठति स्म । च क्षये इत्यस्य पुकि ह्रस्वे चपीति निर्देशः इत्याद्यनुसर्तव्यम् । घटयतीति । णौ "अत उपधायाः" (७।२।११६) इति वृद्धौ सत्यां ह्रस्वः । उद्घाटयतीति घट संघाते इत्यस्य चौरादिकस्य । "नान्ये मितोऽहेतौ" इति वचनात् । ज्ञपादिपञ्चकव्यतिरिक्ताश्चुरादयः शमप्रभृतयः अहेतौ स्वार्थे णिचि मितो न भवन्तीत्यर्थः । इदं मित्त्वं गणनिर्दिष्टत्वात् जाघटयतीत्यादौ यङ्लुकि न भवति । एवमिति । फणान्ताः सप्तपञ्चाशत् घटादयस्तेषु घटव्यथोरुदाहृतत्वादवशिष्टाः पञ्चपञ्चाशत् पूर्ववदुदाहार्या इत्यर्थः । अन्तर्गणसूत्रैः कृतमित्त्वानन्यान्यप्यु-

१. अयं पाठो नास्ति ख० पु० ।
२. णोपदेशात् णत्वं प्राक् पर्युदासादिति क० पु० ।
३. स्वेदेति क० पु० ।

दाहरन्नाह—जनीजृषेति । जनी प्रादुर्भावे । जॄष्वयोहानौ । क्नसु ह्वरणदीप्त्योः[1] । एते दिवादयः । रञ्ज रागे । श्रमु इति शब्दोऽन्ते येषान्तेऽमन्ताः शमादयः । जनी इतीदितो निर्देशाद् जन जनने इत्यस्याग्रहणम् । न चैवमस्य वृद्धिप्रसङ्ग आपादनीयः । छान्दसत्वात्, छन्दसि दृष्टानुविधानात् । एवं चोभयोरपि ग्रहणमिति प्र चोक्त निर्युक्तिकत्वादनादेयम् । न च जनाति पृथक् पदं द्विवचनान्तमुच्चारणार्थेनेकारेण सामान्यग्रहणार्थमिति शङ्क्यम् । जनृ जृषाति समासनिर्देशेऽपि तदुपपत्तेगुरुकरणवैयर्थ्यात् । अनुबन्धपरिभाषाया प्रत्ययग्रहणविषयत्वात् । जृषाति रितोग्रहणात् जृणातेरननुबन्धकस्याग्रहणम् । जारयत्यभ्रकम् । क्नसयति इति । केचित्तु क्नसेः स्थाने[2] ष्णसु निरसने इति दिवादि पठन्ति । स्नसयतीत्युदाहरन्ति । रञ्जेर्णावित्यादि । मृगरमणमाखेटकम् । मृगेति किम् । रञ्जयति पक्षिणः । रमणादन्यत्र तु रञ्जयति मृगान् तृणादिदानेन । न च मित्त्वसामर्थ्यादेव नलोप सिद्ध इति वाच्यम् । नलोपाभावेऽपि अरञ्जि अराजीत्यादौ 'चिण्णमुलोः' (६।४।९३) दीर्घविकल्पस्य मित्त्वफलस्य सत्वात् । दमयतं लि । दमु उपशमे । अमन्तोऽयम्[3] । उन्नामयतीत्यादि तु "तत्करोति" इति णौ निर्वाह्यम् । सक्रामयतीत्यादिप्रयोगे मित्त्वाद् ह्रस्वो न भवति । तत्र 'वा चित्तविरागे" (६।४।९१) इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानादिति वृत्तिः । मारणतोषणे । मारणं हिंसनम् । निशामनं चाक्षुषज्ञानम् । शम लक्षणे आलोचने इत्यस्य ह्येतद् रूपम् । आलोचनं च चक्षुर्विज्ञाने प्रसिद्धम् । "पश्यार्थैश्चानालोचने" (८।१।२५), "त्यदादिषु दृशः" (३।२।६०) तथा स्थितत्वात् ।

तेन ज्ञानसामान्ये मित्त्वाभावात् ज्ञापयत्याचार्यः, 'विज्ञापना भर्तृषु सिद्धिमेति" इत्यादयः प्रयोगाः उपपद्यन्ते । मारणादौ तु मित्त्वम् । यथा सञ्ज्ञपयति पशुम् । विष्णुं विज्ञापयति[4] । रूपं प्रज्ञपयति ।[5] अन्ये तु निशानेष्विति पठन्ति । निशानं तीक्ष्णीकरणम् । प्रज्ञपयति शस्त्रमिति चोदाहरन्ति । तदेतन्न्यासकारेणोपेक्षितम् । यदाह—प्राचीनास्तु निशानं नेच्छन्ति इति । ज्ञप्स्यमान.[6] ज्ञापयितुमिष्यमाण इति सूत्रवृत्तिप्रयोगस्तु "ज्ञप मिच्च" (ग०) इत्यस्य चौरादिकस्य णयन्तस्य । विज्ञत

---

१. क्नसु शद्वहरणदीत्योरिति ख० पु० ।

२. क्नसेः स्थानिस्नसु इति क० पु० ।

३. त्यदादिषु तथेति क० पु० ।

४. विज्ञपतीति क० पु० ।

५. प्रज्ञपतीति क० पु० ।

६. ज्ञीप्समान इति क० पु० ।

इति प्रयोगस्तु जानातेर्ज्ञानाज्ञे तोषणे वर्तमानस्य मित्वात् इति प्राचोक्तम् तद् "ज्ञप मिच्च"[1] इत्यस्य चुरादे 'वादान्त" (७।२।२७) इत्यत्र णिलोपेड्विकल्पयोर्निपातनेन ज्ञप इति साधितत्वात् अनुपादेयम्। ज्ञपयतीति। मारणादित्रयस्य तन्त्रेणोदाहरणं विनापि उत्सर्गविशेष प्रकरणादितोऽपि विशेषावगतेः। अन्यत्र तु ज्ञापयतीति ज्ञानसामान्यादावित्यर्थः। अत्र मित्वाभावात् वृद्धिः। अत्राहुः—चौरादिको ज्ञापने मारणादौ चा-धानस्वभावादुभयत्र वर्तते। तेन ज्ञापनार्थे ज्ञपयति, ज्ञापयतीति रूपद्वयं भवतीति। तदुक्तम्—बोपदेवेन[2] जानातीति ज्ञिसिद्ध, ज्ञपयति तु पुनर्मारणादौ घटादेर्णौ मित्त्वेऽपि ज्ञपमिर्दति पद मारणादौ तेनार्थात् ज्ञापनेऽर्थे ज्ञपयतीति पदवद् ज्ञापयतीत्यपि स्यादिति। यः पुनर्ज्ञा नियोजने इत्यपरोऽस्ति चुरादिस्तस्यामित्वादाज्ञापयति भृत्यम् इति वृद्धिरेव। न चायमेव "धातूनामनेकार्थत्वात्" ज्ञानेऽपि प्रयुज्यतामिति वाच्यम्। एवं हि ज्ञान इव मारणादावपि ज्ञापयतीति स्यादिति भावः।

ज्वलह्वल। वाक्यद्वयमेकत्र पठितम्। ज्वल ह्वल ह्मलनमोऽनुपसर्गाद् वा इत्यनुवर्तते। एते मितो वा स्यु। ग्लास्नावनुवमश्चेत्यपरम्। अत्राप्यनुपसर्गाद्वा इत्यनुवर्तते। ततोऽनतिरिक्तविषयत्वात् समुदायार्थमेव दर्शयति—ज्वलादयो ग्लादयश्चेति। ज्वलदोप्तौ। ह्वल ह्मल चलने। णम प्रह्वत्वे। ग्लै हर्षक्षये। ष्णा शौचे। ष्णौ शौचवेष्टनयोरुभयोरपि ग्रहणम्। वनपण संभक्तौभौवादिको गृह्यते, न वनु याचने इति तानादिकः, 'अनन्तरस्य" इति न्यायात्। स हि घटादौ मित्वार्थमुदित्वानुषङ्गार्थञ्च प्रागनूदितो वनु च नोच्यते[3] इति। अन्ये तु क्रियासामान्यवाचि धात्वन्तरमेतदित्याहुः। टुवम् उद्गिरणे। एषु ज्वल ह्वल ह्मलनमां वन्वमोश्च[4] पूर्वेण नित्यं मित्त्वे प्राप्तेऽनुपसर्गे विकल्पः क्रियते। ग्लास्नोरत्वप्राप्ते। प्रज्वलयतीति। सोपसर्गाणां विकल्पाभावात् नित्यं मित्वाद् ह्रस्वः। एवं प्रह्वलयति। प्रह्मलयति। प्रणमयति। प्रवनयति। प्रवमयतीति। ग्लास्नोरुपसृष्टयोर्मित्वाभावादुपधावृद्धिः। क्वचित्तु प्रज्वालयतीति प्रत्युदाह्रियते सोऽपपाठः। कथं तर्हि प्रज्वालयति, अवज्वालयतीति। निरुपसर्गाद् णिचि वृद्धौ कृतायां पश्चादुपसर्गयोगे भविष्यति।

न कम्यमिचमामिति। कमु कान्तौ। अम गत्यादौ। चमु अदने। मित्वप्राप्तिमुपपादयति अमन्ता अपीति। कामयति इति। णिङन्तात् केवलाद्वा णिच। णिङ्यपि ह्रस्वः प्राप्तोऽनेन निवर्त्यते। शमो नेति वर्तते। शमु उपशमे। अयं दर्शने चानुपज्ञाने

१. ज्ञप मिच्चेति क० पु०।

२. देवेन जातीति ज्ञि सिद्धं ज्ञज्ञपयतीति क० पु०।

३. वनुवतोच्यते क० पु०।

४. वन्वीमोरचेति क० पु।

## ४५०. णौ गमिरबोधने [ २ । ४ । ४६ ]

इणो गमिः स्याण्णौ । गमयति । बोधने तु प्रत्याययति । इण्वदिकः । अधिगमयति ।

---

वर्तमानो मित् नेत्यर्थः । स्वामी तु नेत्यनुवृत्त्योऽदर्शने इत्यत्र नञ्[1] प्रश्लिष्य दर्शनादन्यत्र मिदिति व्याचष्टे । तत्रापि न फले भेदः कश्चित् । निशामयतीति । चक्षुषा पश्यतीत्यर्थः । 'दर्शनादन्यत्र तु निशमयति वचनम्[2]' इति माधवेनोदाहरणाच्चाक्षुषे ज्ञाने मित्त्वं न भवतीत्यवगम्यते । निशामय तदुत्पत्तिमिति तु शम लक्ष आलोचने इति चौरादिकस्य । "नान्ये मितोऽहेतौ" (ग०) इति वचनात् । आर्षत्वात् परस्मैपदम् ॥

यमोऽपरिवेषणे । यम उपरमे । अस्य परिवेषणादन्यत्रार्थे न मित्त्वम् । अपरिवेषण एवामन्तत्वेन प्राप्तं मित्त्वं न भवतीत्यर्थः । यमयति ब्राह्मणान् । भोजयित्वा परिवेषयतीत्यर्थः । यामयतीत्यपि । दार्वीकरोति व्यापारयति वेत्यर्थः । अन्ये तु नेत्यनपेक्ष्य परिवेषणादन्यत्र मिदिति व्याचक्षते तत् वृत्तिविरुद्धम् । यदाह—"न पादम्याङ्यमाङ्यस" ( १ । ३ । ८९ ) इत्यत्र आयामयते इत्युदाहृत्य यमोऽपरिवेषणे इति मित्संज्ञा प्रतिषिध्यते इति व्याख्याते च न्यासे । तत्र हि "न कम्यमिचमाम्" (वा०) इत्यतो नेति प्रतिषेधोऽनुवर्तते इति रक्षितादयोऽप्येवमेव प्रतिपन्नाः । नियमयतीति प्रयोगस्तु नियमशब्दात् "तत्करोति" (वा० ) इति णिच् ज्ञेयः । स्खदिरवपरिभ्यां चेति । स्खदेर्घटादिषु पाठात् सामान्येन प्राप्तं मित्त्वमनेन नियम्यते । सोपसर्गस्य स्खदेर्यदि भवति—अवपरिभ्यामेव परस्येति । तेन प्रादिपूर्वस्य मित्त्वं व्यावर्त्यते । अवादिपूर्वस्य नित्यं मित्त्वं स्थितमेव । तथा चोदाहृतम् । माधवेन त्वन्यथेदं व्याख्यातम् । तथा हि स्खदि अवपरिभ्यां च नेति शेषः । अवस्खादयति । परिस्खादयतीत्युदाहृत्य पूर्वोक्तं नियममुक्त्वाऽऽह—इदं न वृत्तिकारादीनामनभिमतम् । यतः सर्वत्र नेत्यपेक्ष्यते । एवं हि नियमो नोपपद्यते । अन्यथा स्खदस्खदने इत्यस्यानन्तरमेव 'अवपरिभ्यां च" इति पठेत् । द्विः स्खदिग्रहणं न कर्तव्यम् भवतीति । एवं च नियमवादिना अन्योपसर्गपूर्वस्य मित्त्वाभावः । निषेधवादिना तु मित्त्वमित्यर्थकृतो विकल्पस्तदेतदाह—सोपसर्गस्येत्यादि । फणश्च नतानिरनिषेधनियमादन्यत्र मित्त्वं नास्तीति फणयति । तत्र निरनेहपरस्यार्थं इत्येके । अन्ये तु पूर्वपठितस्यैव पाठादन्यार्थेऽप्यन्तरे च मित्त्वं भवतीति प्राग् व्यवस्थापितत्वात् फणयतेस्तत्रमित्येव भवितव्यमिति प्रतिपन्ना इति हरदत्तादिकृतः फलित इति ध्येयम् ॥४४९॥

णौ गमिरबोधने । इण इति । इण् गतौ । गमयतीति । अमन्तत्वेनेति मित्वाद् ह्रस्वः । प्रत्याययतीति । वृद्ध्यायादेशौ । शपि गोरुण.। अयादेशः । इण्वदिक इति । "इण्वदिक इति वक्तव्यम्" इति वचनात् । अधिगमयतीति । इङि नावध्युपसर्गतो न व्यभिचरतः ॥ ४५० ॥

---

१. तन्त्रमिति क० पु० ।
२. वचन इति क० पु० ।
३. अन्योपसर्गस्य मित्त्वाभाव इति क० पु० ।

४५१. हनस्तोऽचिण्णलोः [ ७ । ३ । ३२ ]

हन्तेस्तकारोऽन्तादेशः स्यात् चिण् णल् वर्जिते ञ्णिति । "हो हन्तेः" (७।३।५४) इति कुत्वम् । घातयति । ईर्ष्ययति । "ईर्ष्यतेस्तृतीयस्य द्वे" ( वा० ) तृतीयव्यञ्जनस्यैकाचो वा । ऐर्ष्यिष्यत् । ऐर्ष्यियत् ।

॥ इति ण्यन्तप्रक्रिया ॥

---

हनस्तो । अचिण्णलोः किम् । अघानि, निजघान । धातोः स्वरूपग्रहणे तत्प्रत्ययेकार्यविज्ञानमितीह भवति वृत्रघ्नोऽपत्य[1] वार्त्रघ्नः । तथा च "भ्रौणहत्य" इति निपातनम् । ईर्ष्ययतीति । ईर्ष्य ईर्ष्यायाम् । ईर्ष्यतेरित्यादि वार्तिकम् । कस्य तृतीयस्येत्याकाङ्क्षायां मतभेदेन व्याचष्टे–तृतीयस्य व्यञ्जनस्येति । व्यञ्जनापेक्षया तृतीयस्य व्यञ्जनस्य यकारस्याच् सहितस्येत्यर्थः । अत्र पक्षे यकारस्य द्वित्वं न भवति। मतान्तरमाह–एकाचो वेति । तृतीयस्येत्येव ईर्ष्यतेर्यस्तृतीय एकाच् तस्य द्वित्वमित्यर्थः । अत्र पक्षे सन्नन्ते ईर्ष्यियिषतीति । सनो द्वित्व वक्ष्यति । ईर्ष्यतेः सनि यिसनोर्वा द्वित्वमिति । क्वचित्त ऐर्ष्यिष्यदिति यकारादेरपि द्वित्वमुदाह्रियते । तदुद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्यम् । भ्रमे च कारणम्–अथवा तृतीयस्यैकाचः यकारस्येत्यर्थः इति प्राचीनं व्याख्यानम् । तथा हि–यदि तृतीयस्य वर्णस्येति व्याख्यायते ततः कथमैर्ष्यिष्यदिति यकारादेर्द्वितीयस्यैकाचः स्यात् । न च तृतीयस्य वर्णस्येति व्याख्यातुमुचितमध्याहारप्रसङ्गात् तृतीयस्यैकाच इति ग्रन्थस्वारस्यभङ्गाच्च । तथा च कस्य तृतीयस्य ? केचिदाहुः–व्यञ्जनस्येति । अपरे पुनराहुस्तृतीयस्यैकाच इति वृत्तिन्यासकारहरदत्तैर्व्याख्यातम् । तृतीयस्येति । तृतीयव्यञ्जनसहितस्यैकाच इत्यर्थः । अत्र यकारस्य द्विर्वचनं न भवति । अपरे पुनरिति । अस्मिन् पक्षे ईर्ष्यतेः सनि कृते इति व्याख्येयम् । अन्यथा तत्संबन्धिनस्तृतीयस्यैकाचोऽसम्भवादिति माधवः । तस्मादैर्ष्यियदित्येकमेवात्र रूप साधीयो न तु ऐर्ष्यिष्यदिति, ण्यन्ते तृतीयस्यैकाचोऽसंभवात् । न चाटि कृते तमेवापेक्ष्य यकारादिस्तृतीय एकाजिति वाच्यम् । अन्तरङ्गत्वात् "आटश्च" ( ६ । १ । ९० ) इति वृद्ध्यातद्विघातात् । अन्तरङ्गत्वादेव वृद्धेरसिद्धेः । असिद्धत्वमपि नास्ति, नापि स्थानिवद्भावः । वृद्धिः पूर्वस्माद् वा विधेरभावादिति युक्तमुत्पश्यामः ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशाम्बुधो-
स्तस्य धीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ-
श्रीकृष्णस्य कृतौ समाप्तिमगमत् ण्यन्ताख्या प्रक्रिया ॥ १ ॥ इति ॥
॥ इति ण्यन्तप्रक्रिया ॥ ६०० ॥

---

१. वृत्रघ्न इति क० पु० ।

## अथसन्नन्तप्रक्रिया

४५२. धातोः कर्मणः समानकर्तृकादिच्छायां वा [ ३ । १ । ७ ]

इषि कर्मणो धातोरिषिणैककर्तृकात् सन् प्रत्ययो वा स्यादिच्छायाम् । "लुङ्सनोर्घस्लृ" ( २ । ४ । ३७) द्वित्वम् । "सन्यतः" ( ७ । ४ । ७९ ) धातोर्विधेरिहार्धधातुकत्वम् । एकाच उपदेश इति किम् । धातुत्वाल्लडादयः । सस्य तत्वम् । अत्तुमिच्छति । जिघत्सति । "अतो लोपः" ( ६ । ४ । ४८) अजिघत्सीत् । पक्षे वाक्यमपि । "टीङः मन्यार्थं वेति" ( वा० ) केचित् । दिदासते । दिदीपते । "द्युतिस्वाप्योः संप्रसारणम्" ( ७ । ४ । ६७ ) ॥

॥ अथ सन्नन्तप्रक्रिया ॥

---

धातोः कर्मण इति । इच्छायामिति श्रुतत्वात् कर्मत्व समानकर्तृकत्वं च तदपेक्षमेव गृह्यते इत्याशयेनाह—इषि कर्मण इत्यादि । इषिः इष इच्छायामिति धातुस्तदर्थं प्रति यत्कर्म तथेषिणा धातुनाऽर्थद्वारा समान एकः कर्ताऽस्य धातोस्तस्मादित्यर्थः । धातोश्च कर्मत्वेषेः समानकर्तृकत्वे च अर्थद्वारके ज्ञेये । अत्र कर्ता क्रियामेव प्रति संभवति । गमनमिच्छतीत्यादौ च 'सुपः आत्मनः क्यच्" ( ३ । १ । ८ ) इत्यपवादेन क्यचा भवितव्यम् । पुत्रेच्छायामपि न समानकर्तृकत्वं सभवति धातोरिति लब्धेऽपि पुनर्धातुग्रहण प्रकर्तुमैच्छत् प्रचिकीर्षत् इति सोपसर्गान्मा भूत् इति । अन्यथा प्रकर्षविशिष्टाया क्रियाया इच्छाविषयत्वविवक्षायां तदर्थकात् प्रकरोतेरेव सन् स्यात् । ततश्च प्रशब्दस्यैव द्वित्वमडादिपूर्वत्वं च स्यात् । वस्तुतस्तु धातुरेव विशिष्टक्रियावाची उपसर्गास्तु सन्निधिमात्रेणोपकारकाः । अत्र मते धातुग्रहणमार्धधातुकसज्ञार्थम् । कर्मणः किम् ? गमनेनेच्छति इति करणान्मा भूत् । समानकर्तृकात् किम् ? देवदत्तस्य भोजनमिच्छतीति । इच्छाया किम् । कर्तुं जानाति । 'लुङ्सनोर्घस्लृ" ( २ । ४ । ३७) द्वित्वम् । इति । आर्धधातुके इति विषयसप्तम्याश्रयणात् सनि विवक्षित एवादेर्घस्लादेशस्ततः सनि कृते "सन्यङोः" ( ६ । १ । ९ ) इति घस्इत्यस्य

४५३. रलो व्युपधाद्धलादेः संश्च [१ । २ । २६]

उश्च इश्च वी इउवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वा सनौ सेटौ वा कितौ स्तः । दिद्युतिषते । दिद्योतिषते । उच्छेस्तुकि द्वित्वे च कृते "खर्पूर्वाः

द्वित्वमित्यर्थः। सन्यत इति। हलादिः शेषे "कुहोश्चुः" (७।४।६२) इति घस्य झकारे 'अभ्यासे चर्च" (८।४।५४) इति जश्त्वेन जकारेऽत इत्त्वमित्यर्थः। "गुप्तिज्किद्भ्यः" (३।१।५) इत्यत्रोक्तं धातोरित्यविहितत्वात्[1] सनो नार्धधातुकत्वम्। तेनेड्गुणौ न स्तः। इह तु न तथेत्याह—धातोर्विधेरिहार्ध-धातुकत्वम् इति। इहेत्यनेन पूर्वत्र नेति सूचयति। तेन "सः स्यार्धधातुके" (७।४।४९) इति तत्त्वं सेरस्यतीति भावः। यद्यप्येवमार्धधातुकत्वादिडपि स्यात् अत आह—एका च इत्यादि। धातुत्वादिति। "सनाद्यन्ता धातवः" (३।१।३२) इत्यनेन। लडादय इति। आर्धपदाच्छवपि[2]। तस्मिश्च कृतेऽतो गुणे इति पररूपं तस्य तत्त्वमिति प्रासिक्रमोऽत्र न विवक्षितः। परत्वादन्तरङ्गत्वाच्चादौ तत्त्वेन भाव्यम्। ततो द्वित्वम् जडादिः[4]। अत्तुमिच्छतीति। अनेनादनमिषेः कर्म अदनेच्छयोश्चैकः कर्तेति सूत्रा-र्थमुदाहरणे घटयति। जिघत्सेत्। जिघत्सतु। अजिघत्सत्। अजिघत्सीदिति। सन्नन्तात् सिच "इट ईटि" (८।२।२८) इति लोपे सवर्णदीर्घः। "कास्प्रत्यय" (३।१।३५) इत्याम्। जिघत्सामास। जिघत्सिता। जिघत्स्यात्। जिघत्सिष्यति। अजिघत्सिष्यत्। पक्षे वाक्यमपि इति। वाग्रहणात्पक्षे सन्न भवतीत्यर्थः।

दीङः सनीत्यादि। "इको झल्" इति सनः कित्त्वाद् गुणाप्रसक्तेरेज्विषयत्वा-भावात् "मिनातिमिनोति दीङां ल्यपि च" (६।१।५०) इत्यात्त्वं नेत्येके। अशितीति विषयसप्तम्या आश्रयणात् प्रागेव सनुत्पत्तेरात्त्वेन भवितव्यम्। न च तदानीं कित्त्व-प्रसङ्गोऽस्तीति परे मन्यन्ते इति द्वैमत्याद् विकल्प इत्यर्थः। दीदासते इति पूर्ववत् सनः" (१।३।६२) इत्यात्मनेपदम्। दिदीषते इति। "इको झल्" (१।२।९) इति कित्त्वान्न गुणः। परत्वम्॥ ४५२॥

रलो व्युपधा। अप्राप्तविभाषेयम्। सनोऽकित्वात् क्त्वायाश्च "न क्त्वा सेट्" (१।२।१८) इति कित्त्वनिषेधात् कित्त्वाभावात्। दिद्युतिषते इति। द्युतेः सनि द्वित्वेऽभ्यासस्य संप्रसारणे पूर्वरूपत्वे हलादिः शेषे च कित्त्वान्न गुणः। उच्छेरित्यादि।

१. इति विहितत्वाविति क० पु०
२. यद्यप्येमार्द्धमिडपि इति क० पु०।
३. द्रत्वमपीति क० पु०।
४. मादिभिरिति क० पु०।

खयः शिप्यन्ते इति वक्तव्यम्" इति तलोपः। चर्त्वम्। अभ्यासचर्त्वस्य तुकं प्रति सिद्धत्वात् "छे च" (६।१।७३) इति न तुक्। उचिच्छिपति। तलोपो वेत्येके। उदिच्छिपति। ण्यन्तात् सन्। "णौ च संश्चङोः" (२।४।५१) इति गाङ् वा। अधिजिगापयिषति अध्यापिपयिषति। शिश्वाययिषति। अण्यन्तस्य तु शिश्वयिषति। ह्वः संप्रसारणम्। (६।१।३२) जुहावयिषति। जुहोतेरप्येवं रूपम्।

---

उच्छी विवासे तुकि द्वित्वे कृते इति। उपदेशानन्तरमेव प्राप्तत्वादादौ तुक् ततो द्वित्वमित्यर्थः। द्वित्वं च "पूर्वत्रासिद्धम्" (८।२।१) चुत्वस्यासिद्धत्वात् सतकारस्यैव भवति। तत्र च कृते हलादिःशेषेण तकारस्यैव शेषः प्राप्नोतीत्यत आह—खपूर्वाः खय इति। "शर्पूर्वाः खयः" (७।४।६१) इत्यत्र शर्ग्रहणमपनीय खर्ग्रहणं कर्तव्यमित्यर्थः। एतच्च "पूर्वत्रासिद्धीयमद्वित्वे" इत्यनाश्रित्योक्तम्। तदाश्रयणे हि चुत्वे कृते तस्य सिद्धत्वात् च् छ् इत्यस्य द्वित्वे कृते चकारशेषेणैव रूपं सिद्धयति। न च निमित्तापाये नैमित्तिकं चुत्वं निवर्तिष्यते इति शङ्क्यम्। नहीदं वचनं नापि न्याय इत्युक्तत्वात्। यथा विपुपुपतुरित्यत्रोक्तं पूर्वत्रासिद्धीयमद्वित्वे इति कृते पत्वे द्वित्वमिति। चर्त्वमिति। अभ्यासे शिष्टस्य शब्दस्य छकारस्य "अभ्यासे चर्च" (८।४।५४) इति चकार इत्यर्थः। अथ कृतेऽपि चर्त्वे तस्यासिद्धत्वात् पुनस्तुक् प्राप्नोति अत आह—अभ्यासे चर्त्वस्य तुकं प्रति सिद्धत्वादिति। अभ्यासस्य जश्त्वचर्त्वे पत्वतुकोः सिद्धे वाच्ये इति वचनात्। तलोपो वेत्येके इति। शर्पूर्वाः खय इति नाश्रीयते इति भावः। अधिजिगापयिषति इति। अधिपूर्व इङ् अध्ययने। ततो णिचि सनि गाङादेशपक्षे णौ पुकि सनि इटि च—अधि गापि इ स इति स्थिते द्वित्वे गाप इत्यस्य द्वित्वाभ्यासकार्ये णेर्गुणायादेशौ। अध्यापिपयिषतीति।[1] गाङोऽभावे "क्रीङ्जीनां णौ" (६।१।४८) इत्यात्वे पुकि 'अजादेः' (६।१।२) इति पिशब्दस्य द्वित्वम्। पूर्ववद् गुणायौ। शिश्वापयिषतीति।[2] टु ओश्वि गतिवृद्धयोः। णिचि वृद्धयायादेशयोः।

---

१. अगुस इत्यस्येति क० पु०।

२. गाङोऽभावे इत्यारभ्य—गुणायौ इत्यन्तो ( ) नास्ति ख० पु०।

**४५४. उभौ साभ्यासस्य [ ८ । ४ २१ ]**

अनितेः साभ्यासस्य उभौ नकारौ प्राप्नुतः निमित्ते सति । प्राणिणिषति। पराणिणत् । "न वृद्भ्यश्चतुर्भ्यः" ( ७ । २ । ५९ ) ।

**४५५. हलन्ताच्च [ १ । २ । १० ]**

इक्समीपाद् हलः परो झलादि सन् किन् स्यात् । विवृत्सति । तङि तु विवर्तिषते "सेऽसिचि" ( ७ । २ । ५७ ) इति वेट् । निनृत्सति । निनर्तिषति ।

---

द्वित्वहलादि शेषह्रस्वत्वानि । शुशावयिषति–इति । संप्रसारणे वृद्ध्यावादेशयोः स्थानिवत्त्वात् शु इत्यस्य द्वित्वम् । क्वचित् प्रक्षिप्यते । अण्यन्तस्य तु शिश्वयिषतीति । तदनिट्त्वभ्रमवारणार्थम् । जुहावयिषतीति । ह्वेञ् स्पर्धायां णिच् सन्, संप्रसारणपूर्वत्वयोः वृद्ध्यावादेशयोः स्थानिवत्त्वात् हु इत्यस्य द्वित्वे । "कुहोश्चुः" ( ७।४ ६२ ) । यत्र क्वचित् प्रक्षिप्यते जुहोतेरप्येवम् इति । तत्त्वयुक्तम् । तस्य ह्यण्यन्तस्य जुहूषतीति भाव्यम् ॥ ४५३ ॥

उभौ साभ्यासस्येति । अनितेरिति । अन प्राणने । निमित्ते सतीति "उपसर्गात्," "स्थादिष्वभ्यासेन," रषाभ्यामित्युक्तेः ।[१] प्राणिणिषतीति । प्रपूर्वादन इत्यस्मात् सन इट् अनि स् इति स्थिते णत्वस्यासिद्धत्वात् "अजादेः" ( ६ । १ । २ ) इति निशब्दस्य द्वित्वे ऽभ्यासनकारणव्यवायात् धातुनकारस्य णत्व[२]मप्राप्तमनेनोभयोः क्रियते । यद्येवं साभ्यासस्यानितेरित्येव सिद्धमित्यारम्भसामर्थ्यादेव धातुनकारस्य व्यवधानेऽपि भविष्यति किमुभावित्यनेन । सत्यम् । असत्युभावित्यस्मिन् परस्यैव स्यात् न पूर्वस्य तक्रकौण्डिन्यन्यायादित्याहुः । एतच्च णत्ववचनं ज्ञापकं "पूर्वत्रासिद्धमद्वित्वे" (५०) इत्यनित्यमिति । नित्ये तस्मिन् परत्वाण्णत्वे कृते सणत्वस्यैव द्वित्वे सिद्धं प्राणिणिषतीति । किमनेनेति । तेनोजटदित्यत्र टत्वादीनामसिद्धत्वाद् हत् इत्यस्य द्वित्वम् इति वक्ष्यति तदुपपन्नं भवति । पराणिणदिति । अनितेर्णिचि लुङि-निशब्दस्य द्वित्वेऽनेनोभयोर्णत्वम् । एतत् प्रथमोपास्थितत्वात् णयन्त एव व्युत्पादयितुमुचितम् ॥ ४५४ ॥

हलन्ताच्च । अन्तशब्दोऽत्र नावयववचनः । धातावन्यपदार्थे तदन्तविधिनैव सिद्धेस्तद्वैयर्थ्यात् । ( [३]इकस्त्वन्यपदार्थो नहि संभवति नहि वर्णोवर्णान्तरस्यावयव इति समीपवचनं, कर्मधारयश्चायम् हल् चासावन्तश्चेति ।

---

१. रषाभ्यामिति ख० पु० ।
२. णत्वमप्राप्तमप्राप्त मिति ख० पु० ।
३. इकस्त्वन्य पदार्थः इत्यारभ्य इत्यर्थोपर्यन्तो नास्ति क० पु० ।

४५६. इट् सनि वा [ ७ । ४ । ४१ ]

वृङ्वृञ्भ्यामॄदन्ताच्च परस्य सन इट् वा स्यात् ।

४५७. इको झल् [ १ । २ । ९ ]

इगन्ताज्झलादिः सन् कित् स्यात् । "ॠत इद्धातोः" (७ । १ । १००) तितीर्षति । तितरिषति । तितरीषति ।

४५८. आज्झनगमां सनि [ ६ । ४ । १६ ]

अजन्तानां हन्तेरजादेशगमेश्च दीर्घः स्यात् सनि । "उदोष्ठ्यपूर्वस्य" (७ । १ । १०२) । वुवूर्षति । विवरिषति । विवरीषति । "ऋतश्च संयोगादेः" (७।२।४३) इत्यत्र सनि इति पदमनुवर्त्य ऋदन्तात् संयोगादेः स्कृवर्जात् सन इड्वेति केचित् । स्कृवर्जात् किम् ? संचिस्कीर्षति । दुधूर्षति । दिध्वरिषति ।

---

कस्य समीप इत्यपेक्षायामिक इति प्रकृतं पञ्चम्यन्तमपि षष्ठ्यन्तेनविपरिणम्यते इत्यालोच्याह—इक्समीपादित्यादि । विवृत्सतीति । 'वृद्भ्यः स्यसनोः" ( १ । ३ । ९२ ) इति परस्मैपदं द्वित्वं उरत्[१] हलादिः शेषे 'सन्यतः" ( ७ । ४ । ७९ ) । यदा त्वात्मनेपदं तदाह—तङि तु विवर्तिषते इति । तङानयोरभाव इत्युक्तेस्तद्विषये इति अझलादित्वादुपधागुणो रपरः ॥ ४५५ ॥

इट् सनि वा । वृङ् संभक्तौ । वृञ् आवरणे । "सनिग्रहगुहोश्च" ( ७ । २ । १२ ) इतीट् प्रतिषेधे प्राप्ते पक्षे इड् विधीयते ॥ ४५६ ॥

इको झल् । इगिति प्रत्याहारो गृह्यते न त्विक्स्मरणे झलिति प्रत्याहारेण साहचर्यात् । झलादिरिति यद्यपि सप्तमीनिर्देशाभावाद् "यस्मिन् विधिस्तदादावल्ग्रहणे" ( प० ) इति तदादिविधिर्नास्ति तथापि झल्मात्रं सन् न सम्भवति । नापि झलन्त इति सामर्थ्यात् तदादिविधिरिति भावः । तितरिषतीति । इड्पक्षेऽझलादित्वाद् न कित्त्वमिति गुणः । तितरीषति इति । वॄतो वा" ( ७ । २ । ३८ ) इति दीर्घः ॥ ४५७ ॥

अज्झनगमाम्" ( ६ । ४ । १६ ) इति सामान्येन ग्रहणात् गम्लृ गतावित्यस्मात् संजिगंसते इत्यत्रापि स्यादित्याशङ्क्याह—इङादेशगमेश्चेति । "सनि च

---

१. मूलस्थः पाठः ग० पु० । विशेषणं यथा स्यात् अजन्तस्य दीर्घो भवतीति पु० ।

४५९. सन्लिटोर्जेः [ ७ । ३ ५७ ]

जिगीषति । "विभाषा चेः" ( ७ । ३ । ५८ ) चिकीषति । चिचीषति । कुत्वम् । जिघांसति ।

४६०. सनि च [ २ । ४ । ४७ ]

सनि परे इणो गमिः स्यात्, न तु बोधने । जिगमिषति । बोधने तु णावोऽकारेण सिद्धेऽपि सन्यङोरकारोच्चारणमजादेरिति द्वित्वार्थम् । तेन सनो द्वित्वम् । अभ्यासस्य इत्वम् । प्रतीषिषति । इण्वदिक् । अधिजिगमिषति ।

४६१. इङश्च [ २ । ४ । ४८ ]

इङो गमिः स्यात् सनि । अधिजिगांसते । ईर्ष्यतेः सनि यिसनोर्द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ।

---

( २ । ४ । ४७ ) इङश्च" ( २ । ४ । ४८ ) इति विहितस्येत्यर्थः । तथा च वार्तिकम्—"गमेरिङादेशस्येति वक्तव्यम्" इति । अत्रेङ्ग्रहणमजादेशस्योपलक्षणम् । तेन सनि च" ( २ । ४ । ४७ ) इतीणादेशस्य "इण्वदिक इति वक्तव्यम्" ( वा० ) इतीक आदेशस्यापि गमे· दीर्घो भवति । सजिगांस्यते । अधिजिगांसते इति । परस्मैपदित्वेऽप्यनयोः" भावकर्मणोः" ( १ । ३ । १३ ) इत्यात्मनेपदे इडभावे झलादौ सनि रूपम् । तथा च भाष्ये "इङादेशस्य" इति वार्तिकं प्रत्याख्याय गमेरजादेशस्येति व्यवस्थापितम् । तत्कथमिह सनीत्येतावद् वक्तव्यम् । दीर्घश्रुत्या "अचश्च" इत्युपस्थितेनाङ्गस्य विशेषणात् अजन्तस्याङ्गस्य दीर्घ इत्यर्थाश्रयणाच्चिचीषतीति सिद्धम्, ततो योगविभागेन हनिगम्योरिति कर्तव्यम् । एवं चाज्ग्रहणं च न कर्तव्यं भवति तत् क्रियते प्रवृत्तिभेदेन गमेरपि विशेषणा[1]र्थम् । अजन्तस्य गमे दीर्घो भवतीति । वुवूर्षतीति । वृञ् आवरणे । 'इट् सनि वा" (७ । २ । ४१) इतोऽभावे कित्त्वाद् ऋत उत्वं रपरत्वं द्वित्वे हलादिः शेषः । "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । इट्पक्षे गुणः "वृतो वा" ( ७ । २ । ३८ ) इतीटो वा दीर्घः । वृङस्तु "पूर्ववत्सनः" ( १ । ३ । ६२ ) इत्यात्मनेपदम् । वुवूर्षते इत्याद्यूह्यम् । ऋतश्च संयोगादेरित्यादि । "लिङ् सिचो" ( ७ । २ । ४२ ) इति प्रकृतेऽपि "इट् सनि वा" ( ७ । २ । ४१ ) इत्यतो मण्डूकप्लुत्या सनीत्यप्यनुवर्तते इत्यर्थः । स्कृवर्जादिति चार्थसिद्धस्यानुवादः । सुट उपदेशाधिकत्वादभक्तत्वाच्चासंयोगादित्वात् । तत्र सूचीकटाहन्यायेनादौ पर्युदस्तः स्कृञ प्रत्युदाहरति । संचिस्कीर्षतीति । डुकृञ् करणे । अत्र सनि "अज्झनगमाम्" ( ६ । ४ । १६ ) इति

---

१. विशेषणार्थम् इत्यारभ्य—दीर्घो भवतीत्यन्तो नास्ति क० पु० ।

दीर्घे "इट् सनि वा" ( ७ । २ । ४१ ) इतीट् तु न भवति उपदेशाधिकारात् लाक्षणिकत्वाच्च ऋत इत् । रपरः । द्वित्वम् । चुत्वम् । "संपरिभ्याम्" (६ । १ । १३७ ) इति सुट् । "ग्रडभ्यासव्यवायेऽपि "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । षत्वविकल्पमुदाहरति—दिध्वरिषतीति । ध्वृ कौटिल्ये । इट्पक्षे गुणः । दुध्वूर्षतीति । इडभावे "अज्झनगमाम्" ( ६ । ४ । १६ ) इति दीर्घे "उदोष्ठ्यपूर्वस्य" ( ७ । १ । १०२ ) इति—उत्वे रपरत्वे च "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । "अतश्च सयोगादेः" ( ७ । २ । ४३ ) इत्यत्रात्मनेपदेष्वित्यनुवृत्तेः परस्मैपदान्त प्रत्युदाहरणमयुक्तमात्मनेपदान्तन्तु पठनीयम् । ४५८ ॥

जिगीषतीति । जि जये "एकाचः" ( ७ । २ । १० ) इत्यनिट् दीर्घः । कुत्वम् । चिचीषति । चिञ् चयने । कुत्वमिति । "अभ्यासाच्च" ( ७ । ३ । ५५ ) इत्यनेन । जिघांसति । हन हिंसागत्योः । अज्झनगमां सनि" ( ६ । ४ । १६ ) इति दीर्घः । द्वित्वं सन्यतः कुत्वम् "नश्चापदान्तस्य झलि" ( ८ । ३ । २४ ) इत्यनुस्वारः ॥ ४५६ ॥

जिगमिषतीति । 'गमेरिट् परस्मैपदेषु" ( ७ । २ । ५८ ) इतीट् । प्रतीपिपतीति सनो द्वित्वमुपदर्शयितुमाह—शपोऽकारेणेत्यादि । आर्धधातुके तावदतो लोपेन भाव्यम् । सार्वधातुके तु विनाप्यकारोच्चारणं शबकारेणैवाकारान्तश्रवण मुपपन्नं सत् क्रियते यत्सनोद्वित्वं यथा स्यात् । अन्यथानेकाच्त्वान्न स्यात् । ननु "एकाचो द्वे प्रथमस्य" ( ६ । १ । १ ) इत्युक्तम् । तत्कथं सान्ते द्वित्वं सभवति—इत्याशङ्क्याह—अजादेरिति द्वित्वार्थमिति । प्रतीपिपतीत्यादौ सनेव द्वितीय एकाच् इति भावः । द्वित्वार्थमिति । द्वित्वार्थमपीत्यर्थः । पिपाठिषि ब्राह्मणकुलानि, पापचक इत्यादावतो लोपस्य स्थानिवद्भावादर्थमप्यकारोच्चारणात् । एतच्च सन्यङोरिति षष्ठीव्याख्यानस्य स्थितत्वादुक्तम् । सप्तमीव्याख्याने तु सन्यङोर्द्वित्वं न लभ्यते । न चाकारोच्चारणसामर्थ्यात्तयोरपि भविष्यतीति वाच्यम् । तस्यान्यार्थत्वस्य तत्र सूत्रेऽस्माभिः प्रपञ्चितत्वात् । सनो द्वित्वम् "सन्यङोः" ( ६ । १ । ६ ) इत्यनेन । इत्वम् । "सन्यतः" ( ७ । ४ । ७९ इत्यनेन । इण्वदिक इति । तेनेकोऽपि "सनि च" ( २ । ४ । ४७ ) इत्यनेन गमिरित्यर्थः ॥ ४६० ॥

अधिजिगांसते इति । इङ् अध्ययने । "एकाच" ( ७ । २ । १० ) इति नेट् । "अज्झनगमाम्" ( ६ । ४ । १६ ) इति दीर्घः । पूर्ववत्सनः" ( १ । ३ । ६२ ) इत्यात्मनेपदम् । अनुस्वारः । ईर्ष्यतेरित्यादि । ईर्ष्य ईर्ष्यायाम् इत्यस्मात् सनि, इटि, कृते ईर्ष्यि स इति त्रय एकाचस्तत्र "ईर्ष्यतेस्तृतीयस्येति वाच्यम्" (वा०) इति द्वित्वं विधीयमानं तृतीयव्यञ्जनस्येति यदा व्याख्यातं तदा यिशब्दस्य द्वित्वम् । तृतीयस्यैकाच इति तु व्याख्याने स शब्दस्य द्वित्वमित्यर्थः ॥ ४६१ ॥

## ४६२. सनि ग्रहगुहोश्च [ ७ । २ । १२ ]

ग्रहेर्गुहेरुगन्ताच्च सन इट् न स्यात् । बुभूषति । जुहूर्षति । अत्रादेशादूदन्तत्वेऽपि नेट् । चिकीर्षति । जुघुक्षति ।

## ४६३. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च [१।२।८]

एभ्यः संश्च क्त्वा च कितौ स्तः । "ग्रहिज्या" (६ । १ । १६) सनः परस्यासिद्धत्वात् भष्भावः । जिघृक्षति । "वचिस्वपि" ( ६ । १ । १५) इत्युत्त्वम् । सुषुप्सति ।

---

सनि ग्रहगुहोश्च । उगन्ताच्चेति । "श्र्युकः" ( ७ । २ । ११ ) इत्यनुवृत्तावपि उगेवेह संबध्यते न श्रिञ् 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभर" (७ । २ ४६) इत्यादिना विकल्प विधानात् । बुभूषतीति । भूसत्तायाम् "इको झल्" ( १ । २ । ६ इति कित्वान्न गुणः । ऊदन्तत्वादिति प्राप्ते उगन्तत्वेन निषेधः । नन्वत्र 'इको झल्" ( १ । २ । ६ ) इति सनः कित्वात् "श्र्युकः किति" ( ७ । १ । ५६ ) इत्येव निषेधः सिद्ध इति चेत् । न सिध्यति झलादेर्हि सनः कित्त्वम् न वा झलः इड् निषेधे सन् झलादिरिह सभवति । यत्र प्रकृत्याश्रयो निषेधो नास्ति । कथं तर्हि जुहूषतीत्युदाह्रियते हुदानादनयोरित्यस्य 'एकाच उपदेशेऽनुदात्तात्" (७ । २ । १०) इत्यनेन प्रकृत्याश्रयनिषेधस्य सत्त्वात् । न च दीर्घे कृते ऊदन्तत्वाद् भवति यदयमप्युदात्त इति शङ्क्यम्, उपदेशे ऊदन्तत्वाभावात् तत्राह—अत्रादेशादूदन्तत्वेऽपि नेट् । अभ्युपेत्यवादोऽयम् । उपदेशे ऊदन्तत्वविज्ञानादेव तावदप्राप्तेरिटः । अथाप्येव न विज्ञायते लाक्षणिकोऽप्यूदन्ते । गृह्यते तथापि नेड् भविष्यति, उगन्तत्वेन निषेधादिति । चिकीर्षतीति । कृञः सनि दीर्घे कृते "ऋत इद्धातोः" ( ७ । १ । १०० ) इतीत् रपरः दीर्घः । शाच्छमः इति कृतात्वनिर्देशेन ज्ञापितं वर्णनिर्देशे लाक्षणिकस्यापि ग्रहणमिति । जुघुक्षतीति । गुहू संवरणे ऊदित्वादिड्विकल्पे न प्राप्तेऽयं निषेधः । "हलन्ताच्च" ( १ । २ । १० ) इति कित्वान्न गुणः । तेनोपधायाः ऊदादेशो न । "होढः" ( ८ । २ । ३१ ) 'एकाचो बशो भष्" ( ८ । २ । ३७ ) इति भष्भावः । "षढोः कः सि" ( ८ । २ । ४१ ) इति कः । षत्वम् । षत्वम् ॥ ४६२ ॥

रुदविद । रुदिर अश्रुविमोचने । विद ज्ञाने । मुष स्तेये । ग्रह उपादाने । ञिष्वप् शये । प्रच्छ ज्ञीप्सायाम् । अत्र रुदविदमुषां 'रलो व्युपधात्" ( १ । २ । २६ ) इति विकल्पे प्राप्ते नित्यार्थं वचनम् । ग्रहेस्तु विध्यर्थम् । तत क्त्वा अपि "न क्त्वा सेट्" ( १ । २ । १८) इति कित्वनिषेधात् । स्वपिप्रच्छ्योस्तु सनर्थमेव । किदेव हि क्त्वा ।

४६४. स्मिपूङ्रञ्ज्वशां सनि [७ । २ । ७४ ]

स्मिङ्० पूङ्० ऋ अञ्जू, अशू, एभ्यः सन इट् स्यात् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिसति । अशिशिषते ।

४६५. किरश्च पञ्चभ्यः [ ७ । २ । ७५ ]

कॄ गॄ दृ धृ प्रच्छ एभ्यः सन इट् स्यात् । चिकरिषति । जिगरिषति । अत्रेटो दीर्घत्वं नेष्टम् । दिदरिषते । दिधरिषते । पिप्रच्छिषति ।

---

ननु परत्वात् सनः षत्वे कृते स परत्वाभावात् भष्भावो न स्यात् अत आह—सनः सस्यस्येत्यादि । एतत् जुगुप्सतीत्यत्रैव वक्तुमुचितम् । सुपुप्सतीति । "एकाच" (७ । २ । १० ) इत्यनिट् । सनः किरवादादौ संप्रसारणपूर्वत्वे द्वित्वम् । अभ्यासेरणः परस्य षत्वम् ॥ ४६३ ॥

स्मिपूङ्रञ्ज्वशाम् । स्मिङ् ईषद्धसने पूङ् पवने । ऋगतिप्रापणयोः । ऋगतौ च । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अशू व्याप्तौ । अश भोजने इत्यस्य तु सेट्त्वादेवाग्रहणम् । अत्र रञ्जणे । वश कान्तौ इत्यनयोर्भ्रमं वारयितुं विगृह्य व्याचष्टे—स्मि पूङित्यादिना । पूङो ङकारोच्चारणं पूञो व्यावृत्त्यर्थम् । पुपूषतीत्येव तस्य भवति । ऋ इति-ऋकारान्तस्तु न गृह्यते किरत्यादोनामिटो विधानात् । अत्राञ्जरशेश्चोदित्वाद् विकल्पे प्राप्ते ऋपूङोरुगन्तत्वान्निषेधे प्राप्ते स्मिङ्स्त्वनिट्त्वादप्राप्ते वचनम् । सिस्मयिषते । 'पूर्ववत्सनः" ( १ । ३ । ६२ ) इत्यात्मनेपदम् । "स्तौतिण्योरेव" (८।३।६१) इति नियमात् न षत्वम् इति । पिपविषते इति । "ओः पुयण्ज्यपरे" ( ७ । ४ । ८०) इत्यभ्यासोवर्णस्येत्त्वम् । अरिरिषतीति । ऋ स इति स्थिते इटि गुणे रपरे अरि स इति स्थिते "अनादेः" ( ६ । १ । २ ) इति रिस् शब्दस्य द्वित्वम् । अत्र च इट् द्विर्वचनं प्रति कार्यी न निमित्तं "नहि कार्यी निमित्ततयाश्रीयते" तेन गुणस्य "द्विर्वचनेऽचि" ( १ । १ । ५९ ) इति स्थानिवत्त्वं न भवतीति । अञ्जिजिषतीति । "नन्द्राः" ( ६ । १ । ३ ) इति निषेधान्नस्य न द्वित्वम् ॥ ४६४ ॥

किरश्च पञ्चभ्यः । व्यत्ययेनैकवचनम्[१] । पञ्चभ्य इति संबन्धात् । किरादिभ्य इत्यर्थः । कॄ विक्षेपे । गॄ निगरणे । दृङ् अनादरे । धृङ् अवस्थाने । प्रच्छ ज्ञीप्सायाम् । कॄग्रोः "इट् सनि वा" ( ७ । २ ४१ ) इति विकल्पे प्राप्ते दृधोरुगन्तत्वान्नित्यनिषेधे प्रच्छेः "एकाच" (७ । २ । १०) इति प्राप्ते वचनम् । जिगरिषतीति । "अचि विभाषा" (८ । २ । २१ ) इति पक्षे लत्वे जिगलिषतीत्यपि । दीर्घत्वं नेष्टमिति । इष्टिरेवेयमिति हरदत्तः । दिधरिषते इति । कथमुद्दिधीर्षुरिति । धृङ् धारणे । धृङ् विध्वंसने इति

---

१. तृतीयेनैकवचनमिति क० पु० ।

**४६६. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् [ ७ । २ । ४९ ]**

इवन्तेभ्य ऋधादिभ्यश्च सन इड् वा स्यात् ।

**४६७. च्छ्वोः शूडनुनासिके च [ ६ । ४ १९ ]**

सतुक्कस्य छस्य वस्य च क्रमात् शूठ् इत्येतावादेशौ स्तः, अनुनासिके क्वौ झलादौ क्ङिति च । द्यूत्वम् । दुद्यूषति । दिदेविषति । सुस्यूषति । "स्तौतिण्योः" ( ८ । ३ । ६१ ) इति नियमात् न षत्वम् सिसेविषति । अर्दिधिषति ।

---

भौवादिकयोर्ग्रहणमिति । निगृह्यद्यतीति । "रुदविद" ( १ । २ । ८ ) इति कित्त्वात् संप्रसारणम् । "छे च" ( ६ । १ । ७३ ) इति तुक् । जश्त्व । हलादिः शेषः । "सन्यतः" ॥ ४६५ ॥

सनीवन्तर्ध । इवेति शब्दोऽन्ते येषां[1] ते इवन्ता दिव सिव्[2] प्रभृतयः ऋधवृधौ । भ्रस्ज पाके । दम्भु दम्भने । श्रिञ् सेवायाम् । स्वृ शब्दोपतापयोः । यु मिश्रणे । ऊर्णुञ् आच्छादने । भृञ् भरणे[3] दीर्घान्तो भ्वादिः शपा निर्देशो यङ्लुकि मा भूदिति । ज्ञा अवबोधने पुगन्तो मित्संज्ञः । पकारान्तश्चौरादिकः । षणु दाने । षण संभक्तौ । अत्र भ्रस्जेः "एकाचः" (७ । २ । १०) श्रयतेरजन्तानां च "सनिग्रहगुहोश्च (७ । २ । १२) इत्यत्र श्र्युकः इत्यनुवृत्तेः प्रतिषेधप्राप्तेऽन्येषां तु नित्यमिटि प्राप्ते । विकल्पोऽयमारभ्यते ॥ ४६६ ॥

च्छ्वोः शूड् । यद्यत्र केवलः छकारो निर्दिश्येत ततः पृच्छेरपि[4] अन्तरङ्गत्वात् "छे च" ( ६ । १ । ७३ ) इति तुकि कृते छमात्रस्य शत्वे प्रष्टेति तुकः श्रवणं प्रसज्येत । तस्मात् सतुकस्यायमादेशः एष्टव्य[5] इत्याशयेनाह—सतुकस्येति । एवञ्च "ननौ पृष्टप्रतिवचने" ( ३ । २ । १२० ) इति निर्देशादवसीयते, नहि छित्करणाच्च ।

---

१. शब्दो तान्ता इति क० पु० ।
२. दिव् सिव् प्रभृतयः इति क० पु० ।
३. दीर्घान्त इति क० पु० । यत्तु मातृपाठे नास्ति ।
४. पृच्छेरिति क० पु० ।
५. एष्टव्य इति क० पु० ।

## ४६८. आपज्ञप्यृधामीत् [ ७ । ४ । ५५ ]

एषामच ईत् स्यात् सादौ सनि ।

---

तद् हि विश्न इत्यत्र गुणो मा भूदिति कृतम्[1] । केवलस्य तु शादेशे तुगेवोपधेति गुण एव नास्तीति अनर्थकं तत् स्यात् इति । ननु यदि सतुक्को निर्दिश्यते ततो "राल्लोपः" ( ६ । ४ । २१ ) इत्यत्र नायं सबध्यते, असम्भवात् । नहि रेफात् परस्य छस्य तुक् संभवति । ततश्च मुर्छा मूः मुरौ मुरः इति न स्यात् । अत्राहु: द्वावत्र छकारौ निर्दिश्यते । एकः सतुक्कोऽपरो वितुक्कः। एवं च राल्लोपे सतुक्कस्यासंभवात् वितुक्कोऽनुवर्तिष्यते[2], तर्हि छ्वोरिति द्विर्वचनं नोपपद्येतेति चेत्, न, पूर्वं छ्वयोः द्वन्द्वं कृत्वा पुनः सतुक्केनेतरेतरयोगद्वन्द्वेन निर्देशात् । एवं च कृत्वा वाञ्छतेः क्विपि शो भवति वान् वांशौ वांशः इति सतुक्कस्यैव ग्रहणे तु एतन्न स्यात्, तकारात् परस्य छस्य तुकोऽभावात् इति । अत्र पक्षे क्रमादिति दुर्योजमित्येष[3] विचारः इति कृष्णकौतूहले द्रष्टव्यः ।

ऊठष्ठकारः 'एत्येधत्यूठ्सु'' (६ । १ । ८९) इति विशेषणार्थः। सर्वत्र ठकारस्य जश्त्वचर्त्वाभ्यां निर्देशात् । वाहः ऊठपि[4] ठिदेव । द्वित्वमपि । दिवेः सनि "हलन्ताच्च" ( १ । २ । १० ) इति किस्वे परत्वात् वस्योठि अन्तरङ्गत्वाद् यणि च कृते य् इत्यस्य द्वित्वम् इत्यर्थः । हलादिः शेषः ह्रस्वः । दिदेविषतीति । इट्पक्षे गुणः । सुस्यूषतीति । षिवु तन्तुसन्ताने । यणि च कृते द्वित्वम् । "आदेशप्रत्यययोः" ( ८ । ३ । ५९ ) इति षत्वमाशङ्क्याह—स्तौतिण्योरिति वक्ष्यमाणत्वात् । अर्दिधिषतीति । ऋधेः सनि इटि उपधागुणे रपरे "अजादेः" ( ६ । १ । २ ) इति धिस् इत्यस्य द्वित्वम् । 'नन्द्राः" ( ६ । १ । ३ ) इति रेफस्य न द्वित्वम् । "अभ्यासे चर्च" ( ८ । ४ । ५४ ) इति धस्य दः ॥ ४६७ ॥

आप्ज्ञप्यृधाम् । आप्लृ व्याप्तौ । अत्र "सनिमीमे" ( ७ । ४ । ५४ ) इत्यतो अच इत्यनुवर्तमानमावादिभिर्न सामानाधिकरण्येन संबध्यते । आप् ऋधोरजन्तत्वासम्भवात् ज्ञपेश्चाव्यभिचारात् । अत आवादिभिरच् वैय्यधिकरण्येन विशेष्यते इत्याह—एषामच इति । इदिति तकार उच्चारणार्थः ॥ ४६८ ॥

---

१. भूतमिति क० पु० ।
२. द्वितुको इति क० पु० ।
३. द्रष्यजिमिति क० पु० ।
४. ऊठमपि इति क० पु० ।

४६९. अत्र लोपोऽभ्यासस्य [ ७ । ४ ५८ ]

सनि मीमेत्यारभ्य यदुक्तं तत्राभ्यासलोपः स्यात् । रपरत्वम् । चर्त्वम् । ईर्त्सति । बिभ्रज्जिषति । बिभर्जिषति । बिभ्रक्षति । बिभर्क्षति । दिदम्भिषति ।

४७०. दम्भ इच्च [ ७ । ४ । ५६ ]

दम्भेरच इदादेशः स्यात् ईच्च सकारादौ सनि । अभ्यासलोपः । "हलन्ताच्च" ( १ । २ । १० ) इत्यत्र दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सनः कित्त्वम् । नलोपः । धिप्सति । धीप्सति । शिश्रयिषति । सिस्वरिषति । सुस्वूर्षति यियविषति । युयूषति । उर्णुनुविषति । उर्णुनविषति ।

---

अत्र लोपो । "सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्च" इति वाच्येऽत्रेति[1] विषयावधारणार्थम् । अत्रैवाभ्यासलोपो भवति सन्वद्भावविषये न भवति । अमीमवदिति । सर्वस्याभ्यासस्य लोपार्थमत्र ग्रहणमित्येके । तन्न "नानर्थकेऽलोन्त्यविधिः" ( ५० ) इत्येव सर्वलोपस्य सिद्धेः । अनभ्यासविकारेष्विति निषेधस्तु नास्ति, लोपस्याविकारत्वात् । ईर्त्सतीति । ऋकारस्य ईत् । रपरः । धस्य "खरि च" ( ८ । ४ । ५७ ) इति चर्त्वम् । अजादेरिति । द्वितीयस्यैकाच र्त्स इत्यस्य द्वित्वम् । अभ्यासलोपः । बिभ्रज्जिषतीति । इट्पक्षे रमभावेऽभ्यासस्येत्वे सस्य श्चुत्वे जश्त्वे बिभर्जिषतीति । "भ्रस्जो रोपधयोः" ( ६ । ४ । ४७ ) इति रम्पक्षे बिभ्रक्षतीति । इडभावपक्षे रमभावे च "स्कोः" ( ८ । २ । २९ ) इति सलोपः । "व्रश्च" (८।२।३६) इति षः । "षढोः कः सि" ( ८ । २ । ४१ ) इति कः । "इण् कोः" ( ८ । ३ । ५७ ) इति षः । क्ष. । बिभर्क्षतीति । तत्रैव रम्पक्षे ॥ ४६९ ॥

दम्भ इच्च । नन्वत्र सनः कित्त्वेन न भाव्यम्, इक्समीपाद् हलः परत्वाभावान्मध्ये मकारेण व्यवधानात्—अत आह—हलन्ताच्चेत्यादि । दम्भेः सनः कित्वमिति संबन्धः मध्ये हेतुः, हल्ग्रहणस्य जातिवाचकत्वादिति । "निपात एकाज०" ( १ । १ । १४ ) इत्येकग्रहणेन ज्ञापितमिह वर्णग्रहणे जातिनिर्दिश्यते इति । तेनेह हलिति हल्जातेर्निमित्तत्वेनापेक्षितत्वात् । तस्याश्चैकत्वादेव हल्जातिरिकः समीपे तस्याश्चरः सन्निति नास्ति व्यवधानम् इत्यर्थः । नलोप इति । "अनिदिताम्" ( ६ । ४ । २४ ) इत्यनेन । धीप्सति । धिप्सति । भष्भावः । "खरि च"(८ । ४ । ५५) इति चर्त्वम् । शिश्रीषतीति । "ऋज्भन" ( ६ । ४ । ४ । १६ ) सुस्वूर्षतीति इडभावे "अज्झनगमाम्" (६ । ४ । १६) इति दीर्घः । "उदोष्ठ्यपूर्वस्य" (७ । १ ।१०२)

---

१. अत्र विषयेति क० पु० ।
२. इडोश्चेति क० पु० ।

उर्णुनूषति । बिभरिषति । बुभूर्षति । जिज्ञपयिषति । "इको झल्" ( १।२।९ ) इति किज्वान्न गुणः । परत्वाण्णिलोपेन दीर्घो बाध्यते । ज्ञीप्सति । ज्ञपिरत्र पुगन्तो मित्संज्ञः । पकारान्तश्चौरादिकश्च । अन्यत्र जिज्ञापयिषतीत्येव । सिसनिषति । "जनसन." ( ६ । ४ । ८२ ) इत्यात्वम् । परिसिषासति । 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' । तितनिषति ।

---

इत्युत्वम् "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । यियविषतीति । इट्पक्षे गुणावादेशयोः स्थानिवत्त्वात् युशब्दस्य द्वित्वम् । "ओः पुयण्ज्यपरे" ( ७ । ४ । ८८ ) इतीत्वम् । उर्णुनुविषतीति । "विभाषोर्णोः" ( १ । २ । ३ ) इति ङित्वपक्षे उवङ् । "अजादेः" ( ६ । १ । २ ) इति नुशब्दस्य द्वित्वम् । "नन्द्राः" ( ६ । १ । ३ ) इति रेफस्य निषेधः । णत्वम् । पक्षे गुणः । उर्णुनूषतीति । इडभावे कित्वान्न गुणः । दीर्घः । बिभरिषतीति । उरदत्वे सन्यतः ( ७ । ४ । ७९ ) इतीत्वम् । बुभूर्षतीति । इडभावे कित्वादगुणे 'उरण् रपरः'[1] । ( १ । १ । ५१ ) "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । जिज्ञपयिषतीति । ज्ञा णिच् पुक् । "मितां ह्रस्व." ( ६ । ४ । ९२ ) सनि इटि गुणायौ । परत्वाण्णिलोपेनेति । ज्ञपि स इति स्थिते णिलोपश्च प्राप्नोति "आप्ज्ञप्यृधामीत्" ( ७ । ४ । ५५ इतीत्त्वं चानन्तेऽचि सावकाशमीत्वमित्यन्ते णिचि णिलोपेन बाध्यते इति पूर्वविप्रतिषेधेन । एवम् "अज्झन" ( ६ । ४ । १६ ) इति प्राप्तो दीर्घोऽपि बाध्यते । यद्यपि कृतेऽपीत्वे दीर्घे वा स्थानिवत्त्वेन णिलोपे सिद्धयति, तथापि न्यायो व्युत्पाद्यते इत्यदोषः । ज्ञपिरत्रेत्यादि । अत्र "सनीवन्तर्ध" ( ७ । २ । ४९ ) इत्यत्र "आप्ज्ञप्यृधाम्" ( ७ । ४ । ५५ ) इत्यत्र च पुगन्तो मित्सञ्ज्ञ इति जानातिः हेतुमण्ण्यन्तः पकारान्तश्चौरादिक इति स्वार्थे णिचि 'ज्ञपमिच्च' इति पठितः उभावप्यविशेषाद् गृह्येते, अर्थभेदात्तूभयोर्ग्रहणमपेक्ष्यते इति भावः । ज्ञाग्रहणे एव कर्तव्ये ज्ञपीति विकृतनिर्देशस्य व्यावर्त्यमाह—अन्यत्रेति । मित्सञ्ज्ञाया अभावे इत्यर्थः । सिसनिषतीति । "स्तौतिण्योः" (८ । ३ । ६१) इति नियमान्न षः । परिसिषासतीति । षणोऽभावात् "स्तौतिण्योः" ( ८ । ३ । ६१ ) इत्यस्याप्रवृत्तेरभ्यासात्परस्य षत्वम् । अभ्यासस्य तु न भवति, "सात्पदाद्योः" ( ८ । ३ । १११ ) इति निषेधात् । यत्तु प्राचोक्तम् —'स्थादिष्वभ्यासेन" ( ८ । ३ । ६४ ) इति नियमात् अभ्यासस्य न षत्वमिति तद्भ्रान्तिप्रलपितम् । स हि "सात्पदाद्योः" (८ । ३ । १११ इति निषेधापवादस्य

---

१. उर्णुनुविषतीत्यारभ्य—अग्रिमग्रन्थः यथास्थितो वर्तते इतः पूर्वं क० पु० यदुद्धृताद्धृतं तत् पूर्वत्रैव लिखितमस्ति ।

४७१. तनोतेर्विभाषा [ ७ । ४ । १७ ]

तनोतेरुपधाया दीर्घः स्याद्वा झलादौ सनि । तितांसति । तितंसति । 'आशङ्कायां सन् वक्तव्यः' । श्वा मुमूर्षति । कूलं पिपतिषति ।

४७२. सनि मीमाघुरभलभशकपतपदामच इस् [ ७ । ४ । ५४ ]

मि मी मा माङ् मेङ् दा धा रभादीनां चाचः इस् स्यात् सादौ सनि । अभ्यासलोपः । "स्कोः संयोगाद्योरन्ते च" ( ८ । २ । २९ ) इति संयोगादिलोपः । पित्सति । दिदरिद्रिषति । दिदरिद्रासति । "सः स्यार्धधातुके" ( ७ । ४ । ४९ ) इति सस्य तः । मित्सति । मित्सते । दित्सति । दित्सते । धित्सति । रिप्सते । लिप्सते । शिक्षति । पित्सते । ईप्सति । "राधो हिंसायां सनीस् वाच्यः" (वा०) प्रतिरित्सति । हिंसायां किम् ? आरिरात्सति ।

---

"उपसर्गात् सुनोति" ( ८ । ३ । ६५ ) इति प्राप्तस्य षत्वस्य नियमः । स चायं सनोतिः सुनात्यादिषु पठ्यते । यत्तु "स्थादिष्वभ्यासेन" ( ८ । ३ । ६४ ) इत्यत्र वृत्तावभिषिषासतीति नियमोदाहरणमुक्तम्, तत् "षोऽन्तकर्मणि" इत्यस्येति न्यास एव स्पष्टं व्याख्यातम् । तनीत्यादि । तनु विस्तारे । पत्लृ गतौ । दरिद्रा दुर्गतौ ॥ ४७० ॥

आशङ्कायामिति । आशङ्का भावना प्रयोक्तृधर्मस्तद्विशिष्टक्रियावचनात् स्वार्थे प्रत्ययः । श्वा मुमूर्षतीति । आशङ्के मरिष्यति चेत्यर्थः । "वर्तमानसामीप्ये वर्तमानवद्वा" ( ३ । ३ । १३१ ) इति भविष्यति लड्वा । संभावना हि क्रियाप्रवृत्तेः प्राग्भवतीति शुनश्चेतनत्वेऽपि जीवितस्य प्रियत्वात् व्याघ्याद्यभिभवेऽपि तिर्यक्त्वाद् मर्तुमिच्छा न संभवतीत्यारम्भः । मृङ् प्राणत्यागे । कित्वम् । दीर्घः । उत्वम् । रपरत्वम् । दीर्घः । षत्वम् । कूलं पिपतिषतीति । शङ्के पतिष्यति कूलमित्यर्थः । अत्राचेतनेच्छा न सम्भवतीति । डुमिञ् प्रक्षेपणे । मीञ् हिंसायाम् । अत्र मी इत्यनेन द्वयोर्ग्रहणम् ॥४७१॥

सनि । "अज्झन" (६ । ४ । १६) इति दीर्घे कृते मी इति रूपस्याविशेषादिति भावः । लक्षणप्रतिपदोक्तपरिभाषा चेह नाश्रीयते । सूत्रे घु इत्यस्य पूर्वनिपाताकरणेनास्या अप्रवृत्तिज्ञापनात् । मा इति त्रयाणां सामान्येन ग्रहणमित्याह—मा माङ् मेङिति । माङ् माने । मेङ् प्रणिदाने । गामादाग्रहणेष्वविशेषादिति भावः । घु इति "दाधाघ्वदाप्" ( १ । १ । २० ) इति संज्ञिनो गृह्यन्ते इत्याह—दा धा इति ।

## ४७३. मुचोऽकर्मकस्य गुणो वा [ ७ । ४ । ५७ ]

अकर्मकस्य मुचो गुणो वा स्यात् सादौ सनि । अभ्यासलोपः । पक्षे "हलन्ताच्च" ( १ । २ । १० ) इति कित्त्वान्न गुणः । मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् ? मुमुक्षति वत्सं कृष्णः । णौ कृतादेशस्य स्थानिवत्त्वम् । पुस्फारयिषति । चुक्षावयिषति । ओः पुयण्ज्यपरे । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जु गतौ । जिजावयिषति । ओः पुयण्जि इति किम् ? नुनावयिषति । अपरे इति किम् ? बुभूषति । स्रवतीति ( ७ । ४ । ८१ ) सिस्रावयिषति । सुस्रावयिषति इत्यादि । अपरे इत्येव । "रलो व्युपधाद्धलादेः संश्च" ( १ । २ । २६ ) रुरोचिषते । रुरुचिषते । लिलेखिषति । लिलिखिषति । "रुदविद" ( १ । २ । ८) इति नित्यं कित्त्वम् । रुरुदिषति । विविदिषति । मुमुषिषति ।

---

रभ राभस्ये । डुलभष् प्राप्तौ । शक्लृ शक्तौ । पत्लृ गतौ । पद गतौ । सादाविति । "सः स्यार्धधातुके" (७ । ४ । ४९) इत्यतः सीत्यनुवृत्तेः । तनिपतिदरिद्रातिभ्यः इत्युपक्रम्य पतिमुदाहृत्य दरिद्रातिमुदाहरति—दिदरिद्रिषतीति । "आतो लोप इटि च" ( ६ । ४ । ६४ ) इत्यालोपः । अन्तरा प्रकृतं समुदाहरति—मित्सतीति । मिमीमा इत्यत्र त्रयाणामुदाहरणम् । मित्सते इति माङ् मेङ्ने । दित्सतीति दो दाण् दाञामुदाहरणम् । देङस्तु दित्सते धित्सतीति । धाञ् धेटोः दित्सते इति रभलभोरिसि "स्कोः" ( ८ । २ । २९ ) इति सलोपः भस्य "खरि च" ( ८ । ४ । ५५ ) शिक्षतीति । शक इति इस्कृते सलोपे "इण् कोः" ( ८ । ३ । ५७ ) इति षत्वे क्षः । शक मर्षणे इत्यस्य दिवादेरुभयपदिनः शिक्षतेः इत्यपि शक्नोतेः परस्मैपदिनोऽपि सनि शिक्षेर्जिज्ञासायाम् इति यदा तङ् तदापि शिक्षते इति भवति । विद्यादिविषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । पित्सते इति । पदेः इस् सलोपः । चर्त्वम् । "पूर्ववत्सनः" ( १ । ३ । ६२ ) इति तङ् । ईप्सति । "आप्ज्ञप्यृधामीत्" (७ । ४ । ५५) अस्य प्रकरणे उत्कर्षकारणं मृग्यम् । प्रतिरित्सतीति "एकाच उपदेशे" ( ७ । २ । १० ) इत्यनिट् । घस्य चर्त्वम् ॥ ४७२ ॥

मुचोऽकर्मकस्य । मुच्लृ मोक्षणे । मोक्षते इत्यादि । वत्सं मोक्तुमिच्छति । मोक्तुमिष्यमाणो वत्सः स्वयमेव मुक्तावनुकूलो भवतीति । कर्मकर्तृविवक्षायामकर्मकोऽयं भवति । "कर्मवत् कर्मणा" ( ३ । १ । ८७ ) इति कर्मवद्भावादात्मनेपदम् । "णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणां यक्चिणौ न" ( वा० ) इति यगभावः ।

## ४७४. स्तौतिण्योरेव षण्यभ्यासात् [८ । ३ । ६१]

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्य । तुष्टूषति । "धु तिस्वाप्योः" ( ७ । ४ । ६७ ) इत्युत्त्वम् । सुष्वाप-

"एकाचः" ( ७ । २ । १० ) इत्यनिट् गुणः । अभ्यासलोपः । चोः कुः । षत्वम् । सः । मुमुक्षते इति । 'हलन्ताच्च" ( १ । २ । १० ) इति किर्त्वम् । अत्र 'मुच मोत्" इत्येव सिद्धम्, न च "अलोऽन्त्यस्य" ( १ । १ । ५२ ) अच इत्यनुवृत्तेः । सत्यम् । गुणग्रहणं ज्ञापयत्यच इति अत्र नानुवर्तते' इति । तेन अत्र लोपोऽभ्यासस्य ( ७ । ४ । ५८ ) इत्यत्राच इति न सबध्यते इति । अन्यथाऽभ्यासस्याच एव लोपः स्यान्न सर्वस्येत्याह् । पुस्फारयतीति । स्फुर सचलने । णिचि उपधागुणः "चिस्फुरोर्णौ" ( ६ । १ । ५४ ) इत्यात्वम् । सन् । इट् । द्वित्वं प्रति उवर्णादेशस्य स्थानिवत्त्वात् स्फुर इत्यस्य द्वित्वम् । "शर्पूर्वाः खयः" ( ७ । ४ । ६१ ) "अभ्यासे चर्च" ( ८ । ४ । ५४ ) सकारेण व्यवधानादभ्यासोवर्णस्य पवर्गपरत्वात् 'ओः पुयण्ज्यपरे" ( ७ । ४ । ८० ) इतीत्त्व न । गुणायौ । चुक्षावयिषतीति । टुक्षु शब्दे णौ । वृद्ध्यावादेशयोः स्थानिवत्त्वात् क्षुशब्दस्य द्वित्वे हलादि शेषः । कुहाश्चुः । अत्रापि पुयण्ज्यपरत्वान्नेत्वम् । पिपविषतीति । पूञ् पूङो वा णिचि वृद्ध्यायौ । तयो' स्थानिवत्त्वात् पुशब्दस्य द्वित्वेऽवर्णपरः पवर्गपरोऽस्तीत्यभ्यासस्योकारस्येत्वम् । बिभावयिषतीति । भू सत्तायाम् । यु मिश्रणामिश्रणयोः । रुङ् शब्दे । लूञ् छेदने । जु गताविति सौत्रो धातुः । नुनावयिषतीति । णु स्तुतौ । बभूषतीति । भवतेः शुद्धात् सन् । 'सनिग्रहगुहोश्च" ( ७ । २ । १२ ) इतीण्निषेधः । 'इको झल्" ( १ । २ । ९ ) इति कित्वान्न गुणः । सिस्रावयिषति इत्यादि । स्रु श्रवणे । अस्माण्णौ वृद्ध्यावादेशौ ततः स्रावीत्यस्मात् सन् इटि पूर्ववदादेशस्य स्थानिवत्वात् स्रु इत्यस्य द्वित्वेऽभ्यासोकारस्येत्वविकल्पः । एवं शृणोत्यादेरप्यूह्यम् । शुश्रूषते इति । "ज्ञाश्रुस्मृदृशां सनः" ( १ । ३ । ५७ ) इति तङ् ॥ ४७३ ॥

स्तौतिण्योरेव । णीति प्रत्ययग्रहणात् तदन्तो गृह्यते इत्याह-स्तौतिण्यन्तयोरिति । अल्पाच्तरस्यापि णेः परनिपातः सौत्रत्वात् । सिद्धे सत्यारम्भो नियमार्थः । एवकारकरणं त्विष्टतोऽवधारणार्थम्, अन्यथा विपरीतोऽपि नियमः सभाव्येत । स्तौतिण्योश्चेत् षण्येवेति । तथा हि सनि तुष्टूषतीत्यत्र न स्यात् । इह तु स्यादेव सिसिक्षतीति । तुष्टूषतीति । ष्टुञ् स्तुतौ । "धात्वादेः षः सः" ( ६ । १ । ६४ ) "इको झल्" ( १ । २ । ९ ) इति सनः कित्त्वम् । दीर्घः द्वित्वम् । "शर्पूर्वाः खयः" ( ७ । ४ । ६१ ) षत्वं ष्टुत्व सनः षत्वम् । सुष्वापयिषतीति । ञिष्वप् शये । ण्यन्तात् सन् । सिसिक्ष-

१. इत्यनुवर्तते इति स० पु० ।

यिषति । स्तौतिण्योः किम् ? सिसिक्षति । उपसर्गात् तु "स्थादिष्वभ्यासेन" (८ । ३ । ६५ ) इत्यभ्यासात् षः स्यादेव । परिषिषिक्षति । षणि किम् ? सभूतेऽन्यस्य स्यादेव । तिष्ठासति । सुषुप्सति । अभ्यासात् किम् ? धात्विण्-निमित्तः षोऽन्यस्य स्यादेव । इण् प्रतीषिषति इक् । अधीषिषति ।

---

तीति । षिच क्षरणे । हलन्ताच्च" (१ । २ १० ) इति कित्त्वम् । चोः कुः षत्वम्, सः । यदि षणि स्तौतिण्योरन्यस्य षत्वन् तर्हि परिषिषिक्षतीत्यत्रापि न स्यादत आह—उपसर्गात्त्विति । अभ्यासेण्निमित्तं षत्वमनेनान्यस्य निवर्त्यते । यत्तूपसर्गनिमित्तम् "उपसर्गात्सुनोति" ( ८ । ३ । ६५ ) "स्थादिषु" ( ८ । ३ । ६४) इति वा प्राप्नोति न निवर्त्यते इत्यर्थः । एतदभ्यासग्रहणादेव लभ्यते । नन्वेतदस्य मुख्यं प्रयोजनं कथम-सिद्धम् उपसर्गात् षत्वं तस्यासिद्धत्वान्नियमो[1] न भविष्यतीति। अत एवाग्रे प्रतीषिषतीति प्रयोजनं दर्शयिष्यति । षणि किमिति । कृतषत्वस्य सनोऽनुकरणं किमर्थमित्यर्थः । सभूते इति । स इत्येवं भूतः सन् विद्यमान इति यावत् । सामान्येन सनीत्येवमुच्यमाने यत्र षत्वं नास्ति तत्रापि स्यादित्यर्थः । तिष्ठासतीति । ष्ठा गतिनिवृत्तौ । द्वित्वे "सन्यतः" ( ७ । ४ । ७९ ) इतीत्त्वे धातोः षत्वम् यतः सन इण्परत्वाभावात् षत्वं नास्ति । सुषुप्सतीति । ञिष्वप् शये । धात्विण्निमित्त इति । अभ्यासग्रहणमभ्यासाद् या प्राप्तिस्तस्या नियमो यथा स्यात्, धातोर्या प्राप्तिस्तस्या नियमो मा भूदित्येवमर्थ-मित्यर्थः । प्रतीषिषतीति । इणः सन् । बोधनार्थत्वाद् गम्यादेशाभावे "अजादेः" ( ८ । १ । २ ) इति स[2]शब्दस्य द्वित्वम् । तत्र शब्दपरविप्रतिषेधात् परस्य षत्वे कृते[3] अस्य नियमस्याभावात् धात्वाश्रयं षत्वमभ्यासस्य भवति । सनीति च सन्प्रदेशेषु सनि सप्तमी । तत्र यथा[4] "सन्यतः" (७ । ४। ७९) इतीत्त्वं भवति तथा षत्वनियमोऽपि प्रवर्तते इत्यभ्यासग्रहणम् । ननु इस इति स्थिते परत्वात् सनः षत्वे कृते "पूर्वत्रा-सिद्धीयमद्वित्वे" ( प० ) इति स-षत्वस्यैव द्वित्वं भविष्यति । न चेदानीं जातस्य प्रवृत्तेनापि नियमेन निवृत्तिः शक्या कर्तुम्, तत् किमभ्यासग्रहणेनेति । सत्यम्, "पूर्वत्रा-सिद्धीयमद्वित्वे" ( प० ) इत्यनित्यत्वादिह नाश्रितम् । इक् स्मरणे ॥ ४७४ ॥

---

१. नियमाप्रेति क० पु० ।
२. स्सशब्दस्येति क० पु० ।
३. इत्यस्येति क० पु० ।
४. यथा इति क० पु० ।

**४७५. सः स्विदिस्वदिसहीनां च [ ८ । ३ । ६२ ]**

अभ्यासे णः परस्यैषां ण्यन्तानां सस्य स एव स्यात्, न षः, षणि परे। सिस्वेदयिषति। सिस्वादयिषति। सिसाहयिषति। "स्थादिष्वभ्यासेन चाभ्यासस्य" ( ८ । ३ । ६५ ) इत्यत्र स्थादिष्वेवाभ्यासस्य षत्वं न सुनो-त्यादिषु इति नियमात् अभिसुसूषति। परिसिषासति।

शैषिकान्मतुबर्थीयात् शैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते इति।
स्वार्थसन्नन्तात् तु सन् स्यादेव। जुगुप्सिषते। मीमांसिषते॥

॥ इति सन्नन्तप्रक्रिया ॥

---

सः स्विदि। ञिष्वदा गात्रप्रक्षरणे। स्वद आस्वादने। षह मर्षणे एषां ण्यन्तानामिति इका निर्देशेऽपि सामर्थ्यप्राप्तमेतत्। षत्वे प्राप्ते हि सत्वमुच्यते। षत्व-प्राप्तिश्च ण्यन्तानामिति सस्य स[1]विधानम् "भो राजि" (८।३।२५) इतिवत् विकार-निवृत्त्यर्थमिति व्याचष्टे—सस्य स एव स्यात्, न षः इति। नेत्येव तु नोक्तम्, लाघवे विशेषाभावात्। सिस्वेदयिषति इति। स्विद णिच् उपधागुणः: द्वित्वम्, ह्रस्वः। एवमिह[2] "स्थादिष्वभ्यासेन" (८।४।६४) इत्यादि द्वे एते वाक्ये स्थादिष्वभ्यासेन व्यवाये षत्वं भवतीत्येक विध्यर्थम्। अभ्यासस्य चेत्यपरं नियमार्थम्। नियममेव विवृणोति-स्थादिष्वेवेत्यादि। अभिसुसूषति इति। षुञ् अभिषवे। अनिट्। "अज्झन" (६।४।१६) इति दीर्घः। "सुनोते स्यसनोः" (८।३।११७) इति परस्य न षत्वम्। षू प्रेरणे इति वा "सनि ग्रहगुहोश्च" (७।२।१२) इतीडभावः। अस्य "स्तौतिण्योः" (८।३।६१) इति नियमात् परस्य न षत्वम्। उभयत्रापि 'उप्युपसर्गात्' (८।३।६१) इति प्राप्तमभ्यासस्य षत्वमस्मान्नियमान्न भवति इति। परिसिषास-तीति। षोऽन्तकर्मणि। "आदेच उपदेश" (६।१।४५) इत्यात्वम्। "इण्कोः" (८।३।५७) इति षत्वम्। "एकाच" (७।२।१०) इत्यनिट्।

शैषिकादित्यादि भाष्यम्। सन् सङ्क्षे..न्योऽप्यनिष्टः प्रत्ययो वर्ण्यते। अपत्यादिचतुरर्थ्य-न्तादन्योऽर्थः शेषः। [3]तत्र भवः शैषिकः अध्यात्मादित्वाट्ठञ्। तस्माच्छैषिकात् प्रत्ययात् शैषिकः सरूपः प्रत्ययोनेष्टः। यथा शालायां भवः शालीयो घटः"वृद्धाच्छः" (४।२।११४) तत्र भव इत्यर्थे पुनः छो न[3] भवति। विरूपस्तु भवति, अहिच्छत्रे भवः आहिच्छत्रः

---

१. स इति नास्ति क० पु०।

२. एवमिह इति क० पु०।

३. तत्र भव इत्यारभ्य—वृद्धाच्छ इत्यन्तो नास्ति क० पु०।

तत्र भावः (४।३।५३) इत्यण् । तत्र भव ग्राहिच्छत्रीयः तथा मतुबर्थे भवो मतुबर्थीयः। गहादित्वाच्छः। तस्मात् सरूपो मतुवर्थिकः प्रत्ययो नेष्ट। मतुबर्थोऽस्यास्तीति मतुबर्थिक.। "अत इनि ठनौ" (५।२।११५) इति ठन्। यथा दण्डोऽस्यास्तीति दण्डिकः। सोऽस्यास्तीति पुनष्ठञ्। विरूपस्तु स्यादेव दण्डिमती शालेति। तथा सन्नन्तान्न सनिष्यते। सरूप इत्येव। सारूप्यं च सनोऽर्थद्वारक मादृश्य विवक्षितम्। तेनेच्छासन्नन्तात् पुनः सन्न भवतोति भावः। (अत्रापि[1] सरूप इति विशेषणमपेक्ष्यते इति सूचयंस्तस्य व्यावर्त्यमाह–) स्वार्थसन्नन्तादिति। अत्र सनः स्वार्थिकत्वाद् इच्छायाः अनुक्तत्वादिति भावः। (योऽपि[2] निन्दाजुगुप्सादौ सन् सोऽपि स्वार्थिक एवेति भावः)। जुगुप्सिपते इति। "गुप्तिज्किद्भ्यः सन्" (३।१।५) ततः परस्य आर्धधातुकत्वाद् इट्। अतो लोपः। मीमांसिषते इति। "मान्बधदानशान" (३।१।६) इत्यादिना सन्। अत्राहुः–प्रतिव्यक्तिलक्षणप्रवृत्तिरिति पक्षे वाचनिको निषेधः। जातिपक्षे तु[3] सकृल्लक्षणं प्रवर्तत इति तत्प्रवृत्ते. प्राक् तत्प्रत्ययान्ता प्रकृतिर्न सभवतीति। तदन्तात्तत्प्रत्ययोत्पत्तिर्न भवतीति न्यायानुवादोऽयमिति ॥ ४७५ ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवशामलो-
त्तसः श्रीनरसिंहसूनुरभवत् ऽस्यत्नवाचस्पतिः।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ-
श्रीकृष्णस्य कृतौ समाप्तिमगमत् व्याख्या सन्नन्ताश्रया ॥ १ ॥ इति ॥

॥ इति सन्नन्त–प्रक्रिया ॥

या पाण्डिती पण्डितकार्यकर्त्री सा पण्डिता किल्विषशेषहन्त्री।
श्रीपण्डितापण्डितपूज्यकर्त्री सापा ण्डिती पण्डितसिद्धयेऽस्तु ॥ २ ॥

॥ सन्नन्त ४०० ॥

---

१. अत्रापीत्यारभ्य–इत्याहेत्यन्तो नास्ति (     ) रेखाङ्कितः क० पु०।

२. योऽपीत्यारभ्य—भाव इत्यन्तो नास्ति (     ) रेखाङ्कितः क० पु०।

३. पक्षे इति नास्ति क० पु०।

# अथ यङन्तप्रक्रिया

## ४७६. धातोरेकाचो हलादेः क्रियासमभिहारे यङ् [३।१।२२]

हलादिर्यो धातुरेकाच् तस्मात् पौनः पुन्ये भृशार्थे च यङ् प्रत्ययः स्यात्। "सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः" ( वा० )। धातोरित्युक्तेः नोपमगान्न। प्राटति भृशम्। रुचिशुभ्योर्यङ् न।

---

धातोरिति। एकाच इति बहुव्रीहिः हलादेरिति विशेषणसामर्थ्यात् धातुश्चान्यपदार्थ[1] इत्यालोच्य व्याचष्टे—हलादिर्य इत्यादि। तस्मात् पौनः पुन्ये भृशार्थे चेति। अनेन क्रियासमभिहार व्याचष्टे-प्रकृत्यर्थविशेषणं चैतत्। पौनः पुन्ये भृशार्थे च वर्तमानाद्धातोः तद्विशिष्टक्रियावाच'कादित्यर्थः। क्रिया हि' धातुवाच्या पौनःपुन्यादि विशिष्टापि क्रिया क्रियैव भवति। यङ् प्रत्ययः स्यादिति। स चानिर्दिष्टत्वात् स्वार्थे भवति। समभिव्याहारस्तु द्योत्यः। यथा शुक्लतर इति। प्रकृत्यर्थस्यातिशयद्योतनाय स्वार्थ एव तर[4]बादयस्तद्वत्। तत्र यद्यपि विप्रकीर्णानां बहूनां पदार्थानां मूर्तानामेककालानामेकत्र राशिकरणं समुदायभावापत्तिर्मुख्यः समाहारः क्रियासु न संभवति। यतो धातुवाच्या समूहरूपा प्रधानक्रिया निवृ[5]त्तभेदेनैकैवेति समभिहारो नास्ति—अधिश्रयणादीनां तु गुणक्रियाणां युगपदेकधातुवाच्यत्वेपि क्रमजन्यत्वादुत्पन्नापवर्गत्वेन युगपदवस्थानाभावात् अमूर्तत्वाच्च समभिहारासम्भवः, अतो मुख्यस्य समभिहारस्य धात्वर्थविषयेऽसम्भवात् पौनः पुन्यं भृशार्थश्च गौणः संगृह्यते। तत्र यथा द्रव्याणां द्रव्यान्तरैरव्यवेतानां समाहारो भवति तद्वत् क्रियाणां क्रियान्तरैरव्यवेतानामेतदुभय भवतीति। तत्र प्रधानक्रियाणां पौनः पुन्यं समभिहारः पुनः पुनरनुष्ठीयमानं हि तत्प्रधानक्रियैव च पुनः पुनरनुष्ठीयते। अवयवक्रियाणां तु भृशार्थता समभिहारः। बुद्धिगोचरानेकसकलावयवक्रियाविषया हि सेति विवेकः। सूचीत्यादि। सूच पैशून्ये। सूत्र अवमोचने। मूत्र प्रस्रवणे। अट गतौ। ऋ गतौ। अश भोजने। अशू व्याप्तौ द्वयोरपि ग्रहणमिति हरदत्तादयः। उर्णुञ् आच्छादने। तत्र अयश्चुरादिण्यन्ता अनेकाचः अटयर्त्यशस्त्वहलादयः उर्णुञ् चानेकाच् अहलादिश्चेत्य-

---

१. इति व्याचष्ट इति क० पु०।

२. क्रिया यथादिति क० पु०।

३. हीति नास्ति क० पु०।

४. तप्प्रत्यय इति क० पु०।

५. निर्वर्त्यभेदेनेति क० पु०।

४७७. नित्यं कौटिल्ये गतौ [ ३ । १ । २३ ]

गत्यर्थात् कौटिल्ये एव यङ् स्यान्न तु क्रियासमभिहारे।

४७८. लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।[३।१।२४]

एभ्यो धात्वर्थगर्हायामेव यङ् स्यान्न क्रियासमभिहारे। भृशाद्यर्थभावगर्हयोर्मिश्रणेऽपि लुपादेः स्यादिति केचित्। "सन्यङोः" ( ६ । १ । ९ ) इति द्वित्वम् ।

---

प्राप्ते' वचनम्। एतच्चोर्णोतेर्वक्ष्यमाणार्थ्य कृतम्। तस्यैवायं प्रयोजनप्रपञ्चो ज्ञेयः। सौत्रस्य धातुग्रहणस्य प्रयोजनमाह—धातोरित्युक्तेरिति। प्राटतीति। अत्र धातूपसर्गसमुदायस्य) विशिष्टक्रियावचनत्वात् समुदायाद् यङ्—उपसर्गस्यैव द्वित्वादिः स्यात्। ननु यदि सोपसर्गस्यैव क्रियासमभिहारवृत्ति प्राटाटयते, उपपनीपद्यते इत्यादौ यङ् न स्यात्। योऽत्र धातुर्न स क्रियासमभिहारे, योऽसौ' क्रियासमभिहारे न स धातुरिति। तस्माद् धातुरेव समभिहारविशिष्ट क्रियावचनः। उपसर्गस्तु सन्निधिमात्रेणोपकारः। एवं च सोपसर्गान्नास्ति प्रसङ्ग। धातुग्रहणं त्वार्धधातुकसंज्ञार्थमेवानुपङ्क्तिकी तु सोपसर्गनिवृत्तिरित्याहुः। शंचशुभ्योरिति। रुच दीप्तौ। शुभ शोभायाम्। यङ् नेति'। अनभिधानात्। अत्र'भृशं शोभते। भृशं रोचते यङ् नेष्यते इति भाष्यवृत्त्यादौ भृशार्थोपादानात् पौनःपुन्ये न निषेधः इति प्रतिभाति। इदमेवाभिप्रेत्य माधवबोपदेवाभ्यां शोशुभ्यते। रोरुच्यते इत्युदाहृतम्। शोभते इति शब्विकरणस्योदाहरणात्तौदादिकस्य यङ् न निषिध्यते इति कृष्णप्रबोध ।

नित्यं कौटिल्ये'। गताविति धातोर्विशेषणम्, गतौ वर्तमानाद्धातोरिति। गतिवाचित्वाच्च गतौ वृत्तिरित्याशयेन व्याचष्टे—गत्यर्थादिति। कौटिल्यं च सन्निधानाद् गतिविषयमेव गम्यते। नित्यग्रहणं च न तावद् विकल्पस्य निवृत्त्यर्थम् अप्रकृतत्वात्, अनभिधानादेव वाक्यस्याप्रसङ्गाच्च किं तु विषयनियमार्थं गतिकौटिल्य एव यङ् यथा स्यात्, अर्थान्तरे मा भूदिति व्याचष्टे—कौटिल्य एव यङ् स्यात् इति नियमस्य व्यवच्छेद्यमाह—लुपसदेति।

लुपसदेति। लुप्लृ विशरणगत्यवसादनेषु। चरगतिभक्षणयोः। जपव्यक्तायां

---

१. अचेत्यप्राप्तस्य विशष्टेति क० पु० इत्यप्राप्ते इत्यारभ्य—समुदायस्येत्यन्तो रेखाङ्कितो ( ) नास्ति क० पु०।

२. योऽसौ क्रियासमभिहारे न स धातुरिति नास्ति क० पु०।

३. यङन्नेति क० पु०।

४. अत्रेत्यारभ्य—कृष्णप्रबोध इत्यन्तो नास्ति क० पु०।

५. नित्यं कौ इत्यत्र क० पु०।

४७९. गुणो यङ्लुकोः [ ७ । ४ । ८२ ]

अभ्यासस्य गुणः स्यात् यङि यङ्लुकि च परे । धातुत्वाच्छबलडादयः । ङित्वादात्मनेपदम् । णिलोपः । पुनः पुनरतिशयेन वा सूचयति सोसूच्यते ।

४८०. यस्य हलः [ ६ । ४ । ४९ ]

हलः परस्य यकारस्य लोपः स्यादार्धधातुके । असोसूचिष्ट । सूसूचाञ्चक्रे । सोसूत्र्यते । मोमूत्र्यते । द्वितीयस्य द्वित्वम् । हलादिः शेषः ।

---

वाचि । जभ गात्रविनामे । दह भस्मीकरणे । दश दशने । गॄ निगरणेऽर्थे यङ् नास्त्यनभिधानादित्याह—भावोऽत्र धात्वर्थं इत्यर्थं व्याचष्टे—धात्वर्थगर्ह्यामिति । इहापि विषयनियमार्थं[1] नित्यग्रहणमनुवर्तते इत्याशयेनाह—एवेति । व्यवच्छेदं दर्शयति—नेत्यादि । मिश्रणेऽपीति । केचिदिति । अयोगव्यवच्छेदोऽत्र विवक्षितो न त्वन्ययोगव्यवच्छेद इति मन्यमाना इति भावः ।

गुणो यङ् । यङ्साहचर्यात् लुगपि यङ एव गृह्यते । अन्यस्मिन् लुकि अभ्यासोऽपि न संभवतीत्यालोच्याह—यङ्लुकि चेति । "न लुमता" ( १ । १ । ६३ ) इति प्रत्ययलक्षणप्रतिषेधान्न स्यादिति लुग्ग्रहणम् । धातुत्वादिति । "सनाद्यन्ता धातवः" ( ३ । १ । ३२ ) इत्यनेन । ङित्वादात्मनेपदमिति । "अनुदात्तङित" ( १ । ३ । १२ ) इत्यनेन । यद्यपि धातुर्न ङित् किन्तु तदवयवो यङेव न चासौ धातुः अवयवे च ङित्त्वं गुणादिनिषेधे चरितार्थत्वान्न समुदायविशेषकमपि । तथापि ङिदन्ताद्धातोरिति तत्र व्याख्यातत्वान्न दोष इति ज्ञेयम् । णिलोप इति ।
"णेरनिटि" (६।४।५१) इत्यनेन । अयं च सूचिय इति स्थिते परत्वान्नित्यत्वाच्चादौ भवति । ततः सूच्य इत्यस्यैकाचो द्वित्वं भवति । एकाचो द्वे इत्यत्र द्वितीयमचमवधीकृत्य यावानेकाच्समुदायस्तस्य द्वित्वमिति स्थितेः । सूचिकटाहन्यायेन वार्तिकोक्तं यङं तावदुदाहरति । सोसूच्यते इति । सूच पैशून्ये अदन्तोऽस्मात् चुरादेर्णिच् । "अतो लोपः" ( ६ । ४ । ४८ ) यङ् । णिलोपः । द्वित्वम् । हलादिः शेषः । अभ्यासस्य गुणः । अषोपदेशत्वान्न धातोः षत्वम् । षोपदेशलक्षणे एकाच इति विवक्षणात् । सूच्यादीनां चादन्तत्वेनानेकाच्त्वात् लट्[3] । आत्मनेपदम् । शप् । अतो गुणे । सोसूच्येत । सोसूच्यताम् । असोसूच्यत ॥ ॥

यस्य हलः । हलः यस्येति । यकाराकारसङ्घातग्रहणम् श्रुतस्याकारस्याविव-

---

१. विषये नियमार्थमिति क० पु० ।
२. नित्वादिति क० पु० ।
३. अलट् इति क० पु० ।

## ४८१. दीर्घोऽकितः [ ७ । ४ । ८३ ]

अकितोऽभ्यासस्य दीर्घः स्याद् यङि यङ्लुकि च । अटाट्यते अशाश्यते ।

---

लायाः कारणाभावात् । तेन ईर्ष्यिता । भव्यिता । अहर्य्यीत् इत्यादौ यकारमात्रस्य न भवति । अत्र संघातग्रहणेऽपि हल इति पञ्चमीनिर्देशात् 'आदेः परस्य" ( १।१।५४) इति यकारमात्रस्य लोपः । अकारस्य तु 'अतो लोप." ( ६ । ४ । ४८ ) इति पृथगेव लोपः । तथा च तस्य स्थानिवत्त्वात् पापचक[1] इति—अतो लोपे वृद्धिर्भवतीत्याकरः ।

आचार्यास्तु–नाप्राप्तेऽतो लोपे आरभ्यमाणोऽयं समुदाय लोप एवेति मन्यन्ते । एतच्च यङ्लुगन्ते प्रपञ्चयिष्यामः । यदि संघातस्य लोपः कथमुच्यते यकारस्येति । सत्यम् । नायं कारप्रत्ययः किं तु क्रियते इति कार इति कर्मणि घञ् । तेन कारशब्दे कर्मधारयः । यश्चासौ कारश्चेति । उच्चार्यमाणस्य यशब्दस्येत्यर्थ.[2] । एतच्च लकारस्थावर्णेनेत्यत्र निपुणतरं निरूपितमस्माभिः । असोसूचिष्टेति । लुङि सिच इट् । पत्वम् । ष्टुत्वम् । प्रत्ययान्तादाम् । सोसूचाञ्चक्रे[3] । सोसूचिता । सोसूचिषीष्ट । सासूचिष्यते । असोसूच्यत[4] इति । एवं परेषामपि ॥ ॥

दीर्घोऽकितः[5] । अभ्यासस्येति । दीर्घश्रुत्याचश्चेत्युपस्थानादजन्तस्येति[6] बोध्यम् । अकित.[7] किम् ? जङ्गम्यते । ननु चापवादत्वात् पूर्वं नुकि कृतेऽनजन्तत्वादेव न भविष्यति । एवं तर्हि एतज्ज्ञापयति—'अभ्यासविकारेष्वपवादाः उत्सर्गान् विधीन् न बाध्यन्ते" ( प ) इति । तेन मीमांसते इत्यादौ दीर्घेणेत्त्वं न बाध्यते इति दिक् । अटाट्यते । अशाश्यते इति । अटेरशेश्च यङि द्वितीयस्य टय श्य इत्यस्य द्वित्वम् । यलोपेऽकारस्य दीर्घविधिसामर्थ्याद् ह्रस्वो न । ऋङि च । अरार्यते इति । गुणे रपरे च कृते यशब्दस्य द्वित्वम् । "नन्द्राः" ( ६ । १ । ३ ) इति निषेधो यकारपररेफस्येत्यनेनापोद्यते । हलादिशेषेण यलोपे दीर्घः । ऊर्णोनूयते इति । "अजादेः" ( ६ । १ । २ ) इति नुशब्दस्य द्वित्वम् । रेफस्य तु 'नन्द्राः" ( ६ । १ । ३ ) इति प्रतिषेध. । द्वित्वे च णत्वमसिद्धम् । 'पूर्वत्रासिद्धयमद्वित्वे" (प०) इत्येतच्चानित्यम् "उभौ साभ्यासस्य"

---

१. पावक इति क० पु० ।
२. परवा शब्दस्येति क० पु० ।
३. सोसूच्याञ्चक्रे इति क० पु० ।
४. असोसूच्यत इति नास्ति क० पु० ।
५. दीर्घो क्नित् इति क० पु० ।
६. उपधास्थानादिति क० पु० ।
७. अङ्कित इति क० पु० ।
८. अ[illegible] क० पु० ।

## ४८२. यङि च [ ७ । ४ । ३० ]

अर्त्तेः संयोगादेश्च ऋतो गुणः स्याद् यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः । अरार्यते । ऊर्णोनूयते । "घुमास्थागापाजहातिसां हलि" (६।४।६६) ततो द्वित्वम् । गुणः । देदीयते । अतो लोपः । अदेदीयिष्ट । देधीयते । मेमीयते । तेष्ठीयते । जगीयते । पेपीयते । जेहीयते । सेपीयते । "विभाषा श्वेः" ( ६ । १ । ३० ) शोशूयते । शेश्वीयते । सास्मर्यते । "रीङ् ऋतः" (७ । ४ । २७) चेक्रीयते । सुटो बहिरङ्गत्वात् न संयोगादित्वेन गुणः ॥

---

( ८ । ४ । २१ ) इति ज्ञापकात् । देदीयते इति । दोदेङ्दाण्दाञा रूपम् । आद्ययोः "आदेच" ( ६ । १ । ४ ) इत्यात्वे परत्वाद् द्वित्वे परत्वात्ततो द्वित्वेऽभ्यासस्य गुणः । अदेदीयिष्टेति । हल इत्युक्तेर्यस्य न लोपः । अतो लोपः । देधीयते इति । धाञ्धेटोः । मेमीयते इति । मामाङ्मेङाम् । पेपीयते इति । ईत्वे सिज्लुकि च लुग्विकरणस्याग्रहणात् पाने पापायते । अपासीदित्येव । सेपीयते इति । षोऽन्तकर्मणि । "आदेच" ( ६ । १ । ४५ ) इत्यात्वम् । ईत्वम् । गुणः । "इणूको." (८।३।५७) इति षत्वम् । शोशूयते इति । प्राक् सम्प्रसारणे कृते द्वित्वम् । "अकृत्सार्व" ( ७ । ४ । २५ ) इति दीर्घः । सास्मर्यते इति । "यङि च" ( ७ । ४ । ४० ) इति गुणे द्वित्वम् । हलादिशेषः । "दीर्घोऽकितः" (७।४।८३) सनेस्क्रीयते इति । "संपर्युपेभ्यः" (६।१।१३७) इति सुट् । अत्र पठ्यते सुटो बहिरङ्गत्वात् न संयोगादित्वेन गुण इति । तच्चिन्त्यम् । परत्वाद् रीङि कृते ततो द्वित्वे "अडभ्यासव्यवायेऽपि" ( वा० ) इत्यभ्यासात् परस्य सुटि कृते साभ्यासस्याङ्गस्य संयोगादित्वमृदन्तत्वं च नास्तीति कथं गुणप्राप्तिरिति ?

न च संकृत इत्यस्यामेवावस्थायां द्वित्वात् परत्वात् सुटि कृते रीङ्प्रवृत्तेः प्रागस्ति संयोगादित्वम् इति शङ्कनीयम् । "अडभ्यासव्यवायेऽपि" ( वा० ) इत्यस्यारम्भेणाऽभ्यासयोः कृतयोरेव सुट्, न प्रागिति साधितत्वात् । अत एव सञ्चस्करतुरित्यत्र संयोगादित्वाभावात् गुणो न सिद्ध्यतीति संयोगोपधग्रहणम् कर्तव्यमित्युक्तम् ।

न च भाष्यकृता पूर्वं धातुरुपसर्गेणेति सुटोऽन्तरङ्गत्वोक्तेः ससुट्कस्यैवाभ्यासाभ्युपगमात् परत्वाद् रीङं बाधित्वा कथञ्चित् प्रतिपदोक्तत्वमाश्रित्य च सस्कृ इत्यवस्थायां गुणप्राप्तिरिति वाच्यम् । सम्मते सुटो बहिरङ्गत्वात् इति परिहारविरोधात् । तस्माद् भ्रान्तप्रक्षेपोऽयम् । अत एव प्राचां नायं ग्रन्थः स्पृष्ट इत्यालोचयामः ।

४८३. सिचो यङि [ ८ । ३ । ११२ ]

सिचः परस्य षो न स्यात् यङि ।

४८४. ग्रो यङि [ ८ । २ । २० ]

गर्हितं गिलति निजेगिल्यते । लोलुप्यते । सासद्यते ।

४८५. न कवतेर्यङि [ ७ । ४ । ६३ ]

कवतेर्भौवादिकस्याभ्यासस्य चुत्वं न स्याद् यङि । कोकूयते । कवते-निर्देशात् कौतिकुवत्योश्चुत्वमेव । चोकूयते ।

---

सिचो यङि । उपसर्गाभ्यासनिमित्तषत्वापवाद इति । अभ्याससकारस्य "उपसर्गात्" ( ८।३।६५ ) इति 'सुनोति" ( ८।३।६५ ) इति प्राप्त धातुसकारस्य तु "स्थादिष्वभ्यासेन" ( ८।३।६४ ) इति प्राप्तं षत्वमनेन निषिध्यते इत्यर्थः । निसेसिच्यते इति । षिच क्षरणे । वक्रं व्रजतीति । सोऽल्पीयस्याऽध्वनेः गतागतानि करोति कुटिलां गतिमापादयन्नेवमुच्यते । वाव्रज्यते इति । व्रज गतौ । "नित्यं कौटिल्ये गतौ" ( ३ । १ । २३ ) इति यङ् । हलादिः शेष । दीर्घः ।

ग्रो यङि । अनाश्रितार्थं गृ इति रूपमात्रमनुक्रियते । यङीति संबन्धात्तत्-रकालं धातुत्वावगतिः । आश्रितार्थानुकरणे तु किर् इत्यादिवत् 'ॠत इद्धातोः" ( ७ । १ । १०० ) इतीत्वे गिर इति भवितव्यम् । गर्हितमिति क्रियाविशेषणम् । एवं हि भावस्य गर्हा दर्शिता भवति । गिलनस्य गर्हितत्वम्[१] विकृतास्यचेष्टादिकृतम् । जेगिल्यते इति । "लुपसद" ( ३ । १ । २४ ) इत्यादिना यङ् । "ॠत इत्" ( ७ । १ । १०० ) इतीत्वम् । रपरत्वम् । द्वित्वाभ्यासकार्येषु "हलि च" ( ८।२।७७ ) इति दीर्घस्यासिद्धत्वात् पूर्वमनेन लत्वम् । ततो रेफान्तत्वाभावात् दीर्घो न ।

न कवतेरिति[२] । कोरित्येव वाच्ये विकरणनिर्देशे[३] प्रयोजनमाह—कवतेरिति निर्देशादिति । शब्विकरणस्य निर्देशात् भौवादिकः कुङ् शब्दे इति गृह्यते । कौतिः कुशब्दे इत्यदादिः कुवतिः । कूङ् शब्दे तुदादिश्च न गृह्यते इत्यर्थः । यद्यपि कोरित्युक्तेऽपि तौदादिकस्य दीर्घान्तस्य ग्रहणप्रसङ्गो नास्ति । तथापि कौतिव्यावृत्त्यर्थम् शप् निर्देशः क्रियमाणः कुवतिमपि व्यावर्तयतीति भावः ।

---

१. गर्हितत्वमित्यारभ्य—दीर्घो नेत्यन्तो नास्ति क० पु० ।

२. न कवेति क० पु० ।

३. करणेति क० पु० ।

**४८६. नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् [७।४।८४]**

एषामभ्यासस्य नीगागमः स्याद् यङ् यङ्लुकोः । अकित इत्युक्तेर्न दीर्घः । नलोपः । वनीवच्यते । सनीस्रंस्यते इत्यादि ।

**४८७. नुगतोऽनुनासिकान्तस्य [ ७ । ४ । ८५ ]**

अनुनासिकान्तस्यादन्ताभ्यासस्य नुगागमः स्याद् यङ्यङ्लुकोः । नुक्पदान्तवद्वाच्यः । अझल्यप्यनुस्वारः । "वा पदान्तस्य" ( ८।४।५९ ) इति वा परसवर्णः । यंयम्यते । यॅय्यम्यते । वंवम्यते । वँव्वम्यते । तंतन्यते । तन्तन्यते । अत इति तपरत्वान्नेह भाम क्रोधे । बाभाम्यते । "ये विभाषा" ( ६।४।४३ ) इत्यात्त्वम् । जाजायते । जञ्जन्यते । एवं सन खन । कुत्वम् । जङ्घन्यते । "हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः" ( वा ) । जेघ्नीयते ।

---

नीग्वञ्चु । वञ्चुकसपतपदयो गत्यर्थाः । स्रंसुध्वसुभ्रंसु अधःपतने । स्कन्दिर गतिशोषणयोः । अकित इत्युक्तेर्न दीर्घः । अभ्यासस्य स्वतः कित्वं न सम्भवति—इत्यागमकित्वाश्रयो निषेधो भवतीति भावः । नलोप इति । "अनिदिताम्" (६।४।२४) इत्यनेन । वनीवच्यते । नीकोदीर्घोच्चारणसामर्थ्यात् ह्रस्वगुणौ न[१] । आदिपदाद् दनीध्वस्यते[२] । बनीभ्रश्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते ॥ ॥

नुगतो । अनुनासिकस्येत्यङ्गस्य विशेषणम् । अनुनासिकान्तस्याङ्गस्यावयवोऽभ्यासोऽदन्तस्तस्य नुगित्यर्थः । नुक्पदान्तवद् वाच्य इति । अयं भावः इहान्तग्रहणं न कर्तव्यम् यदन्तविधिनैव सिद्धेस्तत् क्रियते तस्यानुस्वारस्य यो धर्मः सोऽस्य यथा स्यादिति । एव चानुनासिकेति[३] लुप्तषष्ठीकं पृथक् पदम् अझल्यप्यनुस्वार इति नुगित्यनेनानुस्वार उपलक्ष्यते । स्थानिना हि आदेशो लक्ष्यते तेनाझल्यप्यनुस्वारो भवतीत्यर्थः । यंयम्यते इति । यम उपरमे । परसवर्णपक्षे सानुनासिका यवलाः । अत इति तपरत्वान्नेह । तपरकरणसामर्थ्याद् भूतपूर्वस्यापि दीर्घस्य प्रतिषेधो ज्ञायते । नहि सांप्रतिकोऽभ्यासे दीर्घोऽस्ति सर्वत्र ह्रस्वविधानादिति भावः । बाभाम्यते इति । अभ्यासस्य ह्रस्वे कृते "दीर्घोऽकितः" ( ७।४।८३ ) इति दीर्घः । जाजायते इति ।

---

१. नेति नास्ति क० पु० ।

२. दनीध्वस्यते इति क० पु० ।

३. तु इत्यधिकः क० पु० ।

४८८. जपजभदहदशभञ्जपशां च [ ७ । ४ । ८६ ]

एषामभ्यासस्य नुक् स्याद्-यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते । पशतिस्तालव्यान्तः सौत्रो गत्यर्थः । कुटिलं पशति पम्पश्यते इत्यादि । लवयान्ताभ्यासस्य नुग्वेति केचित् । चंचल्यते । यंयव्यते । चाचल्यते । मामव्यते । दंदय्यते । दादय्यते ।

४८९. चरफलोश्च [ ७ । ४ । ८७ ]

अनयोरभ्यासस्यातो नुक् स्याद् यङ्यङ्लुकोः ।

४९०. उत्परस्यातः [ ७ । ४ । ८८ ]

चरफलोः प्रकृतेरकारस्य उत् स्याद् यङ्यङ्लुकोः । चञ्चूर्यते । पम्फुल्यते ।

---

दीर्घः । जाजायते इति । जन जनने । एवमिति । सासायते । ससन्यते । चाखायते । चङ्खन्यते । कुत्वमिति[१] । "अभ्यासाच्च" ( ७ । ३ । ५५ ) इत्यनेन । जङ्घन्यते इति । हन हिंसागत्योः । द्वित्वे । हलादिः शेषे च कुत्वम् । घ्नीभावो वक्तव्य इति । यद्यपि घ्नीभावेऽपि कृते कुत्वेन जेघ्नीयते इति सिध्यति ; तथापि प्रक्रियालाघवाय घ्नीभावः क्रियते । अत्र न दिग्यादेशेनेव घ्नीभावेन द्वित्वं बाध्यते विषयभेदात् । तथाहि यङन्तस्य नित्यं द्वित्वं[२] प्रकृतिमात्रस्य घ्नीभाव इति ॥ ४८७ ॥

जपजभ । जप व्यक्तायां वाचि जभ गात्रविनामे । दह भस्मीकरणे । दश दशने । भञ्जो आमर्दने । पश गतौ । सौत्रः । जंजप्यते इति । "लुपसद" ( ३ । १ । २४ ) इत्यादिना यङ् । पशेः "नित्यं कौटिल्ये" ( ३।१।२३ ) इति । जभेस्तु "धातोरेकाच" ( ३ । १ । २२ ) इति यङ् द्रष्टव्यः । चञ्चल्यते । चल चलने । मव बन्धने । दय गति-हिंसादानेषु । सर्वत्र नुग्भावेऽभ्यासदीर्घः ।

चरफलोश्चेति । चर गतिभक्षणयोः । ञिफला विशरणे । फलनिष्पत्तौ द्वयोरपि ग्रहणमिष्यते ।

उत्परस्यातः । अभ्यासस्य प्रकृतत्वात् तत एव परो धातुर्गृह्यते इत्याह—प्रकृतेरत इति । चञ्चूर्यते इति । "हलि च" ( ८ । २ । ७७ ) इति दीर्घः । आन्तर्यतो मात्रिकस्य मात्रिके सिद्धे उरदिति तपरत्वम् चञ्चूर्तीत्युपधागुणनिवृत्त्यर्थम् । एतच्च तत्रैव प्रपञ्चयिष्यते ।

---

१. तु इत्यधिकः क० पु० ।

२. जभ इति क० पु० ।

४९१. रीगृदुपधस्य च [ ७ । ४ । ९० ]

धातोर्ऋदुपधस्याभ्यासस्य रीगागमः स्याद् यङि यङ्लुकि ।

४९२. क्षुभ्नादिषु च [ ८ । ४ । ३९ ]

क्षुभ्नादावाकृतिगणे णत्वं न स्यात् । नरीनृत्यते । जरीगृह्यते । "कृपो रो लः" ( ) इत्युभयत्र लत्वम् । चलीक्लृप्यते। "रीगृत्वत" इति "संयोगार्थं वचनम्" वरीवृश्च्यते । परीपृच्छ्यते ।

४९३. स्वपिस्यमिव्येञां यङि [ ६ । १ । १९ ]

एषां यङि संप्रसारणं स्यात् । सोषुप्यते । सेसिम्यते । वेवीयते ।

४९४. न वशः [ ६ । १ । २० ]

वष्टेर्यङि संप्रसारणं न स्यात् । वावश्यते ।

---

क्षुभ्नादिषु च । आकृतिगण इति । अविहितलक्षणश्च णत्व[1]निषेधो क्षुभ्नादौ[2] द्रष्टव्यः । जरीगृह्यते इति । ग्रह उपादाने । यङि "ग्रहिज्या" ( ६।१।१६ ) इति संप्रसारणे ऋदुपधत्वाद् रीगागमः । "कृपो रो लः" ( ८।२।१८ ) इत्युभयत्र लत्वमिति रीगादिरभ्यासावयवोऽपि वलपिग्रहणेन गृह्यते । अवयवावयवोऽपि समुदायं प्रत्यवयवत्वेन गृह्यते लोके यथा देवदत्तस्याङ्गुलिरिति । प्रतिलक्ष्यं लक्षणं प्रवर्तते इत्याश्रीयते इति भावः । तथा ह्युच्यते—"अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।" वरीवृश्च्यते इति । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । "ग्रहिज्या" ( ६।१।१६ ) इति संप्रसारणम् ।

स्वपिस्यमिव्येञामिति । ञिष्वप् शये । स्यम् शब्दे । व्येञ् संवरणे । सोषुप्यते इति । संप्रसारणे पूर्वरूपे च द्वित्वम् । अभ्यासस्य गुणः । "इण्कोः" ( ८।३।५७ ) इति षत्वम् । सेसिम्यते । अषोपदेशत्वान्न सः । वेवीयते इति । "हलः" ( ६।४।२ ) इति वा "अकृत्सार्वधातुकयोः" ( ७।४।२५ ) इति वा दीर्घः ।

न वशः । वश कान्तौ । "ग्रहिज्या" ( ६ । १ । १६ ) इति प्राप्तं संप्रसारणं निषिध्यते ।

---

१. अविहितलक्षणश्च निषेध इति क० पु० ।

२. क्षुभ्नादाविति क० पु० ।

४९५. चायः की [ ६ । १ । २१ ]

चायतेः की स्याद् यङि । चेकीयते ।

४९६. ईघ्राध्मोः [ ७ । ४ । ३१ ]

एतयोरी अन्तादेशः स्यात् यङि । जेघ्रीयते । देध्मीयते ।

४९७. अयङ् यि क्ङिति [ ७ । ४ । २२ ]

शीङोऽयङादेशः स्याद् यादौ क्ङिति । ङित्वादन्त्यस्य । शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्यते ।

इति यङन्तप्रक्रिया

---

चायः की । चायृ पूजानिशामनयोः । दीर्घोच्चारणं यङ्लुगर्थम् । अत एव 'न लुमता" ( १।१।६३ ) इति प्रत्ययलक्षणप्रतिषेधोऽपि तत्र न प्रवर्तते । चेकीयते । "कुहोश्चुः" ( ७।४।६२ ) ।

ईघ्राध्मोः । घ्रा गन्धोपादाने । ध्मा अग्निशब्दसंयोगयोः । दीर्घोच्चारणं प्रक्रियालाघवार्थम् । जेघ्रीयते इति । ईत्वे कृते द्वित्वे गुणः ।

अयङ् यि क्ङिति । शाशय्यते इति । शीङ् स्वप्ने । परत्वादन्तरङ्गत्वाच्चायङादेशे कृते द्वित्वम् । "दीर्घोऽकितः" ( ७।४।८३ ) । डोढौक्यते इति । ढौकृ गतौ । "ह्रस्वः" ( ७।४।५९ ) इत्यभ्यासौकारस्य उकारः । "गुणो यङ्लुकोः" ( ७।४।८२ ) इति तस्यौकारः ॥

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शैवशास्त्रो-
त्तसः श्रीनरसिंहसूनुरलघुः प्रत्यग्रवाचस्पतिः ॥
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रिया-शाकुलौ
श्री कृष्णस्य कृतौ समासिमगमत् व्याख्या यङन्ताश्रया ॥ १ ॥

यङन्त–२०० ।

# अथ यङ्लुगन्तप्रक्रिया

४६८. यङोऽचि च [ २ । ४ । ७४ ]

यङोऽचि प्रत्यये लुक् स्यात्। चकारादन्यत्रापि बहुलं लुक् स्यात्। अनङ्गकार्यत्वात् "न लुमता" ( १।१।६३ ) द्वित्वानिषेधः । यङ्लुकि सत्यन्तरङ्गात् द्वित्वेऽभ्यासकार्ये च कृते धातुत्वात् तिबादिः। ततस्तिङाश्रितं कार्यं ज्ञेयम्। "चर्करीतं च" (वा) चर्करीतमिति यङ्लुगन्तं ततः परस्मैपदि अदादिवद् ज्ञेयम्। शपो लुक्।

---

यङोऽचि च। यङ् साहचर्यादजपि प्रत्ययो गृह्यते न प्रत्याहारः। अत एव "इट् ईटि" ( ८।२।२८ ) इत्यत्रेटा साहचर्यादड्व्यागम एव गृह्यते न धातुरित्याशयेनाह—अचि प्रत्यय इति। परसप्तमी चेयं तेनात्र सनिमित्तो लोपः इति लोलुवादौ "न धातुलोप" ( १।१।४ ) इति गुणादिनिषेधसिद्धिः। अचि लुग्विधानं च ज्ञापकं सर्वे धातवः पचाद्यजन्ता इति। चकारो बहुलग्रहणानुकर्षणार्थं इत्याह—चकारादिति। ये तु छन्दसीत्यनुकर्षन्ति तेषां भाषायां यङ्लुक् न[१] सिद्ध्येदिति भावः। यथा चैतत्तथोत्तरत्र वक्ष्यते। अन्यत्रापि विषयसप्तमी न परसप्तमी। बहुलग्रहणादेव। तेनानुत्पन्न एव प्रत्यये लुक्। ततश्च मोमोदिता। नोनावेत्यादौ "न धातुलोप" इति गुणवृद्धी न निषिध्येते। आर्धधातुकस्य धातुलोपं प्रत्ययनिमित्तत्वादिति भावः।

ननु यङो लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् "सन्यङोः" (६।१।९) इति द्वित्वं न प्राप्नोतीत्याशङ्क्याह—अनङ्गकार्यत्वादिति। सन्यङोरिति षष्ठी, व्याख्यानात्। सन्नन्तस्य यङन्तस्य च द्वित्वं विधीयते। ननु तयोः परतः पूर्वस्येत्यनङ्गकार्यत्वादित्युक्तम्। नत्वङ्गाधिकारेऽविहितत्वादिति प्राचोक्तं विश्वसनीयम्। न लुमताङ्गस्येति नाङ्गाधिकारः प्रतिदिश्यते इत्याकरे स्थितत्वात्। न चैवमपि

> श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च।
> यत्रैकाच् ग्रहणं चैव पञ्चैतानि न यङ्लुकि॥

इति स्मृतेरेकाच इति विधीयमानं द्वित्वं न स्यादिति वाच्यम्। "गुणो[२] यङ्लुकोः" (७।४।८२) इति ज्ञापनात् द्वित्वस्यानिषेधात्। अत एवाधुनिका यत्रैकाच् ग्रहणं किंचिदिति पठित्वा किंचिदेव कार्यं निषिध्यते न सर्वमिति द्वित्वानिषेधः इति व्याचक्षते।

---

१. नेति पाठो नास्ति क० पु०।

२. गुणो यङ्लुकोः इति वाक्यं तत्रैकस्याधिकः पाठः क० पु०।

प्रक्रियाक्रमं दर्शयति—यङ्लुकि सतीति । अन्तरङ्गत्वादिति । अनुत्पन्नेष्वेव लडादिषु प्रथमोपनतयङपेक्षत्वात् द्वित्वं लडादिभ्योऽन्तरङ्गमित्यर्थः । अत एव युगपत् प्राप्त्यभावात् परत्वादिति नोक्तम् । कृताकृतप्रसङ्गित्वेन नित्यत्व तूभयोरविशिष्टम् । अभ्यासकार्यं चेति । अन्तरङ्गत्वादित्यपेक्षते । धातुत्वादिति । प्रत्ययलक्षणेनैतेन सर्वविधिभ्यो लुग्विधेः बलीयस्त्वादनपेक्षत्वादल्पापेक्षत्वादुत्पन्नमात्रस्यैवादौ यङो[1] लुक् । ततः प्रत्ययलक्षणेन यङन्तत्वावशिष्टस्य प्रकृतिमात्रस्य द्वित्वादीत्युक्तम् । ततश्चाटेर्यङ्लुकि अजादित्वेऽपि द्वितीयस्यैकाचोऽभावादटेरेव द्वित्वं हलादिःशेषदीर्घादिषु कृतेषु आट्टि । आट्टः । आटत्तीत्यादि सिद्धम् । एवं चाटाटीतीत्यादि कातन्त्रोदाहृतमनादेयम् ।

चर्करीतं चेति । गणसूत्रम् । चर्करीतमिति यङ्लुगन्तमिति । अनेन पूर्वाचार्यसंज्ञेयमिति दर्शयति । तत्परस्मैपदीति । प्रत्ययलक्षणेनात्मनेपदे प्राप्ते परस्मैपदमुच्यते । यत्त्वत्र माधवेनोक्तम्—यत्र विधौ प्रत्ययस्यासाधारणं रूपमाश्रीयते, तत्र प्रत्ययलक्षणम् । तेन ङिन्मात्रविधौ आत्मनेपदे नास्ति प्रत्ययलक्षणमित्याह—आत्मनेपदाभाव इति । तदाकरविरुद्धम् । यद् 'दाधर्ति" (७।४।६५) सूत्रे भाष्यम्—"तेनिक्त इति किं निपात्यते? यङ्लुगन्तस्यात्मनेपदम् । नैतदस्ति प्रयोजनम् सिध्यत्यत्रात्मनेपदम् । "अनुदात्तङित आत्मनेपदम्" (१।३।१२) इति । नियमार्थं तर्हि भविष्यति । यत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति । क्व मा भूत् बेभिदीति चेच्छिदीति" ।

तथा च वामनोऽपि तेनिक्त इति तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । यङो ङित्वात् प्रत्ययलक्षणेन यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवति इत्येतदेव ज्ञापकमिति । उपपादितं च कैयटहरदत्ताभ्याम् । यद्यपि "अनुदात्तङित" (१।३।१२) इति ङित्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तम् । तथापि लोलूयते इत्यादौ यद् यङन्तादात्मनेपदं तत्प्रत्ययस्य ङित्वादिति प्रत्ययलक्षण भवत्येवेति । न चैवं गोहितमित्यत्रादयोऽपि स्युरिति शङ्क्यम् । वर्णमात्रवृत्तिरूपाश्रयस्यैव द्वितीयप्रत्ययग्रहणेन व्यावर्तितत्वात् । यदुच्यते—"वर्णाश्रये नास्ति प्रत्ययलक्षणम्" (प० ) इति । ङित्व समुदायवृत्तिर्न वर्णमात्रवृत्तिरिति न व्यावर्त्यते इति ।

एवं चादादिषु[2] "चर्करीतं परस्मैपदीति परस्मैपदग्रहणं भाष्यकारोक्तनियमसिद्धपरस्मैपदानुवादे इति स्थितम्। कर्त्रर्थे एवेदमात्मनेपदं नियम्यते। तेन "भावकर्मणोः" (१।३।१३) इति यङ्लुगन्तादात्मनेपदं भवत्येव । वोभूयते लक्ष्म्या । अनुबोभूयते सुखं चैत्रेणेति । आदादिवज्ज्ञेयमिति । अनेनादादित्वमेव विधीयते । परस्मैपदीति तु न्यायप्राप्तानुवाद इत्युक्तम् । उभयविधाने चशब्द प्रयुञ्जीत । अदादित्वस्य फलमाह—शपो लुगिति ।

---

१. चादिषु इति क० पु० ।
२. कर्त्रर्थवच्चेति क० पु० ।

४६६. यङो वा [ ७ । ३ । ९४ ]

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईडागमो वा स्यात्। "भूसुवोः" ( ७।३।८८ ) इति गुणाप्राप्तौ "बोभूतु तेतिक्ते" ( ७।४।६५) इति छन्दसि निपातात् भाषायां यङ्लुकि गुणः। बोभवीति। बोभोति। बोभूतः। बोभुवति। बोभूयात्। बोभूहि। अबोभोत्। अबोभूताम्। अबोभवुः। अबोभूत्। अबोभूताम्। अबोभवुः। बोभवाञ्चकार। केचिदाम् नेष्यते। धातुनिर्देशे यङ्लुगन्तस्यापि ग्रहणात् "भुवो वुग्" ( ६।४।८८ ) इति वुक्। बोभूव। बोभूवतुः। वनीवञ्चीति। वनीवक्ति। वनीवक्तः। जङ्गमीति। जङ्गन्ति। जङ्गतः। उपधालोपः। जङ्ग्मति। जङ्गमति।

---

यङो वा। अत्र यङन्तात् हलादिपित्[1] सार्वधातुकं न सम्भवतीति यङ् इति यङ्लुगन्तं गृह्यते इत्याह– यङ्लुगन्तादिति[2]। अत्र केचित् व्यवस्थितविभाषाविज्ञानात् लग्यादीनां नित्यं तृतिवृत्त्योर्नान्येषां वेत्याहुः। पठन्ति च—"लगेवंदेनेदेरीतेर्लं भू ईण्नित्यमिष्यते। चर्करीतव्यवस्थावद्वाशब्दान्न वृत्तेर्नृतः" इति। न चैतत् त्रिमुनिमतम्। तथैव तथा चाववृतिः[3] इत्युदाहरिष्यति। बोभूवीत्यादि। यदि "भूसुवो." (७।३।८८) इति निषेधो यङ्लुकि प्रवर्तेत छन्दसि गुणाभावं न निपातयेदनेनैव सिद्धत्वात्। अतो नियमार्थमेतद् भविष्यति छन्दस्येव गुणनिषेधो न भाषायामपीति भावः। एतदेव निपातनं ज्ञापकम् "प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्" इति।

बोभवीतीति। भू अस्माद् यङ्लुकि द्वित्वम्। जश्त्वम्। ह्रस्वः। गुणः। तिप्। शप्। तस्य लुक्। ईट्। गुणः। अवादेशः। इत्येवमुत्तरत्र ज्ञेयम्। बोभोति। बोभूतः इति। "क्ङिति च" (१।१।५) इति न गुणः। बोभुवतीति। "उभे अभ्यस्तम्" (६।१।५) इत्यभ्यस्तत्वात् 'अदभ्यस्तात्' (७।१।४) इत्यत्। बोभवीषि। बोभोषि। बोभोमि। बोभूथः। बोभूथ। बोभवीमि। बोभोमि। बोभूवः। बोभूमः। बोभूयादिति। लिङ्। यासुटो ङित्त्वेन पित्त्वस्य निवर्तितत्वादीडभावः। बोभूयाताम्। बोभूयुः। बोभूयाः। बोभूयातम्। बोभूयाम्। बोभूयाव। बोभूयाम। बोभवीतु। बोभोतु बोभूताद्वा। ङिच्च पिन्न भवतीतीडभावः। बोभुवतु। बोभूहि। अपित्वान्नेट गुणौ। बोभूताद्वा। बोभूतम्। बोभूत। बोभवानि। बोभवाव–बोभवाम। आटः पित्वाद् गुणः। पित्वेऽ-

---

१. हलादिपित् इति क० पु०।

२. लुगन्तादिति क० पु०।

३. तथैवात्रं चवृं रूपमुदाहरिष्यतीति क० पु०।

ण्यहलादित्वान्नेट्। अबोभवीत् अबोभोत्। अबोभूताम्। अबोभवुः। अत्र "सिज-भ्यस्त" (३।४।१०९) इति जुस्। "जुसि च" (७।३।८३) इति गुणः। अबोभवीः। अबोभोः। अबोभूतम्। अबोभूत। अबोभुवम्[1]। अबोभूव। अबोभूम। लुङि अबोभू-वीत्। अत्र लुङ् 'गातिस्था' (२।४।७७) इति सिचो लुक्। "भुवोवुक्" नित्यत्वाद् गुणवृद्धी बाधते। तेनेट्पक्षे अबोभूवीदित्यादि भवतीति। ईडभावे वुकोऽसम्भवाद् गुणः। अबोभोदिति वार्तिकमते। सूत्रभाष्यमते तु 'ओ सुपि' (६।४।८३) इत्यतो ओरित्यनुवृत्तेः वुको नित्यत्वात् गुणवृद्धिविषये स न प्रवर्तते इति परत्वात्ताभ्यां बाधित[2]त्वादित्यबोभवीदिति। ईडभावे पूर्ववत्। अत्र प्राचोक्तम्–लुङि 'भूसुवोस्तिङि' (७।३।८८) इति न गुणः। ज्ञापकं चतुर्ष्वेव लकारेषु इति न लुङि नियमादपि गुणः। तेनानित्योऽपि वुग् भवतीति। अबोभवीत्। ईडभावे अबोभूत् इति चातूरूप्यम्। एतत्तु निर्मूलत्वादप्रमाणम्। अबोभूदिति तु प्रक्रियो दाहरणं परमताभिप्रायम्[3]। अबोभूताम्। अबोभवुरिति। अत्र सिच्, प्रत्ययलक्षणेन 'सिजभ्यस्त'[4] (३।४।१०९) इति जुस्भावः। "आतः" (३।४।११०) इति नियमान्न भवति। अभ्यस्ताश्रयस्तु भवति। विदेर्हि लङ्येवानन्तरो झिः संभवतीति तत्रैव जुस् भवति तत्साहचर्यादभ्य-स्तादपि लङ्येवेति न लुङि प्रसज्यते। सिच्साहचर्यात् लुङ्येव किं नस्यादिति चेत्।

नैतत् 'विप्रतिषेधे परम्' (१।४।२) इति शब्दपरविप्रतिषेधाश्रयणेन परसाह-चर्यस्य बलीयस्त्वादिति माधवेनोक्तम् तद् "अचः परस्मिन्" (१।१।५७) इति पञ्चसमास-प्रयोजनभाष्यविरुद्धम्। तत्र हि उक्तमपीपचन्निति। अभ्यस्ताज् झेर्जुस् इति जुस् प्राप्नोति। स्थानिवत्त्वान्न भवतीति। वुक्पक्षे अबोभूवुरित्यपि। अबोभूम। अत्र च "गातिस्था" (२।४।७७) इति धातुग्रहणोक्त्वात् सिजलुगभावपक्षे "सिचि वृद्धि." (७।२।१) इति वृद्धौ अबोभावीत्। अबोभाविष्टामिति चतुर्थमपि रूपमूह्यम्। बोभवाञ्च-कारेति प्रत्ययलक्षणेन प्रत्ययान्तादाम्। यङ्लुकः आर्धधातुकनिमित्तत्वाभावाद् "न धातुलोपः" (१।१।४) इति न गुणनिषेधः। बोभवाञ्चकतुरिति कैश्चिदिति। येषां छान्दसो यङ् लुक् तेषामत्र द्विः प्रतिषेध इति भावः।

धातुनिर्देश इति। नैतद्वचनम् किं तु न्यायसिद्धोऽयमर्थः। तथाहि यदा तावद् द्विः प्रयोगो द्विर्वचनम् इति पक्षस्तदा स एव धातुर्द्विरावर्तते इत्याकृतिमात्रं[5] परं भिन्नं धातुस्तु स एवेति। यदा तु स्थाने द्विर्वचनमिति पक्षस्तदापि स्थानिवद्भा-

---

१. अबोभूवमिति नास्ति क० पु०।

२. बाधित्वादिति क० पु०।

३. परमतेऽभिप्रायमिति क० पु०।

४. सिजभ्यस्त इति नास्ति क० पु०।

५. इति नात्र परं भिन्नमिति क० पु०।

वाद्धातुव्यपदेश इति ज्ञापकाच्च । यदयम् "ऊदुपधाया गोहः" ( ६।४।८६ ) इत्यत्र "ओः सुपि" (६।४।८३) इत्यत (ओरित्यनुवर्त्य¹—ऊदोः गोहः इति लाघवार्थं वक्तव्ये उपधाग्रहणं करोति । तद्धि यङ्लुकि जोगूहामास—जोगूहेत्यादावभ्यासोकारस्य मा भूदित्येवमर्थम् क्रियते । एतच्च प्रकृतिग्रहणे ) यङ्लुगन्तस्य ग्रहणं विना नोपपद्येतेति । उत्तरार्थमुपधाग्रहणं चेदुत्तरत्रैवाकरिष्यत् । यदत्र माधवेन बोभूतु इति भाषायां गुणप्रवृत्तिज्ञापनार्थम् निपातनमेव ज्ञापकमस्यार्थस्येत्युक्तम्, तच्चिन्त्यम्² । असति प्रकृतिग्रहणेन यङ्लुगन्तग्रहणे छन्दसि बोभूतु इत्यत्र' भूसुवोस्तिङि" (७।३।८८) इति निषेधो न प्राप्नोतीति तन्निषेधार्थमेव निपातनं स्यादिति ।

बोभूवेति । आमभावे नित्यत्वाद् वुक् गुणवृद्धिर्बाधते इति वार्तिककारमतानुसारे णोक्तम् । बोभूवतुरिति । कित्वाद् गुणनिषेधे वुक् । धातुग्रहणोत्र³मिति । यङ्लुको रूपान्यत्वेन धात्वन्तत्वादित्येके । द्विः प्रयोगे द्विर्वचने स्थाने द्विर्वचने वा भवितव्यमित्याह परे इति भावः । (वस्तुतस्तु रूपान्यत्वेन धात्वन्तरत्वे लिटद्यपि न स्यात् । अतः परमते वाचनिकी परिभाषेयमिति बोध्यम् ) बोभावेति । वुगभावे वृद्धिः । "इन्धिभवतिभ्यां च" ( १।२।६ ) इत्यत्र भवतेः । श्तिपा निर्देशाद् यङ्लुकि न कित्वम् तेनेह वृद्धिर्भवत्येव । ।

बोभुवतुरिति । वुगभावे उवङ् बोभूवुः । बोभुवुः । बोभूविथ । वुक्पक्षे गुरुपधत्वान्न गुणः । वुगभावे बोभविथ । बोभूवथुः । बोभूव । णलि बोभूव । बोभाव । अणित्वे बोभव । बोभूविव । बोभुविव । बोभूविम । बोभवितेत्यादि । बोभूयात् । बोभविष्यति । अबोभविष्यत् । वनीवञ्चीति । वञ्चु गतौ । कुटिलं वञ्चतीत्यर्थे "नित्यं कौटिल्ये" ( ३।१।२३ ) इति यङ् पूर्ववद् द्वित्वम् । हलादिः शेषः वनीवञ्चित्यभ्यासस्य नीगागमः । ईडागमः । तिपोऽङित्वान्न न लोपः । यङो लुका लुप्तत्वाद् न तदाश्रयोऽपि । अनुस्वारपरसवर्णौ ।

ननु च नीकः पूर्वमकित्वादभ्यासस्य "दीर्घोऽकितः" ( ७।४।८३ ) इति दीर्घः कस्मान्न भवति । नीका बाधितत्वादिति चेत् । न । अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते इति नैष दोषः । नैष विद्यमानकितो निषेधः अपि तु भाविकतोऽपि । तेन निषेधो भविष्यति । अथ नीकोऽभ्यासावयवत्वात् "ह्रस्वः" ( ७।४।५९ इति ह्रस्वः स्यात् । तन्न । दीर्घोच्चारणसामर्थ्यात् । वनीवङ्क्तीति । ईडभावे कुत्वम् । वनीवक्त इति । "अनिदिताम्" ( ६।४।२४) नलोपः वनीवचति वनीवञ्चीषि । वनीवङ्क्षि । वनीवक्थः । वनीवञ्चीमि । वनीवञ्च्मिम । वनीवच्वः । वनीवचमः । वनीवच्यादित्यादि वनीवञ्चीतु । वनीवङ्क्तु । वनीवक्तात् वा । वनीवङ्काम् वनीवचतु । वनीवग्धि ।

१. ओरित्यवर्त्य इत्यारभ्य—प्रकृतिग्रहण इत्यन्तो ( )रेखाङ्कितो नास्ति क० पु० ।
२. तच्चिन्त्यम् इति नास्ति क० पु० ।
३. वस्तुतस्त्वित्यारभ्य—बोध्यमित्यन्तो नास्ति क० पु० ।

## ५००. म्वोश्च [ ८।२।६५ ]

मान्तस्य धातोर्नः स्यात् मवयोः परतः। जङ्गन्मि। जङ्गन्वः। जङ्घनीति। जङ्घन्ति। जङ्घतः। जङ्घ्नति। जङ्घनति। "नाभ्यस्तस्याचि"

---

हेरपित्वाल्लोपः। वनीवचाद् वा। वनीवक्तम्। वनीवक्त। वनीवञ्चानि। वनीवञ्चाव। वनीवञ्चाम। अवनीवञ्चीत्। अवनीवङ्। अत्रेडभावेऽनुस्वारपरसवर्णयोरसिद्धत्वात् हल्ङ्यादिसंयोगान्तलोपौ। अवनीवञ्चीत्। अवनीवञ्चिष्टाम्। अवनीवञ्चिषुः। अवनीवञ्चीः। अवनीवञ्चिष्टम्। अवनीवञ्चिष्ट। अवनीवञ्चिषम्। अवनीवञ्चिष्व। अवनीवञ्चिष्म। अवनीवञ्चाञ्चकार। वनीवञ्चिता। वनीवच्यात्। वनीवञ्चिष्यति। अवनीवञ्चिष्यत्।

धातुग्रहणोक्तत्वेऽपि नीग् न विकल्पते। तस्य यङ्लुकि साक्षाद्विधानात्। जङ्गमीति[1]। गम्लृ गतौ अस्माद् यङ्लुक्। द्वित्वम्। अभ्यासस्य "नुगतोऽनुनासिकान्तस्य" (७।४।८५) इति नुक्। "यङो वा" (७।३।९४) इतीट्। जङ्गतः। "अनुदात्तोपदेश" (६।४।३७) इत्यनुनासिकलोपः। उपधालोप इति। "गमहन" (६।४।९८) इति सूत्रेण। जङ्ग्मति। जङ्गमति। धातुग्रहणोक्तं यङ्लुकि वेति केचित्। तिलोपविकल्पः। जङ्गमीपि। जंगसि। वा ईट्। जङ्गथः जङ्गथ। जङ्गमीमि।

म्वोश्च। मान्तस्य धातोरिति। "मो नो धातोः" (८।२।६४) इत्यतो म इत्यनुवृत्तेरेतल्लभ्यते। जंगन्मि। जङ्गन्वः। जंगन्मः। जंगम्यादित्यादि सुगमम्। जङ्गमीतु जङ्गन्तु। जगताद् वा। जंगताम्। जंग्मतु। जङ्गमतु। जंगहि। अत्रानुनासिकलोपस्य "असिद्धवदत्रा" (६।४।२२) इत्यसिद्धत्वात् "अतो हेः" (६।४।१०५) इति न हेर्लुक्। जङ्गताद् वा। जङ्गतम्। जङ्गत। जङ्गमानि। जङ्गमाव। जङ्गमाम। अजङ्गमीत्। अजङ्गमिष्टमित्यादि। जङ्गमाञ्चकार। जङ्गमिता। जङ्गम्यात्। जङ्गमिष्यति। अजङ्गमिष्यत्। जङ्घनीति। जङ्घन्ति।

हन हिंसागत्योः। यङ्लुक्। नुक्। "अभ्यासाच्च" (७।३।५५) इति कुत्वम्। अनुस्वारपरसवर्णौ। नन्वत्र "हो हन्तेर्ञ्णिन्नेषु" (७।३।५४) इत्यतो हेरित्यनुवर्त्य विधीयमानं कुत्वम् श्तिपा निर्देशान्न स्यादिति चेत्, न। धातुनिर्देशार्थोऽयं श्तिप् न यङ्लुक्‌निवृत्त्यर्थः। तन्निवृत्त्यर्थस्यैव तदर्थत्वात्। यदुक्तं न्यासकृता—हन्तेरिति श्तिपा निर्देशो धातुनिर्देशार्थो न यङ्लुक् निवृत्त्यर्थः। तत्र "ह्यभ्यासाच्च" (७।३।५३) इति भवितव्यमेव कुत्वेनेति[2]। अत्र च व्याख्यानमेव शरणम्। हन्तेरिति धातुग्रहणोक्तत्वात् कुत्वविकल्पे जंहनीति—जंहन्ति इत्याद्यूह्यम्। जंङ्घतः[3]। जंघ्नति। जङ्घनति।

---

१. निपातनर्निर्देश्ये इति क० पु०।

२. तत्र ह्यभ्यासाच्चेति भवितव्यमेव कुत्वेनेति द्विरावृत्तोऽयं पाठः ग० पु०।

( ७।३।८७ ) इति न गुणः । चञ्चुरीति । "उदुपरस्यातः" ( ७।४।८८ ) इति तपरत्वान्न गुणः । दीर्घत्वं स्यादेव । चञ्चूर्तः । धातुग्रहणोक्तं यङ्लुकि

---

जङ्घनीषि । जङ्घंसि । जङ्घथ । जंघथ । जंघनीमि । जंघन्मि । जंघन्वः । जंघन्मः । लिङि तु जंघन्यात् इत्यादि । जंघनीतु । जंघन्तु । जंघताद् वा । जंघताम् । जंघ्नतु । जंघनतु । जंघहि । हन्तेरिति श्तिपा निर्देशाज्जादेशो न । जंघताद् वा । जघतम् । जंघत । जंघनानि । जंघनाव । जंघनाम । अजङ्घनीत् । अजङ्घन् । अजङ्घताम् । अजंघ्नु । अजङ्घनुः । अजङ्घनीः । अजघन् । अजङ्घतम् । अजङ्घत । अजङ्घनम् । अजघन्व । अजङ्घन्म । लुङि "अतो हलादेः" ( ७।२।७ ) इति वा वृद्धिः । अजङ्घानीत् । अजङ्घनीत् । अजङ्घनिष्टामित्यादि ।

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात् वधादेशे अवधीत् । अवधिष्टामित्यादीति माधवादयः । न चास्य द्वित्वप्रसङ्गः । स्थानिवत्त्वेनानभ्यासस्येति निषेधात् । धातुग्रहणोक्तत्वात् अजङ्घनीदित्याद्यपि ज्ञेयम् । जङ्घनाञ्चकार । जङ्घनिता । वध्याद् धातुग्रहणोक्तत्वात् जङ्घन्यात् । जङ्घनिष्यति । अजङ्घनिष्यत् । अत्र जङ्घतः । जङ्घतात् इत्यत्र 'के पुनरनुदात्तोपदेशाः' इति पृष्टे गमिरमीति गणस्य निर्दिष्टत्वात् हन्तेर्गमेश्च नलोपेन भाव्यम् । ततश्च "अनुनासिकस्य क्विझलोः क्ङिति" ( ६।४।१५ ) इति दीर्घे जङ्घातः । जङ्घातम् । जङ्घान्त इत्येव भवितव्यमित्यातिष्ठन्ते । तदसमञ्जसम् । नहि गम्यादिगंणो मुनित्रयेण पठितः । पाणिनीयास्तु प्रयोगजिज्ञासुच्छात्रहितैषवोऽनुदात्तोपदेशान् विवेचयन्ति स्म । वृत्करणाभावाच्च ।

न्यासे तु क्वचिद् जङ्घनीहि इति प्रत्युदाहरणं हेरपित्त्वेनेडभावाच्छान्दसमित्याहुरिति सर्वं निरवद्यम् । आङ्पूर्वाद् हन्तेर्यङ्लुगन्ताद् "आङो यमहनः" ( १।३।२८ ) इत्यात्मनेपदे आजङ्घते इत्याद्यपि भवति ।

चञ्चुरीति इति । चर गतिभक्षणयोः इत्यस्मात् यङ्लुकि "चरफलोश्च" ( ७।४।८७ ) इति नुक् । उत्परस्यातः ( ७।४।८८ ) इत्यभ्यासादुत्तरस्योत्त्वम् । चञ्चूर्तीति । ईडभावे "हलि च" ( ८।२।७७ ) इति दीर्घः । ननु चात्र दीर्घस्यासिद्धत्वाल्लघूपधगुणः प्राप्नोतीति तत्राह—उत्परस्यात इति ।

तपरत्वादिति । अयमर्थः उत्परस्येत्यत्र ह्रस्वस्य स्थानेऽन्तरतमे मात्रिके सिद्धेतपरकरणं विकारनिवृत्त्यर्थमिति गुणाभावः इति । यद्येवं दीर्घोऽपि न प्राप्नोति तस्य विकारत्वात् अत्राह—दीर्घत्वं तु स्यादेवेति । अयं भावः तपरत्वेन नियमे कर्तव्ये दीर्घत्वं "पूर्वत्रासिद्धम्" ( ८।२।१ ) इत्यसिद्धम् । तेन नियाम्यस्याभावान्न दीर्घो बाध्यते । गुणस्तु नासिद्ध इति स निवर्त्यते इति । चञ्चूर्तः । चञ्चुरति । चञ्चुरीषि । चञ्चूर्षि । चञ्चूर्थः । चञ्चूर्थ । चञ्चुरीमि । चञ्चूर्मि । चञ्चूर्वः । चञ्चूर्मः । चञ्चूर्यादित्यादि । चञ्चुरीतु । चञ्चूर्तु । चञ्चुरतु । चञ्चूर्हि । चञ्चुराणि । चञ्चुराव । अचञ्चुरीत् । अचञ्चूः ।

वेति केचित् । चङ्खन्ति । चङ्खनीति । चङ्खातः । चङ्खन्तः । चङ्खन्ति । चङ्खनीति । जञ्जनीति । जञ्जन्ति । जञ्जातः । जञ्जन्तः ।

---

अचञ्चूर्तामित्यादि । धातुग्रहोक्तत्वात् नुगभावे चाचुरीति । उत्वाभावे चञ्चरीति । उभयोरभावे चाचरीत्यादि पित्सु इंडनीटोरष्टौ । अन्यत्र चत्वारीत्याहुः । तदसत् । नुगुत्वयोः साक्षात् यङ्लुकि विहितत्वेन विकल्पायोगात् ।

चङ्खनीतीति । ईट् । अभ्यासस्य नुगागमः । चखन्तीति । ईडभावेऽनुस्वारपरसवर्णौ । चङ्खातः इति । "जनसनखनाम्" (६।४।४२) इत्यात्त्वे । धातुग्रहणोक्तयङ्लुकि वेत्यात्त्वस्याभावे चखन्त इति । अनुदात्तोपदेशत्वाभावान्न नलोपः ।

अत्र "अनुनासिकस्य" (६।४।१५) इति दीर्घो न भवति "जनसनखनाम्" (६।४।४२) इत्यात्वेन तस्य बाधितत्वात् । यद्वा "अपवादे प्रतिषिद्धे उत्सर्गो न प्रवर्तते" "सुजाते अश्वसूनृते" इतिवत् । एवं चङ्खन्त इत्यात्वाभावेऽनुनासिकलोपोऽपि न भवति । एतच्च भाष्यकैय्यटयोः स्पष्टम् । तथा च प्रतितन्त्रेऽपि चङ्खन्त इत्युदाहृतम् । ये तु क्विप् साहचर्यात् झनादिकृत्येव दीर्घमाहुः तेषामप्येतत् संमतम् । अत एवाचार्य्यैः कृदन्त एव दीर्घ उदाहृतः । प्रपञ्चितं चैतत् शब्दालङ्कारे । चङ्खनत. । चङ्खनति । "गमहन" (६।४।९८) इति केचिन्मते नोपधालोपः । चङ्खनीपि । चङ्खसि । चङ्खावः । चङ्खथः । चङ्खाथ । चङ्खथ । चङ्खनीमि । चंखन्मि । चंखन्वः । चङ्खन्मः । चखन्यात् । चखायात् । "ये विभाषा" (६।४।४३) इत्यात्वं वा । चङ्खनीतु । चखन्तु । चङ्खताद् वा । चखाताद्वा । चखंताम् । चंखताम् । चखनतु । चखाहि । चखहि । चखनानीत्यादि । अचंखनीत् । अचङ्खन् । अचङ्खाताम् । अचङ्खनोः । अचङ्खनः । अचखनतु । अचखनोः । चंखन्यात् । चखायात् । चखनिष्यति । अचखनिष्यत् । जजनीति । जन जनने । ईटि । जंजनीति । जञ्जात इति । पूर्ववदात्वम् । जञ्जन्त इति । केचिन्मते विकल्पः । जज्ञति । उपधालोपः । तदभावे जञ्जनतीति । जजनीपि । वेडभावे "इंड्जनोर्ध्वे च" (७।२।७८) इतीट् । जंजनीपि । धातुग्रहणोक्तत्वात् विकल्पः । जंजसि ।

वस्तुतस्तु ध्वेसाहचर्यात् परस्मैपदेऽयमिट् न भवतीति तत्र स्थितम् । जंजाथः । जंजथः । जञ्जाथ । जजन्थ । जजनीमि । जजन्मि । जजन्वः । जंजन्मः । जजन्यात् । जंजायादित्यादि । जंजनीतु । जंजन्तु । जंजताद्वा । जञ्जन्ताम् । जज्ञतु । जञ्जनतु । जञ्जङ्धि । जञ्जनानि । जञ्जनाव । जञ्जनाम । अजञ्जनीत् । अजञ्जन् । अजञ्जन्ताम् । अजञ्जाताम् इत्यादि । लुङि । "अतो हलादेः" (७।२।७) इति वा वृद्धिः । अजञ्जानीत् । अजञ्जनीत् । अजञ्जनिष्टामित्यादि । वेविवीति इति । "नाभ्यस्तस्याचि" (७।३।८७) इति गुणनिषेधः । इदमिदानीं विचार्यते । कथमत्र यङ्लुगिति । कुतः पुनरयं प्रश्नः । "च्छ्वोः शूडनुनासिके च" (६।४।१९) इत्यत्र भगवतो भाष्यकारस्योक्तेः । तथाहि तत्रैतद् विचारितं "च्छ्वोः शूडः (६।४।१९) इत्यत्र ङ्कितीत्यनुवर्तते न वा ? इत्युपक्रम्य दोषानुद्भाव्य

जञ्जनति। जञ्जति। यङ्लुकि झलि वे चच्छ्वोः शूठौ वेति केचित्। देधीति। "लोपो व्योर्वलि" (६।१।६६) देदेति। देदिवीति। देद्यूतः।

परिहृत्य चोक्तम्। तत्र त्वेतावान् विशेषः—(अनुवर्तमाने[1] क्ङिद्ग्रहणे छः षत्वं वक्तव्यम् इति। अयमर्थ अननुवर्तमाने क्ङिद्ग्रहणे छ शत्वे शान्तत्वादेव षत्वे सिद्धे "व्रश्चभ्रस्ज" (८।२।३६) इति सूत्रे छग्रहणं कर्तव्यम्) क्ङिदधिकारे त्वक्ङित्वप्राप्तत्वाच्छस्य षत्वार्थं तत्र छग्रहणं कर्तव्यम्। ननु चाननुवृत्तौ द्युभ्याम् द्युभिरित्यत्रापि प्रसज्येत। नैष दोषः। 'दिव उत्" (६।१।१३१) इति तपरकरणं दीर्घनिवृत्त्यर्थम्। मात्रिक एव दिवो भवति नाधिक इति तपरत्वेनैव बाध्यते। एतावानेवेत्येवकारोऽन्ययोगव्यवच्छेदार्थः नान्यो विशेष इति। ननु दिवेर्यङ्लुकि देदेति देदेषि—अक्ङिति ऊठ् मा भूदित्यस्ति विशेषः। केचित्तु एवं तर्ह्यस्मादेव भाष्यवचनाज् ज्ञायते न वकारान्तेभ्यो[2] ऊठभाविभ्यो यङ्लुगस्ति इति। यदि स्यादेतावानेवेति भाष्यं न संगच्छेतेत्याहुः। नैतदिति वयम्। भाष्यकारस्येदमभिमतम्[3] छान्दसो यङ्लुक्। छन्दसि च दृष्टानुविधानादेवोठ् न भविष्यतीति स्वसिद्धान्तदृष्ट्या एतावानेवेत्युक्तम्। वक्ष्यमाणोपायेन तु शिष्टप्रयोगानुसारात् भाषायामपि यङ्लुगस्तीत्याचार्याणामभिप्राय इति यङ्लुगुदाहृतः। अथवा छान्दसमुदाहरणमिदम्। अत एव हरदत्तेनोक्तम्—ये क्ङितीति नानुवर्तयन्ति तेषां दद्योतीति इति भवति। अन्येषां तु देदेतीति न किंचिदसमञ्जसम्। इंडभावे वलि लोपः। भाष्ये तु वलोपः प्रत्याख्यातः। तत्र छान्दसो वलोपः। देद्यूतः। "च्छ्वोःशूड" (६।४।१९) इत्यूठ्। यङ्लुकि झलीति। अयमर्थः यङ्लुकि सति च्छ्वोः झल्परे वकारे च च्छ्वोः शूठौ वेति केचिदिति। तेन देद्योति। देद्योषि। देद्योतु-इत्याद्यक्ङित्वपि भवति। एतच्च प्रागुक्तमतभेदाश्रयात् सिद्धम्। क्ङिति झलि वकारे च विभाषा वाचनिकयेव सा च प्राप्ताप्राप्तविभाषा क्ङिति झलि वकारे प्राप्ते विधीयमानत्वात्। (क्विप्[4] साहचर्यात् झलादिः कृदेव गृह्यते इति मताश्रयणे तु झल्मात्रे न्यायसिद्धो विकल्पः)। देदिविति। देदेति। देद्योति। देद्यूतः। देदितः। देदिवति। देदिवीषि। देदेषि। देद्योषि। देद्यूथः। देदिथः। देद्यूथ। देदिथ। देद्योमि। अमान्तत्वान्नेड्विकल्पः। देद्यूवः। देदिवः। देद्यूमः। देदीव्यात्। देदीव्यातामित्यादि। देदिवीतु। देदेतु देद्योतु। देदितात् वा। देद्यूताद् वा। देद्यूताम्। देद्यूहि। देदिहि। देद्यूतम्। देदितम्। देद्यूत। देदित। देदिवानि। देदिवाव। देदिवाम। अदेदिवीत्। इंडभावे परत्वाद् हल्ङ्यादिलोपापेक्षयोठि सति अदेद्योत् अदेदेत।

१. अनुवर्तमाने इत्यारभ्य—न कर्तव्यमित्यन्तो नास्ति क० पु०।

२. वकारान्ते इत्येव क० पु०।

३. अभिमतमिति नास्ति क० पु०।

४. क्विप् साहचर्यादित्यारभ्य—विकल्प इत्यन्तो ( )नास्ति क० पु०।

देदितः । देय्यूथः । देदिथः । मिपोऽनुनासिकत्वादूठ् । गुणः । देद्योमि । देय्यूवः । देदिवः । विच्छ । वेवेच्छीति । वेवेष्टि । वेविश्वः । वेविछ्नः ।

न च "लोपो व्योर्वलि" (६।१।६६) इति विधेयस्य प्राङ्निर्देशेन ज्ञापितेन वलि लोपस्य बलीयस्त्वेन हल्ङ्यादिलोपो बाध्यतामिति वाच्यम् । अपृक्तलोपापेक्षयैव बलीयस्त्वज्ञापनात् । अन्यथा द्युभ्यामित्युत्वमपि बाध्येत तस्य द्युयानम् अहर्विमलद्यु— इत्यादिरवकाशः । तथा च वार्तिकम्—"वेरपृक्तलोपाद् वलि लोपः पूर्वविप्रतिषेधेनेति" (वा०) अत एवोऽपि न भवति । न च वेरपृक्तग्रहणं विध्यन्तरस्याप्युपलक्षणम्— अप्रामभापिताभावात् । अन्ये तु प्रकृतिविशेषं प्रत्ययविशेषं चापेक्षमाणात् हल्ङ्यादिलोपाद्[1] वर्णमात्रापेक्षत्वादन्तरङ्गो वलि लोप इति पूर्वं प्रवर्तते । ते'नादेदेदित्युदाहरन्ति । अदेद्योत् । अदेदेत् । अदेय्यूताम् । अदेदिताम् । अदेदिवुः । अदेदिवीः । अदेदेव् । अदेद्यौः । अदेय्यूतम् । अदेदितम् । अदेय्यूत । अदेदित । अदेदिवम् । अदेदिव । अदेय्यूव । अदेय्यूम । अदेदिम । अदेदेवीत् । अदेदेविषाताम् इत्यादि । वेविच्छतीति । विच्छ गतौ । अत्र केचित् "आयादय आर्धधातुके वा" (३।१।३१) इत्यार्धधातुक इति । विषयसप्तम्याश्रयणात् व्यक्ताभिव्यक्तिके आर्धधातुके विकल्प-विधानाद् यङ्लुकि व्यक्ताभिव्यक्ते'भावात् विकल्पाप्राप्तौ—आयप्रत्यये कृते एकाच्त्व-विघाताद् यङ्लुक् न स्यात् नित्यश्चायः श्रूयेतेत्यनिष्टं आपततीति विकल्पसिद्धये नास्माद् यङ्लुगस्तीत्याहुः ।

अत्रोच्यते । विच्छेर्यदि नित्या आयादयःस्युः ततस्तदन्तस्यातुदादित्वात् छो[2] न स्याद् धातुत्वाच्छ्वेव स्यात् इति विच्छेस्तुदादिपाठोऽनर्थकः । आयादीनां विकल्पं ज्ञापयति तदुक्तम्—क्षीरतरङ्गिण्याम् वृत्तौ–विच्छेस्तुदादिपाठः सार्वधातुकेऽप्यायानि-त्यत्वज्ञापनार्थं इति । अत एव विच्छेराय वेति केचिदित्याचार्यैरप्युक्तम् । ततश्चा-नेन विकल्पः सिद्ध इति न किंचिदनुपपन्नम् । तथा च युक्तं यङ्लुगन्तोदाहरणम् । वेविच्छीति । वेवेष्टि । "व्रश्च" (८।२।३६) इति षः । वेविष्टः । वेविच्छति । वेविच्छीषि । वेवेक्षि । वेविष्ठः । वेविष्ठ । वेविच्छीमि । वेवेश्मि । वेविश्वः । वेविच्छ्वः । वेविश्मः । वेविच्छयात् । वेविच्छीतु । वेवेष्टु । वेविष्टाद् वा । वेविष्टाम् । वेविष्ट । वेविच्छानि । वेविच्छाव । वेविच्छाम । वम्मसोर्वकारानुनासिकयोराटा व्यवधाना-न्न श्नः । उत्तमभक्तभाट् तमेव न व्यवदध्यात् । वकारमकारौ व्यवधात्येव । वर्ण-समूहरूपत्वादुत्तमस्य । अवेविच्छीत् अवेवेट् । अवेविष्टाम् । अवेविच्छुः । अवेविच्छीः । अवेवेट् । अवेविष्टम् । अवेविष्ट । अवेविच्छम् । अवेविश्व । अवेविच्छ्व ।

१. भाश्रयणादित्यारभ्य—इत्याहुरित्यस्य स्थाने त्याश्रयेनेत्यनिष्टमापततीति विकल्पसिद्धे-नास्माद् यङ्लुगस्तीत्याहुरिति क० पु० ।

२. छो न स्यादित्यारभ्य—आयानित्यत्वज्ञापनार्थं इत्यन्तो ( ) नास्ति क० पु० ।

"नाभ्यस्तस्य" ( ७।३।८७ ) इत्यनुवृत्तेरुतो वृद्धिर्न । योयोति । योयवीति । नोनोति । नोनवीति । जाहाति । जाहेति । जहात्यभ्यासस्य न दीर्घं इति केचित् ।

---

अवेविश्म । अवेविच्छ्वीत् । अवेविष्टामित्यादि । नाभ्यस्तस्यानुवृत्तेरिति । "उतो वृद्धिर्लुकि हलि" ( १।३।८६ ) इत्यत्राभ्यस्तस्य नेत्यर्थाश्रयणात् उतो वृद्धिर्नेत्यर्थः । योयवीतीति । यु मिश्रणामिश्रणयोः । योयोति । योयुयात् । सार्वधातुकयकारत्वान्न दीर्घः । योयवीतु । योयोतु । अयोयवीत् । अयोयोत् । इत्यादि । नोनवीति । नोनोति । णु स्तुतौ पूर्ववद्रूपम् । जाहेतीति । ओहाक् त्यागे । ईद् गुणः । "दीर्घोऽकितः" (७।४।८३) इति दीर्घः । जाहाति । जहात्यभ्यासस्येति । धातुरेव द्विरावर्तते इत्यभ्यासस्या सस्यापि कित्त्वमिति भावः । ननु यद्यपि कित् धातुविशेषणम् तदा वनीवञ्चीति इत्यादौ धातोरकित्त्वात् दीर्घप्रसङ्गः तस्मादभ्यासविशेषणम् । ततश्चात्र धातोः कित्त्वेऽप्यभ्यासस्याकित्त्वात् भवितव्यमेव दीर्घेण । न च धातोः कित्त्वेनाभ्यासस्य कित्त्वं वक्तुं युक्तम् स्थाने द्विर्वचनपक्षेऽसम्भवात् ।

द्वि :प्रयोगेऽपि न दोषः । नैवं विगृह्यते न किद् अकिदिति किं तु न किद् यस्मिन्निति । तेन किदागमवानेवाभ्यासो निषिध्यते न चाय तद्युक्तोऽपि । न च कित्करणसामर्थ्यम् । "हश्च व्रीहिकालयोः" ( ३।१।१४८ ) इत्यत्र हाङ्हाकोः सामान्यग्रहणार्थत्वात् । तस्मान्नैतद्युक्तम् । न्यासकारोऽप्याह—जाहेतीत्येव भवितव्यमिति । ग्रन्थान्तरानभिमतं च । तस्मात्ते एव प्रष्टव्याः । ग्रन्थव्याख्याने प्रवृत्तत्वाद् यथाश्रुतप्रक्रियाश्रयणेन निरूप्यते । जाहीत इति । "ई हल्यघोः" ( ६। ।११३ ) । जाहितः इति । "जहातेश्च" (६।४।११६) इतीत् । जाहति । जाहेषि । जाहासि । जाहीथः । जाहिथः । जाहिथ । जाहेमि । जाहामि । जाहिव । जहावः । जाह्यात् । अत्र 'लोपो यि" ( ६।४।११८ ) इत्यालोपः । धातुग्रहणेनोक्तत्वात् पक्षे जाहीयात् । जाहीयाताम् । जाहीयुः इत्यादि । इत्त्वे जाहियात् । जाहेतु । जाहातु । जाहितात् वा । जाहीताम् । जाहतु । जाहीहि । जाहाहि । जाहिहि । जाहीतात् । जाहीतम् । जाहीत । जाहानि । जाहाव । जाहाम । अजाहेत् । अजाहात् । अजाहिताम् । अजाहीताम् । अजाहुः । अजाहेः । अजाहाः । अजाहितम् । अजाहातम् । अजाहित । अजाहाम् । अजाहिव । अजाहाव । अजाहिम । अजाहीम । अजाहासात् । अजाहासिष्टमित्यादि । जाहाञ्चकार । जाहिता । "आतो लोप इटि च" ( ६।४।६४ ) इतीत्त्वम् । पक्षे 'एर्लिङि" ( ६।४।६७ ) इत्येत्वम् । जाहेयात् । उभयोरप्यभावे जाहायात् इति । अभ्यासदीर्घविकल्पेऽप्येतानि योज्यानि । जाहिष्यति । अजाहिष्यत् । अत्र जहातेरिति श्तिपा निर्देशात् "घुमास्था" इतीत्वम् "आ च हौ" ( ६।४।११७ ) "लोपो यि" (६।४।११८) "एर्लिङि" ( ६।४।६७ ) इत्येते विधयो न भवन्तीति माधवादयः । इदं तु जहातेरिति

## ५०१. न धातुलोप आर्धधातुके [ १ । १ । ४ ]

**धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते गुणवृद्धि न स्तः ।**

श्तिपा निर्देशात् जहातेर्न भवतीति वृत्तिदर्शनाच्च यङ्लुग्व्यावृत्त्यर्थः । तथा चान्य-व्याख्यातत्वादाचार्या नानुमन्यन्ते । क्त्वाभावान्नलोपाप्राप्तावाह—जपजभेति । दन्दशीति। दंश दशने । द्वित्वम् । "जपजभ" (७।४।८६) इत्यभ्यासस्य नुक् । लोपो यीति केचिदिति । विकरणप्रत्ययप्रकृतिदंशेरेवानुकरणं सत् स्यादिति भाव । सदा दन्दंशीत्यपि । दंदष्टि इतीडभावे । "व्रश्च" ( ८।२।३६ ) इति ष । ष्टुत्वम् । दन्दष्टः । "अनिदिताम्" (६।४।२४) इति नित्यं नलोप । दन्दशति । दन्दशीमि । दन्दश्मि । दंदंशीमि । दन्दंश्मि । दंदश्व । दंदश्मः । दन्दश्यात् । दन्दशीतु । दन्दष्टु । दंदष्टात् दन्दष्टाम् । दन्दशतु । दन्दड्ढि । नलोपो हेर्धि । "व्रश्च" ( ८।२।३६ ) इति षत्वे जश्त्वम् । दन्दष्टात् । दन्दशानि । अदन्दंशीत् । ईडभावे नलोपाभावे च अदन्दन् । अदन्दट् नलोपे । एवं सिप्यपि । सोपुपीति । सोपुप्तीति । ञिष्वप् शये । "स्वपिस्यमि" ( ६।१।१९) इति संप्रसारणम् द्वित्वम् । धातुग्रहणोक्तं यङ्लुकि वेति सम्प्रसारणाभावे सास्वपीति । सास्वप्ति । तदाह—"स्वपिस्यमि" ( ६।१।१९ ) इत्युत्त्वपक्षे सोषोप्ति । सोपुपीति । अन्यत्र सास्वपीति । सास्वप्ति । तत्र यङो लुका लुप्तत्वाद् यङ्परत्वाभावे "स्वपिस्यमि" ( ६।१।१९ ) इत्युत्त्वं कथमिति चिन्त्यम् । आचार्यास्तु 'संप्रसारणं तदाश्रयं च कार्यं बलवत्" (प) इति यङ्लुकः प्रागेव सम्प्रसारणमभिमन्यन्ते । एवं स्वपतेरपि "रुदादिभ्यः सार्वधातुके" ( ७।२।७६ ) इति गणनिर्दिष्टत्वान्नेट् । सास्वप्त । सास्वपति । सास्वपीषि । सास्वप्सि । सास्वप्थः । सास्वप्थ । सास्वपीमि । सास्वप्मि । सास्वप्वः । सास्वप्मः । सास्वप्यात् । सास्वपीतु । सास्वप्तु । सास्वप्तात् वा । सास्वप्ताम् । सास्वपतु । असास्वपीत् । ईडभावे हल्ङ्यादिलोपः । असास्वप् । असास्वापीत् । असास्वपिष्टामित्यादि । आचार्यमते तु सोपुप्यात् । सोपुपीतु । सोपोप्तु । असोपुपीत् । असोपोप् । असोपोपीत् । असोपोपिष्टाम् । सोऽयमाकारेत्याद्यपि ।

न धातु लोप इति । अत्र यदि सर्वस्यापि धातोर्लोपस्य निमित्तं गृह्यते तदा गुणवृद्धी कस्य स्थाने स्याताम् । अतो धात्वेकदेशे धातुशब्दो वर्तते इत्यभिप्रत्याह—धात्वंशेति । अत्र यदि धातोर्लोपो धातुलोप इति तत्पुरुषः स्यात् तदा आर्धधातुकग्रहणं लोपविशेषणम् गुणवृद्धिविशेषणमुभयविशेषणं वा स्यादिति त्रयः पक्षाः । अत्र लोपविशेषणेऽयमर्थः स्यात् आर्धधातुकनिमित्ते धातुलोपे सति यत्किंचिन्निमित्तके गुणवृद्धी न स्त इति । तदा प्रेद्धमित्यत्र ञिइन्धी दीप्तौ इत्यस्मात् क्तप्रत्यये तन्निमित्तकेऽनुनासिकलोपे सति प्राप्त आद्गुणोऽपि न स्यात् । "याह्य, भयो' स्थाने भवति लभतेऽसौ' अन्यतरतो'

१. ह्योर्न्दूभयोरिति क० पु० ।
२. लभते इति नास्ति क० पु० ।
३. अन्यतरव्यपदेशमिति क० पु० ।

**वेभिदिता । मरीमृजिता । आर्धधातुके किम् । वेभेत्ति । मरीमार्ष्टि ।**

व्यपदेशम्" इति न्यायादकार[1]स्थानिकोऽपि गुणः इक्स्थानिक एवेति । न चैको भवतोक्शब्दोच्चारणेन विधीयमानयोर्निषेधः । इक्शब्दस्यात्र स्वरूपपरत्वे प्रमाणाभावात् । अथ गुणवृद्धिविशेषणम् यत्किंचिन्निमित्ते धातुलोपे सत्यार्धधातुकनिमित्ते गुणवृद्धी न स्तः इति । तदा क्नोपयतीत्यत्र क्नूय इ[2] इति स्थिते पुक् । "लोपो व्योर्वलि" ( ६।१।६६ ) इति पुग्निमित्तकलोपे सति णिज्निमित्तो गुणो न स्यात् । अथ तन्त्रावृत्त्यादिभिरुभयविशेषणम्, तथापि भेद्यते इत्यत्र भिदेर्ण्यन्तात् यकि सति "णेरनिटि" ( ६।४।५१ ) इति यङ्निमित्ते णिलोपे तस्य स्थानिवत्त्वाल्लघूपधगुणः प्राप्तः सोऽपि निषिध्येत । *एवं तत्पुरुषपक्षे दोषं दृष्ट्वा बहुव्रीहिपक्षमभिप्रेत्याह--धात्वंशलोपनिमित्त* इत्यादि । एतेन धातुलोपस्य गुणवृद्ध्योश्चैकार्धधातुकनिमित्तत्वे निषेधो भिद्यते इत्यत्रातथात्वात् नेत्युक्तम् । वेभिदितेति । भिदेर्यङ् द्वित्वम् । हलादिः शेषः । "गुणो यङ्लुकोः" ( ६।४।८२ ) इति गुणः । तस्यैकार्धधातुकनिमित्ते यङो लोपे तन्निमित्तप्राप्तो गुणो निषिध्यते । ननु यङोऽकारस्य "अतो लोपः" ( ६।४।४८ ) इति लोपे सत्यतो लोपस्य स्थानिवत्त्वादेव निषेधः स्यात् । न च "यङोऽचि च" ( २।४।७४ ) इत्यस्य समुदायलोपत्वादतोलोपाभावः । यतो "यस्य हलः" ( ६।४।४९ ) इत्यत्र लोप इत्यनुवर्तमाने यस्येति योगं विभज्य यस्यातो लोपो भवतीति व्याख्यास्यते ।

प्रतिपदविहितेन समुदायलुकाऽतो लोपो मा बाधोदिति लाघवार्थं च । अतो नानेन सूत्रेणार्थः । अत्रोच्यते—लोलुवः पोपुव इत्यादौ लोलूय अ इति स्थितेऽतो लोपे यलोपे अप्रत्ययनिमित्तो गुणः स्यात् । ननु तत्रापि पूर्ववत् स्थानिवत्त्वात् सिद्धम् । एवं तर्हि वृद्धि पुनः प्रसक्तस्य निषेधार्थम् । न चात्रापि स्थानिवत्त्वान्निषेधः । अनादिष्टादचः पूर्वस्य विध्यभावात् । न ह्यङ्वङ उकारः पूर्वमासीदिति कर्तव्यमेव । किं च योगविभागे नातो लोपे जङ्गम इत्यत्र तस्य स्थानिवत्त्वाद् "गमहन" ( ६।४।९८ ) इत्युपधालोपः स्यात् । अत्रानङीति प्रतिषेधः स्यादिति चेन्न । एवं हि दरीदृश इत्यङाश्रयो गुणः स्यात् । तस्मात् समुदायलुगेवेष्टव्यः । तत्तु अजझलादेशस्य स्थानिवत्त्वाभावात् गुणः स्यात् । अतोऽर्थवदेव सूत्रम् । ननु वेभिदितेति नैतद् युक्तमुदाहरणम् । तथाहि यद्यपि यङो लुक् ततस्तस्यानैमित्तिकत्वादार्धधातुकनिमित्तो लोपो न भवतीति निषेधाप्रसक्तिः। यथा नोनूयतेर्नोनाव । तथा च माधवादिभिर्यङ्लुगन्तानां भिदिमुदिप्रभृतीनां वेभिदिता मोमोदितेत्यादि गुण उदाहृतः । अथ नायं यङ्लुक् किं तु यङ् एव 'यस्य हलः" ( ६।४।४९ ) इति लोपः स चार्धधातुकनिमित्त एवेति युक्तम् वेभिदितेत्यभिप्रायः । एतदपि न । इदमेव तावदयुक्तम् यद् यङ्लुगन्तप्रकरणेऽस्योपन्यासः । यङन्तोदाहरणे हि प्रकरणाविरोधाय यङन्तप्रकरण एव युक्त उपन्यासः । किं च "यस्य हलः"

१. प्रकारे इति क० पु० ।
२. इति नास्ति क० पु० ।

( ४।४।४८ ) इत्यवयवलोपो न समुदायलोपः। यस्येति सङ्घातग्रहणमिति तु काशिकाकारवचनं यकाराकारसमुदायान्तर्गतस्यैव यकारस्य लोपो न त्वहर्यो[1] दमव्योदित्यादौ यकारमात्रस्यापीत्येवमभिप्रायकं, न तु समुदायलोपार्थमिति सर्वैरेव व्याख्यातम्। तथा चात्र पृथगतो लोपेन भाव्यम्। तस्य च स्थानिवत्त्वादेव गुणस्याप्रसङ्गः, पापचक इति यथा। कथमन्यथा समुदायलोपेऽतोलोपाभावेनाज्झलादेशत्वात्स्थानिवद्भावाभावात्[2] उपधावृद्धिर्न स्यात्। न चास्या वृद्धेरयं निषेधोऽनिग्लक्षणत्वात्। अतश्चिन्त्यमेतत्। अत्रोच्यते। प्रकरणं तावद् यङः एव, न प्रकरणान्तरम्। तस्य चादर्शनं द्वेधा—क्वचिल्लुका, क्वचिल्लोपेनेति। उभयमप्येतद् फलभेदाद् यङमधिकृत्येहोदाहृतम्। तत्र फलभेदोपपादनार्थमिदमुपन्यस्तम्। अतो न तावत् प्रकरणविरोधः कश्चित् यङन्तस्यैव त्वेतद्रूपम्। न चात्राल्लोपस्य स्थानिवत्त्वादेव सिद्धमिष्टमिति वाच्यम्। यस्येति समुदायलोपस्यैवाचार्यैरत्र स्वीकृतत्वात्। यस्येति श्रुताकारविवक्षाया प्रयोजनाभावात्। नाप्राप्तेऽतोलोपे आरभ्यमाणेन प्रतिपदविहितेन यस्येति समुदायलोपेनातो लोपस्य बाधितत्वाच्च यङ्लुग्वत्। यस्येति समुदायग्रहणमिति च वदतो वामनस्याऽप्ययमेवाशयः। तावताऽप्यहर्य्योदित्याद्यनिष्टवारणसम्भवात्[3]। अन्यथा वर्णने प्रमाणाभावात्। अवश्यं च समुदायलोप एवायं विज्ञेयः। अवयवलोपे यङ्लुकोऽवयवलोपत्वे ये उक्ता दोषास्ते प्रसज्येरन्। तथाहि–गमेर्यङ्लुगन्तादचि जङ्गम इत्यत्र यथा पृथगतो लोपे "गमहन" ( ६।४।९८ ) इत्युपधालोप आशङ्क्यते। एवं यङन्ताण्ण्वुलि जङ्गमक इत्यत्राप्यल्लोपस्य स्थानिवत्त्वाद् वृद्ध्यभावश्चोपधालोपः स्यात्। अथानडीति प्रतिषेधः दरीदृशक इत्यत्र "ऋदृशोऽङि" ( ७।४।१६ ) इति गुणः स्यात्। देद्यक इति "दीङो युडचि" ( ६।४।६३ ) इति युट् स्यात् इति। अतो यदेव यङ्लुकः समुदायलुक्त्वसाधकं तदेव 'यस्य हलः" ( ६।४।४९ ) इत्यस्यापि समुदायलोपत्वमावेदयति। अथ यद्यत्र क्वचिदङ्गवृत्तपरिभाषया "संज्ञापूर्वको विधिरनित्यः" ( प० ) इत्यादि कुशकाशावलम्बनेन उपधालोपादि पराक्रियेते। ततो यङ्लुगन्तादपि जङ्गम इत्यादौ दोषोद्धारः सुकर एवायुष्मतामिति भाष्यकारोक्तरीत्या यङ्लुकोऽप्यवयवलोपे सिद्धे गतं "न धातुलोप" ( १।१।४ ) इति निषेधसूत्रेति न चाशङ्का न चोत्तरम्। सर्वथाऽनाश्रिते सूत्रेऽवयवलोपेनैव सिद्धम् बेभिदितेति। वेभेदितेत्यादि माधवोदाहृतं चिन्त्यतामावहेत्। हरदत्तोक्तरीत्या आश्रिते पुनः सूत्रे भवत्येषा विचारणा यङन्तस्येद रूपं यङ्लुगन्तस्य वेति। तत्र च तत्रभवद्भिराचार्यपादैर्लुका च[4] यस्येति लोपेऽपि पृथगतो लोपस्य

---

१. न त्वहर्य्यादसंव्यादिति क० पु०।
२. स्थानिवद्भावादिति क० पु०।
३. अनिष्टवरेणेति क० पु०।
४. लुकोऽवयवस्येति क० पु०।

विनिगमनाविरहादविशेषाद्दोषं पश्यद्भिर्यस्येति संघातग्रहणमिति यथाश्रुतं वामनवाक्यं प्रमाणयद्भिर्यस्येति समुदायलोपमास्थाय हलचोरादेशस्यास्थानिवत्त्वेन निषेधापेक्षणादिदमुदाहृतम् ।

नन्वेवं पृथगल्लोपाभावात्[1] तस्य स्थानिवत्त्वाभावात् पापचक इत्युपधावृद्धिः प्राप्नोतीति चेत्। सत्यम्। सेयमुभयतः पाशारज्जुः। पृथगल्लोपे हि सर्वत्र प्राप्नुवदुपधालोपादि दुर्निवारम्। समुदायलोपे चोपधावृद्धिर्दुरुद्धरा। तत्र 'त्यजेदेकं कुलस्यार्थे" इति न्यायाद् भूयसामुपधालोपाल्लोपयुडादीनामनुग्रहार्थमेकेयमुपधावृद्धिः सोढव्येत्याचार्याः मन्यन्ते। इदमेव चाभिप्रेत्य कृदन्ते उदाहरिष्यन्ति " न धातुलोप" ( १।१।४ ) इत्यत्रेक इत्यनुवृत्तेः पापचक इति। उचन्त्यादिवदप्रयोग एवायमिति चेत्। यो हि मन्यते "यङोऽचि च" ( २।४।७४ ) इत्ययं समुदायलुगिति तस्याल्लोपस्यास्थानिवद्भावाद्भवितव्यमेव पापाचक इति। अथ यस्येति लोपेन इष्यते चेत् को न्वत्र विशेषः लुगन्तस्येष्यते लोपान्तस्य नेष्यते इति, न खलु कश्चिदर्थे रूपे वा विशेषः। अथ पापचक इत्यपीष्यते इति चेत् यदीष्यते पचाद्यजन्तात् स्वार्थे कप्रत्यये भविष्यति। नैतदस्ति स्वरेदोषः स्यात्। ण्वुलि हि लित्स्वरेण भाव्यम्। के त्वन्तोदात्तः स्यात्। एवं तर्हि ण्वुलेवायम्। वृद्धिस्तु 'संज्ञापूर्वको विधिरनित्यः" प) इति न भविष्यतीति कथंचिन्निर्वाह्यम्।

ननु यस्येति संघातग्रहणेऽपि हल इति पञ्चमीनिर्देशात् "आदेः परस्य" ( १।१।४५ ) इति यकारमात्रस्यैव लोपेन भवितव्यम्। न। हल इति संबन्धे षष्ठीयं हलन्तस्य धातोर्यो यः कश्चन, तस्य यो हलन्तधात्वर्थगतं क्रियासमभिहारादि प्रतिपादयति तस्य लोप इत्यपीष्टसिद्धेः। यद्वा "अतो लोपः" ( ६।४।४८ ) इत्यतोऽत इत्यनुवर्तते तच्च यस्येत्यस्य समानाधिकरणविशेषणम् अकारान्तस्य यस्येति संघातग्रहणादेव सिद्धेः किमर्थमिदम्? समुदायस्यैव लोपो यथा स्यात् "आदेःपरस्य" ( १।१।५४ ) इत्यवयवलोपो मा भूदित्येवमर्थमिति। यदि तर्हि समुदाय एव लुप्यते इह समिधमिच्छति दृषदिवाचरतीत्याद्यर्थविवक्षायां समिधको[2] दृषदक इति क्यच्क्यङोः[3] समुदाये लुप्ते पापाचक इतिवद् गुणवृद्धी प्राप्नुतः। न क्यच्क्यङोरवयवलोपविज्ञानात्। तत् कथम्? "क्यस्य विभाषा" ( ६।४।५० ) इत्यत्र क्यस्येति योगो विभज्यते तत्सामर्थ्यादेव अत[4] इति निवर्तते। तेन हलः परस्य लोपो भवत्यादेः परस्येति। यद्वा यस्येत्यप्यनुवर्तते तत्र क्यस्येत्येव सिद्धेर्यग्रहणानुवृत्तिर्यमात्रस्यैव लोपो यथा स्यात् संघातस्य मा भूदिति। तेन यकारमात्रलोपे चातो लोपे च स्थानिवत्त्वात् सिद्धमिष्टम्। ततो विभाषा। क्यस्येति वर्तते। सोऽपि लोपो विभाषा भवतीत्यर्थः। इह तर्हि कुषुभकः कण्ड्वादि यकि संघातलोपे दोषः। यदि च क्यस्येत्यत्रायमपि प्रश्लिष्येत,

१. पृथगल्लोपादिति क० पु० ।
२. समिधक इति क० पु० ।
३. क्यङ्यङोरिति क० पु० ।
४. तेइति क० पु० ।

## ५०२. रुग्रिकौ च लुकि [ ७।४।९१ ]

**ऋदुपधस्य च धातोरभ्यासस्य रुक्, रिक्, रीक् एते आगमाः स्युः यङ्लुकि। वर्वृतीति। वरिवृतीति। वरीवृतीति। वर्वर्त्ति। वरिवर्त्ति। वरीवर्त्ति।**

---

ततश्च विभाषेप्यत्राऽप्यनुवर्तेत ततश्च यकोऽपि वा लोपे मगधिता,[१] मगध्यितेत्यनिष्टं प्रसज्येत।

अत्र वदन्ति—वयस्येत्यत्र कित्तो यशब्दस्य ग्रहणात् कादित्वस्याविवक्षणात् कण्ड्वादियकोऽपि वा लोपमिच्छन्तीति। यत्तु हरदत्तेनोक्तम्—कादित्वाविवक्षायां प्रमाणाभावाद् इति तन्न। किद् यः क्य इति मध्यमपदलोपिसमासव्याख्यानस्यैव प्रमाणत्वात्। अथापि नेष्यते एव तर्हि "धिन्विकृण्व्यो र च" ( ३।१।८० ) इतिवत् "कण्ड्वादिभ्योऽयक्" इत्यत्राकारोऽपि स्वतन्त्रो विधीयते अयगिति। कण्ड्वादेरकारो भवति। उपदेशक्रमानुरोधाच्च तदन्ताद् यग् भवतीति। अत्र च यकि परतोऽल्लोपे तस्य स्थानिवत्त्वाद् गुणवृद्धी न भविष्यतः। तदर्थमेव चाकारो विधीयते इति न कश्चिद् दोषः। गुणे तु "न धातुलोप" ( १।१।४ ) इत्यपि परिहारोऽस्तीति। कित्करणसा-मर्थ्यादन्तरङ्गोऽपि यण् न भवति। तद्धि क्रियते वल्गूयते मन्तूयतीत्यादावतो लोपस्य स्थानिवत्त्वात् उपधागुणो मा भूदिति। यद्येव कण्डूयति, महीयते इत्यादावतो लोपस्य स्थानिवत्त्वाद् यण् प्राप्नोति। नैष दोषः। परत्वाद्दीर्घेण बाधिष्यते। ननु चान्तरङ्गो यण्। सत्यम्। यदि चान्तरङ्गत्वाद् यण् स्यात् ततो गुणाभावोक्तं नास्तीति किं गुणनिषेधार्थेन कित्त्वेन। अन्त्यगुणस्त्वल्लोपस्य स्थानिवत्त्वादेव न भविष्यतीति तावदाचार्यहृदयम्। यथा तु भाष्यम् तथा पापचक इत्येव भवति। तदत्र तत्त्वं निपुणदृशः पश्यन्तु।

मरीमृजितेति। मृजूष् शुद्धौ। पूर्ववत् यङादि। "रीगृदुपधस्य च" (७।४।९०) इति रीगागमः। अत्र "मृजेर्वृद्धिः" ( ७।२।११४ ) इति प्राप्ता वृद्धिर्न। ननु धातुलोप इति बहुव्रीहिरन्यपदार्थप्रधानस्ततोऽन्यपदार्थं आर्धधातुकमेव ग्रहीष्यते[२] इत्यनर्थकं तदिति मनसि कृत्याक्षिपति—आर्धधातुके किमिति। उत्तरमाह—त्रेमेत्तीति। अन्यपदार्थं आर्ध-धातुकवदविशेषात्सार्वधातुक ( मपि गृह्येत[३] ततोऽत्रापि गुणवृद्धी निषिद्धयेयाताम् इत्युत्तरितम्। ननु चात्र यथा धातुलोपस्यानैमित्तिकत्वात् गुणवृद्धी आर्धधातुके नचैव धातुलोपोऽपि इति कथं निषेधः स्यात् )। मैवम्। असति तस्मिंस्तत्पुरुषशङ्कया स्यादेव। कृते तु तस्मिन् बहुव्रीहिः सम्भवतीति नात्र प्रसङ्गः इत्याचार्याणामभिप्रायः।

रुग्रिकौ च लुकि। "रीगृदुपधस्य च" ( ७।४।९० ) इति सर्वमनुवर्तते। रुगागमे

---

१. मधिगतेति क० पु०।
२. गृह्यते इति क० पु०।
३. कमपीत्यारभ्य—निषेधः स्यादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

५०३. ॠतश्च [ ७।४।९२ ]

ॠदन्तस्य धातोरपि तथा। चर्करीति। चरिकरीति। चरीकरीति। चर्कर्ति। चरिकर्ति। चरीकर्ति। ॠतश्चेति तपरत्वाद्दन्तस्य न। कॄ। चाकर्ति। चाकरीति। गुणवद् वृद्धेरपि निषेधो ज्ञेयः। मर्मृजीति। ग्रह। जर्गृहीति। ढत्वधत्वष्टुत्वढलोपाः। जर्गृढि। केचिद् यङ्निमित्तं संप्रसारणं नेच्छन्ति। जाग्रहीति। ढत्वधत्वष्टुत्वढलोपदीर्घाः। जाग्राढि। बलीयस्त्वादादौ संप्रसारणे कृते रुग्रिगादि। जर्गृढः। जरिगृढः। जर्गृहति। गृधु। जर्गृधीति। जर्गर्धि। अजर्गृधीत्। गुणः। हल्ङ्यादिलोपः। भष्भावः। जश्त्वचर्त्वे। अजर्घत्। अजर्गृद्धाम्। अजर्गृधुः। "दश्च" (७।२।१०९) इति वा रुत्वम्। "रो रि" (८।३।१४) ढ्लोपे दीर्घः। अजर्घाः। अजर्घत्। अजर्गृद्धम् इत्यादि प्रयोगानुसाराज् ज्ञेयम् ॥

इति यङ्लुगन्तप्रक्रिया ॥

---

चोकार उच्चारणार्थः। वर्वृतीति। वृतु वर्तने। लुकि द्वित्वम् रुक्। "(नाभ्य[1]स्तस्याचि पिति गुणः" (७।३।८७) इति निषेधान्न गुणः)। ईट्पक्षे ओणि। तदभावे च ओणि। वर्वृत्तः। वरीवृत्तः। वरिवृत्तः। वर्वृतति। वरीवृतति। वरिवृतति। वर्वृतीषि। वर्वर्त्सि ३। वर्वृत्थः ३। वर्वृत्थ ३। वर्वृतीमि ३। वर्वृत्वः ३। वर्वृत्मः। वर्वृत्यात् ३ इत्यादि। वर्वृतीतु ३। वर्वृततु ३। वर्वृद्धि ३। वर्वृतानि ३। अवर्वृताव ३। अवर्वर्त ३। (अत्र[2] रुकि गुणे च हल्ङ्यादिलोपः। "रात्सस्य" (८।२।२४) इति नियमान्न संयोगान्तलोपः। अवरिवर्तः अवरीवर्त) अत्र तस्य जश्त्वेन दकारे "दश्च" (८।२।७५) इति पक्षे दस्य रुत्वे "रोरि" (८।३।१४) इति लोपे पूर्वस्य दीर्घेऽजर्घा। इतिवद् अवर्वाः अवरिवाः। इत्याद्यूह्यम्। अवर्वृत्तम् ३। अवर्वृत्त ३। अवर्वृतम् ३। अवर्वृत्व: ३। अवर्वृत्मः। अवर्वर्तीत् ३। वृतादीनां यङ्लुगन्तानां "न वृद्भ्यश्चतुर्भ्यः" (७।२।५९) इति सकारादेरिण्निषेधो गणनिर्दिष्टत्वान्न भवति। वरीवर्तिष्यति३ इत्यादि।

ॠतश्च। अत्राङ्गमभ्यासश्चेति द्वयं प्रकृतम्। तत्र यद्यभ्यासस्य विशेषणम् ॠत इति ततस्तपरत्वमनर्थकं स्यात्। तथाहि—तद्धि चाकर्ति—इत्यत्राकारान्तत्वाद् रुगादयो मा भूवन्निति कृतम्। अभ्यासविशेषणे त्वत्रापि स्यादेव सर्वत्राभ्यासस्य ह्रस्वेन दीर्घासम्भवादिति तदनर्थकं स्यात्। अतोऽङ्गविशेषणेन च तदन्तविधिरिति मत्वाह—

१. नाभ्यस्तस्याचि पिति इति निषेधान्न गुणः इति नास्ति क० पु०।

२. अत्रेत्यारभ्य—अवरीवर्त इत्यन्तो (          ) रेखाङ्कितो नास्ति क० पु०।

ऋदन्तस्येति । तयेति । अभ्यासस्य रुग् रिक् रीकः आगमा भवन्तीत्यर्थः । ऋदुपधत्वा-भावादयमारम्भः । चर्करीतीति । डुकृञ् करणे । चर्करीत्यादि । चर्कृतः । चर्कर्ति ।

ऋतश्चेति तपरत्वादिति । उक्तोऽभिप्रायः । चाकर्तीति । कॄ विक्षेपे । अत्र कॄ य इति स्थिते यङो लुकि सति प्रत्ययलक्षणेन यङन्तस्य "सन्यङोः" ( ६।१।९ ) इति द्विर्वचनम् । "उरत्" ( ७।४।६६ ) हलादिः शेषः । श्चुत्वम् । दीर्घः । ईट्पक्षे चाकरीति । "नाभ्यस्तस्याचि" ( ७।३।८७ ) इति निषेधः पुगन्तलघूपधस्येवेत्तोह्[१] 'सार्वधातुका-र्धधातुकयोः" ( ७।३।८४ ) इति गुणो भवत्येव। अत्र कश्चित् यङ्लुको द्विरुक्ते प्रागेव प्रतिषेधात् पित्सु गुणे ङित्सु चेत्वोत्वयोः कृतयोः[२] पश्चादिह द्विर्वचनं कर्तव्यम् । ननु पूर्वमपि द्विर्वचनेऽभ्यासस्य ह्रस्वोरत्वचुत्वदीर्घत्वमार्वधातुकगुणेषु चाकर्तीत्या-दीष्टरूपसिद्धेरिति चेत् । सत्यम् । पित्सु सिद्ध्यति ङित्सु दोषः स्यात् । तत्र हि पूर्वं द्विर्वचने कृते पश्चादित्त्वं स्यात् । ततश्चाभ्यासस्योरदत्वचुत्वदीर्घेषु कृतेषु चाकीर्तः । चाकिरतीत्याद्यनिष्टानि रूपाणि प्रसज्येरन्, इष्यन्ते चेकीर्तः चेकिरतीत्येवम् । तच्च पूर्वं द्वित्वे सति न स्यात् । अस्तु पूर्वमेव द्वित्वम् चाकीर्त इत्याद्येव साध्विति चेत् । न । "रीङ् ऋतः" ( ७।४।२७ ) इत्यत्र चेकीर्यते जेगिल्यते इत्याद्युदाहरता वृत्तिकृता सहविरोधात् ।

तस्य चैषोऽभिप्रायः किरतेर्यङि ऋदित्त्वे तदनु द्विर्वचने हलादिःशेषचुत्वगुणाः भवन्तीति । अन्यथा चाकीर्यते जागिल्यते इत्याद्युदाहरेत् । तस्माद् यथा यङि इत्त्वादौ कृते द्विर्वचनमिष्यते तथा यङ्लुकि ङित्स्वपीत्याश्रयणीयम् । यदाह—भगवान् भाष्यकारः—'विप्रतिषेध" ( १।४।२ ) इति सूत्रे "द्विर्वचनादित्त्वोत्वे" आतेस्तीर्यते आपोपूर्यते द्विर्वचन च प्राप्नोति इत्त्वोत्वे च । नित्यत्वाद् द्विर्वचनं स्यात् । इत्त्वोत्वे भवतोऽन्तरङ्गत्त इति तदेवं द्विर्वचनात् प्रागित्वादिषु कृतेषु द्विर्वचनमिति । तदेतदज्ञानविजृम्भितम् । यङपेक्षत्वेन द्वित्वस्यान्तरङ्गत्वात् । इत्वादेश्च तसादिनि-मित्तत्वाद् युगपत् प्राप्त्यभावेन विप्रतिषेधासंभवात् । आतेस्तीर्यते तूभयोरपि यङ-पेक्षत्वाद् पुक्तमित्त्वेन बाधनम् । "द्विर्वचनादित्त्वो[१]त्वे" इत्यस्याप्ययमेव विषयः । न च प्रकृतेऽपि लुकः प्राग् यङाश्रयमित्व स्यादिति वाच्यम्, लुको नित्यत्वाद् बलवत्वात् । *न च प्रत्ययलक्षणेन पुनः प्रसङ्गः, अङ्गकार्यत्वात् ।* द्वित्वं तु न तस्मिन्न् पूर्वस्येत्यनङ्ग-कार्यत्वान्न निषिध्यते । ततश्च प्राग् यङ्लुकि सति अन्तरङ्गत्वाद् द्वित्वादौ तसादिषु तन्निमित्तेत्वादौ च चाकीर्त इत्याद्येव सिद्धम् । तथा च "ऋतश्च" ( ७।४।९२ ) इति सूत्रे भाष्ये तपरकरणं किम् चाकर्ति चाकिरतीति प्रत्युदाहृतम् । ततः चाकर्ति । चाकरीति । चाकीर्तः । चाकिरति । चाकर्षि । चाकरीषि । चाकीर्थः । चाकीर्थ । चाकरीमि । चाकर्मि । चाकीर्वः । चाकीर्मः । चाकीर्यात् । चाकर्तु । चाकीर्तात् ।

१. साहचर्यात् इत्यधिकः सार्वधातुक इति न्यूनोऽस्ति क० पु० ।

२. कृतयोरिति नास्ति क० पु० ।

चाकीर्तम्। चाकोर्हि। चाकाराणि। अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरीः। अचाकः। अचाकरीत्। अचाकरिष्टाम्। चाकरामासेत्यादि भाव्यानि भव्यबुद्धिभिः। एषु ऋत इति तपरकरणान्न रुगादयः। यदाह भाष्यकारः—

किरति चर्करीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥ इति।

चर्करीतमिति यङ्लुगन्तस्य संज्ञा। पचतीति लडन्तोपलक्षणम्। तेन यङ्लुकि किरतेर्लटि पूर्वोक्तरीत्या रूपाणि यो नयेत् प्रापयेत् पचतावित्व रुगादिकमकृत्वेति यावत्। तमहं भाष्यकारः प्राप्तिज्ञं रूपादि प्राप्तिविषयवेदितारं मन्येऽवगच्छामि। तेन संग्रहः करणसाधनव्युत्पत्त्या व्याकरणम् कर्मसाधनव्युत्पत्त्या शब्दराशिर्वारब्ध इति योजना। अर्तेस्तु यङ्लुकि ऋशब्दस्य द्वित्वेऽभ्यासस्योरदत्त्वे हलादिः शेषे रुकि उत्तरखण्डस्य गुणे। अरर्ति। रिग्रीकोस्तु "अभ्यासस्यासवर्णे" (६।४।७८) इति इयङि अरियर्ति। तसादौ ङित्वात् गुणाभावे रुकि अर्ऋतः। रिग्रीकोस्तु अरियृतः झौ ह्वदादेशे उत्तरखण्डस्य यण्यभ्यासरुको "रोरि" (८।३।१४) इति लोपे "ढ्रलोप" (६।३।११) इति दीर्घः। आरति। न च रोरीति लोपे यणः स्थानिवत्त्वम्। 'पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेधात्। रिग्रीकोस्तु यङि यणः। रिग्रीकोश्चे यङि परखण्डस्य यणि अरियन्ति। यणः स्थानिवत्त्वान्न वलि लोपः। यलोपे न स्थानिवदिति तु नास्ति "स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्" इति नियमात्। एवमन्यत्राप्यूह्यम्। तदयं रूपसंग्रहः—अरर्ति। अरियर्ति। अररीति। अरियरीति। अर्ऋतः। अरियृतः। आरति। अरियृति। अरर्षि। अररीषि। अरियरीषि। अर्ऋथः। अरियृथः। अर्ऋथ। अरियृथ। अरर्मि। अरियर्मि। अररीमि। अरियरीमि। अर्ऋवः। अरयृवः। अर्ऋमः। अरियृमः। अर्ऋयात्। अरियृयात्। अर्ऋयाताम्। अरियृताम्। इत्यादि। अरर्तु। अरियर्तु। अररीतु। अरियरीतु। अर्ऋतात्। अर्ऋताम्। अरियृताम्। आरतु। अरियृतु। अर्ऋहि। अरियृहि। अरराणि। अरियराणि। लङि[1] आडागमे तिप्सिपोर्हल्ङ्यादिलोपे विसर्जनीये च आरः। आरियः। आर्ऋताम्। आररम्। आरियरम्। लुङि सिच् वृद्धौ आरारीत्। आरियारीत्। आरारिष्टाम्। आरराञ्चकार। आरियराञ्चकार। आमभावे अरार। अरियार। 'ऋच्छत्यृताम्" (७।४।११) इति गुणः। आरतुः। अरियरतुः। अररिता। अरियरिता। लिङि रिङादेशे रलोपदीर्घयोः। आरियात्। अरियृताम्। श्तिपा निर्देशात् 'गुणोऽर्ति" (७।४।२९) इति न गुणः। आरिष्यति। अरियरिष्यति। आरियरिष्यदित्याद्यूह्यम्।

गुणवद्वृद्धेरपीति। मर्मृजीतात्यत्र द्वित्वे रुकि ईटि "पुगन्त" (७।३।८६) इति प्राप्ते "नाभ्यस्तस्याचि" (७।३।८७) इति निषिद्धे "मृजेर्वृद्धिः" (७।२।११४)

---

१. मर्यानामिति क० पु०।

इति प्राप्ता वृद्धिर्न भवति। यङ्लुकश्छान्दसत्वात् सर्वे विधयश्छन्दसि व्यभिचरन्तीति वचनादिति भावः। पक्षे मरीमृजीति। मरिमृजीति। ईडभावे मर्मार्ष्टि। द्वित्वे उरदत्वे हलादिः शेषे रुकि मृजेर्वृद्धौ "व्रश्च" (८।२।३६) इति षत्वे ष्टुत्वे। मरिमार्ष्टि। मरीमार्ष्टि।

धातुग्रहणोक्तत्वात् वृद्ध्यभावे गुणे मर्मष्टि इत्याद्यपि। क्वचिदस्यानुदात्तेषु पाठाद् अम् पक्षे मर्म्रष्टि। मरीम्रष्टि। मरिम्रष्टि। मर्म्रष्टः। मरिम्रष्टः। मरीम्रष्टः। अमभावे मर्मृष्टः। मरिमृष्टः। मरीमृष्टः इत्यादि। पित्सु अम्पक्षे त्रीणि। अमभावे तु षट्। ईटि तु त्रीणि इति द्वादश। ङित्सु षट् ङिद्वत्यचि मृजो वृद्धेर्विकल्पे च मर्मृजति। मर्मार्जति इत्येवं षट् इत्याद्यूह्यम्।

जर्गृहीतीति। ग्रह उपादाने प्रत्ययलक्षणेन "ग्रहिज्या" (६।१।१६) इति संप्रसारणम्, द्वित्वम्, ईट्, रुक्। यद्यपि ग्रहिः प्राक् संप्रसारणाद् ऋदुपधो न भवति, तथापि कृते संप्रसारणे ऋदुपध इति रुगादिसिद्धिः। "रीगृत्वत" (वा०) इति वक्तव्याद्वा। जर्गर्ढीति। ईडभावे अत्रैवं रूपसंग्रहः। तिपि ईटि जर्गृहीति। जरिगृहीति। जरीगृहीति इति त्रयम्। ईडभावे जर्गर्ढि। जरिगर्ढि। जरीगर्ढि इति त्रयम्। सिपि टि जर्गृहीषि। जरिगृहीषि। जरीगृहीषि इति त्रयम्। ईडभावे "होढः" (८।२।३१) इति ढत्वे भष्भावे "षढो कः सि" (८।२।४१) इति कत्वे सस्य षत्वे जर्घर्क्षि। जरिघर्क्षि। जरीघर्क्षि इति त्रयम्। मिपीटि जर्गृहीमि। जरिगृहीमि। जरीगृहीमि। इति त्रयम्। ईडभावे जर्गर्ह्मि। जरिगर्ह्मि। जरीगर्ह्मि। इति त्रयम्। "न लुमताऽङ्गस्य" (१।१।६३) इत्यत्राङ्गाधिकारविहितं कार्यं प्रतिषिध्यते, संप्रसारणं तु न तथेति।

प्रत्ययलक्षणेन तत्स्यादिति मन्त्रानानामर्वाचीनाना मतं प्रदर्श्य भाष्यानुवर्तिमतमाह—केचिदिति। किति ङिति च परे पूर्वस्य ग्रह्यादेर्विधीयमानं संप्रसारणं वस्तुतोऽङ्गस्य कार्यमिति तदपि न भवतीति जागृहातीत्यादेव भवितव्यमिति भावः। "इकोऽचि विभक्तौ" (७।१।७३) इत्यज्ग्रहणाद् "न लुमताङ्गस्य" (१।१।६३) इत्यनित्यः प्रतिषेधः इति तु "इह किञ्चित् त्रयो इति, इति किंचिद् ग्रहणाद् संवृद्धिगुणौ प्रत्येवेति[1] न तदवलम्व्यापि संप्रसारणमिति स्थितमाकरे। जगृहीतीत्यादि[2] संप्रसारणोदाहरणं तु भाष्यविरोध उपेक्षणीय एव।

न पुनरेतान्यसार्वानि। गृहू ग्रहणे इति भौवादिकादृदुपधाद् यङि लकि साधुतो पपत्तेरित्यास्तां विस्तरः। जाग्रहीति इति। द्विर्वचनम् हलादिः शेषः "कुहोश्चुः" (७।४।६२) "दीर्घोऽकितः" (७।४।८३) ईडभावे जाग्राढीति। ढत्वधत्वष्टुत्वढलोपदीर्घाः।

बलीयस्त्वादिति। द्विर्वचनात् परत्वादादौ संप्रसारणमित्यर्थः। तत्तु यङमाश्रित्य पूर्वोक्तन्यायात् न तु तसादेर्ङित्त्वात्। तसादेरुत्पत्तेः प्रागेवान्तरङ्गत्वेन प्रसङ्गात्।

१. प्रत्येवेतीति क० पु०।
२. जर्गृहीत्यादि इति क० पु०।

यदुक्तं यङि लुकि सत्यन्तरङ्गत्वाद् द्वित्वे इत्यादि। अत एव जागृढ इत्याद्युदाहरन्ति। जर्गृढ इति। यङि संप्रसारणे द्वित्वं हलादिः शेषः टत्वम् घत्वम् ष्टुत्वम् ढलोपः उरत्। "कुहोश्चुः" (७।४।६२)। "अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते" (प०) इत्युरदत्वे कृते रगादयः। तस्मो ङित्वान्न गुणः। "ढ्रलोपे" (६।३।१११) इति। दीर्घस्तु न भवति तत्राणिति (पूर्वेण णकारेण ग्रहणात्। "हलः" (६।४।२) इत्यनेनापि न दीर्घः ढलोपस्यासिद्धत्वात्। अस्यैवाण्ग्रहणस्यानुवृत्तेश्च। ऋकारस्यानण्। अननुवृत्तावपि तृतीयेत्याचार्यनिर्देशात् संप्रसारणे ऋकारस्य न दीर्घः) इत्यदोषः। झो "अदभ्यस्तात्" (७।१।४) इत्यदादेशः। अभ्यस्तत्वान्न' इत्वम्। जर्गृहति। असंप्रसारणे जाग्रहीति। जाग्राढि। सत्यादौ तन्निमित्ते संप्रसारणे जागृढः। धातुग्रहणोक्तत्वाद्विकल्पः ढत्वघत्वष्टुत्वढलोपदीर्घेषु जाग्राढः। जागृहति। जाग्रहति। एवं सर्वत्र ङित्सु।

जाग्रहीषि। जाघर्क्षि। "षढोः कः सि" (८।२।४१)। तस्यासिद्धत्वाद् भष्भावः। मिपि। जाग्रहीमि। जाग्रह्मि। जागृह्यात्। यासुटो ङित्वात् सम्प्रसारणम्। पक्षे जाग्रह्यात्। जाग्रहीतु जाग्राढु। जागृढात् वा। जाग्राटाम्। जाग्रटाम्। जागृहतु। जाग्रहतु। जागृढि। अत्र हेरपित्वात् संप्रसारणम् इत्यादि। जाग्राढि। अजाग्रहीत्। अजाग्रट्। अजाग्रहीः। अजाग्रट्। यथा मूलं तु जर्गृहीति। जरिगृहीति। जरीगृहीति। जर्गर्ढि। जरिगर्ढि। जरीगर्ढि। जर्गृढः३। जर्गृहति३। जर्गृहीषि३। जर्घर्क्षि३। जर्गृढः३। जर्गृढ। जर्गृहीमि३। जर्गर्ह्मि। जर्गृह्वः। जर्गृह्मः। जर्गृह्यात्३। जर्गृहीतु३। जर्गर्ढु३। जर्गृढात्३। जर्गृढाम्३। जर्गृहतु३। जर्गृढि३। जर्गृढात्३। जर्गृढम्३। जर्गृढ३। जर्गृहाणि३। जर्गृहाव३। जर्गृहाम३। अजर्गृहीत्३। अजर्घट्३। अजर्गृढाम्३। अजर्गृहुः३। अजर्गृहीः३। अजर्घट्३। अजर्गृढम्३। अजर्गृढ३। अजर्गृहम्३। अजर्गृह्व३। अजर्गृह्म३। अजर्गर्हीत्३। अजर्गर्हिष्टाम्३। अजर्गर्हिषुः३। अजर्गर्हीष्टामिति ("ग्रहोऽलिटि"[2] दीर्घस्तु न भवति एकाच इत्यनुवृत्तेरिति हरदत्तोक्तेः।

भाष्येऽप्युक्तम्—द्विःप्रयोगे वापि द्विर्वचने न दोषः ग्रहिणाऽङ्गं विशेषयिष्यामः ग्रहेरङ्गादिति। कैयटोऽप्याह—एकस्यैवाङ्गस्य समुदायस्य न तु पृथगवयवयोः। समुदायस्य प्राधान्यात् प्रधाने चार्थसम्प्रत्ययात् तत्र तृचो जरीग्रहीत्यङ्गं न ग्रहिः। अत्र, विषयेऽङ्गत्वव्यभिचाराद् विशेषणज्ञानसामर्थ्यात् यथाश्रुतरूपाङ्गीकरणीयमिति। न चैतद् यङन्तमात्रविषयम् यङ्लुगन्तेऽपि तुल्यन्यायत्वात्।

अत्र जरीग्रहीतित्यत्र यङन्तात्तृच अल्लोपयलोपयोः कृतयोः दीर्घो न भवति ग्रहे' विहितस्यार्धधातुकस्येटः इति विहितविशेषणाश्रयणात्। इदन्तु यङन्ताद्विहितम्,

१. अभ्यस्तत्वादिति क० पु०।

२. ग्रहोऽलिटीत्यारभ्य—दीर्घो न भवतीत्यादि क० पु०।

न तु ग्रहेरिति परिहारान्तराभिधानम्, तदपि यङन्तमात्रे उपायान्तरपरम्, न त्वेकाजङ्ग-विशेषणपक्षसंकोचकं प्रमाणाभावात्। अस्तु वा समुच्चयः। तेन ग्राहितमित्यादौ न भविष्यति। एतेन विहितविशेषणांशेऽपि द्विःप्रयोगरूपत्वात् द्विर्वचनस्य द्विरुक्तोऽपि समुदायः ग्रहिरिति यङ्लुगन्ते दीर्घो भवतीति माधवोक्त प्रत्युक्तम्।

जर्गृधीति। गृध। यङ्लुक्, द्विर्वचनम्. उरदत्त्वम्, हलादिः शेषः। जरिगृधीति जरीगृधीति। जर्गर्द्धि। जर्गृद्धि ३। अत्र "झषस्तथो." (८।२।४०) इति तस्य धः। "झलां जश् झशि" (८।४।५३) धस्य दः। जर्गृधति। "अदभ्यस्तात्" (७।१।४) इत्यत्। सिपीटि जर्गृधीषि ३। ईडभावे जर्घर्त्सि ३। गुणः भष् 'खरि च' (८।४।५५) इति चर्त्वम्। जर्गृद्धः ३। जर्गृद्ध ३। जर्गृधीमि ३। जर्गर्धिम जर्गृध्वः ३। जर्गृध्मः ३। जर्गृध्यात् ३। जर्गृधीतु ३। ईडभावे जर्गर्द्धु ३। जर्गृद्धाद् वा ३। जर्गृद्धाम् ३। जर्गृधतु ३। जर्गृद्धि ३। जर्गृद्धात् ३। जर्गृद्धम् ३। जर्गृद्ध ३। जर्गृधानि ३। जर्गृधाव ३। जर्गृधाम ३। अजर्गृधीत् ३। लङि ईडित्यादि। अजर्गृध् त् इति स्थिते ईडभावे "पुगन्त" (७।३।८६) इति गुण। "हल्ङ्याब्भ्य." (६।१।६८) इति तिलोपः। "एकाचः" (८।२।३७) इति भष्भावो गकारस्य[1] धकारः। "झलां जशोऽन्ते" (८।२।३९) इति धस्य दः। तस्य "वाऽवसाने" (८।२।५६) इति चर्त्वे तकार इत्यर्थः। "रात्सस्य" (८।२।२४) इति नियमान्न संयोगान्तलोपः। अजर्घर्त्। अजरिघर्त्। अजरीघर्त्। अजर्गृद्धाम् ३। अजर्गृधुः ३। "सिजभ्यस्त" (३।४।१०९) इति झेर्जुस्। सिपीटि अजर्गृधीः। ईडभावे "दश्च" (८।२।७५) इत्यादि। गृध्। द्वित्वम् उरत्, हलादिः शेषः "कुहोश्चुः" (७।४।६२) रुगादिः सोर्हल्ङ्याब्दिलोपः। "पुगन्त" (७।३।८६) इति गुणः। भष्भावः। धकारस्य जश्त्वेन दकारः "दश्च" (८।२।७५) इति रुत्वम् "रोरि" (८।३।१४) इति लोपः। "ढ्लोपे" (६।३।१११) इति दीर्घः। विसर्जनीयः। अजर्घाः ३। रुत्वाभावे अजर्घर्त् ३। अजर्गृद्धम् ३। अजर्गृद्ध ३। अजर्गृधम् ३। अजर्गृध्व ३। अजर्गृध्म ३। अजर्गर्धीत् ३। जर्गर्धामास ३। जर्गर्धिता ३। जर्गृध्यात् ३। जर्गर्धिष्यति ३। अजर्गर्धिष्यत् ३ इत्यादि ज्ञेयम्।

अत्र केचित् यङ्लुक् छान्दस इत्यातिष्ठन्ते। तेषामयमाशयः—"हुश्नुवोः सार्वधातुके" (६।४।८७) इत्यत्र हुश्नुग्रहणं यङ्लुकश्छान्दसत्वमभ्युपगम्य प्रत्याचक्षाणस्य वार्त्तिकृतो वचनाद्विशदः।

तथा हि हुश्नुग्रहणमनर्थकम्, अन्यस्याभावात्। अत्र ह्यनेकाचोऽसंयोगपूर्वस्यो-वर्णस्य यण् भवति। क्ङित्यचि सार्वधातुके इत्येव सिद्धम्, नार्थो हुश्नुग्रहणेन। याति वातीत्यत्राङ्ङित्वात्, यात इत्यात्रानजादित्वात्, यान्तीत्यादावनुवर्णान्तरत्वात्, युवन्ती-त्यादावेकाच्त्वात् प्रोर्णुवन्तीत्यादौ संयोगपूर्वकत्वात्। न प्रसङ्गः योयुवतीत्यत्र, तर्हि

१. ग्रहेर्विहितस्येत्यारभ्य—प्रत्युक्तमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

प्रसङ्गः। यङ्लुगन्तार्थमिति चेत्, आर्धधातुकत्वात् सिद्धम्। छान्दसो यङ्लुक्। तत्र छन्दसि आर्धधातुकत्वादेव न भविष्यति। 'यङोऽचि च" (२।४।७४) इति चकारेण छन्दसीत्यनुकृष्यते इति तदभिप्रायः। भाष्यकारस्त्वेतद्दूरीकृत्यास्मादेव ङ्श्नुग्रहणाद् ज्ञापकात् क्वचिद् भाषायामपि यङ्लुगित्याश्रित्य बेभिदीति चेच्छिदीति इत्यादीनां कियताञ्चित् सिद्धिमाह स्म। छन्दसीति च लुग्विधावनुवर्तते इति जयादित्याचार्यास्तु मन्यन्ते। यदि ज्ञापकादपि भाषायां यङ्लुगस्तीत्यभिमतम्, अलं तर्हि छन्दसीत्यनुवृत्त्या। प्रयोगाश्च यथाभिमत व्यवस्थास्यन्ते इति काशिकाकारसम्मत्या भाषायामपि यङ्लुगस्तीति। तेन केचिद् महाकविप्रयुक्ताः यङ्लुगन्ताः शिष्टप्रयोगमनुसृत्य प्रयोक्तव्या इत्याह—प्रयोगानुसारादिति। चान्द्रे तु यङ्लुग्भाषाविषये एवेत्युक्तमिति सर्वमकलङ्कम्।

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमद् यङ्लुग् यथा प्रक्रिया'।। इति।

।। इति यङ्लुगन्तप्रक्रिया ।।

यङ्लुक् ४५० ।।

# अथ सुब्धातुप्रक्रिया

**५०४. सुप आत्मनः क्यच् [ ३।१।८ ]**

**एषितुरात्मसंबन्धिन इषि कर्मणः सुबन्तादिच्छायां क्यच् प्रत्ययो वा स्यात् । "सुपो धातुप्रातिपदिकयोः" ( ७।४।७१ ) इति सुपो लुक् ।**

---

॥ अथ सुब्धातुप्रक्रिया ॥

सुप । अत्रात्मशब्दः परव्यावृत्तिपरः स्वशब्दपर्यायः । न चेतनवाचकः सर्वस्याप्यात्मसंबन्धित्वाव्यभिचारेणानर्थक्यापत्तेः । अत्रापि कर्मणः इच्छायां वा इत्यनुवर्तते । सन्निधानाच्चेच्छां प्रत्येव कर्मत्वं गृह्यते । सुबन्तात् कर्मणः इच्छायां वाच्यायाम्, तच्चेत् सुबन्तमात्मनः स्वस्य सम्बन्धि भवति । कस्य स्वस्येत्यपेक्षायामिच्छया[1] तत्कर्तुः सन्निधापित्वात्तस्यैवैषितुरात्मनः संबन्धीति विज्ञायते इत्यालोच्य व्याचष्टे—एषितुरित्यादि । न चैवमात्मनः पुत्र परस्य दासमिच्छतीत्यत्रापि सुबन्तस्यात्मसंबन्धित्वात् प्रसङ्गः । नात्र यथाकथञ्चिदात्मसंबन्धि (त्वं विवक्षितं[2] किं तर्हि—इष्यमाणमेव रूपमात्मसंबन्धित्वेन) यदेष्यते तदा प्रत्ययः । सुप्ग्रहणं किम् ? महान्तं पुत्रमिच्छतीत्यत्र मा भूत् । कथ पुनः सति सुब्ग्रहणे न भवति ? उच्यते, यदा महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वेन समुदायः कर्म, तदा प्रत्ययग्रहणपरिभाषया समुदायो न सुबन्तः । यदाऽप्यवयवयोरेव पृथक् कर्मत्वम्, तदाऽप्यत्रयत्रान्न भवति, सापेक्षत्वेनासामर्थ्यात्[3] ।

समर्थः पदविधिः" ( २।१।१ ) इति चोक्तम् । सति च सुब्ग्रहणे पदविधिरयं सम्पद्यते नान्यथेति । न तर्हीदानीमिदं भवति महापुत्रीयतीति । भवति च यदेकं वाक्यं महान् पुत्रो महापुत्रस्तमिच्छतीति । आत्मनः किम् ? राज्ञः पुत्रमिच्छतीति । शत्रोर्मरणमिच्छतीति । यत्तु[4] राज्ञः पुत्रमिच्छतीत्यत्रासामर्थ्यान्न भविष्यतीति भाष्ये उक्तम् तत्प्रौढिवादमात्रम् । इष्यमाणा हि स्वत एव नित्यमन्यदपेक्षते इति नैतावता अस्त्यसामर्थ्यम् । अत एव वृत्तावेतत्प्रत्युदाहृतमिति माधवः । उच्यते, नहि शक्यं पदमत्राश्रीयते, किं तु सुबन्तमिति । अन्यथा समस्तस्य समासे समर्थवति सा न प्रवर्तेत । क्यचः ककारो "नः क्ये" ( १।४।१५ ) इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थो न स्वरार्थः, प्रत्ययस्वरेण धातुस्वरेण वा तत्सिद्धेः । अकारस्तु समिधको दृषदक इत्यल्लोपस्य स्थानिवद्भावः ।

---

१. इच्छन्ति इति क० पु० ।

२. त्वं विवक्षितमित्यारभ्य—संबन्धित्वेनेत्यन्तो नास्ति क० पु० ।

३. असमर्थत्वादिति ख० पु० ।

४. यत्तु राज्ञः इत्यारभ्य—माधव इत्यन्तो रेखाङ्कितो नास्ति क० पु० ।

## ५०५. क्यचि च [ ७।४।३३ ]

क्यचि च परे अवर्णस्य 'ई' आदेशः स्यात् । धातुत्वाल्लडादयः । आत्मनः पुत्रमिच्छति पुत्रीयति । "वान्तो यि प्रत्यये" ( ६।१।७९ ) । गव्यति । नाव्यति । त्वद्यति । मद्यति । युष्मद्यति । अस्मद्यति । "हलि च" ( ८।२।७७ ) । गीर्यति । पूर्यति । दीव्यति । अदस्यति । "रीङ् ऋतः" ( ७।४।२७ ) कर्त्रीयति । "क्यच्व्योश्च" ( ६।४।१५२ ) गार्गीयति ।

---

सुपो लुगिति । क्यजन्तस्य "सनाद्यन्ता धातवः" (३।१।३२) इति धातुत्वादिति भावः ।

आत्मनः पुत्रमिच्छतीति । पुत्रो मे स्यादितीच्छतीत्यर्थः । पुत्रीयतीति । पुत्रमिति द्वितीयान्तात् क्यचि "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" (प०) इति वा "अकृतव्यूहाः पाणिनीयाः" (प०) कृतमपि शास्त्रं निवर्तयन्तीति च सन्धिकार्यरहितस्यामो लुक् । "क्यचि च" (७।४।३३) इतीत्वम् । लटस्तिप् शप् । "अतो गुणे" (६।१।९७) पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् । अतो लोपः । अपुत्रीयीत् । प्रत्ययान्तत्वादाम् । पुत्रीयामास । पुत्रीयिता । पुत्रीय्यात् । पुत्रीयिष्यति । अपुत्रीयिष्यत् । गव्यतीति । अवर्णाभावान्नेत्त्वम् । लुङि अगव्यीत् । क्यचि वान्तादेशे कृते सन्निपातपरिभाषया "यस्य हलः" (६।४।४९) इति यलोपो न भवति । अल्लोपस्य स्थानिवत्त्वात् "वदव्रजहलन्तस्याचः" (७।२।३) इति वृद्धिर्न । "नेटि" (७।२।४) इति निषेधाद्वा । गोसमानाक्षरान्तादिति भाष्ये प्रकृतिपरिगणनमुक्तम् । तत्र वाच्यतीत्याद्यसिद्धिप्रसङ्गान्नायं स्थितः पक्ष इति कैयटाद्युक्तेरन्यत्रापि क्यचमुदाहर्तुमुपक्रमते । नाव्यतीति । त्वद्यति । मद्यतीति । त्वां मां वेच्छतीति सुपो लुक्यपि "प्रत्ययोत्तरपदयोश्च" (७।२।९८) इत्येकार्थयोः युष्मदस्मदोर्मपर्यन्तस्य त्वमौ । विभक्तिपरत्वाभावान्न शेषे लोपादि ।

युष्मद्यतीत्यादि । युवामावाम्, युष्मानस्मान् वेच्छतीत्यर्थे क्यचि—एकार्थत्वाभावान्न त्वमौ । विभक्तिपरत्वाभावान्न "युवावौ द्विवचने" (७।२।९२) गीर्यतीति । गिरतेर्विच्यपि "ॠत इद्धातोः" (७।१।१००) इतीत्त्वे भवत्ययं रेफान्तो धातुर्हल्परश्चेति दीर्घः । दीव्यतीति । दिवमिच्छतीत्यर्थः । ननु "हलि च" (८।२।७७) इत्यत्र वृत्तावुक्तं धातोरित्येव दिवमिच्छति दिव्यति । तत्कथं दीर्घ उदाहृतः ? यत्तु प्राचोक्तम्—दिवेरौणादिके क्विपि कृते च दिव्'शब्दोऽपि धातुरेवेति व्युत्पत्तिपक्षमाश्रित्याचार्येण

---

१. विच् इति नास्ति क० पु० ।

## ५०६.     नः क्ये [ १।४।१५ ]

क्यचि क्यङि क्यषि परे नान्तमेव पदसंज्ञं स्यात्, नान्यत् । नलोपः राजीयति । नान्तमेवेति नियमान्नेह—वाच्यति । "अकृत्सार्वधातुकयोः" ( ७।४।२५ ) इति दीर्घः । कवीयति ॥

---

वृत्तिकृता स्वव्युत्पत्तिपक्षमाश्रित्येत्यविरोध इति । तदसत्, क्विबन्तत्वे "च्छ्वोः शूड्" ( ६।४।१९ ) इत्यूठ्प्रसङ्गात् । विजन्तत्वे तूपधागुणः स्यात् । न चोणादिषु बहुलवचनादेवोठ् न भविष्यतीति वाच्यम् । एवं हि "दिव उत्" ( ६।१।१३१ ) इत्यत्र यदुच्यते तपरकरणमूठो निवृत्त्यर्थं द्युभ्याम्, द्युभिरिति । परत्वादूठ् प्राप्नोतीति तद्विरुध्यते । न चाकरे दिवेरौणादिकः क्विप् क्वाप्युपलभ्यः । अत एव धातुवृत्तिषु दिवेर्दिविरिति डिविप्रत्ययान्तोऽयं व्युत्पादितः । तथा चेह वकारान्तस्याधातुत्वाद्दीर्घोदाहरणमयुक्तम् । ह्रस्वपाठ एव तु ज्यायान् ।

अदस्यतीति । अमुमिच्छतीत्यर्थे क्यचि विभक्तेर्लुका लुप्तत्वात् त्यदाद्यत्वाभावः । सान्तत्वान्न मुत्वम् । "नः क्ये" ( १।४।१५ ) इति नियमान्न पदान्तकार्यम् । कर्त्रीयतीति । कर्तारमिच्छतीत्यर्थे "अकृत्सार्व" ( ७।४।२५ ) इति दीर्घं बाधित्वा "रीङ् ऋतः" (७।४।२७) इति तपरत्वाद्दीर्घान्तानुकरणे कर्तॄयतीत्येव भवति । अधातुत्वान्न ऋत इत् । एवं कॄग्रोरप्यनर्थकयोरनुकरणे । सार्थकयोस्तदनुकरणे कीर्यति[1] गीर्यतीति भवितव्यम् । क्यच्व्योश्चेति । हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परे इति । तद्धिते व्याख्यातमेतत् ।

गार्गीयतीति । गर्गशब्दाद् गोत्रापत्ये "गर्गादिभ्यो यञ्" ( ४।१।१०५ ) आदिवृद्धिः । "यस्येति च" ( ६।४।१४८ ) इत्यलोपः । क्यचि कृते यस्य लोपः । अकारस्य "क्यचि च" ( ७।४।३४ ) इतीत्वम्[2] ।

"नः क्ये" ( १।४।१५ ) इति सामान्यग्रहणमित्याह—क्यचि क्यङि क्यषि परे इति । "संज्ञायां समज" ( ३।३।९९ ) इति विहितस्य क्यपस्तु ग्रहणं न भवति, प्रयोजनाभावात् । न च मन्येति नलोपः प्रयोजनम्, धातुत्वेनाप्रातिपदिकत्वात्, सुबन्तमित्यनुवृत्तेर्वा । तत्र क्यजादेः सुबन्तादेव विधानात् प्रत्ययलक्षणेन सिद्धं पदत्वमिति सामर्थ्यान्नियमार्थमेतदित्याह—नान्तमेवेति । नान्तं क्य एवेति विपरीतस्तु नियमो न भवति । "न ङिसंबुद्ध्योः" ( ८।२।८ ) इति निषेधारम्भात् ।

नलोप इति । "नलोपः प्रातिपदिकान्तस्य" ( ८।२।७ ) इत्यनेन । राजीयतीति । "क्यचि च" ( ७।४।३३ ) इतीत्वे नलोपस्तु नासिद्धः, "नलोपः सुप्स्वर" ( ८।२।२ ) इति नियमात् । वाच्यतीति । अपदान्तत्वान्न कुत्वम् ।

---

१. कॄयतीति क० पु० ।

२. चेत्वमिति क० पु० ।

**५०७. क्यस्य विभाषा [ ६।४।५० ]**

हलः परेषां क्यच्क्यङ्क्यषां लोपो वा स्याद् आर्धधातुके । समिधिता । मान्ताव्ययेभ्यः क्यच् नेष्टः । किमिच्छति । उच्चैरिच्छति ।

**५०८. अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु [७।४।३४]**

अशनादयः क्रमाद् बुभुक्षाद्यर्थेषु निपात्यन्ते क्यचि । अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ? अशनीयति ।

---

क्यस्य विभाषा । क्यच्क्यङ्क्यषामिति । क्ये इति निर्देशस्याविशेषादेवमुक्तम् । क्यषस्तु हलन्तादसम्भवः । नान्तादपि क्यषि नलोपेन भाव्यमित्यसंभव एव । तस्मादिह क्यच्क्यङोरेव ग्रहणम्, न क्यष इति स्थितम् । समिधितेति[1] । समिधमिच्छति । यलोपे कृते जश्त्वं न भवति—अपदान्तत्वात् । उपधागुणोऽपि न भवति । "न धातुलोप" (१।१।४) इति निषेधात् । दृषदको युष्मदक इत्यादावपि अतो लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । क्यस्येत्ययमवयवलोपो न समुदायलोप इति यङ्लुगन्ते वर्णितम् । तेन 'युष्मदीत्, अस्मदीत्[2]' इत्यादौ "अतो हलादेः" (७।२।७) इति वृद्ध्यभावोऽप्यनुसन्धेयः ॥

मान्ताव्ययेभ्य इति । मान्तमिह प्रातिपदिकं विवक्षितम्, न सुबन्तम् । अन्यथा पुत्रमिच्छतीत्यादावेव न स्यात् । इह च स्यात् कानिच्छति इमानिच्छतीति । किमीच्छतीति वाक्यमेव भवतीति भावः । उच्चैरिच्छतीति । अधिकरणप्रधानस्याप्यस्य यदा आधेये वृत्तिस्तदा कर्मत्वात् प्रसङ्गः ।

अशनायेति । निपात्यन्ते इति । तत्राशनधनयो. क्यचोऽत्वापवाद आत्वं निपात्यते इत्याकरः । यद्यपि दीर्घेणापि सिद्धेरीत्वाभावनिपातनेऽपि न क्षतिः, तथाप्यभावापेक्षया भावस्य लघुत्वादात्वमेव निपात्यते । उदकस्य चोदन्नादेशो निपात्यते । बुभुक्षाद्यर्थ इति तु विषयसप्तमी । एष्वर्थेषु गम्यमानेष्वित्यर्थः । भोक्तुमिच्छा बुभुक्षा । पातुमिच्छा पिपासा । गर्धो[3] लोभातिशयः । अशनायतीति । धनायतीति[4] । यस्तदानीमेव बुभुक्षमाणोऽशनमिच्छति, यश्च पातुमुदकमिच्छति, यश्च सत्येव धने भूयो धनमिच्छति तत्रोदाहरणानि ।

---

१. समिधितीति क० पु० ।
२. अस्मदीत्यादेति क० पु० ।
३. गर्धोऽत्रो नातिशय इति क० पु० ।
४. अशनायतीति क० पु० ।

५०९. अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि [३।१।५१]

एषां क्यचि परेऽसुगागमः स्यादात्मप्रीतौ । "अश्ववृषयोर्मैथुनेच्छाया-मिष्यते" (इ०) अश्वस्यति वडवा । वृषस्यति गौः । "क्षीरलवणयोर्लालसायाम्" (वा०) । क्षीरस्यति बालः । लवणस्यति उष्ट्रः । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुग् वागम इति परे । आदेशप्रत्ययेतरत्वान्न षः । दधिस्यति । दध्यस्यति ।

---

यस्तु तदानीं सुहितमनाः अप्यशनमुत्तरार्थमिच्छति, यश्च स्नातुमुदकमिच्छति । यथा दरिद्रः सन् धनमिच्छति तत्राशनीयति । उदकीयति । धनीयतीति प्रत्युदाहरणान्यूह्यानि ।

अन्ये त्वाहुः—अशनीयतीत्यादिषु अविवक्षितप्रकृत्यर्थं बुभुक्षादिकमेवार्थः । तथा च भारविः प्रयुक्ते किमु धनं धनायितुमिति । "उदन्या तु पिपासा तृडिति" निघण्टुश्च ।

अश्वक्षीरवृष । अश्ववृषयोरित्यादि । आत्मप्रीतावित्यपनीयैवं सूत्रं न्यसनीयमित्यर्थं इति माधवः । मैथुनेच्छायामिति । अश्ववृषविषयेच्छा यदा मैथुनार्था भवति, न त्वारोहणार्था, तदैवासुगित्यर्थः । अश्वस्यति वडवेति । मैथुनार्थमश्वमिच्छतीत्यर्थः । एवं वृषस्यतीत्यत्रापि । अन्ये तु मैथुनेच्छापरत्वात् प्रयोगस्याश्ववृषग्रहणमतन्त्रं परित्यक्तपरित्यक्ता मैथुनेच्छैवेत्यर्थं इत्याहुः । तथा च मनुष्यविषयेऽपि प्रयुज्यते इति रामो वृषस्यतीमिति । निघण्टुरपि वृषस्यन्ती तु कामुकीति ।

लालसायामिति । तृष्णातिरेको लालसा अभ्यवजिहीर्षातिशयः । क्षीरलवणविषय इच्छातिरेको यदाऽभ्यवहारार्थो न तु होमाद्यर्थस्तदेत्यर्थः । क्षीरस्यतीत्यादि । क्षीरं लवणं वातिशयेनाभ्यवहर्तुमिच्छतीत्यर्थः । अत्रोदाहरणेषु सर्वत्र प्रकृत्यसुगागमयोः सवर्णदीर्घं बाधित्वा "अतो गुणे" ( ६।१।९७ ) इति पररूपं भवति । असुकोऽकारोच्चारणं तु आपृणास इत्यादौ पूर्वत्र "आज्जसेरसुक्" ( ७।१।५० ) इति विहिते चरितार्थमिति । "नः क्ये" ( १।४।१५ ) इति नियमान्न रुत्वादिपदकार्यम् ।

सर्वप्रातिपदिकानामिति । अत्र भाष्ये द्वाविमावागमौ प्रकृत्यदध्यस्यति, मध्वस्यति । दधिस्यति । मधुस्यति—इत्येतदर्थमित्यभिधानाद् दधिमधुशब्दावेवागमिनाविर्त्येके । अन्ये तु सर्वग्रहणात् बहुवचननिर्देशाच्चानियमः । दधिमधुग्रहणं तूदाहरणमात्रमित्याहुः । माधवस्त्वाह—अत्र मते दध्यस्यति मध्वस्यति इत्येवमर्थमित्येवं शब्दः स्वार्थं तु पुष्यतीति । एवं वदन् स द्वयोरेवागमित्वमभिप्रैयाय । "इणकोः" (८।३।५७) इति षत्वमाशङ्क्याह— आदेशेत्यादि । दध्यस्यतीति । असुक्पक्षे यण् ।

## ५१०. काम्यच्च [ ३।१।९ ]

इषिकर्मणः सुबन्तादात्मेच्छायां काम्यच् प्रत्ययो वा स्यात् । काम्यचोऽधातुविहितत्वेनार्धधातुकत्वाभावात् एव गुणाप्राप्तेः कित्त्वप्रयोजनाभावात् ककारस्य नेत्त्वम् । पुत्रकाम्यति । "सोऽपदादौ" ( ८।३।३८ ) यशस्काम्यति । "इणः षः" ( ८।३।३९ ) सर्पिष्काम्यति । किं काम्यति । अव्ययत्वान्न सः स्वःकाम्यति ।

---

काम्यच्च । पूर्वेण तुल्यमेतत् । चित्करणमिह पुत्रकाम्यतीत्यत्र सति शिष्टमपि स्वरं बाधित्वा चित्स्वर एव यथा स्यादिति । अथ कस्यापि[1] "लशक्वतद्धिते" (१।३।८) इतीत्संज्ञा कस्मान्न स्यादिति शङ्कामपनुदति[2] । काम्यच इत्यादि । काम्यचः ककारस्य नेत्त्वमित्यन्वयः । तत्र हेतुः प्रयोजनाभावादिति । ःग्निकाम्यतीत्यत्र गुणप्रतिषेधः प्रयोजनं स्याद् नेत्याह—अनार्धधातुकत्वेनेत्यादि । सार्वधातुकं तावदयं न भवति । अतिङ्त्वादशित्वाच्च । आर्धधातुकमपि न भवति धातोरित्यविधानात् । तेन यथान्वदिडादि न भवति, तथा गुणोऽपि न भविष्यतीत्यर्थः ।

न चोपयट्[3] काम्यति, वाक् काम्यति इत्यादौ क्ङितीति संप्रसारणप्रयोजनम्, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति माधवः । पुत्रकाम्यतीति । आत्मनः पुत्रमिच्छति–इति काम्यचि कृते "सनाद्यन्ता" ( ३।१।३२ ) इति धातुत्वात् सुब्लुगादि पूर्ववत् ।

सोऽपदादाविति । विसर्जनीयस्य स इत्यर्थः । यशस्काम्यतीति । आत्मनो यश इच्छति द्वितीयान्ताद् यशस्शब्दात् काम्यचि कृते "नः क्ये" ( १।४।१५ ) इति नियमस्याविषयोऽयमित्यन्तर्वर्तिविभक्त्या पदान्तत्वात् सस्य रुत्वं विसर्गः । तस्य "विसर्जनीयस्य सः" ( ८।३।३४ ) इत्यस्यापवादे "कुप्वोः ᳲकᳲपौ च" ( ८।३।३७ ) इत्यस्मिन् प्राप्ते तदपवादः पुनरनेन सो भवतीति भावः । सर्पिष्काम्यतीत्यत्रापि तर्हि स्यात्, अत आह—इणः ष इति । मान्ताव्ययेभ्यः क्यच् नेष्यते इत्युक्तम् । काम्यच् पुनस्तेभ्योऽपि भवतीति दर्शयति—किं काम्यतीति । अनुस्वारपरसवर्णविकल्पौ । अव्ययत्वान्न षः इति । "सोऽपदादौ" ( ८।३।३८ ) इत्यत्र "अनव्ययस्येत्युपसंख्यानम्" इति भावः ।

स्वःकाम्यतीति । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्राधान्यादेषितुः कर्मत्वेन योगः । दोषामन्यमहरितिवत् ।

---

१. कस्यापीति नास्ति ख० पु० ।

२. अनुवदतीति क० पु० ।

३. नचोपट् पयट् इति क० पु० ।

## ५११. उपमानादाचारे [ ३।१।१० ]

उपमानात् कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्याद्वा । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस्य कर्मता । पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति द्विजम् । "अधिकरणाच्च" ( वा० ) प्रासादयति कुट्याम् ।

उपमानादिति । कर्मणः सुप इति च वर्तते । तत्र प्रत्ययार्थस्याचारक्रियायाः सन्निधानात् तदपेक्षयोपमानस्य कर्मणा विज्ञायते इत्याशयेनाह—उपमानात् कर्मण इत्यादि । उपमीयतेऽनेनेत्युपमानम् । आचरणमाचारः । क्यच् स्याद्वेति । अनन्तरोऽपि काम्यच् अत्र न संबध्यते क्यचः स्वरितत्वसामर्थ्यात् । पुत्रमिवाचरतीति मानयतीत्यर्थः । प्रासादीयतीति । उपमेये सप्तमीश्रवणात् उपमानमपि सप्तम्यन्तं कर्मविवक्षाया तु कुट्या-मिति सप्तमीप्रयोगो न स्यादित्यारम्भः ॥ कर्तुरिति । आचार इति वर्तते तदपेक्षयैवोप-मानस्य कर्तृत्वं "विज्ञायते"। चकारोऽन्वाचये। समुच्चयार्थे हि तस्मिन् क्यङ् सलोपावित्यवक्ष्यत् । तेन कर्तुः क्यङ् सर्वत्र भवति । यत्र क्वचित् सकारः सभवति तत्र सलोपोऽपि भवति । न तूभौ परस्परसन्नियोगशिष्टावित्याशयेन व्याचष्टे—क्यङ् स्यादित्यादि ।

सलोप इति । सलोप इति यद्येकपदं ततो हंसायतीत्यत्रापि स्यात् । अतः सेति लुप्तषष्ठीकं पृथक् पदम्, तेन कर्तृविशेषणत्वात्तदन्तविधौ सान्तरस्य कर्तुर्लोपो विधीयते । स चालोऽन्त्यस्य सस्यैव पर्यवस्यतीत्याशयेन व्याचष्टे–सान्ते सलोपश्चेति । कर्तुरिति-पञ्चम्यन्तमपि प्रकृतमर्थात्[1] सलोपविधौ षष्ठ्या[3] विपरिणम्यते । सान्त इति तस्यैवा-धारत्वविवक्षया सप्तमी ज्ञेयः ।

कृष्णायते इति । ङित्वादात्मने पदम् । कथं तर्हि "क्षीरोदीयन्ति[2] सद्यः । सकलजलधयो वासुकीयश्च नागः" इति । आत्मानं क्षीरोदमिवाचरन्तीत्यर्थविवक्ष-याचारे क्यच् भविष्यति । राजायते इति । पदत्वान्न लोपः । दीर्घः । कुमारायते इति । पुंवद्भावे दीर्घः । अत्र वेत्यनुवृत्तं क्यङिव सलोपेनापि संबध्यते । सा च व्यवस्थित[3]-विभाषा । तेन क्वचिन्नित्यम् क्वचित्तु वेत्याह्— ओजस इत्यादि । ओजायते इति । ओजः शब्दो वृत्तिविषये तद्वति वर्तते। अप्सरायते इति । अप्सरस इवाचरति । अत्र पयो-ग्रहणमोजोऽप्सरो व्यतिरिक्तानां सान्तानामन्येषामप्युलक्षणम् । तेनेहापि विभाषा भवति । यशायते । यशस्यते । अत एव सलोपः वा ओजोऽप्सरसोर्नित्यमिति सामान्येन वार्त्तिकम् ॥

१. प्रकृतसमर्थाविति क० पु० ।

२. क्षीरोदीयते इति क०पु० ।

३. तत्रेत्यधिक क० पु० ।

५१२. कर्तुः क्यङ् सलोपश्च [ ३।१।११ ]

उपमानात् कर्तुः सुप आचारेऽर्थे क्यङ् स्यात् सान्ते सलोपश्च। "अकृत्सार्वधातुके" (७।४।२५) इति दीर्घः। कृष्ण इवाचरतीति कृष्णायते। राजायते। "क्यङ्मानिनोश्च" (६।३।३६) इति पुंवत्। कुमारायते वृद्धा। "ओजसोऽप्सरसो नित्यं पयसस्तु विभाषया" (वा०)। सलोपः। ओजायते। अप्सरायते। पयायते। पयस्यते। सुपूर्वस्य मनसो नित्यम्। सुमनायते "आचारे गल्भक्लीवहोडेभ्यः क्विब्वा" (वा०)। क्विपः सर्वस्य लोपः गल्भादेः क्वावपि तङानौ। गल्भायते। गल्भते इत्यादि। "सर्वप्रातिपदिकेभ्यः क्विप् आचारे इत्येके" (वा०)। कृष्णति। स्वति। स्वामास। स्वाञ्चकार।

---

आचारे। गल्भ धार्ष्ट्ये। क्लीब अधार्ष्ट्ये। होड्[1] अनादरे। इत्येते पचाद्यजन्ता इह निर्दिश्यन्ते। तत्राकारस्य वाक्येऽनुदात्तत्वानुनासिकत्वप्रतिज्ञानात् क्विबन्तादप्यात्मनेपदं भवतीत्याह—गल्भादेः क्वावपि तङानौ इति। गल्भायते इति। क्विप्सन्नियोग एवानुनासिकत्वप्रतिज्ञानात् क्यङ्पक्षे इकारस्य नेत्संज्ञा। गल्भते इति। क्विपः ककारस्य "लशक्वतद्धिते" (१।३।८) इतीत्संज्ञा वस्य 'हलन्त्यम्' (१।३।३) इति। "सनाद्यन्ता" (३।१।३२) इति धातुत्वाल्लडादयः। शप्।

यद्यपि गल्भादयो धातुष्वेवानुदात्तेतः[2] पठ्यन्ते तेभ्य एव गल्भते इत्यादि सिद्ध्यति। तेभ्य एव पचाद्यजन्तेभ्यः क्यङि गल्भायते इत्याद्यपि। तथापि[3] गल्भाञ्चक्रे[4] इत्यादौ प्रत्ययान्तत्वादाम् यथा स्यादित्येवमर्थं क्विप् विधीयते। यदा तु धातुभ्य एव लिड् विधीयते तदाऽमोऽभावात् जगल्भे। चिक्लीबे। जुहोडे इत्यादि भवति। एतच्च क्विब्विधानं प्रातिपदिकेभ्य एव न धातुभ्यः, भाष्यवार्त्तिकयोः सर्वप्रातिपदिकेभ्य इत्यनेनान्यथासिद्धिशङ्कमादित्याकरः। तदेव वार्त्तिकमुदाहरति-सर्वेत्यादि।[5] न केवलं गल्भादिभ्य एवापि तर्हि सर्वेभ्य प्रातिपदिकेभ्य इत्यर्थ इति व्याख्यातारः।

अत्र सर्वेभ्य इति वाच्ये प्रातिपदिकग्रहणात् प्रातिपदिकादेवायं क्विप् विधीयते न सुबन्तात्। तेन पदत्वाभावात् कृष्णतीत्यादौ शपि सवर्णदीर्घं बाधित्वा "अतो गुणे" (६।१।९७) इति पररूपं भवति। विधुरविभ्यां शपि गुणे "एङः पदान्तादति"

---

१. होतृ इति क० पु०।

२-३. धातु एव अनुदात्तेतश्चते इति क०पु०।

४. गल्भाञ्चक्रे इति क० पु०।

५. सर्वेत्यादि इति क० पु०।

( ६।१।१०९ ) इति न भवति । विधवति । स्वयति । तथा राजानतीति नलोपो न भवति । वाचति-इति जश्त्वकुत्वाद्यभावः । गवति-ग्रवङ् न भवति । दिवो द्यवति । दिव उन्न भवति । ऊठ् तु भवति । तेनास्मात् यङ्लुकि तसादौ देयूत इति भवति । मधुलेहति । गोदोहति ढत्वघत्वादि न भवतीति दिक् । येऽपि सर्वप्रातिपदिकेभ्य क्विपं विदधति[1] तैरपि गल्भाद्यनुक्रमणमात्मनेपदार्थमनुबन्धासङ्कुम[1] आदरणीयम् । स्वाश्वकारेति । प्रत्ययान्तत्वादाम् ।

आकरे तु प्रत्ययान्तादेकाच आम् नेष्टः । तथा ह्यनेकाच आम् वक्तव्यः इत्यत्र हरदत्तेन व्याख्यातम् । यथान्यासे हि कशब्दाद्[2] अशब्दाद् वा गादिभ्यश्चाचारक्विबन्तेभ्य एकाज्भ्योऽपि प्रत्ययान्तत्वादाम् प्रसङ्गः । चुलुम्पादिभ्यश्चाम्प्रत्ययान्तत्वादप्रसङ्गः । अतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनायानेकाच् ग्रहणं कर्तव्यमित्यर्थः । तत्र कशब्दस्य णलि "अचो ञ्णिति" (७।२।११५) इति वृद्धौ "आत औ णलः" (७।१।३४) । चकौ । अन्यत्र आतो लोपः । चकतुः । चकुः ।

माधवस्तु "ण्यल्लोपौ" (वा॰) इति वचनात् णलि वृद्धि बाधित्वाऽतो लोपात् चक इत्युदाजहार । अशब्दस्य णलि रूपम् आविति । अन्यत्र "अत आदेः" (७।४।७०) इति दीर्घत्वे "आतो लोप इटि च" (६।४।६४) । अतुः । उः इति । माधवादयोऽप्येवमेव प्रत्यपीपदन् ।

आचार्यास्तु—अनेकाज्ग्रहणमप्रत्ययान्तानां चुलुम्पादीनां सङ्ग्रहार्थमनत्वेकाचां प्रत्ययान्तानां व्यावृत्त्यर्थम् । सौत्रस्य प्रत्ययग्रहणस्यापनयने कारणाभावादित्याशयेनात्राप्यामन्तमुदाजह्रुः । अत्र क्विबन्तानां क्वचिद् विशेष उच्यते । आ इवाचरति । आति । "यमरम" (७।२।७३) इत्येट्सकौ । आसीत् । आसिष्टाम् । यथाकथंचित्[3] प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । मालेवाचरति मालाति । अमालासीत् । अमालासिष्टाम् । कवयति । सिचि वृद्धि इत्यत्र "अत इडातोः" (७।१।१००) इत्यतो धातोरित्यनुवृत्तेर्धातुरेव यो धातुरिति विज्ञानान्न नामधातोर्वृद्धिरिति कैयटहरदत्तवर्धमानमते गुणे अकवयात् ।

माधवस्तु इक्परिभाषारम्भपक्षे धात्वनुवृत्तेः केरप्यदर्शनादिगन्तनामधातावपि वृद्धिमुदाजहार । तन्मते अकवायीत् इति । कवयामास । कवयिता । "अकृत्सार्व" (७।४।२५) इति दीर्घः । कवीयात् । विरिव वयति । अवायीत् । विवाय । विव्यतुः । इरिव अयति । आयीत् । इयाय । ईयतुः । लक्ष्मीः । लक्ष्मयति । अलक्ष्म्यायीत् । लक्ष्मयाञ्चकार । श्रीः । श्रयति । शिश्राय । शिश्रियतुः । ईः । अयति । "इजादेश्च" (३।१।३६)

---

१. मासङ्कुम् इत्येव क॰ पु॰ ।

२. कशदशब्दाद्गादिभ्यश्चेति क॰ प्र॰ ।

३. रित्यत्रत्यारभ्य—तन्मते इत्यन्तो ( ) रेखाङ्कितो नास्ति क॰ पु॰ ।

## ५१३. भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः [३।१।१२]

भृशादिभ्यश्च्व्यर्थे भवत्यर्थे क्यङ् स्यात् न तु च्व्यन्तेभ्यः। अन्त्यहल्लोपः। अभृशो भृशो भवति। भृशायते। उन्मनायते। शश्वत्। शश्वायते। क्विबप्यत्रेति केचित्। भृशति। पक्षे च्विः। भृशीभवति।

---

इत्याम्। अयाञ्चकार। विधुः। विधवति। अविधावीत्। विधवाञ्चकार। उः। अवति। आवीत्। उवाय। ऊवतुः। अवाञ्चकार। पिता। पितरति। अपितारीत्। पितरामास। नृ। नरति। अनारीत्। ननार। ननरतुः। ऋ। अरति। "पाघ्राध्मा" (७।३।७८) इत्यत्र साहचर्यात् धातुपाठस्य एवार्तिर्गृह्यते। तेनास्य ऋच्छादेशो न। आरीत्। आर। अतुसादौ द्वित्वे धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणाद् ऋकारान्तलक्षणे गुणे अरतुः। अररिति भवतीत्येके।

अन्ये त्वभ्यासग्रहणेन ग्रहणात् उरदत्त्वहलादिःशेषाभ्यासदीर्घेषु आतो लोपे अतुरिति प्रत्ययमात्रमवशिष्यते इत्याहुः। भूः। भवति। अभावीत्। अभाविष्टाम्। बुभाव।

> अभिधानपदार्थाः ये स्वतन्त्राः लोकविश्रुताः।
> शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥

इति भूग्रहणेऽस्य[1] ग्रहणाभावात् सिचो लुक्, वुक्, अभ्यासात्वानि न भवन्ति। एवं पातेर्विजन्तादाचारे क्विपि पाति। आपासीत्। पिबादेशसिज्लुकोरभावः। एवमन्येष्वप्यूह्यम्। ऋ। अरति। आरीत्। अराञ्चकार। लृ। अलति। गोः। गवति। "अतो हलादेः" (७।२।७) इति वा वृद्धिः। अगवीत्। अगावीत्। जुगाव। स्वर्। स्वरति। फन। फनति। "अतोल्रान्तस्य" (७।२।२) इति नित्यं वृद्धिः। अस्वारीत्। अफालीत्। इदम्। इदामति। अड्। अड्ति। अण्। अणति राजानति। "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति दीर्घः।

न चात्र धातोरेव विहितः क्विप् गृह्यते इति शङ्कनीयम्। अस्य क्विपः ककारस्य सामान्यग्रहणादन्यस्य प्रयोजनस्याभावात् इति माधवोक्तेः। एवं च पयिमभ्भुक्तां[2] परमपि उपधागुणं बाधित्वाऽन्तरङ्गे क्विबाश्रये दीर्घे सति पयोनति। मयोनति। ऋभुक्षोणति इति भवितव्यम्। कौमारास्तु-अत्र क्यङो लोपं विदधति न क्विपं तेन क्विबाश्रयस्य दीर्घस्याप्रसङ्गात् गुणे सति पयेनतीत्युदाजह्रुः।

भृशादिभ्य इति। अत्राच्वेरिति पर्युदासात्तत्सदृशो गृह्यते। सादृश्यं चार्थद्वारकमभूततद्भावविषयत्वेनेत्याह—च्व्यर्थे इति। प्रसज्यप्रतिषेधे त्वच्वेरित्यनर्थकं

---

1. भूग्रहणेऽप्यस्य इति क० पु०।
2. पयिमभ्भुक्षाणामिति क० पु०।

यतो भवतियोगे च्विर्विधीयते तत्र भवतिनैव स्वार्थस्य भवनस्योक्तत्वात् न च्व्यन्तात् क्यङः प्रसङ्गः। एतदेवार्थसिद्धमनुवदन्नाह—न तु च्व्यन्तेभ्य.। एतेनाच्वेरित्येतत् भृशादीनां विशेषणं समानाधिकरणम्। सूत्रे चैकवचनं प्रत्येकं सम्बन्धविवक्षयेति सूचितम्। अत्र हल इत्यनेन भृशादीना विशेषणात्तदन्तविधौ हलन्तानामेषां लोपोऽलोन्त्यपरिभाषयाऽन्त्यस्य हल एव भवतीत्यालोच्य व्याचष्टे—अत्र हल्लोपश्चेति। तेन भृशादावनन्त्यस्य न भवतीत्यर्थः।

एतेन चकारोऽन्वाचये इत्युक्तं भवति। सन्नियोगे हि विज्ञायमाने भृशादिष्वहलन्तानां पाठोऽनर्थकः स्यादिति भाव.। भृशादिभ्य इति पञ्चम्यन्तमपि लोपविधौ स्थानषष्ठ्याः विपरिणम्यते। भृशादीनामन्त्यस्य[1] हलो लोप इति। अभृशो भृशो भवतीत्यनेनाच्व्यर्थं दर्शयति। उन्मनायते इति। अत्र मनसः सलोपः। अत्र तु उत्, अभिपूर्वो मनः शब्दः पठ्यते। तस्य सुमनायते। उन्मानायते। दुर्मनायते। अभिमनायते इत्यादौ मनस एव प्रत्ययस्तेनोदमनायत। उन्मिमनायिषते। उन्मनाद्य गतः इत्यादौ अद्द्वित्वल्यबादयः सोपसर्गस्य न भवन्ति।

एवं च न्मनायत इत्यादावुपसर्गः पृथक् पदम्। न चैवं "तिङ्ङतिङः" (८।१।२८) इति निघातप्रसङ्गः। 'सुत्रामन्त्रिते पराङ्गवत्स्वरे" (२।१।२) इत्यत्र मनस्युपसर्गे इति मनः शब्दे परे उपसर्गस्य पराङ्गवद्भावविधानात्। कथं पुनः समुदायस्य प्रकृतित्वेन पाठेऽप्येकदेशात्प्रत्ययो[2] भवति। उच्यते। चुरादिषु संग्रामयुद्धे इति पठ्यते स न पाठ्यः सग्रामशब्दात् युद्धवचिनः 'तत्करोति" इत्येव णिच्सिद्धेरिति नियमार्थः पाठो विज्ञायते। संग्रामयतेरेव सोपसर्गात् धातुसंज्ञानिमित्तः प्रत्ययो भवति नान्यस्मात् इति। ज्ञापनार्थो वा। सोपसर्गात् सघातात् धातुसंज्ञानिमित्ते प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते परिशिष्टादेव तु प्रत्यय इति। यत्त्वत्र हरदत्तेनोक्तम्-अनुदात्तेदयं संग्रामयतिरिष्यते ततश्चात्मनेपदार्थमनुबन्धमासङ्क्ष्यामीति पाठः स्यादिति कथं ज्ञापकं नियमो वा भवेदिति।

तन्माधवेनैव प्रत्युद्धृतम्। स्थाऽस्यानुदात्तत्वमपाणिनीयमिति पाठस्यैतदर्थतया न ज्ञापकत्वभङ्ग इति। भाष्यकैयटयोस्त्वनुदात्तेदयमिति स्थितम्। भृशादयो वृत्तौ प्रसिद्धाः। तत्र रेहच्छब्दः पठ्यते "स रहसि निर्घृणत्वे भिक्षाभिलापस्य च निवृत्तौ वर्तते इति गणवृत्तिः।" रेहायते। नृप। नृपायते। नृपश्चन्द्रः समुद्रश्च। वेहत्।[3] यतो वेहत् गर्भोपघातिनी। अवरायते। अवरो मूर्खः पुष्करश्च। रेहत् सरोपः। कन्यरायते। त्वचोऽभ्यन्तरे स्यूनतन्त्वाभया[4] संयुक्ता स्नायुः कन्यरा तद्वान् कन्यरः

१. हलो इति नास्तिक० पु०।
२. पाठेऽस्त्वेकदेशादिति क० पु०।
३. विहत् इति क० पु०।
४. भाया इति क० पु०।

५१४. लोहितादिडाज्भ्यः क्यष् [ ३।१।१३ ]

लोहितादेर्डाजन्ताद् चोक्तेऽर्थे क्यष् स्यात्। पक्षे च्विः। क्विप् वेत्येके।

५१५ वा क्यषः [ १।३।९० ]

क्यषन्तात् परस्मैपदं वा स्यात्। लोहितायते। लोहितायति। लोहितति। लोहितीस्यात्। चर्मायति। चर्मायते। चर्मति। चर्मीस्यात्। पटपटायति। पटपटायते। पटपटाति। पटपटास्यात्।

---

मत्वर्थे, "अर्श आदिभ्योऽच्" ( ५।२।१२७ ) ओजायते। वर्चायते। ओजोवर्चस्शब्दौ वृत्तिविषये तद्वति वर्तेते ॥ ॥

लोहित। अत्रादिशब्दः प्रकारे। तेनाकृतिगणोऽयम्। प्रमाणं चात्र क्यषः कित्करणं "नः क्ये" इत्यत्र सामान्यग्रहणार्थम्। नहि गणपठितेषु लोहितादिषु नान्तोऽस्ति तत्कि पदसंज्ञार्थेन सामान्यग्रहणेनेति। एव च कृत्वोदाहरिष्यति–चर्मायतीति। ये तु लोहितशब्दात् परे पठ्यन्ते नीलहरितमन्द्रफेनमन्देति। तेषामिह प्रमादपाठः। भृशादिषु तु त एष्टव्याः क्यङ् यथा स्यात् तदाह–वार्तिककारः "लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि" (वा०)। लोहितशब्दात् डाजन्ताच्च क्यष् वक्तव्यः। यानि त्वत्र पठ्यन्ते नीलादीनि तानि भृशादिषु द्रष्टव्यानीत्यर्थः।

वृत्तिकारोऽप्याह—यानि पठ्यन्ते तेभ्यः क्यङ् अपरिपठितेभ्यः क्यषेव भवतीति। तानि चापरिपठितानि आकृतिगणसिद्धानि गणवृत्तौ संगृहीतानि।[1]

लोहितश्यामदुःखानि हर्षगर्वसुखानि च।
मूर्च्छानिद्राकृपाधूमाः करुणानित्यचर्मणी ॥ इति ॥

तदेतत्सर्वं मनसिकृत्याह—लोहितादेरित्यादि। डाजितिप्रत्ययग्रहणात्तदन्तविधिरित्याह—डाजन्ताच्चेति। उक्तेऽर्थे इति। भुव्यच्वेरित्यनुवृत्तेः। च्व्यर्थे भवत्यर्थे इत्यर्थः।

वा क्यषः। ननु तावदप्राप्ते विभाषेयम्। क्यषन्ताद् "शेषात् कर्तरि" (१।३।७८) इत्येव परस्मैपदस्य सिद्धेः नापि प्राप्ते तत्र हि परस्मैपदेन मुक्तेऽप्यात्मनेपदं न लभ्यते। अनुदात्तङित्स्य एवात्मनेपदमित्यादि नियमेन तस्य निवर्तितत्वात् वा। वचनं तु केवलस्य लकारस्य श्रवणार्थं स्यादिति चेत्। उच्यते। लस्य तिबादयः सामान्येन परस्मैपदात्मनेपदरूपाः प्रसक्तास्तेषु परस्मैपदे प्रतिषिद्धे आत्मनेपदं भविष्यति।

न चात्र नियमप्रसङ्गः। अनियमप्रसङ्गाभावात्। यत्तु तदुक्तं वा वचनं केवलस्य लकारस्य श्रवणार्थं स्यादिति। तन्न। तस्यानभिव्यक्तपदार्थकस्य कालकारक-

---

१. लोहितेत्यारभ्य–इत्याहेत्यन्तो ( ) नास्ति क० पु०।

## ५१६. कष्टाय क्रमणे [ ३।१।१४ ]

चतुर्थ्यन्तात् कष्टशब्दादनार्जवेऽर्थे क्यङ् स्यात् ॥ कष्टाय कर्मणे क्रामति कष्टायते । छद्मायते इत्येके । "सत्रकक्षकष्टगहनेभ्यः पापचिकित्सायाम्" ( वा० ) सत्रायते इत्यादि ।

---

सङ्ख्योपग्रहोद्यर्थविशेषाभिव्यक्तये[1] आख्यातप्रयोगस्यावश्यकत्वात् । एवं च परस्मैपदं वा स्यादुक्तेऽर्थात्पत्ते आत्मनेपदं पर्यवस्यति ।

ननु तर्हि क्यषेव विकल्प्यताम् । तेन क्यषा मुक्ते क्यङात्मनेपदं सिद्धम् । "वा क्यषः" ( १।३।९० ) इत्यवक्तव्यं भवतीति चेत् । मैवम् । एवं हि लिङ्गविशिष्टपरिभाषया लोहिनीशब्दात् क्यङि लोहितीयते इति पुंवद्भावः स्यात् "क्यङ्मानिनोश्च" ( ६।३।३६ ) इति ।

लोहितीस्यादिति । "अस्य च्वौ" ( ७।४।३२ ) इतीत्वम् । चर्मायतीति । "नः क्ये" ( १।४।१५ ) इति नियमेन पदत्वान्न लोपे "अकृत्सार्व" ( ७।४।२५ ) इति दीर्घः । एतच्चाकृतिगणत्वेन लभ्यमित्युदाहृतम् । चर्मतीति । क्वावुदाहरणम् । एतत्त्वयुक्तम् । प्रातिपदिकात् क्विपो विधानेन लोपस्याप्रसङ्गात् । नचात्र सुबन्तात् क्विब् विवक्षितः । तथा सति "अतो गुणे" ( ६।१।९७) इति पररूपाप्रसङ्गात् । तस्माच्चर्मणीतीत्युदाहार्यम् ।

पटपटायती च । पटत्शब्दाद् "अव्यक्तानुकरणाद्" ( ५।४।५७ ) इति डाचि विवक्षिते द्वित्वम् ततो डाच् टिलोपः । पटत् पटा इति स्थिते "नित्यमाम्रेडिते डाचि" ( वा० ) इति तकारस्य पकारस्य च पकारः । ननु "कृभ्वस्तियोगे डाच् विधीयते स कथं क्यषो योगे स्यात् । सत्यमेतदेव ज्ञापकं कृभ्वस्तिभिरिव क्यषाऽपि योगे डाच् भवतीति ॥

कष्टाय । कष्टादिति वाच्ये चतुर्थ्यन्तनिर्देशः समर्थविभक्तिविवक्षार्थ इत्याह—चतुर्थ्यन्तादिति । क्रमणमिह न पादविक्षेपः इति व्याचष्टे—अनार्जवेऽर्थे इति अनार्जवम् कौटिल्यम् । इह तु वृत्तिस्वभावादनार्जवकरणं गृह्यते । अनार्जवरूपेण क्रमण इत्यर्थः । क्यङ् स्यादिति । अनन्तरोऽपि क्यष् न स्वर्यते इति भावः । कष्टायेति । कष्टं कृच्छ्रं दुःखम् इह तु तत्करणं पापं कर्म गृह्यते इत्याह—कर्मणे इति । तादर्थ्ये चतुर्थी । क्रामतीति । पापं कर्मकर्तुकामः कुटिलमाचरतीत्यर्थः । वृत्याद्यर्थाभावा-

---

१. व्ययं विरौतीति क० पु० ।

२. इति वक्तव्यमिति क० पु० ।

३. चर्मण्य तीति क० पु० ।

## ५१७. कर्मणो रोमन्थतपोभ्यां वर्तिचरोः [३।१।१५]

रोमन्थतपोभ्यां कर्मभ्यां क्यङ् स्यात्, क्रमेण वर्तिचरोरर्थयोः। रोमन्थं वर्तयति रोमन्थायते गौः। "हनु चलने एव" (वा०) "तपसः परस्मैपदं च" (वा०) तपश्चरति तपस्यति।

## ५१८. वाष्पोष्मभ्यामुद्वमने [३।१।१६]

आभ्यां क्यङ् स्यादुद्वमने। वाष्पमुद्वमति वाष्पायते। उष्मायते। "फेनाच्च" (वा०) फेनायते। धूमाच्चेति केचित्। धूमायते।

## ५१९. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे [३।१।१७]

एभ्यः कर्मभ्यः कृञर्थे क्यङ् स्यात्। शब्दं करोति शब्दायते इत्यादि। "सुदिनदुर्दिननीहारेभ्यश्च" (वा०) सुदिनायते।

---

न्नात्मनेपदम्। छद्मायते इत्येके। कष्टायेत्यर्थनिर्देशः व्यवस्थित वानुवृत्तेश्च नातिप्रसङ्गः। छद्मशब्दश्च[१] वृत्तो निषिद्धे कर्मणि वर्तते इत्याशयः।

सत्त्रचेति। पापचिकीर्षायामिति प्रकृतिप्रत्ययसमुदायस्यार्थनिर्देशः[२]। सत्त्रादयो हि वृत्तिविषये पापपर्यायास्तेभ्यश्चिकीर्षायां प्रत्ययो विधीयते। एवं च चिकीर्षां प्रति कर्मत्वेन द्वितीयान्तेभ्यः सत्त्रादिभ्यः पापवचनेभ्यश्चिकीर्षायां क्यङित्यर्थः संपद्यते।

कर्मण। कर्मण इति पञ्चमी। प्रत्येकं संबन्धाच्चैकवचनम्। वर्तिचरोरर्थयोः। वर्तनं वर्तिः वृतेर्ण्यन्तादस्मादेव निपातनाद् युचं बाधित्वा किन्। "अबाधकान्यपि निपातनानि" (प०) इति युजपि भवति। वर्तनेति। चरणं चरः सम्पदादित्वाद् भावे क्विप्। वर्तने चरणे चेत्यर्थः। रोमन्थं वर्तयति इति। अभ्यवहृतं पुनर्मुखे आकृष्य चर्वयतीत्यर्थः। हनुचलन एवेति। हनुचलनेनात्र तत्सहचरितं चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं लक्ष्यते तत्रेत्यर्थः। कीटो रोमन्थं वर्तयति। अपानप्रदेशान्निर्गतद्रव्यं कीटो वर्तुलं करोतीत्यर्थः। कैयटस्तु अपानप्रदेशान्निःसृतमश्नातीत्यर्थ इति व्याख्यत्।

शब्द। कर्मण इति वर्तते तेन शब्दादयो विशेष्यन्ते इत्याह—एभ्यः कर्मभ्य इति। करणं कृतिः क्रियेत्यर्थः। न तु पारिभाषिकं करणं नहि तदपेक्षं शब्दादीनां कर्मत्वं संभवतीत्याशयेनाह—कृञर्थं इति। कण्वायते। कण्वं पापम्। यद्यपि "तत्करोति" (वा०) इति णिचि प्राप्ते क्यङारभ्यते, तथापि नानेन णिच् बाध्यते। भृशादिभ्य इत्यतश्चकारानुवृत्तेर्णिचोऽप्यभ्यनुज्ञानात्। तेन शब्दयतीत्याद्यपि भवति॥ ॥

---

१. छद्मशब्दश्चेति क० पु०।
२. समुदायसामर्थ्यनिर्देश इति क० पु०।

५२०. सुखादिभ्यः कर्तृवेदनायाम् [३।१।१८]

एभ्यः कर्मभ्यः क्यङ् स्यात् वेदयितुरनुभवेऽर्थे। सुखं वेदयते सुखायते। दुःखायते।

५२१. नमो वरिवश्चित्रङः क्यच् [३।१।१९]

एभ्यः क्यच् स्यात् क्रमेण पूजायां परिचर्यायामाश्चर्यलेखनयोः। नमस्यति। वरिवस्यति। ङित्त्वात्तङ्। चित्रीयते।

५२२. पुच्छभाण्डचीवराण्णिङ् [३।१।२०]

एभ्यो णिङ् स्यात् कृअर्थे। "पुच्छादुदसने पर्यसने वा" (वा०) उत्पुच्छयते। "भाण्डात् समाचयने" (वा०) संभाण्डयते। "चीवरादर्जने परिधाने च" (वा०) संचीवरयते भिक्षुः।

---

सुख॰। कर्तृ इति पृथक्पदं लुप्तषष्ठीकम्। वेदना मनुभवः। विद चेतनाख्यानिवासनेष्वित्यस्माच्चुरादिण्यन्ताद् भावे "ण्यासश्रन्थो युच्" (३।३।१०७) कर्मत्वं कर्तृत्वं च श्रुतवेदनक्रियापेक्षम्। तेन वेदना क्रियाया. कर्तुराधाराधेयभावेन सम्बन्धिभ्यः सुखादिभ्य इत्यर्थो भवतीत्याह—वेदयितुरनुभवेऽर्थे इति।

यद्यपि वेदनाशब्दो ज्ञानसामान्यवचनस्तथापीह कर्तृग्रहणेन सुखादीनि विशेष्यन्ते। कर्तृगतानां च सुखादीनां वेदनाऽनुभवरूपैवेति मत्वैवमुक्तम्। सुखं वेदयते इति। स्वगतं सुखमनुभवतीत्यर्थः। आकुस्मादात्मनेपदिन इत्यधिकारे वेदिः पठितः। एवं च क्वचिद् वेदयतीति पाठः प्रामादिकः। वेदयित्रा सुखादीनां विशेषणादिह न भवति। सुखं वेदयते प्रसाधको देवदत्तस्येति। अत्र हि प्रसाध्यगतं सुखं प्रसाधकोऽक्षिनिमीलनादिनाऽनुमिमीते इति सुखं वेदयितृगतं न भवति।

नमोवरिवरिति। पूजायामित्यादि। करण इति क्रियासामान्यानुवृत्तावप्यभिधानशक्तिस्वाभाव्यात् विशेषोऽयं लभ्यते इति भावः। नमस्यतीति। पूजयतीत्यर्थः। वरिवस्यतीति। परिचरतीत्यर्थः। चित्रीयत इति। आश्चर्यवद् भवतीत्यर्थः "चेतश्चित्रीयते मम" इत्यादिदर्शनात्।

अन्ये तु परस्याश्चर्यमुत्पादयतीत्यर्थमाहुः। तथा च भट्टिः—मायामृगमघकृत्य—ततश्चित्रीयमाणोऽसौ इति। अत्र च चित्रङो ङित्करणात् अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति क्यजन्तादात्मनेपदम्। न चैवं शब्दवैरादिसूत्र एव चित्रशब्दोऽपि पठ्यताम्। एवं च क्यङैव तङ् भविष्यतीति वाच्यम्। तत्र हि "क्यचि च" (७।४।३३) इतीत्वं न स्यात्, तस्मात् क्यजेव कार्यो ङित्त्वं च॥

पुच्छ॰। कत्रर्थे इति। करण इत्यनुवृत्तेः। तच्च पूर्ववदभिधानस्वभावात् क्रियाविशेषणपरं संपद्यते इति प्रपञ्चयति पुच्छादित्यादि। उदसनमुत्क्षेपणम्। पर्यसनं परितः

## ५२३. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् [३।१।२१]

एभ्यः कृञर्थे णिच् स्यात् । मुण्डयति । "व्रताद् भोजनतन्निवृत्त्योः" (वा) पयः शूद्रान्नं वा व्रतयति । "वस्त्रादाच्छादने" (वा०) संवस्त्रयति । णाविष्ठवत् प्रातिपदिकस्य । इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशाः स्युस्तद्वत् णावपीत्यर्थः । टिलोपः । हलिं कलिं गृह्णाति । अत्र णिचि परत्वाद् वृद्धौ सत्यां टिलोपः । हलयति । महद् हलं हलिः । कलयति । चङि अग्लोपित्वाभावात् सन्वद्भावे प्राप्ते हलकल्योरदन्तनिर्देशान्न । अचकलत् । अजहलत् ।

---

क्षेपणं । उत्पुच्छयते इत्यादि । पुच्छमुदस्यति पर्यस्यति वेत्यर्थः । "णाविष्ठवत्" (वा) इति टिलोपः । पुच्छशब्दादेव प्रत्ययः उत्परी तु उदसनपर्यसने क्रमेण द्योतयतः । भाण्डादिति । समाचयनं राशीकरणम् । सम्शब्दोऽस्य द्योतकः ।

चीवरादीति । अर्जनं द्रव्यलाभोपायो यज्ञादिः "णिङो णकारो णेरनिटि" ( ६।४।५५ , सामान्यग्रहणार्थो न वृद्ध्यर्थः । अतो लोपस्य स्थानिवद्भावेन वृद्ध्यसंभवात् ङकारस्तदर्थः । अत एव मुण्डादिसूत्रे नैते पठितुं शक्यन्ते ।।

मुण्ड । कर्मणि इति करणे इति च वर्तते । मुण्डयतीति । मुण्डं करोतीत्यर्थः । ननु "तत्करोति" ( वा० ) इत्येव सिद्धम् । सत्यम् । मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योऽपि मुण्डादिभ्यो यथा स्यादिति पुनर्विधिः । तस्यैव प्रपञ्चो वा । अन्ये त्वाहुः पुनर्विधानं धात्वर्थम् । द्विविधा हि मुण्डादयो धातवः प्रातिपदिकानि । तत्र सूत्रे धातव एवोपात्तास्तेभ्यः स्वभावाद्विशिष्टक्रियावचनेभ्यो णिज् भवति । प्रतिपादिकानां तु विग्रह एव माणवकं मुण्डं करोतीति । मुण्डादयश्च गुणवचनत्वात् नित्यसापेक्षाः ।

न च नित्यसापेक्षमसमर्थं भवतीति । यदि तर्हि गुणवचनत्वात् मुण्डादयो नासमर्थाः, माणवकं मुण्डयतीति क्यजपि स्यात् । अत्राहुः—क्यच् त्वनभिधानान्न भवति । माणवकं मुण्डीयतीति ह्युक्ते माणवकं मुण्डमिवाचरतीत्यर्थान्तरमेव प्रतीयते इति । मिश्रयति । श्लक्ष्णयति । लवणयति[1] । सर्वत्र णाविष्ठवदिति टिलोपः । व्रतादिति । द्वयमपि प्रकृत्यर्थः । कृञर्थे च प्रत्ययः । तत्र भोजने व्रतशब्दः श्रूयते । यदस्य पयोव्रतं भवत्यात्मानमेव तद्वर्धयतीति । पस्पशाभाष्यं च शक्यं चानेन श्वमांसादीन्यपि व्रतयितुमिति । अयमेव च व्रतशब्दो विपरीतलक्षणया तन्निवृत्तौ वर्तते,

---

1. लवणयतीति क० पु० ।

न शक्त्येति माधवः। तथोदाहरति—पय इत्यादि। पयो व्रतयति। भुङ्क्ते इत्यर्थः। शूद्रान्नं व्रतयति। परिहरतीत्यर्थः।

वस्त्रादाच्छादने इति। अत्राप्याच्छादनं प्रकृत्यर्थः। कृञोऽर्थे प्रत्यय. संवस्त्रयति प्रावारमित्यस्य हि प्रावारमाच्छादयतीत्येवार्थः[1] इति स्थितिः।

णाविष्ठवदिति। इष्ठे इवेष्ठवत् "तत्र तस्येव" (५।१।११६) इति सप्तम्यन्ताद्वतिः। प्रतियोगिनि सप्तमीनिर्देशात्। तेनेष्ठनि यद्विहितं कार्यं तदेवातिदिश्यते नेष्ठेनो यत्कार्यं[2] तदपि। तेन बहूनाचष्टे बहयतीत्यत्र "इष्ठस्य यिट् च" (६।४।१५९) इ.त णौ यिट् न भवतीत्यालोच्याह—इष्ठे यदित्यादि। पुंवद्भावः। "भस्याढे तद्धिते" (वा०) इत्युक्तः। न[3] तसिलादिष्विति परिगणनात्। रभावः। "र ऋतो हलादेः" (६।४।१६१) इति। टिलोपः। "टेः" (६।४।१५५) विन्मतुव् लोपः। "विन्मतोर्लुक्" (५।३।६५) यणादिलोपः। "स्थूलदूर" (६।४।१५६) इति। प्रादयः। "प्रियस्थिर" (६।४।१५७) इति। आदिशब्दाद् भसंज्ञादिसंग्रहः।

नहीदं प्रयोजनपरिगणनम्-अपि तूदाहरणदिगित्याकरे स्थितम्। एतानि कार्याणि यथेष्ठानि भवन्ति तथा णावपीति वार्त्तिकार्थः। यद्यपि "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति गणसूत्रेणैवेष्ठवद्भावो[4] विधीयते, तथापि तस्यैवायं प्रपञ्चः। एतदुपन्यासस्य प्रकृते उपयोगमाह-अत्रेत्यादि।

यद्यपि "पुच्छभाण्डचीवराण्णिङ्" (३।१।२०) इत्यत्रैव टिलोपार्थमेतदुपन्यसितुमुचितम्, तथापि 'यस्येति च" (६।४।१४८) इति लोप एव विधातव्ये टिलोपविधानस्यासाधारणं प्रयोजनमिदमेवेत्यत्रोपन्यस्तम्, तदेव च पूर्वत्रापि कार्यं करिष्यतीत्याशय.। परत्वाद् वृद्धौ सत्यामिति। हलि कलि गृह्णातीत्यर्थे णिचि सति हलि इ कलि इ इति स्थिते "णाविष्ठवत्" (वा०) इति टिलोपः प्राप्तो वृद्धिश्च, तत्र वृद्धिरनित्या कृते टिलोपे न प्राप्नोतीति टिलोपोऽप्यनित्यः। यद्यपि कृतायामकृतायां च वृद्धौ प्राप्नोति तथापि शब्दान्तरप्राप्त्या अनित्य इत्युभयोरनित्ययोः[5] परत्वाद् वृद्धिरित्यर्थः। वृद्धौ सत्यां टिलोप इति। अन्तरङ्गमप्ययादेशं बाधित्वा[6] "वर्णादाङ्गं बलीयः" (प०) इति ऐकारस्यैव लोप इत्यर्थः। आयादेशं कृत्वा तु टिलोपेऽग्लोपि-

१. प्राणमाच्छादयतीति क० पु०।
२. ते ने वा यत्कार्यमिति क० पु०।
३. न तसिलादिष्विति परिगणनादिति नास्ति क० पु०।
४. गुणसूत्रेणेति क० पु०।
५. पोरत्वादिति क० पु०।
६. वार्णादाङ्गं बलीय इति नास्ति क० पु०।

कृतयति। अचकृतत्। तूस्तानि विहन्ति वितूस्तयति। "सत्याप‍पाश" (३।१।२५) इति णिच्। अर्थवेदसत्या नामापुगाच्यः" (वा०) सत्यमाचष्टे सत्यापयति अर्थापयति। वेदापयति। "पाशाद्विमोचने" (वा०) विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति उपवीणयति। तूलैरनुकुष्णाति अनुतूलयति। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति। अभ्यषेणयत्। अपोपदेशत्वेऽपि "स्थादिष्वभ्यासेन" (८।३।६४) इति नियमादभ्यासव्यवायेऽपि पत्वम्। अभिषिषेणयिषति। लोमान्यनुमार्ष्टि अनुलोमयति। त्वचं गृह्णाति त्वचयति। वर्मणा संनह्यति संवर्मयति। वर्णं गृह्णाति वर्णयति। चूर्णैरवध्वंसते अवचूर्णयति।

---

त्वाभावात् सन्वद्भावः प्राप्त इत्युत्तरग्रन्थविरोधः स्यात्। अकग्रहणव्यावर्त्यं च न प्रसिद्ध्येत्। सर्वत्र चाकारस्यैव लोपात्।[1]

ननु "णौ चङि" (७।४।१) इत्यत्र भाष्ये व्यवस्थापितं वृद्धेर्लोपो बलीयानिति। ज्ञापकं चात्रागिति प्रत्याहारग्रहणम्। तथा हि अवर्णान्तेषु-अवर्णोपधेषु च वृद्धावाप्यवर्णा एव लुप्यन्ते तत्रालोपिनां नेत्येव वाच्यम् इवर्णोवर्णान्तयोस्तु वृद्धौ कृतायामैकारौकारौ[2] लुप्येते न त्वक्।

ननु स्वामिनमाचष्टे-असस्वामत्। गोमिनम् अजुगोमत्। प्रादुरास्यत्। अपप्रादत्। यादृशमास्यत्। अययादत्। तादृशम् अततादत् इत्यादौ यत्र वृद्धेरप्रसङ्गादिको लोपस्तत्र निषेधार्थमिक् ग्रहणं कर्तव्यम्। अत्राहुः—णिजत्र नास्ति-अनभिधानात्। एतच्च भाष्यकारेण ज्ञापकत्वसमर्थनादवसीयत इति।

ननु तथापि स्रग्विणमास्यत् असस्रजत् इत्यत्र विन्मतो लुकि उपधाया वृद्धौ तस्य ह्रस्वनिवृत्त्यर्थं प्रत्याहारग्रहणं स्यात्। अस्ति ह्यत्राभिधानं "टेः" (६।४।१५५) इत्यत्र भाष्ये स्रजयतीत्युदाहरणम्[3]। नैतदस्ति। उक्तादेव हेतोः अङ्गवृत्तपरिभाषया वृद्धेरप्रसङ्गाद् ह्रस्व[4] भाविन्युपधैव नास्तीति। अतः प्रत्याहारग्रहणं ज्ञापकं वृद्धेः पूर्वं टिलोप इति। तत्कथमुच्यते वृद्धौ सत्यां टिलोप इति। उच्यते। हलिकल्योरदन्तत्वनिपातनमेव ज्ञापकं लोपात् पूर्वा वृद्धिरिति। अन्यथाऽसत्यप्यत्वनिपातने वृद्धेः पूर्वमिकारस्य लोपेनैवाग्लोपित्वसंपादनादनर्थकं तत् स्यात्।

---

१. लोप इति नु इति क० पु०।

२. कृतायामैकारौ लुप्येते इति क० पु०।

३. स्रजतीति क० पु०।

४. द् ह्रस्वभाविन्यु इति क० पु०।

एवं च कृत्वाऽग्रेऽपि वक्ष्यति—वृद्धौ सत्यां टिलोप इति। अचीकवत्। अपीपटदिति। न चैवं णौणिचि नाग्लोपित्वमित्यस्य वैयर्थ्यम्। "णयल्लापो" ( वा० ) इति वाचनिकेन पूर्वप्रतिषेधेन प्रागुपन्यस्तज्ञापकवशेन च वृद्धेः पूर्वं णिलोपाभ्युपगमात्। टिलोपस्तु वृद्धौ सत्यामेवेति विवेकः। तदेतत् परमतेनोक्तम्।

भाष्यमते तूक्तज्ञापकवशाद् वृद्धेः प्रागेव टिलोपादपपटत् अचकवदित्याद्येव भवितव्यम्। अनाश्रित्य तज्ज्ञापकं हलिकल्योरत्वनिपातनमुक्तम्। ज्ञापकाश्रयणं तु ज्यायः। पटुमाख्यत् अपपटदित्यादावकृतायां वृद्धौ लोपे सति सन्वद्भावस्य प्रसङ्गाभावार्थमिति कैयटोक्तेः। अन्ये तु हलिकल्योरत्वनिपातनस्याग्ग्रहणज्ञापकत्वस्य च भाष्ये एव प्रयोजनकथनाद् वृद्धेरुत्तरकालं पूर्वं वा कामचारेण टिलोपविज्ञानादपपटत् अपीपटत् इत्युभयमपि प्रमाणमित्याहुः।

तदेतदाचार्येणापि सङ्गृहीतम्। सुवृधातोरनेकाचश्च सन्वद्भावो वेति केचिदिति। हलिकल्योरदन्तत्वनिपातनसामर्थ्यान्नाय विकल्पः। तदुक्तम्[१] मुग्धबोधे "खे. सन्वद् द्याहूंसादर्यश्च ल्यवेकाचोस्त्वहलिकलिर्वा" इति।

ननु वृद्धौ कृताया टिलोपेऽपि तस्य "अचः परस्मिन्" ( १।१।५७ ) इति स्थानिवद्भावेन व्यवधानात्सन्वद्भावो न प्राप्नोतीति चेत्, अभ्यासस्य टिलोपाद्यनन्तरजातत्वेनादिष्टादच पूर्वत्वेन स्थानिवत्त्वाप्रसङ्गात्। एतच्च यदा चङ्परे णौ यद् लघु एकवर्णेन व्यवहितं तत्र परतो योऽभ्यासस्तस्य सन्वदिति वादिना कैयटादीना मते परिहृतम्। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सन्वदित्यर्थवादिना हरदत्तादीनां तु मते सत्यपि स्थानिवत्त्वे तत्सहितमेव चङ्परे णौ परमङ्गस्याभ्यासश्च तस्यैवेति न किंचिदुष्यति।

एवं च कृत्वा हलिकल्योरत्वनिपातनमर्थवद् भवति। कथं तर्हि "सन्वल्लघुनि" ( ७।४।९३ ) इत्यत्र हरदत्तेनोक्तम् अचकथदित्यत्राल्लोपस्य स्थानिवत्त्व च तेन व्यवधानात् सन्वद्भावो न भविष्यतीति। सत्यम्। परमतेन पूर्वं द्विर्वचनमिति बाश्रित्येत्यदोषः। हलयतीति। शपि गुणायादेशौ णिचि टिलोपः। कथं पुनरत्र टिलोपः यावता इष्ठवदुच्यते।

न चास्मादिष्ठो नास्ति। अजादीना गुणवचनादेवेति नियमात्। नैवम्। नावश्यमिष्ठानि दृष्टमेव कार्यमतिदिश्यते किं तु संभावितमात्रमपि। तथा च कुमारयतोरत्यार्थं पुंवद्भावोऽतिदिष्टः। न चात्र टिलोपेनैवेष्टसिद्धि। चिणोलुग्न्यायेन ङोप्लोपस्याकारलोपं प्रत्यसिद्धत्वप्रसङ्गात्।

अचकलदिति। कलिशब्दाण्णिचि चङि परत्वाद् वृद्धौ कृतायां टिलोपश्चेत् क्रियते ततोऽनग्लोपित्वात् सन्वद्भावादित्वदीर्घौ स्याताम् इति हलिकल्योरदन्तत्वनिपातनं क्रियते ततश्च टिलोपे सत्यग्लोप्यङ्गं संपन्नमिति सन्वद्भावाद्यभावः।

---

१-तदुक्तम् इत्यारभ्य—कलिर्वेत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

कृतयतीति। कृतं गृह्णाति। अचकृतदिति। अग्लोपित्वान्न सन्वद्भावः। तूस्तानि विहन्तीति। विहत एवं भवतीति भावः। संहताः जटाः तूस्तानि। पाशमिति वेश्यन्त्याम्। विहमनद्योतनाय वेः प्रयोग। नामधातुप्रस्तावात् सत्याप" (३।१।२५) इति सूत्रारूढानि प्रातिपदिकान्युदाहर्तुमाह–सत्यापपाशेति। णिजिति। अत्र च सत्याप इति निर्देशाण्णिचः सन्नियोगेनापुग्निपात्यते। अन्त्योकार उच्चारणार्थः।

वार्त्तिककारेण त्वर्थवेदार्थमवश्यारम्भे वार्त्तिके सत्यशब्दोऽपि संगृहीतः। अर्थवेदसत्यानामिति। अत्रापि णिज्विधौ करणे इत्यनुवृत्तं क्रियाविशेषोपलक्षणम्। तान् विशेषान् विग्रहव्याजेन दर्शयति–सत्यमाचष्टे–इति[1]। भाष्ये तु[2] णिविधावर्थवेदसत्यानामापुक् च" इति पठित्वा सत्यं करोतीति विगृहीतम्।

हरदत्तस्त्वाह-भाष्ये कृञीत्यर्थनिर्देशो प्रयोगदर्शनवशादिहाख्यातार्थ इति। एवमर्थमाचष्टे[3] वेदमाचष्टे इत्याद्यूह्यम्। अथ किमर्थमापुक् क्रियते न पुगेव क्रियेत, विधानसामर्थ्याच्च टिलोपो न भविष्यति। एवं तर्हि आपुग्वचनं सामर्थ्यादन्यतोऽपि विधानार्थम्। तेन लिखापयति शब्दापयेत्। प्रक्षालापयेदित्यादिप्रयोगा उपपादिता भवन्तीति रक्षितः। 'तत्करोति" ( वा० ) इत्येव णिचि सिद्धे सत्यस्यापुग्विधानार्थं वचनम्।

अन्येषां तु प्रपञ्चार्थम्। मालिन्या[4] उपश्लोकयतीति सापेक्षादपि विधानार्थं वा। विपाशयतीति। पाशं विमुञ्चति। विर्विमोचनद्योतनार्थः। अत एवायमर्थान्तरेऽपि भवतीति ज्ञायते। अन्यथा विपाशयतीति विशब्दप्रयोगो न स्यात्। विशिष्टस्यैव मोचनस्य ण्यर्थत्वात्। यथाचारे क्यच्याङ्प्रयोगो[5] न भवति। एवमुपवीणयतीत्युपादिष्वपि द्रष्टव्यम् इति हरदत्तः। तूलं तृणाग्रमनुकृष्णाति। अनु[6] घ्यतीत्यर्थः। अभिषेणयतीति। "उपसर्गात्सुनोति" (८।३।६५) इति षत्वम्। अभ्यषेणयदिति। "प्राक्सिताददृव्यवायेऽपि" ८।३।६३) इति षत्वम्। अषोपदेशत्वेऽपीति। एतच्चाव्युत्पन्नः सेनाशब्दः। अह इनेन वर्तते इति व्युत्पन्नो वेति पक्षे द्रष्टव्यम्।

यदा तु सिनोतेर्न प्रत्यये सेनाशब्दो व्युत्पाद्यते तदाऽस्त्येव षोपदेशत्वम्। स्थादिष्विति नियमादिति। तत्र हि सूत्रे स्थादिष्वभ्यासेन चेत्येतद्वाक्यं विध्यर्थमषोपदेशार्थमिति स्थितम्। अभ्यासस्येति द्वितीयं वाक्यं नियमार्थमसिषुषूपतीत्यादौ मा भूदिति स्थितिः।

---

१. इत्यूह्यम् सर्वति इति ख० पु०।
२. सतुरवा क्यप्यापुर्केति क० पु०।
३. त्वमर्थमिति क० पु०।
४. मालिन्यन्येति क० पु०।
५. क्-चाप प्रयोगो इति क० पु०।
६. अनुव्ययतीति क०पु०।

हस्तिनातिक्रामति । अतिहस्तयति । हस्तौ निरस्यति हस्तयति इति केचित् । तत्करोति "तदाचष्टे" (वा०) इति चुरादित्वात् सुबन्ताण्णिच् । पट्टं करोति आचष्टे वा पटयति । लुग्धातुत्वान्न पस्य न सः । कवि पटुं वाचष्टे । वृद्धौ सत्यां टिलोपः । कवयति । पटयति । चाङि अनालोपित्वात् सन्वद्भावः । अचीकवत् । अपीपटत् । "आख्यानात् कृतस्तदाचष्टे" इति कृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारणम् (वा०) कंसवधमाचष्टे कंसं घातयति । बलिं बन्धयति ।

---

एवं च प्रकृते स्यादित्यिवति यद्यपि विधेर्व्यापारो न तु नियमभागस्य तथापि नियमांशोऽपि तत्र सूत्रे स्थित इत्यवयवधर्मस्य समुदायेऽप्युपचारान्नियमादित्युक्तम् । त्वचयतीति । त्वच संवरणे इत्यस्मात् "पुंसि संज्ञायां घः प्रायेण" (३।३।११८) इति घप्रत्ययान्तत्वात् त्वचशब्दोऽकारान्तः तेनातो लोपस्य स्थानित्वादुपधाया वृद्धिर्न । हलन्तस्य तु "तत्करोति" इति णौ त्वाचयतीति भवति । "प्रकृत्यैकाच्" (६।४।१६३) इति प्रकृतिभावाट्टिलोपाभावः[1] । हस्तौ निरस्यति हस्तयत इति केचित् इति ।

तथा च बहुलमेतन्निदर्शनमित्युक्त्वा माधवीयेऽप्युदाहृतम्[2] । णिङान्निरसने ङकार आत्मनेपदार्थः । हस्तौ निरस्यति हस्तयते । पादयते इति । एवं च हस्तयतीति क्वचित् परस्मैपदपाठो न युक्तः । हस्तिनातिक्रामतीति । "तेनातिक्रामति" (वा०) इति धातुसूत्रेण णिच् । चुरादिषु हि त्रीणि पठ्यन्ते "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति प्रथमं प्रातिपदिकात् धातोरर्थे विशेषरूपे वाच्ये णिच् भवति इष्ठनीव चास्मिन् बहुलं कार्यं भवति । कूलमुल्लङ्घयति । उत्कूलयति । अस्यैव प्रपञ्चः "तत्करोति तदाचष्टे" "तेनातिक्रामति" "कर्तृकरणाद्धात्वर्थे" इति ।

अत्र कर्तृग्रहणं करणस्य विशेषणम् । करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेवग्रहणं मा भूदिति । अन्यथा चक्षुषा पश्यति चक्षुषतीत्यादावेव स्यात्, न तु करिभिरवबध्नाति अवकरयति । परशुना छिनत्ति परशयति इत्यादावपि । तेनातिक्रामतीत्येतत् कर्तृकरणादित्यस्यैव प्रपञ्चः संपद्यते । अत्र च तेनेति करणत्वोपलक्षणम् । तेन करणत्वविशिष्टात् प्रातिपदिकात् णिजुत्पद्यते न तु सुबन्तात् प्रातिपदिकादित्यधिकारात् । सुबन्तादुत्पत्तौ चातिहस्तयतीत्यादौ णौ सुब्लोपे टिलोपे च

---

१. दित्यर्थात्पर इति क० पु० ।

२. भावादिति क० पु० ।

३. माधवीये इति क० पु० ।

कृतेऽन्तर्वर्तिविभक्त्या पदत्वाज्जश्त्वं स्यात्। न च णिलोपस्य स्थानिवत्त्वम्, "न पदान्त" (१।१।५८) इति जश्विधौ तद् निषेधात्।

न च णौ कृतया भसंज्ञया नान्ताबधेः पदत्वबाधः, भसंज्ञां प्रति टिलोपस्य स्थानिवत्त्वात्। भिन्नावधिकया तया पदसंज्ञाबाधस्यासंभवात्। एवं तत्करोतीत्यत्रापि तदिति कर्मत्वोपलक्षणं तेन पटुमाचष्टे पटयति वाचयतीत्यादौ जश्त्वकुत्वाद्यभाव ऊह्य.। एवं च तदिति द्वितीयासमर्थात् तेनेति च तृतीयासमर्थात् इति प्राचोक्तमपव्याख्यानम्। किन्तर्ह्युच्यते सुबन्ताण्णिजिति[1]। सुपा तदर्थस्य कारकस्य लक्षणात् सुपं चान्तीति सबध्नाति कार्यत्वेन तत्सुबन्तं कारकं तस्मादिति व्याख्यानाद् वा न दोषः।

तथा च पट्वयतीत्यत्र जश्त्वसंयोगान्तलोपौ न कृतौ। कथं तर्ह्युच्यते सुब्धातुष्व पस्य स इति। यावता प्रातिपदिकादयं णिजुच्यते, नेन सुबन्तादित्ययुक्तम्। सत्यम्। इदानीमेव ह्युक्तं सुब्ग्रहणं[2] कारकत्वोपलक्षणार्थम् इति। तेन धातुसंज्ञानिमित्तप्रत्ययान्तः कारकाभिधायि सुब्धातुरित्यविरोध.।

एवं नामधातुरित्यपि व्याख्येयम्। किं च "सुब्धातुष्ठिवुष्वक्कतीनां सत्वप्रतिषेधः" (वा० इत्यत्र सुब्धातुत्वं न निषेधतन्त्रं किं तु 'धात्वादेः षः सः" (६।१।६४) इत्यत्रोपदेश इत्यनुवृत्तेरनोपदेशिकत्वं तच्च सुबन्तासुबन्तसाधारणं तदेवात्र सुब्धातुग्रहणेनोपलभ्यते[3] इति वा गमनीयम्। तदेव प्रातिपदिकादेव णिजिति माधवमतमनुसृत्य ग्रन्थो व्यारंचितः।

प्राचार्याणां तु सुबन्तादेवोत्पत्तौ स्वरसः। यदाहुः—सुबन्ताण्णिजिति।. हरदत्तोऽप्याह—तदिति द्वितीयान्तोपलक्षणम्। कथं तर्हि पदकार्याभावः। इष्ठवदित्यतिदिष्टया भसंज्ञयेति ब्रूमः। न चास्या स्थानिवद्भावशङ्का। पदसंज्ञायामतुल्यत्वात्। नहि पदसंज्ञापि पदान्तस्य विधिः कर्मसाधने हि विधिशब्दे स्थानिवद्भावनिषेधाद्विना यः सिद्धः पदान्तस्तस्य यो विधिर्भवन्[4] पदस्यान्तः सपद्यते स पदान्तविधिः।

न च पदसंज्ञा तथा। भावसाधने तु भसंज्ञाया अपि पदान्तविधित्वं भाष्ये उपपादितम्—वेतस्वानित्यस्य[5] सिद्धये। अवश्यं च भपदसंज्ञयोस्तुल्यावधिकत्वमेषितव्यम्, अन्यथा पटिष्ठ इत्यादौ सुबन्तादिष्ठनि भसंज्ञया पदसंज्ञा नापोद्येतेति[6] जश्त्वं

१. सुबन्तं णिजिति क० पु०।
२. सुब्ग्रहणमिति क० पु०।
३ लभ्येयमिति क० पु०।
४. सुधानुग्रहणेनेति क० पु०।
५. योऽनन् इति क० पु०।
६. तेनाप्यतेति क० पु०।
७. पदसंज्ञेति नास्ति क० पु०।

स्यात्। किं च योऽपि मन्यते प्रातिपदिकाण्णिजिति, तेनापि भसञ्ज्ञयैव पदकार्याभावोऽवश्यं वाच्यः। अन्यथा स्रजयतीत्यादौ सुबन्ता[1]दुत्पन्नयोः विन्मतोर्लुकि तत्प्रकृतेः सुबन्तत्वात् प्रत्ययलक्षणेन पदकार्यं प्रसज्येत इति दिक्।

वृद्धौ सत्यां टिलोप इति। परत्वाद् वृद्धिरेदौतौ। ततस्तयोर्लोपो न स्त्विद्वतोरेवेत्यर्थः। किमेवं सति कृतं भवतीत्याहुः। चङ्यनग्लोपित्वात् सन्वद्भाव इति। तदेतदन्यमतम्। भाष्यमते[2] स्वत्रागिति प्रत्याहारग्रहणात् ज्ञापकात् वृद्धेः प्रागेव टिलोपाभ्युपगमात् अपपटदित्येव भवितव्यमिति वर्णितम्। हलि कलि निरूपणे तत्करोतीत्यत्र प्रकृत्यर्थमात्रं विवक्षितम्, न प्रत्ययार्थ इति भूतेऽपि णिजुदाहृतः। एवं च कृत्वा भविष्यत्यपि द्वित्वबहुत्वयोर्भावकर्मणोरपि भवति। अत्र च प्रकरणे 'तेनातिक्रामती" त्येतद्धातुसूत्रमित्यतिहस्तयति इत्युदाहरणेनैवार्थतः सूचितम्, न कण्ठतः पठितम्।

तत्करोतीत्येतत्तु धातुसूत्रत्वेऽपि वार्तिककृता सुखार्थं पुनरुपसंख्यातमिति श्रद्धातिशयादाचार्यैः पुनरप्युपात्तमिति[3] ध्येयम्। उपसंख्यानान्तरमाह—आख्यानादिति। आख्यायते इत्याख्यानम्। "कृत्यल्युटो बहुलम्" ( ३।३।११३ ) इति कर्मणि ल्युट्। यदेव किञ्चिदाख्यायते तदेवाख्यानमिहाभि[4]प्रेतम्, न तु कंसवधनलोपाख्यानः सुभद्राहरणबलिबन्धाद्येव संज्ञाभूतम्। *तेन राजा गमनमाचष्टे। राजानमागमयती*त्यादावपि भवति। आख्यानशब्देन च तदभिधायी शब्दो गृह्यतेऽर्थे कृदन्तत्वासम्भवात्। "*कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति कंसवधबलिबन्धादयः समुदाया अपि* कृदन्ता उच्यन्ते।

तस्मात्तदिति कर्मभूतादाचष्टे इत्यर्थे णिच् भवति। कृत्प्रत्ययस्य च लुक् भवति। कृतश्च या प्रकृतिस्तस्याः प्रत्यापत्तिः विकारत्यागेन स्वेनैव प्राकृतेन स्वरूपेणावस्थानं भवति। यश्च तत्र कृदन्ते सन्निहितं कारकं विभक्तिस्तत्प्रकृतिवद् भवति। कृत्प्रकृतेः शुद्धे णिचि "हेतुमति च" ( ३।१।२६ ) इति विहिते यादृशं भवति तादृशमस्यापि ण्यन्तस्य भवतीत्यर्थः।

कंसवधाख्यानमाचष्टे इति। अत्र कंसवधशब्द एव प्रकृतिर्विवक्षिता। तस्यैव च ख्यायमानत्वद्योतनायाख्यानग्रहणम्। हननं वध इति हन्तेरप्प्रत्ययो वधादेशश्च। कंसस्य वधः इति कर्मणि षष्ठ्या समासः। ततो णिच्। अप्प्रत्ययस्य कृतो लुक्। तत्प्रकृतेर्हन्तेर्वधादेशरूपविकारपरित्यागेन हन्रूपेणावस्थानम्। यद्यपि कृतो लुकि कृते

१. अस्याग्रे इष्ठनि इत्यारभ्य णिजितीत्यन्तो द्विवारं पठितः क० पु०।

२. मते इति क० पु०।

३. पुनरपि कण्ठत उपात्तमिति ख० पु०।

४. मिहा इति द्विवारं क० पु०।

५. द्योतनायाख्यानेति क० पु०।

तत्सन्नियोगशिष्टस्य षत्वादेशस्यापि निवृत्तिः सिध्यति, तथापि पुष्येण योगं जानाति, पुष्येण योजयतीत्यत्र कुत्वस्यासन्नियोगशिष्टस्य निवृत्त्यर्थं प्रकृतिप्रत्यापत्तिवचनम् इत्याहुः।

यद्यपि[1] निमित्तापायन्यायेनापि तत्सिद्धयति, तथापि अस्यानित्यत्वमनेन ज्ञायते, तेन भवेत्यादावतो हेर्लुकि शपो निवृत्तिरिति तत्त्वम्। एवं च कंस हन् इति स्थिते कंसात् षष्ठी पूर्ववत् स्यात्। प्रत्ययलक्षणेन कृद्योगस्याद्यापि सत्त्वात्। "न लुमता" (१।१।६३) इति तु नास्ति अनङ्गकार्यत्वात्। अतो हेतुमण्णिचः प्रकृतौ हन्तौ यादृशी विभक्तिः कर्माभिधायिनी दृष्टा द्वितीयारूपा सैवात्रापि भवति।

ननु घातयतीत्यत्र "हो हन्तेः" (७।३।५४) इति कुत्वम्। "हनस्त" (७।३।३२) इति तत्वं च न प्राप्नोति। किं कारणम्? धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्। न चायं णिच् धातुप्रत्ययः। न च वाच्यं हेतुमण्णिचि प्रकृतौ तद्दृष्टमितीहाप्यतिदिश्यते इति। यतः प्रकृतिवत् कारकमेवातिदिष्टं न कार्यान्तरमपि। अत्राहुः प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः। कार्यमिति चाध्याहारः, तदायमर्थः कृतौ या प्रकृतिस्तस्या शुद्धे णिचि यादृशं कार्यमन्यदपि भवति तदस्मिन्नपि णौ भवतीति। तेन घत्वतत्वाद्युपपत्तिः।

एवं च राजानमागमयतीत्यत्र[2] लुप्तान्तर्वर्तिविभक्त्या पदत्वात् प्राप्तो नलोपोऽपि न भवति, प्रकृताविव सिद्धकारकरूपे दृष्टस्य नलोपाभावस्याऽप्यतिदेशात्। अत एव कंसमघातयत्। राजानमजोगमत् इत्यत्र कंसवधराजागमनशब्दाभ्यां णिचो विधानादङ्गसंज्ञा नामधातुत्वं तयोरेवेति अट्द्विर्वचने अपि तयोरेव स्यातामित्यपि दूषणं परास्तम्। यतः शुद्धे णिचि यादृशं कारकं भवति धातावनन्तर्भूतं द्वितीयाद्यन्तमकृतनलोपादिकं तादृशेनैवात्रापि भवितव्यमिति[3]।

एवं च कंसादीनां कारकाणां णिजुत्पत्तौ पृथक्करणस्यातिदिष्टत्वाद्व्याख्यानात् कृत इत्याख्यानशब्दोऽर्थात् स्वावयवकृदन्तपरः पर्यवस्यति। शब्दान्वयरीत्या तु कृद् ग्रहणपरिभाषा प्रागुदाहृता।

बलिं बन्धयतीति। बलेर्बन्धो बलिबन्धः कर्मणि षष्ठ्या समासः। बलिबन्धमाचष्टे इति णिच् घञो लुक्। बलेर्द्वितीया पृथक्करणं च। इह राजानमागमयतीत्यत्र पूर्वं कृत्प्रकृतौ[4] राजा कर्ता आसात् तस्य गमेः शुद्धे णौ "गतिबुद्धि" (१।४।५२) इति कर्मसंज्ञा भवतीत्यत्रापि कर्मता भवति। इह तु देवदत्तपाकमाचष्टे। देवदत्तेन पाचयतीति भवति। नहि देवदत्तस्य पचेर्णिचि कर्मताऽस्ति "गतिबुद्धि" (१।४।५२)

१. इत्याहुरित्यारभ्य—तत्त्वमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।
२. मागमनमयतीति क० पु०।
३. भवितव्यमिति क० पु०।
४. कृत्प्रतायिति क० पु०।

ऊढिमाचष्टे ऊढयति । चङि द्वित्वं प्रति ढत्वादीनामसिद्धत्वात् सणि-चकस्य इति इत्यस्य द्वित्वम् । हलादिः शेषः । औजिढत् । ढीत्यस्य द्वित्वम् इति दुर्गसुसादयः । औडिढत् । ऊढमाचष्टे ऊढयति । औजिढत् । अल्लोपस्य णौ स्थानिवत्त्वमाश्रित्य ढत्शब्दस्य द्वित्वादौजढत् इति काशिकायाम् । औडढत् इत्यन्ये ।

---

इति नियमात् ।

इह पुनर्यदा स्वयं[1] मृगरमणमनुभवन्[2] अन्यस्मै तद्दर्शयितुमाचष्टे इति विवक्षा, तदा मृगान् रमयतीति भवति । यदा त्वरण्ये दृष्टं मृगरमणं ग्रामस्थोऽन्यस्मै कथयति एवं मृगस्तत्र[3] रमते इति, तदाऽत्र मृगाणामसंभवान्न सा दर्शनार्था प्रवृत्तिरिति वाक्यमेव भवति, न णिच् । तथा चोपसंख्याने "दृश्यार्थायां च प्रवृत्तौ" इति येयं, मृगरमणस्याख्यानरूपा प्रवृत्तिः सा यदि दृश्यार्था भवति, तदा णिजित्यर्थः ।

"इदं चाख्यानात्कृत"[4] ( वा० ) इत्येव सिद्धे नियमार्थमदृशार्थे मा भूदिति । दृश्यर्थायामित्येतच्च मृगरमणादिविषयमेव । राजागमनादौ तु प्रवृत्तेरदृश्यर्थत्वेऽपि णिज् भवतीति कैयटः । अत्रान्यान्यप्युपसंख्यायन्ते । आलोपश्च कालात्यन्तसंयोगे मर्यादायाम् । चित्रीकरणे प्रापि । नक्षत्रयोगे ज्ञि । तत्तनि नातिप्रचुरप्रयोगत्वाद् भाष्य-कृता प्रत्याख्यातत्वाच्चाचार्यैरप्युपेक्षितानि । आख्यानादित्येतत्तु बहुविषयत्वात् प्रत्या-ख्यातमप्युदाहृतम् ।

ऊढयतीति । वहेस्त्रियां क्तिति यजादित्वात् संप्रसारणे परपूर्वत्वे च कृते ढत्व-धत्वष्टुत्वढलोपदीर्घेषु ऊढिः । ततो णिचि टिलोपे तिप्शपोर्गुणेऽयादेशे च रूपम् । चङित्यादि । ऊढिशब्दाद् लुङि "णिश्रिद्रुस्रुभ्यः" ( ३।१।४८ ) इति च्लेश्चङ् । "चङि" ( ६।१।११ ) इति द्वित्वम् । "अजादेर्द्वितीयस्य" ( ६।१।२ ) इति ढिशब्दस्य प्राप्तं तत्र कर्तव्ये "पूर्वत्रासिद्धम्" ( ८।२।१ ) इति ढत्वादीन्यसिद्धानि । "पूर्वत्रासिद्धीयमद्विर्वचने" ( प० ) इतीह नास्ति "उभौ साभ्यासस्य" ( ८।४।२१ ) इति [5]णत्वारम्भेणास्यानित्य-त्वज्ञापनात् । तेन 'हति इत्यवस्थितस्य[6] द्वित्वमित्यर्थः । तत्किमनचकस्य द्वित्वं नेत्याह सणिचकस्येति । णौ कृतं स्थानिवत् इति । टिलोपस्य स्थानिवद्भावस्तु[7] नोक्तः ।

भाष्यकृन्मते उवर्णादेशस्यैव तदभ्युपगमात् । अनुवर्णादेशस्यापि स्थानिवत्त्व-वादिनो वामनस्यापि मते सत्यपि स्थानिवत्त्वे रूपे विशेषाभावात् स नोपन्यस्तः ।

---

१. अपूर्वेरिति क० पु० ।
२. मनुभवन्निति नास्ति क० पु० ।
३. मृगस्तत्रेत्यारभ्य—येयमित्यन्तो (            ) रेखाङ्कितो नास्ति क० पु० ।
४. चाख्यानमित्यादिति क० पु० ।
५. णत्वारम्भे इति वाक्यद्वय क० पु० ।
६. तेन हन इत्यवस्थितस्येति क० पु० ।
७. स्थानिवद्भावस्यस्तु इति क० पु० ।

"प्रकृत्यैकाच्" ( ६।४।१६३) वृद्धिपुगागमौ । स्वापयति । इष्ठवत्त्वात् पुंवद्भावः । एनीमाचष्टे एतयति "र ऋतो हलादेः" ( ६।४।१६१) इति रत्वम् । प्रथयति । "स्थूलदूर" ( ६।४।१५६ ) इति यणादिलोपः । स्थवयति । "प्रियस्थिर" ( ६।४।१५७ ) इति प्रादयः । प्रियमाचष्टे प्रापयति । स्थापयति । साधयति । "संज्ञापूर्वको विधिरनित्यः" ( प० ) इति नोपधावृद्धिः । फनयति । "विन्मतोर्लुक्" ( ५।३।६५ ) स्रग्विन् स्रजयति । ईश्मन ईशयति । स्वयति । "श्वेतश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च" ( वा० ) । श्वेतयति । अश्वयति । गालोडयति । आह्वरयति ।

---

औजिढदिति । ह्लु ति ह्लु तीति द्वित्वे हलादिः शेषात्तलोपे ह्रिह्लु ति-इति स्थिते कुहोश्चुत्वेन हस्य झकारे "अभ्यासे चर्च" इति जकारे उत्तरखण्डस्य पूर्ववद् ढत्वादिषु णलोपे चादिवृद्धिः । ढीत्यस्य द्वित्वमिति । "पूर्वत्रासिद्धीयमद्वित्वे" ( प० ) इत्याश्रयणादिति भावः । औडिढदिति । ढस्य जश्त्वेन डः । शेषे पूर्ववत् । ऊढमाचष्टे इति । वहेः क्तप्रत्यये पूर्ववत् संप्रसारणादौ रूपम् । औजिढदिति । णौ कृत उवर्णादेश एव स्थानिवदिति भाष्यमतेऽल्लोपस्य स्थानिवत्त्वाभावाद् णिसहितस्य ह्लु तीत्यस्य[1] द्वित्वं प्राग्वत् प्रक्रिया ।

वामनमतमाह–अल्लोपस्येत्यादि । उवर्णादेश एवेति नियमो नास्तीत्यर्थः । हलन्तस्येति । ढत्वादीनामसिद्धत्वमिहाप्यविशिष्टमिति भावः । औडढदिरयन्य इति । दुर्गगुप्तादयो हि "पूर्वत्रासिद्धीयमद्वित्वे" ( प० ) इत्यास्थिताः । तेनाल्लोपस्य स्थानिवत्त्वपक्षेऽपि ढशब्दस्य द्वित्वेऽभ्यासस्य चर्त्वमित्यर्थः । स्वापयतीति । स्वं करोत्याचष्टे वेति । स्वशब्दाण्णिचि इष्ठवद्भावाट्टिलोपे प्राप्ते एकाच्त्वान्निवर्तिते "अचो ञ्णिति" इति वृद्धिराकारः । "अर्तिह्री" इति पुक् । चङि तु असिस्वपत् । अशब्दाण्णिचि वृद्धिपुकावापयति । चङि तु ओणेॠदित्करणेन ज्ञापितम् द्वित्वात् पूर्वमुपधाह्रस्वः । ततृक्ते निशब्दस्य द्वित्वे मा भवानपिपददिति भवति ।

एवमिकारादिष्वप्यूह्यम् पुग्वर्जम्।[2] एनीमाचष्टे इति । यथाकथंचिद् "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" ( प० ) इति स्थिते ङ्यबन्तादपि णिच् पुंवद्भावश्च भवतीति भावः । एतशब्दात् स्त्रियां "वर्णादनुदात्तात्" इति ङीप् तस्य नकारे एनी तस्याः पुंवद्भावेनैत शब्द आदेशो भवति । नन्वत्र टिलोपातिदेशेनैव ङीपो निवृत्तौ तत्सन्नियोगशिष्टस्यापि निवृत्तिर्भविष्यति "सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः" इति परिभाषणात् ।

---

१. ह्लु ति ति ह्रस्वस्येति क० पु० ।
२. पुग्वर्जमोर्मिति क० पु० ।

अत्राह कैयटः—भाष्ये पुंवद्भावेनैतद्रूपसिद्धेरुक्तत्वात् "सन्नियोगशिष्ट" परिभाषाऽनित्येति ज्ञाप्यते । तेन ऐनेयः श्यैनेय इत्यत्र "यस्येति च" (६।३।१८४) इतीकारलोपेऽपि नकारो न निवर्तते इति सिद्धयति इति हरदत्तेन तूक्तम् । अपर आह—इडविडमाचष्टे इडविडयति । दरदमाचष्टे दारदयतीत्यादौ पुंशब्दातिदेशार्थं पुंवद्वचनमिति । अत्र गोत्रत्वेन जातित्वेन "जातेश्च" (६।३।४१) इति निषेधो नास्ति । "प्रवाहण ढे" (७।३।२८) इत्यत्रास्य निषेधस्यानित्यत्वज्ञापनात् ।

अत एव हस्तिनीनां समूहो हास्तिकमित्यत्र पुंवद्भावोऽनेन न निषिध्यते । प्रथयतीति । पृथुमाचष्टे । टिलोपस्य स्थानिवद्भावाद् "अत उपधायाः" (७।२।११६) इति न वृद्धिः । स्थवयतीति । स्थूलमाचष्टे इति णौ लशब्दस्य लोपे तस्य "असिद्धवदत्राभात्" (६।४।२२) इत्यसिद्धत्वात् ओगुणस्याप्राप्तावपि पूर्वस्य गुण इति गुणादेशः । अत्राप्युपधावृद्धिः प्राप्ता "अङ्गवृत्तौ पुनर्वृत्तावविधिः [1]परिनिष्ठितस्य" (प०) इति वा, प्रातिपदिकाद् धात्वर्थे बहुलमिति बहुलग्रहणाद्वा न भवति ।

एवं दूरस्य [2]दवयति । "सीकरव्यतिकरं मरीचिभिर्दूरयत्यवनते विवस्वति" इति तु चिन्त्यम् । इष्टवद्भावाद्दवयतीत्येव हि भाव्यम् । यूनः यवयति । लिङ्गविशिष्टपरिभाषया युवतिशब्दस्यापि परयणादिलोपे पुंवद्भावे च कृते यवयतीत्येव रूपं भवति । प्रापयतीति । प्रियस्य प्रादेशे वृद्धौ पुगागमः । टिलोपे कर्तव्ये "असिद्धवद्" (६।४।२२) इति प्रादीनामेवासिद्धत्वाट्टिलोपाभावः । "प्रकृत्यैकाच्" (६।४।१६३) इति प्रकृतिभावस्त्वत्र न सम्भवति । अस्मिन् कर्तव्ये प्रादीनामसिद्धत्वादेकाजेव नास्तीति । अत्र बहुलग्रहणात् प्रादेशाभावात् प्रिययतीत्यपि स्वामी प्राह । स्थापयतीति । स्थिरस्य । एवं स्फापयतीति स्फिरस्य । उरोः । वरयतीति । बहुलग्रहणात् अङ्गवृत्तपरिभाषया वा वृद्ध्यभावः । साधयतीति । "अन्तिकबाढयोर्नेदसाधौ" (५।३।६३) इति साधादेशः ।

एवमन्तिकस्य नेदयति । कनयतीति । युवानमल्पं वाचष्टे । "युवाल्पयोः कनन्यतरस्याम्" (५।३।६४) इति कनादेशः । अन्यतरस्यां ग्रहणात् पक्षे यवयति । अल्पयतीत्यपि । लिङ्गविशिष्टस्यापि ग्रहणात् युवतेरपि कनयतीति भवति । इह ([3]प्रशस्यमाचष्टे प्रशस्यतीति भवति प्रशस्यस्य श्रः" (५।३।६०) "ज्य च" (५।३।६१) इति श्रज्यादेशौ न भवतः । संग्रामयतेरेव सोपसर्गादिति ज्ञापकात् शस्यशब्दादेव णिचा भाव्यम्, न तु) प्रशस्यशब्दादिति णिजन्तत्वाभावादिति माधवः ।

---

१. ष्ठितस्येति वा इति क० पु० ।

२. दवीयतीति क० पु० ।

३. प्रशस्यमाचष्टे इत्यारभ्य न शिजन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

अन्ये तु ज्यापयति ज्यापयतीत्युदाजह्रुः। वृद्धस्य तु ज्यादेशो णावपीष्यते। ज्यापयति। पक्षे वर्षादेशोऽपि वर्षयति। स्रजयति। स्रगस्यास्तीति स्रग्वी। "अस्मायामेधास्रजो विनिः" ( ५।२।१२१ ) इति विनिः। ततो णिचि विनो लुक् "प्रकृत्यैकाच्" ( ६।४।१६३ ) इति प्रकृतिभावाट्टिलोपाभावः, अङ्गवृत्तपरिभाषया चोपधावृद्धयभावः। अनेकाचां तु मायाविन्-मेधाविन्-वसुमत्-दृषद्वत्प्रभृतीनां विन्मतोर्लुकि टिलोपे माययति। मेधयति। वसयति। दृषयति इति भवति। सान्तानामपि पयस्विन्-तेजस्विन्-आयुष्मदादीनां विन्मतोर्लुकाऽनेकाच्त्वाट्टिलोपे पययति। तेजयति। आययति इति भवति।

कैयटस्तु नाप्राप्ते टिलोपे 'विन्मतोर्लुक् आरभ्यमाणः प्रत्ययविषयमिव प्रकृतिविषयमपि टिलोपमेकत्वाद् बाधते" इति भाष्यदर्शनात् सान्तानां विन्मतुपोर्लोपविषये टिलोपाभावात् तेजसयति, आयुषयतीत्युदाजहार। असान्तेषु तु वसयतीत्यादिषु टिलोपमनुमन्यते एवेत्यन्यत्र विस्तरः।

ईश्मन्निति ईडस्यास्तीति मतुप् मलोपः। एवं त्वचयतीति। पूर्ववद् वृद्धयभाव.। "विन्मतोर्लुक्" ( ५।३।६५ ) इत्यत्र ड्मतुपोऽपि ग्रहणमिच्छन्तः 'कुमुदनडवेतसेभ्यो ड्मतुप्' कुमुदयति, नडयति, वेतसयतीत्युदाहरन्ति। अन्ये तु द्व्यनुबन्धको मतुबेव गृह्यते, न तु त्र्यनुबन्धको ड्मतुबिति वदन्तः कुमुद्वयति, नड्वयति, वेतस्वयतीत्युदाजह्रुः।

प्रसङ्गात् किञ्चिदुच्यते। कर्तारमाचष्टे इति णौ "तुश्छन्दसि" (५।३।५९) इति तुशब्दलोपे करयति। दोहयति। भाषायां तु कर्तयतीत्यादि। पितुः पितृयति। स्वादयति। मादयति। स्वमो वा। अङ्गवृत्तपरिभाषया वृद्धिर्नेत्येके। त्वदय त मदयति। अन्ये तु "अतो गुणे" ( ६।१।९७) इति पररूपं बाधित्वा टिलोपे वृद्धिपुकौ त्वापयति। मापयतीत्याहुः। श्वादिषु विवदन्तः श्वानमाचष्टे इति णौ कृते "प्रकृत्यैकाच्" (६।४।१६३ ) इति प्रकृतिभावः "टेः" ( ६।४।१५५ ) इत्यस्यैवेति तस्मिन् निवृत्तेऽपि "नस्तद्धिते" (६।४।१४४) इत्यपरष्टिलोपो भवति। तत्र कृते "श्वयुवमघोनामतद्धिते" ( ६।४।१३३ ) इति संप्रसारणे वृद्धयावादेशौ। "ओर्गुणः" ( ६।४।१४६ ) इति तु न भवति। "असिद्धवदत्र" ( ६।४।२२ ) इत्योर्गुणं प्रति संप्रसारणस्यासिद्धत्वात्।

ननु श्वादीनामेतत् संप्रसारणं नान्तानामिष्यते इत्युक्तं तत्कथं टिलोपे कृते स्यादिति चेत्, मैवम्, संप्रसारणं प्रति टिलोपस्यासिद्धत्वान्नान्तत्वमेवेतत् इति। शावयतीति भवितव्यमित्येके। (न चैवं[1] मघवतः इत्यत्रापि तुरसिद्धत्वात् संप्रसारणप्रसङ्गः। परत्वात् पूर्वं प्रवृत्तस्य संप्रसारणस्यासिद्धत्वेन तुः प्रवृत्तेः पुनस्तुरसिद्धत्वान्न प्रवृत्तिः सकृत्प्रवृत्त्या चरितार्थत्वात्)।

---

१. न चैवमित्यारभ्य—चरितार्थत्वादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

अन्ये तु नान्तलक्षणाट्टिलोपात् "टेः" ( ६।४।१५५ ) इत्यनेनैव परत्वाद् भवितव्यम्, स च प्रकृतिभावेन निवर्तित इति संप्रसारणे शुनयतीति मन्यन्ते। विदुषो णौ टिलोपे संप्रसारणे वृद्ध्यावो विदावयति। नित्यत्वादादौ संप्रसारणे परपूर्वत्वे च कृते टिलोपाद् विदयतीत्येके। प्रष्ठौहः। प्रष्ठावयति। कृते ऊठि टिलोपपक्षे प्रष्ठापयति। उदञ्चमाचष्टे उदीचयति। संग्रामयतेरेव सोपसर्गादिति नियमादुपसर्गाणां पृथक्करणाद् अञ्चतेरेव णौ "प्रकृत्यैकाच्" ६।४।१६३ ) इति टिलोपाभावे भत्वान्तलोपे "उद ईत्" ( ६।४।१३९ ) इत्यादि।

एव प्रतीचयति। समीचयति। तिरसस्तु अन्तरङ्गत्वात्तिर्यादेशे कृते "टेः"[1] ( ६।४।१५५ ) इति टिलोपे वृद्ध्यायोस्तिराययति। न पुनस्तिरेष्टिलोपः शङ्क्यः। चिणो लुक् चिणो लुक्येवासिद्धो भवतीतिवदस्मिन् कर्तव्ये पूर्वं प्रवृत्तस्य तस्यासिद्धत्वात्। "अङ्गवृत्त" ( प० ) इति वा।

अत एव "अव्ययानां भमात्रे टिलोपः" (वा०) इत्यपि न भवति। एवं सध्र्यङ् सध्र्यायति। विष्वद्र्यङ् विष्वद्र्यापयति। युवयति। "अदसोऽद्रेः" अदद्र्यापयति। मुत्वे अमुमु आययति। अदमु आपयति। कर्णोपाध्यायस्तु[2] भस्य अङ्गस्येत्यधिकारात् अङ्गारम्भके स्वरे एव संप्रसारणविधानात् श्वनयति। युवयति। मघवयति। विद्वयति। प्रष्ठवयति। अञ्चेः प्रत्ययति। तिर्यंयति। उदञ्च् उदयति। सम्ययति इत्याद्येव भवतीत्याह। "प्रकृत्यैकाच्" (६।४। ६३) इत्यपीह नास्ति, क्विबन्ते[3] लिङ्गे उपसर्गस्य तदवयत्वात् समुदायस्यानेकाच्त्वात्।

संग्राम युद्धे इति ज्ञापकस्याक्विबन्तविषयत्वात् णिकृते टिलोपादिति। बहूनाचष्टे बहयति। इष्ठवदितीष्ठनि परे यद् दृष्टं कार्यं तदेवातिदिश्यते न त्विष्ठनोऽपीत्युक्तम्। तेन "इष्ठस्य यिट् च" ( ६।४।१५६ ) इति यिट् न भवति। इष्ठवदिति प्राधान्येन कार्यस्यैवातिदेशादिष्ठनि परे प्रकृतौ यद् दृष्टं संभावितं वा सर्वं कार्यमेवातिदिश्यते इति सन्नियोगशिष्टत्वाभावात् भूभावे कृते भावयतीति भवति—इति कैयटमाधवौ।

श्वेताश्वेति। श्वेतयतीति। श्वेताश्वमाचष्टे। णिचि अश्वशब्दस्य लोपे कृते णाविष्ठवदिति टिलोपः। अश्वयतीति तरस्य लोपः। गालोडयतीति इतस्य आह्वरयतीति कशब्दस्य। एतेषां चङ्यग्लोपित्वात् सन्वद्भावोपधाह्रस्वयोरभावात्। आशिश्वेतत्।[4] आशश्वेतत्। अजगालोडयत्। आजह्वरत्। गालोडिते इतशब्दस्य

१. ष्टेरिति लोपे इति क० पु०।
२. कर्णोपाध्यायस्तु इति क० पु०।
३. क्विबन्तो इति क० पु०।
४. आशश्वेतत् अजगालोडितो इत शब्दलोपोऽप्यग्लोप एव। नहि तत्राग्लोपमात्रस्य लोपोऽग्लोपः आप्यीयते इति क० पु०।

## ५२४. कण्ड्वादिभ्यो यक् [ ३।१।२७ ]

कण्डूञ् इत्यादिभ्यो यक् प्रत्ययः स्यात् कृञर्थे। धातवः प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः। कण्डूं करोति कण्डूयति। कण्डूयते। हृणीङ् हृणीयते, महीङ् महीयते इत्यादि। क्यजन्तात् सन्। नामधातोर्यथेष्टं द्वित्वं वक्तव्यम्। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। अजादेराद्येतरस्य द्वित्वम्। अशिश्वीयिषति। अश्वीयियिषति। यत्र संयोगे नदराः सन्ति तत्र आदेरेव न द्वित्वम्। इन्दिद्रीयिषति। चन्दिद्रीयिषति। कण्ड्वादेस्तृतीयस्यैव। कण्डूयियिषति। णिङः सन्। चिकामयिषते। आयादित्वाद्वा चिकमिषते। यङ्सन्ण्यन्तात् सन् बोभूयियिषति इत्यादि।

इति नामधातुप्रक्रिया

---

लोपोऽपि अग्लोप एव नहि तत्राग्मात्रस्य लोपोऽग्लोप आश्रियते। तथासदद्दृपत्। अरराजत् इत्यादावनग्लोपित्वात् सन्वदित्त्वोपधाह्रस्वप्रसङ्ग इति प्रागेव प्रपञ्चितम्। ननु माधवीये 'णिङङ्गान्निरसने'[1] (ग०) इति प्रक्रम्य "श्वेताश्वतर"[2] (ग०) इत्यादि पठित्वा एभ्यो णिङ् भवतीति व्याख्याय श्वेतयते इत्यादि चतुर्ष्वप्यात्मनेपदमुदाहृतम्, तत्कथमिह परस्मैपदमुदाह्रियते इति।

न च णिच् भविष्यतीति वाच्यम्। नाप्राप्तत्वेन णिङा सामान्यविहितस्य तस्य बाधादिति चेत्। एवमेतत्। आचार्यैस्तु अबाधोऽपि णिचो बाहुलकादिति[3] मैत्रेयादिमतानुसारेण णिचमभिप्रेत्योदाहृतम्।

कण्ड्वा। कृञर्थे इति। करणे इत्यनुवर्तत' इति भावः। यकं विशेषे व्यवस्थापयितुं कण्ड्वादीन् विभजते द्विविधा इति। यदित्विमे[5] धातव एव स्युस्ततो वाऽनुवृत्तौ यगभावे लडादिषु कण्डवतीति स्यात्। तिपि ·यकि कण्डूरिति न स्यात्, धातोः सुपोऽसम्भवात्। संपदादित्वाद्भावे क्विप्यल्लोपयोर्भविष्यतीति चेत्, एवमपि कण्डवौ कण्ड्वः इति धातुत्वादुवङ् स्यात्। अस्तु' "च्छ्वोः शूडनुनासिके च" (६।४।१९) इत्यूठ् करिष्यते। नैतदस्ति। क्विबाश्रयेऽन्तरङ्गे ऊठि कर्तव्ये बाह्यविभक्त्याश्रयस्योवङोऽसिद्धत्वात्।

---

१. णिचामादिति क० पु०।
२. श्वेतास्येत्यादि इति क० पु०।
३. पुणिचमभिप्रेत्येति क० पु०।
४. अशिश्वीयिषति इति मूलेपाठोऽधिकः प्रतिभाति।
५. येमे इति क० पु०।

अथापि कथञ्चिद् यण् स्यात्। एवमपि कण्ड्वाऽकण्डवे इति "नोङ्धात्वोः" (६।१।१७५) इति विभक्तेरुदात्तनिषेधः स्यात्। मन्तुर्वल्गुरिति च न सिद्ध्येत् "अकृत्-सार्वधातुकयोः" (७।४।२५) इति[1] दीर्घे मन्तूर्वल्गूरिति स्यात्। यदि पुनः प्राति-पदिकान्येव स्युः, दुःख्यति, मगध्यतीत्यादावतो लोपो न स्यात्। अधातुविहितत्वे नार्धधातुकत्वात्। नित्ये च यकि मन्तुर्वल्गुरिति न स्यात्। तस्मादुभये कण्ड्वादयः। तत्र धातुप्रकरणाधातुभ्य एव धातुभ्य एव प्रत्ययो विधीयते न प्रातिपदिकेभ्यः, तथा सति सुख्यति दुःख्यतीत्यादावतो लोपो न स्यात्।

न चैतानि हलन्तान्येवोपदेष्टुं शक्यन्ते। यगभावपक्षेऽनकारान्तताप्रसङ्गात्, अतो धातुभ्य एव यगेषितव्यः। कण्डूः कण्ड्वौ इत्यादिप्रयोगास्तु प्रातिपदिकात् सुपा सिद्धमेष्टव्यम्। अस्माच्च यगन्तात् क्विप् नास्ति, अनभिधानात्। 'नैतेभ्यः क्विप् वक्ष्यते" इति भाष्यात्। अन्यथा सति तस्मिन् अल्लोपयलोपयोः कृतयो[7] कण्ड्वा-वित्यादौ पूर्ववद्धातुकार्यप्रसङ्गः स्यात् इति स्थितमाकरे। एवं तु कण्डूं करोतीति विग्रहप्रदर्शनमयुक्तम्। तथाहि नित्यत्वाद् यकः प्रकृतेरेव तावत्प्रयोगेण न भवितव्यम्।

तथापि यद्ययं धातुस्तत उवङ् स्यात्, सुवेव वा न स्यात्। स्वार्थिकत्वाद् यकः प्रकृत्यर्थाधिककरोत्यर्थोपदर्शनं च न युज्येत। अथोच्येत नेदं विग्रहवाक्यम्, किन्तु धात्वर्थविवरणं पचति पाकं करोतीतिवत्। सर्वो हि धात्वर्थः करोत्यर्थेन[9] व्याप्त इति न्यायात्। कण्डूं गात्रविघर्षणं करोतीत्यर्थ इति। तदपि न, कण्डूशब्दस्य धातुत्वे प्रागुक्तदोषानिवृत्तेः[10] प्रातिपदिकत्वे[11] च विघर्षणार्थत्वानुपपत्तेः।

तदुक्तं भाष्ये—"आतश्चोभयं कण्डूयतीति क्रिया कुर्वाणे प्रयुज्यते। अस्ति च मे कण्डूरिति वेदनामात्रस्य सान्निध्यात्" इति। व्याख्यातं च कैयटेन वेदनामात्रस्येति। वेदनाऽत्र सत्त्वरूपतया प्रतीयते, न साध्यरूपतयेति भावः। तथा च कण्डूयति

१. वार्थे इति क० पु०।
२. मगध्यतःस्यादावेति क० पु०।
३. विहितत्वेनार्धधातुकत्वात्।
४. हलन्तान्येवेष्टमिति क० पु०।
५. यङभावपक्षे इति क० पु०।
६. अनकारान्ततयेति क० पु०।
७. अलोपयलोरिति क० पु०।
८. प्रकृत्यर्थाधिकारोत्यर्थोपदर्शनमिति क० पु०।
९. करोत्यर्थं युज्येत अथोच्येतेत्यादि द्विवारं पठितः इति क० पु०।
१०. इति न्यायादिति नास्ति क० पु०।
११. पदिकत्वे इत्येव क० पु०।

शिर. इत्युक्ते शिरो विपर्यस्ततीति प्रतीयते। कण्डू करोति दुर्लभमित्युक्ते च वेदनां जनयतीति स्फुटोऽर्थभेद इति चेत्. सत्यमेतत्। विघर्षणार्थमपि कण्डूप्रातिपदिकमौणादिकमस्ति। तथा चामरसिंहः—"खर्जूः कण्डूश्च कण्डूया" इति विघर्षणार्थेन कण्डूयाशब्देन कण्डूशब्दं व्याचष्टे, तस्य चानेकार्थत्वात् वेदनार्थत्वमप्य[1]विरुद्धम्।

इह तु आचार्येणाविघर्षणार्थेन विगृह्यते। न चास्याधातुत्वाद् यका न भाव्यम्, धातुभ्य एव यगिति सिद्धान्तात् इति वाच्यम्। तादृशसिद्धान्तकरणे प्रयोजनप्रमाणयोरभावेन प्रातिपदिकादेव यगुत्पत्तिपक्षस्याचार्यैरभिप्रेतत्वात्। न, चात्र पक्षे कण्ड्वं न्तूर्वल्गूरित्याद्यसिद्धिः। वेत्यधिकारेण यगभावपक्षेऽस्योपपत्तेः।

न चैव सुख्यतीत्यादौ अतो लोपाप्रसङ्गः इति वाच्यम्, यकः कित्वेनावश्यकत्वाल्लाघवाच्चाधधातुकत्वज्ञापनात्। धातुत्वज्ञापनपर्यन्तानुधावने प्रमाणप्रयोजनयोरभावात्। एवं च कृत्वा नामधातुत्वाद् यथेष्टं द्वित्वे प्राप्ते "कण्ड्वादेस्तृतीयस्य" इति नियमं वदन्ति। अत एव द्विविधा इत्येवोक्तम्, न तु धातुभ्य एव यगिति।

एवं हि नामधातुनिरूपणेऽस्योपन्यासो न विरुध्यते। तस्मादस्तु प्रातिपदिकेभ्य एव यक्[2]। स च करोत्यर्थे न स्वार्थे। तथा च व्याख्यातं कृञर्थे इति। कथं तर्हि उक्तम्–धातवः प्रातिपदिकानि चेति द्विधा यगन्ताः सन्तो धातवः केवलास्तु प्रातिपदिकानि इत्याशयात्। यद्वा; यगन्तधात्ववयवेषु तेषु धातुशब्दो गौण इति द्वैविध्यमुपचर्यते। उपपादितश्चायमर्थोऽस्मद्वृद्धैरित्यलमियता। कण्डूयते इति। कित्वान्न गुणः। अवयवेऽचरितार्थलिङ्गं समुदायस्य विशेषकं भवतीति ङित्वात् कर्तृगामिनि क्रियाफले यगन्तादप्यात्मनेपदम्। हृणीङ् इति लज्जायामयम्। अत्र च कृञर्थे इति क्रियाविशेषोपलक्षणं तेनार्थान्तरेऽपि भवति।

अथ वेत्यनुवृत्त्या व्यवस्थितविभाषा तेनैवप्रकारेभ्यो नित्यं यक्समुदायार्थो लज्जादिरिति ज्ञेयम्। महीङ् पूजायामित्यादि[3]पाठात्। मन्तु[4] रोषापराधयोः मन्तूयति। वल्गु पूजामाधुर्ययोः वल्गूयति।

असूञ् असु् मनस् एते उपतापे। असूयति। अस्यति। मनस्यति। लेट् लोट् धृतौ लेटयति। लेला दीप्तौ[5]। लेलायति। धातौ भृतौ लेलायति सः[6]। इरस् इरज् इरञ् ईर्ष्यायाम्। इरस्यति। इरज्यति। ईर्यति। ईर्यते। इयस् ऐश्वर्ये। इयस्यति। उपस्[7]

१. विविरुद्धमिति क० पु०।
२. एक इति क० पु०।
३. इत्यादौस्याविपदादिति क० पु०।
४. पुञ् इति क० पु०।
५. यद्यावौ सातौ मेलयितौ वेति क० पु०।
६. रस इति क० पु०।
७. उपसि इति क० पु०।

प्रभातीभावे। उषस्यति। वेद धौर्त्ये स्वप्ने च। वेदति। मेधा आशुग्रहणे। मेधायति। कुषुभ क्षेपे। कुषुभ्यति। मगध परिवेष्टने। मगध्यति। तन्तस् पम्पस् दुःखे। तन्तस्यति। पम्पस्यति। सुख दुःख तत्क्रियायाम्। सुख्यति। दुख्यति। सुखदुःखे अनुभवतीत्यर्थः। सपर पूजायाम्। सपर्यति। अरर आराकर्मणि। आरा प्रतोदः। अरर्यति भिषज् चिकित्सायाम्। भिषज्यति। भिष्णज् उपसेवायाम्। भिष्णज्यति। इषुध शरधारणे। इषुध्यति। चरण वरण गतौ। चरण्यति। वरण्यति। चुरण चौर्ये। चुरण्यति। तुरण त्वरायाम्। तुरण्यति। भुरण धारणपोषणयोः। भुरण्यति। गद्गद[1] वाक्स्खलने। गद्गद्यति। एला[2] केला खेला विलासे। एलायतीत्यादि। लेख स्खलने च। लेख्यति। लिट अल्पकुत्सनयोः। लिट्यति। लाट जीवने। लाट्यति। रेखा श्लाघासादनयोः। लेख्यति। द्रवस् परितापपरिचरणयोः। द्रवस्यति। तिरस् अन्तर्धौ। तिरस्यति। उरस् बलार्थे। उरस्यति। अगद निरोगत्वे। अगद्यति। तरण गतौ। तरण्यति। पयस् प्रसृतौ। पयस्यति। सम्भूयस् प्रभूतभावे। संभूयस्यति। अंवर संभर संवरणे। अंवर्यति संवर्यति। आकृतिगणश्चायम्। तेन रैधनादिभ्योऽपि भवति। रायति। धन्यति इत्यादि।

प्रत्ययमालां व्युत्पादयितुमाह—क्यजन्तात् सनिति। यथेष्टं द्वित्वमिति। नामधातौ यावन्त एवाचस्तेषां सर्वेषां पर्यायेण युगपद्वा द्वित्वं स्यात्। न प्रथमस्य द्वितीयस्येति च नियम इत्यर्थः। पुपुत्रीयिषतीति। आत्मनः पुत्रमिच्छतीति। "सुप आत्मनः क्यच्" (३।१।८)। पुत्रीयशब्दात् "धातोः कर्मणः" (३।१।७) इति सन् इट्। अतो लोपः "सन्यङोः" (६।१।९) इति द्वित्वम्। अजादेः प्रथमस्यापि प्राप्तौ आह-अजादेराद्येतरस्य द्वित्वमिति। आद्यस्याचो द्वित्वस्य शिष्टैरनिष्टत्वादिति भावः।

अत एव यथेष्टमित्युक्तम्। तथा च चतुर्थस्य सनो न भवति। सन्नन्तस्यानामधातुत्वाद्वा। तथाहि प्रथमस्य द्वितीयस्येति च सौत्रे प्रक्रमे नामधातोस्तृतीयस्य त्रिपर्यन्तां वृद्धिमुक्त्वा अपर आह "यथेष्टं नामधातुषु" इति। तत्रैवानियममाह भाष्यकारः। पुपु[3]त्रित्रीयियिषतीति। एतच्च भाष्यादौ नेष्यते। कथम्? यदि जातिः पदार्थः ततः सकृत्प्रवृत्त्या चरितार्थत्वात् पुनर्द्वित्वाप्रवृत्तिः।

अथ व्यक्तिस्तर्हि सुद्युयुंशन इत्यादौ पुनर्द्वित्वमितिवदिहापि द्विरुक्तानामपि द्विवचनावस्था स्यात्। अथानभ्यासस्येत्यपेक्ष्यते एवमप्यन्त्य[4]स्योपान्त्यस्य स्यादेव। अर्थैव बहुव्रीहिर्धातुविशेषणं ततः सर्वेषां वा युगपद् द्वित्वं व्याहतम्। अथ यथेष्टवचनादभ्यासस्यापीत्युच्येत, तदपि न। भाष्याद्यनुदाहृतत्वेन प्रत्युत तदनिष्टत्वावधारणात्। वचनस्य पर्यायेण प्रवृत्त्याऽप्युपपत्तेरिति। आचार्यस्त्वेतत् कातन्त्रे दर्शनादुदाहृतमिति ज्ञेयम्॥

१. गद्गद इति क० पु०।
२. इला फेला इति क० पु०।
३. पुपुतित्रीयियिषतीति क० पु०।
४. एवमप्यन्त्यस्यान्त्यस्य स्यादेवेति क० पु०।

यत्र संयोग इत्यादि । "नन्द्राः" ( ६।१।३ ) इत्यत्राजादेरित्यनुवर्तते । स च कर्मधारयः । तेनादिभूतादचोऽनन्तरस्यैव नकारादेर्निषेध इति प्रागेव व्याख्यातम् । इन्दिद्रीयिषतीति । इन्द्रमात्मन इच्छति क्यच् । इन्द्रीयति ततः सन् इट् । अतो लोपः । द्रीशब्दस्य द्वित्वम् । एवं यिशब्दस्य द्वित्वम् । एवं यिशब्दस्योभयोश्च द्वित्वमुदाहार्यम् । चन्दिद्रीयिषतीति । द्वितीयस्य यदा द्वित्वं तदा नकारं विहाय द्रिमात्रस्य भवति । पूर्वस्य तु चिचन्द्रीयिषति । तृतीयस्य तु चन्द्रीयियिषति । सर्वेषां चिचन्दिद्रीयियिषतीत्युन्नेयम् ।

कण्ड्वादेरिति । नामधातुत्वाद् यथेष्टं प्राप्ते नियमोऽयमिति द्योतनायैव शब्दः । अस्मादप्युन्नीयते यत्प्रातिपदिकेभ्यो यक् इत्याचार्याशय इति । अत एवाकरे धातुभ्यो यगित्युपगम्य विध्यर्थमेतदिति स्थितम् । प्रसङ्गात् प्रत्ययमालां व्युत्पादयितुमुदाहरति- चिकामयिषते इति । कमेर्णिङ् स्वार्थे । कामयितुमिच्छतीत्यर्थे सन् द्वित्वादि । "पूर्ववत् सनः" ( १।३।६२ ) । ननु तर्हि णिङो नित्यत्वाच्चिकमिषते इति न कदाचित् स्यादत आह—माया दित्यादेति' । बोभूयिषयिषतीति । बोभूयतेर्यङन्तात् सन् इट् । अनभ्यासस्येति निषेधात् पुनर्न द्वित्वम् । ततो बोभूयिषमाणं प्रेरयतीत्यर्थे "हेतुमति च" इति णिच्यतो लोपः । ततो बोभूयिषयितुमिच्छतीत्यर्थे पुनः सन् इट् णेर्गुणायादेशौ षत्वम्, ततो लट् शप् तिबादि इत्यादि ज्ञेयम् इति ।

एवं प्रकारेण प्रकृत्यन्तरेभ्यः प्रत्ययान्तराणि व्याससमासाभ्यां योज्यानीत्यर्थः ।

पृथ्वीमण्डलमौलिमण्डनमणेर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत्प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याहृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् सुब्धातुजा प्रक्रिया ॥ इति ।

। शुभं भूयात् । नामधातु ७०० ।



## ॥ अथ पदव्यवस्था ॥

**५२५.** अनुपराभ्यां कृञः [ १।३।७९ ]

आभ्यां कृञः परस्मैपदं स्यात् कर्तृगेऽपि फले। गन्धनादावपि। अनुकरोति। पराकरोति।

**५२६.** अभिप्रत्यतिभ्यः क्षिपः [ १।३।८० ]

कर्तृगेऽपि फले परस्मैपदम्। अभिक्षिपति। एवं प्रति। अति।

**५२७.** प्राद्वहः [ १।३।८१ ]

प्रवहति।

**५२८.** परेर्मृषः [ १।३।८२ ]

परिमृष्यति। वहेरपि। परिवहति।

---

अनुपराभ्यामिति। अनुपराभ्यां ञित्त्वात् "स्वरितञित" ( १।३।७२ ) इति क्रियाफले तङ् प्राप्तः। अकर्तृगेऽपि "गन्धनावक्षेपण" ( १।३।३२ ) इति प्राप्तस्तदपवादः। परस्मैपदं विधीयतेति दर्शयति—कर्तृगेऽपि फलगन्धनादावपि इति। अत्र कर्तरीत्यनुवर्तते। तेन भावकर्मणोर्न भवति। अनुक्रियते मैत्रश्चैत्रेण। द्वितीयमपि कर्तृग्रहणमनुवर्तते। तेन कर्तैव यः कर्ता न कथञ्चित् कर्म तत्रैव भवति। तेन कर्म कर्तरि न भवति। अनुक्रियते स्वयमेवेत्यादि। एवं परेष्वपि ज्ञेयम्। 'संज्ञापूर्वको विधिरनित्यः" ( प० ) इति नियमात् सर्वान् पराकुर्याः[1] इत्यत्र परस्मैपदाभाव इत्यात्रेयमाधवीये। एतेन सुरकुलमनुचक्रे तत्र बाणासुरीयां पुरमित्यपि प्रयोगो व्याख्यातः।

अभिप्रत्यतिभ्य इति। क्षिप प्रेरणे। स्वरितेत् तुदादि.।

प्राद्वहः। वह प्रापणे। भ्वादिः स्वरितेत्[2]।

परेर्मृषः। मृष तितिक्षायाम्। दिवादिः। स्वरितेत्। वहेरपीति। मृषेरपीति[3] योगविभागात् परिपूर्वात् वहेरपि परस्मैपदं भवतीत्यर्थः।

---

१. पराकुर्येति क० पु०।

२. स्वरिते तु इति क० पु०।

३. परे तिति क० पु०।

**५२९. व्याङ्परिभ्यो रमः [ १।३।८३ ]**

विरमति । आरमति । परिरमति ।

**५३०. उपाच्च [ १।३।८४ ]**

उपपूर्वाद्रमेरन्तर्भूतण्यर्थात् परस्मैपदं स्यात् । यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः ।

**५३१. विभाषाऽकर्मकात् [ १।३।८५ ]**

उपाद्रमोऽकर्मकाद्वा परस्मैपदं स्यात् । उपरमति । उपरमते । निवर्तते इत्यर्थः ।

**५३२. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः [ १।३।८६ ]**

एभ्यो णेः पूर्वमचित्तवत्कर्तृकेभ्योऽचलनार्थेभ्योऽपि ण्यन्तेभ्यः परस्मैपदं स्यात् । बोधयति पद्मम् । योधयति काष्ठम् । विनाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्नावयति ।

---

व्याङ्परिभ्य इति । रमु क्रीडायामनुदात्तेत् । ततो नित्यं तङि प्राप्तेऽपि परस्मैपदं विधीयते ।

उपाच्च । अकर्मकाद्विभाषां वक्ष्यति । अतः सकर्मकार्थ आरम्भः । ननूपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्तते । उपरतोऽध्ययनात् । उपरतानि धनानीति । न चानयोरर्थयोः[1] सकर्मको भवितुमर्हतीत्याशङ्क्याह—अन्तर्भूतण्यर्थादिति[2] । विनाऽपि णिचं रमिः प्रयोजकव्यापारे लक्षणया वर्तते । तत्रायं सकर्मको भवतीत्यर्थः । ण्यर्थमेव विवृणोति—उपरमयतीत्यर्थः इति ।

बुधयुध इति । बुध अवगमने । युध संप्रहारे । णश अदर्शने । जनी प्रादुर्भावे । इङ् अध्ययने । प्रुङ् गतौ । द्रुस्रु गतौ । एषु बुधयुधणशजनोऽकर्मकास्तेषामणावकर्मकादिति ( १।३।८८ ) परस्मैपदे सिद्धे वचनमचित्तवत्कर्तृकार्थमित्याह—अचित्तवत्[3]-कर्तृकेभ्य इति प्रुद्रुस्रवस्तु चलनार्थास्तेषां "निगरणचलनार्थेभ्यश्च" ( १।३।८७ ) इति सिद्धे यदा न चलनार्थास्तदर्थं वचनमित्याह—अचलनार्थेभ्योऽपि इति । अत्रेवार्थेऽयमकर्मकः ज्ञाने तु सकर्मकोऽप्यस्ति 'क्रमादमुं नारद इत्यबोधि सः" (मा०) इति । बोधयतीति । विकासयतीत्यर्थः । एतां कर्तृगे क्रियाफले "णिचश्च" ( १।३।७४ )

---

१. प्रधानपर्ययोरिति क० पु० ।
२. अन्तर्भूतण्यर्थत्वादिति क० पु० ।
३. अचित्तवदिति । अचलनार्थेभ्योऽपीत्येव क० पु० ।

## ५३३. निगरणचलनार्थेभ्यश्च [ १।३.८७ ]

अणौ सकर्मकेभ्योऽचित्तवत्कर्तृकेभ्योऽपि अदनकम्पनार्थेभ्यो ण्यन्तेभ्यः कर्तुः फलेऽपि परस्मैपदं स्यात्। भोजयति। चलयति। "अचोनिषेधः" ( वा० ) आदयते।

## ५३४. अणावकर्मकाच्चित्तवत्कर्तृकात् [ १ ३।८८ ]

णेः पूर्वमकर्मकात् चित्तवत्कर्तृकात् ण्यन्तात् परस्मैपदं स्यात्। शेते कृष्णः। शाययति कृष्ण गोपी। अकर्मकात् किम्। भक्तिं कारयते। प्राणिकर्तृकात् किम्? शोषयते शालिं वायुः। अणौ किम्? रूपयन्तं प्रयोजयति रूपयते हरिः।

---

इत्यात्मने प्राप्ते वचनम्। अत्र विकाशे[1] पद्मं कर्तृ तच्चाचेतनम्। विनाशयति। जनयति दुःखं सुखमिति शेषः। प्रावयतीति। प्रापयतीत्यर्थः। स्रावयति[2]। स्यन्दयतीत्यर्थः। चलनं तु प्राप्तिहेतुर्व्यापारो न पुनः प्राप्तिरेव। द्रावयति विलापयतीत्यर्थः। ननु स्यन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव। मैवम्। तथा प्रसिद्ध्यभावात्।

निगरणचलनार्थेभ्यश्चेति। अयमपि योगः सकर्मकार्थोऽचित्तवत्कर्तृकार्थश्चेत्याह—अणौ सकर्मकेभ्य इत्यादि। निगरणमभ्यवहरणम्। चलनं कम्पनमिति व्याचष्टे—अदनेत्यादि। "णिचश्च" (१।३।७४) इति प्राप्तस्य तङोऽपवाद इत्याह—कर्तुः फलेऽपीति। चलयतीति। कम्पने चलिरिति। घटादित्वात् "मितां ह्रस्वः" (ग०) इति ह्रस्वः। अनेरिति[3]। कर्तृगे फले "णिचश्च" (१।३।७४) इति प्राप्तात्मनेऽपवादः परस्मैपदमनेन निषिध्यते परगामिनि तु फले "शेषात्" (१।३।७८) इति परस्मैपदं स्थितमेव। तथा चादयति खादयति वाऽन्नं बटुनेति कारकेषूदाहृतम्।

अणावकर्मकादिति। शेते कृष्णः इति शीङ् स्वप्ने। अयमकर्मकः कर्ता कृष्णश्चित्तवान्। भक्तिं कारयते इति करोतिर्भक्तिमिति कर्मणा सकर्मकः। शोषयते इति। शुष शोषणेऽकर्मकः। अणौ किमिति। नहि णौ कश्चिदकर्मको भवति। प्रयोज्येन कर्मणा सकर्मकत्वादित्याशयः।

इतरस्तु स्वार्थे णिचि सम्भवत्यकर्मक इत्युदाहरति। रूपयन्तमिति[4]। रूप रूपकरणे। चुरादित्वाण्णिच्। अकर्मकोऽयं रूपाख्यस्य कर्मणो धात्वर्थेऽन्तर्भावात्। ततो हेतुमण्णिचि भवत्ययं चित्तवत्कर्तृको न त्वणावकर्मकः। नित्यण्यन्तत्वेनाऽण्यन्तावस्थाया अभावात्।

---

१. विकाशे पद्मं कर्तृस्वाचेतनत् इति क० पु०।
२. स्रावयति। स्यन्दयतीत्यर्थ इति नास्ति क० पु०।
३. अर्तेरिति क० पु०।
४. रूपयन्तमिति क० पु०।

## ५३५. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः [ १।३।८९ ]

सूत्रद्वयोक्तलक्षणवद्भ्योऽपि पादिभ्यो ण्यन्तेभ्यः कर्तुः फले परस्मैपदं न स्यात्। पाययते। दमयते। आयामयते। आयासयते। परिमोहयते। रोचयते। नर्तयते। वादयते। वासयते। "धेटोऽपि निषेधः"। (वा०) धापयते। अकर्तुः फले परस्मैपदं स्यादेव। सोमं पाययति याज्ञिकः।

---

अत्र वदन्ति—बुधादिसूत्रादिह 'णेरित्यनुवर्तते[1]। बुधादिभ्यश्च हेतुमत्येव णिच् संभवतीति यस्माण्णेर्विधिनिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य' इति हेतुमण्णिजेव प्रत्युदाहार्यः। आरोहयमाणं प्रयुङ्क्ते। आरोहयते इति चुरादिणिजन्तात्तु हेतुमण्णिचि परस्मैपदेनैव भवितव्यम्। रूपयतीति।

यत्तु प्राचोक्तं णिग्रहणे णिजातेराश्रयणाद्भेदन्याविवक्षयेदं प्रत्युदाहृतमिति तदसत्, विशेषग्रहणहेतौ प्रत्यासत्तौ सत्यां सामान्यग्रहणस्यायोगाद् भाष्यादिविरोधाच्च। कथं तर्हि "णेरणौ" ( १।३।६७ ) इत्यत्र जयादित्येन[2] प्रत्युदाह्रियते। अणाविति किम्। गणयति गणं गोपालकः। गणयतीति गणः स्वयमेवेति। विषम उपन्यासः यथेह[3] णिचो बुधादिसंनिकर्षो विशेषग्रहहेतुरस्ति नैवं "णेरणौ" ( १।३।६७ ) इत्यत्र इतीह णिसामान्यं गृह्यते इति।

किं च तत्रापि हेतुमण्णिच एव ग्रहणमिति भाष्ये स्थितम्। एवं तर्हि हेतुमण्ण्यन्तेष्वेवायं भविष्यति मैवम् तत्र प्रयोज्येन कर्मणा सकर्मकत्वेनाकर्मकत्वासंभवस्योक्तत्वात्[4]। नैष दोषः, हेतुमण्ण्यन्तोऽपि सौकर्यातिशयाद् यदा प्रयोजकव्यापारस्याविवक्षया प्रयोज्यव्यापारमात्रे वर्तते, तदाऽयमकर्मको भवति। एतच्च "णेरणौ" ( १।३।६७ ) इत्यत्र स्फुटीभविष्यति।

एवमपि "णेरणौ" (१।३।६७ इति वा कर्मवद्भावात्मनेपदं स्यात्। आरोहयते हस्ती स्वयमेवेति यथा।

· एवं तर्हि रूपवन्तं प्रयोजयति रूपयते इति स्वार्थणिजन्तात् हेतुमण्णिच एतद्वाच्यम्। तत्र कर्मकर्तृत्वादारोहयत इतिवदात्मनेपदं[5] तदन्ताच्च यदा रूपयमाणं

---

१. णेरिति क० पु०।
२. नाप इति क० पु०।
३ यथादित्यनेनेति क० पु०।
४. यथेह णिचि बुधादिसंनिकर्षं इति क० पु०।
५. योक्तत्वात्संदोष इति क० पु०।
६. दात्मनेपदन्ताच्चेति क० पु०।

## ५२६. कर्तरि कर्मव्यतिहारे [ १।३।१४ ]

धातोः कर्तर्यात्मनेपदं स्यात् क्रियायाः विनिमये। व्यतिभवते। "श्नसोरल्लोपः" ( ६।४।१११ ) व्यतिस्ते। व्यतिपाते। व्यतिपते। "तासस्त्यो-

---

प्रयुक्ते इति द्वितीयो हेतुमण्णिच् क्रियते, तदाऽप्येतदेव रूपं तत्प्रत्युदाहरणं द्रष्टव्यम्। रूपाभेदात्तु न पृथगुपात्तं तन्त्रेण निर्देशात्।

एवं हि रूपवन्तं प्रयोजयतीति णिजर्थ उपपद्यते। यदि त्वेक एव णिज्विवक्ष्यते सत एकैव प्रयुक्तिरपि विवक्ष्येत सतः प्रयुङ्क्ते इत्येवावक्ष्यत्। यतस्तु खलु हेतुमण्णिचौ द्वावुत्पादयितुं विवक्षति ततो द्वे प्रयुक्ती प्रदर्शयति। एका[1] हि युजिना परा णिचा।

एवं च कृत्वा चेतयमानं प्रयुङ्क्ते चेतयते इत्यपि प्रत्युदाहरणं केषाञ्चिद् व्याख्यानम्।

न पादम्याङ् इति। पा पाने भ्वादिः। पा रक्षणे इत्ययं तु न गृह्यते लुग्विकरणत्वात्। दमु उपशमे। आङ्पूर्वो यम उपरमे। आङ्पूर्वो यसु प्रयत्ने। परिपूर्वो मुह वैचित्ये। रुच दीप्तौ। नृतो गात्रविक्षेपे। वद व्यक्तायां वाचि। वस निवासे भ्वादिः। वस आच्छादने इत्यस्य तु लुग्विकरणत्वादग्रहणम्।

केन पुनः प्राप्तं निषिध्यते अत आह—सूत्रद्वयोक्तलक्षणवदभ्य[2] इति। "निगरणचलनार्थेभ्यश्च" ( १।३।८७ ) "अणावकर्मकाच्चित्तवत्कर्तृकात्" ( १।३।८८ ) इति द्वयम्। तत्र पिबतिर्निगरणार्थः, दमिप्रभृतयश्चित्तवत्कर्तृकाः, नृतिश्चलनार्थः। पाययते इति। "शाच्छा" ( ७।३।३७ ) इति युक्। दमयते इति। "जनीज्वृष्" ( ग० ) इत्यमन्तत्वेन मित्त्वाद् ह्रस्वः। आयामयते[3] इति। 'यमोऽपरिवेषणे' ( ग० ) इत्यमित्त्वम्। आङिति ङकारोच्चारणं स्पष्टार्थम्। क्रियायोगे आङोऽन्यस्यासंभवात्[4]। धेटोऽपि निषेधो वक्तव्य इति शेषः। निगरणार्थत्वात्[5] प्राप्तिः। धापयते इति। "आदेचः उपदेशे" ( ६।१।४५ ) इत्यात्त्वे पुक्। कथं तर्हि व्यन्ते स्वयमुदाहृतम् अपीप्यत्। दमयतीत्यादि। भाष्ये च प्रयुज्यते भिक्षा वासयति। अवीवदद् वीणामित्यादीत्याशङ्क्याह—अकर्तुः फले इत्यादि। कर्तृगे प्राप्तस्यात्मनेपदस्यापवादो यद्विहित परस्मैपदं तत् स्थितमेवेति भावः। याजक इत्यनेन परगामित्वं फलस्य दर्शयति सोमपानफलस्य स्वर्गादेर्यजमानगामित्वात्।

कर्तरि। धातोरिति। एतच्च "भूवादयः" ( १।३।१ ) इत्यतोऽनुवृत्तेरात्मनेपदे-नाक्षेपाद्वा लभ्यते। एवं च कर्मव्यतिहारे इति धातोर्विशेषणं कर्मव्यतिहारेऽर्थे

---

१. एकां युजि वा परां णिच इति क० पु०।
२. सूत्रद्वयोक्तेति क० पु०।
३. आयामते इति क० पु०।
४. आङो न स्यात्संभवादिति क० पु०।
५. निगरणपूर्वत्वादिति क० पु०।

लोपः" (७।४।५०)। व्यातिसे। "धि च" (८।२।२५) व्यतिध्वे। "ह एति" (७।४।५२) व्यतिहे। व्यतिषीत। व्यत्यसै। व्यत्यास्त। व्यतिराते। व्यतिरासे। व्यतिरे। आलोपाक्षे व्यतिरे।

वर्तमानाद्धातोरिति। ततश्चात्र कर्मलौकिकं क्रियारूपं गृह्यते न पारिभाषिकं साधनकर्म तत्र बहिरङ्गे[1] धातोर्वृत्त्यसंभवात् इत्याशयेन व्याचष्टे–क्रियाविनिमय इति। क्रियाणां विनिमयो व्यत्यासः योग्यतावशादस्या इदं साधनमस्येयं साध्येति निर्ज्ञातायां[2] यो विपर्यासः साधनभावस्य सः। परस्परकरणमपि कर्मव्यतिहारः। सम्प्रहरन्ते राजानः। व्यात्युक्षी व्यावक्रोशीति यथा। व्यतिभवते इति। अन्यस्य योग्यमन्यस्य विषयं वा भवनमन्यः[3] करोतीत्यर्थः।

अत्र यदानेकस्य कर्तृत्वे सह विवक्षा तदा द्विवचनं च भवति। सह विवक्षाया अभावे त्वेकवचनमपि। यथा मेषान्मेषो विश्लिष्यते इति मेषौ विश्लिष्येते इति वा। तेन व्यतिहारस्यानेककर्तृकत्वादेकवचनं न सम्भवतीति न शङ्कनीयम्। अत्र सर्वत्र व्यतिशब्दः कर्मव्यतिहारद्योतनार्थः।

व्यतिस्ते इति। असूते इति स्यते शपोऽदादित्वाल्लुक्। "श्नसोरल्लोपः" (६।४।१११) व्यतिषीत इति। "उपसर्गप्रादुर्भ्याम्" (८।३।८७) इति षत्वम्। व्यतिषते इति। "आत्मनेपदेष्वनतः" (७।१।५) इत्यदादेशः। व्यतिसे इति। अस्तेरकारसकारयोर्लोपे स इति प्रत्ययमात्रं शिष्यते तत्र व्यपदेशिवद्भावात् तिङन्तमिति पदं तस्य "सात्पदाद्योः" (८।३।१११) इति षत्वनिषेधः व्यतिषाथे। व्यतिध्वे इति। "श्नसोरल्लोपः" (६।४।१११) इत्यल्लोपे "धि च" (८।२।२५) इति सलोपः। व्यतिहे इति। इट् उत्तमस्य टेरेत्वेऽल्लोपे च सस्य हः। व्यतिस्वहे। व्यतिस्महे। व्यतिषीतेति। लिङः सीयुटि सलोपयलोपयोः श्नसोरल्लोपे परत्वादस्तेः सस्य षत्वम्। लोटि व्यतिस्ताम्। व्यतिषाताम्। व्यतिषत। व्यतिस्व। व्यतिषाथाम्। व्यतिध्वम्। व्यत्यसै। उत्तमस्य टेरेत्वे नित्यत्वात् "एत ऐ" (३।४।९३) इत्यैत्वे[4] निमित्ताभावात् "ह एति" (७।४।५२) इति न भवति। "आडुत्तमस्य पिच्च" (३।४।९२) इत्याट् वृद्धिः। पित्वान्न "श्नसोरल्लोपः" (६।४।१११) यणादेशः। इणः परत्वाभावान्न षः। व्यत्यसावहै। व्यत्यसामहै। व्यत्यास्तेति। लङि श्नसोरल्लोपस्य "असिद्धवत्" (६।४।२२) इत्यसिद्धत्वाद् "आडजादीनाम्" (६।४।१०२) इत्याट्। लुङादौ "अस्तेर्भूः" (२।४।५२) इत्यादेशात् व्यत्यभविष्टेत्यादि नेयम्।

१. व्येतत्रेति क० पु०।
२. ज्ञायते इति क० पु०।
३. अतो लोप इति क० पु०।
४. निमित्ताभावाद् इतीति क० पु०।

५३७. ईड्जनोर्ध्वे च [ ७।२।७८ ]

ह्वादिरवाज्जनेर्द्वित्वम् । व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । व्यतिजज्ञिध्व ।

५३८. न गतिहिंसार्थेभ्यः [ १।३।१५ ]

एभ्यः क्रियाविनिमयेऽपि नात्मनेपदं स्यात् । व्यतिसर्पन्ति । व्यतिघ्नन्ति । "हसादीनां च" ( वा० ) व्यतिहसन्ति ।

एवं जल्पपठी । "हरतेर्न निषेधः" ( वा० ) संप्रहरते । वहेर्न निषेध इति केचित् । व्यतिवहते ।

---

व्यतिराते इति । रा दाने । शपो लुक् । आतामि टेरेत्वे । झस्यादादेशे च सवर्णदीर्घेण सदेव रूपम् । व्यतिराध्वे । आलोपपक्षे इति । एति आलोप[1] इत्युक्तत्वात् । व्यतिरे । व्यतिराताम् । व्यतिरास्व । व्यतिरै । व्यत्यरात व्यत्यरास्त । जन जनने । व्यतिजनाते । व्यतिजज्ञाते । व्यतिजज्ञते । व्यतिजज्ञिषे इति । "धासः से" ( ३।४।८० ) इडागमः द्वित्वम् । "गमहन" ( ६।४।९८ ) इत्युपधालोपः । व्यतिजज्ञाथे । व्यतिजज्ञिध्वे इति सेटत्वत् । व्यतिजज्ञे । व्यतिजजन्वहे[2] । व्यतिजजन्महे । व्यतिजज्ञीत । व्यतिजजाताम् । व्यतिजज्ञाताम् । व्यतिजज्ञत । व्यत्यजज्ञाताम् । व्यत्यजनिष्टेत्यादि । कर्तरि-ग्रहणमुत्तरार्थम् । भावकर्मणोरपि[3] भवत्येव ।

कथं तर्हि "संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम्" इति । न च विनिमयशब्देन व्यतिहारस्योक्तत्वान्न भवतीति वाच्यम्, इतरेतरान्योन्योपपदाच्चेत्यारम्भात् । अपशब्द एवायमिति तु न्यासः । वस्तुतस्तु द्रव्यमात्रस्यात्र[4] विनिमयो विवक्षितो न क्रियाया इत्यदोषः ।

न गतिहिंसार्थेभ्य इति । व्यतिसर्पतीति । सृप्लृ गतौ । हसादीनां च इति हि आदिशब्दः प्रकारे शब्दक्रियाणामित्यर्थः ।

अत एवाह-एव जल्पपठी इति । "लघ्वक्षरं पूर्वम्" (वा०) पठेः पूर्वनिपातो न कृतोऽनित्यत्वात् । हरतेर्न निषेध इति । हिंसार्थत्वात्प्राप्तिः । एतत्तत्त्वर्थग्रहणसामर्थ्याद्[5] ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्तन्ते त एवेह[6] गृह्यन्ते इत्युपसर्गवशेन हिंसार्थत्वाद् हरतेरप्रतिषेधः । कथं तर्हि "ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ" इति ।

---

१. इत्येकं उक्तत्वात् इति क० पु० ।
२. व्यतिजन्वहे व्यतिजन्महे इति क० पु० ।
३. भावकर्मणरपि भवत्येव भावकर्मणोरि'त क० पु० ।
४. द्रव्यमात्रे इति क० पु० ।
५. दृष्टे इति क० पु० ।
६. अत एवेति क० पु० ।

**५३९. इतरेतरान्योन्योपपदाच्च [ १।३।१६ ]**

आभ्यां युक्तात् क्रियाविनिमयेऽपि नात्मनेपदं स्यात्। इतरेतरस्य अन्योन्यस्य वा व्यतिलुनन्ति। "परस्परस्येष्टिः" परस्परस्य व्यतिलुनन्ति।

**५४०. नेर्विशः [ १।३।१७ ]**

निपूर्वाद् विश आत्मनेपदं स्यात्। निविशते।

**५४१. परिव्यवेभ्यः क्रियः [ १।३।१८ ]**

एभ्यः क्रीणातेस्तङानौ स्तः। इहोभयपदिनामात्मनेपदमकर्त्रभिप्रायार्थम्। परिक्रीणीते। एवं वि अव।

---

नात्र व्यतिहारो विवक्षितः, किन्तु योत्स्यमानावति कैयटादयः। वहेर्नेत्यादि। "न वहिर्गत्यर्थः" इति भाष्यात्। देशान्तरप्रापणं वहेरर्थो नान्तरीयकस्तु गतिप्रत्ययः। अर्थग्रहणाद्वाच्यायां गतौ न भवतीत्युक्तत्वमिति भावः।

गत्यादिसूत्रे फलतया प्रतीयमानगतयोऽपि गत्यर्थतया गृह्यन्ते। तथा च "नीवह्योर्न" ( वा० ) इति कर्मसंज्ञा निषिध्यते। तद्वदिहापि गत्यर्थत्वमन्ये मन्यन्त इति तन्मताभिप्रायेण केचिदित्युक्तम्।

इतरेति। उपोच्चारितं पदमुपपदं न पारिभाषिकमसंभवादित्याह—आभ्यां युक्तादिति। इतरेतरस्यादि। लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरादितरेतरा शब्दा उपसर्गाश्च कर्मव्यतिहारद्योतनाय समुच्चीयन्ते। पदस्य द्विर्वचनविधानादन्योन्येति प्रकृतिभागमात्रस्यानुकरणं सूत्रे इति द्रष्टव्यम्।

नेर्विश इति। आत्मनेपदं स्यादिति। यद्यपि तिवादिसूत्रेणैव परस्मैपदमात्मनेपदं च विहितम्। इदन्तु प्रकरणं नियमार्थम्। तथापि "अनुदात्तङित आत्मनेपदम्" ( १।३।१२ ) "भावकर्मणोः" (१।३।१३) इत्येतदपेक्षया विधित्वमप्यस्य संभवतीत्येवमुक्तम्। न्यविशतेत्यत्र त्वाटा व्यवधानं विशेर्न शङ्कनीयं यतो बाह्योपसर्गसंबन्धापेक्षया बहिरङ्गादस्माल्लावस्थायामेवाट् धातोर्भवन् तदागम इति तस्याव्यवधायकः। अर्थवतो निशब्दस्य ग्रहणान्नेह—मधु निविशन्ति भ्रमराः इति।

कथं तर्हि अङ्के निविशन्तो भयादिति रघुः। पदसंस्कारे पश्चात्ते संबन्ध इत्यदोषः। यद्वोपसर्गो निर्गृह्यते। अयं तद्रूपको निपात इत्याहुः।

परिव्यवेभ्य इति। क्रिय[1] इति संबन्धे षष्ठी। अर्थद्वारकश्च पर्यादिः संबन्धस्तेनोपसर्गा एव पर्यादयो गृह्यन्ते इतीह न संभवन्ति वेक्रीणासीति। एकदेशविकृतस्यानन्यत्वाद् भन्त्ययं विशब्द इति प्रसङ्गः। यत्तु बहुविक्रीणाति वनमिति प्राचा प्रत्युदा-

1. क्रि०ते इति क० पु०।

## ५४२. विपराभ्यां जेः [ १।३।१९ ]

विजयते। पराजयते।

## ५४३. आङो दोऽनास्यविहरणे [ १।३।२० ]

आङ्पूर्वाद्दाञः आत्मनेपदं स्यात् न तु मुखप्रसारणेऽर्थे। आदत्ते। मुखप्रसारणे तु व्याददाति मुखं कृष्णः। मुखप्रसारणसदृशादपि न। विपादिकां व्याददाति। स्वाङ्गकर्मकादेव निषेधः। नेह व्याददते पिपीलिकाः पतङ्गस्य मुखम्।

## ५४४. क्रीडोऽनुसंपरिभ्यश्च [ १।३।२१ ]

एभ्यः क्रीडस्तङानौ स्तः। अनुक्रीडते। एवं संपरि। चकारादाङोऽपि।

---

ह्रियते, तदसत्, वह्वो वयो यस्मिन्निति बहुव्रीहौ जहत्स्वार्थायां वृत्तौ वेरानर्थक्यात्। अजहत्स्वार्थायां तु तदर्थस्योपसर्जनत्वेनाप्रसङ्गात्।

विपराभ्यामिति। अत्रापि पूर्ववदुपसर्गयोर्ग्रहणान्नेह—वेः जयति। वौ जयतः। विरत्र पक्षी। परा जयति सेना। उत्कृष्टेत्यर्थः।

आङो दोऽनास्येति। आस्यविहरणे तावद्दाञ एव वृत्तिर्नान्येषां दारूपाणामिति प्रतिषेधे दाञो ग्रहणाद्विधावपि तस्यैव ग्रहणं[1] न्याय्यमित्यभिप्रेत्याह—आङ्पूर्वाद्दाञ् इति। मुखप्रसारणसदृशादपि नेति। इहानास्येत्येवास्तु न च धातुरास्ये वर्तते इति तन्मात्रनिष्ठा क्रिया ग्रहीष्यते। एवं सिद्धे विहरणग्रहणमास्ये प्रसारणसदृशस्यापि संग्रहार्थमित्याहुः।

यद्वा विपादिकां व्याददातीत्यत्राप्यास्यविहरणस्य सादृश्यादारोपात् प्रयोग इत्यर्थः। पादस्फोटो विपादिका। एवं च प्रतीकमाददातीत्युपपन्नम्। आस्यप्रसारणसाध्ये प्रतीकोच्चारणरूपे कार्ये कारणोपचारात्। स्वाङ्गकर्मकादेवेति। स्वमङ्गं स्वाङ्गमिह विवक्षितम् न स्वद्रवमित्यादिलक्षणलक्षितम्। न्यायसिद्धं चैतत्। कथं कर्तरीति वर्तते? आस्यशब्दश्च संबन्धिशब्दस्तत्र कस्यास्यमित्याकाङ्क्षायां यस्मिन् कर्तर्यात्मनेपदं तस्य चेत्तदास्यमिति सन्निधानादेव[2] आस्यते इति। नेहेति। परकीयास्यविहरणे निषेधो न। तेनात्मनेपदमेव स्यादित्यर्थः।

क्रीडोऽनु। सम उपसर्गत्वाव्यभिचारादनुपरी अपि साहचर्यादुपसर्गावेव गृह्येते। तेन कर्मप्रवचनीययोगे न भवति। अनुक्रीडति माणवकमिति। माणवकेन सह क्रीडतो-

---

१. नार्थमित्यभिप्रेत्याहेति क० पु०।

२. सन्निधानात् तु ज्ञास्यते इति क० पु०।

आक्रडते। अवादपि केचित्। अवक्रीडते। "समोऽकूजने" (वा०) संक्रीडते। कूजने तु संक्रीडति चक्रम्। "आगमेः क्षमायाम्" (वा०) आगमयते कालम्। "आशिषि नाथः" ( वा० ) सर्पिषो नाथते। "हरतेर्गत्यनुकारे" ( वा० ) पैतृकमनुहरते अश्वः। किरतेर्हर्षजीविकाकुलायकरणेषु आत्मनेपदम्" (वा०)

---

त्यर्थः। "तृतीयार्थे" ( १।४।८५ इत्यनुः कर्मप्रवचनीयः। अनुक्रीडते इति। क्रीड विहारे उदात्तेत्। नित्यं परस्मैपदे प्राप्ते वचनम्।

एवं तु क्रीडते नागराज इति केवलादात्मनेपदमपशब्दः। संक्रीडति चक्रम् इति। सशब्द विहरतीत्यर्थः। "आगमेरिति" ( वा० )। आङ्पूर्वाद् गमेर्ण्यन्तात् कर्तृगेऽपि फले आत्मनेपदं स्यात्। क्षमा उपेक्षा कालग्रहणप्रतीक्षेत्यर्थः। आगमयते गुरुम्। प्रतीक्षते इत्यर्थः।

क्षमाया किम्? विद्यामागमयति। "आशिषि नाथः" ( वा० )। नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु। अस्यानुदात्तेत्वात् कर्तर्यात्मनेपदं[1] सिद्धमेव, नियमार्थं तु वचनम्। आशिष्येव नाथेरात्मनेपदं न याच्ञाद्यर्थेषु इति। सर्पिषो नाथते इति। सर्पिर्मे भूयादित्याशास्ते इत्यर्थः।

आशिषि नाथ इति कर्मणि षष्ठी। कथं तर्हि "नाथसे किमु पतिं न भूभृताम्" इति भारविः। अपशब्दोऽयमित्येके।

एवं च कृत्वा च्युतसंस्कृत्युदाहृतं काव्यप्रकाशे–

तल्पल्लीयति पुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना॥

दीनां त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः॥

अनुनाथति कुचयुगमिति तु पठितव्यमिति चोक्तम्।

अन्ये त्वाहुः–नैतदाशिष्येवेति नियमार्थं किं तु नाथेरनुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वज्ञापनार्थम्। तेनोभयं भवतीति।

कृष्णप्रबोधस्त्वाह–आशिष्येवेत्ययं नियमोऽनुपसर्गस्यैव नाथेः, तेन सोपसर्गस्याप्यन्तरेऽपि-आत्मनेपदं स्थितमेवेति नाशब्दोऽनुनाथते इति।

हरतेरिति। गतं प्रकारः। पैतृकमिति। पितुरागतं प्रकारं सततं शीलयतीत्यर्थः। "ऋतठञ्" ( ४।३।७८ )। 'इसुसुक्तान्तात्कः" ( ७।३।५१ )। प्रकारताच्छील्यादि विवक्षायां तु पैतृकमनुहरति। सादृश्यमात्रमत्र विवक्षितम्।

ये तु व्याचक्षते–गतं गमनं तस्य साच्छील्ये इति तेषाम् "जलधिमनुहरते सरः। अयं कः संबन्धो यदनुहरते तस्य कुमुदम्" इत्यादि प्रामादिकं स्यात्।

किरतेरिति। कृ विक्षेपार्थः। हर्षादयस्त्वस्य विषयत्वेनोपादीयन्ते। तेषु हर्षो विक्षेपस्य कारणम्। जीविकाकुलायकरणे तु फले।

---

१. अनुदात्तेत्वाद् पुनर्यात्मनेपदमिति क० पु०।

५४५. अपाच्चतुष्पाच्छकुनिष्वालेखने [६।१।१४२]

अपात् किरतेः सुट् स्यात् चतुष्पाच्छकुनिकर्तृके आलेखनेऽर्थे। अपस्किरते वृषो हृष्टः। कुक्कुटो भक्षार्थी। श्वा आश्रयार्थी। अन्यत्र मल्लोऽपकिरति। गजोऽपकिरत्यम्भः। "आङि नुप्रच्छ्योरिष्टिः"। आनुते। आपृच्छते। "शप उपालम्भे" (वा०) विप्राय शपते।

---

अपस्किरते वृषो हृष्ट इति। हर्षेण भूमिं[1] विलिखतीत्यर्थः।

भिक्षार्थीति जीविकामाह—आश्रयार्थीति च कुलाय करणम्। मल्लोपस्किरतीत्यादि। सुड्विधावपि "हर्षजीविकाकुलायकरणेषु" इति वक्तव्यमिति वचनात् प्रत्युदाहरणेष्वात्मनेपदमिव सुडपि न भवतीति ज्ञेयम्। द्वयोरेकस्मिन्नर्थे विधानात्। अत एव द्वयं परस्परसन्नियोगेनाचार्यैः पठितम्। तावताऽपि सुज्ञानत्वात् पृथगयमर्थो न निर्दिष्टः।

मल्लोपस्किरतीति[2]। अत्र हर्षाद्यभावाच्चतुष्पाच्छकुनिकर्तृकत्वाभावाच्च सुट्तङौ न स्तः अत्र हर्षादिसत्त्वे ततो भाव्यं न वेति चिन्त्यम्। तद्विधौ चतुष्पाच्छकुनिकर्तृकत्वस्यानुपादानात्। शब्दशक्तिस्वाभाव्यात् सुटा समानविषयत्वं तङः इति प्राहुः।

गजोऽपकिरति। अत्र सत्यपि चतुष्पात्त्वे हर्षाद्यभावः

"आङि नु प्रच्छ्योः" (वा०) णु स्तुतौ अदादिः, प्रच्छ ज्ञीप्सायाम् तुदादिः। आनुते इति। उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। आपृच्छते इति। "ग्रहिज्या" (६।१।१६) इति संप्रसारणम्। 'शप उपालम्भे' इति। शप आक्रोशे स्वरितेत्। अकर्तृगे फले तस्योपालम्भे आत्मनेपदं विधीयते। उपालम्भोऽत्र वाचा शरीरस्पर्शनम्। विप्राय शपते इति। त्वत्पादौ[3] स्पृशामि नैतन्मया कृतमित्येवं शपथेन विप्रस्य स्वाभिप्रायं प्रकाशयतीत्यर्थः।

"श्लाघह्नुङ्" (१।४।३४) इत्यादिना विप्रस्य संप्रदानत्वाच्चतुर्थी। कथं तर्हि "सत्यः[?] शपामि यदि किंचिदपि स्मरामि" इति। शपथरूपस्याविवक्षणात् स्वाशयं प्रकाशयामीत्येतावदिह विवक्षितमित्यदोषः। शशापेत्यादौ तु आक्रोशमात्रं विवक्षितमित्यात्मनेपदाभावः। आतिष्ठते इति। प्रतिजानीते इत्यर्थः।

---

१. तत्फले इति क० पु०।

२. मल्लोपस्किरतीति क० पु०।

३. त्वदङ्घ्री इति क० पु०।

५४६. समवप्रविभ्यः स्थः [ १।३।२२ ]

एभ्यस्तिष्ठतेस्तङानौ स्तः। संतिष्ठते। समस्थित। एवं अव प्र वि। "आङः प्रतिज्ञाने"। नित्यं शब्दमातिष्ठते।

५४७. प्रकाशनस्थेयाख्ययोश्च [ १।३।२३ ]

स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च स्थस्तङानौ स्तः। कृष्णाय तिष्ठते गोपी। त्वयि तिष्ठते विवादः।

५४८. उदोऽनूर्ध्वकर्मणि [ १।३।२४ ]

उदस्तिष्ठतेस्तङानौ स्तः। अनूर्ध्वक्रियायाम्। "उद ईहायामिष्टिः"। मुक्तावुत्तिष्ठते। ईहायां किम्। ग्रामाच्छतमुत्तिष्ठति। अनूर्ध्वक्रियायां किम्। आसनादुत्तिष्ठति।

---

प्रकाशन। प्रकाशनं न शब्देनैवेति नियम इत्याह—स्वाभिप्रायाविष्करणे इति तिष्ठत्यस्मिन् विवादे इति स्थेयः। विवादपदनिर्णेता लोके प्रसिद्धस्तस्य रूढिप्रतिपत्त्यर्थमाख्याग्रहणमित्याह—निर्णेत्राख्यायां चेति। कृष्णाय तिष्ठते इति। स्वस्थित्या नेत्रादिविकारद्वारा स्वाभिप्रायविशेषं ज्ञापयतीत्यर्थः।

"श्लाघह्नुङ्" (१।४।३४) कृष्णस्य सम्प्रदानत्वाच्चतुर्थी। त्वयि इत्यादि। अस्य विवादस्य तत्त्वं निर्णेतुं त्वयि तिष्ठामीत्यर्थः।

अन्ये तु अस्य विवादस्य त्वं निर्णेतेत्येतावानर्थः धातूनामनेकार्थत्वात् तिष्ठतिः प्रकाशनं निर्णयं चाचष्टे इत्याहुः।

उदोऽनूर्ध्वकर्मणि। कर्मेह क्रियोच्यते न साधनं कर्म तत्र धातोर्वृत्त्यसंभवात्। यद्येवमनूर्ध्व इत्येव सिद्धमनूर्ध्वताविशिष्टेऽर्थे वर्तमानात्तिष्ठतेरित्यर्थादनूर्ध्वकर्मणो लाभात्।

एवं सिद्धे कर्मग्रहणं लोकप्रसिद्धस्य चलनात्मकस्य प्रतिपत्त्यर्थमित्याशयेनाह—उद ईहायामिष्टिरिति। ईहा परिस्पन्दः। तेनेहात्मकेऽनूर्ध्वकर्मणि—इत्यर्थो भवति। मुक्तावुत्तिष्ठते इति। मुक्त्यर्थं घटते इत्यर्थः। ग्रामाच्छतमुत्तिष्ठतीति। उत्पद्यते इत्यर्थः। भवत्यत्रोत्पत्तिक्रिया न तु परिस्पन्दात्मिकेति तङोऽभावः।

---

१. सत्त्व इति निर्विवादः इति क० पु०।

## ५४९. उपान्मन्त्रकरणे [ १।३।२५ ]

उपात् स्थस्तङानौ स्तः मन्त्रकरणे। गायत्र्या उपतिष्ठतेऽर्कम्। मन्त्रकरणे किम् ? यौवनेनोपतिष्ठति पतिम्। "उपाद्देवपूजासङ्गतिमैत्रीकरणपथिष्विति वक्तव्यम्"। विष्णुमुपतिष्ठते। गङ्गायमुनामुपतिष्ठते। सन्तमुपतिष्ठते। गङ्गामुपतिष्ठते पन्थाः। "लिप्सायां वा"। भिक्षुः धार्मिकमुपतिष्ठते उपतिष्ठति वा।

## ५५०. अकर्मकाच्च [ १।३।२६ ]

उपपूर्वात्तिष्ठतेरकर्मकात्तङानौ स्तः। ज्ञानमुपतिष्ठते।

## ५५१. उद्विभ्यां तपः [ १।३।२७ ]

आभ्यामकर्मकात्तपः प्राग्वत्। उत्तपते। वितपते। "स्वाङ्गकर्मकाच्चेति"। उत्तपते। वितपते पाणिम्। अकर्मकात् स्वाङ्गकर्मकात् किम् ? महीं वितपत्यर्कः।

## ५५२. आङो यमहनः [ १।३।२८ ]

आङः पराभ्यामकर्मकाभ्यामाभ्यां तङानौ स्तः। आयच्छते। आहते। आघ्नते। "स्वाङ्गकर्मकाभ्यां च" (वा०) आयच्छति पाणिम्। आहते शिरः।

---

उपान्मन्त्रकरणे। मन्त्रः करणं कारकं यस्य धात्वर्थस्य तत्र वर्तमानादित्यर्थः। सतीति। धात्वर्थे मन्त्रकरणे सतीति योज्यम्। गायत्र्येति। सेवते इत्यर्थे वर्तमानोऽयं सकर्मको भवति। मन्त्रेति किम् ? यौवनेनोपतिष्ठति पतिम्। उपादित्यादि। देवानां पूजा, सङ्गः संश्लेषः। मित्रस्य भावो मैत्रम्, पन्थाः मार्गः स च कर्तृत्वेन सम्बध्यते। विष्णुमुपतिष्ठते इति। पूजयतीत्यर्थः। यमुनेति। संश्लिष्यते इत्यर्थः। सन्तमिति[1] सन्तं मित्रं करोतीत्यर्थः। गङ्गामिति। प्राप्नोतीत्यर्थः। "वा लिप्सायाम्" (वा०) लब्धुमिच्छा लिप्सा तस्यां गम्यमानायामित्यर्थः। भिक्षुरिति। लिप्साद्योतनाय लाभेच्छया धार्मिकमुपगच्छतीत्यर्थः। अकर्मकोऽप्ययमर्थान्तरवृत्त्या सकर्मको भवति।

अकर्मकाच्च। कर्मेह कारकं न क्रिया असम्भवात्। ज्ञानमुपतिष्ठते इति। सन्निधत्ते इत्यर्थः। अकर्मकात् किम् ? 'एतदप्यस्य कापेयं यदर्कमुपतिष्ठति'।

उद्विभ्यां तपः। उत्तपते इति। दीप्यते इत्यर्थः। आत्माङ्गेति। आत्मनः कर्तृत्वेनोपात्तस्य यदङ्गं तच्च कर्म भवति, तदाऽपि स्यादित्यर्थः।

आङो यमहनः। आयच्छते इति। दीर्घो भवति। व्याप्रियते इति वार्थः। यम उपरमे। शपि "इषुगमियमां छः" (७।३।७७)। आहते इति। संश्लिष्यते इत्यर्थः। हन्तेरदादित्वाच्छपो लुकि 'अनुदात्तोपदेशे" (६।४।३७) इत्यनुनासिकलोपः।

---

१. सन्तमित्यारभ्य भिक्षुरित्यन्तो नास्ति क० पु० ।

**५५३. हनः सिच् [ १।२।१४ ]**

हनः परो सिच् कित् स्यात् । कित्त्वादनुनासिकलोपः । "ह्रस्वादङ्गात्" ( ८।२।२७ ) आहत । आहसाताम् ।

**५५४. आत्मनेपदेष्वन्यतरस्याम् [ २।४।४४ ]**

हन्तेर्वधादेशो वा स्यादात्मनेपदे लुङि । आवधिष्ट ।

**५५५. यमो गन्धने [ १।२।१५ ]**

सूचनार्थाद् यमः सिच् कित् स्यादात्मनेपदेषु । उदायत । अकर्मकाभ्यामात्माङ्गकर्मकाभ्यां किम् ? शत्रुमाहन्ति । परशिर आयच्छति ।

**५५६. समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः [१।३।२९]**

एभ्यः संपूर्वेभ्योऽकर्मकेभ्यस्तङानौ स्तः । संगच्छते ।

---

आघ्नते इति । "गमहन" (६।४.९८) इत्युपधालोपः । "हो हन्तेः" (७।३।५४) । आघ्नत इति । "आत्मनेपदेष्वनत." ( ७।१।५ ) इत्यत् । आयच्छते पाणिमिति स्वीयमिति बोध्यम् । आत्मनेपदेनैव द्योतितत्वान्न प्रयुक्तम् ।

हनः सिच् । सौत्रत्वादल्लोपो न इत्यल्लोपो न कृतः । लिङ्सिचाविति वर्तमाने सिज्ग्रहणं लिङो निवृत्त्यर्थम् । अत्रापि झलिति वर्तते, तेन सिचो विशेषणाज्झलादिसिजिति बोध्यम् । तेन आघानिष्टेति चिण्वदिटि न भवति । सति हि कित्त्वे उपधालोपः स्यात् । [1]चिण्वद्भावविधिस्त्वन्येषु सावकाशः ।

यमो गन्धने । गन्धनं सूचनं परेण प्रच्छाद्यमानस्याविष्करणम् । उदायतेति । परस्यावद्य प्रकाशयति स्मेत्यर्थः ।

अत्र चोदाङ्भ्यां गन्धनं द्योत्यते इत्युभयोः सह प्रयोगः । "आङो यमहनः" ( १।३।२८ ) इति तङ् । अत्राकर्मकत्वात् "समुदाङ्भ्यः" ( १।३।७५ ) इति नास्ति । लुङि[2] चङि सिचः कित्त्वादनुनासिकलोपः[3] । 'ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः । परशिर इति परस्य शिरोऽत्र कर्म न तदात्मनोऽङ्गम् ।

समो गम्यृच्छिभ्याम् इत्येतावत् सूत्रम्, पृच्छ्यादयस्तु वार्त्तिकोक्ता इह प्रक्षिप्ताः । केचित् स्वृ गतौ । ऋच्छ गत्यादौ । आदेशस्तु न गृह्यते । अर्तिग्रहणेनैव सिद्धत्वात् । प्रच्छ ज्ञीप्सायाम् । स्वृ शब्दोपतापयोः । ऋ गतौ ह्वादिः । ऋ गतिप्रापणयोः भ्वादिः । द्वयोरपि ग्रहणम् । श्रु श्रवणे । विद ज्ञाने । गम्यादिभिः परस्मैपदिभिः साहचर्यान्निलाभार्थः । सत्ताविचारणार्थयोस्त्वनुदात्तेत्त्वादेवात्मनेपदं सिद्धमित्यग्रहणम् । संगच्छते इति । युज्यते इत्यर्थः ।

---

१. चिण्वद्भावविधिस्त्वन्येषु सावकाश इति नास्ति क० पु० ।
२. लुङीति नास्ति क० पु० ।
३ लोप इत्यारभ्य—सिद्धत्वादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

**५५७. वा गमः [ १।२।१३ ]**

गमः परौ लिङ्सिचौ कितौ वा स्तः आत्मनेपदेषु । "अनुदात्तोपदेश" ( ६।४।३७ ) इति मलोपः । *समगत । समगंस्त । संगसीष्ट । संमसीष्ट ।* समृच्छते । संपृच्छते । संस्वरते । समियते । "सर्तिशास्त्यर्ति" ( ३।१।५६ ) इत्यङ् । समारत । समारेताम् । संशृणुते । संविन्ते ।

**५५८. वेत्तेर्विभाषा [ ७।१।७ ]**

वेत्तः परस्य झादेशस्यातो रुडागमो वा स्यात् । संविद्रते । संविदते । "दृशेर्वाच्यम्" ( वा० ) संपश्यते । अकर्मकेभ्यः किम् ? गङ्गां संगच्छति ।

**५५९. निसमुपविभ्यो ह्वः [ १।३।३० ]**

अकर्मकादिति निवृत्तम् । एभ्यो ह्वञः प्राग्वत् । निह्वयते । एवं सम् उप वि । "उपसर्गादस्यत्यूह्योर्वा इति वाच्यम्" (वा०) निरस्यति । निरस्यते । समूहति । समूहते ।

**५६०. उपसर्गाद् ह्रस्व ऊहतेः [ ७।४।२३ ]**

उपसर्गात्परस्य ऊहतेरणो ह्रस्वः स्यात् । यादौ क्ङिति । उह्य समुह्यात् ।

---

सकर्मकाणामप्येवमादीनामर्थान्तरवृत्तेरकर्मकत्वम् ।

समगतेति । मलोपे "ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः । संगसीष्टेति । अनुनासिकलोपः । पत्वेऽनुस्वारः । संपृच्छते इति । "ग्रहिज्या" ( ६।१।१६ ) इति सम्प्रसारणम् । समियृते इति । शपः श्लुः । "श्लौ" ( ६।१।१० ) इति द्वित्वम् । "अर्तिपिपर्त्योश्च" ( ७।४।७७ ) इत्यभ्यासस्येत्त्वम् । "अभ्यासस्यासवर्णे" ( ६।४।७८) इतीयङ् समारतेति । लुङि च्लेः "सर्तिशास्त्यर्ति" ( ३।१।५६ ) इत्यङ् । "ऋदृशोऽङि गुणः" ( ७।४।१६ ) इति गुणः । आट् "आटश्च" ( ६।१।९०) इति वृद्धिः । संशृणुते इति । "श्रुवः शृ च" श्नुः शृभावश्च ।

संविद्रते इति । "आत्मनेपदेष्वनतः" ( ७।१।५ ) इत्यदादेशः । संपश्यते इति । शपि "पाघ्राध्मा" ( ७।३।७८ ) इति पश्यादेशः । अत्राकर्मकादित्यनुवृत्तेः "रक्षांसीति पराऽपि संशृणुमहे" इति मुरारिप्रयोगश्चिन्त्यः । कर्मव्यतिहारे तङ् । अन्योन्यकुशलप्रश्नसंश्रवणमुच्यते इति दुर्घटः ।

निसमुपविभ्यो[1] ह्वः । निह्वयते इति । ह्वेञ् स्पर्धायां शब्दे च । शप्ययादेशः । "अस्यत्यूह्योरिति वक्तव्यम्" ( वा० ) । असु क्षेपणे । ऊह वितर्के । परस्मैपदिनौ ।

---

१. निसमुपविभ्यो इति नास्ति क० पु० ।

५६१. स्पर्धायामाङः [ १।३।३१ ]

आङो ह्वेञः प्राग्वत् स्पर्धायाम्। कृष्णश्चाणूरमाह्वयते। स्पर्धायामिति किम्? गामाह्वयति।

५६२. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः [१।३।३२]

हिंसात्मकसूचने भर्त्सनादौ च कृञः पूर्ववत्। उत्कुरुते। श्येनो वर्तिकामपकुरुते। परदारान् प्रकुरुते। एधोदकस्योपस्कुरुते। गाथाः प्रकुरुते। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते इत्यर्थः। एषु किम्? कटं करोति।

५६३. अधेः प्रसहने [ १।३।३३ ]

अधेः कृञस्तङानौ स्तः शक्तौ। दैत्यानधि कुरुते विष्णुः।

---

स्पर्धायां प्राग्वत् आत्मनेपदमित्यर्थः।

स्पर्धायामिति विषयसप्तमी। हेतुत्वेन च विषयत्वं न त्वभिधेयसप्तमी। आङ्पूर्वस्य ह्वेञः शब्दक्रियत्वात्। कृष्ण इत्यादि। स्पर्धया तस्याह्वानं करोतीत्यर्थः। स्पर्धा पराभिभवेच्छा।

गन्धनावक्षेपण। गन्धनं व्याचष्टे—हिंसात्मकसूचने इति। वस्तुतस्तु गन्ध अर्दने। अर्द हिंसायाम् इति चौरादिकस्यायं प्रयोग इति भावः। सूचनं पैशुन्यं दोषाविष्करणं तेन सूचितस्य वधबन्धादिका हिंसा भवेत् तस्य तद्धेतुत्वात् सूचनमेव हिंसात्मकमित्युपचर्यते। अवक्षेपणं विवृणोति। भर्त्सनं तिरस्कार इत्यर्थः। आदिना सेवनादयो गृह्यन्ते। उत्कुरुते इति। [1]हिंसापर्यवसायिदोषाविष्करणं करोतीत्यर्थः। अपकुरुते। भर्त्सयतीत्यर्थः। विष्णुमुपकुरुते। सेवते इत्यर्थः। प्रकुरुते। परदारेषु सहसा अविमृश्य प्रवर्तते इत्यर्थः। उपकुरुते इति। गुणाधानं करोतीत्यर्थः। "कृञः प्रतियत्ने" इति कर्मणि षष्ठी। गाथाः प्रकुरुते इति। प्रकर्षेण कथयतीत्यर्थः। उपयोगमुदाहरति शतं प्रकुरुते इति। शब्दार्थं व्याचष्टे—धर्मार्थमित्यादि। एषु किम्? कटं[2] करोति।

अधेः प्रसहने। प्रकर्षेण सहनं क्षमा प्रसहनं प्रकर्षश्च पराजेतुं समर्थस्यैव क्षमया तदभावः। एतच्च शक्त्यतिशयायत्तमित्याशयेनाह—शक्ताविति। दैत्यानधिकुरुते इति। दैत्यान् पराजेतुं शक्तोऽपि न तान् पराजयते इत्यर्थः। तथा च भारविः—"भवादृशाश्चेदधिकुर्वते परान्" इति। क्षमया न पराजयन्त इत्यर्थः। ये तु प्रसहनमभिभव इति व्याचक्षते, तेषां "निराश्रया हन्त हता मनस्विता" इति न संगच्छते।

---

१. हिंसापर्यवसायीत्यारभ्य—उपकुरुते इत्यन्तो नास्ति क० पु०।
२. कटमिति नास्ति क० पु०।

**५६४. वेः शब्दकर्मणः [ १।३।३४ ]**

शब्दः कर्म कारकं यस्य तस्माद्विपूर्वात् कृञः प्राग्वत्। स्वरान् विकुरुते।

**५६५. अकर्मकाच्च [ १।३।३५ ]**

वेः कृञोऽकर्मकात्तथा। वायुर्विकुरुते। शब्दकर्मणोऽकर्मकात् किम्? चित्तं विकरोति कामः।

**५६६. सम्माननोत्सञ्जनाचार्यकरणज्ञानभृति-विगणनव्ययेषु नियः [ १।३।३६ ]**

पूजनोत्क्षेपणादौ णीञस्तङ्ज्ञानौ स्तः। शास्त्रे नयते। दण्डमुन्नयते। पुत्रमुपनयते। पदार्थान् नयते। भृत्यमुपनयते। करं विनयते। शतं विनयते।

---

वेः शब्दकर्मणः। कर्मेह कारकग्रहणम् कृञ्भिमत्वान्न क्रिया। विपूर्वस्य करोतेः शब्दनक्रियाया वृत्त्यसम्भवात् कर्मग्रहणं चात्रानर्थकम्, वेः शब्दे[1] इत्येव शब्दनक्रियालाभात् इत्यालोच्याह–शब्दकर्मकारकं यस्येति। स्वरान् विकुरुते इति। उच्चारयतीत्यर्थः।

अकर्मकाच्च। वायुर्विकुरुते इति। शोभन वातीत्यर्थः। सूत्रद्वयोक्तोपाधी तन्त्रेणोत्तरयिष्यन्नाक्षिपति—शब्दकर्मणोऽकर्मकात् किमिति। चित्तं विकरोति कामः इति। चित्तस्य कर्तृत्व[2]भ्रमनिरासार्थं काम इत्युपात्तम्। चित्तमिह कर्मास्ति इति नायमकर्मकः, न वा शब्दकर्मक इति न पूर्वेण न[3] वाऽनेन तङ् भवति।

नन्वकर्मकाच्चेति नारम्भणीयम्। पूर्वत्र वेरिति योगविभागः करिष्यते। तेनाकर्मकादपि भविष्यति।

न चैवमतिप्रसङ्गः। शब्दकर्मण इत्यस्य नियमार्थत्वात् सकर्मकाच्चेत् शब्दकर्मण एवेति। मैवम्। विपरीतोऽपि नियमः सम्भाव्येत शब्दे यदि भवति कर्मण्येवेति ततश्च चित्तं विकरोतीत्यत्रापि स्यात्।

सम्माननोत्सञ्जन। आचार्यकरणादीनि स्पष्टत्वादुपेक्ष्याद्ये द्वे व्याचष्टे–पूजनोत्क्षेपणादाविति। सति सप्तमी चेयं स्वभावात् सतो विशेषणत्वं गमयति। विशेषणं च यथासम्भवं निक्षिद्वारकवर्थस्य किञ्चित्तु धातोः। तेन सम्माननाचार्यकरण[4]भृतिषु नयत्यर्थ-

---

१. वेः शब्दे इति नास्ति क० पु०।

२. कर्तृत्व व निरासार्थमिति क० पु०।

३. तेन वा इति क० पु०।

४. करण प्रभृतिषु भ ऽत्नार्थविशेषणेषु सत्सु सञ्जनज्ञानेति क० पु०।

## ५६७. कर्तृस्थे चाशरीरे कर्मणि [१।३।३७]

णीञः कर्तृस्थेऽमूर्ते कर्मणि कारके पूर्ववत् । क्रोधं विनयते । कर्तृस्थे किम् ? गुरोः क्रोधं विनयति । अमूर्ते किम् ? गडुं विनयति ।

---

विशेषणेषु सत्सु उत्सञ्जनज्ञानविगणनव्ययेषु वाच्यतया नयति विशेषणेषु सत्सु [1]नीञस्तङानावित्यर्थः सपद्यते । आदिपदाद् आचार्यकरणमाच इत्यस्यसम्पत्तिः । अमूर्तत्वाद्‌विदिशि चित्रविकल्पितत्वान्न कृतः । ज्ञानं प्रमेयनिश्चयः । भृतिर्वेतनम् । [2]विगणनमृणादेः शोधनम् । व्ययो धर्मादिषु विनियोगः । शास्त्रे नयते इति । शास्त्रार्थान् पदार्थान् युक्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः । युक्तिभिः स्थिरीकरणमेव पदार्थानां पूजनम् ।

अन्ये त्वाहुः—पदार्थानामचेतनत्वान्नेयं पूजा मुख्या, किं त्वभिनिपितार्थसम्पादने न शिष्याणामेव पूजेति व्याख्येयमिति ।

दण्डमुन्नयते इति । उत्क्षिपतीत्यर्थः । पुत्रमुपनयते इति । पुत्रमीदृशेन विधिनात्मसमीपं प्रापयतीति येनोपनयनेनाचार्यः सम्पद्यते इत्यर्थः ।

पदार्थान्नयते इति । पदार्थलक्षणं प्रमेयं निश्चिनोतीत्यर्थः । भृत्यमुपनयते इति वेतनेनात्मसमीपं प्रापयतीत्यर्थः । करं विनयते इति । राजदेयं भागं शोधयति निर्या[3]-यतीत्यर्थः । शतं विनयते इति । धर्मार्थं विनियुङ्क्ते इत्यर्थः ।

इह तु "विनिन्युरेनं गुरवो गुरुप्रियम्" इत्याचार्यकरणस्याविवक्षितत्वात्तङोऽभाव इत्याहुः ।

कर्मस्थनयतेरात्मनेपदविधानात् सन्निधानात्तत्कर्तैवात्र गृह्यते इत्याह ।

कर्तृस्थे च । इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियन्ति, न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य । न च शरीरमेव शरीरस्थं समवतीति शरीरशब्देन तदवयवो गृह्यते । तेनाशरीरस्यावयववान्दिर्निन्नत्युक्तं भवति । तच्च कर्तृस्थमवयवभिन्नं क्रोधादि तद् यदमूर्तमेव पर्यवस्यतीत्याशयेनाह—अमूर्तेति । क्रियाया अमूर्तत्वाव्यभिचारात् कर्मेह कारकं गृह्यते इत्याह—कर्मणि कारके पूर्ववत् तङानौ स्त इत्यर्थः । क्रोधं विनयते स्वस्येत्यर्थः । विनयनमपगमनम् । यद्येवं क्रोधापनयनफलस्य चित्तप्रसादादेः कर्तृगत्वात् "स्वरितञितः" (१।३।७२) इत्येव सिद्धमात्मनेपदम् किमनेन ? सत्यम् । नियमार्थमेतत् । कर्तृस्थे कर्मण्यशरीरे एवेति । किं नियमे

---

१. नीञस्तङानावित्यर्थं इति क० पु० ।

२. विगणनमृणादेरिति क० पु० ।

३. निर्यातयत्यर्थं इति क० पु० ।

## ५६८. वृत्तिसर्गतायनेषु क्रमः [१।३।३८]

क्रमस्तङानौ स्तः। अप्रतिबन्धोत्साहस्फीततासु। ऋचि क्रमते बुद्धिः। धर्माय क्रमते। सतां श्रोः क्रमते।

## ५६९. उपपराभ्याम् [१।६।३९]

वृत्त्यादिष्वाभ्यामेव क्रमस्तङानौ स्तो नोपसर्गान्। उपक्रमते। पराक्रमते। आभ्यां किम्? प्रक्रामति। वृत्त्यादौ किम्? उपक्रामति।

## ५७०. आङ उद्गमने [१।३।४०]

आङः क्रमः प्राग्वदुद्गमनेऽर्थे। आक्रमतेऽर्कः। "ज्योतिरुद्गमन इति वाच्यम्"। नेह आक्रामति धूमः। उद्गमने किम्? समाक्रामत्यर्कः।

---

प्रयोजनमित्यादिपर्यन्त-प्रमूर्ते त्रिमिति। गडुं विनयति इति। एतच्चापनयने वर्तमानादेशात्मनेपदं विधीयते, नार्थान्तरे। तेनेह न। "विगणय्य नयन्ति पौरुषं [1]विजितक्रोधरया जिगीषव." इति। इह हि कगत्यर्थे प्राप्त्यर्थे वा वर्तनेऽनेकार्थत्वाद्धातूनाम्।

वृत्तिसर्ग। अप्रतिबन्धेति[2] वृत्तिशब्दार्थमाह—उत्साहेति सर्गशब्दार्थम्। सृजिरनेकार्थत्वादुत्साहार्थः। "सृष्टश्चेद् ब्राह्मणवधे"। "येनेन्द्रलोकावजयाय सृष्टः" इत्यादौ दर्शनात्। तायनं व्याचष्ट—स्फीततेति। तायृ सन्तानपालनयोरित्यस्य[3] ल्युटि रूपम्।

उपपराभ्याम्। वृत्त्यादिष्वित्यनुवर्तते। तत्र पूर्वेणैव सिद्धे नियमार्थमिदम्। सोपसर्गादकर्मकात्, अतस्तूपपराभ्यामेवेत्याह—आभ्यामेवेत्यादि। व्यवच्छेद्यमाह—नान्योपसर्गादिति।

संक्रामतीति। "क्रमःपरस्मैपदेषु" (७।३।७६) इति दीर्घः।

आङ उद्गमने। आक्रमते इति। उदयते इत्यर्थः। ज्योतिर्ग्रहणनक्षत्रादिः। आक्रामति धूमः[4] इति। ऊर्ध्वं गच्छतीत्यर्थः। समुत्क्रामत्यर्क[5] इति। व्याप्नोतीत्यर्थः।

इह 'नभः समाक्रामति चन्द्रमाः क्रमात्" इत्यत्रापि व्याप्तिरेव विवक्ष्यते, नोद्गमनमिति तदभावः।

---

१. विहितक्रोधरया विजिगीषव इति क० पु०।

२. अप्रतिबन्धे वृत्ति इति क० पु०।

३. रित्यल्युटि इति क० पु०।

४. आक्रमतीति क० पु०।

५. समोत्क्रामत्यर्क इति क० पु०।

५७१. वेः पादविहरणे [१।३।४१]

वेः क्रमः प्राग्वत् पादविहरणेऽर्थे। साधु विक्रमते वाजी। पादिति किम्? वाजिना विक्रामति।

५७२. प्रोपाभ्यां समर्थाभ्याम् [१।३।४२]

आभ्यां तुल्यार्थाभ्यां क्रमस्तङानौ स्तः, क्रियारम्भ एवानयोस्तुल्यार्थता। भोक्तुं प्रक्रमते। उपक्रमते।

५७३. अनुपसर्गाद्वा [१।३।४३]

क्रमते। क्रामति।

५७४. अपह्नवे ज्ञः [१।३।४४]

ज्ञानातेस्तङानौ स्तोऽपलापेऽर्थे। शतमपजानीते।

---

वेः पादविहरणे। विहरणं विक्षेपणं यद्यपि क्रमु पादविक्षेपे इति पठ्यते तथाप्यनेकार्थत्वाद्धातूनामेतदुक्तं विशेषणम्। साधु विक्रमते वाजीति। अश्वादीनां गतिविशेषो विक्रमणम् उच्यते। वाजिना विक्रामतीति। विहरतीत्यर्थः।

प्रोपाभ्यां समर्थाभ्याम्। 'समर्थः पदविधिः' (२।१।१) इतिवन्नेह समर्थत्वं परस्परसंबद्धार्थत्वं धात्वर्थं प्रति पारतन्त्र्येण परस्परसंबद्धार्थत्वस्याभावात्। धातुना चोपसर्गसंबन्धो व्यभिचारीत्यभिप्रेत्य व्याचष्टे—तुल्यार्थाभ्यामिति। एतेन समोऽर्थो ययोस्तौ समर्थौ। शकन्ध्वादित्वात् पररूपम्। समशब्द[1] एव च तुल्यार्थेऽत्र वर्तते इति दर्शयति।

ननु प्रकर्षादौ उपश्च सामीप्यादौ प्रसिद्धः, अत्यन्तविलक्षणौ चानयोरर्थौ, तत्कथं तुल्यार्थतेत्याशङ्क्याह—क्रियारम्भ एवेत्यादि। क्रियाया आरम्भः आद्य उपक्रमः आदिकर्मेति यावत्।

अनुपसर्गादिति। उपपराभ्यामित्यस्य नियमार्थत्वाद् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्पः। तेन यत्र वृत्त्यादयो[2] न सन्ति तत्रेयमप्राप्तविभाषा नाधनं। तेनानेन मुक्ते क्रामतीत्यत्र वृत्त्यादिनात्मनेपदं[3] कस्मान्न भवतीति न नोदनीयम्।

अपह्नवे ज्ञः। शतमपजानीते इति। सोपसर्ग एवायमपलापे[4] वर्तते। तेनास्मात् कर्त्रभिप्रायेऽपि क्रियाफले विधास्यमानम् "अनुपसर्गाद् ज्ञः" इतीह न प्रवर्तते। अपह्नवे किम्? नाभिजानाति।

---

१. संशब्द एवेति क० पु०। २. वृत्त्यादयो इति क० पु०।
३. वृत्त्यादिस्यात्मनेपदमिति क० पु०। ४. अर्थेऽयुद्धान्तिरमाहेति क० पु०।

५७५. अकर्मकाच्च [१।३।४५]

अकर्मकाज्ज्ञानातेस्तथा। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तते इत्यर्थः।

५७६. संप्रतिभ्यामनाध्याने [१।३।४६]

आभ्यां ज्ञः प्राग्वत् अनौत्कण्ठ्ये। संजानीते। औत्कण्ठ्ये तु पितुः संजानाति।

५७७. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः [१।३।४७]

भासनसान्त्वनादिषु वदतेस्तङानौ स्तः। शास्त्रे वदते। भृत्यानुपवदते। पाणिनिर्वदते। क्षेत्रे वदते। विवदन्ते शिष्याः। परदारानुपवदते।

अकर्मकाच्च। अकर्माभिप्रायार्थमिदम्। कर्माभिप्रायेऽपि सोपसर्गार्थं च। औषधस्यानुजानीते। औषधस्यानुजिज्ञासते इति। कथं पुनरयमकर्मको यावता सर्पिः कर्म-इत्यर्थान्तरमाह—सर्पिषा प्रवर्तत इत्ययं इति। सर्पिरत्र करणं न कर्म। तथा च 'ज्ञोऽविदर्थस्य करणे'' (२।३।५१) इति षष्ठी विहितेति भावः।

अकर्मकात् किम्? स्वरेण पुत्रं जानाति। कथम् 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया'' इति वाक्यार्थस्य कर्मत्वात्। सत्यम्। "अनुपसर्गाद् ज्ञः" इति कर्माभिप्राये तङ्।

संप्रतिभ्यामिति। संजानीते इति। अवेक्षते इत्यर्थः। प्रतिजानीते। अङ्गीकरोतीत्यर्थः। पितुः संजानाति। उत्कण्ठापूर्वं स्मरतीत्यर्थः। 'अधिगर्थदयेशां कर्मणि'' (२।३।५२) इति कर्मणि षष्ठी। [1]नन्वत्र शेषे इति वर्तते, तेनात्र कर्मणः शेषत्वेन विवक्षितत्वात् "अकर्मकाच्च" (१।३।४५) इति पूर्वेणात्मनेपदेन भवितव्यम्। मैवम्, अनाध्याने इति विभज्यते। स चोभयोर्योगयोः शेषः, तेनाध्याने पूर्वेणापि न भविष्यति।

भासनोपसंभाषा। भासनं दीप्तिः। उपसंभाषां व्याचष्टे—सान्त्वनेति। आदिशब्दाद् ज्ञानादयः। ज्ञानं सम्यगवबोधः। यत्न उत्साहः। विमतिः नानामतिः। उपमन्त्रणमुपच्छन्दनम्। रहस्समीहिते प्रवर्तनमित्यर्थः। शास्त्रे वदते इति। भासमानस्तत्र पदार्थान् वक्तीत्यर्थः।

अत्र भासनं वदने हेतुतया विशेषणम्, यतः शिष्यैः स्तूयमानो भासते। तथा चोपर्युपरि शास्त्रार्थप्रतिभासात् सुष्ठु वदनं भवति। [1]तेजोभङ्गे न शक्नुयाद् वदितु-

१. नन्वत्र शेष इति प्रतीत इति क० पु०।

## ५७८. व्यक्तवाचां समुच्चारणे [ १।३।४८ ]

मनुष्याणां सहोच्चारणे वदेस्तङानौ स्तः। सम्प्रवदन्ते विप्राः। समुच्चारणे किम्? वदति विप्रः। व्यक्तवाचां किम्? संप्रवदन्ति खगाः।

## ५७९. अनोरकर्मकात् [ १।३।४९ ]

व्यक्तवाग्विषयादनुपूर्वाद् वदतेरकर्मकात् तथा। अनुवदते कठः कलापस्य। अकर्मकात् किम्? पूर्वमेव यजुरुदितमनुवदति। पुनर्वदतीत्यर्थः। व्यक्तवाचामित्येव। *अनुवदति वीणा। विमतौ च। अनुवदन्ते शिष्याः।*

## ५८०. विभाषा विप्रलापे [ १।३।५० ]

नृणां विमतिसहोक्तिव्यामिश्रणे वदेः प्राग्वद् वा। विप्रवदन्ते विप्रवदन्ति वा वैद्याः।

---

मिति। भृत्यानुपवदते। उपसान्त्वयतीत्यर्थः। पाणिनिर्वदते इति। वदितु सम्यगवबुध्यते इत्यर्थः। क्षेत्रे वदते। क्षेत्रविषयमुत्साहमाविष्करोतीत्यर्थः। विवदन्ते शिष्याः। विमनाः सन्तो निर्बन्धं भाषन्ते इत्यर्थः। परदारानुपवदते इति। 'भद्रे भजस्व मामेव ते दास्यामि" इत्येव रहसि प्रलोभ्य स्वाभिलषिते प्रवर्तयतीत्यर्थः।

व्यक्तवाचामिति। व्यक्ताः परिस्फुटवर्णा अर्थावगतिहेतुका वाग् येषां ते व्यक्तवाचः। ते च यद्यपि शुकसारिकादयोऽपि संभवन्ति, तथापि इह मनुष्या एव गृह्यन्ते प्रसिद्धतरत्वात्। प्रसिद्धिपरिग्रहार्थमेव हि व्यक्तवाचां ग्रहणमितरथा हि यदि व्यक्तवाच्येव पठ्यते किमनेन कृतं स्यादित्यालोच्य व्याचष्टे मनुष्याणामिति। संभूयोच्चारणं समुच्चारणमित्याह—सहोच्चारण इति।

अनोरकर्मकात्। व्यक्तवाचामित्येव सिद्धे सहोच्चारणाभावेऽपि यथा स्यादिति वचनम्। अनुवदते कठः कालापस्येति। अनुरत्र सादृश्ये कालापस्येति तुल्यार्थे शेषलक्षणा षष्ठी। तेन कालापेन सदृशं कठोऽधीयमानो वदतीत्यर्थः। वदनसादृश्यप्रतिपादनमात्रे तात्पर्यात्। कर्मणोऽविवक्षयाऽकर्मकोऽयम्। कठकालापौ शाखावचनौ तदध्येतरि पुरुषे वर्तते। अकर्मकात् किम्? परोक्तमनुवदति। व्यक्तवाग्विषयात् किम्? अनुवदति वीणा।

विभाषा विप्रलापे। व्यक्तवाचां समुच्चारणे इति सर्वमनुवर्तते। विरुद्धः परस्पर प्रलापो विप्रलापस्तदात्मके[1] समुच्चारणे इति व्याचष्टे—नृणामित्यादि। विमति

१. तेजोभङ्गेनेन इति क० पु०।
२. तदात्मकसमुच्चारणे इति क० पु०।

**५८१. अवाद्ग्रः [ १।३।५१ ]**

अवाङ्गिरतेस्तङानौ स्तः । अवगिरते ।

**५८२. समः प्रतिज्ञाने [ १।३।५२ ]**

समपूर्वाद् गिरतेः पूर्ववत् प्रतिज्ञायाम् । शतं संगिरते ।

**५८३. उदश्चरः सकर्मकात् [ १।३।५३ ]**

उत्पूर्वाच्चरतेः सकर्मकात् तङानौ स्तः । धर्ममुच्चरते । उल्लंघ्य गच्छतीत्यर्थः । सकर्मकात् किम् ? धूम उच्चरति ।

**५८४ समस्तृतीयायुक्तात् [ १।३।५४ ]**

संपूर्वाच्चरतेः प्राग्वत् तृतीयायोगे । अश्वेन संचरते ।

**५८५. दाणश्च सा चेच्चतुर्थ्यर्थे [ १।३।५५ ]**

संपूर्वाद् दाणश्चतुर्थ्यर्थे तृतीयायोगे तङानौ स्तः । दास्या संयच्छते

---

विरुद्धाभिधानम्, सहोक्तेरेककालोच्चारणम् तयोर्व्यामिश्रणमुभयात्मकत्वमिति यावत् । प्राप्तविभाषेयम् । विप्रा वदन्तीत्यादि । युगपत् परस्पर विरुद्ध वदन्तीत्यर्थ. ।

अवादग्र. । गिरतेरिति । एतच्च गॄ निगरणे इति भौवादिकस्येव ग्रहणं न गॄ शब्दे इति क्रैयादिकस्य । तस्य ह्यवपूर्वस्य प्रयोग एव नास्तीति सूचयति । सूत्रे ग्र इति रूपमात्रानुकरणं द्रष्टव्यम् । अर्थवद्धात्वनुकरणे तु विभक्तौ "ऋत इद्धातोः" ७।१।१०० ) इतीत्वे किरश्चेतिवद् गिर इति भाव्यम् ।

- समः प्रतिज्ञाने । शतं संगिरते इति । प्रतिजानीते इत्यर्थः ।

उदश्चरः सकर्मकात् । उत्क्रम्योल्लङ्घ्येत्यर्थः । धूम उच्चरति[1] । ऊर्ध्वं गच्छतीत्यर्थः ।

समस्तृतीयायुक्तात् । तृतीयेति विभक्तिर्गृह्यते । युक्तग्रहणं श्रूयमाणविभक्तियोग एव यथा स्यात् । तेनोभौ लोकौ संचरसि इति गम्यमानतृतीयायोगे न भवति । नहि संचरणं विना संभवतीति गम्यतेऽत्रापि[2] तृतीया श्रुतेन तपसा चेति । धातोश्च तृतीयया योगोऽर्थद्वारको वाच्यत्वेन तदन्तत्वेन वाऽसम्भवात् ।

दाणश्च[3] सा चेच्चतुर्थ्यर्थे । दाण् दाने भ्वादिः । दास्या[4] संयच्छते इति । कामितया

---

१. उद्धरतीति क० पु० ।

२. गाथा तत्रापि तृतीया श्रु पुन न सानेत्रोतिधातोस्तृतीयेति क० पु० ।

३. व्यंगश्चेति क० पु० ।

४. दास्यो इति क० पु० ।

**५५३. हनः सिच् [ १।२।१४ ]**

हनः परो सिच् कित् स्यात् । कित्त्वादनुनासिकलोपः । "ह्रस्वादङ्गात्" ( ८।२।२७ ) आहत । आहसाताम् ।

**५५४. आत्मनेपदेष्वन्यतरस्याम् [ २।४।४४ ]**

हन्तेर्वधादेशो वा स्यादात्मनेपदे लुङि । आवधिष्ट ।

**५५५. यमो गन्धने [ १।२।१५ ]**

सूचनार्थाद् यमः सिच् कित् स्यादात्मनेपदेषु । उदायत । अकर्मकाभ्यामात्माङ्गकर्मकाभ्यां किम् ? शत्रुमाहन्ति । परशिर आयच्छति ।

**५५६. समोगम्यृच्छिप्रच्छिस्वरत्यर्त्तिस्रुविदिभ्यः [ १।३।२९ ]**

एभ्यः संपूर्वेभ्योऽकर्मकेभ्यस्तङानौ स्तः । संगच्छते ।

---

आघ्नते इति । "गमहन" (६।४.९८) इत्युपधालोपः । "हो हन्तेः" (७।३।५४) । आघ्नत इति । "आत्मनेपदेष्वनत." ( ७।१।५ ) इत्यत् । आयच्छते पाणिमिति स्वीयमिति बोध्यम् । आत्मनेपदेनैव द्योतितत्वान्न प्रयुक्तम् ।

हनः सिच् । सौत्रत्वादल्लोपो न इत्यल्लोपो न कृतः । लिङ्सिचाविति वर्तमाने सिज्ग्रहणं लिङो निवृत्त्यर्थम् । अत्रापि झलिति वर्तते, तेन सिचो विशेषणाज्झलादिसिजिति बोध्यम् । तेन आघानिष्टेति चिण्वदिटि न भवति । सति हि कित्त्वे उपधालोपः स्यात् । [1]चिण्वद्भावविधिस्त्वन्येषु सावकाशः ।

यमो गन्धने । गन्धनं सूचनं परेण प्रच्छाद्यमानस्याविष्करणम् । उदायतेति । परस्यावद्यं प्रकाशयति स्मेत्यर्थः ।

अत्र चोदाङ्भ्यां गन्धनं द्योत्यते इत्युभयोः सह प्रयोगः । "आङो यमहनः" ( १।३।२८ ) इति तङ् । अत्राकर्मकत्वात् "समुदाङ्भ्यः" ( १।३।७५ ) इति नास्ति । लुङि[2] चङि सिचः कित्त्वादनुनासिकलोपः[3] । "ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः । परशिर इति परस्य शिरोऽत्र कर्म न तदात्मनोऽङ्गम् ।

समो गम्यृच्छिभ्याम् इत्येतावत् सूत्रम्, पृच्छ्यादयस्तु वार्तिकोक्ता इह प्रक्षिप्ताः । केचित् स्वृ गतौ । ऋच्छ गत्यादौ । आदेशस्तु न गृह्यते । अर्त्तिग्रहणेनैव सिद्धत्वात् । प्रच्छ ज्ञीप्सायाम् । स्वृ शब्दोपतापयोः । ऋ गतौ ह्वादिः । ऋ गतिप्रापणयोः भ्वादिः । द्वयोरपि ग्रहणम् । श्रु श्रवणे । विद ज्ञाने । गम्यादिभिः परस्मैपदिभिः साहचर्यान्न लाभार्थः । सत्ताविचारणार्थयोस्त्वनुदात्तेत्वादेवात्मनेपदं सिद्धमित्यग्रहणम् । संगच्छते इति । युज्यते इत्यर्थः ।

---

१. चिण्वद्भावविधिस्त्वन्येषु सावकाशः इति नास्ति क० पु० ।
२. लुङीति नास्ति क० पु० ।
३. लोप इत्यारभ्य—सिद्धत्वादित्यन्तो (                ) रेखाङ्कितो नास्ति क० पु० ।

## ५५७. वा गमः [ १।२।१३ ]

गमः परौ लिङ्सिचौ कितौ वा स्तः आत्मनेपदेषु। "अनुदात्तोपदेश" ( ६।४।३७ ) इति मलोपः। समगत। समगंस्त। संगसीष्ट। संगंसीष्ट। समृच्छते। संपृच्छते। संस्वरते। समियते। "सर्तिशास्त्यर्तिः" ( ३।१।५६ ) इत्यङ्। समारत। समारेताम्। संशृणुते। संविते।

## ५५८. वेत्तेर्विभाषा [ ७।१।७ ]

वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात्। संविद्रते। संविदते। "दृशेर्वाच्यम्" ( वा० ) संपश्यते। अकर्मकेभ्यः किम्? गङ्गां संगच्छति।

## ५५९. निसमुपविभ्यो ह्वः [ १।३।३० ]

अकर्मकादिति निवृत्तम्। एभ्यो ह्वञः प्राग्वत्। निह्वयते। एवं सम् उप वि। "उपसर्गादस्यत्यूह्योर्वा इति वाच्यम्" (वा०) निरस्यति। निरस्यते। समूहति। समूहते।

## ५६०. उपसर्गाद् ह्रस्व ऊहतेः [ ७।४।२३ ]

उपसर्गात्परस्य ऊहतेरणो ह्रस्वः स्यात्। यादौ क्ङिति। ऊह्य समुह्यात्।

---

सकर्मकाणामप्येवमादीनामर्थान्तरवृत्तेरकर्मकत्वम्।

समगतेति। मलोपे "ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः। संगसीष्टेति। अनुनासिकलोपः। पक्षेऽनुस्वारः। संपृच्छते इति। "ग्रहिज्या" ( ६।१।१६ ) इति सम्प्रसारणम्। समियृते इति। शपः श्लुः। "श्लौ" ( ६।१।१० ) इति द्वित्वम्। "अर्तिपिपर्त्योश्च" ( ७।४।७७ ) इत्यभ्यासस्येत्वम्। "अभ्यासस्यासवर्णे" ( ६।४।७८) इतीयङ् समारतेति। लुङि च्लेः "सर्तिशास्त्यर्ति" ( ३।१।५६ ) इत्यङ्। "ऋदृशोऽङि गुणः" ( ७।४।१६ ) इति गुणः। आट् "आटश्च" ( ६।१।९० ) इति वृद्धिः। संशृणुते इति। "श्रुवः शृ च" श्नुः शृभावश्च।

संविद्रते इति। "आत्मनेपदेष्वनतः" ( ७।१।५ ) इत्यदादेशः। संपश्यते इति। शपि "पाघ्राध्मा" ( ७।३।७८ ) इति पश्यादेशः। अत्राकर्मकादित्यनुवृत्तेः "रक्षांसीति पुराऽपि संशृणुमहे" इति मुरारिप्रयोगश्चिन्त्यः। कर्मव्यतिहारे तङ्। अन्योन्यकुशलप्रश्नसंश्रवणमुच्यते इति दुर्घटः।

निसमुपविभ्यो[1] ह्वः। निह्वयते इति। ह्वेञ् स्पर्धायां शब्दे च। शप्ययादेशः। "अस्यत्यूह्योरिति वक्तव्यम्" ( वा० )। असु क्षेपणे। ऊह वितर्के। परस्मैपदिनौ।

---

१. निसमुपविभ्यो इति नास्ति क० पु०।

५६१. स्पर्धायामाङः [ १।३।३१ ]

आङो ह्वेञः प्राग्वत् स्पर्धायाम्। कृष्णश्चाणूरमाह्वयते। स्पर्धायामिति किम्? गामाह्वयति।

५६२. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः [१।३।३२]

हिंसात्मकसूचने भर्त्सनादौ च कृञः पूर्ववत्। उत्कुरुते। श्येनो वर्तिकामपकुरुते। परदारान् प्रकुरुते। एधोदकस्योपस्कुरुते। गाथाः प्रकुरुते। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते इत्यर्थः। एषु किम्? कटं करोति।

५६३. अधेः प्रसहने [ १।३।३३ ]

अधेः कृञस्तङानौ स्तः शक्तौ। दैत्यानधि कुरुते विष्णुः।

---

स्पर्धायां प्राग्वत् आत्मनेपदमित्यर्थः।

स्पर्धायामिति विषयसप्तमी। हेतुत्वेन च विषयत्वं न त्वभिधेयसप्तमी। आङ्पूर्वस्य ह्वेञः शब्दक्रियत्वात्। कृष्ण इत्यादि। स्पर्धया तस्याह्वानं करोतीत्यर्थः। स्पर्धापराभिभवेच्छा।

गन्धनावक्षेपण। गन्धनं व्याचष्टे–हिंसात्मकसूचने इति। वस्तुतस्तु गन्ध अर्दने। अर्द हिंसायाम् इति चौरादिकस्यायं प्रयोग इति भावः। सूचनं पैशुन्यं दोषाविष्करणं तेन सूचितस्य वधबन्धादिका हिंसाग्रे तस्य तद्धेतुत्वात् सूचनमेव हिंसात्मकमित्युपचर्यते। अवक्षेपणं विवृणोति। भर्त्सनं तिरस्कार इत्यर्थः। आदिना सेवनादयो गृह्यन्ते। उत्कुरुते इति। [1]हिंसापर्यवसायिदोषाविष्करणं करोतीत्यर्थः। अपकुरुते। भर्त्सयतीत्यर्थः। विष्णुमुपकुरुते। सेवते इत्यर्थः। प्रकुरुते। परदारेषु सहसा अविमृश्य प्रवर्तते इत्यर्थः। उपकुरुते इति। गुणाधानं करोतीत्यर्थः। 'कृञः प्रतियत्ने' इति कर्मणि षष्ठी। गाथाः प्रकुरुते इति। प्रकर्षेण कथयतीत्यर्थः। उपयोगमुदाहरति शतं प्रकुरुते इति। शब्दार्थं व्याचष्टे—धर्मार्थमित्यादि। एषु किम्? कटं[2] करोति।

अधेः प्रसहने। प्रकर्षेण सहनं समाप्रसहनं प्रकर्षश्च पराजेतुं समर्थस्यैव क्षमया तदभावः। एतच्च शक्त्यतिशयायत्तमित्याशयेनाह—शक्ताविति। दैत्यानधिकुरुते इति। दैत्यान् पराजेतुं शक्तोऽपि न तान् पराजयते इत्यर्थः। तथा च भारविः—"भवादृशाश्चेदधिकुर्वते परान्" इति। क्षमया न पराजयन्त इत्यर्थः। ये तु प्रसहनमभिभव इति व्याचक्षते, तेषां "निराश्रया हन्त हता मनस्विता" इति न संगच्छते।

---

१. हिंसापर्यवसायीत्यारभ्य—उपकुरुते इत्यन्तो नास्ति क० पु०।
२. कटमिति नास्ति क० पु०।

५६४. वेः शब्दकर्मणः [ १।३।३४ ]

शब्दः कर्म कारकं यस्य तस्माद्विपूर्वात् कृञः प्राग्वत्। स्वरान् विकुरुते।

५६५. अकर्मकाच्च [ १।३।३५ ]

वेः कृञोऽकर्मकात्तथा। वायुर्विकुरुते। शब्दकर्मणोऽकर्मकात् किम्? चित्तं विकरोति कामः।

५६६. सम्माननोत्सञ्जनाचार्यकरणज्ञानभृति-
विगणनव्ययेषु नियः [ १।३।३६ ]

पूजनोत्क्षेपणादौ णीञस्तङ्ज्ञानौ स्तः। शास्त्रे नयते। दण्डमुन्नयते। पुत्रमुपनयते। पदार्थान् नयते। भृत्यमुपनयते। करं विनयते। शतं विनयते।

---

वेः शब्दकर्मणः। कर्मेह कारकग्रहणम् कृञ् विमत्वान्न क्रिया। विपूर्वस्य करोतेः शब्दक्रियायां वृत्त्यसम्भवात् कर्मग्रहणं चात्रानर्थकम्, वेः शब्दे[1] इत्येव शब्दनक्रियालाभात् इत्यालोच्याह–शब्दकर्मकारकं यस्येति। स्वरान् विकुरुते इति। उच्चारयतीत्यर्थः।

अकर्मकाच्च। वायुर्विकुरुते इति। शोभनं वातीत्यर्थः। सूत्रद्वयोक्तोपाधी तन्त्रेणोत्तरयिष्यन्नाचिष्टे—शब्दकर्मणोऽकर्मकात् किमिति। चित्तं विकरोति कामः इति। चित्तस्य कर्तृत्व[2]भ्रमनिरासार्थं काम इत्युपात्तम्। चित्तमिह कर्मास्ति इति नायमकर्मकः, न वा शब्दकर्मक इति न पूर्वेण न[3] वाऽनेन तङ् भवति।

नन्वकर्मकाच्चेति नारम्भणीयम्। पूर्वत्र वेरिति योगविभागः करिष्यते। तेनाकर्मकादपि भविष्यति।

न चैवमतिप्रसङ्गः। शब्दकर्मण इत्यस्य नियमार्थत्वात् सकर्मकाच्चेत् शब्दकर्मण एवेति। मैवम्। विपरीतोऽपि नियमः सभाव्येत शब्दे यदि भवति कर्मण्येवेति ततश्च चित्तं विकरोतीत्यत्रापि स्यात्।

सम्माननोत्सञ्जन। आचार्यकरणादीनि स्पष्टत्वादुपेक्ष्याद्ये द्वे व्याचष्टे–पूजनोत्क्षेपणादाविति। सति सप्तमी चेयं स्वभावात् सतो विशेषणत्वं गमयति। विशेषणं च यथासम्भवं नि श्चिद्वारवर्थस्य किञ्चित्तु धातोः। तेन सम्माननाचार्यकरण[4]भृतिषु नयत्यर्थ-

---

१. वेः शब्दे इति नास्ति क० पु०।

२. कर्तृत्व व निरासार्थमिति क० पु०।

३. तेन वा इति क० पु०।

४. करण प्रभृतिषु न यत्नार्थविशेषणेषु सत्सु सञ्जनज्ञानेति क० पु०।

## ५६७. कर्तृस्थे चाशरीरे कर्मणि [१।३।३७]

णीञः कर्तृस्थेऽमूर्ते कर्मणि कारके पूर्ववत्। क्रोधं विनयते। कर्तृस्थे किम्? गुरोः क्रोधं विनयति। अमूर्ते किम्? गडुं विनयति।

---

विशेषणेषु सत्सु उत्सञ्जनज्ञ नविगणनव्ययेषु वाच्यतया नयति विशेषणेषु सत्सु 'णीञ-स्तङानावित्यर्थः. सम्पद्यते। आदिपदाद् आचार्यकरणमात्र.ऽत्वसम्पत्तिः। अभूत-तद्भावेऽपि चिर्वविकल्पितत्वान्न कृतः। ज्ञानं प्रमेयनिश्चयः। भृतिर्वेतनम्। 'विगण-नमृणादेः शोधनम्। व्ययो धर्मादिषु विनियोगः। शास्त्रे नयते इति। शास्त्रार्थान् पदार्थान् युक्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः। युक्तिभिः स्थिरीकरणमेव पदार्थानां पूजनम्।

अन्ये त्वाहुः—पदार्थानामचेतनत्वान्नेयं पूजा मुख्या, किं त्वभिलषितार्थसम्पादने न शिष्याणामेव पूजेति व्याख्येयमिति।

दण्डमुन्नयते इति। उत्क्षिपतीत्यर्थः। पुत्रमुपनयते इति। पुत्रमीदृशेन विधि-नात्मसमीपं प्रापयतीति येनोपनयनेनाचार्यः सम्पद्यते इत्यर्थः।

पदार्थान्नयते इति। पदार्थलक्षणं प्रमेयं निश्चिनोतीत्यर्थः। भृत्यमुपनयते इति वेतनेनात्मसमीपं प्रापयतीत्यर्थः। करं विनयते इति। राजदेयं भागं शोधयति निर्यात[3]-यतीत्यर्थः। शतं विनयते इति। धर्मार्थं विनियुङ्क्ते इत्यर्थः।

इह तु "विनिन्युरेनं गुरवो गुरुप्रियम्" इत्याचार्यकरणस्याविवक्षितत्वात्तङोऽभाव इत्याहुः।

कर्मस्थनयतेरात्मनेपदविधानात् सन्निधानात्तत्कर्त्रेवात्र गृह्यते इत्याह।

कर्तृस्थे च। इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियान्ति, न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य। न च शरीरमेव शरीरस्थं सम्भवतीति शरीरशब्देन तदवयवो गृह्यते। तेनाशरीरस्यावयवान्यस्मिन्नित्युक्तं भवति। तच्च कर्तृस्थमवयवभिन्नं क्रोधादि तद् अर्थादमूर्तमेव पर्यवस्यतीत्याशयेनाह—अमूर्तेति। क्रियाया अमूर्तत्वाव्यभिचारात् कर्मैह कारकं गृह्यते इत्याह—कर्मणि कारके पूर्ववत् तङानौ स्त इत्यर्थः। क्रोधं विनयते स्वस्येत्यर्थः। विनयनमपगमनम्। यद्येवं क्रोधाप-नयनफलस्य चित्तप्रसादादेः कर्तृगत्वात् "स्वरितञितः" (१।३।७२) इत्येव सिद्धमात्मने-पदम् किमनेन? सत्यम्। नियमार्थमेतत्। कर्तृस्थे कर्मण्यशरीरे एवेति। किं नियमे

---

१. णीञस्तङानावित्यर्थं इति क० पु०।

२. विगणनमृणादेरिति क० पु०।

३. निर्णीतयत्यर्थं इति क० पु०।

५६८. वृत्तिसर्गतायनेषु क्रमः [१।३।३८]

क्रमस्तङानौ स्तः। अप्रतिबन्धोत्साहस्फीततासु। ऋचि क्रमते बुद्धिः। धर्माय क्रमते। सतां श्रोः क्रमते।

५६९. उपपराभ्याम् [१।६।३९]

वृत्त्यादिष्वाभ्यामेव क्रमस्तङानौ स्तो नोपसर्गात्। उपक्रमते। पराक्रमते। आभ्यां किम्? प्रक्रामति। वृत्त्यादौ किम्? उपक्रामति।

५७०. आङ उद्गमने [१।३।४०]

आङः क्रमः प्राग्वदुद्गमनेऽर्थे। आक्रमतेऽर्कः। "ज्योतिरुद्गमन इति वाच्यम्"। नेह आक्रामति धूमः। उद्गमने किम्? खमाक्रामत्यर्कः।

---

प्रयोजनमित्याक्षिपति-प्रमूर्त क्रिमिति। गडु विनयति इति। एतच्चापनयने वर्तमानादेशात्मनेपदं विधीयते, नार्थान्तरे। तेनेह न। "विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषव" इति। इह हि कगत्यर्थे प्राप्त्यर्थे वा वर्तनेऽनेकार्थत्वाद्धातूनाम्।

वृत्तिसर्ग। अप्रतिबन्धेति[1] वृत्तिशब्दार्थमाह—उत्साहेति सर्गशब्दार्थम्। सृजिरनेकार्थत्वादुत्साहार्थः। "सृष्टश्चेद् ब्राह्मणवधे"। "येनेन्द्रलाकावजयाय सृष्टः" इत्यादौ दर्शनात्। तायनं व्याचष्टे—स्फीततेति। तायृ सन्तानपालनयोरित्यस्य[3] ल्युटि रूपम्।

उपपराभ्याम्। वृत्त्यादिष्वित्यनुवर्तते। तत्र पूर्वेणैव सिद्धे नियमार्थमिदम्। सोपसर्गादकर्मकेत्, भवत्युपपराभ्यामेवेत्याह—आभ्यामेवेत्यादि। व्यवच्छेद्यमाह—नान्योपसर्गादिति।

संक्रामतीति। "क्रमःपरस्मैपदेषु" (७।३।७६) इति दीर्घः।

आङ उद्गमने। आक्रमते इति। उदयते इत्यर्थः। ज्योतिर्ग्रहणान्नक्षत्रादिः। आक्रामति धूमः[4] इति। ऊर्ध्वं गच्छतीत्यर्थः। खमुत्क्रामत्यर्क[5] इति। व्याप्नोतीत्यर्थः।

इह "नभः समाक्रामति चन्द्रमाः क्रमात्" इत्यत्रापि व्याप्तिरेव विवक्ष्यते, नोद्गमनमिति तदभावः।

---

१. विहितक्रोधजया विजिगीषव इति क० पु०।
२. अप्रतिबन्धे वृत्ति इति क० पु०।
३. रित्यल्युटि इति क० पु०।
४. आक्रमतीति क० पु०।
५. नभोऽक्रामत्यर्क इति क० पु०।

**५७१. वेः पादविहरणे [१।३।४१]**

वेः क्रमः प्राग्वत् पादविहरणेऽर्थे । साधु विक्रमते वाजी । पादिति किम् ? वाजिना विक्रामति ।

**५७२. प्रोपाभ्यां समर्थाभ्याम् [१।३।४२]**

आभ्यां तुल्यार्थाभ्यां क्रमस्तङानौ स्तः, क्रियारम्भ एवानयोस्तुल्यार्थता । भोक्तुं प्रक्रमते । उपक्रमते ।

**५७३. अनुपसर्गाद्वा [१।३।४३]**

क्रमते । क्रामति ।

**५७४. अपह्नवे ज्ञः [१।३।४४]**

ज्ञानातेस्तङानौ स्तोऽपलापेऽर्थे । शतमपजानीते ।

---

वेः पादविहरणे । विहरणं विक्षेपणं यद्यपि क्रमु पादविक्षेपे इति पठ्यते तथाप्यनेकार्थत्वाद्धातूनामेतदुपात्त विशेषणम् । साधु विक्रमते वाजीति । अश्वादीनां गतिविशेषो विक्रमणम् उच्यते । वाजिना विक्रामतीति । विहरतीत्यर्थः ।

प्रोपाभ्यां समर्थाभ्याम् । "समर्थः पदविधिः" ( २।१।१ ) इतिवन्नेह समर्थत्वं परस्परसंबद्धार्थत्वं धात्वर्थं प्रति पारतन्त्र्येण परस्परसंबद्धार्थत्वस्याभावात् । धातुना चोपसर्गसंबन्धो व्यभिचारीत्यभिप्रेत्य व्याचष्टे—तुल्यार्थाभ्यामिति । एतेन समोऽर्थो ययोस्तौ समर्थौ । शकन्ध्वादित्वात् पररूपम् । समशब्द[1] एव च तुल्यार्थेऽत्र वर्तते इति दर्शयति ।

ननु प्रकर्षादौ उपश्च सामीप्यादौ प्रसिद्धः, प्रत्यन्तविलक्षणौ चानयोरर्थौ, तत्कथं तुल्यार्थतेत्याशङ्क्याह—क्रियारम्भ एवेत्यादि । क्रियाया आरम्भः आद्य उपक्रमः आदिकर्मेति यावत् ।

अनुपसर्गादिति । उपपराभ्यामित्यस्य नियमार्थत्वाद् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्पः । तेन यत्र वृत्त्यादयो[2] न सन्ति तत्रैवमप्राप्तविभाषा साधनं । तेनानेन मुक्ते क्रामतीत्यत्र वृत्त्यादिनात्मनेपदं[3] कस्मान्न भवतीति न नोदनीयम् ।

अपह्नवे ज्ञः । शतमपजानीते इति । सोपसर्ग एवायमपलापे[4] वर्तते । तेनास्मात् कर्त्रभिप्रायेऽपि क्रियाफले विधास्यमानम् "अनुपसर्गाद् ज्ञः" इतीह न प्रवर्तते । अपह्नवे किम् ? नाभिजानाति ।

---

१. समशब्द एवेति क० पु० ।
२. वृत्त्यादयो इति क० पु० ।
३. वृत्त्यादित्यात्मनेपदमिति क० पु० ।
४. धर्मस्युदन्तिरमाऽऽहेति क० पु० ।

५७५. अकर्मकाच्च [१।३।४५]

अकर्मकाज्जानातेस्तथा। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तते इत्यर्थः।

५७६. संप्रतिभ्यामनाध्याने [१।३।४६]

आभ्यां ज्ञः प्राग्वत् अनौत्कण्ठ्ये। संजानीते। औत्कण्ठ्ये तु पितुः संजानाति।

५७७. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः [१।३।४७]

भासनसान्त्वनादिषु वदतेस्तङ्ज्ञानौ स्वः। शास्त्रे वदते। भृत्यानुपवदते। पाणिनिर्वदते। क्षेत्र वदते। विवदन्ते शिष्याः। परदारानुपवदते।

---

अकर्मकाच्च। अकर्माभिप्रायार्थमिदम्। कर्माभिप्रायेऽपि सोपसर्गार्थं च। औषधस्यानुजानीते। औषधस्यानुजिज्ञासते इति। कथं पुनरयमकर्मको यावता सर्पिः कर्मेत्यर्थान्तरमाह—सर्पिषा प्रवर्तत इत्यर्थं इति। सर्पिरत्र करणं न कर्म। तथा च "ज्ञोऽविदर्थस्य करणे" (२।३।५१) इति षष्ठी विहितेति भावः।

अकर्मकात् किम्? स्वरेण पुत्रं जानाति। कथम् 'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया" इति वाक्यार्थस्य कर्मत्वात्। सत्यम्। "अनुपसर्गाद् ज्ञ." इति कर्माभिप्राये तङ्।

संप्रतिभ्यामिति। संजानीते इति। अवेक्षते इत्यर्थः। प्रतिजानीते। अङ्गीकरोतीत्यर्थः। पितुः संजानाति। उत्कण्ठ पूर्वं स्मरतीत्यर्थः। 'अधिगर्थदयेशां कर्मणि" (२।३।५२) इति कर्मणि षष्ठी। [1]ननु अत्र शेषे इति वर्तते, तेनात्र कर्मणः शेषत्वेन विवक्षितत्वात् "अकर्मकाच्च" (१।३।४५) इति पूर्वेणात्मनेपदेन भवितव्यम्। नैवम्, अनाध्यान इति विभज्यते। स चोभयोर्योगयोः शेषः, तेनाध्याने पूर्वेणापि न भविष्यति।

भासनोपसंभाषा। भासन दीप्तिः। उपसंभाषां व्याचष्टे—सान्त्वनेति। आदिशब्दाद् ज्ञानादयः। ज्ञानं सम्यगवबोधः। यत्न उत्साहः। विमतिः नानामतिः। उपमन्त्रणमुपच्छन्दनम्। स्वसमीहिते प्रवर्तनमित्यर्थः। शास्त्रे वदते इति। भासमानस्तत्र पदार्थान् वक्तीत्यर्थः।

अत्र भासनं वदने हेतुतया विशेषणम्. यतः शिष्यैः स्तूयमानो भासते। तथा चोपर्युपरि शास्त्रार्थप्रतिभासात् सुष्ठु वदनं भवति। [1]तेजोभङ्गे न शक्नुयाद् वदितु-

---

१. ननुत्र शेष इति प्रतीत इति क० पु०।

५०

**५७८. व्यक्तवाचां समुच्चारणे [ १।३।४८ ]**

मनुष्याणां सहोच्चारणे वदेस्तङानौ स्तः । संप्रवदन्ते विप्राः । समुच्चारणे किम् ? वदति विप्रः । व्यक्तवाचां किम् ? संप्रवदन्ति खगाः ।

**५७९. अनोरकर्मकात् [ १।३।४९ ]**

व्यक्तवाग्विषयादनुपूर्वाद् वदतेरकर्मकात् तथा । अनुवदते कठः कलापस्य । अकर्मकात् किम् ? पूर्वमेव यजुरुदितमनुवदति । पुनर्वदतीत्यर्थः । व्यक्तवाचामित्येव । अनुवदति वीणा । विमतौ च । अनुवदन्ते शिष्याः ।

**५८०. विभाषा विप्रलापे [ १।३।५० ]**

नृणां विमतिसहोक्तिव्यामिश्रणे वदेः प्राग्वद् वा । विप्रवदन्ते विप्रवदन्ति वा वैद्याः ।

---

मिति । भृत्याननुपवदते । उपसान्त्वयतीत्यर्थः । पाणिनिर्वदते इति । वदितुं सम्यगवबुध्यते इत्यर्थः । क्षेत्रे वदते । क्षेत्रविषयमुत्साहमाविष्करोतीत्यर्थः । विवदन्ते शिष्याः । विमनाः सन्तो निर्बन्धं भाषन्ते इत्यर्थः । परदारानुपवदते इति । 'भद्रे भजस्व मामेवं ते दास्यामि" इत्येवं रहसि प्रलोभ्य स्वाभिलषिते प्रवर्तयतीत्यर्थः ।

व्यक्तवाचामिति । व्यक्ताः परिस्फुटवर्णा अर्थावगतिहेतुका वाग् येषां ते व्यक्तवाचः । ते च यद्यपि शुकसारिकादयोऽपि संभवन्ति, तथापि इह मनुष्या एव गृह्यन्ते प्रसिद्धतरत्वात् । प्रसिद्धिपरिग्रहार्थमेव हि व्यक्तवाचां ग्रहणमितरथा हि यदि व्यक्तवाच्येव पठ्यते किमनेन कृतं स्यादित्यालोच्य व्याचष्टे मनुष्याणामिति । संभूयोच्चारणं समुच्चारणमित्याह—सहोच्चारण इति ।

अनोरकर्मकात् । व्यक्तवाचामित्येव सिद्धे सहोच्चारणाभावेऽपि यथा स्यादिति वचनम् । अनुवदते कठः कालापस्येति । अनुरत्र सादृश्ये कालापस्येति तुल्यार्थे शेषलक्षणा षष्ठी । तेन कालापेन सदृशं कठोऽधीयमानो वदत इत्यर्थः । वदनमात्रस्य प्रतिपादनमात्रे तात्पर्यात् । कर्माऽविवक्षयाऽकर्मकोऽयम् । कठकालापौ शाखावचनौ तदध्येतरि पुरुषे वर्तेते । अकर्मकात् किम् ? परोक्तमनुवदति । व्यक्तवाग्विषयात् किम् ? अनुवदति वीणा ।

विभाषा विप्रलापे । व्यक्तवाचां समुच्चारणे इति सर्वमनुवर्तते । विरुद्धः परस्पर प्रलापो विप्रलापस्तदात्मके[1] समुच्चारणे इति व्याचष्टे—नृणामित्यादि । विमति

---

१. तैजोभङ्गेनेन इति क० पु० ।

२. तदात्मकसमुच्चारणे इति क० पु० ।

**५८१. अवाद्ग्रः [ १।३।५१ ]**

अवाद्गिरतेस्तङानौ स्तः । अवगिरते ।

**५८२. समः प्रतिज्ञाने [ १।३।५२ ]**

समपूर्वाद् गिरतेः पूर्ववत् प्रतिज्ञायाम् । शतं संगिरते ।

**५८३. उदश्चरः सकर्मकात् [ १।३।५३ ]**

उत्पूर्वाच्चरतेः सकर्मकात् तङानौ स्तः । धर्ममुच्चरते । उल्लंघ्य गच्छतीत्यर्थः । सकर्मकात् किम् ? धूम उच्चरति ।

**५८४ समस्तृतीयायुक्तात् [ १।३।५४ ]**

संपूर्वाच्चरतेः प्राग्वत् तृतीयायोगे । अश्वेन संचरते ।

**५८५. दाणश्च सा चेच्चतुर्थ्यर्थे [ १।३।५५ ]**

संपूर्वाद् दाणश्चतुर्थ्यर्थे तृतीयायोगे तङानौ स्तः । दास्या संयच्छते

---

विरुद्धाभिधानम्, सहोक्तेरेककालोच्चारणम् तयोर्व्यामिश्रणमुभयात्मकत्वमिति यावत् । प्राप्तविभाषेयम् । विप्रा वदन्तीत्यादि । युगपत् परस्पर विरुद्धं वदन्तीत्यर्थः ।

अवाद्ग्र । गिरतेरिति । एतच्च गॄ निगरणे इति भौवादिकस्येव ग्रहणं न गॄ शब्दे इति क्रैयादिकस्य । तस्य ह्यवपूर्वस्य प्रयोग एव नास्तीति सूचयति । सूत्रे ग्र इति रूपमात्रानुकरणं द्रष्टव्यम् । अर्थवद्धात्वनुकरणे तु विभक्तौ "ऋत इद्धातोः" ७।१।-१०० ) इतीत्त्वे किरश्चेतिवद् गिर इति भाव्यम् ।

समः प्रतिज्ञाने । शतं संगिरते इति । प्रतिजानीते इत्यर्थः ।

उदश्चरः सकर्मकात् । उत्क्रम्योल्लङ्घ्येत्यर्थः । धूम उच्चरति[1] । ऊर्ध्वं गच्छतीत्यर्थः ।

समस्तृतीयायुक्तात् । तृतीयेति विभक्तिर्गृह्यते । युक्तग्रहणं श्रूयमाणविभक्तियोग एव यथा स्यात् । तेनोभौ लोकौ संचरसि इति गम्यमानतृतीयायोगे न भवति । नहि संचरणं विना संभवतीति गम्यतेऽत्रापि[2] तृतीया श्रुतेन तपसा चेति । धातोश्च तृतीयया योगोऽर्थद्वारको वाच्यत्वेन तदन्तत्वेन वाऽसम्भवात् ।

दाणश्च[3] सा चेच्चतुर्थ्यर्थे । दाण् दाने भ्वादिः । दास्या[4] संयच्छते इति । कामितदा

---

१. उद्धरतीति क० पु० ।

२. गम्या तत्रापि तृतीया श्रु पुन न सानेत्रीतिधातोस्तृतीयेति क० पु० ।

३. व्यंणश्चेति क० पु० ।

४. दास्यौ इति क० पु० ।

कामी । सम इति षष्ठ्यन्तत्वात् प्रेण व्यवधानेऽपि । दास्या संप्रयच्छते। चतुर्थ्यर्थे किम् ? दास्या संप्रयच्छति भिक्षां भिक्षवे ।

५८६. उपाद् यमः स्वकरणे [ १।३।५६ ]

उपपूर्वाद् यमः विवाहेऽर्थे तङानौ स्तः । भार्यामुपयच्छते ।

५८७. विभाषोपयमने [ १।२।१६ ]

विवाहार्थाद् यमः सिज्वा कित् स्यादात्मनेपदेषु । रामः सीतामुपायत, उपायंस्त वा ।

---

दास्ये' ददातीत्यर्थः । 'पाघ्राध्मा" ( ७।३।७८ ) इति यच्छादेशः । अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया'। अशिष्टव्यवहारतां दर्शयितुं कामीत्युक्तम्। यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते स्वयं च तस्यै ददाति तद्विषयोऽयं प्रयोग इत्यहुः ।

ननु सम इति पञ्चम्या "तस्मादित्युत्तरस्य" (१।१।६७) इत्यव्यवहितस्यैव दाणः स्यात्, न तु व्यवधाने संप्रयच्छते इत्यादौ, अत आह—सम इति न पञ्चमी, किन्तु विशेषणषष्ठीयमित्यर्थः ।

एवं च पूर्वसूत्रेऽप्यश्वेन समुदाचरते[1] इत्यादावपि भवितव्यमेव ।

उपाद् यमः स्वकरणे । अस्वस्य स्वस्य करणं 'स्वकरणमिह[2] विवक्षितम् । विकल्पितत्वात् च्लेरभावः[3] ।

स्वकरणमिह सामान्योक्तमपि[4] प्रसिद्धिवशाद् विशेषे वर्तते इति जयादित्यमतमनुसृत्य व्याचष्टे—विवाहेऽर्थे इति । विवाहः पाणिग्रहणम्, कन्यासंस्काररूपः । भार्यामुपयच्छते इति । पाणिग्रहणविधिना स्वीकरोतीत्यर्थः ।

भाष्ये स्वस्वस्य[5] सतः स्वत्वापादनमात्रं स्वीकरणमित्युक्तम् । इह कस्मान्न भवति स्वं शाटकान्तमुपयच्छतीति । अस्वं यदा स्वं करोति स विनयमेव तदेति । स्वकरणमित्यस्य[6] तु व्यावर्त्यं यत्र स्वस्यैव सतो रूपान्तरेण करणं तत् ।

---

१. समुदाद्वृति इति क० पु० ।
२. चरणं स्वयंकरणमिहेति क० पु० ।
३. छेरभाव इति क० पु० ।
४. सामान्यो इति क० पु० ।
५. च वर्त्स्यति क० पु० ।
६. स्वगुणद्व्यवर्त्येति क० पु० ।

५८८. ज्ञाश्रुस्मृदृशां सनः [ १।३।५७ ]

एभ्यः सन्नन्तेभ्यस्तङानौ स्तः। जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

५८९. नानोर्ज्ञः [ १।३।५८ ]

अनुपूर्वाद् ज्ञः सन्नन्तात् तङानौ न स्तः। अनुजिज्ञासति पुत्रम्।

---

एव च विवाह इत्युपलक्षणम् तथा च भट्टिप्रयोगः "उपायस्त महास्त्राणि। उपायंसत नासवम्"। "शस्त्राण्युपायसत जित्वराणि" इति। उपायतेति। लुङि सिचः कित्वात्। "अनुदात्तोपदेश" (६।४।३७) इति मलोपे "ह्रस्वादङ्गात्" (८।२।२७) इति सिचो लोपः। उपायंस्तेति। अकित्वपक्षे मस्यानुस्वारः।

ज्ञाश्रुस्मृदृशां सनः। ज्ञा अवबोधने। श्रु श्रवणे। स्मृ चिन्तायाम्। दृशिर् प्रेक्षणे। तत्र जानातेरपह्नवे ज्ञ इत्यादिभिःसूत्रैः विहितमात्मनेपदम्। "शृणोतेः सम्पृच्छिभ्याम्" (१।३।२९) इति दृशेश्चोपसंख्यानाम्। एषां सन्नन्तानां "पूर्ववत्सनः" (१।३।६२) इत्येव सिद्धम् ततोऽन्यत्रानेन विधीयते। स्मरतेस्तु सर्वथाऽप्राप्त विधीयते। जिज्ञासते इति। "सन्यङोः" (६।१।९) इति द्वित्वं "सन्यतः" (७।४।७९) इतीत्वम्। हलादिः शेषादि। शुश्रूषते इति। "एकाचः" (७।२।१०) इतीड् निषेधः। "इको झल्" (१।२।९) इति कित्वान्न गुणः। "अज्झन" (६।४।१६) इति दीर्घः।

यत्तु प्राचोक्तं श्युकः कित्वेन "श्युकः[1] किति" (७।२।११) इतीड् निषेधः इति, तदसत्, येषां प्रकृत्याश्रयः प्रतिषेधो नास्ति तदर्थमित्युक्तत्वात्। अथापि प्रत्ययाश्रयः निषेधः क्रियते[2]), तर्हि "सनि ग्रहगुहोश्च" (७।२।१२) इत्यनेनास्तु न त्वनेन। किं कारणम्? झलादेः सनः कित्व न चान्तरेणेट्प्रतिषेधं सत्[3] झलादिर्भवतीति। सुस्मूर्षते इति पूर्ववत्। "अज्झनगम" (६।४।१६) इति दीर्घे "उदोष्ठ्यपूर्वस्य" (७।१।१०२) इत्युत्वे "हलि च" (८।२।७७) इति दीर्घः। दिदृक्षते इति। "हलन्ताच्च" (१।२।१०) इति कित्वम्। "व्रश्चभ्रस्ज" (८।२।३६) इति षः। "षढोः कः सि" (८।२।४१) इति षत्वम्, चत्वम्।

नानोर्ज्ञः। पूर्वेण प्राप्त निषिध्यते। पूर्वा च प्राप्तिः सकर्मकविषया। अकर्मकेभ्यस्तु[4] "अकर्मकाच्च" (१।३।४५) इत्येव तङा विहितत्वात् "पूर्ववत्सनः" (१।३।६२) इत्येव सिद्धेः। अत एव पुत्रमित्युदाहरणे कर्मोपदर्शितम्। तेनाकर्मकात् "पूर्ववत्सनः" (१।३।६२) इत्यात्मनेपदं भवत्येव। औषधस्यानुजिज्ञासते। औषधेन प्रवर्तितु मिच्छतीत्यर्थः।

---

१. श्युकः कितीत्यारभ्य—क्रियेतेत्यन्तो नास्ति क० पु०।
२. तत्स्थाने श्युकः क्रियेत इति क० पु०।
३. सत् इति नास्ति क० पु०।
४. अकर्मकेत्वकर्मेति क०पु०।

५९०. प्रत्याङ्भ्यां श्रुवः [ १।३।५९ ]

आभ्यां शृणोतेः सन्नन्तात् ताङानौ न स्तः। प्रतिशुश्रूषति। आशुश्रूषति। इह सर्वत्रोपसर्गग्रहणात् कर्मप्रवचनीयादौ न। द्विजं प्रतिशुश्रूषते।

५९१. प्रोपाभ्यां युजेरयज्ञपात्रेषु [ १।३।६४ ]

आभ्यां परादयज्ञपात्रविषयाद् युजेस्तङान स्तः। प्रयुङ्क्ते। उपयुङ्क्ते। "स्वराद्यन्तोपसृष्टाद् वाच्यम्" (वा०) उद्युङ्क्ते। वियुङ्क्ते। यज्ञपात्रेषु। प्रयुनक्ति।

५९२. समः क्ष्णुवः [ १।३।६५ ]

संक्ष्णुते शस्त्रम्।

---

प्रत्याङ्भ्यां श्रुवः। सन्निमित्ता प्राप्तिः प्रतिषिध्यते। सर्वत्रोपसर्गग्रहणादिति। इह परस्परसाहचर्यादन्यत्र षष्ठी निर्देशेषु तैर्धातोर्विशेषणादिति भावः। द्विजं प्रतीति। द्विजं लक्षीकृत्येत्यर्थः। 'लक्षणेत्थंभूत" ( १।४।९० ) प्रति. कर्मप्रवचनीयः।

प्रोपाभ्यामिति। युजेरितीकारो विवक्षितः नागन्तुक इति युजिर्योगे इत्यस्यैव ग्रहणं न युजसमाधावित्यस्य दैवादिकस्य। तस्यानुदात्तेत्वादेव[1] सिद्धेश्चेत्यालाच्याह–युजिर् योगे इति। स्वरितेत् अयम्। अकर्त्रभिप्रायार्थं आरम्भः। कर्त्रभिप्राये तु सिद्धमेव "प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्" इति प्रयुङ्क्ते इति। रुधादिभ्यः श्नम्" ३।१।७८ )। "श्नसोरल्लोपः" ( ६।४।१११ )। "चोः कु" ( ८।२।३० ) चत्वम्। अनुस्वारपरसवर्णौ। स्वराद्यन्तेत्यादि। स्वरः अच् आदिः, अन्तो वाऽवयवो यस्य स स्वराद्यन्तः तेनोपसर्गेण सम्बन्धः। स्वराद्यन्तोपसृष्ट सम् निस् दुस्। एते व्यावर्त्यन्ते[2]। प्रयुनक्तीति। द्वन्द्वान्यस्त्रि यज्ञपात्राणि[3]। प्रयुनक्ति धीर इति। वाक्याद् यज्ञपात्रविषयताऽवगम्यते।

समः क्ष्णुवः–सविसर्गपाठः "शर्परे विसर्जनीयः" ( ८।३।३५ ) इति वचनात्। संक्ष्णुते शस्त्रमिति। क्ष्णु तेजने। "समो गम्यृच्छिभ्याम्" (१।३।२९) इत्यत्रैवायं[4] किं न पठ्यते ? एवं हि सम इति द्विः कर्तव्यं न स्यात्। सत्यम्। तत्राकर्मकादिति वर्तते। सकर्मकश्चायम्। एतदेव स्फोटयितुं शस्त्रमिति कर्म प्रयुक्तमिति।

---

१. अस्येति नास्ति क० पु०।
२. व्यावर्तन्ते इति क० पु०।
३. यज्ञपात्राणीति क० पु०।
४. वायमिति क० पु०।

## ५९३. भुजोऽनवने [ १।३।६६ ]

भुजस्तङानौ स्तः न तु पालनेऽर्थे । ओदनं भुङ्क्ते । पालने तु पृथिवीं भुनक्ति ।

## ५९४. णेरणौ यत्कर्म णौ चेत् सकर्ताऽनाध्याने [१।३।६७]

णयन्तात् तङानौ स्तः यत् कर्म स एव णयन्तस्य कर्ता चेत्, न त्वाध्याने । पश्यन्ति भवं भक्ताः । दर्शयते भवो भक्तान् स्वयमेव ।

इह कर्तृस्था क्रिया । तेन "कर्मवत् कर्मणा" (३।१।८७) इति कर्मवत्त्वाभावाद् आत्मनेपदमप्राप्तं विधीयते ।

अणौ यत् कर्म णौ चेत् स कर्तेति किम् ? दर्शयति भवं भक्तान् भक्तिः । औत्कण्ठ्ये तु—स्मरयति भक्तान् हरिः ।

---

भुजोऽनवने । भुज पालनाभ्यवहारयोरिति रुधादेर्ग्रहणम् । अवनप्रतिषेधात् । संसर्गवद्[1] विप्रयोगस्यापि विशेषावगतिवगतिहेतुत्वात् । यथा सवत्सा धेनुरानीयतामित्युक्ते गौः धेनुः प्रतीयते साकिशोरेति वडवा । वमवत्सा–अकिशोरेत्यप्युक्ते [2]संभवद् वस्मादिमंबन्धिनो सैवावगम्यते । एव यस्य भुजोऽवने वृत्तिर्दृष्टा स एव गृह्येत । तेन भुजो कौटिल्ये इति तुदादेरग्रहणम् । विभुजति प्राणिमिति । ओदन भुङ्क्ते इति । अभ्यवहरतीत्यर्थः । कथं "बुभुजे पृथिवीमेव केवलाम्" । "दिवं मरुत्वानिव भोक्ष्यसे महीम्" इति च पालने प्रतिषेधात् । सत्यम् । भुजो भक्षणे इति वाच्येऽनवनमुपभोगवृत्तावपि यथा स्याद् भुजेः पालनाभ्यवहाराविवोपभोग आत्मसात्करणं चार्थः । एवं च "वृद्धो जनो दुःखशतानि भुङ्क्ते" इत्युपपन्नम् । आत्मसात्करणं ह्यत्रार्थः ।

णेरणाविति । "णिचश्च" ( ) इति कर्त्रभिप्राये सिद्धमात्मनेपदमकर्त्रभिप्रायार्थोऽयमारम्भः । कर्त्रभिप्रायेऽपि "विभाषोपपदेन प्रतीयमाने" ( ) इति विकल्पबाधनार्थं च । अत्रेदमाकरे स्थितं च स्वार्थे तानि वाक्यानि इति भाष्यम् । पञ्चेति हरदत्तः । तत्र णेरित्येकं वाक्यम् । तदेतद् व्याख्यानं णयन्तात्तङानौ स्तः इति । णेरित्युक्तेनेह आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती साध्वारोहतीति ।

यद्यप्यणौ कर्मत्वानुवादेन प्राधान्याश्रयणादेव भविष्यति, तथाप्युत्तरार्थं णेरित्यवश्य वक्तव्यं तदिहापि स्पष्टार्थं भवति । अणौ यत्कर्मेत्यादि द्वितीयं वाक्यम् ।

---

१. ससर्गविप्रयोगस्यापि विशेषास्मृति इति क० पु० ।

२. -संभवद्वत्सादि संबन्धी इति क० पु० ।

अत्र यत्तदोर्नित्यसंबन्धाद् यच्छब्देन[1] तच्छब्दः आक्षिप्यते, धर्मान्तरस्यापि निर्देशादुद्देश्यतयाऽपि श्रुतं कर्मत्वमेव विधीयते। तच्च ण्यन्तावस्थायामेव। कुतः? णिरिति सन्निधानात्। अणौ कर्मेत्यनुवादसामर्थ्याद्विनाऽणौ कर्मत्वसिद्धेस्तत्रैव तद्विधानस्यासंभवाच्च। ततश्चाणौ यत्कर्मेत्येतावत एवाणौ यत्कर्म णौ चेत् तत् कर्मत्यर्थो भवति।

अनेन च कर्मान्तरनिवृत्तिः क्रियते न त्वणौ कर्मणो णौ कर्मवद्भावः प्रतिपाद्यते। सकर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात्। एकस्य युगपदेकस्यां क्रियायां कर्मकर्तृत्वयोरुभयोरसंभवात्। तदेतद् व्याचष्टे—अणौ यत्कर्मेत्यंशेन। अत्र णौ चेत् तदेव कर्मेति शेष। तेनेह न सभवति[2]।

आरोहयमाणो हस्ती स्थलमारोहयन्ति मनुष्यान् इति।

अत्र मनुष्यानिति कर्मान्तरमप्यस्ति। णौ चेदिति तृतीय वाक्यम्। अत्राणौ यदित्यनुवर्तते। (अणौ[3] यत्प्रतिपाद्यं वस्तु तदेव चेण्णौ प्रतिपाद्यमित्यर्थः। किमस्य प्रयोजनम्? प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे मा भूत्। णिच्प्रकृत्युपात्तायामेकक्रियायां यथा स्यात्तेनेह न भवति। आरोहन्ति हस्तिनं हस्तिपकाः। तानारोहयति हस्तीति सकर्तेति चतुर्थं वाक्यम्। अत्राणौ यत्कर्म णौ चेत् इति सर्वमनुवर्तते।) अण्यन्तावस्थाया यत्कर्म तण्ण्यन्तावस्थाया[4] चेत् कर्तेति। तेनेह न आरोहन्ति हस्तिनं हस्तिपकास्तानारोहयति महामात्र इति।

अत्र यद् णौ कर्महस्ती न तदेव णौ कर्तृत्वेन विवक्षितम् किं तर्हि महामात्रः तेन एते तृतीयचतुर्थे वाक्ये मिश्रीकृत्य व्याचष्टे—स एव ण्यन्तस्य कर्ता चेदिति। तत्र ण्यन्तस्य चेदित्यंशेन णौ चेदिति तृतीयवाक्यार्थो दर्शितः। स कर्तेति च चतुर्थवाक्यार्थ इति प्राचा व्याख्यातम्। अनाध्याने इति प्रसज्यप्रतिषेधपक्षे पञ्चम वाक्यम् इति मत्वा व्याचष्टे—न त्वाध्याने। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। तेनेह न। स्मरति वनगुल्म कोकिलः। स्मरयत्येनं वनगुल्मः स्वयमेव।

अत्र च णौ चेद् ग्रहणं समानक्रियार्थमिति तृतीयवाक्यार्थो भाष्यकारेणैव नाश्रितः प्रयोजनाभावात्। तथा हि ण्यन्तादात्मनेपदं भवति। अणौ यत्कर्म णौ चेत् स कर्तेत्युक्ते प्रत्यासत्तेरेतद्गम्यते, येन णिचा ण्यन्तादात्मनेपद विधित्सित तेनैव णिचा अण्यन्ते प्रकृतिभूते धातौ यत्कर्म स एव चेत्कर्ता तस्मिन्नेव ण्यन्ते इति। ततश्च यथा आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्तीति भीतान् सेचयति मूत्रेण इत्यत्र धातुभेदे न भवति। एवं प्रयोज्यप्रयोजकभावभेदेऽपि न भविष्यति। अत एव

१. यच्छब्दयाक्षिप्यते इति क० पु०।
२. न स इति क० पु०।
३. अणौ यत्प्रतिपाद्यं वस्तु इत्यारभ्य—मनुवर्तते इत्यन्तो ( ) रेखाद्वयस्थो नास्ति क० पु०।
४. तावन्ताऽवस्थायामिति क० पु०।

तृतीयवाक्यार्थो भाष्यानादृतत्वेनाचार्यैरप्युपेक्षितः। स एव यन्तस्य कर्ता चेत् इत्येक-वाक्यस्यैव प्रतीतेः स्वारसिकत्वात्।

एवं चात्राध्याहारव्यवहितान्वयकल्पनाभ्यां[1] वाक्यार्थद्वयोपक्षेपवर्णनं प्राचोक्तमनादेयम्, अनर्थकानेकक्लिष्टकल्पनापत्तेः। न चात्र पक्षे णौ चेदग्रहणं व्यर्थम्, असति हि तस्मिन् णौ यत्कर्म स कर्तेत्युक्ते एकवाक्यतयैव संबन्धः स्यात्। ततश्च कर्मान्तरनिवृत्तिर्न कृता स्यात्। अतः कर्मान्तरनिवर्तकवाक्यभेदापादकं णौ चेद्ग्रहणं व्यर्थमवश्यं कर्तव्यम्। पश्यन्ति भवं भक्ता इति। एतदणौ भवस्य कर्मत्वप्रदर्शनार्थम्। दर्शयते भवो भक्तान् स्वयमेवे[2]त्येतत्तूदाहरणम्। दृशिरयं दर्शनविषयत्वापत्त्युपसर्जनविषयत्वापादने वर्तते, दर्शनविषयत्वमापद्यमानं भवं विषयत्वमापादयन्ति भक्ता इत्यर्थात्। दर्शनं चक्षुर्गोचरत्वम्। यदा तु भवस्य सौकर्यातिशयप्रतिपादनाय भक्तव्यापारो न विवक्ष्यते, तदा विषयत्वापत्तिमात्रे दृशिर्वर्तते इति भवस्य कर्तृत्वम्। तदुक्तम्—

> निवृत्तिप्रेषणं कर्म स्वक्रियावयवे स्थितम्।
> निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते॥ इति।

अनेकार्थत्वाद्धातूनां भिन्ना एव धातवो भिन्नार्थाः। सादृश्यात्तु तत्त्वाध्यवसाय[3] इति कैयट.। स एव कर्म कर्ता इत्युच्यते। कर्मवद्भावस्त्वस्य न भवति, कर्तृस्थभावकत्वात्। ततः कर्मव्यापारमात्रवृत्तेर्दृशेर्यदा भक्तव्यापारे णिजुत्पद्यते, तदा य एवार्थः पश्यन्ति भव भक्ता इति स एवार्थः दर्शयन्ति भवभक्ता इति।

ततः सौकर्यातिशयविवक्षायामविवक्षिते भक्तव्यापारे दृशिरपि भवव्यापारमात्रे विषयभावापत्तौ वर्तते। दर्शयते भवो भक्तान् इति। दर्शनानुकूलो भवतीत्यर्थः। सोऽयं निवृत्तप्रेषणपक्षः। अपरः प्रकारः पश्यन्ति भवं भक्ताः, तान्[4] सौकर्यातिशयात् भवः प्रयुङ्क्ते इति भवव्यापारे णिजुत्पद्यते दर्शयति भवो भक्तानिति। तत. प्रयोज्यप्रयोजकभावविवक्षायां दर्शयते भवो भक्तानिति सुष्ठु दर्शनविषयो भवतीत्यर्थः।

एष एव प्रयोजकस्यात्र व्यापारः सोऽयमध्योषितप्रेषणपक्ष इत्युच्यते। उभयोरपि पक्षयोरणौ कर्मणो भवस्य णौ कर्तृत्वात् भवत्यात्मनेपदम्। स्वयमिति वचनं कर्त्रन्तरनिरासार्थम्। यद्वा स्वयमित्यनेनात्मनः करणत्वं प्रतिपाद्यते, न कर्तृत्वम्।

---

१. भीतात्स्वेवर्पाति सूत्रेऽणेत्यत्रेति क० पु०।

२. कभाम्तमेवापादकर्मिरयेव क० पु०।

३. स्यमेवेति क० पु०।

४. सारूप्यात्तु तत्त्व। ध्यवसाय इति क० पु०।

५. तात्सौकर्येति क० पु०।

ननु—

"उद्देशप्रतिनिर्देशाल्लब्धं यत् संग्रहे पुनः ।
तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये" ॥

इति स्थितिः । तत्कथमत्रात्मनेपदम्, भक्तानिति कर्मान्तरस्य सत्त्वात् ।

अत्र हरदत्तः अस्मिन्नुदाहरणे यदा सोऽत्यतिशयप्रदर्शनाय कर्मव्यापारमात्रे तात्पर्यं तत्कर्म भक्तानिति न विवक्ष्यते, दर्शयते भवः स्वयमेवेत्येतावदेव प्रयुज्यते, तदेदमुदाहरणमेवमन्यत्राप्यूह्यम् ।

कैयटस्त्वाह—पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा स्वयमेवेति भाष्योदाहरणादणौ ये कर्तृकमणी तद्व्यतिरिक्तकर्मान्तरसद्भाव एवात्मनेपदं न भवति । यथा[1] आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानिति । इह त्वणौ कर्तॄणां भृत्यानां णौ कर्मत्वमिति भवत्येव ।

एवं चानाध्याने इति किम् ? स्मरति वनगुल्मं कोकिलः । स्मरयत्येनं वनगुल्मः कोकिलमिति कोकिलस्य कर्मत्वेऽपि प्रत्युदाहरणत्वमुपपन्नम् । एतेन "करेणुरारोहयते निषादिनम्" इति माघप्रयोगोऽपि व्याख्यातः ।

यच्चात्र[2] हरदत्तेन दूषणमुक्तम् । तेषां सूत्राक्षराण्येतावदधिकानि । भाष्यं चोदाहरणावर्जं सर्वमनुपपन्नम् । तदेतत् शब्दालङ्कारे समाहितमस्माभिः । विस्तरभयात्तु नेहोच्यते ।

कर्मवद्भावेनान्यथासिद्धिमाशङ्क्य परिहरति–इहेत्यादि । निवृत्तप्रेषणपक्षे चेयं कर्मवद्भावप्रातिशङ्का । अध्यारोपितप्रेषणपक्षे दर्शयतो भवस्य कर्मत्वाभावात्[3] कर्मणा समानधातौ तुल्यक्रियत्वाभावात् पचत्योदनं देवदत्तो राध्यत्योदनः[4] स्वयमेवेतिवत् वर्मवद्भावो न प्राप्नोति । आरब्धे चास्मिन् सूत्रेऽयमपि पक्षः सम्भवात् प्रदर्शितः । अनारब्धे तु निवृत्तप्रेषणप्रक्रियैवाश्रीयते ।

कर्तृस्था क्रियेति । दर्शनं ज्ञानं तच्च कर्तृषु भक्तेषु समवेतमित्यर्थः ।

क्रियाग्रहणं भावस्योपलक्षणम् । दर्शनस्यापरिस्पन्दसाधनसाध्यत्वेन भावत्वात् । तदुक्तं—काशिकायाम्—दृशिः कर्तृस्थभावक उदाहृत इति । तेनेत्यादि ॥ कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवदिति । तत्र व्यवस्थितत्वादिति भावः

ननु यथा विक्लित्त्युपसर्जनविक्लेदनवाची पचिः कर्मस्थभावक एवं दृशिरपि विषयत्वापादानवाचित्वात् कर्मस्थभावको युक्तः, न तु कर्तृस्थभावकः, सकर्मकाणां व्यापारद्वयाभिधायित्वनियमात् । सत्यम्, नैतावता कर्मस्थता भवति । गमिरुहिप्रभृतिषु व्यभिचारात् । यदुच्यते—

१. यद्वा इति क० पु० ।
२. यदत्रेति क० पु० ।
३. कर्तृत्वाभावादिति क० पु० ।
४. राधयत्योदन इति क० पु० ।

कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ।
भासासिभावः कर्तृस्थः कर्तृस्था चागमेः क्रिया ॥ इति ।

किं तर्हि कर्मकर्तृस्थताया व्यवस्थापकम् ? उक्तमत्र हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

विशेषदर्शने तु शब्दानुसारेण ताटस्थ्यं गम्यते ।

न चैतत्कारणद्वयं दृशेः कर्मस्थभावतां गमयति, नहि पश्यतीत्युक्ते घटपटस्तम्भादिषु दर्शनस्य रूपभेद उपलभ्यते, यथा मासघृततण्डुलादिषु । पाकेन च तण्डुलादिषु विक्लित्त्यादिरूपो विशेषो यथा स्यादिति पाके यथा कारकाणि[1] व्याप्रियन्ते नैवं[2] दर्शनेऽपि घटादिविषयतामापद्यतामित्येवमर्थं कारकव्यापारः, किं तु जानीयामिति ।

किं च पश्यतीत्युक्ते चक्षुर्जन्यज्ञानानुकूलयत्नवानिति प्रतीयते । ज्ञानस्य च सम्बन्धिपदार्थत्वाद्विषयाकाङ्क्षाया पदान्तरेण तद्विषयता घटादेः प्रतीयते, न धातुना । एवं च कृत्वा कर्तृव्यापारमात्रवचनो दृशिरिति गीयते । पचतीत्युक्ते तु विक्लित्त्युपसर्जनं विक्लेदनमभिधीयते, सा च विक्लित्तिर्धात्वभिहितोपसर्जनतया कर्मनिष्ठेति[3] कर्मस्थं फलम् । तस्मात् कर्मभेदेन रूपभेदादुद्देश्यस्य च कर्मगतत्वाद् धातूपात्तफलाश्रयत्वाच्च पचिः कर्मस्थभावको विपर्ययात्तु दृशिः कर्तृस्थभावक इति सिद्धम् ।

आत्मनेपदमप्राप्तं विधीयते इति । अकर्त्रभिप्राये इति शेषः । कर्त्रभिप्राये तु "णिचश्च" ( १।३।७४ ) इत्येव सिद्धेः ।

नन्दाहरणेष्वनेन प्राप्तमप्यात्मनेपदं बाधित्वा परत्वात् "अणावकर्मकात्[4] चित्तवत्कर्तृकात्" ( १।३।८८ ) इति परस्मैपदेन भाव्यम् । अस्याचित्तवत्कर्तृकेऽवकाश इति चेत्, सत्यम्, पूर्वविप्रतिषेधोऽत्र व्याख्येयः ।

यत्त्वत्यन्ताविद्यमानकर्मोऽकर्मकोऽत्र गृह्यते, न त्वविवक्षितकर्माऽकर्मके ग्रहणसामर्थ्येन धातोरन्यपदार्थत्वेनाश्रयणात् । अन्यथा पचादीनामपि कर्मकर्तर्यकर्मकत्वात्[5] तद्व्यावृत्त्यर्थं तदनर्थकं स्यादिति । तदसत्, अकर्मकादित्यस्मिन्नसति—अणाविस्यस्यानन्वयप्रसङ्गात् । अणौ चित्तवत्कर्तृकादित्येवान्वियात् । अणावित्यपि त्याज्यं चेद्, तर्हि रूपयते हरिरित्यादौ हेतुमण्णावपि कर्माविवक्षया—अकर्मकात् स्यादित्यलं पल्लवितेन ।

१. यथा कारकाणि इति क० पु० ।
२. नैवमिति क० पु० ।
३. निष्ठेति क० पु० ।
४. अणावकर्मकाच्चित्तवदिति क० पु० ।
५. कर्मकर्त्रर्यकर्मकत्वादिति क० पु० ।

## ५९५. गृधिवञ्च्योः प्रलम्भने [१।३।६९]

ण्यन्ताभ्यामाभ्यां तङानौ स्तः प्रतारणेऽर्थे। बटुं वञ्चयते। गर्धयते। प्रलम्भने किम्? श्वानं गर्धयति। अहिं वञ्चयति।

## ५९६. मिथ्योपपदात् कृञोऽभ्यासे [१।३।७१]

ण्यन्तात् कृञो मिथ्योपपदात् तङानौ स्तोऽभ्यासे। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। मिथ्या किम्? साधु पदं कारयति। अभ्यासे किम्? सकृत् पदं मिथ्या कारयति।

---

अणौ यत्कर्म णौ चेत् स कर्तेति किमिति। यद्यपि त्रीण्येवैतानि वाक्यानि द्वे वेति प्राग् व्यवस्थितम्, तथापि स कर्तेत्यंशे[1] आक्षेपः। तत्र चाणौ यत्कर्म णौ चेदित्येतदनुवर्तते इत्याशयेनैवमुक्तम्[2]। तत्र स इत्यनेन कर्मणः परामर्शात्[3] कर्मणैव कर्त्रा भाव्यम्, इति किमर्थो नियम इत्याक्षेपः। करणादेः कर्तृत्वविवक्षायां मा भूदित्युत्तरयति। दर्शयति भवं भक्तान् भक्तिरिति। भवो णौ कर्मासीन्नेदानीं स कर्ता अपि तु भक्तिः। न चासौ णौ कर्म, किं तु करणम्, भक्त्या हि भवं पश्यन्ति।

आध्यानं व्याचष्टे—उत्कण्ठेति। उत्कण्ठापूर्वं स्मरणमित्यर्थः। स्मरयति। स्मृ आध्याने घटादिः। मित्वादुपधाह्रस्वः। अत्राणौ कर्तुर्णौ[4] णौ कर्मत्वेन कर्मान्तरत्वं न भवति। अणौ ये कर्तृकर्मणी तद्व्यतिरिक्तस्यैव[5] कर्मणो यत्संग्रहणेन[6] न्विर्तितत्वादुदाहरणम् इत्यवधेयम्।

गृधिवञ्च्योः। गृधु अभिकाङ्क्षायाम्। वञ्चु गतौ। प्रलम्भनं मिथ्याफलाख्यानेन विसंवादनमिति व्याचष्टे—प्रतारणेऽर्थे इति। श्वानं गर्धयति इति। लोभयतीत्यर्थः। अहिं वञ्चयतीति। परिहरतीत्यर्थः।

मिथ्योपपदेनेति। उपोच्चारितं पदमुपपदम्, न पारिभाषिकं कृञं प्रति तदसम्भवात्। मिथ्या इत्युपपदं यस्येति बहुव्रीहिः। अभ्यासः पुनरावृत्तिः (पदं[8] मिथ्या कारयते इति,)।

---

१. स इति नास्ति क० पु०।
२. नैतु मुक्तम् इति क० पु०।
३. इतिपरामर्शादिति क० पु०।
४. तत्कुरुस्येति क० पु०।
५. मतृ काणामिति क० पु०।
६. तद्व्यतिरिक्तस्यै इति क० पु०।
७. यत्संग्रहणे इति क० पु०।
८. पदमित्यारभ्य द्वित्वभाव इत्यन्तो नास्ति क० पु०।

५९७. अपाद्वदः [१।३।७३]

अपपूर्वाद् वदस्तङानौ स्तः कर्तृगे क्रियाफले । अपवदते ।

५९८. समुदाङ्भ्यो यमोऽग्रन्थे [१।३।७५]

एभ्यो यमस्तङानौ स्तः, न तु ग्रन्थकर्मकान् कर्तृगे फले । संयच्छते । उद्यच्छते । आयच्छते । आयंस्त रज्जुम् । ग्रन्थे तु वेदमुद्यच्छति ।

५९९. अनुपसर्गाद् ज्ञः [१।३।७६]

अनुपूर्वाज्जानातेः कर्तृगे क्रियाफले तङानौ स्तः । गां जानीते । अनुपसर्गात् किम् ? प्रजानाति । कर्तृगे फले किम् ? परस्य गां जानीति ।

---

अकर्त्रभिप्रायार्थं वचनम् । आत्मनेपदेनैवाभ्यासस्य द्योतितत्वाद् 'नित्यवीप्सयोः" (८।१।४) इति द्वित्वाभावः ) । मिथ्याशब्दार्थमाह–सापचार इति । अपचारो दोषस्तेन सहितं तदेव विवृणोति—स्वरादिदुष्टमिति । यादिपदेनैव वैरूप्यं गृह्यते । असकृदित्यभ्यासं दर्शयति । उच्चारयतीत्यनेन ण्यन्तस्य करोतेरुच्चारणे वृत्तिः अनेकार्थत्वात् प्रकृतिभूतस्तु करोतिरुच्चारणे वर्तते अकर्मकश्चेत्युक्तम् । प्रत्युदाहरणेषु तु प्रत्येकमेवां व्यतिरेको ज्ञेयः ।

अपाद्वदः । अपवदते इति । स्वार्थसिद्धये धर्ममपि बाधते इत्यर्थः ।

अपवदतीति परस्य दोषं कथयतीत्यर्थः ।

समुदाङ्भ्यः । आङ्पूर्वकाद्[१] यमेरकर्मकात् "आङो यमहनः" ( १।३।२८ ) इत्येव सिद्धे सकर्मकार्थोऽयमारम्भः । संयच्छते इत्यादौ व्रीहीन् भारं वस्त्रमित्यादि यथासंभवं कर्म ज्ञेयं भवति। ददाति, उत्क्षिपति, आकर्षतीत्यर्थः । आयंस्त रज्जुमिति। लुङि सिच्। अगन्धनार्थत्वात्सिचः कित्वाभावान्नानुनासिकलोपः । अनुस्वारः । वेदमुद्यच्छतीति । अत्राधिगमफलके उद्यमे यमिः वर्तते । वेदमधिगन्तुमुद्यमं करोतीत्यर्थः ।

अनुपसर्गादिति । नास्त्युपसर्गो यस्येत्यनुपसर्गः । नञ्समासे तु वैयधिकरण्यं स्यादित्यनेनाश्रयणीयं स्यात् । प्रसज्ये त्वसमर्थसमासः, पर्युदासे तु निरुपपदान्न स्यात् ।

अकर्मकाच्चेत्येव सिद्धे सकर्मकत्वार्थं वचनमिदमिति दर्शयति–संजानीते इति । गौरत्र स्वीया ज्ञेया । प्रजानातीति । अस्योपसर्गत्वात् कर्त्रभिप्रायेऽपि न भवति । कथं तर्हि 'इत्थं नृपः पूर्वमवालुलोचे ततोऽनुयज्ञे गमनं सुतस्य" इति नृपेणेति विपरिणामेन कर्मणि तङिति जयमंगला ।

---

१. आङ्पूर्वकात्यमेरिति क० पु० ।

## ६००. विभाषोपपदेन प्रतीयमाने [१।३।७७]

कर्तृगे फले यदात्मनेपदं विहितं तदुपपदेन द्योत्ये कर्तृगे फले वा स्यात् । स्वयं यज्ञ यजति । स्वयं यज्ञं यजते । एवमन्यत्र ।

इति पदव्यवस्थाप्रक्रिया

---

विभाषा । कर्तृगे फले यदात्मनेपदं विहितमिति "स्वरितञितः" ( १।३।७२ ) इत्यादिसूत्रैरित्यर्थः । वा स्यादिति । अप्राप्तविभाषेयम् । उपपदेन हि द्योतिते तस्मिन् "उक्तार्थानामप्रयोगः" इत्यप्राप्तत्वात् । अत्र च "स्वरितञितः" ( १।३।७२ ) इति पञ्च सूत्राण्यनुवर्तन्ते इति हरदत्तः । तेन स्वरितेत्त्वादिहीनेषु दृश्यादिषु नैतत् प्रवर्तते । स्वरूपं पश्यति स्वसुखमनुभवतीति । स्वं यज्ञं यजतीति यज्ञं करोतीत्यर्थः । धात्वर्थमात्रस्य विवक्षितत्वात् । यद्वा इज्यते इति देवस्तं पूजयतीत्यर्थः । दानं ददातीतिवत् । एवमित्यादि । स्वरितेत उदाहृताः । अन्यत्रापि पञ्चसूत्रीविषये इत्यर्थः । यथा स्वं कटं करोति कुरुते वा । स्वं पुत्रमपवदति अपवदते वा । स्वं यज्ञं कारयति कारयते वा । स्वं धान्यं संयच्छति संयच्छते वा । एवमुदाहृत्यामपि याजनम् । स्वां गां जानाति जानीते वेति ।

पृथ्वीमण्डनमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् सैषा व्यवस्था पदे ॥

पदव्यवस्था । ५०० ।

# अथ भावकर्मप्रक्रिया

भावकर्मविवक्षायाम् "लः कर्मणि च" ( ३।४।६९ ) इति लडादयः। तस्य तिबादयः।

६०१. भावकर्मणोः [१।३।१३]

भावकर्मणोर्विहितस्य लस्य स्थाने आत्मनेपदं स्यात् सर्वत्र।

---

"लः कर्मणि च" (३।४।६६) इत्यनेन भावकर्मकर्तृषु त्रिषु लकारा इत्युक्तम्। तेषु सकर्मकाकर्मकसाधारणत्वात् कर्तर्यादौ प्रदर्शितास्तत्रैव तदादेशाः परस्मैपदात्मनेपदरूपा निरूपिताः। इदानीं प्रागुद्दिष्टयोः परिशिष्टयोर्भावकर्मणोस्तान् वक्तुमुपक्रमते—भावकर्मेत्यादिना।

वक्तुं प्रतिपादयितुमिच्छा विवक्षा तस्यां भावे वा कर्मणि वा प्रतिपिपादयिषिते सतीत्यर्थः। लस्य तिबादयः प्रसक्ता इति शेषः। तिबादिसूत्रेणाविशेषाद् भावकर्मणोरपि तिबादयः परस्मैपदरूपा अपि प्रसक्तास्तत्रात्मनेपदं वक्ष्यते इत्यर्थः। न पुनस्तिबादयो भवन्ति इति व्याख्येयं परस्मैपदांशे बाधात्। तङ्[1]परत्वे च लक्षणापत्तेः। तिबादय इत्यादिशब्दः प्रकारे तेन शतृशानजादयः कृतोऽपि संगृह्यन्ते। तथा चात्मनेपदमिति तेऽपि नियम्यन्ते।

भावकर्मणोरिति। भाव्यते इति भावः। ण्यन्ताद्भवतेः कर्मणि घञ्। साध्यावस्थापन्नो धात्वर्थ उच्यते। घञ्विधौ तु भवनं भाव इति शुद्धाद्भवतेर्भावे घञ्भावः। सत्ता धात्वर्थस्य सिद्धतावस्थोच्यते इति भेदः। कर्म पारिभाषिकं कृत्रिमत्वात्। 'पुनर्भावग्रहणात् भावकर्मणोरिति विहितविशेषणम्,लस्येत्यस्य तु तिबादिवाक्यैकवाक्यतया।

विशिष्ट[2]विधिश्चायमित्यभिप्रेत्याह—भावकर्मणोरिति विहितस्य लस्येत्यादि। भावकर्मणोर्वाच्ययोरात्मनेपदमिति न व्याख्यातम्। ' लः कर्मणि च" इत्यादि। तयोर्लकारार्थत्वोपदेशात्।

अत्रैवकारानिर्देशाद्विधित्वमाचार्योऽभिप्रैति। भाष्यकारस्तु भिन्नवाक्यता, नियमश्चेत्याह। तन्मते त्वेवं योज्यम्—लस्य स्थाने ये प्राप्ताः सामान्येन[4] तिबादयस्तेषां मध्ये भावकर्मविषयस्यात्मनेपदमेव स्यान्न परस्मैपदमिति। एवकारस्तु गम्य-

---

१. तङ्घा एवेति क० पु०।

२. पुनर्भावग्रहणात् इति नास्ति क० पु०।

३. विधिश्चायमित्यभिप्रेत्याह-भावकर्मणोरिति नास्ति क० पु०।

४. समोपेनेति क० पु०।

६०२. सार्वधातुके यक् [३।१।६७]

धातोर्यक् प्रत्ययः स्याद् भावकर्मवाचिनि सार्वधातुके परे। भावो धात्वर्थः। तस्यैकत्वात् तङाद्येकवचनं सर्वत्र। कर्तुस्तिङाऽनभिधानात् कर्तरि तृतीया। मया भूयते। भूयेत। भूयताम्। अभूयत।

अकर्मकोऽप्युपसर्ग-वशात् क्वचित् सकर्मकः। अतः कर्मणि लडादयः। तिङोक्तत्वात् कर्मणि न द्वितीया। अनुभूयते आनन्दश्चैत्रेण त्वया मया च। अनुभूयेते। त्वमनुभूयसे। अहमनुभूये इत्यादि।

---

मानार्थत्वान्न[1]प्रयुक्तः, नियमद्वयसाधारण्यप्रतिपत्तये च। प्रयुक्ते हि तस्मिन्नेकतर-नियम एव गम्येत। तत्रात्मनेपदं भावकर्मणोरेवेति प्रत्यय[2]नियमः। अन्यत्रापि तु कर्मव्यतिहार इत्यादिविधिबलाद् भविष्यति। अर्थनियमो वा भावकर्मणोरात्मने-पदमेवेति।

न चैवं को भवता लाभो लब्ध इति कर्मणि घञ् न स्यादिति प्राचोक्तं[3] दूषण-मनादरणीयम्, तुल्यजातीयस्य परस्मैपदस्यैव नियमेन व्यावर्तनात्। एवंञेति। अनु-दात्तेत्त्वादिनिमित्ताभावेऽपीत्यर्थः। कर्मकर्तरि तु परिहारं वक्ष्यति।

सार्वधातुके इति। ककारो मृज्यते-भुज्यते इत्यादौ गुणवृद्धिप्रतिषेधार्थः। यकः शबादिवद् विकरणत्वेन भावकर्मणो नार्थः संभवतीत्यन्यथा व्याचष्टे—भावकर्मवाचिनि सार्वधातुके इति। यद्यपि भावकर्मणि लकारार्थौ "लः कर्मणि" (३।४।६९) इत्याद्यु-पदेशात्, तथापि तदादेशः सार्वधातुकमपि स्थान्यर्थेनार्थवत्। [4]स्थान्यर्थाभिधानसमर्थ-स्यैवादेशत्वादित्याशयेनैव वक्तुम्।

अथ च यदा भावे द्वौ कर्तारौ बहवो[5] वा आस्यते भवद्भ्याम् आस्यते भवद्भिरिति, तदा हि वचनबहुवचने कस्मान्न भवतः? न ह्येते साधनगते द्वित्वबहुत्वे न लकारवाच्ये भावे स्तः, तस्य सर्वथा निर्विशेषत्वात्। हन्तैव पाकौ पाकाः[6] इत्यत्रापि न स्यात्, घञोऽपि भावे विधानादित्याशङ्क्याह—भावो धात्वर्थ इति। साध्यावस्थो लकारवाच्य इति शेषः।

---

१. युक्त इत्येव क० पु०
२. प्रत्यय इति नास्ति क० पु०।
३. प्राक्तमनादरणीयमिति क० पु०
४. स्थानार्था इति क० पु०।
५. बहुष्वे इति क० पु०।
   ग्याका इति क० पु०।

अयमाशयः "लः कर्मणि" ( ३।४।६६ ) इति सूत्रे भाव्यते इति भावः ण्यन्ताद्-भवतेः कर्मणि घञ्, तेन साध्यावस्थापन्नो धात्वर्थ उच्यते। स एव भावकर्मणो-रित्यत्रापि। स चासत्त्वरूपत्वान्न द्वित्वाश्रयत्वं प्रतिपद्यते, संख्याया द्रव्यधर्मत्वात्। द्रव्यं च सिद्धस्वभाव[1] उच्यते, तेन लकारवाच्ये भावे न द्विवचनबहुवचने। घञ् सूत्रे तु भवनं भावः इति शुद्धाद्भवतेर्भावे घञ्। भावः सत्ता धात्वर्थस्य सिद्धावस्थोच्यते। तदवस्थश्च धात्वर्थो द्रव्यरूपत्वात् द्वित्वादिभिर्युज्यते पाकौ पाका इति। उक्तं च—

"क्रियायाः साध्यतावस्था[2] सिद्धावस्था च कीर्तिता।
सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम्॥ इति।

न्यायविदोऽप्याहुः 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति। द्रव्यधर्मान् संख्या-कर्मादीन् गृह्णातीत्यर्थः। तदेवमाख्याताभिहिते भावे न स्वरूपकृतो भेदोऽस्ति, नापि साधनकृतः संभवति। तदुक्तम्—

कर्तृभेदेऽपि नावश्यं धात्वर्थो भिद्यते यतः।
एकामेव क्रियाव्यक्तिं बहुपूत्यादत्स्वपि॥
दृष्टभेते पचन्तीति कर्मभेदोऽपि तादृशः।
यथैकस्यां क्रियाव्यक्तौ पच्यन्ते तण्डुला इति॥
न कालभेदे शब्दैक्यमाख्यातेष्वत आस्यतः।
पाकौ पाका इति त्वत्र क्रियाख्याते प्रतीयते॥
[3]निवृत्तभेदा सर्वैव क्रियाख्याते प्रतीयते।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना॥ इति।

तदेतदाह—तस्यैकत्वात् इति। तस्याख्यातवाच्यस्य भावस्यैकत्वादभिन्नरूपत्वेन प्रतीयमानत्वात्। न पुनरेकत्वसंख्यान्वयत्वादिति ग्राह्यम्, तस्यासत्त्वरूपत्वेन सत्त्व-धर्मसंख्यानाश्रयत्वस्य प्रागुक्तत्वात्।

यद्येवं संख्यायां विधीयमानास्तङो नैवात्र स्युरतआह—एकवचनमिति। "एक-वचनमुत्सर्गतः करिष्यते" इति वचनात् संख्यानपेक्षमेकवचनमात्रं भवतीत्यर्थः।

तत् किं मध्यमोत्तमयोरप्येकवचनेन भाव्यम्, नेत्याह—तङादीति। तङः पुरुष-त्रयात्मकस्यादिः प्रथमपुरुषस्तस्य यदेकवचनं तच्छब्दः स स्यादित्यर्थः।

क्वचित्तु तङादावचनमिति पाठः। तत्र तङामाद्यं यद् वचनं तच्छब्द इति स एवार्थः।

त्वया भूयते, मया भूयते इत्यादौ युष्मदस्मदोस्तिङा सामानाधिकरण्याभावान्न मध्यमोत्तमौ, किं तु "शेषे प्रथमः" ( १।४।१०८ ) एव भवति। तस्याप्येकवचनं न वचनान्तरमित्यर्थः।

१. स्वभाव उच्यते इत्यारभ्य भाव इत्यन्तो (     ) रेखाङ्कितो नास्ति क० पु०।

२. सिद्धतोवस्थेति क० पु०।

३. तस्मादित्यकः क० पु०।

## ६०३. चिण् भावकर्मणोः [३।१।६६ ]

धातोश्च्लेश्चिण् स्याद् भावकर्मवाचिनि तशब्दे परे। अभावि। अन्वभावि।

---

सर्वत्रेति[1]। युष्मदादियोगे 'सर्वकारकेषु चेत्यर्थः।

कर्तुरित्यादि। भावकर्मणोर्लकारे तयोरेव लिङाभिहितत्वं न कर्तुरित्यर्थः।

मया भूयते इति। भू सत्तायाम्। अकर्मकत्वाद् भावे लः। "सार्वधातुके यक्"[2] (३।१।६७) तस्य कित्वान्न गुणः। कर्त्रर्थत्वाभावान्न शप्। अस्मदोऽसामानाधिकरण्यान्नोत्तमः। लुङादिषु च्ल्यादयो बाधका इति चतुर्ष्वेव यगुदाहृतः। भवतेरेव कर्तरि प्रत्यये प्रागुदाहृत इति भावेऽपि स एवोदाहृतः।

एवं च प्रक्रमाभेदाय कर्मण्यप्यमुमुदाहरिष्यन्तस्तस्य सकर्मकत्वं व्युत्पादयितुमाह—अकर्मकोऽपीत्यादि। यः कदाचिदकर्मकः क्रियावाचित्वेऽकर्मकत्वेन दृष्टः स एव यदाऽनेकार्थत्वात् कर्मसापेक्षां क्रियामुपस्थापयति, तदा तदर्थपरत्वे सकर्मको भवति। तत्परत्वं च तस्योपसर्गेण द्योत्यते इत्युपसर्गवशादित्युक्तम्। न तु सोपसर्गा एव सकर्मकक्रियावाचीति ग्राह्यम्। तथास्यते अनुभूयते आनन्द इत्यत्र भूमात्रस्याकर्मकत्वात् कर्मणि लो न स्यात्, सोपसर्गाच्चाधातुत्वान्न स्यात्। तस्माद्धातुरेव सकर्मिकाकर्मिके क्रिये अभिधत्ते। उपसर्गस्तु द्योतक इति स्थितम्।

*तिङोकत्वाविति। कर्मत्वशक्तेरुक्तत्वात् न द्वितीयेति। तत्रानभिहिते इत्यधिकाराच्च।*

अनुभूयते इति। उपलम्भे वर्तमानोऽयं सकर्मक इत्यानन्दे कर्मणि लः। तस्य च शेषत्वात् प्रथमपुरुषैकवचनम्[3]। त्वया मया वेति। अत्रापि युष्मदस्मदोरसामानाधिकरण्यान्न मध्यमोत्तमाविति सूचितम्।

कर्मणि च लकारोऽनेकेषामपि कर्मणामेकदाऽपि योगसंभवाद् द्विवचनबहुवचने भवत इति भावाद् वैलक्षण्यमुदाहरति—अनुभूयेते इत्यादि।

यदा पुनर्युष्मदस्मदोरेव कर्मत्वम् तदा तिङ्वाच्यकारकवाचित्वलक्षणसामानाधिकरण्यसत्त्वान्मध्यमोत्तमौ भवत एवेत्युदाहरति—त्वमनुभूयसे इत्यादि। युवामनुभूयेथे। यूयमनुभूयध्वे इति द्विवचनाद्यप्युदाहार्यमेवं लिङादावपीत्याह।

चिण् भावकर्मणोः। चिणग्रहणं स्पष्टार्थम् "चिण् ते पदः" (३।१।६०) इत्यत एवानुवृत्तेः बाधक[4] बाधनार्थमित्यन्ये। भावकर्मणोरित्येतत् ते इत्यस्य विशेषणमित्याह

---

१. सर्वकारकेषु इति क० पु०।

२. सार्द्धधातुके इति क० पु०।

३. प्रथमैकवचनमिति क० पु०।

४. *बाधकबाधनार्थमिति नास्ति क० पु०।*

६०४. स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-
ग्रहदृशां वा चिण्वदिट् च [६।४।६२]

उपदेशेऽजन्तेभ्यो हनादेश्च परेषां भावकर्मणोर्विहितानां स्यादीनामिड् वा स्यात्। स च इट् चिण्वच्च। चिण्वद्भावाद् वृद्धिः। अन्वभाविषाताम्। अन्वभविषाताम्। बुभूवे। बभूवे। भाविता। भविता। भाविषीष्ट। भविषीष्ट। भाविष्यते। भविष्यते। अभाविष्यत। अभविष्यत। "अकृत्सार्वधातुकयोर्दीर्घः" (७।४।२५)। स्तूयते विष्णुः। अस्तावि। अस्ताविषाताम्। अस्तोषातां हरिहरौ भक्तेन। तुष्टुवे। स्ताविता। स्तोता। स्ताविषीष्ट। स्तोषीष्ट। स्ताविष्यते। स्तोष्यते। अस्ताविष्यत। अस्तोष्यत। "गुणोऽर्तीति" (७।४।२९) इति गुणः। स्मर्यते। अर्यते। सुटो बहिरङ्गत्वान्न गुणः। रिङादेशः। संस्क्रियते। नलोपः स्रस्यते। इदितस्तु नन्यते। संप्रसारणम्। इज्यते। "अयङ्यिक्ङिति" (७।४।२२) शय्यते।

---

भावेत्यादिना। अभावीति। भावे लः "चिणो लुक्" (६।४।१०४) इति तशब्दस्य लुक्। अन्वभावीति कर्मणि लः।

स्यसिच्सीयुड् इति। उपदेशे इत्येत द्यद्यपि समासनिर्दिष्टैरजन्तादिभिः संबध्यते, तथापि संभवव्यभिचाराभ्यामजन्तानामेव विशेषणम्. न हनादीनामव्यभिचारादित्यभिप्रेत्याह—उपदेशेऽजन्तेभ्यः इति। हनादेश्चेति। हन हिंसागत्योः। ग्रह उपादाने। दृशिर् प्रेक्षणे। भावकर्मणोर्विहितानामिति। विषयसप्तमीयम्। भावकर्मणोरर्थयोर्गम्यमानयोः सतोरेभ्यो विहितानां स्यादीनामित्यर्थः।

यदि त्वभिधेयसप्तमी स्यात्, ततः सीयुडेको विशेषितः स्यात्, न स्यसिच्तासयः, भावकर्मणोर्लादेशवाच्यत्वात् सीयुटश्च तद्भक्तत्वात्। अथोच्येत भावकर्मवाचिनि प्रत्यये परे ये स्यादय इति तर्हि स्यादयो विशेष्येरन्, न सीयुट्प्रत्ययागमस्य तस्य तेन पौर्वापर्यासम्भवात्। अतः सर्वानुग्रहाय विषयसप्तम्येव युक्ता।

स्यादिनामिड् वा स्यादिति। ननु सूत्रे स्यादयः सप्तम्या[1]निर्दिश्यन्तेऽजादयश्च षष्ठ्या चिण्वद्भावश्च प्रधानं शिष्टः। इट्[2] तु चकारेण तत्सन्नियोगशिष्टः। चिण्वदिति च सप्तम्यन्ताद् वतिः। चिणीव चिण्वत् स्यसिच्सीयुट्तासिष्विति प्रतियोगिनि सप्तमी-

---

१. सप्तम्या विश्यते इति क० पु०।
२. इट हेतु इति क० पु०।

निर्देशात्। ततश्च स्यादिषु परेषु अजन्तादीनामङ्गानां चिण्णेव कार्यं भवति। यदा च चिण्वद्भावस्तदा इडागमो भवति श्रुतत्वात् स्यादीनामेवेति यथाकरमित्याख्यानुमुचितम्, न तु यथोपवर्णितमशब्दार्थत्वात्।

न च विभक्तिविपरिणामोऽपि युक्तः, यथाश्रुतयोः षष्ठीसप्तम्योरचरितार्थत्वात्। अथाजन्तादीनां स्यादिषु चिण्वदिति वाक्ये चरितार्थयोस्तयोरिड्विधिवाक्ये[1] विपरिणामो भविष्यतीति चेत्, न, स[2] इट् चिण्वच्चेति इट एव चिण्वद्भावविधानस्य दर्शितत्वेन पूर्ववाक्यार्थस्य सर्वथाऽसंस्पृष्टत्वात्।

किं च चेनान्वाचित[3] इट् प्रधानतया विहितः प्रधानशिष्टश्च चिण्वद्भावोऽन्वाचितः[4] चशब्दस्य च व्यवहितान्वयः स्थानपाठश्च किमनुरोधात् कल्प्यते इति चेत्, अत्रायमाशयः—इड्विधौ तावदवश्यं विभक्तिविपरिणामस्त्वदाऽप्याश्रीयते, अन्यथा सन्निहिततरत्वाद् योग्यविभक्त्यन्तत्वाच्चाङ्गस्यैवेट् प्रसज्यते अडादिवत्। अतः स्यादीनामिड् भवतीति तावद् व्याख्येयम्।

तत्कथं सप्तमे योगविभागः क्रियते आर्धधातुकस्येट्? परिभाषेयं यो यावान् कश्चिदिड् नाम स सर्वत्रार्धधातुकस्यैव भवतीति ज्ञेयम्। तेनायमपं इ्ड् आर्धधातुकस्यैव भवतीति स्थितम्। अज्झनग्रहदृशामित्यपि षष्ठी पञ्चम्या विपरिणम्यते। अन्यथा[5] यद्यत्रापि वाक्ये स्थानषष्ठ्येवा ततस्तेषामप्यागमित्वं वचनात् प्रतीयेत परिभाषाविशेषविरोधोद्बोधश्च। अथात एव संबन्धसामान्ये षष्ठी व्याख्यायते[6]।ततः पूर्वत्र स्थानषष्ठी, इह तु संबन्धसामान्ये इति वैरूप्यं प्रसज्येत। तद्वरमावश्यके विपरिणामे पञ्चम्येव कल्पिता। तत्रातिदेशापेक्षयोपदेशस्याभ्यर्हितत्वादिडेव तावद् विधीयते। चरमं चिण्वदतिदेशः। सोऽपि सन्निहितत्वाद् विधेयतया प्रधानेन चेटैव संबध्यते, न तु स्यादिभिर्व्यवहितत्वात्; तदेतदुक्तम्—स इट् चिण्वच्च। एवं व्याख्यातः सम्पन्ने वाक्यार्थे परिनिष्ठिते च शब्दस्थानपाठो व्यवहितान्वयश्च न दोषाय।

किं त्वत्र व्याख्याने षष्ठीसप्तम्योरचारितार्थ्यं परं परिशिष्यते। तदपि न, विभक्तिव्यत्ययस्यापि बहुलं दर्शनात्। विचित्रत्वात् च सूत्रस्य कृतेः। स्यादेतत्। इट् चिण्वच्चेति व्याख्यायमाने चिणा तुल्यं चिण्वदिति तृतीयान्ताद् वतिरुक्तो भवति। तत्र यथा पूर्वस्य कार्यं वृद्ध्यादौ चिण्वद् भवति। एवमिटः परस्यापि कार्यं स्यात् ततश्च

१. वाच्ये इति क० पु०।

२. स इति नास्ति क० पु०।

३. ति: च विण त्वा विन इति क० पु०।

४. चिण्वद्भावो त्वा चित त्वशब्दम्येति क० पु०।

५. अन्यथा इति क० पु०।

६. व्याख्येया इति क०।

अभाविपातां चिणो लुगपि प्रसज्येत । यदा ह्ययं समम्यन्ताद् वतिर्विज्ञायते, तदाऽन्यस्यासंभवाच्चिणः परस्य तप्रत्ययस्येति सामर्थ्यलब्धं व्याख्यायते। तस्मिंस्तु पक्षे कुतोऽसंभव इति सिजादेरपि लुका भवितव्यम्। नैष दोषः, चिणो लुकि चिण्वदिटोऽसिद्धत्वात्। यद्वा तत्र ङितीत्यनुवर्तते तेन ङितः प्रत्ययस्य लुग्विधीयमानस्तरवादेरिव सिजादेरपि न भविष्यति।

ननु वृद्ध्यादिकार्यं प्रत्यये विधीयते। न चेटश्चिण्वद्भावेऽपि प्रत्ययत्वमस्तीति चेत्, न, चि[1] दृष्टस्य सर्वस्यैवातिदेशे प्रत्ययत्वस्याप्यतिदेशात्। किं हि वचनान्न भवति। कार्यातिदेशे तु न किञ्चिद् दुष्यतीत्यलं[2]मतिक्षोदेन।

चिण्वद्भावाच्च वृद्धिरिति। न चिणमा[3]हत्य विहितं युग्दीर्घाद्येव विधीयते, किं तु चिणि दृष्टमात्रं संकोचकाभावादिति भावः।

ननु यदि चिणि दृष्टमात्रस्यातिदेशः हनि[4]णिङादेशा अपि स्युः। घानिष्यते। आयिष्यते। अध्यापयिष्यते इति। नैष दोषः, अङ्गाधिकारविहितमेव ह्यतिदिश्ते सन्निहितत्वात्[5]। न चैते आङ्गाः।

अन्वभाविपातामिति। अन्वभू स् आतामितिस्थिते परत्वात् प्राप्तं वलादिलक्षणमिटं बाधित्वा चिण्वदिडेव तावद् भवति। कृताकृतप्रसङ्गित्वेन नित्यत्वात्। अयं हि कृतेऽपि तस्मिन् प्राप्नोत्यकृतेऽपि वलादित्वस्यानपेक्षणात्। परस्त्वनित्यः कृते ह्यस्मिन् वलादित्वविघातात्।

न च शब्दान्तरप्राप्तेरस्यानित्यत्वम्। आकृतिपक्षे शब्दान्तरत्वाभावात्। तदुक्तम्—नित्यश्चायं वलनिमित्तो विघातीति।

एवं च नित्यत्वात् सेट्केभ्योऽप्यनेनेवेटा भवितव्यम्। एतेनोपदेशग्रहणं भाविष्यते इत्यत्र गुणावादेशयोः कृतयोर्न स्यादिति प्राचोक्तमपास्तम्। चिण्वदिटो विषये वलनिमित्तस्याप्रसङ्गादप्रवृत्तेरवा[6]देशस्यासंभवात्। गुणमात्रे तु प्रवृत्तेऽप्यजन्तत्वानपायात्। उपदेशग्रहणं तु ऋदन्तार्थमिति वक्ष्यामः। अन्वभविपाताम् इति। चिण्वदिटोऽभावे वलादिलक्षण इड्गुणः। बभूवे इति। भावे लिटि द्वित्वे भवतेरिति कर्तृनिर्देशाद् भावकर्मणोर्नात्वम् इत्युक्तम्। बभूवे इति। वेति केचिदिति चोक्तम्।

---

१. दृष्टमात्रं संकोचकाभावात्प्रत्ययत्वस्याप्यतिदेशादिति क० पु०।
२. प्रतिवादेनेति क० पु०।
३. चिणमाहत्येति क० पु०।
४. हनिणिङादेशा इति क० पु०।
५. सहितत्वादिति क० पु०।
६. भवादेशस्येति क० पु०।

## ६०५. तनोतेर्यकि [६।४।४४]

तनोतेराकारान्तादेशो वा स्याद् यकि च। तायते। तन्यते। "ये विभाषा" (६।४।४३) जायते। जन्यते।

---

भावितेति। ततश्चिरावदिट्। भाविषीष्ट। "लिङः सीयुट्" (३।४।१२) भाविष्यते इति। स्यः। स्तूयते विष्णुरिति। ष्टुञ् स्तुतौ। सकर्मकत्वात् कर्मणि लः। अस्तावीति। लुङि च्लेश्चिण् "चिण् भावकर्मणोः" (३।१।६६) इति चिण्। "चिणो लुक्" (६।४।१०४)। अस्ताविषातामिति। अजन्तत्वात् सिचश्चिण्वदिटि वृद्धयावादेशौ। अस्तोषातामिति। चिण्वदिटोऽभावे वलादिलक्षणोऽपि "एकाच" (७।२।१०) इति निषिद्धः। एवमन्यत्राप्यूह्यम्। स्मर्यते इति। स्मृ चिन्तायाम्। सकर्मकः। अस्मारि। अस्मारिषाताम्। अस्मृषाताम्। सस्मरे। स्मारिता। स्मर्ता। स्मारिषीष्ट। स्मृषीष्ट। स्मारिष्यते। पक्षे "ऋद्धनोः स्ये" (७।२।७०) इतीट्। स्मरिष्यते।

अत्र परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते यद्यपीदानीमनजन्तः, तथाप्युपदेशेऽजन्त आसीदिति चिण्वदिट् भवत्येव। एतदर्थमेव चोपदेशग्रहणं कृतम्।

अर्यते इति। ऋ गतौ। सुटो बहिरङ्गत्वादिति। पूर्वं धातुः साधनेनेति पक्षे पश्चादुपसर्गापेक्षत्वेनेत्यर्थः। पूर्वं धातुरुपसर्गेणेति पक्षेऽभक्तत्वादिति बोध्यम्। भक्तत्वपक्षे तु "गुणोऽर्तिसंयोगाद्योः" (७।४।२९) इत्यत्र "नित्यं छन्दसि" (४।१।४६) इत्यतो नित्यमित्यनुवर्तते। तेन नित्यं यः संयोगादिस्तस्य गुणो विधीयमानः सुटि कृते न भविष्यतीति समाधेयम्।

एतच्च सुड्विधावेव प्रपञ्चितम्। एवं च बहिरङ्गत्वादिति हेत्वन्तरस्याप्युपलक्षणं बोध्यम्।

संस्क्रियते इति। "संपर्युपेभ्यः" (६।१।१३७) इति सुट्। "रिङ् शयग्लिङ्क्षु" (७।४।२८) इति रिङ्। चिण्वदिटि। समस्कारि। समस्कारिषाताम्। समस्कृषाताम् इत्यादि स्मरतीतिवत्।

यकः कित्वे प्रयोजनान्तरमाह—नलोप इति। "([1] "अनिदिताम्" (६।४।२४) इत्यनेन। स्रंसु अवःपतने। भावे लः। इदितस्तु इति। तुर्विशेषार्थः। अनिदितामिति निषेधात् लोपो नेत्यर्थः। नन्द्यते इति। टुनदि समृद्धौ। संप्रसारणमिति। कित्वात् "वचिस्वपि" (६।१।१५) इत्यनेन इज्यते इति।) यज देवपूजादौ। सकर्मकत्वात् कर्मणि लः। भावे ल इति तु प्राचः प्रमादः। शय्यते इति भावे।

---

१. अनिदितामित्यारभ्य—इज्यते इत्येतदन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

६०६. तपोऽनुतापे च [३।१।६५]

तपतेश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापिना । "घुमास्था" (६।४।६६) इतीत्त्वम् । दीयते । एशः आदिशित्त्वाभावादात्त्वम् । जग्ले ।

६०७. आतो युक् चिण्कृतोः [ ७।३।३३ ]

आदन्तानां युगागमः स्यात् चिणि ञ्णिति कृति च । अदायि । अदायिषाताम् । अदिषाताम् । दायिष्यते । दास्यते । हन्यते । "हो हन्तेः" (७।३।५४) इति कुत्वम् । अचिण्णलोरित्युक्ते र्हनस्तो न । अघानि-अघानिषाताम्। अहसाताम् । पक्षे वधादेशः।अवधि । अवधिषाताम् ।गृह्यते । अग्राहि । चिण्वदिटो न दीर्घत्वम् इट्म् । अग्राहिषाताम् । दृश्यते । अदर्शि । अदर्शिषाताम् । सिचः कित्वादम् न । अदृक्षाताम् । णिलोपः । शम्यते मोहो मुकुन्देन ।

---

तपोऽनुतापे च । तप संतापे । अनुतापः पश्चात्तापः । चकारात् कर्तरीत्यनुकृष्यते इत्याह—कर्मकर्तरीति। "तपस्तपः कर्मकस्यैव इति" (३।१।८८)। यत्र कर्मवद्भावो विधीयते तत्रैव प्राप्तश्चिण् प्रतिषिध्यते, नान्यत्राप्राप्तत्वात् । अनुतापे चेति । अकर्मककर्त्रर्थमिदम् । तर्हि भावकर्मणोरपि प्राप्तः प्रतिषिध्यते । अन्वतप्तेति । "झलो झलि" ( ८।२।२६ ) इति सिचो लोपः । पापिनेति । पूर्वं यत्पापं कर्म कृतं तेन पश्चादभ्याहत इत्यर्थे शुद्धे कर्मणि देवदत्ते लः । पुरुषाभिधाने कर्तरि तृतीया । अधर्माभिधाने तु करणे । 'यदाऽभ्यभ्याहननार्थस्य तपेः कर्मस्थभावस्य कर्मकर्ता विवक्ष्यते, तदा 'कर्मवत्कर्मणा" ( ३।१।८७ ) इत्यात्मनेपदं तदापि हेतौ तृतीया । एश इत्यादिशित्वाभावादिति । "आदेच उपदेशेऽशिति" ( ६।१।४५ ) ( अत्रैव[2] स्थितं शितीति कर्मधारयः शश्चासाविच्च शित् । "यस्मिन् विधिस्तदादावल्ग्रहणे" ( प० ) इति च तदादिविधेरित्सञ्ज्ञकशकारादौ निषेध इति बहुव्रीहौ त्वेशाऽपि निषेधः स्यादिति भावः । *जग्ले इति । ग्लै हर्षक्षये । भावे लः । "आतो लोप इटि च" (६।४।६४) इत्यालोपः ।*

आतो युक् । चिण्कृतोः किम् ? ददौ । चौडिः[3] । वालाकिः । बह्वादित्वादिञ् । अदायिषाताम् इति । "स्याघ्वोरिच्च" ( १।२।२७ ) इत्येतद्बाधित्वा परत्वाच्चिण्वदिटि कृते अजझनादित्वात् पुनर्न भवति । अदिषातामिति । "स्याघ्वोरिच्च"(१।२।२७) इतीत्वकित्वे । अघानीति । चिणि "अत उपधायाः" ( ७।२।११६ ) इति वृद्धिः ।

---

१. यदाप्याननभार्थस्य तपः कर्मस्थभावस्य कर्मकर्ता विवक्ष्यते इति क० पु० ।
२. अत्रैव स्थितम् शितीति नास्ति क० पु० ।
३. चौडिरिति नास्ति क० पु० ।

"चिणो लुक्" ( ६।४।१०४ ) वधानिपाताम् इति। चिण्वदिट्। प्रहसातामिति। चिण्वदिटोऽभावे "हनः सिच्" ( १।२।१४ ) इति कित्त्वादनुनासिकलोपः।

पक्षे वधादेश इति। यदा चिण्वदिट् नास्ति तदा "आत्मनेपदेष्वन्यतरस्याम्" ( २।४।४४ ) इति वैकल्पिको वधादेश इत्यर्थः।

अवधीति। वधादेशोऽदन्तस्तेन चिणि अतो लोपस्य स्थानिवत्त्वादुपधावृद्धिर्न। "जनिवध्योश्च" ( ७।३।३५ ) इति तु निषेधो नाशङ्क्यः। स हि वध हिंसायामिति दकृत्यन्तरस्य भौवादिकस्य व्यञ्जनान्तस्यारभ्यते। अयं पुनरदन्त आदेशः। तथा चावधीदिति हलन्तवृद्धिर्नभवति। चिण्वदिट्। पक्षे तु वधादेशो न भवति यतः पूर्वप्रवृत्तश्चिण्वदिटा परत्वाद् बाध्यते। कृते तु तस्मिन् सकृद्गतिन्यायेन न भवति। एवं घानिषीष्टेति लिङ्यपि द्रष्टव्यम्। तथा च वार्तिकम्-"वधभावात् सीयुटि चिण्वद्भावो विप्रतिषेधेन" इति।

ननु तत्रार्धधातुके इति विषयसप्तमीति स्थितम्। ततश्च वधादेशोऽन्तरङ्गः तत्कुतो विप्रतिषेधः।

अत्र हरदत्त –लुङीति विशेषनिर्देशात् परसप्तमीयम्। यत्र त्वार्धधातुकसामान्यं निमित्तत्वेनोपादीयते "अस्तेर्भूः" ( २।४।५२ ) इत्यादि, तत्रैव विषयसप्तमी भाव्यादित्यादिसिद्धये इत्याह–भाष्यकारस्तु विषयसप्तमीमेव प्रतिपेदे।

यदाह– 'एकाच उपदेशे" ( ७।२।१० ) इत्यत्र वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते। आर्धधातुकीयाः सामान्येन भवन्तीति।

एवं त्वन्तरङ्गत्वाद् वधभावेन भाव्यम्।

अत्र कैयटः विषयसप्तम्यामपि प्रतिपद्विधेर्बलीयस्त्वाच्चिण्वद्भाव एव भवति, न वधादेश इति।

अत्र यद्यपि वधादेशोऽपि प्रतिपद्विधिः, तथापि विप्रतिषेधाच्चिण्वद्भाव इत्याशय इति नारायणः। यद्यपि परादप्यन्तरङ्गं बलीयः, तथापि परशब्दस्येष्टवाचित्वाच्चिण्वद्भावेन व्यवस्थेति।

[1]तस्याप्याशयः–एवं स्थिते पक्षे वधादेश इति प्रतीकमादाय यत् प्राचोक्तम्—एतच्च परमतम्। स्वमते तु वधादेशोऽत्र भवत्येव। तथा चोक्तं भाष्ये—चिण्वद्भावे कृते पुनः प्रसङ्गाद् वधभावः कस्मान्न भवति? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति कृत्वा 'हनि णिङादेशप्रतिषेधश्च" ( वा० ) इतीति। तदेतत् प्रमत्तभाषितमित्युपेक्ष्यम्। चिण्वद्भावपक्षे खलु विप्रतिषेधेन वधादेशाभाव उक्तो भाष्यकृता, न तदभावपक्षेऽपि। तत्र प्रतियोगिनोऽसत्त्वेन तदसंभवात्। "हनि णिङादेशप्रतिषेधश्च" ( वा० ) इत्येतद्वचनाङ्गस्याप्यतिदेशशङ्कापरं घानिष्यते इत्यादौ।

१, तस्याशय इति क० पु०।

## ६०८. चिण्णमुलो दीर्घोऽन्यतरस्याम् [ ६।४।९३ ]

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात्। द्वितीये णिचि दीर्घविधौ त्यजादेशो न स्थानिवदिति पाक्षिकदीर्घार्थं दीर्घोक्तिः। ह्रस्वो-

---

न चावाधिपातामित्यादावतिदशापेक्षा। "हनो वध लिङि" (२।४।४२) "लुङि च" (२।४।४३)इति साक्षादेवोपदेशात्। उदाहृतं चात्र वैरूप्यं माधवादिभिरित्यास्तामेतत्।

गृह्यते इति। "ग्रहिज्या" (६।१।१६) इति संप्रसारणम्। अग्राहीति। चिण्युपधावृद्धिः। चिण्वदिटो[1] न दीर्घत्वमिष्टमिति "ग्रहोऽलिटि दीर्घः" (७।२।३७) इत्यनेन प्रकृतस्य वलादिलक्षणस्यैवेटो दीर्घत्वम् न त्वस्य "अनन्तरस्य विधिर्वा प्रतिषेधो वा" इति न्यायादिति भावः।

अग्रहीषातामिति। चिण्वदिटोऽभावे वलादेरितीट्। ग्रहोऽलिटि दीर्घः" (७।२।३७) इति दीर्घः। सिचः किंत्वादम् नेति। चिण्वदिटोऽभावे "लिङ्सिचावात्मनेपदेषु" (१।२।११) इति सिचः कित्त्वे "सृजिदृशोर्झल्यमकिति" (६।१।५८) इति पर्युदासात् अमागमं[2] इत्यर्थः।

अदृक्षाताम् इति। "व्रश्च" (८।२।३६) इति षः। "षढोः कः सि" (८।२।४१) इति षत्वं क्षः।

शम्यते इति। शमु उपशमे। हेतुमण्ण्यन्तात् कर्मणि लः। यक्। "णेरनिटि" (६।४।५१) इति णिलोपः। अमन्तत्वात् "मितां ह्रस्वः" (ग०) भावे लकारभ्रम निरसितुं मोहो मुकुन्देनेत्युपन्यासः।

चिण्णमुलोरिति। मितां ह्रस्वे कृते पक्षे दीर्घार्थं वचनम्।

ननु प्रकृतो[3]मितां ह्रस्व एव विकल्प्यताम्[4]। तत्र यदा ह्रस्वस्तदा अशमि इति भविष्यति। तदभावपक्षे यथास्थितोपधावृद्धिरेव श्रोष्यते अशामि इति। तत्किं दीर्घग्रहणेनेत्याशङ्क्य तत्प्रयोजनमाह—द्वितीये णिचि इत्यादि।

यदाशमेर्हेतुमण्ण्यन्तात् शमयन्तं प्रयुक्तवानिति प्रयोजकव्यापारे द्वितीयो णिच् क्रियते, तदा अशम् इ इ चिण् इति स्थिते "णेरनिट्" (६।४।५१) इति पूर्वस्य णेर्लोपितस्य[5] स्थानिवद्भावाद् अत्र णिश्चिण्परो न तस्मिन् यदङ्गं[6] पूर्वेण णिचा व्यवधानात्। यस्मिन् णौ यदङ्गं[7] न स चिण्परः परेण णिचा व्यवधानाद् इति ह्रस्व विकल्पो न सिद्ध्येदिति दीर्घ एव विधीयते इत्यर्थः।

---

१. चिण्वदिट इति क० पु०।
२. अमागम इति क० पु०।
३. प्रसक्तो इति क० पु०।
४. विकल्पतामिति क० पु०।
५. लोपेतस्येति क० पु०।
६. मिदङ्गमिति क० पु०।
७. मिदङ्गमिति।

क्त्वाद्यणिचूलोपस्य स्थानिवत्त्वात् पाक्षिक उपधाह्रस्वो न स्यात् । अशमि । अशामि । ण्यन्तत्वेनाजन्तत्वात् चिण्वदिट् । तस्य "असिद्धवदत्राभात्" (६।४।२२) इति णिलोपं प्रति असिद्धत्वाण्णिलोपः । अशामिपाताम् । अशमिपाताम् । चिण्वदिडभावे अशमयिपाताम् । ण्यन्तत्वाभावे शम्यते मुनिना ।

६०९. नोदात्तोपदेशस्यमान्तस्यानाचामेः [७।३।३४]

मान्तस्य सेट उपधाया वृद्धिर्न स्यात् चिणि ञ्णिति कृति च न त्वाचमेः। अशमि । अदमि । अनाचमेः किम् ? आचामि । "अनाचमिकमिवमीना-

---

ननु दीर्घविधावपि स्थानिवत्त्वाद् व्यवधानं दुर्वारमत आह—दीर्घविधौ तु इति। तुः पक्षान्तराद्विशेषद्योतनार्थः ।

तमेव विशेषं दर्शयति—अजादेशो न स्थानिवदिति । "न पदान्तद्विर्वचन" (१।१।५८) इति निषेधादित्यर्थः । यस्माद्दीर्घविधौ स्थानिवद्भावो नास्ति । अतः पाक्षिकः दीर्घः सिध्यतीत्यर्थः ।

न चैतद् ह्रस्वविधावपि सुवचमित्याह—ह्रस्वोकावित्यादि । न हि ह्रस्वविधावपि केनचित् स्थानिवद्भावो निषिद्ध इति भाव ।

ननु शमेरनजन्तत्वात् अशामिपाताम् इति चिण्वद्भावो न स्यादत आह—ण्यन्तत्वेनेत्यादि । ण्यन्तं धात्वन्तरं तदुपदेशावस्थायां भवत्ययमजन्त इति भावः । एतत्तु केवले णिचि ण्यन्ताद्वा णिचि साधारणम् ।

नन्वेव चिण्वदिटि सति अनिटीति निषेधाण्णिलोपो न स्यादत आह– तस्येत्यादि । अस्ति समानाश्रयत्वं णिलोपस्य चिण्वदिटश्च सिजेकाश्रयत्वात् । उक्तं च–इह यार्ऽसिद्धस्तेन मे लप्यते णिरिति । अशामिपाताम् । अशमिपातामिति । वलादिलक्षणे इटि णेर्लोपाभावे गुणायौ । शम्यते मुनिना । भावे लः ।

नोदात्तोपदेश । आद्यमुच्चारणमुपदेशो धातुपाठः । उपदेशे उदात्त उदात्तोपदेशः । अस्मादेव निपातनात् परनिपातः । स चार्थात् सेडेव भवति । अनुदात्तोपदेशस्येटो निषेधादित्याशयेन व्याचष्टे—सेट इति । उपधाया इति ।

यद्यप्येतन्न प्रकृतं वृद्धिग्रहणं च "हनस्तोऽचिण्णलोः" (७।३।३२) "आतो युक् चिण् कृतोः" (७।३।३३) इत्येताभ्यां व्यवच्छिन्नम्, तथापि सामर्थ्याल्लभ्यम्, तथाहि निषेधस्य प्राप्तिपूर्वकत्वात्, चिण्कृतोश्चान्यस्याप्रसङ्गात् चिण्कृतोर्यत्प्राप्तम्[1] भवतीत्युक्तेऽर्थादुपधावृद्धिरेव मान्तानां संभवतीति निषिध्यते । 'अत उपधायाः' (७।२।११६) इत्यस्यानन्तरमेव तु न कृतं चिण्कृतोरुपजीवनार्थम् । आचामीत्यादि । 'नोदात्तोपदेशस्य मान्तस्यानाचमिकमिवमीनाम्" इति सूत्रं पठनीयमित्यर्थः ।

---

१. तत्रेति क० पु० ।

मिति वाच्यम्" अकामि । अवामि । अभूचमुविश्रमां वेति केचित् । आमि मा । अचामि । अचमि व्यश्रामि । व्यश्रमि । वध हिंसायाम् । "जनिवध्योश्च" (७।३।३५) इति न वृद्धिः, अवधि । "जाग्रोऽविचिण्णल्ङित्सु" (७।३।८५) इत्युक्ते र्वृद्धिः । अजागारि ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति केचित् । अजागरि । अजागारि ।

---

अत्र यद्यपि वार्त्तिके केवलश्चमिरुपात्तः, तथाप्याङ् पूर्वस्यैव पर्युदासो द्रष्टव्यः, सूत्रे तथा दर्शनात् । वार्त्तिकस्य हि अनुक्तयोः कमिचम्योः संग्रहे तात्पर्यम्, न तु चमेः केवलस्यापि निषेधः । तथा च भाष्यम्—अत्यल्पमिदमुच्यते इति ।

न्यासकारोऽपि वार्तिकं प्रत्याचचाणस्तावदनाचमिरिति सूत्रेणोपादानात् प्रतिषेध इत्याह । तथा च काशिकादौ वार्तिकोदाहरणे चाङ्पूर्व एव प्रदर्शितः । अत एवाचार्यैरपि सूत्रे एवोदाहृतत्वाद् व्यतिरिक्तविषयत्वाच्च पुनर्नोदाहृतः ।

एवं चानाङ्पूर्वस्य चमेः अचमि पर्यचमि इति विस्तरेऽप्युदाहृतम्[1] । अत एव केचिदाचमिकमिवमोनामिति वक्तव्यमिति पठन्ति । तन्निषेधो नेत्याध्याहृत्य व्याख्येयम् । अकामीति । कमु कान्तौ । "आयादयः" (३।१।३१) इति णिङभावपक्षे इदमुदाहरणम् । णिङन्ताच्च चिणि णिङो लोपस्य स्थानिवद्भावान्निषेधाप्रसङ्गात् किं पर्युदासेन ? णिङ्निमित्ता वृद्धिरनेन निषिध्यते, चिण्कृतोरिति वचनात् । अस्माच्च ण्यन्ताण्णिचि चिण्वदिटयपि "चिण्णमुलोः" (६।४।९३) इति दीर्घविकल्पो नाशङ्क्यः "न कम्यमिचमाम्[2]" (ग०) इति मित्त्वनिषेधात् । अचामीति । टुवम् उद्गिरणे । अभूचमित्यादि । अमरोगे । चमु अदने विपूर्वः । श्रमुतपसि खेदे च । तत्राम् गत्यादिषु भ्वादिरस्ति । तस्य "नोदात्तोपदेशस्य" (७।३।३४) इति वृद्धिनिषेधात् आमीति सिद्धम् । चौरादिकस्य त्वमरोगे इत्यस्य णिचि वृद्धौ चिणि आमीति भविष्यति । न चास्य मितां ह्रस्वप्रसङ्गः, "नान्ये मितोऽहेतौ" (वा०) इति वचनात् । अत एवास्य—आमः आमक इत्याद्यपि सिद्ध्यति । धातूनामनेकार्थत्वादेकार्थतापि न विरुध्यते । चमेरपि वार्तिके केवलस्योपादानात् निषेधपर्युदासवादिनां वृद्धौ अचामीति भविष्यति । तथा च कौमारं सूत्रं न सेटो मान्तस्याचमिकमिवमीति प्रागुपवर्णितरीत्याङ्पूर्वस्यैव पर्युदासवादिनां केवलस्य वृद्धिनिषेधाद् अचमि इति भवति । श्रमेरपि विश्राम इत्यादिप्रचुरप्रयोगादर्शनाद् "नञा निर्दिष्टमनित्यमिति वा संज्ञापूर्वको विधिरनित्य इति वा वृद्धिमपोच्छतां व्यश्रामि[3]" इति ।

---

१. विस्तरे उदाहृतमिति क० पु० ।

२. न कम्यमिचमामिदात् इति क० पु० ।

३. अन्येषां विश्रमीति नास्ति क० पु० ।

## ६१०. भञ्जेश्च चिणि [६।४।३३]

भञ्जेर्नलोपो वा स्याच्चिणि । अभाजि । अभञ्जि ।

## ६११. विभाषा चिण्णमुलोः [७।१।६९]

लभेर्नुमागमो वा स्याच्चिण्णमुलोः परतः । अलम्भि । अलाभि । व्यवस्थितविभाषात्वात् प्रादेर्नित्यं नुम् । प्रालम्भि । यदा कर्मैव कर्तृत्वेन विवक्ष्यते, तदा सकर्मकाणामप्यकर्मकत्वात् कर्तरि भावे च लकारः ।

---

अन्येषां व्यश्रमीति भवति । तथा च वर्द्धमानो वौश्रमेर्वृद्धिविकल्पं सूत्रयामास । एतत्प्रतारितो मणिकारोऽपि वैयाकरणंमन्य आह—विश्रमविश्रमयोर्व्यकिरणस्मृतिविरोधेऽपि "वौश्रमेर्विकल्पः" इष्यते इति महाभाष्यवचनादुभयं साध्विति ।

तदिदं मतद्वयमेवं सुहृद्भूत्वाचार्य आचष्टे—अमीति । "न माङ्योगे" (६।४।७४) इत्याटोऽभावः । वध हिंसायाम् इति भ्वादिव्यञ्जनान्तः प्रकृत्यन्तरम् । तथा च प्रयुज्यते लक्षणश्चेन्न विद्येत बाधकोऽपि न विद्यते इति । हनादेशस्य तु वधेरदन्तत्वाद्वृद्धेरप्रसङ्ग इति प्रागेवोक्तम् ।

भञ्जेश्च चिणि । अभाजीति । भञ्जो आमर्दने । नलोपे कृते "अत उपधायाः" (७।२।११६) इति वृद्धिः ।

एवं शुद्धे कर्मणि प्रत्ययमुक्त्वा आतिदेशिकेऽपि कर्मणि वक्तुं कर्मकर्तारं निरूपयति—यदेत्यादि

अयमर्थः—सर्वेषामेव कारकाणां प्रातिस्विकोऽवान्तरव्यापारोऽस्ति, अकिञ्चित्करस्य कारकत्वानुपपत्तेः । तत्र च स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैवास्ति ,[1]कारकव्यापारभेदापेक्षायां करणत्वादिसंभवः । ततश्च प्रधानेन कर्तृव्यापारेण तिरस्कृतं स्वव्यापारकृतं स्वातन्त्र्यमिति कर्तृसंज्ञा न भवति, करणादिसंज्ञैव भवतीत्यर्थः । तत्र सकर्मकाः धातवः कर्मव्यापारमभिधाय तदुपसर्जनकर्तृव्यापारमप्याचक्षते । तद् यथा भिदिर्द्विधाभवनोपसर्जनकं भावनम् ।पाचिश्च विक्लित्त्युपसर्जनं विक्लेदनम् । तत्र यदा कर्मणः वर्तते, सौकर्यातिशय[2]प्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते, तदा भिदचादिः कर्मव्यापारमात्रे वर्तते समुदाये प्रवृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते इति कर्मव्यापारमात्रं प्रति च कर्तृत्वमेव काष्ठादीनां प्रातिस्विकं न, तदा कर्मत्वगन्धोऽप्यस्ति । कर्तुः क्रियया व्याप्यत्वाप्रतीतेः । एवं च सकर्मका अप्यत्र प्रायोऽकर्मकाः भवन्ति भिद्यते काष्ठं स्वमेवेति । एवं पचादिष्वप्यूह्यम् ।

---

१. कारका व्यापार भोगारेवावामिति क० पु० ।
२. सौकर्यातिशयातिशयेति क० पु० ।

## ६१२. कर्मवत्कर्मणा तुल्यक्रियः [ ३।१।८७ ]

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । कर्मवत्त्वाद् यगात्मनेपद चिण् चिण्वदिटः स्युः । उक्त च—

"क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैर्यस्मात् कर्म कर्तेति तद्विदुः"॥ इति ।

---

किं पुनरकर्मकत्वसंपादने प्रयोजनम् ? तत्राह—कर्तरि भावे च लकारः इति । लकार इति । प्रकृताभिप्रायेणोक्तम् । उपलक्षणं त्वेतत् । कृत्यक्तखलर्थानामपि । तेन भेत्तव्यं काष्ठेन । ईषद्भेदं काष्ठेनेति भावे तव्यादयोऽपि सिध्यन्ति ।

कर्मवत् । कर्मणा इति कृत्रिमत्वात् साधन[1]कर्मेह गृह्यते, न लौकिकम् । तथा सति क्रियया तुल्या क्रिया यस्येत्युक्तं स्यात् । तच्चानर्थकम्, काचिदपि क्रिया कयाचित् तुल्यैवेति । कर्मशब्दश्च मञ्चाः क्रोशन्तीतिवत् तात्स्थ्यात् कर्मस्थां क्रियां लक्षयति, मुख्येन कर्मणा क्रियायाः सादृश्यासंभवात् । साध्यसाधनयोरत्यन्तवैलक्षण्यात् । तुल्यशब्दश्चेह सादृश्यवचनो गृह्यते प्रसिद्धतरत्वात् । क्रियातुल्यक्रिय इत्येव तु नोक्तम् । ([2]करणव्यापारेण तुल्यक्रियस्य मा भूत् । साध्वसिश्छिनत्तीति । करणाधिकरणव्यापारेऽपि धातुर्वर्तते इति मतम् । तस्मात् कर्मव्यापारेणैव सादृश्ये यथा स्यादिति कर्मग्रहणम् ) । क्रियोपचारे न प्रयोजनम् ।

कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद् यथा स्यात्, कर्तृस्थभावकानां कर्तृस्थक्रियाणां च मा भूदित्येतत् सर्वं पर्यालोच्य व्याचष्टे—कर्मस्थया क्रियेत्यादि । कर्मत्वं यद्यपि शक्तिःतथापि तन्मात्रे क्रियाया असंभवात् कर्मशब्देनेह द्रव्यमुच्यते, शक्तिशक्तिमतोरभेदात् । कर्मस्थत्वादिकं च "लिटः" (१।३।६७) इत्यत्र निरूपितुम् । "कर्तरि शप्" ( ३।१।६८ ) इति प्रकृतं कर्तरीति सप्तम्यन्तमपि प्रथमया विपरिणम्यते इत्याशये[3]नाह—कर्तेति । कर्मणा तुल्यं वर्तते इति कर्मवत् । "तेन तुल्यम्" (५।१।११५) इति तृतीयान्ताद्वतिः । षोढातिदेशेऽपि प्राधान्यात् कार्यातिदेशोऽयमित्याह—कर्मवत्त्वाद् यगात्मनेपदेत्यादि ।

अनेनैव सूत्रेण सर्वाण्येव कर्माणि दृष्टानि कार्याणि प्रवक्ष्यन्ते इति । यद्वा[4] शास्त्रमतिदिश्यते ।

---

१. धर्मेह इति क० पु० ।

२. करणव्यापारेणेत्यारभ्य—कर्मग्रहणमित्यन्तो नास्ति (   ) करेखाङ्कितः क० पु० ।

३. इत्याशयेनेति क० पु० ।

४. यद्वेति ख० पु० ।

**परत्वाच्छपि प्राप्ते कर्मकर्तरि यग् वाच्यः । कर्तरि कर्मेत्यनुवृत्तौ "शेषात् कर्तरि" ( ) इति पुनः कर्तृग्रहणात् कर्तैव यः कर्ता तत्रैव परस्मैपदं न कर्मकर्तरि । भिद्यते काष्ठं स्वयमेव । अत्र कर्तुस्तिङोक्तत्वात् प्रथमा ।**

---

ननु कर्म कर्तैवाप्रसिद्धस्तत्कस्य कर्मवद्भावो विधीयते इत्याशङ्क्याह, वृद्धसंमत्या तु द्रढयति–उक्तं चेति । "कर्मवत्कर्मणा" ३।१।८७ ) इत्यस्मात् प्रागेतदुदाहर्तुमुचितम् । यत्कर्म काष्ठादिक्रियमाणं तद्बाह्यस्य कर्तुश्चैत्रादेर्व्यापारेण व्याप्यमानमपि स्वयमेव सतोऽपि कर्तृव्यापारस्य सूक्ष्मत्वाद् अनुदरा कन्येतिवद् अविवक्षयात्मनैव प्रसिद्ध्यति । विक्लेदादिभाग् भवति ।

कथं पुनरचेतनं चेतनाधिष्ठानमन्तरेण प्रसिद्ध्यति, यो हि कुठारस्योद्यमननिपतनादि करोति स भेदने कर्तोपलब्धः ? न चैतत्, काष्ठेऽस्तीतिरयत आह—सुकरैः स्वगुणैरिति । सुकरैरनायाससिद्धैः स्वैरात्मीयैर्गुणैः धर्मैः प्रशिथिलावयवसंयोगपुराणत्वनि सारत्वादिभिर्हेतुभिस्तत् कर्म कर्तेति विदुषः व्यपदिशन्ति इत्यर्थः ।

परत्वादिति । यदाऽस्य शास्त्रातिदेशस्तदा कर्मकर्तरि अतिदिष्टेन तेन शास्त्रेण तत्तत् कार्यं प्रवर्त्यते[1] । ततश्च "सार्वधातुके यक्" (३।१।६७) इत्यवकाशः शुद्धं कर्म पच्यते ओदनश्चैत्रेण । "कर्तरि शप्" ( ३।१।६८ ) शुद्धः कर्ता चैत्रः पचतीति । कर्मकर्तर्युभयप्रसङ्गे परत्वाच्छप् प्राप्नोतीत्यर्थः । कर्मकर्तरि 'यग् वाच्यः इति व्याख्येय इत्यर्थः ।

तत्रेदं व्याख्यानम् "कर्तरि शप्" (३।१।६८) इत्यत्र ग्रहणं न कर्तव्यमविशेषणे सार्वधातुके शप् विधेयस्तस्य भावकर्मणोर्यगपवादो भविष्यति । एवं सिद्धे कर्तृग्रहणं कर्तैव यः कर्ता तत्रैव शबादयो यथा स्युः कर्मातिदिष्टे मा भूवन्नित्येवमर्थं भविष्यति ।

इह तर्हि दोषः शुद्धे कर्मणि सावकाशं भावकर्मणोरात्मनेपदं बाधित्वा कर्मकर्तरि परत्वात् परस्मैपदं स्यादित्याशङ्क्य परिहरति—कर्तरि कर्मेत्यनुवृत्ताविति । अनेन कर्तृग्रहणेनानुवर्तमानं तद्विशिष्यते कर्तरि वर्तरीति । यद्वा कर्तृसामान्येऽनुवृत्त्यापि लब्धे पुनः कर्तृग्रहणं शुद्धस्य कर्तुः परिग्रहार्थमित्यर्थः ।

शुद्धत्वमेव विशदयति—कर्तैव यः कर्तेति न कथंचित् कर्मापदिष्ट इत्यर्थः । भिद्यते काष्ठं स्वयमेवेति । अत्र भिदिर्द्विधा । भवनमात्रे वर्तते सा च कर्मस्था क्रिया तस्यामेव संप्रति काष्ठं कर्तृ ।

---

१. ततःकार्यं प्रवर्त्यंत इत्यधिकः पाठः क० पु० ।

२. सिद्धमिति क० पु० ।

३. यथेति क० पु० ।

अभेदि । पच्यते ओदनः स्वमेव। अपाचि । यदा भावे लकारस्तदा काष्ठात् कर्तरि तृतीया । लोऽनुवृत्तेस्तिङ्वाच्यस्यैव कर्तुः कर्मवत्त्वम् । तेनात्र न द्वितीया । भिद्यते काष्ठेन ।

---

ननु यदा काष्ठं[1] कर्मकाष्ठं भिनत्तीति न तदा तस्यां विशरणक्रियां प्रति कर्तृ यदा च निवृत्तप्रेषणदशायां विशरणं प्रति कर्तृ तदा नैतत् कर्मस्थमिति कथं कर्मस्थया क्रियया तुल्यक्रिय इत्युच्यते ? न ब्रूमोऽस्मिन् प्रयोगे यत्कर्म तेन तुल्यक्रिय इति । किं तर्हि प्रयोगान्तरे यत्कर्म तेन तुल्यक्रिय इति ?

यद्येव पचत्योदनं देवदत्तः, राध्यत्योदनः स्वयमेवेत्यत्रापि स्यात् । नैष दोषः । कर्तृकर्मणोर्धातोरन्यत्र संभवाद् धातोरिति लब्धेऽपि "धातोरेकाचः" (३।१।२२) इति पुनस्तदनुवृत्तिरेकत्वविवक्षार्था । तेन यस्मिन्नेव धातौ यत्कर्म तस्मिन्नेव धातौ यदि तत्स्थया क्रियया तुल्यक्रियः कर्तेत्यर्थः । तेन धातुभेदे न भविष्यति इत्युक्तं भवति। यस्यैव कर्मणः 'कर्मावस्थाया यद्धातूपात्तायाः क्रिया कर्त्रवस्थायामपि यदि सैव तु तद्धातूपात्ता भवति स कर्ता कर्मवदिति । एवं च कर्मकर्त्रवस्थाभेदादेकस्या अपि क्रियायाः भेदाश्रयं सादृश्यमुपपादनीयम् । अत्र स्वयमेवेति कर्त्रन्तरव्यावृत्त्यर्थम् । आत्मनाकरणेनेति च । शुद्धे कर्मणि प्रत्यये कर्तुरनुक्तत्वात् तृतीयेत्युक्तम् ।

कर्म कर्तरि तु न तथेत्याह—अत्र तु कर्तुस्तिङोक्तत्वात् प्रथमेति । ( ननु[3]कार्यातिदेशेनैव द्वितीया विधेया । न चात्रानभिहिताधिकारोऽस्ति । सत्यम्, वत्करणमिह सर्वसादृश्यार्थम् । तेन यथा कर्मण्यभिहिते न भवति । एवं कर्तर्यपीति द्वितीयाभाव इति स्थितमाकरे ) अभेदीति । लुङि चिण् । पच्यते ओदनः इति । पचि[4]र्विक्लित्युपसर्जनविक्लेदनवाची । स यदा तण्डुलाना सौकुमार्यातिशयप्रतिपिपादयिषया कर्तृव्यापारस्य सतोऽप्यविवक्षया कर्मव्यापारमात्रे विक्लित्तौ वर्तते स्वयमेव विक्लिद्यते इति, तदा कर्मस्थया क्रियया तुल्यक्रियोऽयं कर्तेति कर्मवद् भवति । कर्मस्थक्रियोऽत्रायं परिस्पन्दवदेव पाकस्यौदनस्य पाकाभिनिर्वृत्तेः । सपरिस्पन्दनसाधनसाध्या च क्रियेत्युक्तम् ।

यत्तूच्यते कर्मस्थः पच्यतेर्भाव इति । तत्पच्यते घट इत्यत्र तद्देशस्यैव घटस्य पाक इति भावोऽन्यो भवति, अपरिस्पन्दसाधनसाध्यो भाव इत्युक्तत्वात् । इह तु स्यादुदुम्बरः स लोहितं फलं पच्यते इति पचिर्द्विकर्मकेषु प्राक् पठितः । वृक्षस्य 'पाकमन्तरेण पत्रस्य पाकासंभवात् । तेन दुह्यो[6]र्दिर्णीणः इति वृक्षो कथिते लकारः ।

---

१. ननु यदा काष्ठं काष्ठं भिनत्तीति क० पु० ।

२. कर्मावस्थायामपि यदिसैवेति क० पु० ।

३. ननुकार्यातिदेशेनैवेत्यारभ्य-स्थित माकरे इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

४. पचति इति क० पु० ।

५. पाककर्मान्तरेणेति क० पु० ।

६. तस्मादुदुम्बरादिर्णीण इति क० पु० ।

## ६१३. तपस्तपःकर्मकस्यैव [ ३।१।८८ ]

तपःकर्मकस्यैव तपेः कर्ता कर्मवत् स्यात् । तप्यते तपस्तापसः । तपोऽर्जयतीत्यर्थः । "तपोऽनुतापे च" ( ३।१।६५ ) इति कर्मं कर्तरि चिण् न । अतप्त । तपःकर्मेति किम् ? उत्तपति सुवर्णम् । भ्रद्धावत् कर्तृकात् सृजो यक् चिणौ कर्तरीति केचित् । सृज्यते स्रजं भक्तः । असर्जि ।

---

कालस्तु वर्तेति वदन्ति ।

प्रर्थवत्करणं किम् ? कर्मणा तुल्यक्रियः कर्मण्युच्यमाने कर्ता कर्मसंज्ञ इति विज्ञायते । ततश्च सकर्मकत्वादकर्मणो भावे लादयो न स्युः । वत्करणात्तु स्वाश्रयमकर्मकत्वमस्त्यस्तीति भावकार्यसंसिद्धिरित्याह–यदा भावे लकार इति कर्तरि । तृतीयेति । अनभिहितत्वादिति भावः ।

ननु तत्रापि कर्मवद्भावाद् द्वितोयया भाव्यम्, तत्कथ तृतीयेत्यत आह—धातुवृत्तेरित्यादि । 'लिङ्याशिष्यङ्" ( ३।१।८६ ) इति द्विलकारको निर्देशस्ततो ल इत्यनुवर्तते । तस्य च षष्ठ्या विपरिणामाल्लस्य सबन्धिनो लकारवाच्यस्य कर्तुः कर्मवद्भावो भवति । न च भावे प्रत्यये सति कर्ता लकारवाच्य इति कर्मवद्भावाभाव इत्यर्थः ।

(ननु कर्मवद्भावे परत्वात् तृतीयैव भविष्यतीति। सत्यम्, कार्यातिदेशत्वे त्वतदुच्यते। तत्रानेनैव द्वितोया विधेयेति परत्वात् सैव स्यात्। किं च शास्त्रातिदेशेऽपि लकारवाच्यस्यैव कर्तुः कर्मवद्भाव इत्यवश्यं वाच्यम् ), अन्यथा कर्तर्यतिदेशात् कृत्यक्तखलर्था अपि स्युः । भेत्तव्यं कुसूलः स्वयमेव । ईषद्भेदः कुसूलः स्वयमेव । भावे एव चेष्यते । भेतव्य कुसूलेन । ईषद्भेदं कुसूलेनेति[1] ।

तपस्तपःकर्मकस्यैव । क्रिययोः सादृश्ये कर्मवद्भावो विहितः पूर्वं सोऽप्यत्यन्तवैसादृश्ये न प्राप्नोत्ययं कर्मवद्भावो विधीयते। सर्वं वाक्यं सावधारणमित्यर्थं प्राप्तस्यैवावधारणस्यानुवादक एव शब्दो न पुनरस्य किञ्चित्प्रयोजनमस्ति। तप्यते तपस्तापस इति ।

क्रिया वै सादृश्यमुपपादयितुमाह—तपोऽर्जयतीत्यर्थ इति । [2]अत्रोपवासादिरूपं तपस्तापस तपति इत्यत्र तपेः क्लेशानुभावनमर्थस्तत्र न कर्मस्थो व्यापारो दुःखानुभवस्तु [3]तपेरर्थः । स तापसस्तपः तप्यते स्वर्गायेत्यत्र यदार्जनं तपेरर्थः, नैकार्थत्वात् तदार्जने । तापसः कर्ता न चार्जनं कर्मतादशायां कर्मस्थत्वेन दृष्टमिति नैकस्यां क्रियायां कर्मत्वकर्तृत्वे स्तः इति पूर्वेणाप्राप्तिरिति भावः ।

---

१. ननु तत्रापीत्यारभ्य—ईषद्भेदं कुसूलेनेत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

२. अत्रोपवासादीति क० पु० ।

३. तपेरर्थो नैकार्थत्वादिति क० पु० ।

६१४. कुषिरजोः प्राचां श्यन् परस्मैपदं च [ १।३।९० ]

अनयोः कर्मकर्तरि श्यन् परस्मैपदं वास्तः । कुष्यति कुष्यते वा पादः स्वमेव । रज्यति रज्यते । व्यवस्थितविकल्पत्वादार्धधातुकेन । अकोपि । अरञ्जि ।

६१५. अचः कर्मकर्तरि [ ३।१।६२ ]

अजन्ताच्च्लेश्चिण् वा स्यात् कर्मकर्तरि तशब्दे । अकारि । अकृत ।

६१६. दुहश्च [ ३।१।६३ ]

अदोहि । अदुग्ध ।

---

असर्जेति । "झलो झलि" ( ८।२।२६ ) इति सिचो लोपः । श्रद्धावत्कर्तृकाविद्यादि । यक्चिणाविति । एतदात्मनेपदस्याप्युपलक्षणम् । (यग्ग्रहणं[1] च सृजेर्न । अस्तु वाऽन्यमतानुरोधेन कृतम् । अत एव केचिदित्युक्तम् । स्वमते तु यग्विषये श्यन् विहितः । तथा च भाष्यम्—सृजियुज्योः श्यँस्तु इति )। अनयोः सकर्मकयोः कर्ता कर्मवद् भवति । तत्र सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावः, यग्विषये च श्यन्नित्यर्थः । तत्र श्यनि सति प्रकृतेराद्युदात्तत्वं भवति । यकि तु लसार्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात् । सृज्यते स्रजमिति । श्रद्धया निष्पादयतीत्यर्थः। सृज विसर्गे । भक्त इत्यनेन कर्तुः श्रद्धावत्त्वं द्योतयति । असर्जीति । लुङि चिण् ।

कुषिरजोरिति । कुषि निष्कर्षे । रञ्ज रागे । न लोपवतोरनुकरणं लाघवार्थम् । रज्यतीति । "अनिदिताम्" ( ६।४।२४ ) इति न लोप आर्धधातुकेनेति । श्यन् परस्मैपदं चेत्यर्थः ।

अचः कर्म । प्राप्तविभाषेयम् । अकृत इति । "उश्च" (१।२।१२) इति कित्वान्न गुणः । "ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः । अकारिषाताम् इत्यादौ चिण्वदिटोऽपि विकल्पो न भवति । व्यवस्थितविभाषा[2]विज्ञानादेव । अन्ये तु मन्यन्ते ग्रन्थकृन्मते भवत्येवेते । तथा च वक्ष्यति चिण्वदिटो न निषेधः । इति केचिदिति । आकरे तु चिणीव चिण्वदित्याश्रयणात् । चिणिपरे यत्पूर्वस्य कार्यं तदेवातिदिश्यते, न च चिणो विकल्पश्चिणि परे [3]पूर्वस्येति न शङ्कावकाशः ।

दुहश्च । दुहश्च्लेश्चिण् वेत्यर्थः । अदुग्धेति । चिणभावे सिचोऽपवादः "शल इगुपध" ( ३।१।४५ ) इति क्सः । तस्य "लुग्वा दुहदिह" ( ७।३।७३ ) इति पक्षे लुक् । "दादेः" ( ८।२।३२ ) इति घः । धत्वम् । जश्त्वम्, पक्षे अधुक्षतेत्यपि ।

---

१. यग्ग्रहणं तु इत्यारभ्य—श्यँस्तु इत्यन्तो नास्ति ( ) रेखाङ्कितः क० पु० ।

२. विभाषेति द्विवारं क० पु० । ३. पूर्वस्येति न शङ्कानकावकाशः इति क० पु० ।

६१७. न रुधः। [ ३।१।६४ ]

रुधश्च्लेः कर्मकर्तरि चिण् न। अरुद्ध। पचदुहान्यद्विकर्मकाणां कर्मकर्ता न कर्मवदिति केचित्। चिनोति वृक्षः फलानि स्वयमेव। द्विकर्मकाणां पचदुहाभ्यां कर्मकर्तरि चिण् नेति केचित्। अपक्ताम्रः फलम्। अदुग्ध गौर्दुग्धम्।

न रुधः। अरुद्धेति। रुधिर आवरणे। "झलो झलि" ( ८।२।२६ ) इति सिचो लोपः। "लिङ्सिचौ" (१।२।११) इति कित्त्वान्न गुणः। धत्वजश्त्वे। पचदुहान्येत्यादि। डुपचष् पाके। दुह प्रपूरणे। आभ्यामन्येषाम्। रुधेस्तु नायं निषेधः "न रुधः" (३।१।६४) इति चिण्परनिषेधसामर्थ्यात् चिनोति वृक्षः फलानि—इत्यादि। देवदत्तो वृक्षं फलानि चिनोति। फलानि त्यजन्त वृक्ष देवदत्तस्त्याजयति—इत्यर्थः।

अत्र वृक्षोऽकथितं कर्म स यदाऽवनतशाखत्वादिना सौकर्येण चयनेऽत्यन्तमनुकूलतया[1] पुरुषव्यापारस्याविवक्षया त्यागं प्रति स्वातन्त्र्येण विवक्ष्यते, तदाऽसौ कर्मकर्ता भवति। तत्र कर्तरि वृक्षे लकारेणोक्ते प्रथमा। फलेभ्यस्तु द्वितीया स्थितैव। कर्मवद्भावे निषिद्धेति प्रश्नो भवति। अस्माद्भावे लकारस्तु न भवति कर्मस्थाया अपि त्यागक्रियायाः ( [2]सकर्मकत्वात्। द्विकर्मकेषु चाप्रधानमेव कर्म कर्ता भवति, न प्रधानम्। अनादित्वाद्विवक्षायाः तदाह—हरदतः—"न दुहस्नुनमाम्" ( ३।१।८९ ) इत्यत्र दुहिरयं द्विकर्मकः। तत्राप्रधाने दुहादीनामिति यस्मिन् ) कर्मणि लकारस्तस्य कर्तृत्वकर्तृत्वविवक्षा। प्रधान कर्म तु कर्मैवेति। द्विकर्मकाभ्या पचदुहाभ्यामित्यादि। द्विकर्मकेषु हि प्राक् पचिः पठितः तण्डुलानोदन पचतीति प्रयोगात्। तथा च तस्मादुदुम्बरः सलोहितं फल पच्यते इति भाष्ये उट्टङ्कितम्। व्याख्यातं च पचिरत्र विषये द्विकर्मकः, वृक्षस्य पाकमन्तरेण फलपाकासभवात्।

हरदत्तस्तु ( [3]कर्मवद्भावं न मन्यते यदाह—अप्रधाने दुहादीनामिति। वृक्षोऽकथित कर्म तत्र लकारः। कालस्तु कर्तेति कालेन वृक्षः फलं पच्यते शुद्धे कर्मणि प्रत्ययः इत्युक्तं भवति। अत एवास्य कर्मवत्कर्तृत्वाभावात् कर्मवद्भाव आरब्धो भाष्ये )। दुहिपच्योर्बहुलं सकर्मकयोरिति।

तथा च कैयटः-वृक्षस्य कर्तृत्वविवक्षायामत्यन्तमप्राप्ते वचनम्। एवंविधे च विषये कर्मवद्भाव इष्यते न पुनरोदनं पचतीत्यादौ इति। अपाचि फलमिति। कर्मकर्तरीति वचनात् स्वयमेवेति ज्ञेयम्। तेन शुद्धे कर्मणि भावे चिण् भवत्येव। अपाचि माम्रेण फलम्। अदोहि गवा दुग्धमिति।

१. अनुकूलव्यापारत्वाविवक्षयात्यागं प्रति इति क० पु०।
२. सकर्मकत्वादित्यारभ्य—यस्मिन्नित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।
३. कर्मवद्भावमित्यारभ्य—भाष्ये इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

## ६१८. न दुहस्नुनमां यक्चिणौ [ ३।१।८९ ]

एषां कर्मकर्तरि यक्चिणौ न स्तः। दुहेरनेन यग् निषेध्यते। चिण् प्रागेव विकल्पितः। दुग्धे। प्रस्नुते। चिण्वदिटो न निषेध इति केचित्। अस्नाविष्ट। "स्नुक्रमोः" ( ७।२।३६ ) इति नेट्। अस्नोष्ट। नमते। अनंस्त। "णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणां च यक्चिणौ न"। कारयते। णयन्तात् कर्मकर्तरि चङ् वेति केचित्। अचीकरत्।

---

न दुहस्नुनमामिति। दुह प्रपूरणे, ष्णु प्रस्नवणे, नम प्रह्वत्वे शब्दे च। चिण्वदिटो न निषेध इति।

केचिदिति। चिण्वदिति इट् चिणि यत्कार्यं तदेवातिदिश्यते। न च चिण् निषेधश्चिणि परतो विधीयते इति चिण्निषेधे कर्तव्ये नास्ति चिण्वद्भाव इति भावः।

केचिदिति वचनात् स्वमते निषेधो भवति इत्युक्तम्। तृतीयान्ताद्वतेर्विज्ञानाद् चिणो निषेधोऽपि चिण्कार्यमेवेति। अस्नाविष्टेति। चिण्वदिटि वृद्धिः। प्रास्नोष्टेति। तदभावे नमते इति। अन्तर्भावितण्यर्थोऽत्र नमिरिति कर्मस्थक्रियः सम्पद्यते। यथा नमयति दण्डं देवदत्तः। नमते दण्डः स्वयमेवेति। णिश्रन्थि इत्यादि। णीति णिङ्णिचोः सामान्यग्रहणम्। यथा पुच्छमुदस्यति उत्पुच्छयते गौः। "पुच्छभाण्डचीवराण्णिङ्" ( ३।१।२० ) स यदाऽन्तर्भावितण्यर्थस्तदोत्पुच्छयते गाम्। पुनः सौकर्यातिशयेन कर्तृत्वविवक्षायामुत्पुच्छयत गौः स्वयमेव। उदपुपुच्छत। णिचमुदाहरति-कारयते इति। यकि प्रतिषिद्धे शपि गुणः। णयन्तात् कर्मकर्तरि चङ् वेति केचिदिति।

अय भावः-चङ्विधौ कर्तरीति न कर्तव्यम्, सामान्येन चङ् विधीयताम्। तस्य भावकर्मणोः परत्वाच्चिण् बाधको भविष्यति। किं च "चिण् ते पदः" ( ३।१।६० ) इत्यतश्चिणीति वर्तमाने पुनश्चिण्ग्रहणं बाधकबाधनार्थम्। ण्यादिभ्यो विहितमपि चङ् बाधित्वा भावकर्मणोश्चिणेव यथा स्यादिति।

यत्तु वदन्ति-पूर्वं चिण्ग्रहणं विकल्पनिषेधाभ्यां संबद्धमिति तदनुवृत्तौ तयोरप्यनुवृत्तिः स्यादिति पुनश्चिण्ग्रहणमिति। तन्न, विकल्पस्य च ( [1]विधावेव निवृत्तत्वात्। अन्यथा प्रतिषेधविधानमनर्थकं स्यात्। नापि निषेधानुवृत्तिशङ्का। न च भावकर्मणोः केनचिच्चिणः प्राप्तिरस्ति। अत एव चिण्ग्रहणं विस्पष्टार्थमिति वृत्तिः।

एवं सिद्धे चिण्ग्रहणसामर्थ्याच्चिणेवात्र भवितव्यमिति वादिनश्चङमत्र नेच्छन्ति। भाष्यकारस्तु अचीकरत कटः स्वयमेव। उदशिश्रियत कटः स्वयमेवेति चङमुदाजहार )। ततो वैमत्याच्चिण्विकल्पः फलति इति।

---

१. विधावेव निवृत्तत्वादित्यारभ्य—उदाजहारेत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०। विकल्पस्य न रथ इति निषेधस्य च प्रवृत्तिशङ्काप्राप्तिपूर्वको हि स न चात्र प्राप्तिः इति पाठः क० पु०।

अकारयिष्ट । अकारिष्ट । ग्रथ्नीते । अग्रन्थिष्ट । ग्रथ्नीते । अग्रन्थिष्ट । ब्रूते । अवोचत् । आहते । आहत । आघानिष्ट । आवधीष्ट ।

कृगॄश्रिञ्भूषार्थेभ्यः सन्नन्ताच्च यक्चिणौ न । श्रिञ्वर्जात् चिण्वदिडपि नेति केचित् । किरते । अकीर्ष्ट । गिरते । अगीर्ष्ट । श्रयते । अश्रयिष्ट । अभाषिष्ट । उंसते । अतंसिष्ट । चिकीर्षते । अचिकीर्षिष्ट ।

---

अकारयिष्टेति । चङभावे सिच् इट् गुणायादेशौ । अकारिष्टेति । चिण्वदिट्पक्षे । ग्रथ्नातीति । ग्रन्थ ग्रन्थ सन्दर्भे । क्र्यादौ । "ई हल्यघोः" (६।४।११३) "अनिदिताम्" (६।४।२४) इति नलोपः । अग्रन्थिष्टेति । अत्र ग्रन्थिग्रन्थ्योराघृषीयमोरपि ग्रहणमिच्छन्ति । [1]ग्रन्थ्यते ग्रन्थयते वा स्वयमेवेति विशेषः । ब्रूते इति । ब्रवीति कथां देवदत्तः, ब्रूते कथा स्वयमेवेत्युदाहार्यम् । वचनं शब्दप्रकाशनफलत्वात् कर्मस्थम् । अन्तर्भावितण्यर्थत्वाद्वा । अवोचतेति । ( "ब्रुवो वचिः" ( २।४।५३ ), "अस्यतिवक्ति" ( ३।१।५२ ) इत्यङ् । "वच उम्" ( ७।४।२० ) । आहन्ति माणवकं देवदत्तः । आहते माणवकः स्वयमेवेत्युदाहियते) "आङो यमहनः" (१।३।२८ ) इत्यात्मनेपदमस्मादिहितं तद्विधौ चायमकर्मकत्वेनाश्रितः । कर्माविवक्षयाऽकर्मकत्वेति पूर्वं सकर्मकत्वेऽपि विरुद्धमुदाहरणमिति मन्यते ।

हरदत्तस्तु—आत्मनेपदं विधावकर्मका ये धातवो निर्दिष्टास्ते यदाऽन्तर्भावितण्यर्थत्वात् सकर्मका भवन्ति ते आत्मनेपदाकर्मकाः, न त्वविवक्षितकर्माण इत्याह ।

इदं चोदाजहार । वेः शब्दकर्मणः । अकर्मकाच्च । विकुर्वते सैन्धवा वल्गन्तीत्यर्थः । तान् [2]यदान्यो वल्गयति, तदा तेषां कर्मत्वम् । पुनः सौकर्यातिशयाय कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः । सुष्ठु वल्गन्तीत्यर्थः ।

आहतेति । चिण् चिण्वदिटोऽभावे "हनः सिच्" ( १।२।१४ ) इति कित्त्वाद् नलोपः । "ह्रस्वादङ्गात्" ( ८।२।२७ ) इति सिचो लोपः । अघानिष्टेति । चिण्वदिट् वृद्धिः । घत्वम् । "आत्मनेपदेषु" ( २।४।४४ इति वधादेशः विकल्पेन । कृगॄश्रिभ्यादि । कॄ विक्षेपे । गॄ निगरणे । श्रिञ् सेवायाम् । भूषालङ्कारस्तदर्थाः । अकीर्ष्टेति । चिणभावे "उश्च" ( १।२।१२ ) इति कित्त्वाद् गुणाभावे ऋत इत्, रपरत्वम्, "हलि च" ( ८।२।७७ ) इति दीर्घः । चिण्वदिट् पक्षेऽकारिष्टेति । गिरतेरप्यगारिष्ट । "लिङ्

---

१. ग्रन्थते वा स्वयमेवेति क० पु० ।

२. ब्रुवो वचिरित्यारभ्य—उदाहियते इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

३. यदान् यो इति क० पु० ।

ण्यादयो ण्यन्तनिष्कर्मं गत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादि गौणेऽन्ये तु यथारुचि ॥ १ ॥
निन्ये विजनमजागारि रजनिमगमिमन्मयाचि संभोगम् ।
गोपी ह्वायमकार्यत भावरचैनामनन्तेन ॥ २ ॥

इति भावकर्मप्रक्रिया

---

सिचोरात्मनेपदेषु" (७।२।४२) इतीट्पक्षे गुणे चागरिष्ट। "वृतो वा" (७।२।३८) इति दीर्घे वा अगरीष्ट। "अचि विभाषा" (८।२।२१) इति पक्षे लत्वमप्यूह्यम्। अस्य च ध्वमि इट् चिण्वदिट् तद्विकल्पैर्लत्वविकल्पात् "विभाषेटः" (८।३।७९) इति ढत्वविकल्पात् "धि च" (८।२।२५) इति सलोपविकरपेट्त्वविकल्पाभ्यां ढस्य धस्य च व्याससमासाभ्यां द्वित्वविकल्पे सवर्णलोपविकल्पे पुनर्द्वित्वलोपादिप्रपञ्चेनाष्टत्रिंशद्रूपाणि भवन्ति । विस्तरभयादिह नोदाह्रियन्ते । शब्दालङ्कारादनुसधेयानि ।

अभ्रायिष्टेति । चिण्वदिटि । लंसते इति । लसि अलङ्कारे । भूषार्थोऽयम् । चिकीर्षते इति । कृञः सन् । प्रकृत्यर्थपेक्षमत्र कर्मस्थक्रियत्वम् । इच्छा तु कर्तृस्था । प्राधं च प्रकृत्यर्थप्राधान्यम्, तदर्थत्वादिच्छायाः ।

अत्र ये द्विकर्मकास्तेषु यदा कर्मणि प्रत्ययः ■ किं मुख्ये कर्मणि स्यादुताप्रधाने किं चोभयोरिति सदेहे निर्णयमाह—ण्यादय इति । "अकथितं च" (१।४।५१) इत्यत्र दुहादयो ण्यादयश्च द्वैराश्येन पठिताः। तेषु ण्यादयो नीहृकृष्वित्यादयः। ये च ण्यन्ताः निष्कर्माणः, ये च ण्यन्ता गत्यर्थाः, ते मुख्ये कर्मणि विहितं लकृत्यक्तखलर्थरूप यान्ति प्राप्नुवन्ति । यथा नीयते ग्राममजा, नेया नीता सुतया ।

अयं भावः—कर्माभिधाय प्रवृत्तः प्रत्ययो युगपदभिन्नकर्तृ कर्मद्वयमेकोऽभिधातुमसमर्थः इत्युभयोस्तावन्न भवति। अन्यतरत्रापि प्रवर्तमानः प्रधाने एव प्रवर्तते "प्रधानाप्रधानसमवाये प्रधाने कार्यसंप्रत्ययात्"। कथं तर्हि द्वितीयोभाभ्यां भवति। नैष दोषः, स हि प्रातिपदिकं पृथगुत्पद्यते नैकात् । तत्रैकया प्रधानमभिधीयते परयात्वप्रधानमिति नास्ति विरोधः।

एवं षष्ठ्यपि नेताऽश्वस्य ग्रामस्येति । अत्र प्रधाने नियता षष्ठी । गुणे तूभयथाभवदित्याह—गोणिका पुत्रः इति भाष्ये व्यवस्थितम् । दुह्यादिर्गौण इति । दुहयाच्यर्थेत्यादिपठिताः। धातवो गौणे कर्मणि प्रत्ययं यान्तीति संबन्धः। यथा दुह्यते गोः पयः। दोह्या। दुग्धा। सुदोहा। अत्र दुहेः प्रधानं कर्म पयः, गौस्त्वकथितं कर्माप्रधानं तत्र प्रत्ययो न ण्यादिवत् प्रधाने। युक्तं चैतत्, यतः पयो हि[१] पूर्वं गवि प्रवर्तते, अतोऽन्तरङ्गत्वाद् अप्रधाने एव गवादौ लादयो भवन्ति। न बहिरङ्गे पयसि। उक्तं च—गुणकर्मणि लादिविधिः। पूर्वं गुणकर्मणा भवति योगात्। मुख्यं कर्म प्रेप्सुर्यस्माद्

---

१. भीति क० पु० ।

[1]गव्येव यतते प्राक्। तस्मात् शुद्धस्य दुहेर्भवति गवा पूर्वमेव सबन्धः गोः दुहिना पयस्तु प्राक्, तस्माल्लादयस्तस्मिन्निति। एवमन्यत्राप्यूह्यम्।

अत्र दण्डिमुषोरप्यप्रधान एव कर्मणि प्रत्यय इष्यते। गर्गाः शतं दण्ड्यन्ताम्। दण्ड्याः। दण्डिताः। सुदण्डाः। अत्र हि शतं प्रधानं दण्डेर्ग्रहणार्थत्वात्। अधिनेश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात्। निग्रहार्थस्तु न भवतीत्येतत्कारकेष्वेव प्रपञ्चितम्। एवं मुष्यते शतं देवदत्तः। मोषितव्यः। मुषितः। मुमोष। एवं च न्यादिष्वनयोः पाठः प्रामादिकः।

( [2]एवं पचेरपि यदाह हरदत्तः—यस्माद्दुम्बरः सलोहितं फलं पच्यते इत्यत्र वृक्षस्य पाकमन्तरेण फलपाकासंभवाद् वृक्षोऽकथितं कर्मेति तत्र लकारः। अप्रधाने दुहादीनामिति )।

यद्वा तत्र द्विकर्मकगणनमात्रे तात्पर्यम्। इह तूभयत्रादिशब्दः प्रकारे। तेन [3]न्यादयो नीप्रकाराः दण्डिमुषिव्यतिरिक्ता ग्राह्याः। दुहादयश्च दण्डिमुषिसहिताः ग्राह्या इति ध्येयम्। अन्ये तु यथा रुचीति। न्यादिभ्यो ण्यन्तनिष्ठकर्मगत्यर्थेभ्यो दुहादेश्च येऽन्ये द्विकर्मका गत्यादिसूत्रोक्ताः ते यथारुचि यथेच्छं मुख्ये गौणे वा प्रत्ययं यान्तीति सबन्धः। यथा बोध्यते माणवको धर्मम्। [4]बोधितव्यो बोधितो सुबोधः। यथा बोध्यते माणवकं धर्म इत्यादि। एवं प्रत्यवसानार्थं शब्दकर्मणोरप्युदाहार्यम्।

अत्रापि प्राधान्यमेव हेतुः प्रधानभूतणिच्प्रत्ययवाच्यप्रयोजकव्यापारेणाप्यमानत्वेन प्रयोज्यस्य प्राधान्यात् प्रत्ययार्थोपसर्जनीभूतप्रयोज्यव्यापारव्याप्यस्य तु प्राकृतकर्मणो गुणत्वात्।

अन्ये त्वर्थेन न्यायेन प्रयोज्यव्यापारः प्रधानं तदर्थत्वात् प्रयोजकव्यापारस्य तत्प्राधान्याच्च तत्कर्मणोऽपि प्राकृतस्य प्राधान्यमित्याहुः। तच्चोभयं विवक्षाधीनम्। तथा हि धर्मप्रतिपादनपरत्वे वाक्यस्य धर्मस्य प्राधान्यं माणवकस्य गुणभावः। माणवकसंस्कारपरायां तु प्रवृत्तौ माणवकस्य प्राधान्यं धर्मस्य गुणभाव इति।

एवं च यथाविवक्षं प्रधाने ण्यर्थकर्मणि प्रकृत्यर्थकर्मणि वा प्रत्ययः इत्याशयेनोक्तम्—यथारुचीति। एतच्च बुद्धिप्रत्यवसानार्थशब्दकर्मकेष्वेव। गत्यर्थाकर्मकयोस्तु प्रबलप्रयोगदर्शनात् प्रयोज्यकर्मण्येव लादयो ( [1]भवन्तीति नियम इत्याहुः। इदमेवाभिप्रेत्य प्रागुक्तम्—ण्यन्तनिष्कर्मगत्यर्थाः मुख्यकर्मणीति। हृक्रोरपि ण्यन्तयोः प्रबलप्रयोगदर्शनादेव प्रयोज्यकर्मण्येव लादयः ) इत्यप्याकरे स्थितम्। यथोपसंजहार हरदत्तः। तदयमत्र निर्णयः नीवहिहृकृषिभ्यः प्रधाने कर्मणि लादयस्तत्संबन्धस्य पूर्वभावितत्वात्। दुहादिभ्यो जिदण्डिमुषिभ्यश्चाप्रधाने तत्सबन्धस्यान्तरङ्गत्वात्। बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि प्रधाने च यथेष्टम्। गत्यर्थाकर्मकयोः हृक्रोश्च ण्यन्तयोः प्रयोज्यकर्मणीति। आचार्यास्तु हृक्रोर्नैव नियममशिश्रियन्। तथा च यथारुचीत्यस्योदाहरणं गोपीहावमकार्यतेत्यादि प्रदर्शयिष्यन्ति। अत्र न्यादिष्वपि मन्थिग्रहिपचामनियम इत्याहुः।

१. प्रेमुपंसमाद् द्रव्य चेति क० पु०।
२. एवं चेत्यारभ्य—दुहादीनामित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।
३. न्यादीनि प्रकारा इति क० पु०।
४. बोधितव्यो इत्यारभ्य—गुणत्वादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

न्यादय इत्यादिनोक्तस्योदाहरणमाह—आर्यया निन्ये इत्यादि। अनन्तेन गोपी विजनं निन्ये। गोप्यत्र मुख्यं कर्म ईप्सिततमत्वात्। तत्र ले कृते तिङोक्तत्वात् प्रथमा। विजनं त्वकथितं कर्म गौणम्। ण्यन्तं निष्कर्मणमुदाहरति— अजागरि रजनि रात्रिम्। अजागारि। जागरिता। अनन्तेनेति सर्ववाक्यशेषः। अत्र जागर्तेरकर्मकस्याण्यन्ते कर्तुः गोप्याः ण्यन्ते "गतिबुद्धि" ( १।४।५२ इत्यादिना कर्मत्वम्। रजन्यास्तु "काल-भावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्" (वा०) इति। ततश्चायं द्विकर्मकः सपद्यते। तत्र मुख्ये कर्मणि गोप्यां लः। लुङि चिणि गुणः। जागर्तेश्चिण्णमुलोर्वा वृद्धिरिति केचिदुक्तेः। शेषं पूर्ववत्।

तथा ण्यन्तं गत्यर्थमुदाहरति—अगमीति। "मितां ह्रस्वः" ( ग० )।

दुह्यादिमुदाहरति—अयाचाति। अनन्तेन गोपी संयोगमयाचि। याचिता। अत्र संयोगो मुख्यं कर्म ईप्सिततमत्वात्। गोपी तु तदर्थत्वात् अकथितं कर्मामुख्यम्। तत्रापि गौणेऽपि कर्मणि गोप्यामेव प्रत्यय इति प्रथमा।

अन्ये तु यथारुचीत्येतदुदाहरति—हावमकार्यत इति। अनन्तेन गोपी हावं शृङ्गारभावजं चेष्टाविशेषं चाकार्यते कारिता। अत्र हावो मुख्यं कर्म, गोपी तु तदर्थत्वाद-मुख्यम् "हृक्रोरन्यतरस्याम्" ( १।४।५३ ) इति कर्म। तत्र यदा हाव संस्कारकत्वेनो-पादीयते गोपी तु संस्कार्यत्वात् प्रधानमिति विवक्षा। तदा गोप्या प्रत्ययः।

यदा पुनर्हावचिकीर्षयैव प्रवृत्तिः, गोपी तु तदर्थतयोपादीयते, तदा हावमुख्य-त्वात् प्रत्ययमुदाहरति—भावश्चैनामनन्तेनेति। एना गोपीम्। अत्र गोप्यास्तिङानुक्त-त्वाद् द्वितीया। भावात्तूक्तत्वात् प्रथमा। भावश्चित्तवृत्त्यर्थकः क्रियाविशेषः। ये तु हृक्रोरपि ण्यन्तयोः प्रयोज्यकर्मण्येव प्रत्ययमिच्छन्ति तेषामेतदनुदाहरणम्। बुद्धि-प्रत्यवसानार्थशब्दकर्ममूदाहर्तव्यम्। अबोध्यत[1] वा पठनीयम्।

यद्वा कु विज्ञाने दीर्घान्त[2]श्चुरादिराकुस्मीयेष्वात्मनेपदी पठ्यते कैश्चित्। तथा च वोपदेवः। कूङ्[3] विज्ञाने इति पठित्वा कूङ् कारयते इत्युदाजहार। तस्य हेतुमण्णिचि बुद्ध्यर्थत्वात् द्विकर्मकस्येदमुदाहरणं द्रष्टव्यमित्यर्थसूक्ष्मेक्षिकया।

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् सा भावकर्मक्रिया॥ १॥

इति भावकर्मप्रक्रिया॥ भावकर्म ५००।

---

१. अबोध्येति क० पु०।
२. श्चुरादिराकुस्मीयेष्वात्मनेपदीति क० पु०।
३. कुन्ङ्ङ् इति क० पु०।

# अथ लकारार्थप्रक्रिया

## ६१९. अभिज्ञावचने लृट् [ ३।२।११२ ]

स्मृतिपर्यायधातुयोगे भूतानद्यतने धातोर्लृट् स्यात्। स्मरसि कृष्ण गोकुले वत्स्यामः।

## ६२०. न यदि [ ३।२।११३ ]

यद्युक्ते प्रागुक्तं न। अभिजानासि कृष्ण यद्वने अभुञ्जमहि।

## ६२१. विभाषा साकाङ्क्षे [ ३।२।११४ ]

यच्छब्देन योगेऽपि उक्तार्थे लृड् वा स्यात्, लक्ष्यलक्षणसंबन्धे प्रयोक्तुराकाङ्क्षायाम्। स्मरसि कृष्ण वने वत्स्यामः, तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्। पक्षे लङ्। एवं यच्छब्दे।

---

अभिज्ञा। अभिज्ञा स्मृति, सा उच्यतेऽनेनेति अभिज्ञावचनः। वचनग्रहणं पर्यायार्थमित्याह—स्मृतिपर्यायधातुयोगे इति। तेन बुध्यसे, चेतयसे इत्यादियोगेऽपि भवति। अर्थप्रकरणादिनाऽभिज्ञायामप्येषां वृत्तिसंभवात्। वत्स्याम इति। वस निवासे। "स्यतासी" ( ३।१।३३ ) इति स्यः। "सः स्यार्धधातुके" ( ७।४।४९ ) इति सस्य तः। "अतो दीर्घो यञि" ( ७।३।१ )। एवमुत्तरेष्वपि प्रक्रिया स्मर्तव्या। विस्तरभयादत्र न लिख्यते। वाक्यार्थः कर्म। पश्य मृगो धावतीतिवत्।

न यदि। यदीति सप्तमी। अभिज्ञावचन इत्यनुवर्तते। तेन यत्र यच्छब्दोऽस्ति तत्र यदभिज्ञावचनं तन्नियोगतो यच्छब्दसहितमेवेत्याशयेनाह—यद्युक्ते इति। अभुञ्जमहि इति भुज पालनाभ्यवहारयोः। लङ्।

विभाषा। यदीति नानुवर्तते। सामान्येनायं विधिरित्याह—यच्छब्देन योगेऽपि इति। अभिज्ञावचनेन योगे इत्यर्थः। तेनोभयत्र विभाषेयम्। यद्योगे निषेधादप्राप्तेऽन्यत्र नित्यं प्राप्तेऽस्यारम्भात्।

आकाङ्क्षाया विषयमाह—लक्ष्यलक्षणसंबन्धे इति। यत्रैको धात्वर्थो लक्ष्यः, अपरो लक्षणम्। तत्र द्वयोर्लक्ष्यलक्षणभावेन यः संबन्धः तद्विषयिणी चेदाकाङ्क्षेत्यर्थः।

आकाङ्क्षायाश्चेतनधर्मत्वात् धातोर्विशेषणं न संभवतीत्यालोच्याह—प्रयोक्तुरिति। उदाहरणे साकाङ्क्षतामुपपादयति। वासो लक्षणमिति। परं प्रति सिद्धतरत्वात्। चारणं लक्ष्यमिति। अनभ्यासदशापन्नत्वेन सहसा बुद्धयचनारोहान्नत्व-

## ६२२. परोक्षे लिट् [ ३।२।११५ ]

चकार । उत्तमपुरुषे वैचित्त्यात् पारोक्ष्यम् । सुप्तोऽहं किल विललाप । अत्यन्तापह्नवेऽपि लिट् । नाहं कलिङ्गं जगाम ।

## ६२३. हशश्वतोर्लङ् च [ ३।२।११६ ]

आभ्यां योगे लिड्विषये लङ् स्यात् चाल्लिट् । इति हाकरोत् चकार वा । शश्वदकरोत् चकार वा ।

## ६२४. प्रश्ने चासन्नकाले [ ३।२।११७ ]

लङ् स्यात् चाल्लिट् । अगच्छत् किम् ? जगाम किम् ? आसन्नकाले किम् ? कंसं जघान किम् ?

---

परिज्ञानादिति बोध्यम् । अननुभूते स्मृतेरेवासंभवात् । अस्ति चानयोः संबन्धप्रतिपादने प्रयोक्तुराकाङ्क्षा । स हि न वासमात्रं प्रतिपाद्य कृतीभवति । यतस्तेनैव प्रसिद्धेन गोचारणमपि स्मारयितुं प्रवर्तते । लडिति । स्मरसि कृष्ण वनेऽवसामस्तत्र गाः प्रचारयामेति । एवमिति । यद्वने वत्स्यामः इत्याद्यूह्यम् ।

परोक्षे । पूर्वं व्याख्यातमप्येतद्विशेषं वक्तुं स्मारितम् ।

अत्र पारोक्ष्यं साधनशक्त्याश्रयस्य द्रव्यस्य विवक्षितमित्युक्तम् । तत्रोत्तमविषये लिट् न प्राप्नोति । तत्र हि बुद्धीन्द्रियशरीरादिसंघातः कर्ता, स चात्मनः प्रत्यक्ष एवेत्याशङ्क्याह—उत्तमपुरुष इत्यादि । विक्षिप्तं चित्तं यस्य स विचित्तस्तस्य भावो वैचित्त्यम् । मदस्वप्नादिभिश्चित्ते विक्षिप्ते कश्चित् स्वगतमेव न जानाति, पश्चादेवं त्वया कृतमिति पार्श्वस्थेभ्यः श्रुत्वा प्रयुङ्क्ते 'सुप्तोऽहं किल विललाप' इति । किलेत्यज्ञानं सूचयति । तेनात्मसाध्याऽपि क्रिया यदा चित्तविक्षेपान्नोपलक्ष्यते, तदाऽसौ परोक्षेति भवति उत्तमविषयेऽपि लिडित्यर्थः ।

अत्यन्तापह्नवे लिट् । अपह्नवोऽपलापः । नाहमिति । कलिङ्गो नाम जुगुप्सितो देशः ।

तत्र प्रविश्य त्वया चिरं स्थितमिति कश्चिदुक्तः सन्नाह—नाहं कलिङ्गान् जगामेति । न केवलमवस्थानमेव निषिध्यते, किं तर्हि तद्धेतुभूतं गमनमपीति । भवत्यत्रात्यन्तापह्नवः । यदा तु गमनमेवाभियुक्तस्तदेवापलपति न तदाऽत्यन्तापह्नव इति लडेव भवति ।

प्रश्ने चासन्न । पृच्छ्यते इति प्रश्नः । कर्मणि नङ् । आसन्नकाले पृच्छ्यमानेऽर्थे वर्तमानाद्धातोरित्यर्थः स्यात् । ततोऽर्थान्तरवाचिभ्यो न स्यात् । अत्र पञ्चवर्षाभ्यन्तरमासन्नकालं पञ्चवर्षातीतं तु विप्रकृष्टकालमिति वर्णयन्ति ।

### ६२५. लट् स्मे [ ३।२।११८ ]

स्मयोगे लिङर्थेऽपि लट् स्यात् । यजति स्म युधिष्ठिरः ।

### ६२६. अपरोक्षे च [ ३।२।११९ ]

भूतानद्यतनेऽपरोक्षेऽपि स्मयोगे लट् स्यात् । एवं स्म पिता ब्रवीति ।

### ६२७. ननौ पृष्टप्रतिवचने [ ३।२।१२० ]

ननु योगे भूतेऽपि लट् पृष्टप्रतिवचने । अकार्षीः किम् ? ननु करोमि भोः । पृष्टप्रतिवचने इति किम् ? नन्वकार्षीत् ।

### ६२८. नन्वोर्विभाषा [ ३।२।१२१ ]

आभ्यां योगे प्रागर्थे लड् वा स्यात् । अकार्षीः किम् ? न करोमि । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ।

### ६२९. पुरि लुङ् चास्मे [३।२।१२२ ]

पुरा शब्दयोगे भूतानद्यतने लुङ् लटौ वा स्तः, न तु स्म योगे । पक्षे यथा प्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः अवसन् । ऊषुर्वा । अस्मे किम् ? यजति स्म पुरा ।

---

ननौ पृष्ट । पृष्टमिति भावे क्तः । प्रश्नपूर्वं प्रतिवचनमिति मध्यमपदलोपी समास इति केचित् । हरदत्तस्तु कर्मणि क्तः । पृष्टस्य प्रतिवचनम् । पृष्टप्रतिवचनमिति षष्ठीसमास इत्याह—अत्यन्तासन्नकाले चायं विधिरिष्यते । अनद्यतने परोक्षे इति च निवृत्तम् । भूतसामान्येऽयं विधिरित्याह—भूतेऽपीति ।

पुरि लुङ् । पुराशब्दस्य आत इति योगविभागात् आतो लोपेनायं निर्देशो न पुःशब्दस्य, तस्य भूते वृत्त्यभावादिति दर्शयति—पुराशब्दयोगे इति । अनद्यतने इति । लुङ्ग्रहणं चात्र लिङ्गम् । व्यवहितमप्यनद्यतनमनुवर्तते इति । यदि भूतमात्रे स्यात् [1]विभाषया लटो विधानात् तेन मुक्ते लुङप्ययत्नसिद्धः । अनद्यतनानुवृत्तौ तु लटा मुक्ते लङेव स्यादिति कर्तव्यं लुङ्ग्रहणम् ।

चो लटं समुच्चिनोतीत्याह—लुङ् लटाविति । अवसन्निति । अनद्यतने भूते लङ् । ऊषुरिति । परोक्षे भूते लिट् । "वचि स्वपि" ( ६।१।१५ ) इति संप्रसारणम् । पक्षे यथाप्राप्तमिति वचनादभिज्ञावचने लृडप्युदाहार्यः । स्मरसि वत्स्यन्तीह पुरा छात्रा इति ।

---

१. विषये लटो विधानादिति क० पु० ।

६३०. यावत्पुरानिपातयोर्लट् [ ३।३।४ ]

आभ्यां निपाताभ्यां योगे भविष्यति काले धातोर्लट् स्यात् । यावद् भुङ्क्ते । पुरा भुङ्क्ते । निपातयोः किम् ? यावद् दास्यते तावद् भोक्ष्यते । करणभूतया पुरा यास्यति ।

६३१. विभाषा कदाकर्ह्योः [ ३।३।५ ]

आभ्यां योगे भविष्यति लड् वा स्यात् । पक्षे यथा प्राप्तम् । कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा ।

६३२. किंवृत्ते लिप्सायाम् [ ३।३।६ ]

विभक्त्यन्तं डतरडतमान्तं च किमो रूपं किं वृत्तं तद्योगे भविष्यति वा लट् स्यात् लिप्सायाम् । कं कतरं कतमं वा त्वं भोजयसि ? भोजयितासि वा ?

---

यावत् पुरा । यावत्पुरेत्यविभक्तिको निर्देशः इति व्याचष्टे—आभ्यामित्यादि । भविष्यति गम्यादयः इत्यधिकारादाह-भविष्यत्काले इति । यावद् भुङ्क्ते इत्यादि । निपातावेतौ निश्चयं द्योतयतः । एतयोश्च प्रयोगे वर्तमाने लट् न भवति, भविष्यत्कालतया वर्तमानकालताया बाधात् । यावद् दास्यते इत्यादि । यत्परिमाणस्य "यत्तदेतेभ्यः परिमाणे वतुप्" ( ५।२।३९ ) "आ सर्वनाम्नः" ( ६।३।९१ ) लाक्षणिकत्वादेवानयोरग्रहणे सिद्धेऽपि "लक्षणप्रतिपदोक्त" परिभाषाया अनित्यत्वज्ञापनार्थम् निपातग्रहणम् । कारणभूतयेति । पुःशब्दोऽयं तृतीयान्त इति दर्शयति ।

विभाषा कदा । ननु कर्हिशब्दोऽयमनद्यतनविषयः । "अनद्यतने, र्हिलन्यतरस्याम्" ( ५।३।२१ ) किमोर्हिल् इति व्युत्पादनात् । ततश्च तद्योगे लुटैव भाव्यम्, न तु लृटा कर्हि भोक्ष्यते इति ।

अत्राहुः —भोक्ष्यते इति पदं भविष्यत्सामान्ये वर्तते . अनद्यतनावगतिस्तु कर्हिशब्दाधीना । न च वाक्यार्थः पदसंस्कारे उपयुज्यते इति । भोक्तेति ।

नन्वयं लृट् भविष्यत्सामान्ये विहितः सोऽनद्यतने लुटा बाधिष्यते, तस्मात् विकल्पस्य विषयः ।

अत्र वदन्ति—"अनद्यतने लुट्" इत्यत्रायं योगोऽनुवर्तनीयः । तेन लुड्विषयेऽपि पक्षे लट् भवति । एवमुत्तरमपि योगत्रयं तत्रानुवर्त्यन्ते तथा सर्वेऽपि लड्उदाह्रियते इति ।

किं वृत्ते । वर्ततेऽस्मिन्निति वृत्तम् "कोऽधिकरणे च" इति क्तः । किमो वृत्त शेषपष्ठ्या समासः ।

६३३. लिप्स्यमानसिद्धौ च [ ३।३।७ ]

लिप्स्यमानेनान्नेन स्वर्गादेः सिद्धौ गम्यमानायां भविष्यति लड् वा स्यात्। योऽन्नं ददाति दास्यति दाता वा, स स्वर्गं याति यास्यति याता वा।

६३४. लोडर्थलक्षणे च [ ३।३।८ ]

लोडर्थस्य प्रैषादेः लक्षणक्रियावचनाद्धातोर्भविष्यति लड् वा स्यात्। आशंसायामपीति केचित्। कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय। पक्षे लुट्लृटौ।

६३५. वर्तमानसामीप्ये वर्तमानवद्वा [३।३।१३१]

समीपमेव सामीप्यम्। स्वार्थेऽपि ष्यञनेन ज्ञाप्यते। वर्तमानसमीपे भूते भविष्यति वा काले वर्तमानवत् प्रत्यया वा स्युः। कदा आगतोऽसि? अयमागच्छामि। अयमागमं वा। कदा आगमिष्यसि? एष आगच्छामि, आगमिष्यामि वा।

---

अत्र किंशब्दोऽवयवत्वेन वर्तते, तत् सर्वं किं वृत्तम् ततश्च कीदृशः किमीय इत्यादावपि प्रसङ्ग इति परिसंख्यानमाह—विभक्त्यन्तमित्यादि। यत् किमो रूपं साक्षाद् विभक्तिपरं डतरडतमप्रत्ययपरं वा तदिह किंवृत्तमित्युच्यते पूर्वाचार्यप्रसिद्धेरिति भावः।

किमित्यादि। लब्धुकामः पृच्छतीत्यस्ति लिप्सा।

लिप्स्यमानसिद्धौ। लब्धुमिष्यते यत्तत् लिप्स्यमानमन्नादि तन्निमित्ता चेत् स्वर्गादेः सिद्धिः प्रतिपाद्यते तत्रेत्यर्थमाह—लिप्स्यमानेनेति। वस्तु कथनमेतत्। शेषषष्ठ्या तु समासः।

ननु यत्र लिप्स्यमानस्य सिद्धिर्गम्यते लिप्सापि तत्रास्ति इति पूर्वेणैव सिद्धम्। सत्यम्। किं वृत्त इति तदुक्तम्। अकिंवृत्त्यर्थोऽयमारम्भः इत्याशयेनोदाहरति—योऽन्नमित्यादि। अत्रदातुः स्वर्गसिद्धिमाचक्षाणः प्रोत्साह्यते।

लोडर्थलक्षणे च। लोटोऽर्थः प्रैषातिसर्गप्राप्तकालाः विध्यादयश्च। तस्य लक्षणं परिचायको धात्वर्थो लोडर्थलक्षणः सूत्रे उक्तः। स च धात्वर्थः क्रियेति व्याचष्टे—लक्षणक्रियावचनादिति। प्रैषादिसापेक्षत्वेऽपि नित्यसापेक्षत्वाल्लक्षणशब्दस्य क्रियेत्यनेन समासः। लक्ष्यतेऽनयेति लक्षणा। सा चासौ क्रियेति कर्मधारये पुंवद्भावः। कृष्णश्चेत्यादि। अत्र भोजनमुपलक्षणम्, चारणप्रैषो लक्ष्यम्।

वर्तमान। यद्ययं भविष्यत् स्यात्, ततो वर्तमानस्य यत् [1]सामीप्यं भूतभविष्यद्भ्याम् इति तावता[2]र्थोऽतिदेशवैयर्थ्यात्। यदि हि वर्तमाने प्रत्ययास्ते तत्समीपेऽपि तस्मिन् सिद्धेवेति।

---

१. यत्सामर्थ्यं इति क० पु०। २. तावत्यर्थेन निर्देशवैयर्थ्यंतापे इति क० पु०।

## ६३६ आशंसायां भूतवच्च [ ३।३।१३२ ]

भविष्यति काले भूतवत् च कात् वर्तमानवच्च प्रत्यया वा स्युः आशंसायाम्। देवश्चेद् वर्षति, अवर्षीत्, वर्षिष्यति वा, एतद् धान्यं वपामः, अवाप्स्म, वप्स्यामो वा।

---

अथ वर्तमानं प्रति सामीप्यमित्यर्थः स्यात्। तथापि भूतभविष्यन्तौ कालौ नाभिधेयेताम्। यदि तु सामीप्येन तद्वन्तौ कालौ लक्षयिष्यते, तर्हि लाघवाय समीप इत्येव वाच्यम्, किं व्यञ् इत्यत आह—समीप एव सामीप्यमिति

न चात्र पक्षे व्यञो वैयर्थ्यमित्याह—स्वार्थेऽपीत्यादि। ज्ञापनप्रयोजनं च (¹चातुर्वर्ण्यम्। चातुराश्रम्यमित्यादिसिद्धिः भूते भविष्यति चेति। स एव वर्तमानस्य समीपः)। वर्तमानोऽस्य समीपः संभवतीति भावः।

²वर्तमानवदिति। वर्तमाने लट् इत्यारभ्य यावद् "उणादयो" (३।३।१) इति ये ये वर्तमाने विहितास्ते इत्यर्थः। वत्करणं सर्वसादृश्यार्थं येन विशेषणेन यत्र प्रकृत्युपपदोपाधौ यो विहितः स तथैव भवति, नान्यतो विहितोऽन्यतोऽपीति। यथा "पूङ्यजोः शानन्" (३।२।१२८) वर्तमाने विहित स ताभ्यामेव वर्तमानसमीपे भवति, नान्यतः। अलंकरिष्णुरिति ताच्छील्यादिविशिष्टे कर्त्रर्थलंपूर्वात् कृञः इष्णुजुक्तः स वर्तमानसामीप्येऽपि तथैव भवति। कदा³ आगतोऽसि—इति भूतकालेन प्रश्नः। उदाहरणे भूतकालाभिव्यक्तये। एवं कदा गमिष्यसीत्यत्राप्यूह्यम्।

उदाहरणयोरयमेप पदाभ्यामागमना विनाभूत यद्रूपं प्रस्वेद⁴परिकरबन्धादियुक्तं तत्प्रतिनिर्दिश्यते। इदानीमागमनमित्यर्थः। एव हि कदेति प्रश्नेउत्तरं सगच्छते, सामीप्यं च द्योतितं भवति। आरोपादप्युपपत्तेर्नेदमारब्धव्यमित्यन्यत्र विस्तरः।

आशंसायामिति। भविष्यत्काले इति। अप्राप्तस्यार्थस्य प्राप्तुमिच्छा ह्याशसा। सा च न भूतार्थविषयिणी संभवतीति भावः। आशंसायामिति। आशंस्यमानक्रियावचनाद्धातोरिति यावत्। ⁵देवश्चेदित्याद्याशंसावाक्यम्। तत्र वर्षणं वपनं चोभयमप्याशास्यते इति उभयत्रापि प्रत्ययः। भूतवदिति च। भूतसामान्यप्रत्ययो लुङेवातिदिश्यते नानद्यतनविशेषे विहितौ लङ्लिटौ "सामान्यातिदेशे विशेषानतिदेशः" (प०) इति न्यायात्। लुटोऽपि विषयेऽयमिष्यते। तथा चाग्रे लृड्ग्रहणम्।

---

१. चातुर्वर्ण्यमित्यारभ्य—समीप इत्यन्तो (    ) रेखाङ्कितो नास्ति क० पु०।
२. वर्तमानवदिति नास्ति क० पु०।
३. कदा आगतोऽसि इति नास्ति क० पु०।
४. स्वतेरिति क० पु०।
५. देवश्चेदित्याद्याशंसावाक्यमिति क० पु०।

६३७. क्षिप्रवचने लृट् [ ३।३।१३३ ]

क्षिप्रपर्यायोपपदे भविष्यति लृडेव स्यादाशंसायां न भूतवत्। वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा आयास्यति शीघ्रं वप्स्यामः। नेति वाच्ये लड्किलुड्-बाधनार्था। श्वः शीघ्रं वप्स्यामः।

६३८. आशंसावचने लिङ् [ ३।३।१३४ ]

आशंसापर्यायोपपदे भविष्यति लिङेव स्यान्न भूतवत्। गुरुश्चेदुपेयात् आशंसेऽधीयीय आशंसे क्षिप्रमधीयीय।

६३९. भूते च। [ ३।३।१४० ]

"उताप्योः समर्थयोः" इत्यादिलिङ्निमित्ते भूतेऽर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ। यद्यहमैष्यमुताभोक्ष्ये अप्यभोक्ष्ये न भुक्तवान्।

---

क्षिप्रवचने। वचनग्रहणं स्वरूपस्यैव ग्रहणं मा विज्ञायीत्येवमर्थमित्याह—क्षिप्र-पर्यायोपपदे इति। भूतवच्चेत्यस्यापवादोऽयमित्याह—न भूतवदिति। लुटो बाधनार्थेति। अन्यथा ह्यनद्यतने भविष्यति लुटं बाधित्वापवादत्वाल्लुडेव स्यादित्याशयः। लृड्-ग्रहणात्तु सोऽपि बाध्यते। अत एव पूर्वं लृडेव स्यादिति साधारणं व्याख्यानम्[१]।

आशंसावचने। न भूतवदिति। उपलक्षणमेतत्। भूतवच्चेत्यनेन प्रापितानां सर्वेषामपवाद इत्यर्थः। लिङेवेत्येवकारेण क्षिप्रवचने लृटमपि व्यावर्तयति।

यत्र हि क्षिप्रवचनमाशंसावचनं चोपपदं तत्र परत्वाल्लिङेव भाव्यम्। लृटस्तु यत्राशंसावचनं नास्ति सोऽवकाशः। तदेतदुदाहरति—आशंसे क्षिप्रमधीयीयेति। इङ् अध्ययने। अधिपूर्वः। "लिङः सीयुट्" (३।४।१०२)। सलोपः। धातोरियङ्। "इणोऽत्[२]" धातूपसर्गयोः सवर्णदीर्घः।

भूते च। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" (३।३।१३९) इति सर्वमनुवर्तते। तेन च भविष्यति विहित इत्यनेन भूते विधीयते। "उताप्योः समर्थयोः" (३।३।१५२) इत्यादि लिङ्निमित्तमिति। तेनात्र नित्यं लृङ् भवतीत्यर्थः।

एवं च यद्यहमैष्यमिति यदिशब्दस्य पाठो न युक्तः "जातुयदोर्लिङ्" (३।३।१४७) इत्यत्र 'यदायद्योरुपसंख्यानम्" (वा०) इति यदेर्लिङ् निमित्तत्वादुत्तरसूत्रेण लृङो विकल्पनात्। तस्मादहमैष्यमित्येव पठितव्यमित्याकरः। न भुक्तवानिति। एतेन क्रियातिपत्तिं दर्शयति।

---

१. नास्ति क० पु०।

२. इणोऽत् इति नास्ति क० पु०।

६४०. वोताप्योः [ ३।३।१४१]

वा आ उताप्योः । उताप्योरिति यावद् भूते लिङनिमित्ते लृङ्क्रियातिपत्तौ वेत्यधिक्रियते ।

६४१ गर्हायां लडपि जात्वोः [ ३।३१४२ ]

आभ्यां योगे लट् स्यात् कालत्रयेऽपि गर्हायाम् । कालविशेषप्रत्ययापवादः । अपि जायां त्यजसि जातुगणिकामाधत्से । अत्र लिङ्निमित्ताभावात् लृङ् न ।

६४२. विभाषा कथमि लिङ् च [ ३।३।१४३ ]

कथमायोगे कालत्रयेऽपि वा लिङ् स्यात् । चात् लट् गर्हायाम् । कथं धर्मं त्यजेः त्यजसि वा । पक्षे कालत्रयलकाराः । अत्र भविष्यति नित्यं लृङ् भूते वा । कथं नाम तत्र भवान् धर्ममत्यक्ष्यत् ।

---

वोताप्योरिति । वा आ उताप्योरित्यनेनाङोऽत्र प्रश्लेषं विवृणोति । मर्यादायां चाङित्यादि । "उताप्योः" ( ३।३।१५२ ) इति यावत् । उताप्योरिति सूत्रैकदेशस्य सप्तम्यन्तस्यानुकरणम् । ततश्च "प्रकृतिवदनुकरणम्" ( प० ) भवतीत्यनुकरणस्याप्रत्यय इति निषेधेनाप्रातिपदिकत्वादाङोऽपि योगे पञ्चमी न भवतीत्याहुः । वस्तुतस्तु पर्युदासोऽयं न प्रसज्यप्रतिषेधः "इयं." ( ७।१।१३ ), "तुभ्यमह्यौ ङयि" ( ७।२।९५ ) इत्यादिनिर्देशानुपपत्तेरिति स्थितम् । अत्र पक्षे छान्दसः पञ्चम्या लोपो द्रष्टव्यः । अत्रापि लिङ्निमित्ते लृङ् क्रियातिपत्तौ भूते च इत्यनुवर्तते । तेन वेत्यधिकारेण तदनुवृत्तिरपि समुच्चीयते इत्याह—भूते इत्यादि ।

विभाषा कथमि । पक्षे इति । स्वे स्वे काले विहिताः लङ्-लिट्-लुट्-लृङादयोऽप्युदाहार्या इत्यर्थः । यद्येवं लडपि विभाषाग्रहणेन भविष्यति, किं चाल्लट् समुच्चीयते । सत्यम् । वर्तमाने सेत्स्यति कालान्तरे तु न स्यात् । अत्रेत्यादि । ( [1]भूते एव क्रियातिपत्तौ विकल्पाधिकारात् लिङ्निमित्तं चास्ति कथं गर्हा च । अनेन पूर्वनिपातः लक्षणव्यवहारचिह्नम् । तेनानयोः प्रत्ययाभ्यां यथासंख्यं न भवति । उत्तरत्र चोपपदाभ्याम् ।

अनवक्लृप्त्य । अनवक्लृप्तिं व्याचष्टे–असंभावनेति । अमर्षो । अक्षमा । अकिंवृत्तेऽपि इति स्पष्टार्थम् । अस्वरितत्वादेव तदननुवृत्तेरविशेषेणोभयत्र सिद्धेः । क्रियातिपत्तौ पक्षे लृङिति । भूते इति शेषः । भविष्यति नित्यमिति तु गम्यत एवेति नोक्तम् ।

---

१; भूते एवेत्यारभ्य— चोपपदाभ्यामित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

### ६४३. किंवृत्ते लृङ्लृटौ [ ३।३।१४४ ]

किंवृत्तयोगे गर्हायामेतौ स्तः। कालत्रयेऽपि। सर्वलकारापवादः। कः कतरो वा हरिं निन्देत् निन्दिष्यति। लृङत्र प्राग्वत्।

### ६४४. जातुयदोर्लिङ् [ ३।३।१४७ ]

आभ्यां योगे कालत्रयेऽपि लिङेव स्यादुक्तेऽर्थे। यदा यद्योर्योगे च। जातु यत् यदा यदि वा त्वादृशो। हरिं निन्देत् नावकल्पयामि न मर्षयामि। लृङ् प्राग्वत्।

### ६४५. यच्चयत्रयोः [ ३।३।१४८ ]

आभ्यां योगे पूर्ववत्। यच्च यत्र वा त्वमेवं कुर्याः, न श्रद्दधे न मर्षये। लङ् प्राग्वत्।

### ६४६. गर्हायां च [ ३।३।१४९ ]

अनवक्लृप्त्यमर्षयोरिति निवृत्तम्। यच्चयत्रयोर्योगे गर्हायां लिङेव स्यात्। यच्च यत्र वा त्वं शूद्रं याजयेः। अन्याय्यं तत्। लृङ् पूर्ववत्।

---

किं किलास्त्यर्थेषु। किं किलेति निपातसमुदायः क्रोधद्योतकः उपपदम्। केवलयोर्[1]एतयोरनवक्लृप्त्यमर्षयोर्वृत्त्यसंभवादित्यभिप्रेत्याह—किं किल शब्दे इति। पूर्वेणैव सिद्धे लृङ्ग्रहणं लिङो निवृत्त्यर्थमित्याशयेन व्याचष्टे—लृडेव स्यादिति। अस्तीत्यादि। त्वं शूद्रीं गमिष्यसि। त्वत्कर्तृकं शूद्रीगमनमस्ति तन्न मर्षये इत्यर्थः। ([2]तथा च भाष्यम्-भवति-पठति-पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीति)। अत्रेत्यादि क्रियातिपत्ताविति शेषः।

([3]जातुयदोर्लिङ्। अनवक्लृप्त्यमर्षयोरित्येव लिङ्लृटोः सिद्धौ पुनर्विधानं लिङेव यथा स्यात्, लृङ् मा भूदित्येवमर्थमित्याशयेन व्याचष्टे—लिङेव स्यादिति। यदायद्योर्योगे चेति। उपसंख्यानात्। लृङ् प्राग्वदिति। लिङ्निमित्तमस्तीति भविष्यति नित्यं भूतेवेत्यर्थः)।

---

१. एतयोरिति नास्ति क० पु०।

२. तथा चेत्यारभ्य—भवन्तीत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

३. जातुयदोर्लिङ् इत्यारभ्य—भूतेवेत्यर्थं इत्यन्तो नास्ति ( ) रेखाङ्कितः क० पु०।

## ६४७. चित्रीकरणे च [ ३।३।१५० ]

यच्च यत्र वा त्वं याजयेः। चित्रमेतत्।

## ६४८. शेषे लृडयदौ [ ३।३।१५१ ]

यच्चयत्राभ्यामन्येन यदिवर्जेन योगे लृडेव स्यात् कालत्रये चित्रीकरणे। आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति। अत्र लृङ् न। अयदौ किम्। आश्चर्यं यदि स भुञ्जीत।

## ६४९. उताप्योः समर्थयोर्लिङ् [ ३।३।१५२ ]

आभ्यां तुल्यार्थाभ्यां योगे लिङ् स्यात् त्रिकालेषु। सर्वलकारापवादः। बाढार्थे तुल्यार्थतानयोः। उत अपि वा हन्यादघं हरिः। इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ्।

## ६५०. कामप्रवेदनेऽकच्चिति [ ३।३।१५३ ][1]

स्वाभिप्रायाविष्करणार्थे लिङ् स्यात् कालत्रये न तु चिति। कामो मे भुञ्जित भवान्। अकच्चित् किम्। कच्चिति जीवति।

---

( [1]चित्रीकरणे च। चित्रीकरणमाश्चर्यम्।

शेषे लृडयदौ। यद्वा यत्नापेक्षः शेषो न चित्रीकरणापेक्षः )। लिङ्लृटोः सिद्धौ पुनः करणापेक्षस्तस्येह स्वरितत्वेनाधिकारादित्याशयेन व्याचष्टे—यच्च यत्राभ्यामन्येनेति। लृडेव स्यादिति। सर्वलकारापवाद इत्यर्थः। अत्र लृङ् नेति। लिङ्निमित्ताभावादित्याशयः। आश्चर्यं यदि स भुञ्जीतेति। अत्रानवक्लृप्तिराश्चर्यं च द्वयं गम्यते। तत्राश्चर्यं निमित्ते लृटि प्रतिषिद्धे यदा यद्योर्योगे चेत्यनवक्लृप्तौ लिङ्। भाष्ये तूक्तम्। संभावनार्थो यदिशब्दः। तत्र संभावनेऽलमित्यनेन लिङ्। एवं च चित्रीकरणमत्र नास्तीति अयदौ इति निषेधानर्थक्यमिति।

उताप्योः। समानोऽर्थो ययोस्तौ समर्थौ शकन्ध्वादित्वात् पररूपं समशब्द आवृत्तिविषये तुल्यार्थः। इतः प्रभृतीत्यादि। वाधिकारो निवृत्त इत्यर्थः।

कामप्रवेदने। काम इच्छा तस्याः प्रवेदनं प्रकाशनं तदाह—स्वाभिप्रायाविष्करणे इति। कच्चिज्जीवसीति। कच्चिदित्यव्ययं कामप्रवेदने।

---

१. चित्रीकरणे चेत्यारभ्य—चित्रीकरणापेक्ष इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

## ६५१. सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे [३।३।१५४]

अलमर्थेन प्रौढ्या संभावनेऽर्थे लिङ् सिद्धश्चेदलमोऽप्रयोगः कालत्रये। अपि गिरिं शिरसा भिन्द्यात्। अलमोऽप्रयोगे किम्? अलं कृष्णो हस्तिनं हनिष्यति।

## ६५२. विभाषा धातौ सम्भावनवचने यदि [३।३।१५५]

संभावनेऽर्थे धातावुपपदे प्रागुक्तेऽर्थे लिङ् वा स्यात्, न तु यच्छब्दे। संभावयामि भुञ्जीत भवान् भोक्ष्यते वा। अयदि किम्? संभावयामि यद् भुञ्जीथास्त्वम्।

---

संभावने। सभावनमसति[1] विधुरप्रत्यये भवितव्यमनेनेति ज्ञानम्। तस्य विशेषणमलमिति। चेदिति। अलमिति चेत्तत्संभावनमिति विपरिणतेनान्वयः। संभावनमलमर्थविषयश्चेदित्यर्थः। अलमर्थश्चात्र पर्याप्तिः, न भूषणादिः। धातोश्च प्रत्ययविधानात् तादर्थ्यगोचरमेव सामर्थ्यं गृह्यते। इदं धात्वर्थमनुष्ठातु समर्थमित्येवं रूपत्वेन संभावनमित्यर्थः। तदाह–अलमर्थेनेत्यादि। अलमोऽर्थं विवृणोति–प्रौढ्येति। स्वकार्यनिष्पादनं प्रौढिः। सिद्धाप्रयोग इति व्याचष्टे—सिद्धश्चेदलमोऽप्रयोग इति। सन्निधानादलम इति लभ्यते। चेदिति वस्तु कथनं न पुनरत्र चेच्छब्दस्यान्वयः। सप्तम्यन्तेन संबन्धासभवात्। क्व पुनः सिद्धोऽलमोऽप्रयोगः? यत्र तस्यार्थो गम्यते न[2] चासौ प्रयुज्यते। कालत्रये इति। उपलक्षणमेतत्। संभावनस्य भविष्यद्विषयत्वाद्भविष्यतो वाऽयं विधिरत एव लृट प्रत्युदाहरिष्यति। अपि गिरिमित्यादि। एवं नामायं बलवानित्यर्थः। गिरिं तु भिनत्तु मा भिदत। अलं कृष्ण इति। पर्याप्तं हनिष्यतीत्यर्थः। संभावन किम्? अलं भुङ्क्ते। अलमिति चेत् किं प्रायेण गमिष्यति। अनद्यतने लङप्युदाहार्यः।

विभाषा। संभावनमुच्यते येन स संभावनवचनो धातुः संभावयामि। अवकल्पयामि। श्रद्दधे इत्यादिरूपः पूर्वसूत्रं सर्वमनुवर्तते इत्याह—उक्तेऽर्थे इति। ततश्च प्राप्तविभाषेयमिति भावः। संभावयामि भुञ्जीत भवानिति। भोजने भवान् युक्त इत्युत्प्रेक्ष्यते इत्यर्थः। अयमपि भविष्यति विधिरिति दर्शयति भाव्यते वेति। लुङप्युदाहार्यः।

---

१. संभावनमस्ति विधुरस्य प्रत्यये इति क० पु०।
२. संबन्धाभावात् इति क० पु०।
३. तेन चासाविति क० पु०।

६५३. हेतुहेतुमतोर्लिङ् [ ३।३।१५६ ]

हेत्वर्थे हेतुमदर्थे च लिङ् वा स्यात्। कृष्णं नमेच्चेत् सुखं यायात्। पक्षे लट्। पुनर्लङ्क्तेर्भविष्यदर्थे एव लिङ्। नेह हन्तीति पलायते ।

६५४. इच्छार्थेषु लिङ्लोटौ [ ३।३।१५७]

इच्छार्थेषु धातुभियोगे लिङ्लोटौ स्तः त्रिषु कालेषु। इच्छामि भुञ्जीत भुङ्क्तां वा भवान्। कामप्रवेदने वाच्ये नेह। इच्छन् करोति ।

६५५. लिङ् च [ ३।३।१५८ ]

समानकर्तृकेरिच्छार्थैर्योगे लिङ् वा स्यात्। भुञ्जीयेतीच्छति ।

---

हेतुहेतुमतोर्लिङ्। हेतुः कारणं हेतुमत्फलं हेत्वर्थ हेतुमदर्थ चेति। वर्तमानाद् च्चयतोरिति शेषः। कृष्णमित्यादि। अत्र नमनं हेतुः सुखप्राप्तिर्हेतुमती।

"उताप्योः समर्थयोः" ( ३।३।१५२ ) इत्यतो लिङ्नुवृत्तौ पुनर्लिङ्ग्रहणस्य प्रयोजनमाह–पुनर्लिङ्क्तेरित्यादि। स हि लिङ् कालत्रये विहितः, अस्य तु पुनर्ग्रहणाद् भविष्यद्विषयत्वमनुमीयतेऽभिधानस्वभावादित्यर्थः। "उपसर्गस्यायतौ" ( ८।२।१९ ) इति लत्वम्।

अत्र हननं हेतुः पलायनं हेतुमत्। "लक्षणहेत्वोः क्रियायाः" (३।२।१२६) इति लटः शता तु न भवति। इतियोगे तु सद्विधिरिति व्यवस्थितविभाषासु पाठात्। अत्र लिङ्निमित्तत्वाद्भविष्यति क्रियातिपत्तौ लृङ्।

इच्छार्थेषु। इच्छा अर्थो येषां तेषु धातुषु इच्छामि प्रार्थये कामये इत्येवमादिषूपपदेषु इति सूत्रान्तरव्यापारः।

ननु कामप्रवेदने वाच्यमिति वक्ष्यति। किमर्थं तर्हि कामप्रवेदनेऽकच्चितीत्यारभ्य तेनैव सिद्धेः। सत्यम्। यत्रार्थप्रकरणादिना कामप्रवेदनं गम्यते तत्रापि यथा स्यादित्येवमर्थं तत्।

इदं पुनर्यत्रेच्छार्थमुपपदं प्रयुज्यते, तत्रैव यथा स्यादित्येवमर्थमिति दर्शयति— इच्छार्थधातुभियोगे इति।

लिङ्लोटौ स्त इति। यद्यपि कामप्रवेदन इत्येव सामान्यतो विधानादिच्छार्थोपपदेऽपि लिङ् सिद्धस्तथापि पुनर्लिङ्क्तिर्लोटा बाधो मा भूदिति। लोट् चेत्येव तु नोक्तम्। प्रकृतेहि लिङ्ग्रहणे तु कृष्यमाणे तत्सबद्धविभाषाग्रहणमप्यनुकृष्येतेति।

लिङ् च। इच्छार्थेषु लिङ्लोटावित्येव सिद्धे पुनरारम्भः समानकर्तृकेरिच्छार्थैर्योगे लिङेव यथा स्यात् लोण्मा भूदिति। किं च समानकर्तृकेषु तु पुनर्वक्ष्यति स यथा लोटं बाधते। एवं लिङपि बाधेत। "कल्युट्तुमुन्खलर्थेषु तु वासरूपविधिर्नास्तीति" लिङ् विधीयते।

---

१. लिङ्नुवृत्तौ पुनरिति नास्ति क० पु०।

६५६. इच्छार्थेभ्यो विभाषा वर्तमाने [ ३।३।१६० ]

इच्छार्थेभ्यो लिङ् वा स्याद् वर्तमाने। पक्षे लट्। इच्छति। इच्छेत्। वष्टि। उश्यात्। विधिनिमन्त्रणेति लिङ्। कालत्रये विधौ यागं कुर्यात्। नियोगकरणे। इह भुञ्जीत भवान्। कामचारे इहासीत भवान् सत्कारपूर्वके व्यापारे। पुत्रमध्यापयेद्भवान्। संप्रधारणे किम्? भो वेदमधीयीय उत तर्कम्। प्रार्थने भो भोजनं लभेय। एवं लोट्।

६५७. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च [ ३।३।१६३]

एषु गम्येषु कृत्याः स्युः लोट् च। कामचारानुज्ञा अतिसर्गः। प्रेषितस्त्वं गङ्गां गच्छ। एवमतिसृष्टस्त्वम्। प्राप्तस्ते कालो वा। लिङप्यत्रेति केचित्।

---

इच्छार्थेभ्य इति। लटि प्राप्ते पक्षे लिङ्विधिः। वष्टीति। वश कान्तौ उश्यादिति। "ग्रहिज्या" ( ६।१।१६ ) इति संप्रसारणम्। "विधिनिमन्त्रण" ( ३।३।१६१ ) इति लिङ्। भूयातो व्याख्यातमेतत्। कालत्रये इति एतदपि भविष्यत उपलक्षणम्। यतो विध्यादयश्चत्वारः ( [1]प्रवर्तनाविशेषः। प्रवर्तना चाप्रवृत्तिविषया। संप्रश्नप्रार्थने अपि तथैवेति नैषां भूतविद्यमानयोः संभवोऽस्ति। विधाविति )। गुर्वादिना शिष्यादेः प्रेरणमाज्ञेति यावत् यावत् ( निम[2]न्त्रणादिक्रमेण व्याचष्टे—निमन्त्रणं नियोगकरणम्। नियोगो नामावश्यंभावेन करणम्। यदकरणेन प्रत्यवाय इति यावत्। इह भुञ्जीत भवानिति। श्राद्धे हि निमन्त्रितो दौहित्रादिरभुञ्जानः प्रत्यवैति। अभिनयेनामन्त्रितोऽपक्रामति इति स्मृतेः कामचार इति। यदकरणेऽपि न प्रत्यवाय इत्यर्थः। अधीष्टः सत्कारपूर्वको व्यापारः। गुर्वादेराराध्यस्य व्यापारेणेत्यर्थः। सप्रश्नः संप्रधारणम्। इदं च कर्तव्यमिदं चेत्येवरूपा विचारणा। प्रार्थना याञ्चा प्रसिद्धा। एवं लोट्। विध्यादिष्वेव लोटोऽपि विधानात्।

प्रैषातिसर्ग। विधिरेव प्रेरणम्। आमन्त्रणमेवातिसर्ग इति। लोटि सिद्धे प्रैषातिसर्गयोर्ग्रहणं कृत्यार्थम्। अत्रैव कृत्या यथा स्युरिति। प्राप्तकालेति। उक्ते निमन्त्रणादावपि कृत्याः स्युः। चकारेण लोडनुकृष्यते। एतदर्थमेव विध्यादिसूत्राल्लोट् चेति योगो विभज्य निर्दिष्टः। प्रेषितस्त्वमित्यादि। तव गङ्गागमने प्रैष इत्येवार्थः। अस्यैवार्थस्य लोटाऽभिहितस्य द्योतनाय प्रेषितादिपदप्रयोगः न त्वेतान्युपपदानि, एषु गम्येषु इत्युक्तत्वात्। कृत्यानुदाहरिष्यति।

१. प्रवर्तनाविशेष इत्यारभ्य—विधाविसीत्यन्तो (        ) रेखाङ्कितो नास्ति क० पु०।
२. निमन्त्रणादिक्रमेण व्याचष्टे इत्यारभ्य-संप्रश्नः संप्रधारणमित्यतो (      ) रेखाङ्कितो नास्ति क० पु०। तत्स्थाने निमन्त्रणं व्याचष्टे नियोगकरणमिति संप्रश्न इत्येव क० पु०।

६५८. अर्हे कृत्यतृचश्च [ ३।३।१६९ ]

चाल्लिङ्। त्वं कन्यां वहेः।

६५९. शकि लिङ् च [ ३।३।१७२ ]

शक्तौ लिङ् स्यात् चात्कृत्याः। त्वं भारं वहेः। लोडप्यत्र केचित् सिंधुमपि शोषयाणि। 'माङि लुङ्'। (३।३।१७५) मा कार्षित्। कथं मा भवतु मा भविष्यति इति। नायं माङ् किन्तु माशब्दः।

६६०. क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः [ ३।४२ ]

पौनःपुन्यार्थे भृशार्थे च लोट् स्यात्। तस्य च लोटः पदव्यवस्थायां हिस्वौ स्तः सर्वतिङ्विषये तध्वमोर्विषये, तु वा कालत्रये लमात्रापवादः।

अर्हे कृत्यतृचश्च। अर्हतीत्यर्हः। प्रकृत्यर्थे योग्ये कर्तरि गम्यमाने एते स्युः। कृत्यानां नानात्वाद्बहुवचनम्। त्वं कन्या वहेरिति। वहने योग्य इत्यर्थः।

शकि लिङ् च। शकीति प्रकृत्यर्थविशेषण नोपपदम्। "क्षय्यजय्यौ शक्यार्थे" (६।१।८१) इति लिङ्गात्। उपपदत्वे हि न केवलावेतौ शक्यार्थौ स्त इत्याह—शक्ताविति।

क्रियासमभिहारे। पौनःपुन्ये भृशार्थे चेति। एतद्विशिष्टक्रियावचनाद्धातोः ([1]प्रकृत्यर्थविशेषण ह्येतत्। न तु प्रकृत्यर्थः। क्रियाधर्मे समभिव्याहारे धातोर्वृत्त्यसंभवात्। नापि प्रत्ययार्थः "लः कर्मणि च" (३।४।६९) इति वचनात्।

अत्र यदि हिस्वौ लोडादेशानां तिङां क्रियेताम्, वा च तध्वमोरिति दर्शनात्। ततो लुनीहि लुनीहीति तिप्सिप्मिपामादेशस्य हेः पित्त्वादङित्त्वाभावेनेत्वं न स्यात्। ब्रूहि ब्रूहीति ब्रुवः ईट् स्यात् भुङ्क्ष्व भुङ्क्ष्वेति च श्नसोरल्लोपो न स्यात्। अतो लोट एवैतावादेशौ इत्याह—तस्य च लोट इति।

यदि तर्हि लोट एवादेशावेतौ तर्हि "लः परस्मैपदम्" (१।४।९९) इति द्वयोः परस्मैपदत्वात् परस्मैपदिभ्य द्वावपि स्याताम्। द्वावपि परस्मैपदत्वात् कर्तर्येव स्याताम्. न तु स्वादेशो भावकर्मकर्तृषु स्यात्। तिबादिषु असंनिवेशात्तिङन्तं पदमिति पदत्वम् "तिङ्ङतिङः" (८।१।२८) इति निघातश्च न स्यात्। अत आह—पदव्यवस्थया हिस्वौ स्त इति। पदयोः परस्मैपदात्मनेपदयोर्विषये प्रयुज्यमानौ यौ हिस्वौ तयोर्व्यवस्था स्थितिधर्मस्तया विशिष्टावित्यर्थः।

१. प्रकृत्यर्थविशेषणं ह्येतत् न तु प्रकृत्यर्थः, क्रियाधर्मे समभिव्याहारे धातोर्वृत्त्यसंभवात्। नापि प्रत्ययार्थः, लः कर्मणीति वचनात् इति नास्ति क० पु०।

६६१. समुच्चयेऽन्यतरस्याम् [ ३।४।३ ]

अनेकक्रियाध्यवहारे प्रागुक्तं स्यात्।

६६२. यथाविध्यनुप्रयोगः पूर्वस्मिन् [ ३।४।४ ]

पूर्वस्मिन् लोड्विधाने यस्माद्धातोर्लोडुक्तः सोऽनुप्रयोज्यः।

अयमाशय.—योगविभागोऽत्र क्रियते। क्रियासमभिहारे लोट्। ब्यारव्यात लोटो हिस्वौ इत्यपरो योग। अत्र लोडित्यनुवर्तते। तच्च समानाधिकरणं हिस्वयोर्विशेषणम्। न च हिस्वौ लोटौ भवत इति सामर्थ्यात् तद्धर्माणावित्यर्थः संपद्यते। तत्रापि मुख्यलोट्सबन्धिनो धर्मस्यातिदेशासम्भवात् स्थानिवद्भावेन लब्धलोड्व्यपदेशयोर्लिङ्भूतयोर्हिस्वयोरेव धर्मो हिस्वयोरतिदिश्यते। तेनानयोरपि स स विशेषः सिद्ध्यति। परस्मैपदिभ्यो हि कर्तरि तिङ् चेत्यात्मनेपदिभ्यः स्वो भावकर्मकर्तृषु लिङ् चेति व्यवतिष्ठते। पुरुषैकवचनसंज्ञे तु विधानसामर्थ्यान्न भवतः। यदि हि ते अपि स्यातान्, हिस्वयोरनेन विधानमनुपपन्नं स्यात्। ( [1]वचनान्तरेण तयोस्तादृशयोः सिद्धत्वात्। सर्वतिङ्विषये इति सामान्यविहितानां तिङां शतृशानज्भ्यामिव "येन नाप्राप्तिन्यायेन" हिस्वाभ्यामपि बाधनादित्यर्थः। यद्येवं वाचतध्वमोरित्ययुक्तम् इत्याशङ्क्य नेयं षष्ठी, किं तु विषयसप्तमीति व्याचष्टे—तध्वमोर्विषये इति।

समुच्चयेऽन्यतरस्याम्। सामान्योक्तावपि क्रियायामेव समुच्चयोऽत्र गृह्यते, धातोः प्रत्ययविधानात्। तद्विशेषणत्वात् समुच्चयस्येत्याह—अनेकक्रियाव्यवहारे इति। अनेकासां क्रियाणामेकस्मिन् संबन्धिनि यो विशेषेणावहारो लीयमानतेत्यर्थः। एतेनैकक्रियाविषयात् समभिव्याहारात् समुदायस्यादो दर्शितः। अत्रापि धातोः क्रियावाचित्वात्। क्रिया धर्मे समुच्चीयमाने वृत्तिर्न लभ्यतेति समुच्चीयमानक्रियावचनादित्यर्थो ज्ञेयः। प्रागुक्तमिति। लोट् लोटश्च पदव्यवस्थया हिस्वौ कालत्रये वाचतध्वमोर्विषये इत्यर्थः।

यथाविध्यनुप्रयोगः। विधिमनतिक्रम्य यथाविधि। यथार्थेऽव्ययीभावः। पूर्वस्मिन्निति स्पष्टार्थम्। "समुच्चये सामान्यवचनस्य" ( ३।४।२ ) इति वक्ष्यति। तेनार्थात्ततोऽन्यत्र पूर्वस्मिन्नेव सिद्धः। इह हि हिस्वौ नामैतदनभिव्यक्तपदार्थकम्। तत्र तस्याकालपुरुषाणामनभिव्यक्तत्वात् तदभिव्यक्तये तु प्रयोगः प्राप्त एव धातुसबन्धे प्रत्ययविधानाच्च। तथापि यथाविध्यर्थवचनम्। तेन याहि याहीति यातीत्येवानुप्रयुज्यते, न गच्छति करोति वा। करोतेरपि हि सन्निहितलोडन्तवाच्ये विशेषे पर्यवसानात् सम्भवत्येवान्वयः।

१. वचनान्तरेण इत्यारभ्य-शास्त्रशक्तिस्वाभाव्यमेव शरणम् इति द्वितीयपृष्ठस्थान्ते वर्तमानं तदन्तो बृहत्कायो ग्रन्थो नास्ति क० पु०।

६६३. समुच्चये सामान्यवचनस्य [ ३।४।५ ]

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः। क्रियासमभिहारत्वाल्लोडन्तस्य द्वित्वम्। याहि याहीति याति। एवं यातः यान्ति यासि याथः याथ। पक्षे यात यातेति यूयं याथ। याहि याहीत्ययासीत्। यास्यति वा अधीष्व अधीष्वेत्यधीते। एवमन्यत्र। स्वविषये प्राग्वत्। पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे। यङन्ते क्रियासमभिहारान्तरे तु लोलूयस्व लोलूयस्वेति लोलूयते।

समुच्चये सामान्यवचनस्य। अत्रापि यतो धातोर्लोड्विहितः प्रत्यासन्नतरत्वात् तस्यैव विशेषस्यानुप्रयोगः प्राप्नोतीति इदमुच्यते।

यद्यपि लाघवात् सर्वविशेषानुगतं सामान्यमेवानुप्रयोक्ष्यते, न विशेषो गौरवात् परस्परव्यभिचाराच्च। तथापि लाघवं लौकिकशब्दव्यवहारे नाद्रियते इत्यारम्भः। क्रियासमभिव्याहारत्वाल्लोडन्तस्य द्वित्वम् इति। द्वित्वसहितमेव क्रियासमभिहारं द्योतयितुं शक्नोति। न तु केवल शुद्धेन लोटा तुल्यरूपत्वेन साशयिकत्वात्। दृष्टश्च शब्दशक्तीनां वैचित्र्यम्। यथा गार्ग्यायणीत्यत्रैकमेव स्त्रीत्व ष्फङीव्भ्यां द्योत्यते, तथा क्रियासमभिव्याहारोऽपि लोटा द्विर्वचनेन चोभाभ्यां द्योत्यते इत्यर्थः।

यत्तु "क्रियासमभिव्याहारे द्वे स्तः" इति प्राचोक्तम्, तदसत्, "नित्यवीप्सयोः" (८।१।४) इत्येव सिद्धेरस्य वक्तव्यस्य भाष्येऽनाश्रितत्वात्। अथ लोटोक्तेऽपि क्रियासमभिव्याहारे द्वित्वार्थं वक्तव्यमेतदिति चेन्न, यदि उक्तेऽपि क्रियासमभिव्याहारे वचनबलाद् द्वित्वमित्याशयः, तर्हि यङन्तेऽपि प्रसङ्गः स्याद् मतम्। लोटोः "लः कर्मणि" (३।४।६९) इति वचनाद्भावकर्मकर्तारो वाच्याः, न समभिव्याहार इति द्वित्वेनैव स द्योत्यः। यङ् पुनस्तत्रैवार्थे विहितो नार्थान्तरे इति स्वयमेव तत्र शक्तत्वान्नापेक्षते द्वित्वमिति। तच्च वार्तम्। सन्तु नामास्य कर्मादयो वाच्याः समभिव्याहारोऽप्युपाधितया श्रुतः स कथं न द्योत्यः स्यात्, यथा लडादिषु वर्तमानादयः। तस्मात् शब्दशक्तिस्वाभाव्यमेव शरणम्)। सामान्यविशेषयोर्विशेषणविशेष्यभावाद्धातुसम्बन्धोऽप्युपपद्यते। यात यातेति यूयं[1] याथेति। "लोटो लङ्वत्" (३।४।८५) इति तामाद्यतिदेशाद् मध्यमबहुवचने तादेशो भवतीति[2]। वा च तध्वमोरिति बहुवचनादिनेरितं[3] तदुदाहरणम्। भूतभविष्यतोरप्युदाहरणम् अयासीत्। यास्यति चेति। स्वमुदाहर्तुमाह—अधीष्वाधीष्वेत्यधीयते इति। इङ् अध्ययने। एवमन्यत्रेति। द्विवचनबहुवचनयोर्मध्यमोत्तमयोर्भूतभविष्यतोरप्यनुप्रयोगा ऊह्या इत्यर्थः।

१. यूयमिति क० पु०। २. भविन्तीति क० पु०। ३. बहुग्रमाहरणमिति क० पु०।

समुच्चये तु सक्तून् पिब धानाः खादेत्यभ्यवहरति। अन्नं भुङ्क्ष्व दाधिकमास्वादयस्वेत्यभ्यवहरति। तध्वमोस्तु पिबत खादतेत्यभ्यवहरथ। भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे। पक्षे हिस्वौ। लोडभावपक्षे लडादि। पुनः पिबति, पुनः खादति इत्यभ्यवहरतीत्यादि।

इति लकारार्थप्रक्रिया

---

ध्वंविषये प्राग्वत्। वा स्व इत्यर्थः। यथाधीष्वाधीष्वेति। अधीध्वम् अधीध्व-मित्यधीध्वे इति वा। एवं लकारान्तरेऽप्युदाहार्यम्।

समुच्चये त्विति। लोडुदाह्रियते इति शेषः। सक्तून् पिबेत्यादि। सक्तुपानादीनि करोतीत्यर्थः। आस्वादयस्वेति। स्वद आस्वादने प्रीतौ च। स्वादिः। अनुदात्तेत् सकर्मकः। पुनः पुनः पिबति पुनः पुनः खादति इत्यभ्यवहरति। अत्राभ्यवहरतीति नानुप्रयोगः तस्य हिस्वान्तयोरेव विधानात्. किंतु समुच्चयं द्योतयितुमैच्छिको प्रयोगो दर्शितः।

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तस श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
पौरुष्यस्य कृतौ समाप्तिमगमत् सार्थप्रथा प्रक्रिया ॥ १ ॥
श्रीरस्तु। लकारार्थाः ३०० ॥

---

## ६६४. धातोः [ ३।१।९१ ]

आतृतीयाध्यायान्तं धातोरित्यधिक्रियते। पुनर्धातूक्तिः कृत्संज्ञा उपपदसंज्ञा चात्रैवेत्येवमर्था।

## ६६५. तत्रोपपद सप्तमीस्थम् [ ३।१।९२ ]

अत्रास्मिन् धात्वधिकारे सप्तमीनिर्दिष्टमुपपदाख्यं स्यात्।

## ६६६. कृदतिङ् [ ३।१।९३ ]

इति कृत्संज्ञा।

---

कृतां तिङन्तनिरूपणाधीननिरूपणत्वात् तिङो निरूप्य कृतो निरूपयितुमाह—धातोः। विधेयानिर्देशात् स्वरितत्वाच्चाधिकारोऽयम्।

तत्र केचिदाहुः—प्राग्लादेशादयमधिकार इति, तन्निराचष्टे—आतृतीयाध्यायस्यान्तमिति। तृतीयाध्यायस्यान्तः समाप्तिस्तां मर्यादीकृत्येत्यर्थः।

अत्र च लिङ्गमेशः शित्करणम्। तद्धि तत्र धातोरधिकारे सत्यर्थवान्। "आदेः परस्य" ( १।१।५४ ) इति तकारस्य स्थाने एत्वे अयादेशे टेरेत्वे च सत्ययं शब्दे मा भावीति क्रियते। प्राक् तु लादेशाद्धात्वधिकारे "अलोऽन्त्यस्य" ( १।१।५२ ) टेरेत्वस्यैवैकारवचने प्रयोजनं नास्तीति सर्वादेशो भविष्यति, किं शकारेण? न चैकारस्यैकारवचनं विकारनिवृत्त्यर्थं स्यात् "मो राजि समः क्वौ" ( ८।३।२५ ) इतिवत्। लिटस्टेरेत्वाभावज्ञापनार्थं वा स्याच्छिदिति वाच्यम्। यथाकथञ्चिज्ज्ञापकत्वे प्राप्ते लक्ष्यानुरोधेनेष्टसिद्धये सर्वादेशत्वकल्पनस्यैवौत्सर्गिकस्य युक्तत्वात्। यद्यप्यध्यायपरिसमाप्तेरधिकारः। करिष्यतोत्यादौ नित्यत्वाल्लावस्थायामेव स्यादिषु कृतेषु तेभ्यंवाभाद् धातोरिति तिबादयो न स्युः पचते इति टेरेत्वम्। "लोटो लङ्वत्" ( ३।४।८५ ), "एरुः" ( ३।४।८६ ), "सेर्ह्यपिच्च" ( ३।४।८७ ), "थासः से" ( ३।४।८० ), "तस्थस्थमिपाम्" ( ३।४।१०१ ) इत्यादि च न स्यात्। नैष दोषः, विहितविशेषणं धातुग्रहणं धातोर्विहितस्य लस्येत्यादि। इहान्तरङ्गत्वात् प्रकृत्यर्थस्य साधने विधीयमाना लडा[1]दय क्रियावाचिनो धातोरेव भविष्यन्ति, न ङ्याप्प्रातिपदिकात्। तथापि सोपसर्गाल्लडादयो मा भूवन्निति धात्वधिकारः क्रियते। अन्यथा प्राकरो[2]दिति सोपसर्गमेवाङ्गमिति ततः पूर्वमडादयः स्युः।

---

१. स्तन्यादय इति क० पु०।

२. प्राकरोति इति क० पु०।

६६७. वाऽसरूपोऽस्त्रियाम् [३।१।९४]

अत्रासरूपोऽपवादप्रत्यय उत्सर्गस्य वा बाधकः स्यात् स्त्र्यधिकारोक्तं विना।

ननु धात्वधिकारोऽनर्थको यद्विधौ धात्वधिकारस्य दर्शितत्वादत आह—पुनर्धातूक्ति[1]रिति। अतिङ्प्रत्ययो धातोर्विहितः कृत् इत्युक्ते हि करिष्यतीति स्यादेरपि स्यात्। ततश्च "कृत्तद्धित" (१।२।४६) प्रातिपदिकत्वात् तिङोऽप्ये[2]कत्वे वचनग्रहणात् "एकवचनमुत्सर्गतः करिष्यते" इत्युक्तेश्च सुः स्यात्। एवमुपपदसंज्ञापि पूर्वत्र स्यात्। "च्लि लुङि" (३।१।४३) लुङन्ते उपपदे च्लिरिति। तस्मादस्मिन्नेव धात्वधिकारे ते यथा स्याताम्, पूर्वत्र मा भूतामित्येवमर्थमित्यर्थः। चकारोऽनुक्तसमुच्चयार्थः। तेन वाऽसरूपविधिरत्रैव यथा स्यादिति प्रयोजनम्। तेन वसादिभिः क्सिचः समावेशो न भवति। तथाऽऽर्धधातुकसंज्ञायामप्यस्योपयोगः। अन्यथा हि लूभ्यामित्यत्रापि स्यात्। पुनर्धात्वधिकारस्तु धातोरित्येवं सशब्देन विहितस्येत्यर्थलाभान्न दोषः।

अत्राहुः—अधिकारेण कृदुपपदसंज्ञे विधास्येते प्रत्ययसंज्ञावत्। वाऽसरूपश्चाधिकारेणैव करिष्यते। आर्धधातुकसंज्ञाया च "शमित्यतो:" (३।२।१४) इत्यतो द्वितीयं धातुग्रहणमनुवर्तिष्यते। एवं चायमधिकारः शक्योऽकर्तुमिति। प्राग्व्याख्याते कृदुपपदसंज्ञे स्मारयति। "तत्रोपपदं सप्तमीस्थम्" (३।१।९२) "कृदतिङ्" (३।१।९३) इति कृत्संज्ञा। पूर्वत्राविरूपार्थाय उपपदसंज्ञेति शेषोऽध्याहार्यः परत्र वा कृत्संज्ञेति न पठनीयम्।

वाऽसरूपोऽस्त्रियाम्। अपवादेन नित्यं बाधे प्राप्ते क्वचिदुत्सर्गस्यापि प्रवृत्त्यर्थं वचनम्। असरूप इति पदच्छेदः। अन्यथा लाघवे विशेषाभावादसंदेहाय सरूपो वेति ब्रूयादित्यालोच्याह—अत्रासरूप इति। तत्र केनासरूप इत्यपेक्षायां सर्वस्यापि कृतो येन केनचिदसारूप्यमव्यभिचरतीति सामर्थ्यात् स्वविधानवेलायां यस्तस्मिन् विषये प्राप्तः स एव बुद्धिस्थत्वात् प्रतियोगी गम्यते स चोत्सर्ग इति। तदपेक्षया भिन्नरूपोऽपवाद एवासरूपो विवक्षित इत्याह—अपवादप्रत्यय इति। यद्यप्यपवादापेक्षयाऽसरूप उत्सर्गोऽपि शक्यते वक्तुम्, न च तस्यापि विकल्पने दोषः कश्चित्, तथापि प्रतियोग्यपेक्षमसरूपत्वं स्वभावादपवादमेव गोचरयतीत्येवमुक्तम्।

तत्र यद्युत्पत्तिविकल्पोऽस्ति ततोऽपवादाभावपक्षे केवला प्रकृतिरेव प्रयोज्या स्यात्। अपवादविषये[3] उत्सर्गस्याप्रवृत्तेस्तद्धितवत्। न चैतद् युक्तम्, "न केवला

१. पुन धातूक्तिरित्यादीति क० पु०।
२. तिङोऽप्येवये वचने इति क० पु०।
३. अपवादापवादविषये इति क० पु०।

## ६६८. कृत्याः प्राङ्ण्वुलः [ ३।१।९५ ]

"ण्वुलतृचौ" ( ३।१।१३३ ) इत्यतः प्राक् ये प्रत्ययाः विहितास्ते कृत्यसंज्ञाः स्युः ॥

---

प्रकृतिः प्रयोक्तव्या" इति नियमात्। तद्धिते त्वनुत्पत्तिपक्षेऽप्युत्सर्ग[1]दन्यदपि प्रत्ययान्तरमस्ति षष्ठ्यादिभिः। अतः सामर्थ्याद्बहिरङ्गमपि बाधकत्वमेव विकल्प्यत इत्याह—उत्सर्गस्य वा बाधकः ([2]स्यात् इति। यद्यपि शास्त्रं शास्त्रस्य बाधकं न कार्यम्। निदानोच्छेदेनैव निदानिन उच्छेदो दृष्टः। न हि प्रदीपे उच्छिन्ने प्रकाश उच्छिद्यते, तथापि शास्त्रबाधे विकल्पिते तद्द्वारा कार्यं विकल्प एव पर्यवस्यति इति साधनधर्मस्य बाधकत्वस्य साध्ये प्रत्यये उपचारात् प्रत्ययो बाधक इत्युक्तम्। अस्त्रियामित्यत्र स्त्रीशब्दः स्वर्यते। "स्वरितेनाधिकारः" (१।३।११) इति स्वरितेनाधिकारावगतिरित्याशयेनाह—स्त्र्यधिकारोक्त विनेति)। तेन "स्त्रियां क्तिन्" इत्युत्सर्गम् "अप्रत्ययात्" इत्यपवादो नित्यं बाधते। चिकीर्षेति। यदि तु स्त्रियां वाच्यायामिति व्याख्यायेत। ततो लव्या लवितव्या, इति यतो विषये तव्यो न स्यात्। यदि तु स्त्रियामित्युच्चार्य यो विधीयते स न इति विज्ञायेत। तदा व्यावक्रोशो व्याकुष्टिरिति णिचो विषये क्तिन्न स्यात्। अतः सूक्तम्—स्त्र्यधिकारोक्त विनेति केचिदाहुः। [3]उत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशिनोरयं निषेधः। किं कृतं भवति? आसना—आस्या। स्त्र्यधिकार विहितेनापि युचाऽपवादेन "ऋहलोर्ण्यत्" (३।१।१२४) ण्यतः समावेशः सिद्धो भवति। युचस्तु क्तिन्नादिनाऽनभिधानान्न समावेशः इति।

अन्ये त्वाहुः—अपवादमात्रस्यापि स्त्र्यधिकारोक्तत्वे निषेधः। तेन घञः क्तिन्नादिभिर्न समावेशः। आस्येत्यत्र तु "कृत्यल्युटो बहुलम्") (३।३।११३) इति ण्यत्। तेनैतदप्युपपन्नम् "[4]यद्गास्तिमसावत्र परमात्मा निरूप्यते" इति। अन्यथा द्वयोरपि स्त्र्यधिकारोक्तत्वाद् युच्विषये क्तिन् न स्यात्।

असरूपः किम्? कर्मण्यणमुत्सर्गम्, आतोऽनुपसर्गे कोऽपवादो नित्यं बाधते। काणोः सरूपत्वात्। "नानुबन्धकृतमसारूप्यम्" (प०) "लिटः कानज्वा"[5] (३।२।१०६) इति वाग्रहणाल्लिङ्गात्। "लादेशेषु वाऽसरूपविधिर्नास्ति" (प०) भवानीति नित्यममादेशं बाधित्वा "मेर्निः" (३।४।८९) भवति।

कृत्याः प्राङ्। अत्र कृत्या इतीयदेव पठितं सूत्रं सूत्रकारेण। प्राङ्ण्वुल इत्येतत्तु भाष्ये पूर्वपक्षरूपेण पठितम्। वृत्तिकारैः सूत्रे प्रक्षिप्तम्। प्रयोजनं त्वस्य

---

१. ष्यपुसर्गादिदन्यस्यापीति क० पु०।
२. बाधकः स्यादित्यारभ्य – स्त्र्यधिकारोक्तं विनेत्यन्तो ( ) रेखाङ्कितो बृहद्भागः नास्ति क० पु०। ३. उत्सर्गापवादयोरित्यारभ्य–कृत्यल्युटो बहुलमित्यन्तो ( ) रेखाङ्कितो भागो नास्ति क० पु०। ४. यद्गास्ति मस्यावत्रेति क० पु०। ५. लिटः कानच्चेति क० पु०।

## ६६९. कर्तरि कृत् [ ३।४।६७ ]

कृत्प्रत्ययः कर्तरि स्यात् । इति प्राप्ते ।

## ६७०. तयोरेव कृत्यक्तखलर्थाः [ ३।४।७० ]

कृत्याः क्तः खलर्थाश्च भावकर्मणोरेव स्युः ।

## ६७१. तव्यत्तव्यानीयरः [ ३।१।९६ ]

धातोरेते प्रत्ययाः स्युरुक्तेऽर्थे । तः स्वरार्थः । प्राग्वदिडादि । स्वाद्युत्पत्तिः । एधितव्यम् । एधनीयं त्वया । भावस्यैकत्वादेकवचनं क्लीबता च । चेतव्यश्चयनीयो वा धर्मस्त्वया । "वसेस्तव्यत् कर्तरि णिच्च" ( वा० ) वास्तव्यः । "कर्मकर्तरि केलिमर्वाच्यः" ( वा० ) स्वयमेव पच्यन्ते इति पचेलिमास्तण्डुलाः ।

---

नास्ति । प्रत्यय इत्यादिवत् कृत्या इत्यधिकारेणापि इष्टसिद्धेः । बहुवचनमनुक्तकृत्यसमुच्चयार्थम् । तेन केलिमरादयो नोपसंख्येयाः भवन्तीत्याहुः । "ण्वुल्तृचौ" ( ३।१।१३३ ) इत्यतः प्राक् । "गोगाख्यायां ण्वुल् बहुलम्" ( ३।३।१०८ ) इति तु नावधिः । "अर्हे कृत्यतृचश्च" ( ३।३।१६९ ) इति तृचः पृथग्ग्रहणात् ।

तयोरेव । एवकारः कर्तुरपकर्षार्थः । यद्यपि "तत्रकौण्डिन्य" न्यायेनैव कर्तुरपकर्षः सिद्धः, तथापि स्पष्टार्थमेवशब्दकरणम् ।

हरदत्तस्त्वाह—ययोर्भावकर्मणोर्लकार उक्तस्तयोरेवान्यू[1]नानतिरिक्तयोरेव [2]कृत्यादयो भवन्तीति । यदि सकर्मकेभ्यो भावे स्युस्तादृशयोरेव न स्युरित्येवकारः ।

तव्यत्तव्या । उक्तेऽर्थे । भावकर्मणोरित्यर्थः । ननु रूपे भेदाभावाद् तव्यविधानं द्विरनर्थकम् । यत आह-तः स्वरार्थः इति । आद्यस्य तु इदनुबध्यते "तित् स्वरितम्" इति स्वरार्थम् । तेन स्वरभेदाद् द्विर्विधानमिति भावः । मनोरथस्तु रेफः "उपोत्तमं रिति"

---

१. नतिरिक्तयोः कृत्या इति क० पु० ।

२. इत्याह तद्व्याख्येयमिति क० पु० ।

३. भोऽर्थमिति नास्ति क० पु० । ४. त्वेति नास्ति क० पु० ।

५. सम्ब इति नास्ति क० पु० ।

६. भावे उदाहरति एधितव्यमित्यादि । एध वृद्धौ । त्वयेति कर्तुरनुक्तत्वात् तृतीया । द्वितीया द्विवचनाद्यभावं स्मारयति । भावस्यैकत्वादिति । क्लीबता चेति लिङ्गरोधकत्वात् इति ख० पु० अधिकः पाठः नास्ति क० पु० ।

## ६७२. कृत्यचः [ ८।४।२९ ]

उपसर्गस्थान्निमित्तात् परस्याच उत्तरस्य कृत्स्थनकारस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् ? प्रमग्नः । "निर्विण्णस्योपसंख्यानम्" ( वा० ) निर्विण्णः ।

## ६७३. णेर्विभाषा [ ८।४।३० ]

ण्यन्तात् परस्योपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थनस्य णो वा स्यात् । दुर्वर्जादुपसर्गादिति केचित् । प्रयापणीयम् । प्रयापनीयम् ।

( ६।१।२१७ ) इति मध्योदात्तार्थं इत्यपि ज्ञेयम् । प्राग्वदिति । 'आर्धधातुकस्येड् वलादेः" ( ७।२।३५ ) इत्यादि । आदिपदेनेटो निषेधविकल्पदीर्घार्धधातुकगुणादि-संग्रहः । स्वाद्युत्पत्तिरिति । "कृत्तद्धित" ( १।२।४६ ) इति प्रातिपदिकत्वात् । चेतव्य इति । कर्मणि धर्मे प्रत्ययः । कृतोक्तत्वात् प्रथमा । वसेरिति । वस निवासे इत्यस्य । वस आच्छादने इत्यस्य लुग्विकरणत्वादग्रहणम् । तयोरेवेति नियमात्कर्तर्य-प्राप्तौ वचनं णित्वार्थं च । वास्तव्य इति । अत एवोपधावृद्धिः । अन्ये तु वास्तुनि भवो वास्तव्य इति दिगादित्वात् यता व्युत्पादयन्तो नैतदारभन्ते । कर्मकर्तरीति । भाष्ये तु शुद्धे कर्मणि प्रत्यय उक्तः । पचेलिमा माषाः पक्तव्याः । भिदेलिमाः सरलाः भेत्तव्या इत्यर्थः । [1]केलिमर ककारो गुणप्रतिषेधार्थः । रेफः स्वरार्थः ।

कृत्यचः उपसर्गादिति वर्तते रषाभ्यामिति च ।

तत्र तात्स्थ्यात्ताच्छब्द्यमित्याह—उपसर्गस्थान्निमित्तादित्यादि । अच उत्तरस्येति । एतच्च नस्य विशेषणं न कृतं[2] । तथा सति प्रापणमित्यत्र न स्यात् प्रापणीयमिति । 'अट्कुप्वाङ्नुम्व्यवायेऽपि" ( ८।४।२ ) इत्युक्तेः । प्रमग्न इति । टु मस्जो शुद्धौ । "ओदितश्च" (८।२।४५) इति निष्ठानत्वम् । तस्यासिद्धत्वात् 'स्कोः" ( ८।२।२९ ) इति सलोपः । "चोः कुः" ( ८।२।३० ) निर्विण्ण इति । विदेः क्तस्य "रदाभ्याम्" ( ८।२।४२ ) इति नत्वपूर्वस्य दस्य च । तस्याचः परः कृत्स्थो नकारो न भवतीति वचनम् । ततः परस्य नस्य णत्वे पूर्वस्य ष्टुत्वम् ।

णेर्विभाषा । ण्यन्तात्परस्येति । कृतश्चैतद्विशेषणम् । यद्येवं प्रयाप्यमाण इत्यत्र न स्यात्, यता व्यवायात् । अडादिव्यवाये इति वर्तते, तेन यकारव्यवधानेऽपि भविष्यति । अन्ये तु विहितविशेषणं वर्णयन्ति । ण्यन्ताद्विहितस्य कृतो नस्येति तेन व्यवधानेऽपि स्यात् । दुर्वर्जादिति । अयं च सर्वणत्वप्रकरणशेषः । तेन दुर्यानं दुर्यापनमित्यादौ न । प्रयापणीयमिति । या प्रापणे णिचि । "अर्तिह्री" ( ७।३।३६ ) इति पुक् । "णेरनिटि" ( ६।४।५१ ) इति णिलोपः ।

१. कोलिमर इति क० पु० । २. कृत्स्य इति क० पु० ।

## ६७४. हलश्चेजुपधात् [ ८।४।३१ ]

हलादेरिजुपधात् कृत्स्थस्याचः परस्य णो वा स्यात् प्रागुक्तनिमित्ते सति। प्रकोपणीयम्। प्रकोपनीयम्। हलः किम्? ओहणीयम्। इजुपधात् किम्? प्रवपणीयम्।

## ६७५. इजादेः सनुमः [ ८।४।३२ ]

इजादेरेव सनुमो हलन्तात् कृत्स्थस्य णः स्यात् प्राङ्निमित्ते। प्रेङ्खणीयम्। इजादेरेव किम्? प्रमङ्गनीयम्।

---

हलश्चेजुपधात्। इजुपधस्य हलन्तत्वाव्यभिचारादविशेषणमतो हलादिर्गृह्यते इत्याशयेनाह—हलादेरिति। प्रकोपणीयम् इति। कुप् क्रोधे। ओहणीयमिति। ऊह वितर्के। अत्र "कृत्यचः" ( ८।४।२९ ) इति नित्यमेव णत्वम्। एवं प्रवपणीयम् इत्यत्रापि। टु वप्। यजादिः सः।

"कृत्यचः" ( ८।४।२९ ) इत्येव सिद्धे नियमार्थमेव तदित्याह—इजादेरेवेति। सनुमश्चेद् भवति इजादेरेव नान्यस्येत्यर्थः।

अथ "णेर्विभाषा" ( ८।४।३० ) इति विकल्पे प्राप्ते नित्यं यथा स्यादिति विध्यर्थं कस्मान्न भवति तत्राह—हलन्तादिति। हल इत्यनुवर्तते। तच्चेह सदन्तपरमिजादेर्हलादित्वस्यासंभवादिति भावः।

ननु च णिलोपे कृते ण्यन्तोऽपि हलन्तो भवति। ततश्च सत्यपि हलधिकारे सम्भवत्येव विध्यर्थमिति। नैव दोषः। विहितविशेषणमिह हल्ग्रहणं हलन्ताद्विहितस्य कृत इति। कृत्स्थस्येति। वृत्तौ तु समासे गुणीभूतस्यापि कृतः सामर्थ्याद्विहितत्वं विशेषणं बोध्यम्। स्वर्गीस्यामितिवत्। कृद्द्वारा नकारेऽपि विहितत्वमुपचारणीयम्।

नन्वेवमपि नियमार्थता न युज्यते, प्रेन्वनमित्यादौ विध्यर्थतासंभवाद् नुमा व्यवायात् "कृत्यचः" ( ८।४।२९ ) इत्यस्याप्राप्तेः। न च नुम्व्यवाये इति सिद्धिः, तत्रापि नुम्ग्रहणमनुस्वारोपलक्षणार्थमित्युक्तेः।

अत्राहु—इहापि नुम्ग्रहणमनुस्वारोपलक्षणार्थं द्रष्टव्यम्। तेन प्रेन्वनमित्यत्राप्रसङ्गः। एवं कृत्वा प्राम्भणमित्यत्रापि सनुम् इति णत्वं सिद्ध्यति। औत्तरिको ह्ययं नकारो न नुम्। प्रेङ्खणीयमिति। ईखि गतौ। इदित्वाद् नुम्। तस्यानुस्वारः। अत्र हशानिबद्धत्वादपि नुमत्वं वक्तुं शक्यते। प्रमङ्गनीयमिति। मगि सर्पणे।

६७६. न भाभूपूकमिगमिप्यायीवेपाम् [ ८।४।३४ ]

एभ्यः कृत्स्य णो न स्यात्। ख्याधातोरपि णत्वं नेति केचित्। प्रख्यानीयम्। प्रभानीयम्। प्रभवनीयम्। प्रपवनीयम्। प्रगमनीयम्। प्रप्यायनीयम्। प्रवेपनीयम्। ण्यन्तभादिभ्योऽपि न। प्रभावनीयम्।

६७७. कृत्यल्युटो बहुलम् [ ३।३।११३ ]

कृत्याः ल्युट् च बहुलमर्थेषु स्युः। स्नात्यनेनेति स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्रः।

६७८. अचो यत् [ ३।१।९७ ]

अजन्ताद्धातोर्यत् स्यात्। चेयं पुण्यं त्वया। जेयम्। वाऽसरूपविधेस्तव्यादयोपि। जेतव्यम्। जयनीयम्। भूतपूर्वादपि दित्स्यम्। धित्स्यम्।

न भाभूपू। भा दीप्तौ। भू सत्तायाम्। पूञ् पवने। कमु कान्तौ। ओप्यायी वृद्धौ। टु वेपृ कम्पने। ख्याधातोरिति। "ख्शाञः शस्य यो वा" ( वा० ) इति विहितस्य यत्वस्यासिद्धत्वे शकारेण व्यवधाने णत्वं न भवतीति भावः।

एतच्च ख्याधातौ प्रपञ्चितम्। पूञ् एव निषेध.। इष्टिरेवेयम्। ण्यन्तभादिभ्योऽपि नेति। प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति भावः। एतच्च 'हेरचङि" (७।३।५६) इति प्रतिषेधेन ज्ञापितम्।

कृत्यल्युटो बहुलम्। बहुलग्रहणं कृन्मात्रस्यार्थव्यभिचारबोधनार्थम्। अन्यथा "कृत्यल्युट" ( ३।३।११३ ) इत्येव सिद्धेः। आरम्भसामर्थ्यादेव यत्र विहितस्ततोऽन्यत्र भविष्यति। तेन पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गले चोपक इत्याद्यपि सिद्ध्यतीति। चुप मन्दायां गतौ।

अचो यत्। ( [1]कथं तर्हि यद् भाव्यं तद् भविष्यतीति यतः प्रसङ्गात्। सत्यम्। "ओरावश्यके" ( ३।१।१२५ ) इति ण्यति साधुः )।

ननु द्वये धातवोऽजन्ताः हलन्ताश्च। तत्र हलन्तानाम् "ऋहलोर्ण्यत्" (३।१।१२४) इति ण्यतं वक्ष्यामि इति परिशेषादजन्तेभ्य एव यद् भविष्यति तत्किमत्र ग्रहणेनेत्याशङ्क्य [2]प्रयोजनमाह—अजन्तभूतपूर्वादपि इति। पूर्वं भूतो भूतपूर्वः। "सुप् सुपा" ( २।१।४ ) इति समासः। अजन्तश्चासौ भूतपूर्वश्चेति कर्मधारयः। दित्स्यम्, धित्स्यमिति। दाञो धाञश्च सनि द्वित्वम् "सनि मीमाघु" ७।४।५४) इतीस्।

१. कथमित्यारभ्य—ण्यति साधुरित्यन्तो ( ) रेखांकितो नास्ति क० पु०।

२. इत्याशय्याहेति क० पु०।

६७९. ईद्यति [ ६।४।६५ ]

यति परे आत ईत् स्यात् । गुणः देयम् । ग्लेयम् । "तकिशसिचतियतिजनिभ्यश्च यत्" ( वा० ) तक्यमित्यादि । "हनो वा यद्वधश्च" ( वा० ) वध्यः । पक्षे ण्यत् । घात्यः ।

६८०. पोरदुपधात् [ ३।१।९८ ]

पवर्गान्तादपदुधाद् यत् स्यात् । ण्यतोऽपवादः । शप्यम् । सरूपत्वान्न ण्यत् ।

६८१. आङो यि [ ७।१।६५ ]

आङ्परस्य लभेर्नुम् स्यात् यादौ प्रत्यये । आलम्भ्या गौः । आङः किम् । लभ्यम् ।

---

' स स्यार्धधातुके" ( ७।४।४६ ) इति सस्य तत्वम् । ' अत्र लोपोऽभ्यासस्य" (७।४।५८) इत्यभ्यासलोप । दित्स धित्स इति स्थिते अनुत्पन्ने एवार्धधातुकेऽतो लोपे कृते हलन्तत्वात् ण्यत् स्यात् । ततश्च "तित् स्वरितम्" ( ६।१।१८५ ) इति स्वरितत्वं स्यात् । अज्ग्रहणात्तु भूतपूर्वाजन्तत्वमाश्रित्य यद्भवति । तेन "यतोऽनावः" ( ६।१।२१३ ) इत्याद्युदात्तत्व सिध्यति चिकीर्ष्यादित्यादौ तु ण्यद् यतो स्वरभेदाभाव. । "यतो नावः' इत्यत्र द्व्यच इत्यनुवृत्तेः ।

एतच्च यदा आर्धधातुके इति विषयसप्तमी तदा प्रयोजन परसप्तम्यां तु न कर्तव्यमेवाज्ग्रहणमिति स्थितम् । तकीत्यादि वक्तव्यम् । तक हसने । शसु हिंसायाम् । चते याचने । यती प्रयत्ने । जनी प्रादुर्भावे । अत्र जनेर्यद्विधानं "यतो नावः" इति स्वरार्थम् । "जनिवध्योश्च" ( ७।३।३५ ) इति वृद्धिनिषेधेन ण्यत्यपि रूपे विशेषाभावात् ।

हनो वेति । यद् वा वक्तव्यः । तत्संयोगेन वधादेशो नित्यम् । वध्य इति । ([1]यद्यपि वधमर्हति वध्यः । यदित्यनुवर्तमाने "दण्डादिभ्यश्च" ( ५।१।६६ ) इति तद्धितेन यताऽपि रूपं सिद्धयति, तथाप्यसिवध्यो मुसलवध्य इति समासो न सिद्धयेत । कृति पुनः "कर्तृकरणे कृता" ( २।१।३२ ) इति सिद्धम् । ) घात्य इति । "हो हन्तेः" इति कुत्वम् ।

पोरदुपधात् । शप्यम् । शप उपालम्भे ।

आङो यि । यादौ प्रत्यये इति विषयसप्तमीयम् । तेनानुत्पन्ने एव ( [2]ण्यप्रत्यये । "नुम् विधावुपदेशिवद्वचनम्" इत्युक्तेः । ततश्च नुम् विधाने चादुपधत्वाभावाद् यदभावे

---

१. यद्यपि इत्यारभ्य—कृतीति सिद्धम् इत्यन्तो (  ) रेखांकितो नास्ति क० पु० ।

२, ण्यप्रत्ययो । नुम् विधावुपदेशिवद्वचनमित्युक्तेरिति नास्ति क० पु० ।

६८२. उपात्प्रशंसायाम् [ ७।१।६६ ]

उपाल्लभेर्नुम् स्यात् प्रशंसायां यति। उपलम्भ्यः साधुः। स्तुतौ किम्? उपलब्धुं शक्यः उपलभ्यः।

६८३. शकिसहोश्च [ ३।१।९९ ]

आभ्यां यत् स्यात्। शक्यम्। सह्यम्।

६८४. गदमदचरयमश्चानुपसर्गे [ ३।१।१०० ]

एभ्योऽनुपसर्गेभ्यो यत् स्यात्। गद्यम्। मद्यम्। चर्यम्। "चरेराङि चागुरौ" (वा०) आचर्यो देशः। अगुरौ किम्? आचार्यः। यमेर्नियमार्थम्। उपसर्गे तु प्रगाद्यम्। प्रयाम्यम्।

---

ण्यदेव भवति ("तित्[1] स्वरितम्" (६।१। ८५) च। तेनालम्भ्यो गौरिति समासान्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण स्वरितत्वमिष्टं सिद्धं भवति। योति परसप्तम्यां तु नुमः पूर्वमेवादुपधत्वाद् यत् स्यात्। ततश्च नुमि सत्यपि "यतोऽनावः" (६।१।२१३) इत्युत्तरपदाद्युदात्तत्व प्रसज्येत तच्चानिष्टम्। लभ्यमिति।)

उपात्प्रशंसायाम्। अत्र प्रशंसा गम्यमानतया विशेषणम्। प्राप्तिरेव तु धात्वर्थः। तेन यस्य प्राप्तिर्यतो वा प्राप्तिः स प्रशंसाहेतुर्भवति। तदत्रोदाहरणम्। विपर्यये तु प्रत्युदाहरणम्। यतीतीयमपि विषयसप्तमी पूर्ववत्। तेन प्रत्ययविवक्षायामेव पूर्वं नुम्। तत्र कृते ण्यति सति अन्तस्वरितमेव भवति। यति तु पुनराद्युदात्तत्वं स्यात्। उपलम्भ्यः साधुरिति।

यद्येवमुपदेशे एव नुमि सति ण्यतैव भाव्यम्, न यता तत् किमुच्यते यतीति। सत्यम्। संयोगोपधत्वेन वृद्धेरसम्भवात्। उपेक्षितणकारो ण्यदेव यच्छब्देन निर्दिष्टः। स्वरे विशेषमनालोच्य यतीति। परसप्तम्याश्रयणाद्वा।

शकिसहोश्च। शक्लृ शक्तौ। षह मर्षणे।

गदमद। गद व्यक्तायां वाचि। मदी हर्षे। चर गतिभक्षणयोः। यम उपरमे। अनुपसर्गेभ्य इति सूत्रे पञ्चम्यर्थे सप्तमीति भावः। "चरेराङि" (वा०) इति सोपसर्गार्थं वचनम्। आचर्यो देश इति। गन्तव्य इत्यर्थः। आचार्य इति। उपनेता। यमेर्नियमार्थमिति। "पोरदुपधात्" (३।१।९८) इत्येव सिद्धे यमिग्रहणम्, अनुपसर्गादेव यमेर्यथा स्यात्, सोपसर्गान्माभूदिति नियमार्थः।

---

१. तित् स्वरितं चेत्यारभ्य लभ्यमित्यन्तो (          ) रेखाङ्कितो भागो नास्ति क० पु०।

६८५. अवद्यपण्यवर्यागर्ह्यपणितव्यानिरोधेषु [ ३।१।१०१ ]

एते यदन्ता निपात्यन्ते गर्ह्याद्यर्थे। अवद्यमनिष्टम्। पण्यं विक्रय्यम्। अनिरोधोऽप्रतिबन्धः शतेन वर्या कन्या। वृत्यान्या। स्त्रीनिर्देशात् पुंसि न। वार्या ऋत्विजः।

६८६. वह्यं करणम् [ ३।१।१०२ ]

वह्यं निपात्यते करणं चेत्। वह्यं शकटम्। वाह्यमन्यत्।

---

कथं तर्हि "तेन तत्र न भवेद्विनियम्यम्" अनियम्यस्य नायुक्तिः। "त्वया नियम्या ननु दिव्यचक्षुषा" ( रघु० ) इति। प्रमाद एवायमिति हरदत्तः। केवलाद् यतं कृत्वा निशब्देन समास इत्येके। उपसर्गप्रतिरूपकेण निशब्देन समास इत्यन्ये। नियमे साधुः नियम्यः। "तत्र साधुः" ( ४।४।९८ ) इति यदित्यपरे।

अवद्यपण्य। अवद्यमिति। वदेर्नञ्पूर्वाद् "वदः सुपि क्यप् च" ( ३।१।१०६ ) इति यत् क्यपः प्राप्तयोर्यदेव यथा स्यात्। सोऽपि गर्ह्यायामेव यथा स्यादिति निपातनम्। अनिष्टमिति। पापादि तद्धि अवचनार्हम्। अन्यत्र क्यबेव। अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनार्हं तु न भवति। पण्यमिति। पणेर्व्यवहारार्थाण्ण्यतिप्राप्ते। विक्रेयमिति। निपातनस्य रूढार्थत्वात् पण्यशब्दस्य च तत्रैव रूढत्वादिति भावः। पाण्यमन्यत्। स्तुत्यमित्यर्थः। शतेन वर्येति। संभक्तव्येत्यर्थः। वृञ् संभक्तौ इत्यस्येदं निपातनम्। तत्रैवानिरोधप्रसङ्गात्। शतेनेति। शतशब्दोऽनियतवचनः। कन्यावरणे वरयितॄणां नियमो नास्तीत्यर्थः।

तथा चाहुः—शतंवरा कन्येति। एतेनानिरोधो दर्शितः।

वृत्यान्या। वृञ् वरणे। "एतिस्तुशास्वृदृजुषः क्यप्" (३।१।१०९)। स्त्रीलिङ्गनिर्देशादिति। सूत्रे अवद्यादीनि निर्विभक्तिकानि पृथक्पदानि। तत्र वर्याशब्दष्टाबन्तोऽनुक्रियते। नन्वेव द्वन्द्वे न जसन्तेन निर्देश इत्यर्थः।

[1] भट्टिकाव्ये तु पुंस्यपि प्रयुज्यते "सुग्रीवो नाम वर्योऽसौ भवता चारु विक्रमे" इति। पुरुषोत्तमादयाप्येवम्। वार्या ऋत्विज इति। ऋत्विजामपि वियत्तुमात्रेण वरणीयत्वादनिरोधोऽस्ति। स्त्रीत्वं नास्तीति ण्यदेव भवति। वृङश्चैतद्रूपम्। तेन "एतिस्तुशास्वृद" ( ३।१।१०९ ) इति क्यप् नास्ति वृञो ग्रहणात्।

वह्यं करणम्। वहेर्धातोः करणेऽर्थे यद् भवतीति फलितार्थः। वह्यं शकटमिति। उह्यतेऽनेन। वहनसाधनमित्यर्थः। वाह्यमन्यदिति। वहनकर्मेत्यर्थः।

---

१. भट्टिकाव्ये तु पुंस्यपि प्रयुज्यते इति नास्ति क० पु०।

६८७. अर्यः स्वामिवैश्ययोः [ ३।१।१०३ ]
अर्यः स्वामी वैश्यो वा । आर्योऽन्यः ।

६८८. उपसर्या काल्या प्रजने [ ३।१।१०४ ]
उपसर्येति निपात्यते । गर्भे प्राप्तकाला चेत् । उपसार्याऽन्या ।

६८९. अजर्यं संगतम् [ ३।१।१०५ ]
नञ्पूर्वाज्जीर्यतेः कर्तरि यन्निपात्यते संगतं चेद्वाच्यम् । न जीर्यतीत्यजर्यं सतां संगतम् ।

---

अर्यः स्वामि । ऋ गतौ । अस्माद् यद् निपात्यते । आर्योऽन्यः । "ऋहलोर्ण्यत्" ( ३।१।१२४ ) वृद्धिः । प्राप्तव्य इत्यर्थः ।

उपसर्या । प्रजननं प्रथमगर्भग्रहणमित्यर्थः । कालः प्राप्तोऽस्याः काल्या समयः "[1]तदस्य प्राप्तम्" ( ५।१।१०४ ) इत्यधिकारे "कालाद् यत्" ( ५।१।१०७ ) एतदुभयं व्याचष्टे—गर्भप्राप्तकाला चेदिति । उपसर्या गौरिति । उपपूर्वात् सरते सिसर्तेर्वा यत् । गर्भाधानार्थं वृषभोपगमनस्य प्राप्तकालेत्यर्थः । उपसार्यान्येति । प्राप्तव्येत्यर्थः । कर्मणि ण्यत् ।

अजर्यं संगतमिति । कर्तरि इत्येव । "तयोरेव" ( ३।४।७० ) इति भावे ([2]प्राप्ते निपातनमेतत् तेन भावे संगतकर्तृकेऽपि ण्यदेव भवति । अजार्यं संगतेनेति ) संगतं चेद्वाच्यमिति । संगतरूपः कर्ता चेद्वाच्यत्वेन विवक्ष्यते इत्यर्थः ।

न तु समुदायस्य संगतं वाच्यमित्यर्थो ग्राह्यः । तथा सति अजर्यं सतां गतमिति सह प्रयोगो न स्यात् ।

न च घटः कलशः इतिवद् व्याख्यानपरतया ([3]सह प्रयोगः "तेन संगतमार्येण रामाजर्यं कुरु द्रुतम्" इति भट्टिप्रयोगात् । अत एव ) पुरुषोत्तमदेवेन व्याख्यातम् । अजर्यं भवति संगतं चेद्विशेष्यमिति ।

एवं च "मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धे" इत्यादौ संगतमित्य[4]-ध्याहृत्य व्याख्येयम् ।

अजर्यमिति । न जीर्यति न विनश्यतीत्यर्थः । संगतं किम् ? अजरिता कम्बलः ।

---

१. समयस्तदस्य प्राप्तमित्यधिकारे इत्यारभ्य—उपगमस्येत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।
२. प्राप्ते इत्यारभ्य—अजार्यं संगतेनेत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० । तत्स्थाने संगतकर्तृकोऽपि ण्यदेव भवति । अजर्यं संगतं चेति क० पु० ।
३. सहप्रयोग इत्यारभ्य—अत एव इत्यन्तो रेखाङ्कितो ( ) नास्ति क० पु० ।
४. इत्याहृत्य व्याख्येयमिति क० पु० ।

६९० ऋहलोर्ण्यत् [ ३।१।१२४ ]

ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात्। कार्यम्, हार्यम्। वाक्यम्। कुत्यम्। "हनस्तोऽचिण्णलोः" (७।३।३२) घात्यम्।

६९१. चजोः कु घिण्ण्यतोः [ ७।३।५२ ]

चजोः कुत्वं स्यात् घिति ण्यति च परे। पाक्यम्। रोग्यम्।

६९२. न क्वादेः [ ७।३।५९ ]

कवर्गादेर्धातोः चजोः कुत्वं न स्यात्। गर्ज्यम्।

६९३. अजिव्रज्योश्च [ ७।३।६० ]

एतयोर्न कुत्वम्। व्राज्यम्। चादजेरपि।[4]आज्यम्। अजेर्वीभावाण्यति नोदाहरणम्।

---

ऋहलोर्ण्यत्। पञ्चम्यर्थे षष्ठीत्याह—ऋवर्णान्तादित्यादि। कुत्वमिति। "हो हन्ते र्ञ्णिन्नेषु" (७।३।५४) इत्यनेन। घात्यमिति। हन् हिंसागत्योः। उपधावृद्धिः। चजोः कु। यथासंख्यमत्र नास्ति। "तेन रक्तं रागात्" (४।२।१) इति लिङ्गात् [1]भोग्यम्। रोग्यमिति। रुजो भङ्गे।

न क्वादेरिति। गर्ज्यमिति। गर्ज शब्दे। अत्र वार्त्तिकमते निष्ठायामनिट्त्व[2]-मात्रे कुत्वविज्ञानाद् [3]अर्जिसर्जितर्जीनां निष्ठायां सेट्त्वान्न कुत्वम्। मृजुग्लुचुप्रभृतीनां निष्ठायामनिट्त्वात् क्वादित्वेऽपि भवत्येव कुत्वम्। सूत्रकृन्मते तु विपर्यासः। तत्र यथोत्तरं मुनित्रयस्य प्रामाण्याद् वार्त्तिकमतमेव प्रमाणमित्याकरः।

अजिव्रज्योश्च। अज गतौ क्षेपणे च। व्राज्यमिति। व्रज गतौ। अजेरित्यादि। आज्यमिति स्वाङ्पूर्वादञ्जेः संज्ञायां क्यपीति वक्ष्यति। अजिग्रहणं तु समाजः उदाजः इति घञि कुत्वनिषेधार्थम्। ण्यत्प्रकरणानुरोधात् [4]सनोदाहृतः।

---

1. भोग्यमिति नास्ति क० पु०।
2. त्वेति नास्ति क० पु०।
3. सर्जि इति नास्ति क० पु०।
4. तत्नोदाहृत इति क० पु०।

६९४. वञ्चेर्गतौ [ ७।३।६३ ]

गतौ वञ्चेः कुत्वं न स्यात् । वञ्च्यम् । गतौ किम् ? वङ्क्यं काष्ठम् ।

६९५. ण्य आवश्यके [ ७।३।६५ ]

आवश्यकेऽर्थे ण्ये परे कुत्वं न स्यात् । लुम्पेदवश्यमः कृत्ये । अवश्यपाच्यम् । मयूरव्यंसकादित्वात् समासः ।

६९६. यजयाचरुचप्रवचर्चश्च [ ७।३।६६ ]

एषां ण्ये कुत्वं न स्यात् । यज्यम् । याच्यम् । रोच्यम् प्रवाच्यम् । ऋच अर्च्यम् । ऋदुपधादपि ऋचेरत एव ण्यत् । "त्यजि पूज्योश्च" (वा०) । न कुत्वम् । त्याज्यम् । पूज्यम् ।

---

वञ्चेर्गतौ । वञ्चु गतौ । वञ्च्यम् इति । गन्तव्यम् इत्यर्थः । वङ्क्यम् काष्ठमिति । कुटिलीक्रियमाणमित्यर्थः । वञ्चिरिहानेकार्थत्वात् कौटिल्ये वर्तते । तत्राकर्मकत्वेऽप्यन्तर्भावितण्यर्थत्वात् कर्मणि ण्यद् व्याख्येयः । अत एव काशिकायां वङ्कम् काष्ठमिति भावे घञ् च प्रत्युदाहृत ।

यदाह हरदत्तः—वङ्कमिति गुणशब्दोऽयं भावे घञ् । अभेदोपचाराद् गुणिनि वृत्तिरिति । कुटिलमित्यर्थं इति व्याचक्षाणेन भाष्याऽपि घञन्तपाठ एवानुमन्यते इति लक्ष्यते ।

ण्य आवश्यके । अवश्यपाच्यम् इति । "आवश्यकाधमर्ण्ययोर्णिनिः" (३।३।१७०), "कृत्याश्च" ( ३।३।१७१ ) इति ण्यत् । आवश्यकार्थद्योतनायैवावश्यमः प्रयोगो न त्वावश्यकः । तेनार्थप्रकरणादिगम्येऽपि तस्मिन् ण्यः कुत्वाभावश्च भवति । यथा "अशोच्यानन्वशोचस्त्वम्" इति । अन्ये तु "शुच्युब्ज्योर्घञि कुत्वम्" ( वा० ) इत्युपसंचक्षते । तच्च नियमार्थं घञ्येव कुत्वं न ण्यतीति । शोकः । समुद्गः । ण्यति तु शोच्यः । समुब्ज्य इत्येव नित्यमिति ।

यजयाच । यज देवपूजादौ । [2]याचृ याच्ञायाम् । रुच दीप्तौ । प्रपूर्वो वच परिभाषणे । अर्च स्तुतौ । प्रवाच्यम् इति पाठविशेषोपलक्षितस्य ग्रन्थस्येदं नाम तन्न शब्दसंज्ञेयमिति "वचोऽशब्दसंज्ञायाम्" ( ७।३।६७ ) इत्यस्याप्रसङ्गान्निषेधोऽयमारभ्यते ।

---

१. ण्यन्तर्भावितेति क० पु० ।    २. टुयाचृ याच्ञायामिति क० पु० ।

६९७. वचोऽशब्दसंज्ञायाम् [ ७।३।६७ ]

वचः कुत्वं न स्यादशब्दाख्यायाम्। वाच्यम्। शब्दाख्यायां तु वाक्यम्।

६९८. प्रयोज्यनियोज्यौ शक्यार्थे [ ७।३।६८ ]

एतौ शक्यार्थे निपात्येते प्रयोक्तुं शक्यः प्रयोज्यः। नियोज्यः। अन्यस्तु प्रयोग्यः। नियोग्यः।

६९९. भोज्यं भक्ष्ये [ ७।३।६९ ]

भोग्यमन्यत्।

७००. ओरावश्यके [ ३।१।१२५ ]

उवर्णान्ताण्ण्यत् स्यादावश्यकेऽर्थे। यतोऽपवादः। अवश्यलाव्यम्। विप्रेण शुचिना। भाव्यम्। लव्यमन्यत्।

---

[1]अत्राहुः—अवाच ग्रहण नियमार्थम् अशब्दसंज्ञायामपि अपूर्वस्यैव वचे[2]र्निषेधो नान्योपसर्गपूर्वस्येति। तेषां नास्मिन्नहनि केनचित् कस्यचित् 'अविवाक्यमित्याश्वलायनप्रयोगोऽनुपपन्न।

अर्च्यमिति। ननु "ऋदुपधाच्चाक्लृपिचृतेः" ( ३।१।११० ) इति क्यपा भाव्यम्। सङ्करत्वाद् वाऽसरूपविधिर्नास्ति। तत्राह—अत एव ण्यदिति। अन्यथाऽस्य धातोः[3] ण्यति विधीयमानः प्रतिषेधो व्यर्थः।

वचोऽशब्दसंज्ञायाम्। वाक्यमिति। तिङ्सुबन्तचयो वाक्यमिति।

प्रयोज्यनियोज्यौ। इह प्रयुजनियुजः शक्यार्थे इति सूत्रणीयम्, ण्ये इत्येव। एवं सिद्धे निपातनाश्रयणं रूढ्यर्थं भृते एवैतत्प्रयोगो यथा स्यात्। प्रयोज्यो भृत्यः, नियोज्यो दास इति। स्वामिनि प्रयोज्यनियोज्यौ न भवतः।

भोज्यं भक्ष्ये। भक्ष्यमभ्यवहार्यमात्र[5] विवक्षितम्, न तु खरविशदमभ्यवहार्यम्। तेन भोज्या यवागूरित्यपि भवति। भोग्यमन्यदिति। पालनीयमुपभोक्तव्यं च।

ओरावश्यके। अवश्यं भाव आवश्यकः। मनोज्ञादित्वाद् वुञ्। ( इत्यवश्यं[6] भाव आवश्यकार्थो द्योत्यत्वेनोपात्तो नोपपदत्वेनेति दर्शितम् )। अत एवास्य यादृच्छिकः[7] प्रयोगः।

---

१. ये त्वाहुरिति क० पु०। २. भचेरिति क० पु०। ३. वाक्यमिति वा क० पु०। ४. धातोरिति नास्ति क० पु०। ५. रूपहवर्यंभूतेति क० पु०। ६. इत्यवश्यमित्यारभ्य—दर्शितमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०। ७. यादृच्छिकोऽ प्रयोग इति क० पु०।

७०१. आसुयुवपिरपिलपित्रपिचमश्च [ ३।१।१२६ ]

एभ्यो ण्यत् स्याद् यतोऽपवादः। आसाव्यम्। याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्। "दभेश्च" ( वा० ) दाभ्यम्। नलोपिनो निर्देशाद् नलोपः। "भज्जप्यजानमां यद्वेति केचित्"। भाग्यम्। भज्यम्। जाप्यम्। जप्यम्। याज्यम्। यज्यम्। आनाम्यम्। आनम्यम्।

७०२. आनाय्योऽनित्ये [ ३।१।१२७ ]

गार्हपत्ययो नौ दक्षिणाग्नावनित्ये आनाय्यो निपात्यते। आनेयोऽन्यः।

---

आसुयु। आङ्पूर्वः युञ् अभिषवे, न तु पु प्रसवैश्वर्ययोरिति। बहुलवचनात्। डुवप् बीजसन्ताने। रप लप व्यक्तायां वाचि। त्रपूष् लज्जायाम्। चमु अदने। अत्र युप्रभृतीनां द्वन्द्वं कृत्वा आसुवो द्वन्द्वस्तेन "अल्पाच्तरम्" ( २।२।३४, इति यु इत्यस्य न पूर्वनिपातः शङ्क्यः। यतोऽपवाद इति। आद्ययोः "अचो यत्" ( ३।१।९७ ) परेषाम् "पोरदुपधात्" (३।१।९८) प्राप्तस्य। आचाम्यमिति। आङ्पूर्वश्चम्। दम्भेश्च। एतद्वार्त्तिकम्। वृत्तौ तु सौत्रेण चकारेणानुक्तसमुच्चयार्थेन संगृहितम्। तत्र दभिधातुस्त्वपठितोऽपि चुरादिषु "बहुलमेतन्निदर्शनम्" ( ग० ) इति वचनात् शिष्टप्रयोगाच्च प्रकृत्यन्तरमाश्रीयते। तस्मात् "पोरदुपधात्" ( ३।१।९८ ) इति यति प्राप्ते ण्यदनेन विधीयते इत्याकरः।

आचार्यास्तु प्रकृत्यन्तरकल्पने प्रमाणप्रयोजनयोरभावाद् दाभ्यमिति प्रयोगो दम्भेरेवेच्छन्ति। न च तस्य यतोऽप्रसङ्गात् ण्यतो विधानवैयर्थ्यम्। तत्सनियोगेन नलोपनिपातार्थत्वात्। तदेतदुक्तम्—नलोपिनो निर्देशान्नलोप इति।

यद्वा लोपोऽदर्शनं तेन नलोपिनो निरनुषङ्गस्य "दभेश्च" इति वार्त्तिके निर्देशाद् न लोपो निरनुषङ्गो प्रकृत्यन्तरमस्तीति शेषः। तेन न कश्चिद् विरोधः। भोग्यमिति। ण्यति "चजोः" इति कुत्वम्।

आनाय्यो। "अनित्यमात्रे चेत् घटादावपि प्रसङ्गोऽत आह—दक्षिणाग्नाविति। स हि गार्हपत्यादानीयते इत्यानाय्य इत्युच्यते। अनित्यश्च भवति सततमप्रज्वलनात्। दक्षिणाग्नावपि विशिष्ट एवात्रेष्यते। न सर्वस्मिन्नित्याह—गार्हपत्ययोनाविति। गार्हपत्यो योनिरुत्पत्तिर्यस्य तस्मिन्। दक्षिणाग्नेर्हि योनिर्विकल्पते। वैश्यकुलाद् भ्राष्ट्राद्वा गार्हपत्याद्वेति। तत्र यो गार्हपत्यादानीयते दक्षिणाग्निस्तत्रैव विशेषे निपातनमेतत् ण्यदायादेशयोः। आनेयोऽन्यः। यो वैश्यकुलादियोनिर्दक्षिणाग्निर्यो वाऽनित्यो घटादिस्तत्र नयतेः "अचो यत्" एव भवतीत्यर्थः। सर्वश्चायं विषयनियमो रूढिवलाल्लभ्यते। तदुक्तं—श्लोकवार्त्तिके—

७०३. प्रणाय्योऽसंमतौ [ ३।१।१२८ ]

दुर्मतौ निष्कामे वा वाच्ये। प्रणाय्यः साधुश्चौरो वा। प्रणेयोऽन्यः।

७०४. पाय्य सान्नाय्यनिकाय्यधाय्या मानहविर्निवास-
सामिधेनीषु [ ३।१।१२९ ]

एते मानादौ क्रमान्निपात्यन्ते। पाय्यं मानम्। पेयमन्यत्। सान्नाय्यं हविः। संनेयमन्यत्। निकाय्यो निवासः। निचेयोऽन्यः। दधाति अग्निमिति धाय्या सामिधेनी ऋक्। धेयमन्यत्।

---

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च।
अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्॥ इति।

प्रणाय्योऽसमतौ। संमति[1] संमाननमभिलापश्चेह तन्त्रेण निर्दिश्यते। अविद्यमाना संमतिरस्मिन्नित्यसंमतिः। स च चौरादिर्वा मुमुक्षुर्वा भवतीत्याह—दुर्मतौ निष्कामे वा वाच्य इति। प्रणाय्य इति। प्रपूर्वस्य नयतेर्ण्यदायौ निपातनात्। साधुरिह मुमुक्षुतया निष्कामो विवक्षितः।

पाय्यसान्नाय्य। पाय्य मानमिति। मीयतेऽनेनेति पाय्यम्। माङ् मानेऽस्मात् करणे ण्यप्रत्ययः आदेयत्व च निपात्यते। आतो युक्। सूत्रे च मानमिति करणे ल्युट् द्रष्टव्यः। मेयमन्यदिति। भावकर्मणोर्यदेवेत्यर्थः। "ईद् यति" गुणः। सान्नाय्यमिति सम्यङ्नीयते होमार्थमग्निं प्रतीति। नयतेः कर्मणि ण्यत्, या आदेशः, उपसर्गस्य दीर्घश्च निपात्येत। हविरिति। रूढित्वाच्च हविर्विशेष एव विवक्षितः। ऐन्द्रं दधि अमावस्यायाम्, ऐन्द्रं पयोऽमावस्यायामिति विहितो दधिपयोरूपः। माघस्तु हविर्मात्रे प्रायुङ्क्त—

प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युमुख्यैर्हुतमयपमवलोढः साधु सान्नाय्यमग्निः॥ इति।

निकाय्य इति। निचीयतेऽस्मिन् धान्यादिकमिति चिनोतेरधिकरणे ण्यदायादेशौ। आदेश्च कुत्वं निपात्यते। निवास इति। निवसत्यस्मिन्निति अधिकरणघञा गृहमुच्यते। निचेयोऽन्य इति। भावकर्मणोर्यदेवेत्यर्थः। दधात्यग्निमिति। सा हि समिदाधानद्वारा अग्निं समिन्धे[1] इति। सैवाग्निं दधातीत्युच्यते। तेन कर्तरि ण्यन्निपात्यते।

हरदत्तस्तु धीयतेऽनया समिदिति करणे ण्यदित्याह।

---

१. समिधं च इति क० पु०।

७०५. क्रतौ कुण्डपाय्यसंचाय्यौ [ ३।१।१३० ]

कुण्डैः पीयतेऽत्र सोमः इति कुण्डपाय्यः क्रतुः । संचाय्यः क्रतुः ।

७०६. अग्नौ परिचाय्योपचाय्यसमूह्याः [ ३।१।१३१]

अग्नावेते साधवः । अग्नौ किम् ? परिचेयः उपचेयः । समाह्यः ।

७०७. चित्याग्निचित्ये च [३।१।१३२]

एतौ निपात्येते । चित्योऽग्निः । अग्नेश्चयनमग्निचित्या ।

---

माधवस्तु धीयते इति धाय्यमिति कर्मणि ण्यतमाह ।

सर्वथा ऋग्विशेषमेव रूढ्या प्रतिपादयति । रूढिशब्देषु च न व्युत्पत्तेर्नियमः । यथा गिरौ शेते गिरिश. । "गिरौ डश्छन्दसि" ( वा० ) गिरिरस्यास्तीति गिरिशः । लोमादिलक्षणः श इति वा । सामिधेनीति । समिध आधानी । पृषोदरादित्वात् साधुरित्येके[1] । ऋगिति । पृथुपाजा अमर्त्यः इत्यादि ऋग्विशेषः सामिधेनीत्यर्थः ।

अत्र च न सर्वा सामिधेनी धाय्या इत्युच्यते, किं तु समिध्यमानवती समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा[2] अमर्त्य इत्यादिकैव । अयं च विशेषो निपातनस्य रूढ्यर्थत्वाल्लभ्यते । सूत्रे च सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थम् । तथा चासामिधेन्यामपि दृश्यते धाय्या शंसत्याग्निर्नेता त्वं सोमक्रतुभिरिति । ज्योतिष्टोमे मरुत्वतीये शस्त्रविधानमेतदित्याहुः ।

क्रतौ कुण्डपाय्य । कुण्डैरित्यादि । कुण्डशब्दे[3] तृतीयान्ते उपपदे पिबतेरधिकरणे यत् युक् च निपात्यते इत्युक्तं भवति । ण्यति प्रकृते यतो निपातनम् "यतोऽनावः" इत्युत्तरपदाद्युदात्तार्थम् । ण्यति तु स्वरितत्वं स्यात् । संचीयतेऽसौ संचाय्यः ।

अग्नौ[4] परिचाय्यो । अग्नाविति । अग्न्यर्थे इष्टकाचयनविशेषे इत्यर्थः । तत्रैव रूढत्वादिति ज्ञेयम् । साधव इति । पर्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ निपात्येते । संपूर्वाद्वहेः संप्रसारणं दीर्घश्च निपात्येते इत्यर्थः ।

चित्याग्निचित्ये च । चिनोतेः कर्मणि क्यप् निपात्यते । चीयते इति चित्यः । "ह्रस्वस्य पिति कृति" ( ६।१।७१ ) इति तुक् । अग्नेश्चयनमग्निचित्येति । भावे यकारप्रत्ययस्तुक् च निपात्यते । तेनान्तोदात्तो भवति । क्यपि तु कृते चित्य इत्याद्युदात्तः स्यात् । भावे विधानादग्नावितीह न[5] संबध्यते ।

१. इत्येके इति नास्ति क० पु० ।
२. पृजाया अ इति क० पु० ।
३. कुण्डशब्दे तृतीया उपपदे पतेरधिकरणे यद्युक्चेति क० पु० ।
४. अग्नौ य इति क० पु० । ५. नेति नास्ति क० पु० ।

**७०८. अमावस्यदन्यतरस्याम् [३।१।१२२]**

अमोपपदाद्वसेः कालेऽधिकरणे ण्यत्। तत्र च वृद्ध्यभावो वा निपात्यते। अमा सह वसतोऽस्यां चन्द्रार्काविति अमावस्या अमावास्या वा। यजन्त्यनेन याप्या ऋक् इति केचित्।

**७०९. वदः सुपि क्यप् च [ ३।१।१०६ ]**

वदेरनुपसर्गे सुबन्ते उपपदे क्यप् प्रत्ययः स्यात् चकाराद्यत्। "उपपदमतिङ्" (२।२।१९) समासः। ब्रह्मणोद्यते इति ब्रह्मोद्या कथा। ब्रह्मवद्या।

**७१०. भुवो भावे [ ३।१।१०७ ]**

अनुपसर्गे सुप्युपपदे भवः क्यप् स्याद् भावे। ब्रह्मणो भावो ब्रह्मभूयम्। सुपि किम्? भव्यम्। अनुपसर्गे किम्? प्रभव्यम्।

---

अमावस्यदन्यतरस्याम्। अमोपपदादिति। अमा इति शब्दः उपपदं यस्य तस्मात्। एतेनामा[1]शब्दस्योपपदत्वमप्येतेन निपात्यते इत्युक्तम्। तेनोपपदसमासे सति "गतिकारकोपपदात् कृत्" (६।२।१३९) इत्युत्तरपदप्रकृतिस्वरेणान्तस्वरितत्वं भवति। ण्यतः स्वरितत्वात्। तत्र च 'वृद्ध्यभाव इति। वृद्धे द्विमात्रत्वादेरभावो यस्मिन् स वृद्ध्यभावो ह्रस्व इत्यर्थः। तेन ण्यति वृद्धौ कृतायां पक्षे ह्रस्वो निपात्यते। तेनामावास्याया अभावे'ऽमावस्याशब्दोऽपि निपात्यते। एकदेशविकृतस्यानन्यत्वात्।

अन्ये त्वाहुः। ण्यति-अमावास्या इति स्वतः प्राप्तं रूपम्। तस्यैव[4] वृद्ध्यभावोऽपि विकार इति।

अमाशब्दार्थमाह-सहेति। अमात्य इत्यादौ तथा दर्शनात्। साहित्यमिह सन्निकर्षमात्रम्। यजन्त्यनयेति। करणे ण्यदित्यर्थः।

वदः सुपि। अनुपसर्ग इति। "हलसूद्धिप" (३।३।६१) इत्यत्रोपसर्गग्रहणेन ज्ञापितमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति भावः। ब्रह्मोद्येति। कर्मणि क्यप् संप्रसारणम्। आद्गुणः।

अत्र चोत्तरसूत्राद् भाव इत्यपकृष्यते। तेन भावेऽपि भवति। ब्रह्मोद्यमितीत्याहुः। सुपि किम्? ब्रह्मवाद्यमिति। उपसर्गे तु प्रवाद्यम्। कथमनूद्यम्? उपसर्गप्रतिरूपको निपातोऽयमित्याहुः।

भुवो भावे। यदत्र नानुवर्तते पूर्वसूत्रे चानुकृष्टत्वात्।

---

१. अमानपरावस्येति क० पु०। २. वृद्ध्यभाव इति क० पु०।
३. अमावास्या या स्यातावेत्यमावस्या इति क० पु०। ४. तस्य कृतवृद्ध्यभाव इति क० पु०

## ७११. हनस्त च [३।१।१०८]

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात् तकारोऽन्तादेशश्च। ब्रह्मणो हननं ब्रह्महत्या। स्त्रीत्वं लोकात्।

## ७१२. एतिस्तुशास्वृदृजुषः क्यप् [३।१।१०९]

एभ्यः क्यप् स्यात्।

## ७१३. ह्रस्वस्य पिति कृति तुक् [६।१।७१]

धातोर्ह्रस्वान्तस्य तुगागमः स्यात् पिति कृति। इत्यः। स्तुत्यः। "शास इदङ्हलोः" शिष्यः। वृ इति वृञो ग्रहणं न वृङः। वृत्यः। वृङस्तु वार्या ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यब्ग्रहणं क्यब्बाधकस्य ण्यतो बाधनार्थम्। अवश्यस्तुत्यः। "शंसिदुहिगुहिभ्यो वा" (वा०)। शस्यम्। शंस्यम्। दुह्यम्। दोह्यम्। गुह्यम्। गोह्यम्। "आङ्पूर्वादञ्जेश्च संज्ञायाम्" (वा०)। अञ्जेः क्यपि "वीभावो नेति वाच्यम्" (वा०) आज्यम्। उपेयमिति ई गतौ इत्यस्य रूपं नेणः।

---

हनस्त च। ब्रह्महत्येति। स्वभावादस्य क्यपः स्त्रीत्वमन्यस्य क्लीबत्वमेवेत्याहुः। स्त्रीत्वमिति। सुपीत्येव। धातोरिति वर्तते। घञस्तु भावे नोदाह्रियतेऽनभिधानात्।

एतिस्तुशास्वृ। अ एतीति निर्देशादिण एव ग्रहणं नेङिकोः, तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः। तथा चाध्येयं व्याकरणमिति यदेव प्रयुज्यते।

अन्ये तु "इणवदिकः" (वा०) इति वक्तव्यमित्यधीत्यामालेत्युदाहरन्ति।

ष्टुञ् स्तुतौ। शासु अनुशिष्टौ। अन्ये त्वाङ् शासु इच्छायामित्यस्यापि ग्रहणमिच्छन्ति। आशास्यमिति।

यद्यपीत्त्वमस्य नास्ति परस्मैपदिन एव तद्विधानात्। तथापि–स्वरे विशेषोऽस्ति। क्यपि धातुस्वरे मध्योदात्तम्। ण्यति तु कृदुत्तरपदप्रकृतिस्वरेणान्तस्वरितमिति। वृञो ग्रहणमिति। इष्टिरेवेयम्। वृत्य इति। वृञ् वरणे। वार्य इति। वृङ् संभक्तौ। आदृत्य इति। दृङ् आदरे। जुष्य इति। जुषी प्रीतिसेवनयोः। पुनरिति। "वदः सुपि क्यप् च" इत्यतः क्यप् अनुवर्तते एवेत्यर्थः। ण्यत इति। "ओरावश्यके" इति प्राप्तस्य। शंसि दुहि इति। शंस स्तुतौ। दुह प्रपूरणे। गुह संवरणे। शस्यम्। "अनिदिताम्" इति नलोपः। दोह्यमिति। ण्यत्युपधागुणः। आङ्पूर्वादञ्जेश्चेति। अज गतौ क्षेपणे च। अस्य ण्यति तित्स्वरः प्रसज्येतेति क्यबेव विधीयते।

७१४. ऋदुपधाच्चाक्लृपिचृतेः [३।१।११०]

ऋदुपधात् क्यप् स्यात् क्लृपिचृती विना । वृत् वृत्यम् । क्लृपिचृत्यो-स्तु कल्प्यम् । चर्त्यम् । ऋदुपधेति तपरः किम् ? कॄत् कीर्त्यम् । "पाणौ सृजेर्ण्यत्" ( वा० ) । पाणिसर्ग्या रज्जुः । "समवपूर्वाच्च" ( वा० ) । समवसर्ग्या ।

७१५. ईच खनः [ ३।१।१११ ]

खनः क्यप् स्यादीकारोऽन्तादेशश्च । "आद्गुणः" ( ३।१।८७ ) । खेयम् । दीर्घोक्तिरिकारान्तरप्रश्लेषार्था । तेन "ये विभाषा" ( ६।४।४३ ) इत्यात्वं न ।

---

नन्वत्रापि "अजेर्व्यघञपोः" । इति वीभावः प्राप्नोति, तत्राह अजेः क्यपीति । एतच्च समज्येत्या'द्यर्थमवश्यं वाच्यमेव । आकरे त्वञ्जेरिति पठित'त्वात् अञ्जू व्यक्ति-म्रक्षणकान्तिगतिषु इत्यस्मात् करणे क्यपि नलोपे आज्यमिति व्युत्पादितम् ।

आचार्यैस्तु अजेरपि' क्यपो विधानेन सिद्धयति रूपमिति प्रौढिवादेनैतदुक्तम् । आज्यमिति । आङा सहैकादेशः ।

ननु यद्याङ्पूर्वस्यैव प्रयोगः अवग्रहः प्राप्नोति आ आज्यमित्याज्यमिति । अत्र भाष्यम्—भवत्येवावग्रहः । न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनु-वर्त्यमिति ।

ऋदुपधाच्चा । कृपू सामर्थ्ये । चृती ग्रन्थे हिंसायां च । कृपेर्लत्वस्यासिद्धत्वेन ऋदुपधत्वेन प्राप्तिः । कल्प्यमित्यादि । ण्यति गुणो रपरः लत्वम् । कीर्त्यमिति अनित्य-ण्यन्ताश्चुरादय इति णिजभावे ण्यत् । णिच्पक्षे तु णिलोपे कृतेऽकृते वापि दित्स्य'-मितिवत् "अचो यत्" । अत्र हि क्यपि सति आद्युदात्तः स्यात् । ण्यति तु अन्तस्वरितत्वं भवति ।

ई च खनः । ननु ह्रस्वविधानेऽप्याद्गुणे रूपे विशेषो नास्ति, तत्किं दीर्घो-च्चारणेनेत्यत आह–दीर्घोक्तिरित्यादि । आत्वं नेति । द्वितीय ईकारो बाधकबाधनार्थ इति भावः ।

---

१. समज्येश्वर्यमिति क० पु० ।
२. पठितत्वा इति ख० पु० ।
३. अजतेरिति ख० पु० ।
४. धित्स्यमिति ख० पु० ।

७१६. भृञोऽसंज्ञायाम् [ ३।१।११२ ]

भृञः क्यप् स्यान्न तु संज्ञायाम् । भृत्यः । संज्ञायां तु भार्या नाम क्षत्रियाः । भार्या वधूः । "संभृञो वा" ( वा० ) संभृत्याः । संभार्याः ।

७१७. मृजेर्विभाषा [ ३।१।११३ ]

मृजेः क्यप् वा स्यात् पक्षे ण्यत् । मृज्यः । मार्ग्यः ।

७१८. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः [ ३।१।११४ ]

एते क्यबन्ता निपात्यन्ते । राज्ञा सोतव्यो राजसूयः । क्रतुः । सुवति सरति वा सूर्यः । मृषोद्यते मृषोद्यं नित्यम् । रोचते रुच्यः । स्वर्णरूप्या-भ्यामन्यत् कुप्यम् । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यते इति कृष्टपच्यो व्रीहिः । न व्यथते अव्यथ्यः ।

भृञोऽसंज्ञायाम्[1] । 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्" ( प० ) इति । भृञ् भरणे इत्यस्य ग्रहणम्, न तु डु भृञ् धारणपोषणयोरित्यस्य । भृत्य इति । भर-णीय इत्यर्थः । [2]भार्या बधूरिति । भार्याशब्दोऽयं पूगाह्वनीयादिवत् संस्कारशब्दत्वात् संज्ञाशब्दः । तया चाभ्रियमाणापि भार्योच्यते ।

ननु संज्ञायां संभृत्येति क्यपा भाव्यम् । संज्ञाप्रतिषेधस्तु पुंसि चरितार्थः । नैतदस्ति । शब्दशक्तिस्वभावात् भृञो भावे एव स्त्रियां क्यप् भवति । कर्मणि तु ण्यतैव भवितव्यम् । संभृञो वेति । असंज्ञायामयं विधिः । तेन प्राप्तविभाषेयम् ।

मृजेर्विभाषा । ऋदुपधादिति नित्ये प्राप्ते विभाषेयम् । मार्ग्य इति । "चजोः कु" ( ७।३।५२ ) इति कुत्वम् ।

राजसूयसूर्य । राज्ञा सोतव्य इति । अभिषिक्तः क्षत्रियोऽत्र राजा, तेन सोतव्यः अभिषवद्वारेण निष्पादयितव्य इत्यर्थः । निपातनस्य रूढ्यर्थत्वाद् अश्वमेधादौ नातिप्रसङ्गः ।

अन्ये तु लतात्मकः सोमो राजा । राजानं क्रीणन्तीत्यादौ दर्शनात् । राजा सूयतेऽत्रेति राजसूय इत्यधिकरणे क्यबित्याहुः । अत्रापि रूढित्वादेव ज्योतिष्टोमेनाति प्रसङ्गः । राजसूय इति । राजशब्दे उपपदे षुञ् अभिषवेऽस्मात् कर्मणि क्यप् दीर्घश्च निपात्यते । ह्रस्वाभावान्न तुक् । सुवति सरति वेति । षु प्रेरणे । सृ गतौ । आभ्यां कर्तरि क्यप् । रुगागमः । सुवति प्रेरयति कर्मणि लोकमिति । सरत्याकाशे इत्यर्थे सर्तेः कर्तरि क्यप् । उकारोऽन्तादेशश्च निपात्यते । तत्र रपरत्वे "हलि च" (८।२।७७ ) इति दीर्घः । मृषोद्यमिति । मृषापूर्वाद्वदेः कर्मणि क्यप् । सम्प्रसारणम् ।

१. भृञोऽसि इति क० पु० । २. भार्या वियूरिति क० पु० ।

## ७१९. भिद्योद्ध्यौ नदे [ ३।१।११५ ]

कर्तरि क्यबन्तावेतौ नदे वाच्ये। कूलं भिनत्तीति भिद्यो नाम नदः। वारि उज्झतीति उद्ध्यो नदः।

## ७२०. पुष्यसिद्ध्यौ नक्षत्रे [ ३।१।११६ ]

कार्यं पुष्णाति पुष्यत्यस्मिन् वा पुष्यो नक्षत्रम्। कार्यं साधयति सिद्ध्यत्यस्मिन् वा सिद्ध्यः। एष एव तिष्योऽपि।

---

ननु "वद. सुपि क्यप् च" (३।१।१०६) इत्येव सिद्धः क्यप्, तत्राह–नित्यमिति। स हि विकल्पितस्तेन पक्षे यदपि प्राप्नोति। क्यबेव स्यादित्येवमर्थं निपातनमित्यर्थः। रोचते रुच्यः इति। रुच् दीप्तौ। कर्तरि क्यप् निपात्यते। स्वर्गाद्रुप्याभ्यामन्यत् कुप्यमिति।

एतेन संज्ञायामेतन्निपातनं तेन नातिप्रसङ्ग इति दर्शयति—गोप्यते इति कुप्यम्। गुपू रक्षणे। क्यप् आदेश्च कुत्वं निपात्यते।

यत्तु गुप् गोपने इत्यस्येति प्राचोक्तम्, तदसत्; गोपनार्थस्य चुरादित्वेन णिच्प्रसङ्गात्। अस्यानित्यण्यन्तत्वे प्रमाणाभावात्। निन्दार्थे तु नित्यं सना भाव्यम्। एतेन [1]तदुभयबाधकल्पने प्रमाणप्रयोजनयोरभावात्। कृष्टं स्वयमेव पच्यते इति।

एतेन कर्मकर्तरि निपातनमेतदित्याह—शुद्धे तु कर्मणि कृष्टपाक्य इत्येव भवति। अव्यथ्य इति। व्यथ भयचलनयोः।

भिद्योद्ध्यौ। भिनत्तीति। भिदिर् विदारणे। उज्झतीति। उज्झ उत्सर्गे। दकारोपधोऽयम्। जत्वं तु लाक्षणिकम्। उद्ध्य इति। निपातनाद् धत्वम्।

पुष्यसिद्ध्यौ। पर्याययोरप्यनयोः स्वरूपपरत्वाद् द्वन्द्वः। पुष् पुष्टौ। षिधू संराद्धौ। आभ्यां कर्तर्यधिकरणे वा क्यप्। स एव तिष्योऽपि इति। अनयोः पर्यायान्तरमप्यस्ती-त्येतावता वदनेन प्रतिपाद्यते, न त्वस्यापि क्यपि निपातनमिति। त्विष् दीप्तौ इत्यस्य[3] घ्न्यादयश्चेत्यौणादिकस्य यक्प्रत्ययान्तस्य निपातनात्। तथा च पुष्यतिष्ये[4] कलियुगे इत्यमरकोशव्याख्याने क्षीरस्वामी त्विष्यतीति तिष्यः। त्विष् दीप्तौ। अघ्न्यादिरिति। तुष् तुष्टावित्यस्य रूपमिति प्राचोक्तम्। यद्वा "सूर्यतिष्य" इति निपातनात्तिष्योऽपि पुष्यसमानार्थः साधुर्ज्ञेय इति व्याख्येयम्।

---

१. तदुभयाभावप्रकल्पने प्रयोजनाभावात् इति क० पु०।

२. एतेन कर्तरि इत्येव क० पु०।

३. त्विषतो घ्न्यादयश्चेत्यौणादिक इति क० पु०।

४. चतुर्युगे तिष्येति क० पु०।

७२१. विपूयविनीयजित्यामुञ्जकल्कहलिषु [ ३।१।११७ ]

पूनीजिभ्यः क्यप् निपात्यते । विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः । एषु किम् ? विपव्यम् । विनेयम् । जयम् ।

७२२. प्रत्यपिभ्यां ग्रहेश्छन्दसि [ ३।१।११८ ]

आभ्यां ग्रहेः क्यप् स्याच्छन्दसि । भाषायां वेति केचित् । प्रतिगृह्यम् । प्रतिग्राह्यम् । अपिगृह्यम् । अपिग्राह्यम् ।

७२३. पदास्वैरिबाह्यापक्ष्येषु च [ ३।१।११९ ]

एष्वर्थेषु ग्रहेः क्यप् स्यात् । प्रगृह्यं पदम् । गृह्यः । अस्वैरी । ग्रामगृह्या सेना । ग्रामबाह्या इत्यर्थः । स्त्रीलिङ्गनिर्देशान्नान्यत्र । कृष्णगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

---

विपूयविनीय । पूनीजिभ्य इति । पूङ् पवने । णीञ् प्रापणे । जि अभिभवे । क्यबिति । यतोऽपवाद इति । विपूयो मुञ्ज इति । रज्ज्वादिकरणाय शोधयितव्य इत्यर्थः । मुञ्जस्तृणपुञ्जविशेषः । विनीयः कल्क इति । कल्कः पिष्टौषधादिः स विनीयते साध्यते इति विनीयः ।

हरदत्तस्त्वाह—कल्कः पापमिति । तपो न कल्कोऽध्ययनं न कल्कः इति दर्शनात् ।

तथा च माघः प्रायुङ्क्त—अविनीय संभ्रमं विकासिभक्तिभिरिति ।

जित्यो हलिरिति । बलेनाकृष्टव्य इत्यर्थः । महद्धलं हलिः । कृष्टसमीकरणार्थं स्थूलकाष्ठमुच्यते ।

प्रत्यपिभ्यां ग्रहेः । प्रतिगृह्यम् इति । "ग्रहिज्या" (६।१।१६) इति संप्रसारणम् ।

पदास्वैरि । स्वयमेव ईरितुं शीलमस्य स्वैरी ताच्छील्ये णिनिः । स्वतन्त्र उच्यते । न स्वैरो अस्वैरी परतन्त्रः । बहिर्भवाः बाह्याः "बहिषष्टिलोपो यञ्च" (वा०) । पक्षे भवः पक्ष्यः । दिगादित्वाद् यत् । प्रगृह्यं पदम् इति । प्रगृह्यते प्रगृह्यम् । यस्य प्रगृह्यसंज्ञाक्रियते तत् । असन्निकर्षश्चात्र ग्रहेरर्थः ।

तत्र हि स्वरसन्ध्यभावाद् अग्नी अत्रेत्यादौ कियताऽपि कालेन व्यवधानात् परस्याचो न सन्निकर्ष इति ।

७२४. विभाषा कृवृषोः [ ३।१।१२० ]

आभ्यां वा क्यप् स्यात् । कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् ।

७२५. युग्यं च पत्रे [ ३।१।१२१ ]

पत्रं वाहनम् । युग्यमश्वादि चेत्, योग्यमन्यत् ।

७२६. प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च [ ३।३।१६३ ]

प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यम् । अनुज्ञातस्त्वं त्वया अध्येतव्यम्, अध्ययनीयम्, अध्येयम् । प्राप्तस्ते कालस्त्वया ध्यातव्यं ध्यानीयं ध्येयम् । सामान्यतः प्राप्तावप्यत्र लोटा बाधा मा भूदिति पुनः कृत्यविधिः । स्त्रियां क्तिन् ऊर्ध्वं वाऽसरूपविधेरभावात् ।

---

ननु पदावयवस्य द्विवचनादेरेव प्रगृह्यत्वेन पदस्य, तत्किमुच्यते प्रगृह्यं पदमिति । नैष दोषः, अवयवधर्मस्य समुदाये उपचारात् । यद्वा पद्यते गम्यतेऽनेनार्थं इति पदं प्रगृह्यम् इति । पञ्जरादिबन्धेन परिगृह्यावस्थापितः शुकादिरुच्यते तदेवाह—अस्वेरीति । परतन्त्र इत्यर्थः । ग्रामगृह्येति । शेषषष्ठ्या समासः । नान्यत्रेति । पुंनपुंसकयोरित्यर्थः ।

विभाषा कृवृषोः । डुकृञ् करणे । वृषु सेचने ।

युग्यं च पत्रे । युज्यतेऽनेन गमनमिति करणे क्यप् कुत्वं च निपात्यतेऽनियोग्यमिति । ण्यति "चजोः कुः" ( ७।३।५२ ) इति कुत्वम् ।

प्रैषातिसर्गप्राप्तकालेषु । लकारार्थेषु व्याख्यातमेतत् । गम्यमिति । "पोरदुपधात्" ( ३।१।९८ ) इति यत् । अध्येतव्यमिति । अधिपूर्वं इङ् अध्ययने । अध्येयमिति । "अचो यत्" ( ३।१।९७ ) ध्यातव्यमिति । ध्यै चिन्तायाम् । "आदेच" ( ६।१।४५ ) इत्यात्वम् । ध्येयमिति । "ईद्यति" ( ६।४।६५ ) ।

ननु भावकर्मणोः सामान्येन विहिता एव कृत्यास्ते प्रैषादिष्वन्यत्र च भविष्यन्ति तत्किं प्रैषादिषु पुनः कृत्याः विधीयन्तेऽत आह—सामान्यतः प्राप्तावपीति । लोटा बाधा मा भूदिति । अन्यथा प्रैषादिषु विशेषविहितो लोट् कृत्यान् बाधेतेत्यर्थः ।

ननु वाऽसरूपविधिना कृत्या अपि भविष्यन्तीत्यत आह-स्त्रियां क्तिन ऊर्ध्वमित्यादि । एतदेव ज्ञापकं इत ऊर्ध्वं वाऽसरूपविधिरनित्य इत्यर्थस्येति भावः ।

---

१. विधिरनित्येति क० पु० ॥

७२७.　　अर्हे कृत्यतृचश्च [ ३।३।१६९ ]

स्तोतुमर्हः स्तोतव्यः। स्तवनीयः। स्तुत्यः। लिङाऽत्र बाधादिति कृत्यतृचोर्विधिः।

७२८.　　भव्यगेयप्रवचनीयोपीस्थानीयजन्याप्लाव्या-पात्या वा [३।४।६]

एते कृत्यान्ता वा कर्तरि निपात्यन्ते। भवतीति भव्यः। भव्यमनेन वा। गायतीति गेयः। गेयं साम बहुना वा इत्यादि।

७२९.　　शकि लिङ् च [३।३।१७२]

चात् कृत्याः। वोढुं शक्यो वोढव्यः। वहनीयः। वाह्यः। लिङा बाधा माभूदिति कृत्योक्तिः।

इति कृत्यप्रक्रिया

---

अर्हे कृत्यतृचश्च। ननु चात्रापि सामान्येन विहिताः कृत्यतृचोऽर्हेऽपि सिद्धा एव, तत्किं कृत्यतृचः पुनर्विधीयन्तेऽत आह—लिङाऽत्रेति। अत्रार्हार्थः।

भव्यगेयेति। तयोरेवेति नियमात् कर्तर्यप्राप्ते वचनम्। भव्य इति। "अचो यत्" ( ३।१।९७ ) "वान्तो यि प्रत्यये" ( ६।१।७९ ) भव्यमनेनेत्यादिना। वाग्रहणात् पक्षे सकर्मकेभ्यः कर्मण्यपि, अकर्मकेभ्यस्तु भावेऽपि इति दर्शितः। आदिपदात् प्रवक्तीति प्रवचनीयो गुरुः स्वाध्यायस्य। प्रवचनीयो गुरुणा स्वाध्यायः। उपस्थानीयो गुरुः शिष्यस्य। उपस्थानीयो गुरुः शिष्येण। जायते जन्यः। जन्यमनेन वा। आप्लवनम्, आप्लाव्यः। ण्यत्। आप्लव्यमनेन वा। आपततीति आपात्यः। आपात्यमनेन वा।

शकि इति। वोढव्य इति। वह प्रापणे। तव्यः। "होढः" ( ८।२।३१ ) ढत्व-ष्टुत्वढलोपाः। "सहिवहो:" ( ६।३।११२ ) इत्योत्वम्। लिङेत्यादि। व्याख्यातप्रायम्।

पृथ्वीमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तंसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः।
तत्सूनोः कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् कृत्याश्रया प्रक्रिया ॥ १ ॥

कृत्यप्रत्ययः ॥ ३०० ॥

# अथ कृदन्तप्रक्रिया

## ७३०. ण्वुल्तृचौ [ ३।१।१३३ ]

धातोर्ण्वुल्तृचौ स्तः, "कर्तरि कृत्" ( ३।३।६७ ) इति कर्त्रर्थे। "युवोरनाकौ" ( ७।१।१ ) करोतीति कारकः। कर्ता। वोढुमर्हो वोढा। "प्रत्ययस्थात्" ( ७।३।४४ ) इतीत्त्वम्। कारिका। "ऋन्नेभ्यो ङीप्" ( ४।१।५ )। कर्त्री। "गाङ्कुटादिभ्यः" ( १।२।१ ) इति ङित्त्वम्। कुटिता। कोटकः। "विज इट्" ( १।२।२ ) विजिता। वेजकः। "हनस्तोऽचिण्णलोः" (७।३।३२) घातकः। "आतो युक् चिण् कृतोः" (७।३।३३) दायकः। "नोदात्तोपदेश" ( ७।३।३४ ) इति उपधावृद्धिर्न। शमकः। दमकः। अनिटस्तु यामकः। "जनिवध्योश्च" ( ७।३।३५ ) जनकः। वधकः। "रधिजभोरचि" ( ७।१।६१ ) रन्धकः। जम्भकः। "नेट्यलिटि रधेः" ( ७।१।६२ ) रधिता। रद्धा। मङ्क्ता। नंष्टा। नशिता।

---

### पूर्वकृदन्तप्रक्रिया

ण्वुल्तृचौ। णकारो वृद्ध्यर्थः। उकारो "युवोः" (७।१।१) इति विशेषणार्थः। लकारो "लिति" ( ६।१।१९३ ) इति स्वरार्थः। तृचश्चकारः "तुरिष्ठेमेयस्सु" (६।४।१५४) "तुश्छन्दसि" ( ५।३।५९ )इत्यादौ सामान्यग्रहणार्थः। "चितः" ( ६।१।१६३) इत्यन्तोदात्तार्थस्तु न भवति। "आद्युदात्तश्च" ( ३।१।३ ) इत्येव सिद्धेः। कारक इति "अचो ञ्णिति" ( ७।२।११५ ) इति वृद्धिः, रपरः। कर्तेति। तृचि गुणो रपरः। "ऋदुशनस्" ( ७।१।९४ ) इत्यनङ्। "सर्वनामस्थाने च" (६।४।८) इति उपधादीर्घः। "नलोपः प्रातिपदिकान्तस्य" ( ८।२।७ ) इति नलोपः। वोढेति। "अर्हे कृत्यतृचश्च" (३।३।१६९) इति तृच्। ढत्वधत्वष्टुत्वढलोपाः। "सहिवहोरो" (६।३।११२) इत्योत्त्वम्। कारिकेति। स्त्रियां टाप्। "हल्ङ्यादिना" (६।१।६८) सुलोपः। कर्त्रीति। यणादेशः। कुटिता। कुट कौटिल्ये। कोटकः। अञ्णिदित्युक्तेर्न ङित्त्वम्। घातक इति। "अत उपधायाः" ( ७।२।११६ ) इति वृद्धिः। "हो हन्तेः" ( ७।३।५४ ) इति कुत्वम्। यामक इति। यम उपरमे। वधक इति। वध हिंसायाम्, प्रकृत्यन्तरम्। "रधिजभोरचि" (७।१।६१ ) अनेन नुमिति शेषः। रधि हिंसायाम्। जभ गात्रविनामे। रन्धकः इति। उपदेशिवद्वचनादादौ नुमि कृते वृद्ध्यभावः। रद्धा। "रधादिभ्यश्च" ७।२।४५ )

रम्भकः । रब्धा । लम्भकः । लब्धा । "तीषसह" (७।२।४८) इतीड् वा । एषिता । एष्टा । सहिता । सोढा । दरिद्रातेरालोपः । दरिद्रिता । "ण्वुलि न" (वा०) दरिद्रायकः । "कृत्यल्युट" (३।३।११३) इत्यत्र बहुलोक्तेः क्वचित् कर्मण्यपि ण्वुल् स्यात् । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गले चोपकः । "हलदन्तात्" (६।३।९) इत्यलुक् । आत्मनेपदार्हात् क्रमेः कृत इण्निषेधः प्रक्रन्ता । कर्तर्येवेत्येव । प्रक्रमितव्यम् । "गमेरिट्" (७।२।५८) तङानाभावे इत्युक्तेः संजिगमिषिता । संजिगंसितेत्यपि केचित् । एवं न वृद्भ्यश्चतुर्भ्यः । विवृत्सिता । विवर्तिषितेत्यपि केचित् । चिक्लृप्सिता । "न धातुलोपे" (१।१।४) इत्यत्र इगेव गुणवृद्धिनिषेधात् पापाचकः । पापचिता इत्यादि ज्ञेयम् ।

---

इतीडभावपक्षेऽजन्तरत्वाभावादेव नुमभावः । मङ्क्तेति । टु मस्जो शुद्धौ । "मस्जिनशोः" (७।१।६०) इति नुम् । "अन्त्यात् पूर्वं" (वा०) "स्कोः" (८।२।२९) इति सलोपः । अनुस्वारपरसवर्णौ । नंष्टेति । "रधादिभ्यश्च" (७।२।४५) इतीडभावपक्षे पूर्वं नुम् । रम्भकः इति । रभ राभस्ये । "रभेरशब्लिटोः" (७।१।६३) इति नुम् । रब्धा इति । "झषस्तथोर्धोऽधः" (८।२।४०) जश्त्वम् । लम्भक इति । "लभेश्च" (७।१।६४) इति नुम् । "तीषसह" (७।२।४८) वेडिति शेषः । एषितेति । इषु इच्छायाम् । लघूपधागुणः । सोढेति ढत्वधत्वष्टुत्वढलोपाः ओत्वम् । दरिद्रातेरित्यादि । दरिद्रातेरार्धधातुके आतो लोपो वाच्यः इति वचनात् । ण्वुलि नेति । "सनि ण्वुलि ल्युटि च न" (वा०) इति वचनात् । दरिद्रायक इति । आतो युक् । चोपक इति । चुप मन्दायां गतौ । गले चोपकः इति । "साधनं कृता" (भा० इ०) इति समासः । प्रक्रन्तेति । "प्रोपाभ्यां समर्थाभ्याम्" (१।३।४२) इत्यस्यात्मनेपदयोग्यता । तङानाभाव इत्युक्तेरिति । परस्मैपदग्रहणं तङानयोरभावं लक्षयति । तेनासत्यपि परस्मैपदे इट् स्यादित्युक्तम् । संजिगमिषितेति । गमेः सन्नन्तात् तृच् संजिगंसितेत्यपि केचिदिति । आत्मनेपद-योग्याद्वेति केचिदित्युक्तेः । "समो गम्यृच्छिभ्याम्" (१।३।२९) इत्यात्मनेपद-योग्यता । विवृत्सितेति । वृतु वर्तने । सन् द्वित्वम् । उरदत्वम् । हलादिः शेषः । "सन्यतः" (७।४।७९) इतीत्त्वम् । "हलन्ताच्च" (१।२।१०) इति कित्वान्न गुणः । चिक्लृप्सितेति । कृपू सामर्थ्ये । सनि द्वित्वादि । "तासि च क्लृपः" (७।२।६०) इतीण्-निषेधः "कृपो रो लः" (८।२।१८) पापचकः इति । पचेर्यङन्तात् ण्वुलि पापच्य अक इति स्थिते यदा "यस्य हलः" (६।४।४९) यकाराकारसमुदायस्य लोपस्तदोपधावृद्धिर्भवति ।

७३१ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः [३।१।१३४]

नन्द्यादेर्ल्युः । ग्रहादेर्णिनिः । पचादेरच् । नन्दनः । "असि उसि अने च चक्षिङः स्यान्न् नेति वाच्यम्" (वा०) विचक्षणः । जनार्दनः । मधुसूदनः । ग्राही । स्थायी । प्रयायिणौ । "यङोऽचि च" इति यङो लुक् । "न धातुलोपे" (१।१।४) इति गुणनिषेधः । नेन्यः । लोलुवः । पोपुवः । मरीमृजः । उदन्तात्

यदि तु "न धातुलोपे" ( १।१।४ इत्यत्र इक इति नानुवर्तेत ततोऽत्रापि निषेधः स्यादिति भावः । आकारे रवात्तो लोपं कृत्वा "यस्य हलः" ( ६।४।४६ ) इति यलोपमात्रं भवति । तत्राल्लोपस्य स्थानिवत्त्वाद् वृद्ध्यभावेन पापचक इत्येव स्थितम् । न च मन्तव्यं यङ्लुकः समुदायलोपत्वात्तस्येदमुदाहरणं पापाचक इतीति । तत्र हि यङ्लुकोऽनैमित्तिकत्वेन न धातुलोप इति निषेधस्याप्रसङ्गे इक एव इत्यादिपरिहाराभिधानवैयर्थ्यात् । प्रपञ्चितं चैतद् यङ्लुगन्ते, न धातुलोपसूत्रे । पापचितेति । तृच् ईट् यलोपः ।

नन्दिग्रहि । द्वन्द्वान्ते श्रूयमाणत्वादादिशब्द प्रत्येकं सम्बध्यते इति तेन त्रिभ्यो गणेभ्यस्त्रयः प्रत्ययाः यथासंख्यं भवन्तीत्याह—नन्द्यादेर्ल्युरित्यादि ।

एते च गणा न धातुपाठे संनिविष्टाः, किं तु नन्दनरमणेत्यादिषु प्रातिपदिकगणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते । तत्र नन्दिवासिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् । नन्दन इति । टु नदि समृद्धौ । "युवोरनाकौ" (७।१।१) । "असि उसि अने च चक्षिङः स्यान्न् नेति वाच्यम्" ( वा० ) असि उसि इति औणादिकावेतौ प्रत्ययौ । नृचक्षाः चक्षुरिति यथा । विचक्षण इति । चक्षिङ् व्यक्तायां वाचि । जनार्दन इति । जनानर्दयतीति । मधुसूदन इति । मधु दैत्यं सूदयतीति । सूद क्षरणे । ग्राम्यां कर्मण्यणि प्राप्ते । एवं विशेषेण भीषयतीति विभीषण इति । "भियो हेतुभये षुक्,, ( ७।३।४० ) लुनाति लवणः । निपातनात् णत्वमिति दिक् । ग्राहीति । ग्रह उपादाने । णित्वादुपधावृद्धिः । सौ नान्तत्वाद् दीर्घः । स्थायी । ष्ठा गतिनिवृत्तौ । "आतो युक् चिण्कृतोः" ( ७।३।३३ ) प्रयायिणाविति । "प्रातिपदिकान्तनुम्विभक्तिषु च" ( ८।४।११ ) इति णत्वम् ।

एवं "याचृव्याहृसंव्याहृव्रजवदवसां नञ्पूर्वाणाम्" (ग०) अयाचीत्यादि । "अजन्तानामविसर्तृकाणाम्" (वा०) अकारी । अहारीत्यादि । शीङ् स्वप्ने । विशायी । षिञ् बन्धने । विषयी । निपातनाद् वृद्ध्यभावः । परिभावी । परिभावी । परिभवी । निपातनाद्वा वृद्धिरिति दिक् । पच इति । डुपचष् पाके । देवतीति । दिवु क्रिडादौ ।

१. शिव शशमीश्वरः इति क० पु० ।

यङो लुग्नेति केचित् । रोरूयः । "चरिचलिपतिवदीनां वा द्वित्वम् चाग्वमभ्यासस्य" ( वा० ) "अभ्यासस्य कार्यमनचीति वक्तव्यम्" ( वा० ) इति हलादिशेषाभावः । चराचरः । चलाचलः । पतापतः । वदावदः । "हन्तेर्घत्वं च" (वा०) घनाघनः । "पाटेर्णि लुक् ऊक् चाभ्यासस्य" (ग०) पाटूपटः । पक्षे चरः । चलः । पतः । हनः । पाटः । यत्रार्थे कविधानमिति "कृञः क्लिदेः क्नसरच कप्रत्ययः" ( वा० ) "कृञादीनां के द्वे स्तः" ( वा० ) चक्रम् । चक्लिदम् । चक्नसः । पक्षे क्लिदक्नसोरजिति केचित् । क्लेदः । क्नसः ।

---

अस्याचि टित्वं निपात्यते । तत्प्रयोजनं च "टिड्ढाणञ्" ( ४।१।१५ ) इति ङीबित्युदाहरति । देवीति । एवं नदट् । भषट् । प्लवट् । चोरट् । मरट् । गाहट् इत्येतेऽपि निपात्यन्ते । जारं बिभर्ति इति जारभरा । श्वपचा । श्वपाक इति । न्यङ्क्वादिषु पाठात् कर्मणि अणि । पचादिश्चायमाकृतिगणः । तथा च "शिवशमरिष्टस्य करे" इति कृञोऽच् प्रत्ययः कृत । घटेरपि कर्मणि घटोऽठच् । तथा यङन्तानाम् "यङोऽचि च" इति लुगुच्यते ।

अन्ये त्वजपि सर्वधातुभ्यो वक्तव्य इत्युक्तम् । पचाद्यनुक्रमणं तु टित्वादिनिपातनार्थम् । कर्मोपपदानामिगुपधाना च[1] कादिबाधकबाधनार्थमन्येषां च प्रपञ्चार्थमित्याहुः । एतदेव प्रपञ्चयितुमुदाहरति । षोडन् डात । षड् दन्ता अस्य षोडन् । "संख्यासुपूर्वस्य" ( ५।४।१४० ) इति दन्तस्य दत्रादेशः । षष उत्वम् । ष्टुत्वम् । "तत्करोति तदाचष्टे" ( वा० ) इति णिच् । 'णाविष्ठवत्' ( वा० ) इति तृशब्दस्य टेर्लोपः । ततोऽच्णिलोपौ । नेन्य इत्यादि । णीञ् प्रापणे । लूञ् छेदने । पूञ् पवने । मृजूष् शुद्धौ । एभ्यो "धातोरेकाच्" ( ३।१।२२ ) इति यङ् द्वित्वम् । "गुणो यङ्लुकोः" (७।४।८२) तत्रैऽचि कृते तन्निमित्ते "यङोऽचि च" (२।४।७४) इति यङः समुदायस्य लुकि कृते "सार्वधातुकार्धधातुकयोः" ( ७।३।८४ ) इत्यज् निमित्तो गुणः प्राप्तः "न धातुलोपे" ( १।१।४ ) इति निषिध्यते । मरीमृज इति । "रिगृदुपधस्य च" ( ७।४।९० ) इति रीगागमः । रोरूय इति । रु शब्दे । "अकृतसार्वधातुकयोः" ( ७।४।२५ ) इति दीर्घः ।

चरिचली । चर गतिभक्षणयोः । चल गतौ । पत्लृ गतौ । वद व्यक्तायां वाचि । हलादिः शेषाभाव इति । आगागमविधानसामर्थ्यात् । हलादिः शेषे हि सति आगमस्यादेशस्य वा विशेषो नास्तीति भावः ।

---

१. ■ बाधनार्थमिति क० पु० ।

७३२. रात्रेः कृति विभाषा [ ६।३।७२ ]

कृदन्ते परे रात्रेर्मुमागमो वा स्यात्। रात्रिंचरः। रात्रिचरः। रात्रि-मटः। रात्र्यटः।

७३३. इगुपधज्ञाप्रीकिरः कः [ ३।१।१३५ ]

एभ्यः कः स्यात्। क्षिपः। बुधः। भूरुहः। ज्ञः। इयङ्। प्रियः। कॄ। ऋत इत्। किरः। गिरतेश्चेत्येके। गिरः। "गिले परेऽगिलस्य पूर्वस्य मुम् वाच्यः" (वा०) तिमिंगिलः। अगिलस्य किम्? गिलगिलः। "गिलगिले च" (वा०) तिमिंगिलगिलः। वाऽसरूपविधिना ण्वुल्तृचावपि। क्षेपकः। क्षेप्ता।

चराचर इति। दीर्घविधानसामर्थ्याद् अभ्यासहृस्वोऽपि न भवति। हन्तेर्घत्वं चेति। हन्तेर्चि द्वित्वं भवति। अभ्यासे हकारस्य घत्वमागागमश्चेत्यर्थः।

घनाघन इति। "अभ्यासाच्च" (७।३।५५) इति कुत्वम्। पाटेरिति। पट गतौ। णयन्त.। "णेरनिटि" (६।४।५१) इति णिलोपेनैव सिद्धे लुग्वचनं प्रत्यय-लक्षणेनोपधावृद्धिर्मा भूदिति। पाटूपट इति। पूर्ववद् हलादिः शेषयोरभाव.। अत्र वामनमाधवाभ्या च "पाटेर्णिलुक् चोक् च दीर्घश्चाभ्यासस्य" (वा०) इति पठित्वा पाटूपट इत्युदाहृतम्।

एवं चोक् चेत्यत्र चकारोऽनुक्तसमुच्चयार्थस्तेनाभ्यासस्य दीर्घ इति व्याख्येयम्।

कृञ इत्यादि। डुकृञ् करणे। क्लिदू आर्द्रीभावे। वनमु हरणे। चक्रमिति। निस्वाच्च गुणः। यणादेशः क्लेदवनसोरजित्यादि। वनसेर्हि घञि वृद्धिः स्यात्। क्लिदेस्तु आद्युदात्तः स्यादिति अज् विधीयते।

रात्रेः कृति। रात्रिचर इति। रात्रौ चरतीति। "चरेष्टः" (३।२।१६) उपपदसमासः। रात्रिमट इति। अटतीत्यटः सप्तमीति योगविभागात् समासः।

इगुप। इक् उपधा यस्य सः। ज्ञा अववोधने। प्रीञ् तर्पणे। कॄ विक्षेपे। एवमितरेतरयोगे द्वन्द्वः। भ्यसः छन्दसत्वात् ङसिः, समाहारद्वन्द्वे तु नपुंसकत्वाद् हृस्वत्वे ऋत इत्र स्यात्, मुम् च स्यात्। कथमेपः पचादिषु द्रष्टव्यः? ज्ञ इति। "आतो लोप इटि च" (६।४।६४) इत्यालोपः। गिरतेश्चेत्येके इति। मूल-विभुजादित्वात् क इति भावः।

गिर इति। गिर इति। गॄ निगरणे। ऋत इत् रपरः तिमिंगिल इति। तिमिं सूक्ष्ममत्स्यं गिलतीति तिमिंगिलो मत्स्यविशेषः। गिरतः पूर्ववत् क इत्वम्। "अचि विभाषा" (८।२।२१) इति लत्वम्। गिलंगिल इति। गिलतीति गिलः। गिलगिले चेति। यदा गिलगिलशब्देन तिमेः समासस्तदेदमुपसंख्यानम्, यदा तु तिमिंगिलं गिलतीति विगृह्यते, तदा गिले परे इत्येव सिद्धम्।

## ७३४. आतश्चोपसर्गे [ ३।१।१३६ ]

उपसर्गे उपपदे आदन्तात् कः स्यात् । "श्याद्व्यध" इति णस्यापवादः । सुस्थः । सुग्लः । प्रज्ञः ।

## ७३५. पाघ्राध्माधेट्दृशः शः [ ३।१।१३७ ]

एभ्यः शः स्यात् । शित्वात् पिबादयः । शप् । "अतो गुणे" उत्पिबः । उज्जिघ्रः । विधमः । उद्धयः । विपश्यः । उपसर्गानुवृत्तिर्नात्रेत्येके । पश्यः जिघ्रः संज्ञायां तु व्याघ्रः ।

## ७३६. अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च [ ३।१।१३८ ]

एभ्योऽनुपसर्गेभ्य शः स्यात् । शित्कार्यम् । लिम्पः । विन्दः, धारयः, पारयः । वेदयः, उदेजयः । चेतयः । सातिः सौत्रः । सातयः । साहयः । अनुपसर्गात् किम् ? प्रलिपः "नौ लिम्पेर्वाच्यः" । (वा०) निलिम्पा देवाः । गवादिषु विदेः संज्ञायाम्" ( वा० ) गोविन्दः । अरविन्दम् ।

---

आतश्चोपसर्गे । सुग्ल इति । ग्लै हर्षक्षये । कप्रत्ययविवक्षायाम् "आदेच" (६।१४५) इत्यात्वे कः । प्रज्ञ इति । "इगुपधज्ञा" ( ३।१।१३५ ) इत्यनुपसर्गे सावकाशं कं बाधित्वा परत्वात् "श्याद्व्यध" ( ३।१।१४१ ) इति णः प्राप्तस्तं परमपि को विशेषविहितत्वाद् बाधते इति दर्शयितुमेतदुदाहृतम् ।

पाघ्राध्मा । पा पाने । पा रक्षणे इत्ययं तु लुग्विकरणत्वान्न गृह्यते । धेऽन्तानां के णे च प्राप्ते दृशस्त्विगुपधत्वात् के प्राप्ते शो विधीयते । अतो गुणे इति उत्पिब इत्यत्र, त्रयाणां पिबादेशोऽदन्त इत्युक्तेः । अन्यत्र द्वयोः । उद्धय इति । आशितीत्युक्ते रात्वं न । उपसर्गानुवृत्तिर्नात्रेति । अस्वरितत्वात् । तेन सामान्येनायं विधिः । संज्ञायां नेति । व्याघ्रादिभिरित्यादिनिर्देशाल्लिङ्गादिति भावः । व्याघ्र इति । विशेषेण जिघ्रतीति व्याघ्रः । "आतश्चोपसर्गे ( ३।१।१३६ ) इति कः । उपपदसमासः ।

अनुपसर्गादिति । लिप उपदेहे । नुम्विधावुपदेशवचनात् सनुम्कनिर्देशः । विद्लृ लाभे । सनुम्निर्देशाद्विदधात्वन्तराणामग्रहणम् । धृञ् धारणे । धृङ् अवस्थाने । ण्यन्तयोर्धात्वोर्ग्रहणम् । पारतीरकर्मसमाप्तौ । चुरादिर्ण्यन्तः । पॄ पालनपूरणयोरिति वा हेतुमण्ण्यन्तः । विद चेतनाख्याननिवासेषु । चुरादिण्यन्तः । ज्ञानाद्यर्थानां विदामन्यतमो

७३७. ददातिदधात्योर्विभाषा [ ३।१।१३९ ]

आभ्यां शो वा स्यात् । शित्वात् श्लुकार्यम् । ददः । दधः । पक्षे णः अनुपसर्गादेव । प्रदः । प्रधः ।

७३८. ज्वलितिकसन्तेभ्यो णः [ ३।१।१४० ]

इति शब्दः आद्यर्थे । ज्वलादिभ्यः कसन्तेभ्यो णः स्याद्वा । पक्षे अच् । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादेव । प्रज्वलः । "तनोतेर्णः" । ( वा० ) । अवतानः ।

---

वा हेतुमण्ण्यन्तः उत्पूर्वं एज् कम्पने । चित्ती संज्ञाने । चुरादिण्यन्तः शित्कार्यम् इति । लिपविन्दास्तु "तुदादिभ्यः शः" ( ३।१।७७) "शे मुचादीनाम्" इति नुम् । धाय्यादिषु शब्गुणायादेशौ । सातिः सौत्र इति । षह मर्षणे चुरादिर्हेतुमण्ण्यन्तो वा । प्रलिप इति । "इगुपध" इति कः । अरविन्दम् इति । अराकाराणि दलानि अरशब्देन नोच्यन्ते ।

ददाति । शित्वात् श्लुकार्यम् इति । "जुहोत्यादिभ्यः श्लुः" । "श्लौ" इति द्वित्वम् "श्नाभ्यस्तयोरातः" इत्यालोप इत्यर्थः । पक्षे ण इति । तत्र दायो धाय इति युकि कृते रूपम् । यद्यपि दद दाने । दध धारणे । एतयोरपि ददः, दधः इति सिद्धम् । दाञ्-धाञोश्च णे दायो धाय इति । तथाप्यददः अदधः इत्यत्र "अच्'कावशक्तौ" (६।२।१५७) इत्यन्तोदात्तो मा भूत् । नञ्स्वर एव यथा स्यात् इति शो विधीयते, अत एव चारम्भात् ददधाभ्यामच् नास्तीति गम्यते । सति हि तस्मिन् अन्तोदात्तो मानामशान्ते स्यात् । अजन्तयोस्तु ददधोः केन वार्येत ।

ज्वलितिरम । इति 'शब्द आद्यर्थं इति । निपातानामनेकार्थत्वात् ज्वल इति आदिर्येषां ते ज्वलिति । अविभक्तिकश्चायं निर्देशस्तदेतदाह—ज्वलादिभ्य इति । ज्वल दीप्तौ इत्ययं द्विः पठ्यते घटादिषु परस्ताच्च । तत्र संदेहः स्यात् । किं पूर्वो ज्वलादिरुतापर इति । तत्र घटाद्यन्तर्गणस्य व्यावृत्त्यर्थमाह—कसन्तेभ्य इति । अत्र ये कसगतादिरस्यानन्तरं वृत्करणं पठन्ति, तेषां कसन्तेभ्य इति विशेषणं चिन्त्य-प्रयोजनम् । ज्वाल इति । णित्वाद् वृद्धिः । अवतान इति । विभाषा अनुपसर्गादिति चात्र वार्त्तिकेन सम्बध्यते इति भावः ।

---

१ इत्य स्वा च शब्दाविलन्तोदात्तो इति क० पु० ।

२. इतिरादयर्थः इति क० पु० ।

३. विभाषेति उपसर्गादिति चात्र वार्त्तिकेन न संबध्यते इति क० पु० ।

## ७३९. श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च [३।१।१४१]

अनुपसर्गादिति निवृत्तम्। श्यैङः आदन्तात् व्यधादेश्च णः स्यात्। आदन्तत्वेऽपि श्यैङुक्तिः कबाधार्था। अवश्यायः। दायः। धायः। व्याधः। आस्रावः। संस्रावः। आश्रु सश्वो णो वेति केचित्। आश्रवः। सश्रवः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः। "दुन्योरनुपसर्गे" (वा०) दावः। नायः। वेति केचित्। दवः। नयः। अनुपसर्गे किम्? प्रद्रवः। प्रणयः।

## ७४०. विभाषा ग्रहः [३।१।१४३]

णो वा व्यवस्थया। जलचरे ग्राहः। ज्योतिषि ग्रहः। "भुवश्च वा वाच्यः।" भावः। भवः।

---

श्यादव्यधा। अनुपसर्गादिति निवृत्तम्। उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। ततश्च तत्संबद्धं विभाषाग्रहणमपि निवृत्तमित्यपि बोध्यम्।

श्यैङ् गताविरयस्यास्त्वेनायं निर्देशः, न शीङ् स्वप्ने इत्यस्य यणा व्याख्यानादित्याह—श्यैङः इत्यादि। व्यध ताडने। आङ्पूर्वः श्रु श्रवणे। प्रतिपूर्व. इण् गतौ। अवपूर्वः षोऽन्तकर्मणि। अवपूर्वो हृञ् हरणे। लिह आस्वादने। श्लिष् आलिङ्गने। श्वस् प्राणधारणे। कबाधार्थेति। अन्यथा 'आतश्चोपसर्गे' (३।१।१३६ इति विशेषविहितः कः सामान्यविहितस्यास्य बाधकः स्यादित्यर्थः। एतदेवावस्यतेरपि ग्रहणे प्रयोजनं ज्ञेयम्। आश्रु सश्न्वोर्णो वेति। ये श्रु गतौ इति दन्त्यादिमिह पठन्ति, ते शृणोतेर[१]चमेवेच्छन्ति, न णमित्यर्थः। तदाहामरवचने स्थितमाश्रव इति।

द्रुन्योः। टुदु उपतापे। णीञ् प्रापणे। पञ्चम्यर्थे षष्ठीसप्तम्यौ। अनुपसर्गाभ्यामाभ्यां णः स्यादित्यर्थः।

वेति केचिदिति। नयति वा साहचर्यात्। सानुबन्धकस्य [२]दुनोतेरिह ग्रहणम्, तेन निरनुबन्धकाद् द्रु गताविति भौवादिकात् पचाद्यजेवेति भावः। तथा चामरः—दवदावौ वनारण्यवह्नी इति। प्रणय इति। अच्। "उपसर्गादसमासेऽपि" (८।४।१४) इति णत्वम्।

विभाषा ग्रहेः। व्यवस्थयेति। व्यवस्थितविभाषेयमित्यर्थः। तामेव व्यवस्थां दर्शयति—जलचरे ग्राह इति। जलचरेऽभिधेये ण एव भवति, न कदाचिदजित्यर्थः। एवं ज्योतिषि अजेव भवति, न कदाचिण्ण इत्यर्थः।

---

१. ऐचमेवेच्छन्तीति क० पु०।   २. दुनोरिह इति क० पु०।

७४१. गेहे कः [३।१।१४४]

गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् । तात्स्थ्यात् गृहाः दाराः ।

७४२. शिल्पिनि ष्वुन् [३।१।१४५]

शिल्पिनि कर्तरि धातोः ष्वुन् स्यात् । "नृतिखनिरञ्जिभ्य एव" (इ० ) नर्तकः । खनकः । "असि अके अने घिनुणि च रञ्जेर्नलोपो वाच्यः" ( वा० ) रजकः । षित्वाद् नर्तकी ।

---

भुवश्चेति । इयमपि व्यवस्थितविभाषा । तेन भावः पदार्थः, भवः शम्भुः संसारश्चेति ज्ञेयम् ।

गेहे कः । गेह इति प्रत्ययार्थस्य कर्तुर्विशेषणं नोपपदम् । "गृहपतिना संयुक्ते" ( ४।४।९० ) इति निर्देशादित्याशयेन व्याचष्टे—गेहे कर्तरीति । गृहमिति । गृह्णाति धान्यादिकं धारयति । गृहं वेश्म । के "ग्रहिज्या" ( ६।१।१६ ) इति संप्रसारणम् । गृहशब्दोऽयम् [1]अर्धर्चादित्वादुभयलिङ्गः । तत्र पुंल्लिङ्गो बहुवचनान्त एव न पुंसकलिङ्गस्त्वभिधेयवचनः ।

यदि गेह इत्युच्यते, ततो दारेष्वभिधेयेषु गृहा इति न प्रयुज्येतेत्याशङ्क्याह—तात्स्थ्यादिति । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । मञ्चाः क्रोशन्ति इत्यादौ पुरुषा अपि मञ्चशब्देनोपदिश्यन्ते । एवं गृहशब्दो वेश्मनि, मुख्ये दारेषु त्वौपचारिक इत्यर्थः । उपचारे च हेतुस्तात्स्थ्यादित्यनेनोक्तः । अत एव नपुंसकस्यापि दारेषु उपचारेण प्रयोगो दृश्यते । यथा "न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते" इति ।

जयादित्यस्तु मन्यते दारेष्वपि मुख्य एव गृहशब्दः । गेहे इति च गौणस्यापि गेहस्य ग्रहणम् ।

एतच्च तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणाल्लभ्यते इति हरदत्तः । एतत्तु मतं गौरवादन्यथोपपत्तेश्चानादेयम् ।

शिल्पिनि । क्रियासु कौशलं शिल्पं तदस्यास्तीति शिल्पी । एतदपि प्रत्ययार्थविशेषणं नोपपदं पूर्वेण[2] साहचर्यादित्याह—शिल्पिनि कर्तरीति । नृतीत्यादि । परिगणनमेतत् । तेनाह्वाता ह्वायक इत्यादौ न भवति । नर्तक इति । नृती गात्रविक्षेपे । युवोरकः । गुणो रपरः । असीत्यादि । तथा च वार्तिकम्—"रजकरजनरजःसूपसंख्यानम्" ( वा० ) ।

ननु कित्वादेवात्र नलोपः सिद्धः । यदुक्तं भाष्ये—कित एते औणादिका इति । तथा च कैयटोऽपि—रजक इति "शिल्पिसंज्ञयोः" ( औ० ) इति क्वुन् । रजनमिति रजे क्युन् । रज इति "भूरञ्जिभ्यां कित्" ( उ० ) इत्यसुन् प्रत्यय इति ।

---

१. अपर्चादित्वादिति क० पु० । २. सोऽपं पूर्वेणेति क० पु० ।

### ७४३. गस्थकन् [३।१।१४६]

गायतेः स्थ कन् स्यात् शिल्पिनि। गाथकः।

### ७४४. ण्युट् च [३।१।१४०]

गायनः टित्वाद् गायनी।

### ७४५. हश्च व्रीहिकालयोः [३।१।१४८]

हाको हाङश्च ण्युट् स्याद् व्रीहौ काले च कर्तरि। अम्बु जहाति जिहीते वा हायनो व्रीहिः। भावान् जहाति जिहीते वा हायनो वर्षम्।

---

तत्किं नलोपेन[1] किं च ष्वुनेत्यत आह—पित्वान्नर्तकीति। ष्वुनि हि "षिद्गौरादिभ्यश्च" (४।१।४१) इति ङी स्यादित्यर्थः। रजकीत्यत्र तु पुंयोगलक्षणो ङीप्। अपुंयोगे तु ङीपा न भाव्यमिति भाष्यकाराभिप्राय इति तत्रैवोक्तम्। घिनुणि तु "सपृचादि" (३।२।१४२) सूत्रे त्यजरजेति नलोपिनो निर्देशाद् रागीत्यत्र नलोपः सिद्धयतीति भावः।

गस्थकन्। गायतेरिति कै गै रै शब्दे इत्यस्य। "गामादाग्रहणेष्वविशेषः" (प०) इति। गाङ् गतावित्यस्य तु ग्रहणं नास्ति, अनभिधानात्। गाथक इत्युक्ते हि [2]गायत्यर्थविषयमेव शिल्पं गम्यते, न गतिविषयमपि।

हश्च व्रीहिकालयोः। जहातिः ककारः सामान्यग्रहणार्थ इत्याशयेनाह—हाको हाङश्चेति। ओहाक् त्यागे। ओहाङ् गतौ। अन्यतरस्यैव तु ग्रहणे [3]परस्मायपवुलपि व्रीहिकालयोः प्रयुज्येत।

नहीदं जातिसंज्ञयोर्विधानम्, येन प्रयोगनियमः स्यात्, व्रीहौ काले च कर्तरीत्यभिधानात्। व्रीहिकालयोरिति [4]प्रवृत्तिनिमित्तं घटयितुं विगृह्णाति।

अम्बु जहातीति। अम्बुनाधिकं वर्धनात्। जिहीते वेति। जल प्रायेणापेक्ष्यते इत्यर्थः।

जाङ्गलदेशोद्भवाः केचिद् व्रीहयो हायना इत्यागमः।

भावानित्यादि। भावाः पदार्थास्तान् जहाति, प्रलयावस्थायां जिहीते गच्छति परिच्छेदकत्वे व्याप्नोतीत्यर्थः।

---

१. तत्किं नलोपेनेत्यत आह—इति क० पु०।
२. गायतन्त्रेत्यर्थं इति क० पु०।
३. परस्माएवुलपि इति क० पु०।
४. व्रीहिकालयोरिति निमित्तमिति क० पु०।

**७४६. प्रुसृल्वः समभिहारे वुन् [ ३।१।१४९ ]**

प्रादेर्वुन् स्यात् साधुकारिणि कर्तरि । प्रवकः । सरकः । लवकः ।

**७४७. आशिषि च [ ३।१।१५० ]**

धातोर्वुन् स्यादाशिषि । जीवतादिति जीवकः । जीवका । "आशीरके मनेरच एत्त्वं वाच्यम्" ( वा० ) मेनका ।

**७४८. क्तिच् क्तौ च संज्ञायाम् [ ३।३।१७४ ]**

धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम् ।

**७४९. तितुत्रतथसिसुसरकसेषु च [ ७।२।९ ]**

एषां दशानां कृत्प्रत्ययानामिण् न स्यात् । भवतात् । भूतिः । देवा एनं देयासुः । देवदत्तः । क्तोक्तिः क्तिचा बाधा मा भूदिति ।

---

प्रुसृल्व इति । पञ्चम्याः स्थाने व्यत्ययेन जस् । "ओः सुपि" ( ६।४।८३ ) इति यण् । पुनः पुनरनुष्ठानं समभिहारः । तत्र च प्रायेण कौशलमुपजायते । अतः समभिहारशब्देन प्रायः साहचर्यात् साधुकारित्वं लक्ष्यते इत्याह—साधुकारिणि कर्तरीति । तेन या सकृदपि सुष्ठु करोति तत्र भवति, यस्त्वसकृदपि दुष्करोति तत्र न भवतीति भावः ।

आशिषि । अप्राप्तप्रार्थनमाशीः । प्रयोक्तृधर्मोऽयं न प्रत्ययार्थः । कर्तरि कृतो विधानात् । जीवतादिति । जीवनं तव भूयादित्यर्थः । जीवकेति । स्त्रिया टापि "आशिषि वुनश्च न" ( वा० ) इति निषेधात् "प्रत्ययस्थात्" ( ७।३।४४ ) इतीत्त्वं नेत्यर्थः ।

क्तिच् क्तौ च । आशीःप्रकरणात् इदमिहोपन्यस्तम् । तेन न क्रमातिक्रम उद्भावनीयः । प्रायेण "क्तिच् क्तौ च संज्ञायाम्" इति पठित्वा मूले धातोः क्तिन् क्तश्च स्यादिति व्याख्यायते । अग्रे च कृदुक्तिः क्तिचा बाधा मा भूदिति पठ्यते ।

नन्वत्र प्रयोजनं प्रमाणं च पश्यामः । संज्ञायामिति । प्रत्ययान्तेन चेत्संज्ञा गम्यते इत्यर्थः । क्तिचश्चकारो विस्पष्टार्थः ।

यत्तु न क्तिचीति विशेषणार्थं इति प्राचोक्तम्, तदसत् । एकानुबन्धपरिभाषयैव क्तिनो व्यावृत्तिसिद्धेरिति हरदत्तोक्तेः ।

वस्तुतस्तु "तितुत्रतथ" ( ७।२।९ ) इत्यत्र क्तिन् क्तिचोः सामान्यग्रहणार्थं इचकारः । अन्यथैकानुबन्धकत्वादस्यैव ग्रहणं स्यान्न क्तिनः ।

तितुत्रतथ । तीति क्तिन् क्तिचौ गृह्येते, कृतीत्यनुवृत्तेः । अन्यथैकानुबन्धत्वात् क्तिचेव गृह्येत । ततश्च रोदितीतीट् न स्यात् । भूतिरिति । उपलक्षणमेतत् । तन्ति

७५०. अनुनासिकस्य क्विझलोः क्ङिति [ ६।४।१५ ]

अनुनासिकान्तस्य धातोरुपधाया दीर्घः स्यात् क्वौ झलादौ च क्ङिति। इति दीर्घे प्राप्ते "अनुदात्तोपदेश" (६।४।३७) अनुनासिकलोपे च प्राप्ते।

७५१. न क्तिचि दीर्घश्च [ ६।४।३६ ]

क्तिचि परे अनिटां वनतितनोत्यादीनां दीर्घानुनासिकलोपौ न स्तः। यन्तिः। रन्तिः। वन्तिः। तन्तिः।

७५२. सनः क्तिचि दीर्घश्चास्यान्यतरस्याम् [६।४।४५]

सनोतेः क्तिचि परे आकारान्तादेशो नस्य लोपश्च वा स्यात्। सातिः। सतिः। सन्तिः।

७५३. कर्मण्यण् [ ३।२।१ ]

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। उपपदसमासः। कुम्भं करोतीति कुम्भकारः। अघटं घटं करोतीति घटीकारः। आदित्यं पश्यतीत्यादावनभिधानान्न।

---

दीप्तिरित्युदाहरणम्। भूतिरित्यत्र तु परत्वात् "श्र्युकः किति" (७।२।११) इत्येवेड् निषेधः सिद्धः। 'सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुन्" (उ०) सेतुः। तन्तुः। "दाम्नीति" (३।२।१८२) इति ष्ट्रन्। पत्रम्। "[1]हसिमृग्रिण्वाऽमिदमिलूपूधूर्विभ्यस्तन्" (उ०) हस्तः। "[2]हनिकुषिनीरमिकाशिभ्यः क्थन्" (उ०) कुष्ठम्। "प्लुषिकुषिशुषिभ्यः[3] क्सि:" (उ०) कुक्षिः। इषे क्सुः। इक्षुः। अक्षेः सरन् अक्षरम्। "[4]डण् भीकापाशल्यतिमर्चिभ्यः कन्" (उ०) शाकः। मर्कः। "[5]वृतृवदिहनिकमिकषिभ्यः सः" (उ०) इत्याद्युदाहरणानि। देवदत्त इति। डुदाञ् दाने। "दोदद्घोः" (७।४।४६)।

ननु क्तः सामान्येन विहित एव तत्किं पुनर्विधीयतेऽत आह—क्तदुक्तिरिति। क्तद्ग्रहणं क्तस्योपलक्षणम्। यन्तिरित्यादि। यम उपरमे। रमु क्रीडायाम्। वनु याचने। तनु विस्तारे।

सनः क्तिचि। षणु दाने।

कर्मण्यण्। कर्मेह "कर्तुरीप्सिततमं कर्म" (१।४।४९) इति पारिभाषिकं गृह्यते, कृत्रिमत्वादित्याशयेनाह—कर्मण्युपपदे इति।

---

१. हसिमृग्रिण्वामिदमिलुमूधूर्विभ्यस्तन् इति क० पु०।
२. हनिकुषिनीरमिकाशिभ्यस्थन् इति क० पु०। ३. प्लुषिशुषिभ्यः क्सः इति क० पु०।
४. डण् भीपीशल्यतिमर्चिभ्यः कन् इति क० पु०।
५. वृतृवदिहनिकमिकषिमुतिभ्यः सन् इति क० पु०।

## ७५४. ह्वावामश्च [ ३।२।२ ]

एभ्यः कर्मण्युपपदेऽण् स्यात् । कापवादः । आतो युक् । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

## ७५५. आतोऽनुपसर्गे कः [ ३।२।३ ]

आदन्तादनुपसर्गे कर्मण्युपपदे कः स्यान्नाण् । आतो लोपः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् ? गोसन्दायः ।

---

उपपदसमास इति । कर्मणीति सप्तमीनिर्देशात् कर्म कुम्भादुपपदम् । तेन "उपपदमतिङ्" ( २।२।१९ ) इति समास इत्यर्थः ।

नित्यसमासत्वादस्वपदविग्रहं दर्शयति—कुम्भं करोतीति कुम्भकार इति । अणि कृते "कर्तृकर्मणोः कृति" (२।३।६५) इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः । घटीकार इति । अभूततद्भावे च्विः । "अस्य च्वौ" (७।४।३२) इतीत्वम् । "ऊर्यादिच्विडाचश्च" (१।४।६१) इति गतित्वात् "कुगति" ( २।२।१८ ) 'उपपदम्' ( २।२।१९ ) इति वा समासः । नित्यसमासत्वसाधर्म्येण चैतदुदाहृतम् ।

आदित्यं पश्यतीत्यादावपीति । प्राप्ये[1] कर्मणि क्वचिन्नेत्यर्थः । अनभिधानादिति । अभिधानलक्षणाः कृत्तद्धितसमासा इति चोक्तम् ।

ये तु कर्मणि[2] निर्वर्त्यमाने विक्रियमाणे एवेति नियममेतदर्थमारभ्यन्ते, तेषां वेदाध्यायः, मनसा देव इत्यादावपि न स्यादित्यनभिधानमेव शरणमिति भावः ।

ह्वावामश्च । ह्वेञ् स्पर्धायां वाचि । वेञ् तन्तुसंताने । माङ् माने । मेङ् प्रणिदाने द्वावपि । मा माने इत्यस्य त्वकर्मकत्वादग्रहणम् । कापवाद इति । "आतोऽनुपसर्गे कः" ( ३।२।३ ) इति प्राप्तस्य ।

आतोऽनुपसर्गे । नाणिति । कर्मण्यणोऽपवाद इत्यर्थः ।

कित्वप्रयोजनमाह—आतो लोप इति । पार्ष्णित्र इति । पार्ष्णि त्रायते इति । त्रैङ् पालने । गोसन्दाय इति । "आतो युक्" ( ७।३।३३ ) 'पार्ष्णित्रमिति । कविधौ सर्वत्र संप्रसारणिभ्यो डः । ब्रह्म जिनातीति ब्रह्मज्यः । "आतश्चोपसर्गे" ( ३।१।१३६ ) आह्वः । प्रह्वः । केऽपि सति संप्रसारणं स्यात् ।

---

१. प्राप्ते प्राप्ये इति क० पु० ।

२. कर्मनिर्वर्त्यमाने क्रियमाणे एवेति नियममेतदर्थमारभन्ते इत्यर्थः । तेषां वेदाध्याय इति क० पु० ।

३. पार्ष्णित्रमितीत आरभ्य—इत्यन्यानुकरणमित्यन्तो (     ) रेखाङ्कितो नास्ति क० पु० ।

७५६. सुपि स्थः [ ३।२।४ ]

सुप्युपपदे तिष्ठतेः कः स्यात् । समस्थः ।

७५७. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिदिव्यग्निभ्यः स्थः [ ८।३।९७ ]

एभ्यः परस्य स्थः सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः । सुपीति योगविभागादन्यस्मादादन्तात् कः । द्वाभ्यां पिबतीति द्विपः । पादपः । भावेऽपि कार्यः । तिष्ठतिग्रहणम् । आखूनामुत्थानमाखूत्थं वर्तते । इत ऊर्ध्वं सकर्मकेषु कर्मानुवृत्तिरन्यत्र सुपः ।

---

सुपिस्थः । सुपीति प्रत्याहारो गृह्यते कृत्रिमत्वात्, न सप्तमीबहुवचनम् ।

अम्बाम्बेत्यादि । स्थ इति रूपानुकरणम् । प्रथमा च षष्ठ्यर्थे । तेन भूमिस्थितं गोस्थानमित्यादौ न । अत एवस्थास्थिन्[1]स्थूणामप्युपसंख्यानं वर्तते । समेष्ठाः । परमेष्ठो । सव्येष्ठा सारथिः । एवं च वृत्तौ स्थः सस्येति कप्रत्ययान्तस्येति ज्ञेयम् । द्विष्ठ इति । द्वयोस्तिष्ठतीति । एवमम्बष्ठ । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठ. । कुष्ठः । शेकुष्ठः । शंकुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठ. । अग्निष्ठः । अत्र योगविभागः क्रियते ।

सुपीत्येको योगः आत इति वर्तते, तेन [2]सुप्युपपदे आदन्तमात्रे त्वेतद् विधीयते इत्याह—सुपीत्यादि । पादप इति । पादैः मूलैः पयः पिबति इति ।

तर्हि द्विष्ठादावप्येतेनैव सिद्धेः किं स्थ इत्यनेनेत्याह—भावेऽपीति । आरम्भसामर्थ्यात् कर्तरि तावन्न भवति ।

न चान्यो[3]ऽर्थो निदिश्यते । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे । स्वार्थश्च धातूनां भाव एवेत्यर्थः ।

यद्यपि "घञर्थे कविधानम्" इत्येव भावे कः सिद्धः । नित्यसमासार्थं तु वचनम् । सति ह्यस्मिन् नित्य उपपदसमासो भवति । अन्यथा हि [4]विकल्पेन षष्ठीसमासः स्यात् ।

तथा चास्वपदविग्रहं दर्शयति—आखूनामुत्थानमिति, आखूत्थ वर्तते इति । "उदः स्थास्तम्भोः" ( ८।४।६१ ) इति पूर्वसवर्णः । आखूत्थमिति । नपुंसकस्तु प्रामादिकः । ल्युः कर्तरीति मनिच् भावे कः (अ० को०) ३।५।१५ । इत्यमरकोशे भावे कस्य पुंस्त्वविधानात् । "भावे नकणचिद्भ्योऽन्य" इति कस्य पर्युदासाच्च भाष्यादौ चास्य पुंलिङ्गस्यैवोदाहृतत्वात् ।

---

१. एवास्यास्थिन्स्थूणमप्युपसंख्यायते इति क० पु० ।    २. सुप्युपपदे इति क० पु० ।

३. स्वार्थे इति क० पु० ।    ४. विकल्पितः इति ख० पु० ।

७५८. तुन्दशोकयोः परिमृजापनुदोः [ ३।२।५ ]

आभ्यां कः स्यात् तुन्दशोकयोः कर्मणोरुपपदयोः । तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता । "मूलविभुजादेश्च" (वा० ) मूलविभुजः । कुमुदम् । आकृतिगणः ।

---

यत्तु प्राचोक्तम् "ल्युः कर्तरि" इत्यादिना पुंस्त्वविधानेऽपि नपुंसकत्वं न प्रतिषिद्धमिति । तदसत्, सर्वं वाक्यं सावधारणमिति पुंस्त्वादिविधेरितरव्यवच्छेदफलकत्वात् । अन्यथा कोशस्य पुंनपुंसकोपदेशोऽनर्थकः स्यात् । घञन्तस्य पुस्त्वोपदेशेऽपि नपुंसकत्वाप्रतिषेधात् तत्सिद्धेः । भावे नणकचिद्भ्योऽन्य इति कण्ठतो नपुंसकत्वप्रतिषेधाच्च ।

[1]यच्चोक्तं पर्युदासोऽयं न प्रसज्यप्रतिषेध इति । तदप्यसत्, पर्युदासत्वेऽपि भावार्थे [2]कस्य नपुंसकत्वविधायकानुपलब्धेः "स्वमोर्नपुंसकस्य" ( ११।४३ ) इति पर्युदासत्वेऽपि "शि सर्वनामस्थानम्" ( १।१।४२ ) इति विधिरस्ति ।

यदप्युक्तम् । प्रसज्यप्रतिषेधे हि [3]भयादीनामजन्तानां चिरत्वान्नपुंसकत्वं न स्यादिति । तन्न, [4]"भयलिङ्गभगपदानि नपुंसके" ( लि० ) इति [5]प्रतिपदविधिना सामान्यनिषेधस्य संकोचेनादोषात् ।

यदप्युक्तम्—गुणवचनं च तव्यादय इत्यनुवर्तमाने प्राग्घञः [6]प्रावतव्यादीनां लिङ्गानुशासने त्रिलिङ्गत्वविधानात् सर्वस्य प्रयोगेणेति चोक्तत्वात् । अमरसिंहेनापि ज्ञेयं शिष्टप्रयोगतःइत्युक्तत्वाद् नपुंसकत्वमपि घटते इति । तदपि तुच्छम् । [7]विशेषणवचनानां शुक्लादीनां तव्यादीनां च तत्र त्रिलिङ्गताविधानम् । न च भावप्रधानम् कस्यचिद्विशेषणमिति शिष्टप्रयोगानुसरणं वा सति विशेषणविधौ लिङ्गनिर्णायकम् । इह तु "ल्युः कर्तरीमनिजभावे कः" इति पुंस्त्वविधिर्जागरूको न केनाप्यभिभवितुं शक्यते इत्यास्तामेतत् । इत ऊर्ध्वमिति । कर्मणि सुपीति च द्वयमप्यधिक्रियते । तद्यथायोग्यमुपतिष्ठते इत्यर्थः ।

तुन्दशोकयोः । पञ्चम्यर्थे षष्ठीत्याह—आभ्यामिति । परिपूर्वो मृजू शुद्धौ । अपपूर्वो नुद प्रेरणे ।

---

१. यच्चोक्तम् पर्युदासोऽयं न प्रतिषेध इति क० पु० ।
२. भावे कस्येति ।
३. भयानमजातानामिति क०पु० ।
४. भयलिङ्गभेदानि इति क० पु० ।
५. प्रतिपन्नविधिना सामान्यनिषेधस्येति क० पु० ।
६. प्राग् यत्र इति यत्र प्राक् तव्यादीनामिति क० पु० ।
६. विशेषणमिति शिष्टप्रयोगानुसरणं वा सति विधौ लिङ्गनिष्पादकम् । इह तु ल्युः कर्तरीमनिङ्भावे कः इति पुंस्त्वविधौ जागरूके इति क० पु० ।

## ७५९. प्रेदाज्ञः [ ३।२।६ ]

कर्मणि प्रपूर्वाभ्यामाभ्यां कः स्यात्। सोपसर्गार्थमेतत्। सर्वप्रदः। पथिप्रज्ञः।

## ७६०. समिख्यः [ ३।२।७ ]

गोसख्यः।

## ७६१. गापोष्टक् [ ३।२।८ ]

कर्मण्यनुपसर्गाभ्यामाभ्यां टक् स्यात्, न कः। सामगः। सामगी। "पिबतेः सुराशीध्वोरिति वाच्यम्" (वा०)। सुरापी। सीधुपी। अन्यत्र क्षीरपा। पिबतेः किम् ? सुरापा। उपसर्गे तु सामसंगायः।

---

"आलस्य सुखाहरणकर्त्रोरिति वाच्यम्" इति वार्त्तिकार्थं मनसिकृत्योदाहरति–तुन्दपरिमृजोऽलसः इति। यः आलस्यात्तुन्दं परिमर्ष्टि स एवमुच्यते। विङ्त्यचि मृजेर्वृद्धिर्वक्ष्यते इति त्वत्र न भवति, मृजेरजादाविति मुख्यवार्त्तिके आदिग्रहणं मुख्याजादिपरिग्रहार्थमिति स्थितिः। अलसादन्यत्र तुन्दपरिमार्जं एव भवति। शोकापनुद इति। यस्तु केवलं शोकमेवापनुदति संसारानित्यताद्युपदेशेन स शोकापनोद एव।

मूलविभुजा। विभुजादेश्चेति। मूलशब्दे उपपदे विपूर्वो भुजकौटिल्ये [1]इति धातुरुच्चारणार्थेनाकारेण [2]निर्देशात् तस्यादिशब्देन बहुव्रीहिः। यद्वा मूलविभुज इत्यादिशब्दस्य[3] सिद्धये को वक्तव्य इति व्याख्येयम्। कुमुदमिति। कौ पृथिव्यां मोदते इति। आकृतिगणोऽयम्। तेन महीध्रशिरोरुहादिसिद्धिः।

प्रेदाज्ञः। "गामादाग्रहणेष्वविशेषः" (प०) ज्ञाऽवबोधने।

ननु "आतोऽनुपसर्गे कः" इत्येव सिद्धम्, किमनेन तत्राह—सोपसर्गार्थम् इति। प्रे किम् ? गोसंप्रदायः। गोसंप्रदायः इत्यत्रापि को न भवति। अनुपसर्गे इत्यस्यानुवृत्तेः केवलेनैव प्रेण योगे कविधानादुपसर्गान्तरेण तु योगो नैव भवतीत्याहुः।

समिख्यः। गोसख्य इति। गाः संचष्टे: "चक्षिङः ख्याञ्" (२।४।५४) ख्या प्रकथने इत्यस्य तु संपूर्वस्य प्रयोगो नास्तीति न्यासः।

गापोष्टक्। पा पाने इत्यस्य ग्रहणं न, पा रक्षणे इत्यस्य लुग्विकरणत्वात्। तत्साहचर्याद् गा इत्यपि गै शब्दे इत्यस्यैव ग्रहणम्, न "गामादाग्रहणेष्वविशेष" (प) इत्यस्य सत्त्वेऽपि गाङ् गतौ इत्यस्यानभिधानाच्च। सामग इति। "आतो लोप इटि च"

---

१. धार गत्वेद्येकाररोदिश्यते न स्यादि शब्देन न च ब्रहा इति क० पु०।
२. निर्देशात् इति। ग० पु०। निर्दिश्यते इति ख० पु०।
३. इत्यादेः रूपस्य सिद्धये को वक्तव्य इति क० पु०।

७६२. हरतेरनुद्यमनेऽच् [ ३।२।९ ]

कर्मणि हृञोऽच् स्यात्, नोत्क्षेपणे। अंशहरः। उत्क्षेपणे तु भारहारः। "शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहः" (वा०) शक्तिग्रह इत्यादि। सूत्रग्रहोऽपि।

७६३. वयसि च [ ३।२।१० ]

वयसि द्योत्ये कर्मणि हृञोऽच् स्यात्। उद्यमनार्थमेतत्। कवचहरः कुमारः।

७६४. आङि ताच्छील्ये [ ३।२।११ ]

फलान्याहरति तच्छीलः फलाहरः। ताच्छील्ये किम्? भाराहारः।

७६५. अर्हः [ ३।२।१२ ]

अस्मादच्। पूजार्हः। पूजार्हा।

---

(६।४।६४) इत्यालोपः। सामगेति। "टिड्ढाणञ्" (४।१।१५) इति ङीप्। क्षीरपेति। "आतोऽनुपसर्गे" (३।२।३) इति कः। सुरापेति। पा रक्षणे। पूर्ववत्कः। सामसंगाय इति। "[1]कर्मण्यण्" (३।२।१) "आतो युक्" (७।३।३३)।

हरतेर। उत्क्षेपणमुत्तोलनम्। तच्चाधः स्थितस्योर्ध्वदेशे प्रापणम्। अंशहर इति। अंशं स्वीकरोतीत्यर्थः।

शक्तिलाङ्गल (वा०)। घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थम्। [2]सूत्रग्रहोऽपि धारयत्यर्थे एव धारेर्गत्यर्थं एवेष्यते। यस्तु केवलमुपादत्ते न तु धारयति तत्राणेव भवति सूत्रग्राह इति।

वयसि च। पूर्वेण सिद्धिमाशङ्क्य उद्यमनार्थमेतदिति। यदुद्यमनं क्रियमाणं संभाव्यमानं वा वयोऽवस्थाविशेषं गमयति तत्रायं विधिरित्यर्थः। कवचहर इति। कवचोत्क्षेपणसमर्थे वयसि वर्तते इत्यर्थः।

आङि ताच्छील्ये। फलानपेक्षा प्रवृत्तिस्ताच्छील्यम्। कथं पुनः फलमनपेक्ष्य प्रवर्तते। स्वभावस्यापर्यनुयोज्यत्वात्।

अर्हः इति। ननु पूजार्ह इत्यणाऽपि सिद्धमत आह—पूजार्हेति। अणि हि सति ङीप् स्यादिति भावः।

---

१. कर्मण्यण् आतो युक् इति नास्ति क० पु०।

२. सूत्रग्रहोऽपि धारयत्यर्थे एवेति नास्ति क० पु०।

७६६. स्तम्बकर्णयोः रमिजपोः [ ३।२।१३ ]

"हलदन्त" ( ६।३।९ ) इति ङेरलुक् । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः ।

७६७. अधिकरणे शेते [ ३।२।१५ ]

खे शेते खशयः । "पार्श्वादौ च" (वा०) पार्श्वाभ्यां शेते पार्श्वशयः । उदारशयः । पृष्ठशयः । उत्तानः शेते उत्तानशयः । "गिरौ शेतेर्डः" (वा०) गिरिशः ।

७६८. चरेष्टः [ ३।२।१६ ]

अधिकरणे चरेष्टः स्यात् । कुरुचरी ।

---

स्तम्बकर्णयोरिति । एतयोरुपपदयोरमिजपोरच् इत्यर्थः ।

अत्र सुपीत्येव संबध्यते ( [1]न कर्मणीति । रमतेरकर्मकत्वात् । अनुपसर्ग इत्यनुवर्तते । तेन देवदत्तमुपरमतामित्यन्तर्भावितण्यर्थस्य सकर्मकत्वेऽप्यप्रसङ्गः )। जपेरपि शब्दकर्मकत्वात् कर्णौ न कर्म संभवतीति । "हस्तिसूचकयोरेवायमिष्यते" ( इ० ) इत्युदाहरति । स्तम्बेरमो हस्तीति । सूचकः । पिशुनः[2] ।

अधिकरणे । खेशय इति । "शयवासवासिष्वकालात्" ( ६।३।१८ ) इत्यलुको विकल्पनात् । खशय इत्यप्युदाहार्यम् ।

पार्श्वादौ च । अनधिकरणार्थं आरम्भः इति दर्शयन् विगृह्णाति पार्श्वाभ्यां शेते इति । उत्तानः शेते इति च । आकृतिगणत्वाद् दिग्ध सह शयः । दिग्धेन सह शेते इति विग्रहे मयूरव्यंसकादित्वात् समासः । दिग्धसह शब्दस्य चोपपदसमासः ।

गिरौ शेतेर्डः इति । छन्दसीत्याकरः । आचार्यैस्तु "गिरिशमुपचचार" इत्यादिलोकेऽपि प्रयोगदर्शनान्नेदमादृतम् । ये तु गिरिरस्यास्तीति गिरिश इति पामादिलक्षणः श इति समादधति । तेषामेतद् वार्तिकमनारभ्यमेवापतेत् । तथा चात्र भाष्यम्—तद्धितो वेति ।

चरेष्टः । अधिकरणे इति । कथं तर्हि सहचरः, सहचरीति । पचादिषु चरडिति पठ्यते । "सह सुपा" ( २।१।४ ) इति समासः इति हरदत्तः । ट इति योगविभागाद् उत्तरसूत्रे चकाराद्वेति । शरणदेवः । चिन्त्यमिति भाषावृत्तिः । प्रत्ययान्तरकरणं स्त्रीवर्थमित्युदाहरति—कुरुचरीति । कुरुषु देशेषु चरति गच्छतीत्यर्थः ।

---

१. न कर्मणीत्यारभ्य—अप्रसङ्ग इत्यन्तो नास्ति क० पु० । तत्स्थाने रमेरकर्मकत्वेनाप्रसङ्गः । जपेरपि शब्द एव सकर्मकत्वात् कर्णो न कर्म संभवतीति वर्तते क० पु० ।

२. सूचनः इति क० पु० ।

**७६९. भिक्षासेनादायेषु च [ ३।२।१७ ]**

एष्वपि चरेष्टः । भिक्षां चरति भिक्षाचरः इत्यादि ।

**७७०. पुरोऽग्रतोऽग्रेषु सर्तेः [ ३।२।१८ ]**

एषु सरतेष्टः स्यात् । पुरःसरः । अग्रतःसरः अग्रेसरः ।

**७७१. कृञो हेतुताच्छील्यानुलोम्येषु [ ३।२।२० ]**

कर्मणि कृञष्टः स्यात् हेत्वर्थे ।

**७७२. अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य [ ८।३।४६ ]**

कादौ परे अतः परस्य विसर्गस्य सः स्यात् समासे, न त्वव्ययस्य । ≍कापावदः । यशस्करी विद्या । श्राद्धकरः । वचनकरः ।

---

भिक्षासेना । अनधिकरणार्थं आरम्भः । भिक्षां चरतीति । चरिरत्रचरणपूर्वकेऽर्जने वर्तते । चरणेन भिक्षामर्जयतीत्यर्थः । तेनार्जनं प्रति भिक्षाया उपपन्नं कर्मत्वम् । चरिर्भिक्षार्थो वा । आदिपदात् सेनाचरः । सेनां प्रविशतीत्यर्थः । आदायचरः । आदायेति ल्यबन्तम् एतदनुकृतम् । [1]कर्म सापेक्षत्वेनासामर्थ्येऽपि वचनात् प्रत्यय इति न्यासः । वस्तुतस्तु[1] नित्यसापेक्षत्वेन नासामर्थ्यम् ।

पुरोऽग्रतो । पुरःसर इति । "पूर्वपराधरावराणामसिपुरधवश्चैषाम्" ( ५।३।३९ ) इति । असिप्रत्यये पुरादयः स्युः । अग्रतः सर इति । अग्रशब्दादाद्यादित्वात्तसिः । अग्रेसर इति । एदन्तत्वं निपातनात् ।

ननु सप्तम्या अलुक्यपि एतत् सिद्धम् । सत्यम् । यदा त्वग्रं सरति अग्रेण वा सरतीति विगृह्यते तदाऽप्यग्रेसर इति यथा स्यादित्येतदर्थं निपातनम् । एतच्चाग्रेशब्दस्य परनिपाताद् विज्ञायते । अन्यथा "अजाद्यदन्तम्" इति पूर्वनिपातः स्यात् । कथं तर्हि "पूयं तदग्रसरगर्वितकृष्णसारम्" इति । टसन्नियोगेनैव निपातनात् पचाद्यजन्तेन समासे भविष्यति ।

कृञो हेतु । हेत्वाद्यर्थे इति । गम्यमाने इत्यर्थः ( न[2] तु वाच्ये । "कर्तरि कृत्" ( ३।४।६७ ) इत्यस्य बाधापत्तेः । हेतुश्चालौकिको गृह्यते न "तत्प्रयोजको हेतुश्च" (१।४।५५) इति पारिभाषिकम्, केवले कृञि तदसंभवात् । ) हेतुः कारणम् । ताच्छील्यं व्याख्यातम् । आनुलोम्यम् अनुकूलता । क्रमेणोदाहरति—यशस्करीत्यादि । सत्वविधौ अनुत्तरपदस्येत्यधिकारान्नेत्याह—परमयशःकर इति ।

---

१. कर्मापेक्षत्वेनासामर्थ्येऽपि इति ख० पु० । २. अनुकूलोम्येतदिति क० पु० ।

३. न तु वा इत्यारभ्य—तदसंभवादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

७७३. दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहु-
नान्दीकिलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्र-
संख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु [ ३।२।२१ ]

एषु कृञष्टः स्यादहेत्वादावपि। दिवाकरः। भास्करः। निपातनात् सः। भास्करः, कारकरः इत्यादि। "किं यत्तद्बहुष्वज् वा" (वा० ) किंकरा स्त्री इत्यादि।

---

दिवाविभा। अहेत्वादावपि इति। हेत्वादौ पूर्वेणैव सिद्धेरिति भावः[1]। दिवाकरः इति। दिवाशब्दोऽधिकरणवाची। दिवाकरोतीति। प्राणिनश्चेष्टायुक्तानित्यर्थः। एवं च दिवाशब्देऽपि[2] सुपीत्येव संबध्यते न कर्मणीति।

यदा तु दिवामन्या रात्रिरिव वृत्तिविषये कर्मत्वमप्यभ्युपगम्यते[3], तदा कर्मणीत्यस्यापि संबन्धो न विरुध्यते। ([4]भास्करेति निपातनात् स इति। सकारोच्चारणादेव निपातनाद् प्रत्ययसन्नियोगेन भाशब्दस्य सकारो भवति, न विसर्जनीयो न जिह्वामूलीयं चापीत्यर्थः।

यद्वा भास्करेति निर्देशादनुमितात्कस्कादिपाठादित्यर्थो द्रष्टव्य.।

तथा च विसर्गसंबन्धादुक्तं कस्कादित्वात् स इति। भास्कर इति कारकरः। कर एव कारः प्रज्ञादित्वात् स्वार्थेऽण्। अनन्तकरः। यद्यप्यन्तकरशब्देन नञ्समासेऽप्येतत् सिद्धम्, तथापि स्वरे विशेषः स्यात्। नञ्समासे ह्यव्ययपूर्वपदप्रकृति ([5]स्वरेणाद्युदात्तः स्यात्, इष्यते च 'गतिकारकोपपदात् कृत्" (६।२।१३९) इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्)। बहुशब्दोऽत्र वैपुल्यवचनो गृह्यते संख्यावचनस्य तु संख्याग्रहणेनैव सिद्धेः। लिपिलिविरुभे समे। संख्या एकादिः। एककरः। द्विकरः। अहस्करः। "रोः सुपि" इति नस्य रेफः। धनुष्करः। "इसुसोः सामर्थ्ये" (८।३।४४) "नित्यं समासेऽनुत्तरपदस्थस्य" (८।३।४५) इति षत्वम्।

किं यत्तद्बहुष्वज्वेति। आकरे तु नित्यमेवाज्विधीयते। तत्रानेन हेत्वादिषु टस्य बाधितत्वादन्यत्र तु किंकरीत्यसाधुरिति हरदत्तः।

---

१. भावः दिवाकर इति नास्ति क० पु०।

२. दिवाशेऽप्येव इति क० पु०।

३. कर्मत्वमेवाभ्युपगम्यते इति क० पु०। ४. भास्करेति इत्यारभ्य—चापीत्यर्थं इत्यन्तो ( ) रेखाङ्कितो ख० पु०। क० पु० नास्ति।

५. स्वरेणेत्यारभ्य—अन्तोदात्तत्वमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

७७४. कर्मणि भृतौ [ ३।२।२२ ]

कर्मशब्दे कृञष्टः स्याद् भृतौ । कर्मकरो भृतकः । कर्मकारोऽन्यः ।

७७५. न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु [ ३।२।२३ ]

एषु कृञष्टो न हेत्वादौ । शब्दकार इत्यादि ।

७७६. स्तम्बशकृतोरिन् [ ३।२।२४ ]

एतयोः कृञ इन् स्यात् । न इत् । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ।

७७७. हरतेर्दृतिनाथयोः पशौ [ ३।२।२५ ]

हृञ एतयोरिन् पशौ कर्तरि । दृतिहरिः पशुः । नाथहरिः ।

---

न्यासकारस्त्वाह—अहेत्वाद्यर्थत्वात् चारम्भस्य यदा हेत्वादयो विशेषा न विवक्ष्यन्ते, तदा कि यत्तद्बहुष्वचो विधानम् । हेत्वादिषु तु विवक्षितेषु पूर्वसूत्रेण ट एव भवति । तेन किंकरणशीला किंकरीत्यु[1]पपन्नम् ।

एवं च भिन्नविषयेणाचा टस्य बाधासम्भवादुभयमपि भवतीत्याशयेनाचार्यैर्वेत्युपनिबद्धमिति बोद्धव्यम् ।

कर्मणि । कर्मणीत्यनुवृत्तौ पुनः कर्मग्रहणं स्वरूपग्रहणार्थमित्याह—कर्मशब्दे इति । उपपदे इति शेषः । कर्मनाम्निनो च । तेन कर्मणा करोतीत्यादौ न । भृतिर्वेतनम् ।

स्तम्बशकृतोः । न इति । "ञ्नित्यादिर्नित्यम्" ( ६।१।१९७ ) इत्याद्युदात्तार्थः । व्रीहिवत्सयोरेवेति वार्त्तिकमनुस्मृत्योदाहरति—स्तम्बकरिर्व्रीहिरित्यादि । नित्त्वादत्र कृदुत्तरपदप्रकृतिस्वरेणोत्तरपदमाद्युदात्तं भवति ।

व्रीहिवत्सयोः किम् ? स्तम्बकारः । शकृत्कारः ।

हरतेर्दृति । एतयोरिति । दृतिनाथयोरुपपदयोरित्यर्थः । पशौ कर्तरीति ।

एतेन पशुः प्रत्यार्थस्य[2] कर्तुर्विषयणं न प्रत्ययार्थकर्तुर्बोधकः इति दर्शयति—धुत एतत् धातोः प्रत्ययविधानात् । यदर्थस्य येन सह सम्बन्धस्तत्र वाच्ये प्रत्ययो भवितुमर्हति । धात्वर्थश्च क्रिया तस्याश्च साधनेन सम्बन्धो न च वस्तुस्वरूपेण[3] ।

---

१. किंकरीत्येव क० पु० ।

२. प्रत्ययप्रतिपाद्यस्येति क० पु० ।

३. सा च न साधनमित्यधिकः क० पु० ।

७७८. फलेग्रहिरात्मम्भरिश्च [ ३।२।२६ ]

एतौ निपात्यौ। चात् कुक्षिम्भरिः। उदरम्भरिः। देवानाप्नोति देवापिः। वातापिः। रजोग्रहिः। मलग्रहिरिति केचित्।

७७९. एजेः खश् [ ३।२।२८ ]

कर्मणि ण्यन्तादेजेः खश् स्यात्।

७८०. अरुर्द्विषदजन्तस्य मुम् [ ६।३।६७ ]

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्। खिदन्ते उत्तरपदे, नत्वव्ययस्य। शिखाच्छ्वाद्दि। जनमेजयः। "वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश्" (वा०)। वातमजः।

साधनं च शक्तिः, न वस्तुरूपं पशुशब्दश्च चतुष्पाज्जातिरूपं वस्तुस्वरूपेणाचष्टे[1], न शक्तिरूपेण। ( [2]तेनाशक्तिरूपेण प्रत्याय्यमानः पशुर्नार्हति प्रत्ययार्थो भवितुम्। सोऽप्रत्ययार्थः कथमिह प्रत्ययार्थं बाधेत ) तस्मात् प्रत्ययार्थः कर्ता पशुना विशिष्येत, न तु सोऽभिधीयते इति।

एवं सर्वत्र प्रत्ययार्थविशेषणे द्रष्टव्यमिति स्थितम्।

फलेग्रहिः। फलानि [3]गृह्णातीति फलेग्रहिः। उपपदस्यैदन्तत्वं ग्रहेरिन् प्रत्ययश्च निपात्यते। आत्मानं बिभर्त्यात्मम्भरिः। उपपदस्य मुम् भृञ्श्चेन्[4] प्रत्ययः। चकारोऽनुक्तसमुच्चयार्थं इत्याह—चादिति। चकारसमुच्चयमप्येतदन्यैः कण्ठत उक्तमिति केचिदित्युक्तम्।

एजेः खश्। ननु[5] कर्मणीति कथमुच्यते, एजतेरकर्मकत्वादित्याशङ्क्याह—ण्यन्तादिति।

नायं धातुनिर्देशार्थेनेका निर्देशः, किं तर्हि णिचोऽनुकरणं व्याख्यानात्। ण्यन्तश्च सकर्मक इति भावः। णित्त्वे प्रयोजनमाह।

अरुर्द्विषद। वर्णग्रहणे तदन्तविधेः सिद्धावप्यन्तग्रहणं [6]कार्यान्तिरस्यान्तेऽवसाने मुम् यथा स्यादित्येवमर्थम्। तेन शुनिंधय इत्यादौ ह्रस्वे कृते मुम् भवति।

१. जातिरूपेणाचष्टे इति क० पु०।
२. तेनाशक्तिरूपेणेत्यारभ्य—बाधेतेत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।
३. फलानि गृह्णन् गृह्णाति इति क० पु०।
४. भृञश्चेन् प्रत्यय इति नास्ति क० पु०।
५. नन्विति नास्ति ख० पु०।
६. विकार्यान्तिरस्वति क० पु०।

७८१. खित्यनव्ययस्य [ ६।३।६६ ]

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात् । ततो मुम् । शुनिन्धयः । तिल-न्तुदः । शर्द्धंजहः ।

---

कथमेतत् ? समीपवचनोऽन्तशब्दः । [1]अच्चासावन्तश्चेत्यजन्तो निपातनाद् विशेषणस्य परनिपातः ।

कथं पुनरसौ पूर्वसूत्रेण विहितो ह्रस्वो तदन्तस्य मुम् इति व्याख्यानात् ।

शित्वाच्छवादि-इति । शित् सार्वधातुकमित्युक्तम् [2]तेन शप् । आदिपदाद् गुणायौ णिलोपाभावश्च । खिदन्ते परे इति ।

ननु "हृदयस्य हृल्लेख'यदण् लासेषु" ( ६।३।५० ) इत्यत्राणग्रहणेनैव सिद्धे लेखग्रहणेन तदन्तविधिर्भवतीति तत्कथं खिदन्तं गृह्यते । सत्यम् । अव्ययस्य नुमः[4] प्रतिषेधात् । तेन तदन्तग्रहणम् । न ह्यव्ययात्परः खित् संभवति । धातोरिति विधानात् । पूर्वपदस्य सूत्रोपस्थितेनाच इत्यनेन विशेषणादजन्तस्य पूर्वपदस्येति ज्ञेयम् । तेन वाङ्मन्य इत्यादौ न भवति ।

ननु परत्वान्मुमि कृतेऽनजन्तस्य ह्रस्वेन न भाव्यमत आह—ततो मुमिति । यदि पूर्वं मुम् स्यात् ततोऽजन्तस्येति विधीयमानो ह्रस्वोऽनवकाशः स्यादतो विधान-सामर्थ्यादादौ ह्रस्वो भवति ततो मुमिति भावः ।

अथ ह्रस्वान्तेषु सावकाशं मुमं दीर्घान्तेषु ह्रस्वः किं न बाधते इति चेत्, न, ह्रस्वान्तेष्वपि ह्रस्वेन भाव्यम्, किं प्रयोजनं ह्रस्वस्येति विज्ञायमानो मुम् यथा स्यात् । ह्रस्वनिमित्तो हि मुम् । यत इदानीमेव ह्रस्वमजन्तमित्यन्तग्रहणम् । कृते ह्रस्वे मुम्प्रतिपत्त्यर्थम् इति । तिलन्तुद इति । तुदादिभ्यः शप्रत्ययस्य ङित्त्वान्नोपधा-गुणः । शर्द्धंजहः इति । शर्द्धनं शर्द्धः[6] । शृधुशब्द [7]कुत्सायाम् । घञ्[8] । शर्धं जहातीति । ओहाक् त्यागे । [9]अस्मात् खशि ह्वादित्वात् शपः श्लौ । "श्लौ" ( ६।१।१० ) इति द्वित्वादि । "श्नाभ्यस्तयोरातः" ( ६।४।११२ ) इत्यालोपः । आकरे तु "वातशुनीतिलशर्धेषु" इति पठित्वा गर्धंजह इत्युदाहृतम् ।

---

१. अतएवाजन्तश्चेत्यजन्तो इति क० पु० ।
२. तेन शप इत्यारभ्य—णिलोपाभावश्चेत्यन्तो नास्ति क० पु० ।
३. अल्लेरयणवेनेति क० पु० ।
४. नुमः इति नास्ति क० पु० ।
५. स इति अदादिभ्य इति क० पु० ।
६. शर्द्धनं शर्द्ध इति नास्ति क० पु० ।
७. सृधु कुत्सायामिति क० पु० ।
८. साजमिति क० पु० ।
९. स्यात् खशिविति च इत्यस्ति ह्वादित्वादिति नास्ति क० पु० ।

७८२. नासिकास्तनयोर्ध्माधेटोः [ ३।२।२९ ]

स्तने धेटः नासिकायां ध्माधेटोः खश् स्यात् । स्तनन्धयः । नासिकन्धमः । धेटष्टित्वात् । स्तनन्धयी ।

७८३. नाडीमुष्ट्योश्च [ ३।२।३० ]

एतयोर्ध्माधेटोः खश् स्यात् । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । चात् घटिन्धमः । घटिन्धयः । खरिन्धमः । खरिन्धयः । मुष्टिन्धयः । वातन्धमः वातन्धय इति । मुञ्जकूलास्य पुष्पेषु धेटः खशिति केचित् । मुञ्जन्धयः इत्यादि ।

७८४. उदि कूले रुजिवहोः [ ३।२।३१ ]

उत्पूर्वाभ्यां रुजिवहाभ्यां कूले कर्मणि खश् स्यात् । कूलमुद्रुजः । कूलमुद्वहः इति ।

---

नासिकास्तनयोः । स्तनस्याल्पाच्तरस्य पूर्वनिपाताकरणेन यथासंख्यव्यभिचारः सूच्यते इत्यभिप्रेत्याह—स्तने धेट इति । नासिकन्धम इति । "नासिकायां ध्माधेटः" ( वा० ) एतच्च प्रयोगदर्शनाद् व्यवतिष्ठते । स्तनन्धय इति । धेट् पाने । खशि शप्यपादेशः । मुम् । [1]नासिकन्धम इति । नासिकां धमतीति । ध्माशब्दाग्निसंयोगयोः । "पाघ्राध्मा" ( ७।३।७८ ) इति धमादेशः । "खिरयनव्ययस्य" ( ६।३।६६ ) इति मुम् । टित्वात् स्तनंधयिति । "टिड्ढाणञ्" ( ४।१।१५ ) इति ङीबित्यर्थः ।

नाडीमुष्टयोश्च । अत्रापि घ्यन्तस्यापूर्वनिपातनात् यथासंख्याभावः । तथा चोदाहृतम् ।

उदि कूले रुजिवहोः । सकर्मकत्वा[2]त्कर्मणीत्युपतिष्ठते । तेन कूलं विशेष्यते नोच्छब्दोऽसत्वबाचित्वेनासंभवात् । अत उदीति सति सप्तमी नोपपदेन । "ते प्राग्धातोः" इति उच्छब्दस्य धातोः प्राक्प्रयोगो नियतः । तेन तत्र पूर्वः कूलशब्दः उपपदम् इति व्याचष्टे—उत्पूर्वाभ्यामित्यादि । कूलमुद्रुज इति । रुजो भङ्गे । खशि "तुदादिभ्यः शः" "अतो गुणे" ( ६।१।९७ ) ङित्वान्न गुणः । मुम् ।

---

१. नासिकन्धम इति नासिकायां ध्माधेटोरिति नास्ति क० पु० ।

२. त्वात्कर्मणीत्युपतिष्ठते इति क० पु० ।

७८५. वहाभ्रेलिहः [ ३।२।३२ ]

वहंलिहः। अभ्रंलिहः। शाहं लिहोऽपीति केचित्। अपित्सार्वधातुकत्वात् न गुणः।

७८६. परिमाणे पचः [ ३।२।३३ ]

परिमाणे प्रस्थादौ पचः खश् स्यात्। प्रस्थम्पचा स्थाली।

७८७. मितनखे च [ ३।२।३४ ]

एतयोः पचः खश् स्यात्। मितम्पचः। नखम्पचः।

७८८. विध्वरुषोस्तुदः [ ३।२।३५ ]

विधुन्तुदः। संयोगान्तलोपः। अरुन्तुदः।

७८९. असूर्यललाटयोः दृशितपोः [ ३।२।३६ ]

एतयोः कर्मणोः क्रमात् दृशितपोः खश् स्यात्। असूर्यमित्यसमर्थसमासः दृशिना नञः संबन्धात्। सूर्यं न पश्यन्ति असूर्यम्पश्याः राजदाराः। ललाटन्तपः सूर्यः।

---

वहाभ्रे लिहः। [1]वहंलिह इति। लिह आस्वादने। वहस्कन्धस्तं लेढीति। अदादित्वाच्छपो लुक्। खशो ङित्वान्न गुणः [2]इत्याह—अपित्सार्वधातुकेत्यादि।

परिमाणे। परिमीयतेऽनेन तत्परिमाणम्, सर्वतो मानन्तदाह—परिमाणे प्रस्थादाविति। प्रस्थंपचेति।

यद्यपि प्रस्थद्रोणादिशब्दः काष्ठादि ( [3]निमित्तपरिच्छेदहेतौ प्रसिद्धाः, इह तु तत्परिमिते व्रीह्यादौ तत्तं विक्लित्त्यर्थेन पचिना काष्ठान्वयासंभवात् परिमेयनिष्ठेषु प्रत्ययः )। कथन्तर्हि परिमाणवाचित्वम्? परिमाणाध्यारोपेण परिमेयवृत्तेरदोषः।

मितनखे। अपरिमाणार्थं आरम्भः। मितशब्दो हि नित्यं परिमेयवाची। नखम्पच इति। पचिरत्र तापवचनः।

विध्वरुषोरिति। अरुन्तुद इति। "अरुर्द्विषदजन्तस्य" ( ६।३।६७ ) इति मुम्। अरुस्शब्दे मित्वादुकारात्परो मुम्। सकारस्य संयोगान्तलोपः। "मोऽनुस्वारः" ( ८।३।२३ ) "वा पदान्तस्य" ( ८।४।५९ ) इति परसवर्णविकल्पः।

असूर्यललाटयोरिति। असूर्यमित्यसमर्थसमास इति। अस्मादेव निर्देशात् क्वचिदसमर्थेनापि नञ्समासो ज्ञाप्यते। तेनाश्राद्धभोजी ब्राह्मण इत्याद्युपपन्नमिति भावः।

---

१. वहं लिह इति। लिह् आस्वादने। वहस्कन्धस्तं लेढीति नास्ति क० पु०।

२. इत्याह इति नास्ति क० पु०। ३. निमित्तेत्यारभ्य—प्रत्ययः इत्यन्तो नास्ति क० पु०।

७९०. उग्रम्पश्येरम्मदपाणिन्धमश्च [ ३।२।३७ ]

एते निपात्याः। उग्रम्पश्यः। इरया माद्यति इरम्मदः। पाणयो ध्मायन्ते पाणिन्धमोऽध्वा। शुनिन्धयः। करन्धम इत्यपि केचित्।

७९१. प्रियवशे वदः खच् [ ३।२।३८ ]

एतयोर्वदेः खच् स्यात्। प्रियंवदः। वशंवदः। "गमेः सुपि वाच्यः" (वा०) भुजङ्गमः। "विहायसो विह च" (वा०) विहङ्गमः। "खच्च डिद्वाच्यः" (वा०) विहङ्गः। भुजङ्गः।

---

कथमसामर्थ्यमित्याह—दृशिना नञः संबन्धात् इति। अत्र हि दर्शनक्रिया प्रतिषिध्यते न सूर्य एव। गुप्ति परं ह्येतद् वाक्यम्। एवं नाम गुप्ताः दाराः यद-परिहार्यदर्शनं सूर्यमपि न पश्यन्ति किं पुनः पुरुषानित्यन्तगुप्तत्वप्रतिपादनेऽस्य[1] वाक्यस्य तात्पर्यम्। अत एव सत्यपि सूर्यदर्शने प्रयोगो न विरुध्यते। तस्माद् दृशिनैव नञः सम्बन्धो न सूर्येण। यदा [2]पुनः सूर्य एव प्रतिषेध्यत्वेन विवक्ष्यते, तदा न भवितव्यमेव खश् प्रत्ययेनानभिधानादिति न्यासः। दृशिना नञः सम्बन्धमेव विग्रहेण विशदयति। सूर्यं न पश्यन्तीति। असूर्यम्पश्या इति। "पाघ्राध्मा" (७।३।७८) इति पश्यादेशः।

उग्रंपश्येरम्मद। उग्रं पश्यतीति। उग्रमिति क्रियाविशेषणं कर्मण्यणि प्राप्ते। [3]इरम्मद इति। इरा उदकं तेन माद्यति दीप्यते [4]अविन्धनत्वादिरम्मदो मेघज्योतिः। मदो हर्षे। अस्मादेव निपातनात् "दिवादिभ्यःश्यन्" (३।१।६९) इति न भवति। अत्र [5]तुजादिषु प्राप्तेषु। पाणिन्धम इति। अत्राधिकरणे ल्युटि प्राप्ते खश् निपात्यते। "पाघ्राध्मा" (७।३।७८) इति धमादेशः।

प्रियवशे। ( [6]वदेः खशापि सिद्धेः प्रत्ययान्तरकरणमुत्तरार्थम्। द्विषन्तप इत्यत्र ह्रस्वणिलोपौ यथा स्याताम् शप् च माभूत् इति)।

यद्येवमुत्तरत्रैव कर्तव्यम्। सत्यम्। इह करणमन्यत्रोऽपि भवतीति ज्ञापनार्थम्। तेन "गमेः सुपि वक्तव्यम्" इत्युपपन्नं भवति। भुजङ्गम इति। भुजेन कौटिल्येन गच्छतीति। विहङ्गम इति। विहायसा गच्छतीति। पूर्ववत् खचि विहादेशे। मुम्। खच् डिद्वाच्य इति।

---

१. अस्मिन् वाक्ये सतीत्ययं इति क० पु०।

२. सूर्य एव प्रतिषिध्यत्वेन प्रत्ययेनाभिधानादिति क० पु०। ३. इरमेति इति क० पु०।

४. अविरत्वादिति क० पु०। ५. अतुजादिषु इति क० पु०।

६. वदेः खशापीत्यारभ्य—मा भूदित्यन्तो नास्ति ( ) रेखाङ्कितो क० पु०।

७९२. द्विषत्परयोस्तापेः [३।२।३९]

एतयोर्ण्यन्तात् तपेः खच् स्यात्। णिलोपः।

७९३. खचि ह्रस्वः [६।४।९४]

खच् परे णौ उपधायाः ह्रस्वः स्यात्। द्विषन्तं परं वा तापयति द्विषन्तपः। परन्तपः। द्विषत्परेति द्वितकारोक्तेः स्त्रियां न। द्विषतीतापः।

७९४. वाचि यमो व्रते [३।२।४०]

वाक् शब्दे यमेः खच् स्यात् व्रते।

---

क्वचिद् विकल्पः पठ्यते सोऽनाकरः। यदाह न्यासकारः—विहायसो विहुवे-त्यतो भेदेन योगो डित्वस्यानित्यत्वज्ञापनार्थः, अन्यथा विहङ्गम इति न सिध्यतीति। यद्वा अनित्यत्वज्ञापनात् फलित एव विकल्पो वेत्युपनिबद्ध इति व्याख्येयम्। भुजङ्ग इति डित्वादिलोपः।

द्विषत्परयोः। तप संतापे भ्वादिः[1]। तप दाहे तुदादिः। द्वयोरपि ण्यन्तयोः सामान्य-ग्रहणं तापेरिति व्याचष्टे—ण्यन्ततापेरिति। खशि प्रकृते प्रत्ययान्तरकरणे प्रयोजनमाह-णिलोप इति। खशि हि शित्वेन सार्वधातुकत्वाद् "णेरनिटि" (६।४।५१) इति णिलोपो [2]न स्यात्। द्विषन्तप इति। मित्वादन्त्यादचः[3] परे मुमि संयोगान्तलोपः।

ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद् द्विषतीताप इत्यत्रापि प्राप्नोति। तत्राह—द्वितकारकोक्तेरिति। तत्रापरेण तकारेण द्विषच्छब्दो विशिष्यते [4]तकारान्ते द्विषच्छब्दे उपपदे इति। तेन द्विषतीशब्दे अनेनेन भवतीत्यर्थः। द्विषतीताप इति। कर्मण्यण्।

वाचि यमो। [5]शास्त्रीयो नियमो व्रतम्। [6]व्रतादन्यत्र वाग्यामः। कर्मण्यणेव भवति।

---

१. भ्वादिरिति क० पु०।
२. नेति नास्ति क० पु०।
३. मित्वादन्त्यात्परे इति क० पु०
४. तकारो द्विषच्छब्दे इति क० पु०।
५. शास्त्रियो इति क० पु०।
६. व्रतान्यत्र वाग्याम इति क० पु०।

**७९५. वाचंयमपुरन्दरौ च [६।३।७९]**

मुमर्थमेतौ खचि निपात्यौ । वाचंयमो मौनव्रती ।

**७९६. पूः सर्वयोर्दारिसहोः [३।२।४१]**

पुरि दारेः सर्वशब्दे सहेश्च खच् स्यात् । पुरन्दरः । सर्वंसहः । "भगे च दारेः" ( वा० ) भगन्दरः ।

**७९७. सर्वकूलाभ्रकरीषेषु कषः [३।२।४२]**

एषु कषेः खच् स्यात् । सर्वङ्कष इत्यादि ।

**७९८. मेघर्तिभयेषु कृञः [३।२।४३]**

एषु कृञः खच् स्यात् । मेघङ्कर इत्यादि । "अभयादौ च" ( वा० ) अभयङ्करः ।

**७९९. क्षेमप्रियमद्रेऽण् [३।२।४४]**

एषु कृञोऽण् स्यात् खच् च । क्षेमकारः । क्षेमङ्कर इत्यादि । अणुक्तेर्हेत्वादौ टो न ।

---

[1]वाचंयमपुरन्दरौ । मुमर्थमिति । नन्वत एव खशपि निपात्यतां किं पृथग्विधानेन । न चैवं व्रतादन्यत्र प्रसङ्गः । वाचयमो व्रते पुरन्दरश्चेति न्यासात् । न च [2]पचाद्यचाप्यन्यथा सिद्धिः स्यात् । नित्यसमासश्च न स्यादिति न शङ्क्यम् । निपातनस्येष्टसिद्ध्यर्थत्वात् । तदेतत् चिन्त्यप्रयोजनम् । एतेन पुरन्दरो व्याख्यात इति हरदत्तः ।

पूः सर्वयोः । पुरिदारेति । दॄ विदारणे इत्यस्य ण्यन्तस्य ग्रहणं न दॄ भये, दृङ् आदरे इत्येतयोरित्युपदेश इति हरदत्तः । सर्वंसह इति । असंज्ञायामेतत् । संज्ञायां "भृतॄवृजिधारि" ( ३।२।४६ ) इति वक्ष्यति ।

मेघर्तिभयेषु । "उपपदविधौ भयाढ्यादिग्रहणम्" ( वा० ) [3]तदन्तविधिं प्रयोजयति इति वार्त्तिकमभिप्रेत्याह—अभयादौ चेति । अत्र अभयादावुपपदे इति नार्थः । सूत्रोपात्तेषु भयग्रहणमात्रे तदन्तविधेरुक्तत्वेनादिपदग्राह्याणामन्येषामसंभवात् । तस्मादभयशब्दः आद्युपपदं यस्य स अभयादिस्तस्मिन्नपि करोतेः खजित्यर्थः ।

क्षेमप्रिय । न चात्र वेत्येव वाच्यम् । तत्र खचि विकल्पिते पक्षे कर्मण्यणेव भविष्यति । तत्किमेतद्ग्रहणे नेत्यत आह—अणुक्तेरिति । हेत्वादि विवक्षायां हि "कृञो हेतु" ( ३।२।२० ) इति प्राप्नोति । स च परत्वादनेनापवाद्यः । तस्मात् तस्यापि बाधनार्थं पुनरण् विधीयते इत्यर्थः ।

---

१. वाच्यमर्थमिति क० पु० । २. स्त च पचाद्यचाप्यासिद्धिरिति क० पु० ।
३. यां तदन्तविधिप्रयोजयविधिप्रयोजयविधिवेति क० पु० ।

८००. आशिते भुवः करणभावयोः [३।२।४५]

आशिते सुपि भवतेः खच् स्यात् करणे भावे चार्थे। आशितो भवत्यनेन आशितम्भव ओदनः। आशितम्भवो वर्तते।

८०१. संज्ञायां भृतॄवृजिधारिसहितपिदमः [३।२।४६]

एभ्यः सुपि खच् स्यान्नाम्नि। विश्वम्भरः। रथन्तरं साम। पतिंवरा। धनञ्जयः। वसुन्धरा। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः।

८०२. गमश्च [३।२।४७]

गमः खच् स्यान्नाम्नि। सुतङ्गमः।

८०३. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः [३।२।४८]

एषु गमेर्डः स्यात्। डित्त्वकरणसामर्थ्याट्टिलोपः। अन्तग इत्यादि। "सर्वत्र पन्नयोश्च" (वा०), सर्वत्रगः। पन्नगः। "उरसो लोपश्च" (वा०) उरसा गच्छति उरगः। "सुदुरोरधिकरणे" (वा०) सुखेन गम्यतेऽत्र सुगः। दुःखेन गम्यतेऽत्र दुर्गः। "निरो देशे" (वा०) निर्गो देशः। "अन्यत्रापि दृश्यते" (वा०) ग्रामगः। विहगतुरगभुजगपतगप्लवगादयोऽप्येवं ज्ञेयाः।

---

आशिते भुवः। [1]अशेर्ण्यन्तात् कर्मणि क्ते आशितशब्दः संगृह्यते। सुपीति। एतेन भवतेरकर्मकत्वात् कर्मणीत्यस्या[2]सम्बन्धं दर्शयति। आशितम्भव ओदन इति। यावतौदनेन अतिथ्यादेर्भोजनं भवति स एवमुच्यते।

अत्र प्राचोक्तम्—वाऽसरूपविधिना ल्युट् भवत्येव। आशितभवनः आशितभवनम् इति। सरूपत्वात् घञ् बाध्यत एवेति। तदसत्। क्तल्युट् तुमुन्खलर्थेषु वाऽसरूपविधिर्नेति प्रतिषेधात्।

संज्ञायां सुपीति। कर्मणीत्यपि द्रष्टव्यम्। रथन्तरमिति। रथेन तरतीति व्युत्पत्तिमात्रं न त्वत्रावयवार्थेऽनुगमोऽस्ति। वसुन्धरेति। वसु धारयतीति। धृञ् धारणे। [3]ण्यन्तादस्मात् खचि टिलोपः। खचि ह्रस्वः। अरिन्दम इति। अन्तर्भावितण्यर्थाद्दमेः सकर्मकत्वात् खच्[4]।

---

१. अशेरण्यादिति क० पु०।
२. कर्मणीत्यासम्बन्धमिति क० पु०।
३. एतस्माद् खचि टिलोप इति क० पु०।
४. खच् इति नास्ति क० पु०।

८०४. आशिषि हनः [६।२।४९]

कर्मणि हन्तेर्डः स्यादाशिषि। शत्रुं वध्यात् शत्रुहः। "दारावाहनोऽणन्त्यस्य टः संज्ञायाम्" (वा०) दाराद्याङ्पूर्वाद्धन्तेरण् प्रत्ययः स्यादन्त्यस्य च टो नाम्नि। दार्वाहन्तीति दार्वाघाटः। "कर्मणि समि च" (वा०)। कर्मण्युपपदे संपूर्वस्य हन्तेरण् प्रत्ययः स्यात् अन्त्यस्य च टो वा। वर्णान् संहन्तीति वर्णसङ्घाटः। वर्णसङ्घातः।

८०५. अपेक्लेशतमसोः [३।२।५०]

एतयोरप्पूर्वाद्हन्तेर्डः स्यात्। क्लेशापहः। तमोपहः।

८०६. लक्षणे जायापत्योष्टक् [३।२।५२]

अनयोर्हन्तेष्टक् स्यात् लक्षणे द्योत्ये। जायाघ्नो ना। पतिघ्नी स्त्री।

---

ननु "अन्तात्यन्त" (३।२।४८) इति डप्रत्ययस्य डित्वेऽप्यभत्वात् टिलोपेन न भाव्यमत आह—डित्वसामर्थ्यादिति। श्रवणार्थस्तु डकारो न भवति। "पादस्य पदाज्यातिगोपहतेषु" (६।३।५२) इत्यत्र कृतटिलोपस्य डप्रत्ययान्तस्य गेति निर्देशात्। पन्नग इति। पन्नं पतितं यथा भवति तथा[1] गच्छतीति पन्नगः। पन्नमिति क्रियाविशेषणम्। सुदुरोरधिकरणे इति। कर्मणि तु खलेव भवति। सुगमो निर्गम इति।

यत्त्वन्यत्र न्यासे उक्तम्—अधिकरणे ल्युडपवादो यो डो विधीयते वाऽसरूपविधिना पक्षे सोऽपि भवत्येव सुगमनं दुर्गमनमिति। तदयुक्तम्। क्तल्युट्तुमुन्खलर्थेषु वाऽस[2]रूपविधेः प्रतिषेधात् इति। [3]माधवेनाहेत्यभिधानात्।

[4]निर्गो देश इति। निर्गच्छन्त्यस्मिन् निर्गः। देशादन्यत्र ल्युडेव। [5]पतगप्लवगादय इति। पततीति पतः पचाद्यच्। पतो गच्छतीति पतगः। प्लव उत्पवनं तेन गच्छतीति प्लवगः।

अपेक्लेश। कथं पापापहः। शोकापहः। अन्येभ्यो दृश्यते इति ( ) डो भविष्यति।

लक्षणे जाया। [6]यस्य तिलकालकादि जायाभरणचिह्नमस्ति स एव सद्धेतुत्वात् हन्ति इत्युपचर्यते। तत्रायं प्रत्ययः। उपचारसामर्थ्याच्च हननलक्षणत्वं गम्यते। एतेन[7] पतिघ्नी जायेत्यपि व्याख्याता। "गमहन" इत्युपधालोपः। "हो हन्तेः" इति कुत्वम्। स्त्रियां "टिड्ढाणञ्" इति ङीप्।

---

१. तथा गच्छतीति नास्ति क० पु०। २. तदनुदनुमस्त्वयुक्तेति क० पु०।
३. माधवो नाहेत्यभिधानात् इति क० पु०।
४. निर्गो देशः निर्गच्छन्त्यस्मिन्निति। देशादन्यत्र ल्युडेवेति नास्ति क० पु०।
५. पतगप्लवगादय इति। पततीति पतः पचाद्यच् इति नास्ति क० पु०।
६. यस्य तिलकादि जायान्तरकरणबीजमस्तीति स एव हि द्वित्वाहतीति क० पु०।
७. व्याख्येति क० पु०।

८०७. अमनुष्यकर्तृके च [३।२।५३]

कर्मणि हन्तेष्टक् स्यात् अमनुष्यकर्तृकेऽर्थे। पित्तघ्नं घृतम्। मनुष्ये तु आखुघातः। शूद्रः। बाहुल्याच्चोरघातो हस्ती।

८०८. शक्तौ हस्तिकपाटयोः [३।२।५४]

एतयोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ गम्यमानायाम्। मनुष्यकर्तृकार्थमारम्भः। हस्तिघ्नः। कपाटघ्नः।

८०९. पाणिघताडघौ शिल्पिनि [३।२।५५]

एतौ निपात्यौ शिल्पिनि। "राजघश्च" (वा०)। राजानं हन्ति राजघः।

८१०. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् [३।२।५६]

एषु च्व्यर्थेषु अच्व्यन्तेषु कृञः करणेऽर्थे ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेनेति आढ्यङ्करणम्। सुभगङ्करणम्। स्थूलङ्करणम्। प्रियङ्करणम्। अच्वौ किम्। आढ्यी कुर्वन्त्यनेन। प्रतिषेधसामर्थ्याल्ल्युडपि न। नह्यत्र ख्युन् ल्युटो रूपभेदः। च्व्यन्तस्याव्ययत्वेन मुमोऽभावात्।

---

अमनुष्यकर्तृके। पित्तघ्न घृतमिति। यद्यप्यमनुष्यशब्दो रूढ्या रक्षः पिशाचादीनाहेति प्रागुक्तम्। इह तु (¹मनुष्यादन्यत् सर्वमेव गृह्यते व्याख्यानादिति भावः। आखुघात इति। कर्मण्यण्। कथं कृतघ्नं पुरुषं दृष्ट्वा बलभद्रः प्रलम्बघ्नः शत्रुघ्न इति। मूलविभुजादित्वात्क इति हरदत्तः। बाहुलका टक् इत्यन्ये। पदसंस्काराद्वा। पदान्तरसन्निधाने हि) मनुष्यकर्तृकत्वं गम्यते इत्याहुः।

पाणिघताडघौ। हस्य घत्वं टिलोपश्च निपात्यते। शिल्पिनीति किम्। पाणिघातः। ताडघातः। अच्व्यर्थञ्चभूततद्भावविषयेषूपपदेषु करणे वाच्य इत्यर्थः।

आढ्यङ्करणम् इति। "युवोरनाकौ" (७।१।१) इति योरनः। णत्वम्। खित्वान्मुम्। लिङ्गविशिष्टपरिभाषया स्त्रीवाचके आढ्याशब्देऽप्युपपदे यदा ख्युन्; तदापि "खित्यनव्ययस्य" (६।३।६६) इति ह्रस्वेनैतदेव रूपम्।

आढ्यीकुर्वन्त्यनेनेति। अभूततद्भाव इति विकल्पितः स यदा भवति तदा प्रतिषेधः। तदभावपक्षे तूदाहरणम्।

---

१. मनुष्यादन्यदित्यारभ्य—सन्निधाने हीत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

## ८११. कर्तरि भुवः खिष्णुच् खुकञौ [३।२।५७]

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भुवः कर्त्रर्थे खिष्णुच् खुकञ् एतौ स्तः। अनाढ्यः आढ्यो भवति आढ्यम्भविष्णुः। आढ्यं भावुक इत्यादि। "त्यदादिषु दृशः" इति कञ्क्विनौ। तादृक्। तादृशः। "समानान्ययोश्च" (वा०) सदृशः। सदृक्। अन्यादृशः। अन्यादृक। "दृशेः क्सश्च" (वा०) सदृक्षः। तादृक्षः। अन्यादृक्षः।

---

ननु ख्युनि निषिद्धेऽपि ल्युटा भाव्यम् ततश्चाढ्यीकरणम् इति स्वरे रूपे वा विशेषो नास्तीति निषेधो व्यर्थ इत्याशङ्क्याह—प्रतिषेधसामर्थ्यादिति। सामर्थ्यमेवोपपादयति—न ह्यत्रेत्यादिना। रूपभेद इति। आढ्योकरणमिति रूपस्य ल्युटि ख्युनि वा तुल्यत्वात्। स्त्रियामिति "टिड्ढाणञ्" (४।१।१५) इति ङीपोभयत्र भाव्यम्।

नन्वस्ति रूपे विशेषः ख्युनि खित्त्वान्मुमा भाव्यम् ल्युटि तु नेति सोऽपि नेत्याह [1]च्व्यन्तस्याव्ययत्वेनेति। "ऊर्यादिच्वि डाचश्च" (१।४।६१) इति निपातत्वादव्ययमेतत्। मुम्[2] चानव्ययस्योक्त इत्यर्थः।

[3]स्वरेऽपि नास्ति भेदः ख्युनि हि नित्यत्वात् प्रकृतिराद्युदात्तः। ल्युडपि लित्वात्स एवेति। मुमोऽभावादिति। मुम् ग्रहणं "खित्यनव्ययस्य" (६।३।६६) इति ह्रस्वस्याप्युपलक्षणम्।

एवमपि कुतः प्रतिषेधसामर्थ्यमुत्तरार्थमेतत् स्यादाढ्यीभवितेति खिष्णुच्खुकञ्भ्यामुक्ते तृजादिभिर्भवितव्यमिति भाष्ये स्थितत्वात्। सत्यम्। इह तुकरणमनर्थकमिति सामर्थ्यं मन्यते।

"त्यदादिषु दृशोऽनालोचने कञ्च" (३।२।६०)। हलन्तेषु व्याख्यातम्। तत्र हलन्तानां प्रकरणात् क्विनेवोदाहृतः। इह तु [4]कञादीनामुदाहरणावसरे[5] पुनः स्मारयति—त्यदादिष्वित्यादिना। तादृश इति। "आ सर्वनाम्नः"। (६।३।९१) इत्यात्वम्। "समानान्ययोश्च" (वा०) इति कञ्क्विनौ वाच्यौ इत्यर्थः। सदृश इत्यादि। समान सः इत्यनुवर्तमाने "दृग्दृशवतुषु" (६।३।९८) इति समानस्य

---

१. च्व्यन्तस्य व्ययत्वेनेति क० पु०।
२. मुम् न व्ययस्य कृत्यर्थः इति क० पु०।
३. मुमोऽभावादिति। मुम् ग्रहणं खित्यनव्ययस्येति ह्रस्वस्याप्युपलक्षणमिति नास्ति क० पु०।
४. ञ्यादीनामिति क० पु०।
५. उदाह तुमवरर्यमिति क० पु०।

८१२. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् [३।२।६१]

एभ्यः सुप्युपपदे उपसर्गे सत्यपि क्विप् स्यात्। उपसर्गोक्तेर्ज्ञापितं अन्यत्र सुप्युक्तौ प्रादिग्रहणं नेति "वदः सुपि क्यप् च" (३।१।१०६) "सुपिस्थः" ( ) इत्यादौ। वेर्लोपः। शुचिषत्। उपनिषत्। अण्डसूः। प्रसूः। मित्रध्रुट्। "अग्रग्रामाभ्यां नयतेर्णो वाच्यः" ( वा० ) अग्रणीः। ग्रामणीः। देवराट्।

सभावश्च। ( तादृक्[1] इत्यादि। "दृक्षे च" ( वा० ) इति वचनादात्त्वम्, सभावश्च। अत्र सर्वत्र स एव इव दृश्यते इति विगृह्णन्ति तत्त्वयुक्तम् )। कर्तरि कृतो विधानात्। पश्यतीति विग्रहे तु कर्मण्यणेव भवितव्यम्। तद्दर्श इति अनालोचने इति निषेधात्। तस्मादविवक्षितप्रकृत्यर्थे आख्यातमात्रे सादृश्यमात्रविवक्षायां प्रत्ययः 'इवशब्द-त्वात्। स इव भवति तादृश इत्यादि। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता तमिमे पश्यन्ति मा सोऽयं [illegible] ईदृग्दृश्यमानस्तमिवात्मानं पश्यतीति। तत्र कर्मव्यापारमात्रे दृशिर्वर्तते न पुनः कर्तृव्यापारे आलोचनेऽपीति।

सत्सूद्विष। षद्लृ विशरणगत्यवसादनेषु। षूङ् प्राणिगर्भविमोचने। अदादिः गृह्यते। द्विषा साहचर्यात्। तेन सुवतिसूयत्योर्न ग्रहणम्। द्विष अप्रीतौ। द्रुह जिघांसायाम्। दुह प्रपूरणे। युजिर् योगे। युज समाधौ द्वावपि। विद ज्ञाने। विद सत्तायाम्। विदेरयकारस्य विवक्षायां विद्लृ लाभे इत्यस्याग्रहणम्। भिदिर् विदारणे। छिदिर् द्वैधीकरणे। जि जये। णीञ् प्रापणे। राजृ दीप्तौ। "स्पृशोऽनुदके क्विन्" (३।२।५८) इत्यतः प्रभृति 'कर्मग्रहणं न व्याप्रियते इत्यतः समयमालोच्याह—सुप्युपपदे इति।

एवमुपसर्गेऽपीत्यनर्थकमुपसर्गस्यापि सुबन्तत्वेन क्रोडीकरणादत आह—उपसर्गोक्तेर्ज्ञाप्यते इत्यादि।

क्वा[4]न्यत्रेत्यत आह—"वदः सुपि क्यप् च" (३।१।१०६) इत्यादि प्रयोजन-दिगियं दर्शिता। अत्र 'गदमद" (३।१।१००) इत्यतः[5] अनुपसर्गे इत्यनुवर्तत एव।

1. तादृश इत्यारभ्य—तत्त्वयुक्तम् इत्यन्तो नास्ति क० पु०। किन्तु तत्स्थाने स्व न सर्वत्र स इति दृश्यते समान इत्यनवद्दृश्यते इत्युदाहरति तत्त्वशुम् इति। वर्तते।
2. प्रत्ययस्त्वित्यादिनि क० पु०।
3. प्रभृतिग्रहणमिति क० पु०।
4. नान्यत्रेति क० पु०।
5. उपसर्गे इत्येव क० पु०।

८१३. भजो ण्विः [३।२।६२]

सुपि प्रादौ च भजेर्ण्विः स्यात्। सुखभाक्। प्रभाक्।

८१४. छन्दसि सहः [ ३।२।६३ ]

सहेर्ण्विः प्राग्वत् छन्दसि। लोकेऽपीति केचित्। "अन्येषामपि दृश्यते" (६।३।१३७) इति पूर्वपदस्य दीर्घः। तुराषाट्।

८१५. वहश्च [ ३।२।६४ ]

पृष्ठवाट्। "परौ व्रजेः षः पदान्ते" (वा०) इति क्विप्। तेनैव षः। परिव्राट्। "अनसि वहे क्विप् अनसो डश्च" (उ०)। अनो वहतीति अनड्वान्।

---

तस्मात् स्पृशोऽनुदके क्विन् (३।२।५८) इत्यादौ प्रयोजनं द्रष्टव्यम्। क्विपः पकारस्तुगर्थः। ककारो गुणप्रतिषेधार्थः। वकारो वेरिति सामान्यग्रहणार्थः। वेर्लोप "वेरपृक्तस्य" (६।१।६७) इत्यनेन। शुचिषद् इति। छान्दसमेतदुदाहरणम्। "पूर्वपदात्" (८।३।१०६) इति षत्वम्। छन्दसीत्यनुवर्तते। तेन भाषायां शुचिषदित्येव। 'द्युसदितिवत्। दिविषदित्यत्र तु सुषामादित्वात्षत्वमिति माधवः। उपनिषदिति "सदिरप्रतेः" (८।३।६६) इति षत्वम्। अग्रग्राभाण्यामिति।

अत्र वदन्ति। "स एषां ग्रामणीः" (५।२।७८) इति निर्देशेन ज्ञापितमेतत्। पूर्वपदस्थान्निमित्तादुत्तरस्य नीञो नकारस्यासंज्ञायामपि णत्वं भवतीति। नीरूपविषयं चेदं णत्वम्। तेन ग्रामनाय इति कर्मण्यणि न भवति इत्याहुः।

"अन्येभ्योऽपि दृश्यते" (३।२।१७८) इति सामान्येन क्विपं वक्ष्यति, तस्यैवायं प्रपञ्चः इति दिक्।

भजो ण्विः। उपर्गेऽपीति वर्तते इत्याशयेन व्याचष्टे—सुपि प्रादौ चेति। सुखभागिति। भज सेवायाम्। "वेरपृक्तस्य" (६।१।६७) इति वेर्लोपः। "अत उपधायाः" (७।२।११६) इति वृद्धिः। "चोः कुः" (८।२।३०)।

छन्दसि सहः (३।२।६३) प्राग्वत्। सुपि प्रादौ चेत्यर्थः।

ननु यदि छान्दसोऽयम् तर्हि वैदिकप्रक्रियायामेवोदाहर्तुमुचित इत्याशङ्क्याह—लोकेऽपीति केचिदिति। छन्दोग्रहणमतन्त्रम्। तुरासाहं पुरोधायेत्यादिमहाकविप्रयोगदर्शनात् इति भावः।

हरदत्तस्तु भाषायामस्य प्रयोगश्चिन्त्य इत्याह—तुराषाडिति[२] सोतोर्तीति तुरः तुर त्वरणे ह्लादिः "इगुपध" (३।१।१३५) इति कः। तुरं सहते तुराषाट्। पूर्वपदस्य दीर्घः "सहेः साडः सः" (८।३।५६) इति षत्वम्। जश्त्वम्। "वाऽवसाने" (८।४।५६) परौ व्रजेरिति।

---

१. द्यवसदिति क० पु०।
२. त्वरतीति क० पु०।

८१६. जनसनखनक्रमगमो विट् [ ३।२।६७ ]

उपसर्गे सुप्येभ्यो विट् स्याच्छन्दसि ।

८१७. विड्वनोरनुनासिकस्यात् [ ६।४।४१ ]

अनुनासिकस्यात् विटि वनि च । अब्जाः ।

८१८. सनोतेरनः [ ८।३।१०८ ]

पूर्वपदस्थान्निमित्तात् परस्य सनोतेः सस्य षः स्यात्, न तु नान्तस्य । गोषाः । कूपखाः । उदधिक्राः । अग्रेगाः ।

८१९. अदोऽनन्ने [ ३।२।६८ ]

छन्दसीति निवृत्तम् । अदो विट् स्यात् अनन्ने सुपि । आमात् । सस्यात् । अन्ने तु अन्नादः ।

---

मुग्धबोधानुसारेण प्रसिद्धेव[1]णिवरित्युक्तम् । वेरिति स्वपपाठः । स्वातन्त्र्ये परतन्त्रे वा तल्लक्षणाभावात् । [2]उणादिसूत्रञ्चेदमिति प्राचोक्तम् । तत्र पञ्चपाद्यां दशपाद्यां वा विरुद्दीर्घविव विधीयेते तदग्रे दर्शयिष्यति । [3]स्तुद्रुपरिव्रजां दीर्घश्चेति केचित् । [4]अनड्वानिति । अनः वहतीति । अनः शकटम् । अनसि वहेः क्विपि संप्रसारणम् । सौ परे "चतुरनडुहोः" ( ७।१।९८ ) इत्याम् । "सावनडुहः" ( ७।१।८२ ) इति नुम् । "संयोगान्तस्य लोपः" ( ८।२।२३ ) इति हलोपः ।

जभसन । जन जनने । जनी प्रादुर्भावे इति च । षणु दाने । षण संभक्तौ इति च । खनु विदारणे । क्रमु पादविक्षेपे । गम्लृ गतौ । अब्जा इति । अप्सु जायते "वेरपृक्तस्य" ( ६।१।६७ ) इति वेर्लोपः । नस्यात्त्वम् । सवर्णदीर्घः ।

सनोतेरनः । अनः किम् । [5]सिसनिषते क्विप् । प्रतिसिसनीः । गोषा इति गां सनोतीति अग्रेगा इति । "तत्पुरुषे कृति बहुलम्" (६।३।१४) इति सप्तम्या अलुक् ।

अदोऽनन्ने । [6]सस्यादिति । सस्यमत्ति । अद भक्षणे । वाऽसरूपविधिनाऽणपि तेन सस्यादः । कणादः । विघाद इत्यादि सिद्धम् । तथा च ( "[7]कव्ये च" (३।२६९

---

१. णिवत्युक्तम् इति क० पु० ।

२. उणादिमात्रञ्चेदमिति वा प्रोक्तम् तत्र पञ्चपाद्यादशपाद्यां वृ्विवदीर्घौ विधीयेते इति क०पु०

३. स्तुद्रुपरि सुमाविचंस्येति केचिदिति क० पु० । ४. अनड्वानिति नास्ति क० पु० ।

५. गोसनिः निषेध कि प्रतिसिसना इति क० पु० । ६. सास्यादिति क० पु० ।

७. घृतेति तत्र सरूपविधिबाधनार्थः क्रियते अञ्यादिस्यैवय पा स्यात् कर्मण्यण् मा भूदिति क०पु०

८२०. दुहः कब्घश्च [ ३।२।७० ]

दुहः सुपि कप् स्याद् घश्चान्तादेशः । कामदुघा ।

८२१. मन्त्रे श्वेतवहोक्थशसपुरोडाशो ण्विन् [३।२।७१]

एभ्यो ण्विन् स्यान्मन्त्रे । अलाक्षणिककार्यार्थं समुदाया निपात्यन्ते। ण्विन् विधीयते। श्वेता एनं वहन्ति श्वेतवाः इन्द्रः। उक्थानि उक्थैर्वा शंसति उक्थशाः। पुरो दाश्यते एनं पुरोडाः।

८२२. अवे यजः [ ३।२।७२ ]

अवयाः ।

---

इति सूत्रमसरूपबाधनार्थं क्रियते क्रव्यादित्येव यथा स्यात् कर्मण्यण् मा भूदिति ।) कथं तर्हि क्रव्याद इति । अत्राहुः । [1]अदेरण् । कृत्तविकृत्तशब्दस्य पृषोदरादित्वात् क्रव्यभावः । कृत्तविकृत्तपक्वमांसभक्षः क्रव्यादः । आममांसभक्षकस्तु क्रव्यादिति विशेष इति ।

[2]अन्नाद इति । अत्र हरदत्तः भाषायामणेव भवति । छन्दसि त्वचि अन्नाद इत्यत्र वर्णस्य च प्रत्ययविपर्णत्वेनोपादानात् । [3]अन्न अद इत्यवग्रहो भवति ।

दुहः कब्घश्च । कामदुघेति । काम्यते इति कामास्तान् दोग्धि । दुह प्रपूरणे । कविस्यर्थः । कपः पित्त्वान्न गुणः । पित्त्वादनुदात्तः ।

मन्त्रे श्वेतवहो । एभ्य इति । श्वेतादिपूर्वेभ्यो वहादिभ्यः इत्यर्थः । [4]किमर्थं पुनः धातूपपदसमुदाया निर्दिश्यन्तेऽत आह—अलाक्षणिकेति । किं तत्कार्यमित्यपेक्षितं विग्रहेण व्यनक्ति । श्वेता एनमित्यादि । श्वेते कर्तर्युपपदे वहेः कर्मणि [5]ण्विन् । उक्ते कर्मणि करणे कर्तरि वा ण्विन् शंसेर्नलोपश्च । पुरस्पूर्वकस्य दाश दाने इत्यस्य कर्मणि ण्विन् दस्य डत्वं च निपातनात् सिध्यतीति भावः । उदाहरणेषु "श्वेतवाहुक्थशासपुरोडाशवयाजां डस् पदान्ते" ( वा० ) इति डस् । "अत्वसन्तस्य" ( ६।४।१४ ) इति दीर्घः । रुत्वविसर्गौ । डस्त्रयाणां पदान्तविषये ण्विनोऽपवादः इति श्वेतवा इत्यादीनि तूदाहरणानि । डस्ण्विनोः समानविषयत्वोपदर्शनमात्राभिप्रायेणोदाहृतम् ।

अवे यजः । मन्त्रे इत्येव ण्विनुदाहार्यः ।

---

१. कृत्तविकृत्तशब्दे उपपदेऽणो कृत्तिकृत्तिं संचष्टे इति क० पु० ।
२. अन्नाद इति नास्ति क० पु० ।
३. अत्र एव वधग्रहो भवतीति । दुह् कप् । कामदुघेति काम्यन्त इति कामास्तान् दोग्धि । दुह प्रपूरणे कविस्यर्थः इत्येव क० पु० ।
४. काः पुनर्वृत्तयः यत्र समुदायो निर्दिश्येत इत्याह—अलाक्षणिकेति क० पु० ।
५. वनृवय कर्मण्विन् शंसेः नलोपश्च पुरः सर्वदा दानेऽस्यति क० पु० ।

८२३. आतो मनिन् क्वनिब्वनिपश्च [ ३।२।७४ ]

सुपि प्राद्दौ चादन्तादेते स्युः विच् च छन्दसि। सुष्ठु ददातीति सुदामा। "घुमास्था" इतीत्त्वम्। सुधीवा। वनिप्। घृतपीवा। भूरिदावा। विच्। सोमपाः। "अन्येभ्योऽपि दृश्यन्ते" (३।२।७५)। अनादन्तेभ्योऽप्येते स्युः। भाषायामपि।

८२४. नेड्वशि कृति [ ७।२।८ ]

वशादेः कृत इण् न स्यात्। सुशर्मा। "म्वोश्च" ( ८।२।६५ ) इति नः। सुगन्मा। क्वनिप् प्रातरित्वा। वनिप् "विड्वनोः" (६।४।४१) इत्यात्त्वम्। विजावा। ओराट। अग्रावा। "वनोरच" ( ४।१।७ ) अग्रावरी। विच्। रोट्। रेट्। अपिशब्दान्निरुपपदेभ्योऽपि। सुत्वा। धीवा। इत्युक्तिः प्रयोगानुसारार्था।

८२५. क्विप् च [ ३।२।७६ ]

उपपदे सत्यसति च धातोः क्विप् स्यात् सर्वत्र। उखास्रत्। पर्णध्वत्। वाहभ्रट्।

---

नेड्वशि कृति। कृतीति सप्तम्या षष्ठी विपरिणम्यते। वशीति वर्णनिर्देशः सप्तम्या च तदादिविधि[1]र्भवतीत्याह—वशादेः कृत इति। [2]आकरे तु "नेड्वररमनादौ" ( वा० ) इति पठ्यते नैतत्परिगणनम्। तेन "अमन्ताड्ड" ( उ० ) दण्ड इत्यत्रापि निषेधो भवति। सुशर्मेति। सुष्ठु शृणाति। शॄ हिंसायाम्। [3]मनिनि गुणः। [4]सुगन्मेति। गम्लृ गतौ। प्रातरित्वेति। इण् गतौ। "ह्रस्वस्य पिति कृति तुक्"। ( ६।१।७१ ) विजावेति। जन जनने। "विड्वनोः" इत्यात्वेऽत्रादेशः। अग्रावेति। "विड्वनोः" (६।४।४१) इत्यात्वेऽत्रादेशः। [5]सौ दीर्घनलोपौ। रोट् रेट् इति। रुप रिप् हिंसायाम्। उपधागुणः। जश्त्वचर्त्वे। प्रयोगानुसाराच्चेति। यत्र प्रयोगो दृश्यते तत्रैवायमवस्थापनीयो न तु लक्षणसौकर्यादिच्छया प्रयोक्तव्य इत्यर्थः।

क्विप् च। सर्वत्रेति। छन्दसि भाषायां चेत्यर्थः। पूर्वसूत्रे एव छन्दसीत्यस्य निवृत्तत्वादिति भावः। उखास्रदित्यादि। उखायां स्रंसते। पर्णानि ध्वंसते। स्रंस ध्वंसु

---

१. विधिर्भवतीति क० पु०। २. अत्राकरे नेड्वररमनादौ प्रयोजनमिति पठ्यते इति क० पु०।
३. मनिनि गुणः इति क० पु०। ४. सुगन्मेति तत्रादेश इति क० पु०।
५. सौ दृश्यते तत्रैवायमवस्थापनीयो इति क० पु०।

८२६. अन्तः [ ८।४।२० ]

पदान्ते नस्याप्यनितेर्णत्वं स्यान्निमित्ते । हे प्राण् । "च्छ्वोः शूड्" ( ६।४।१९ ) इत्यूठ् । अक्षय्ूः । "शास आशासश्च क्वावुपधाया इत्वं वाच्यम्" ( वा० ) मित्राणि शास्ति मित्रशीः । आसीः । गीः । अस्यैव प्रपञ्चः । "सत्सू द्विषे" ( ३।२।६१ ) । असुन् ( उ० ) । अयं प्रत्ययो धातोः स्यात् । उरुव्यचाः नृचक्षाः । रजः । "अर्चिशुचिहुसृपिछादिछृदिभ्य इसुन्" ( उ० ) । अर्चिः । शोचिः । सर्पिः । "धनतिं चक्षिवपितपिजनियजेरुस्" (उ०) धनुः । चक्षुः । "सर्वधातुभ्यः ष्ट्रन्" (उ०) तन्त्रम् ।

अवस्रंसने । ध्वसेरन्तर्भावितण्यर्थत्वात् सकर्मको भवति । उभयत्र "अनिदिताम्" ( ६।४।२४ ) इति नलोपः । "वसुस्रंसु" ( ८।२।७२ ) इति दत्वम् । वाहभ्रड्डिति । वाहाद् भ्रश्यति । भ्रंशु अधःपतने । 'व्रश्च' ( ८।२।३६ ) इति षत्वम् । जश्त्वम् । चर्त्वम् । वृत्त्यादिषु । वाहाभ्रट इत्युदाहृत्य वाहस्य "अन्येषामपि दृश्यते" (६।३।१३७) इति दीर्घ इत्युक्तम् ।

अन्तः । अनितेरिति वर्तते । अन्तोऽत्रपदापेक्षो गृह्यते । तेना[१]नितेरपेक्षयाऽव्यभिचारादित्याह--पदान्ते नस्यापि इति । अपिर्भिन्नक्रमः । पदान्तेऽपीत्यन्वयः । "पदान्तस्य" ( ८।४।३७ ) इति निषेधापवादोऽयम् । [२]निमित्ते रषाभ्यामित्यर्थः । हे प्राणिति । अन प्राणने क्विप् । "अनुनासिकस्य" ( ६।४।१५ ) इति दीर्घः । सबुद्धौ "न ङिसंबुद्ध्योः" ( ८।२।८ ) इति नलोपनिषेधः । अन्यत्र तु नलोपेन भाव्यमिति संबुद्ध्यन्तमुदाहृतम् । अक्षय्ूरिति । अक्षै र्दीव्यति । [३]वस्योठि यणादेशः । असिद्धत्वमूठो नास्ति । "नाजानन्तर्ये" ( प० ) इति निषेधात् ।

[४]"शास आशासश्च क्वावुपधाया इत्वं वाच्यम्" ( वा० ) इत्यादि । शासु अनुशिष्टौ । आङ्पूर्वः शास इच्छायामात्मनेपदी । अनयोर्वाच्यम् व्याख्येयमित्यर्थः । तत्र मित्रशीरित्यत्र शासेस्तावत् सूत्रेणैव सिद्धं "क्वौ लुप्तेऽपि" प्रत्ययलक्षणेन हलादिङ्कि[५]त्परत्वात् । वर्णस्य च प्रत्ययविशेषणत्वेनोपादानात् । "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" ( प० ) इत्यपि नास्ति यथा भ्रातृणेङितोमागमे । आशासस्तु [६]"क्षिय शीः प्रैषेषु" ( ८।२।१०४ ) इति निपातनादित्वसिद्धिः ।

१. नानितेरपेक्षयेति क० पु० । २. निमित्ते रषाभ्यामिति नास्ति क० पु० ।
३. वस्येति क० पु० । ४. शास उपधाया इति क० पु० ।
५. इत्यादित्वात् प्रत्ययलक्षणत्वेनोपादनात् इति क० पु० ।
६. वर्णयाशीरिति क० पु० ।

८२७. इस्मन्त्रन्क्विषु च [ ६।४।९७ ]

एषु परेषु छादेर्ह्रस्वः स्यात् । छदिः । छद्म । छत्त्रम् । तनुच्छत् । अनुनासिकस्य क्विझलोः क्ङिति" ( ६।४।१५ ) "मो नो धातोः" ( ८।२।६४ ) प्रशान् । प्रतान् ।

८२८. ज्वरत्वरस्रिव्यविमवामुपधायाश्च [६।४।२०]

एषामुपधाया वकारस्य च ऊठ् स्यात् क्वौ झलादौ क्ङिति । जूः । जुरौ । तूः । तूः, तुरौ । ऊः । ऊठ् वृद्धिरेच । जनानवतीति जनौः । जनावौ । मूः ।

८२९. राल्लोपः [ ६।४।२१ ]

रेफादुत्तरयोश्छ्वोर्लोपः स्यात् क्वौ झलादौ च क्ङिति । मूर्छा मूः । धुर्वी धूः । विरुहः धोऽन्तादेशो वेर्दीर्घ इति केचित् । वीरुत् ।

---

न चात्रापि सूत्रेणैव सिद्धिः तत्र परस्मैपदिन एव शासे ग्रहणात् । गीरिति । गॄ निगरणे । ऋत इद् रपरः । "र्वोरुपधायाः" ( ८।२।७६ ) इति दीर्घः ।

ननु सदादिभ्योऽप्यनेनैव क्विप् सिद्धे किं सदादिसूत्रेणेत्यत आह—अस्यैव प्रपञ्च इति ।

असुनित्यादि । चत्वार्युणादिसूत्राणि । उरुव्यचा इति । व्यच व्याजीकरणे । "व्यचेः कुटादित्वमनसि" (वा०) इति पर्युदासात् ङित्वाभावः । नृचक्षा इति । "असि उसि अने च चक्षिङः ख्याञ् नेति वाच्यम्" ( वा० ) इति । ख्याञादेशाभावः रज इति । रञ्ज रागे । "असि अके अने घिनुणि च रञ्जेर्नलोपो वाच्यः" ( वा० ) इति नलोपः । तन्त्रम् । तनु विस्तारे । "तितुत्र" ( ७।२।९ ) इति नेट् ।

इस्मन्त्रिषु । छादेरिति । छद अपवारणे । चुरादिर्णिच् । उपधावृद्धिः । इस् ह्रस्वः छद्मेति । "अन्येभ्योऽपि दृश्यते" ( ३।२।१७८ ) इति मनिन् । छादयतीति छद्म । प्रशानित्यादि । शम उपशमे । प्रतान् । तमु ग्लानौ ।

ज्वरत्वर । ज्वर रोगे । त्रित्वरा संभ्रमे । स्रिवु गतिशोषणयोः । अव रक्षणे । मव बन्धने । उपधाया वकारस्य चेति । समुदायः स्थानीति पक्षे एक एवोठ् । प्रत्येकं स्थानित्वे तु द्वावूठौ सवर्णदीर्घः । [1]जूरिति । जॄ गतावित्यस्य रूपमिति शङ्कामपाकर्तुं जुरावित्युपन्यस्तम् । स्रवाविति । संयोगपूर्वत्वान्न यणिति दर्शयितुमस्योपन्यासः ।

राल्लोप । शूडिति । सतुक्कवितुक्कौ द्वौ छ्वौ निर्दिश्येते इत्युक्तम् । इह तुरात्परः सतुक्को न संभवतीति वितुक्को गृह्यते । मूर्च्छा मोहसमुच्छ्राययोः । छस्य लोपे "र्वोरुपधायाः" ( ८।२।७६ ) इत्युपधादीर्घः । झलादौ क्ङितीति तूदाहरिष्यति । निष्ठायां मूर्तं इति । केचिदत्र क्ङितीति नानुवर्तयन्ति । मोमोर्तीति यङ्लुक्युदाहरन्ति ।

---

१. घोरुगमिति । तन्त्रमित्यत्र क० पु० । २. जूरिति ज्वरतिरस्येदं रूप मिति क० पु० ।

८३०. गमः क्वौ [६।४।४० ]

गमः क्वौ परेऽनुनासिकस्य लोपः स्यात्। "ह्रस्वस्य" ( ६।१।७१ ) इति तुक्। अङ्गत्। "यमनतनां च वाच्यः" ( वा० ) संयत्। परिमत्। परितत्। "ऊ च गत्यादीनाम्" ( वा० ) अग्रेगू। अग्रेभ्रू।

८३१. सुप्यजातौ णिनिस्ताच्छील्ये [ ३।२।७८ ]

अजात्यर्थे सुपि धातोर्णिनिः स्यात्ताच्छील्ये। उष्णभोजी। सुब्ग्रुक्तिः प्रादिनिवृत्त्यर्था।

---

वीतविति। "नहिवृति" ( ६।३।११६) इति दीर्घः। ऊ चेति। गमादीनां क्वावनुनासिकलोपो भवति। तत्र चत्रावलोऽन्त्य ऊकारश्चेत्यर्थः। अग्रेभ्रूः। भ्रमु चलने।

सुप्यजातौ। उष्णभोजीति। उष्णं भोक्तुं शीलमस्य। "सुपि स्थः" ( ३।२।४ ) इत्यतः सुपीत्यनुवर्तमाने पुनः सुब्ग्रहणं किमर्थमत आह—सुब्ग्रुक्तिरित्यादि। पूर्वं हि सुप्ग्रहणमुपसर्गेऽपीत्युपसर्गग्रहणेन सबद्धं तदनुवृत्तौ तु तस्याप्यनुवृत्तिः स्यादत उपसर्गनिवृत्त्यर्थं पुनः सुब्ग्रहणमित्यर्थः।

एवं च उत्प्रतिभ्याङि सर्तेरुपसङ्ख्यानम्। उदासारिण्यः प्रत्यासारिण्य इत्युपसर्गयोगेऽपि यथा स्यादिति।

भाष्यकारस्तु नैतदाद्रियते। यदाह अथवा "सुपि स्थः" ( ३।२।४ ) इत्यत्र सुब्ग्रहणं "सत्सूद्विष" ( ३।२।६१ ) इति सूत्रस्योपसर्गग्रहणेनाऽनुपसर्गार्थमिति ज्ञापितम्। इदं पुनः सुब्मात्र एव यथा स्यात्। उदासारिण्यः। प्रत्यासारिण्य इति।

एवं च कृत्वा अजाताविति किम्। ब्राह्मणानामन्त्रयितेति प्रत्युदाहृतम्। अन्यथा आङः उपसर्गत्वात्प्रसङ्ग एव न स्यात् अयं च पक्षः आचार्याणामप्यभिप्रेतः। तथा चोत्प्रतिभ्यामिति नोपसंचक्रते। पाणिनीयानुसारिणीमिति च प्रायुज्यत।

अत्र पक्षे उपसर्गनिवृत्त्यर्थेत्यर्थशब्दो निवृत्तिवचनः। मशकार्थो धूम इतिवत्। निवृत्तेश्च निर्वृत्तिः प्रवृत्तिरेव। तेनोपसर्गयोगेऽपि यथा स्यादित्यर्थोऽपि व्याख्येयः।

ताच्छील्ये किम्। उष्णं भुङ्क्ते कदाचित्। "आक्वेस्तच्छील" ( ३।२।१३४ ) इत्यत्र तच्छील इत्युक्तेऽपि साधुकारिग्रहणात् ज्ञापकात् साधुकारिण्य ताच्छील्येऽपि णिनिर्भवति। साधुदायीति। "ब्रह्मणि वदः" ( वा० ) इति तु वक्तव्यम् अताच्छील्यार्थम्। जात्यर्थं सरूपविधिनिवृत्त्यर्थं च। ब्रह्मवादीत्येव भवति न जातु ब्रह्मवाद इति कर्मण्यण्।

८३२. मनः [ ३।२।८२ ]

सुपि मन्यतेर्णिनिः स्यात् ताच्छील्येऽपि। दर्शनीयमानी।

८३३. आत्ममाने खश्च [ ३।२।८३ ]

मनः सुपि खश् स्यादात्ममाने चाणिनिः। शित्वात् श्यन्। आत्मानं पण्डितं मन्यते पण्डितम्मन्यः। पण्डितमानी। "खित्यनव्ययस्य" ( ६।३।६६ ) कालिम्मन्या। अनव्ययस्य किम्? दिवामन्या।

८३४. इच एकाचोऽम्प्रत्ययवच्च [ ६।३।६८ ]

इजन्तादेकाचोऽम् स्यात् स च स्वाद्यम्वत् खिदन्ते परे। "औतोऽम्शसोः" ( ६।१।९३ ) गाम्मन्या। "वाऽम्शसोः" ( ६।४।८० ) स्त्रींमन्यः स्त्रियंमन्यः। नृ। नरम्मन्यः। भुवम्मन्यः।

---

मनः। मन्यतेरिति। मन इति देवादिकस्य। बहुलग्रहणाच्च मनु अवबोधने इति तानादिकस्यात्र न ग्रहणम्। यद्यपि णिनि विशेषो नास्ति, तथाप्युत्तरसूत्रे खशि विकरणकृतो विशेषः स्यादित्याशयः। दृश्यं मन्यते यः कश्चित्। णित्वात् "अत उपधायाः" ( ७।२।११६ ) इति वृद्धिः।

आत्ममाने। मननं मानः। भावे घञ्। आत्मनो मानः। आत्ममानः इति कर्मणि षष्ठ्या समासः। स्वमर्थश्चात्मशब्दः सन्निधानान्मननकर्तु[1]रेवात्मभाव इति गम्यते इत्याशयेन विगृह्णाति। पण्डितमात्मानं मन्यते इति। एकस्याप्यात्मनः स्वरूपेण कर्तृत्वम्, पण्डितत्वादिविशिष्टरूपेण कर्मत्वं चेत्यविभेदान्न विरुध्यते।

आत्ममाने किम्? परमाने तु णिनिरेव प्रागुक्तः। कालिम्मन्येति ह्रस्व इति भावः।

यत्त्वत्र "क्यङ्मानिनोश्च" ( ६।३।३६ ) इति प्राप्तः पुंवद्भावः इति प्राचोक्तम्, तत्प्रमतभावितत्वान्नादेयम्। तस्यासामान्याधिकरण्यविषयत्वात्। मानिन् रूपाभावाच्च।

दिवामन्येति। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिस्वभावात् कर्मत्वम्।

इच एकाचो। '[2]अम् स्यादिति। अम्प्रत्ययवद्भावातिदेशात् मकारस्य नेत्संज्ञा। "न विभक्तौ तुस्माः" ( १।३।४ ) इति प्रतिषेधात्। अत एव परश्च भवतीति भावः।

---

१. आत्मा इत्येव तु क० पु०।

२. अम् स्यादिति नास्ति क० पु०।

## ८३५. भूते ३।२।८४ ]

एतदधिक्रियते।

## ८३६. करणे यजः [३।२।८५ ]

करणे उपपदे यजेर्णिनिः स्यात् भूते। सोमेनेष्टवान् सोमयाजी।

## ८३७. कर्मणि हनः [ ३।२।८६ ]

पितृघाती। निन्दायामेव। चौरं हतवान्।

---

यद्यत्र प्रत्ययवच्चेत्येतावदुच्यते तत "सामान्यातिदेशे विशेषानतिदेशः" (५०) इति "औतोऽम्शसोः" (६।१।९३) इति विशेषविहितमात्त्वममि पूर्वत्वादि न स्यात्। तत्र शसा साहचर्येण विभक्त्यम एव ग्रहणात्। सामान्यविहितमियङ्'-द्येव तु स्यादत आह-स च स्वाद्यम्वत् इति। अम्ग्रहणमिहावर्तते। तेनैकेनार्थं विधीयत परेणैकेन प्रत्ययो विशेष्यते इति भावः। तदेवोदाहरति—औतोऽम्शसो-रित्यादि। स्त्रीमन्य इति। "अमि पूर्वः" (६।१।१०७) स्त्रियम्।

स्त्रियमन्य इति। इयङ्। नेहामि यदाहत्य विहितं तस्यैवातिदेशः किं त्वमि यद्दृष्ट सामान्यनिबन्धनं वा तत्सर्वमतिदिश्यते इत्याशयेनोदाहरति—नरंमन्य इति। "ऋतो ङि सर्वनामस्थानयोः" (७।३।११०) इति गुणः। भुवमन्य इति। "अचि श्नुधातुभ्रुवाम्" (६।४।७७) इत्युवङ्। इह तु श्रियमात्मान मन्यते इति श्रिमन्यं कुलमित्यत्र परित्यक्तस्वलिङ्गः श्रीशब्दः कुले वर्तते। यथा प्रष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्तंते प्रष्ठी गाणक्यादि। तत्र "स्वमोर्नपुंसकात्" (७।१।२३) इत्यमो लुग् भवति। अम्प्रत्ययस्तु मध्येऽपवादन्यायेन "सुपो धातुप्रातिपदिकयोः" (२।४।७१) इत्येतमेव लुकं बाधते नामुमिति भाष्ये स्थितम्। यदा त्वपरित्यक्तस्वलिङ्गः श्रीशब्दः कुले वर्तते तदा श्रियम्मन्य इत्यपीति विस्तरः।

भूते। एतदधिक्रियते इति। "वर्तमाने लट्" (३।२।१२३) इति पर्यन्तम्। एतच्च धात्वर्थस्य विशेषणं धातोरित्यधिकारात्। [illegible]

करणे यज.। स्वरितत्वाणिनिरेवानुवर्तते न खश् इत्याह—णिनिः स्यादिति। सोमेनेष्टवानिति। सोमो लतारूपः। स च यागे करणमुपपन्नम्।

यत्त्वत्र प्राचोक्तम्। सोमयागः फलोत्पादनाख्ये व्यापारे करणं भवति, न तु फलोत्पादनलक्षणं व्यापारं प्रति साधनत्वेनेप्सितत्वादनुष्ठीयमानो यागः कर्म भवति, सत्यम्, तथापि शक्तिभेदात् करणत्वं स्यादेव यथा निपीयमानेन मधुना मत्त इत्यत्र

---

१. इयङ्श्चेवेति क० पु०।

## ८३८. ब्रह्मभ्रूणवृत्रेषु क्विप् [३।२।८७]

एषु हन्तेः क्विप् स्याद्भूते। ब्रह्महा। भ्रूणहा। वृत्रहा। "नलोपः सुप्स्वरसंज्ञा" इति नलोपस्यासिद्धत्वात् न "ह्रस्वस्य पिति" इति तुक्। वृत्रहभ्याम्। ब्रह्मादिष्वेव हन्तेरेव क्विबेव भूत एवेति नियमार्थं सूत्रम्।

---

कर्मत्वमनुभवते। मधुनः [1]करणत्वम्। तस्मात् सोमयाजीत्यस्यायमर्थः। सोमेन करणेन स्वर्गं भावितवानिति। स्वर्गशब्दो वृत्तावन्तर्भूतत्वान्न प्रयुज्यते। ( [2]तदेतत् स्थाने भ्रान्त सम्भ्रान्तश्च।

तथाहि अग्निष्टोमयाजीत्यादौ यत्राग्निष्टोमादिशब्दः कर्मनामधेयं प्रयुज्यते तत्राभेदात् तदेव तत्र करणम् न युज्यते इत्याशङ्क्य यागोऽपि फलोत्पादनायां करणं संभवत्याकरे समाधीयते अग्निष्टोमः फलभावनाया करणं भवतीति।

न चेह तथानुपपत्तिरस्ति सोमाख्यस्य द्रव्यस्य यागं प्रत्येव करणत्वसंभवात्।

एवं च सोमेन करणेन स्वर्गं भावितवानित्यर्थकरणमनर्थकम्। अयुक्तञ्च। सोमो हि यागे करणं स्वर्गभावनाया यागो न सोमः।

न चेह सामशब्दस्य तद्वत्तया यागलक्षणायां प्रमाणं प्रयोजनं चास्ति। सोमेन यजेतेत्यत्र तु विध्यवरुद्धभावनायां पुरुषार्थभूतसुखरूपस्य स्वर्गस्य च भाव्यत्वेना[3]लम्बनात् तत्र समानपदोपात्तस्य यागस्य करणत्वेन योग्यत्वात् तत्सामानाधिकरण्यानुपपत्त्या सोमवति लक्षणा युक्ता च।

ब्रह्मभ्रूणवृत्रेषु। ननु "क्विप् च" ( ४।२।७६ ) इत्येव सिद्धः क्विप् सर्वत्र तत् किं पुनर्विधीयतेऽत आह—ब्रह्मादिष्वेवेत्यादि। अगृह्यमाणविशेषत्वात् चतुर्विधोऽत्र नियमः। धातूपपदप्रत्ययकालविषय इत्यर्थः। तत्र ब्रह्मादिष्वेव हन्तेरिति धातुनियमः। तेनान्यस्मिन्नुपपदे न भवति। पुरुषं हतवानिति।

अत्रापि भूत इत्याश्रयणात् कालान्तरे उपपदान्तरेऽपि भवत्येव। हिमं हन्ति हनिष्यति वा हिमहेति। ब्रह्मादिषु हन्तेवेत्युपपदनियमः। अत्रापि भूत इत्याश्रयणात् कालान्तरे धात्वन्तरादपि भवत्येव। वृत्रं जयति जेष्यति वा वृत्रजित् इति। भूते क्विबेवेति कालनियमः नान्यः प्रत्ययः "कर्मणि हनः" ( ३।२।८६ ) "कर्मण्यण्" ( ३।२।१ ) इत्यादि। उपपदान्तरे तु भूतेऽपि प्रत्ययान्तरं भवत्येव पितृघाती मातृघात इति। सोपपदस्य प्रत्ययो नियमेन व्यावर्त्यते तेन निष्ठा भवत्येव। वृत्रं हतवानिति। अत एव तृच् वृत्रस्य हन्तुः कुलिशमिति। कालसामान्यविवक्षायां भविष्यति। भूते एवेति प्रत्ययनियमः। अत्रापि ब्रह्मादिषु हन्तेरित्याश्रयणादुपपदान्तरेऽस्मादेषु च धात्वन्तरात्कालान्तरेऽपि भवत्येव।

---

१. करणत्वमिति नास्ति ख० पु०।
२. तदेतदित्यारभ्य-सत्रेत्यन्तो रेखाङ्कितो नास्ति क० पु०। तत्स्थाने तत्राग्निष्टोमोऽत्रेति पठते।
३. भाव्यत्वेनालम्बनात्तत्रेति क० पु०।

### ८३९. सुकर्मपापमन्त्रपुण्येषु कृञः [३।२।८९]

एषु कृञः क्विप् भूते । सुकृत् इत्यादि । उपपदान्तरेऽपि शास्त्रकृत् ।

### ८४०. सोमे सुञः [३।२।९०]

सोमसुत् । अत्र चतुर्विधो नियमः ।

### ८४१. अग्नौ चेः [३।२।९१]

अग्निचित् । नियमः प्राग्वत् ।

### ८४२. दृशेः क्वनिप् [३।२।९४]

कर्मणि दृशेः क्वनिबेव स्याद्भूते । पारदृश्वा ।

### ८४३. राजनि युधिकृञः [३।२।९५]

राजनि कर्मण्युपपदे युधिकृञोः क्वनिप् स्यात् भूते । अन्तर्भावितण्यर्थो युधिः । राजानं योधितवान् राजयुध्वा । राजकृत्वा ।

---

सुकर्म । उपपदान्तरेऽपीति । अत्रापि पूर्ववन्नियमः । [1]स च बहुलग्रहणानुवृत्तेर्धातुनियमं वर्जयित्वा कालोपपदप्रत्ययविषयस्त्रिविध एवाश्रीयते । तेनानपदान्तरेऽपि "क्विप् च" इति क्विब्भवतीत्यर्थः । तत्र कालनियमात् । कर्म कृतवानिति कर्मकार इत्यण् न भवति । उपपदनियमान्मन्त्रमधीतवानिति मन्त्राध्याय इत्यणेव न क्विप् प्रत्ययनियमान्मन्त्रं करोति करिष्यति वेति विवक्षायामणेव न क्विप् ।

सोमे सुञः । चतुर्विध इति । तत्र भूतकालस्य क्विपि नियतत्वात् सोमं सुतवान् सोमसाव इत्यण् न भवति । धातोः सोमे एवोपपदे नियतत्वात् सुरां सुतवान् सुरासाव इत्यणेव भवति । सोमस्य सुनोतावेव नियतत्वात् सोमं क्रीतवान् सोमक्रीः इति क्विप् न भवति । अणेव तु भवति । अग्नौ नियमः प्राग्वत् । चतुर्विध इत्यर्थः । तत्र भूतकालस्य क्विपि नियतत्वात् अग्निचाय इत्यण् न भवति । धातोश्चाग्नावुपपदे नियतत्वादिष्टकाचिदिति न भवति । अग्नेश्चिनोतावेव नियतत्वादग्निभृदिति न भवति । क्विप्रत्ययस्य भूत एवेति नियतत्वादग्निं चिनोति चेष्यति इत्यत्राभावः ।

दृशेः क्वनिप् । अन्येभ्योऽपि दृश्यते इत्येव सिद्धे नियमार्थमेतदित्याह—क्वनिबेव स्यादिति न मनिन्वनिपौ । न चाणादय इत्यर्थः । सोपपदस्यैवेति नियमेन निवर्तमाना निष्ठा भवत्येव । पारं दृष्टवानिति ।

राजनि युधिकृञः । ननु युधेरकर्मकत्वात् तस्य राजानमिति कर्म न युज्यते आह—अन्तर्भावितण्यर्थो युधिरिति ।

---

१. स चेति नास्ति क० पु० । २. धातुनियमात् कर्म कृतवानिति क० पु० ।

## ८४४. सहे च [३।२।९६]

सहयुध्वा । सहकृत्वा ।

## ८४५. सप्तम्यां जनेर्डः [३।२।९७]

अम्बुजम् । "तत्पुरुषे कृति" इति ङेरलुक् । सरसिजम् । बहुलोक्तेः सरोजम् ।

## ८४६. पञ्चम्यामजातौ [३।२।९८]

जातिवर्जे पञ्चम्यन्ते जनेर्डः स्यात् भूते । पद्मजः । अजातौ किम् ? अश्वाज्जातः ।

## ८४७. उपसर्गे च संज्ञायाम् [३।२।९९]

प्रजा ।

## ८४८. अन्येष्वपि दृश्यते [३।२।१०१]

अन्येष्वप्युपपदेषु जनेर्डो दृश्यते । अजः । द्विजः ।

## ८४९. सुयजोर्ङ्वनिप् [३।२।१०३]

आभ्यां ङ्वनिप् स्यात् भूते । सुत्वा । यज्वा ।

## ८५०. जीर्यतेरतृन् [३।२।१०४]

जरन् ।

---

पञ्चम्यामजातौ । पद्मज इति । पद्मशब्दः सहस्रावचनो न तु कमलजातिवाची ।

उपसर्गे च । प्रजेति । प्राणिजातस्यैव संज्ञा ।

अन्येष्वपि । अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धात्वन्तरात् कारकान्तरे च भवति [1]परितः खाता परिखा । अजातावित्युक्तेः जातावपि भवति । पद्मजो ब्रह्मा क्षत्रियजो धर्मः । अज इति । न जायते । द्विज इति । "मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः" इति ।

सुयजोः । सुत्वेति । [2]सुतवान् सुत्वेति। षुञ् अभिषवे । ङित्वान्न गुणः "ह्रस्वस्य पिति" (६।१।६१) इति तुक् । सौत्रत्वाद्दीर्घः । ननाप: जरन्निति । उगित्वात् "उगिदचाम्" (७।१।७) इति नुम् । "संयोगान्तस्य लोपः" (८।२।२३) नित्त्वादाद्युदात्तः ।

---

१. परितः खातेति नास्ति क० पु० ।

२. सुतवान् सुत्वेति नास्ति क० पु० ।

८५१. क्तक्तवतू निष्ठा [१।१।२६]

एतौ निष्ठासंज्ञौ स्तः ।

८५२. निष्ठा [३।२।१०२]

धातोर्निष्ठा स्याद्भूते । "तयोरेव कृत्यक्त"( ३।४।७० ) इति भाव-कर्मणोः क्तः । "कर्तरि कृत्" ( ३।४।६७ ) कर्तरि क्तवतुः । उकारावितौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ।

८५३. निष्ठायामण्यदर्थे [६।४।६०]

ण्यदर्थो भावकर्मणी । ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात् ।

८५४. क्षियो दीर्घात् [८।२।४६]

दीर्घात् क्षियो निष्ठातकारस्य नः स्यात् । क्षीणवान् । भावकर्मणोस्तु क्षितः कामो मया ।

---

निष्ठा । धातोर्निष्ठा स्यात् इति । धातोः स प्रत्ययो भवति यस्य जातस्य निष्ठेति संज्ञा भविष्यतीत्यर्थः । तेन सूत्रशाटकवद्भाविसंज्ञानान्निष्ठासंज्ञायां नेतरेतराश्रयः शङ्कनीयः । स्नातं मयेति । ष्णा शौचे । अकर्मकत्वाद्भावे क्तः । अनुक्तत्वात् कर्तरि तृतीया । स्तुत इति । ष्टुञ् स्तुतौ । कर्मणि विष्णो[1] उक्तत्वात् प्रथमा । विश्वं कृतवानिति । उगित्त्वान्नुम् । अत्वन्तत्वाद्दीर्घः । संयोगान्तलोपः । कर्तुः कृतोक्तत्वात् प्रथमा । "न लोकाव्यय" ( २।३।६९ ) इति निषेधात् न कर्मणि षष्ठी ।

निष्ठायामण्यदर्थे । भावकर्मणीति । "ऋहलोर्ण्यत्" ( ३।१।१२४ ) इति ण्यत् प्रत्यय[2] "तयोरेव" ( इति वचनात् भावकर्मणोर्विहित इति भावः ।

क्षियो दीर्घात् । क्षि क्षये । क्षि निवासगत्योः । द्वयोरपि ग्रहणम् । श्रुतः पञ्चम्या "तस्मादित्युत्तरस्य" ( १।१।६७ ) इति सप्तम्याः षष्ठी कल्प्यते इत्याह—निष्ठ इति एतत्तु क्तक्तवतोः कित्त्वमाश्रित्य व्याख्यातम् । ये तु "ग्लास्था[3]" इत्यत्रेत्वभया ग्स्नो गित्त्वमाश्रयन्ति, तत्रापीण्निषेधार्थं गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते इति वर्णयन्ति । तत्रापि सौत्रत्वाच्च निर्देशस्य । चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम् विसर्जनीयश्च कृत इति वदन्ति । भूतवतीति । "उगितश्च" ( ४।१।६ ) इति ङीप् । नुत इति । टुनु शब्दे । ऊर्णोतेरित्यादि । ऊर्णुञ् आच्छादने इत्यस्य णुवत् । णु स्तुतौ इत्यस्येव कार्यं न भवतीत्यर्थः । अनेन चैकाच्त्वमेवातिदिश्यते ।

---

१. विष्णौ इति क० पु० ।

२. एतत्प्रत्ययेरेवेति त इति वचनात् भावकर्मणोरेव ण्येव वहिभाव इति क० पु० ।

३. ग्ला इत्यत्रेत्वभयात् इति क० पु० ।

**८५५. श्र्युकः किति [७।२।११]**

श्रिञ एकाच उगन्ताच्च परस्य कितः इण्न स्यात्। श्रितः। श्रितवान्। भूतः। भूतवती। क्षुतः। "ऊर्णोतेर्णुवद्भावो वाच्यः" (वा०) तेनैकाच्त्वान्नेट्। उर्णुतः। वृतः।

**८५६. रदाभ्यां निष्ठातो नः पूर्वस्य च दः [८।२।४२]**

रेफदकाराभ्यां परस्य निष्ठातो नः स्यात् पूर्वस्य च दः। शॄ शीर्णः। भिन्नः।

**८५७. संयोगादेरातो धातोर्यण्वतः [८।२।४३]**

यण्संयोगादेरादन्तात् धातोः निष्ठातस्य नः स्यात्। द्राणः। ग्लानः।

**८५८. ल्वादिभ्यः [८।२।४४]**

एकविंशतेर्लूञादिभ्यो निष्ठातो नः स्यात्। लूनः। ज्या। "ग्रहिज्या" ( ६।१।१६ ) जीनः। "दुग्वो दीर्घश्च" ( वा० ) दूनः। गूनः। "पूञो

"वाच्य उर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्।
आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहात्" इति।

ए[1]काच्कार्याणामेव वार्तिके प्रयोजनत्वेन परिगणनात्। तेन चङ्गुत्तुनुधातूनां लिटं विनेड्वेत्यादि कार्यं नाशङ्क्यमिति सूचयन्नाह—तेनैकाच्त्वान्नेडिति। ऊर्णविष्यतीत्यादौ त्वनुदात्ताभावादेव "एकाच उपदेशे" ( ७।२।१० ) इतीण्निषेधो न भवति। वृत इति। वृङ् वृञ् वा। एषु सर्वेषु प्रकृत्याश्रयो निषेधो नास्तीति प्रकृत्याश्रयो निषेधोऽयमारभ्यते इत्युदाहरणभूयस्त्वेन दर्शितम्।

रदाभ्यां। रदाभ्यामित्यनेन तकारो विशिष्यते। न निष्ठा। तेन चरितमुदितमित्यत्र च न भवति। तकारस्येटा व्यवहितत्वादित्याशयेन व्याचष्टे—रेफदकाराभ्यां परस्य निष्ठातकारस्येति। पूर्वस्य च दः इति। निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य चेत्यर्थः। शीर्णं इति। "श्र्युकः किति" ( ७।२।११ ) इतीण्निषेधः। "ऋत इद्धातोः" ( ७।१।१०० ) इतीत्वम्। रपरः। तस्य नः। तकारेकार उच्चारणार्थः। तेन भिन्नमित्यत्र पूर्वनकारे चाकारश्रवणं न भवति। [2]कृतस्यापत्यं कार्तिरित्यत्र तु बहिरङ्गायाः वृद्धेरसिद्धत्वान्नत्वाभावः।

ल्वादिभ्यः। एकविंशतेरिति। क्र्यादिषु प्वादयो द्वाविंशतिः पठ्यन्तेऽत्र दूञं विहाय ल्वादयो ज्ञेया इत्यर्थः। जीन इति। बलवत्त्वादादौ संप्रसारणे कृते "संयोगा-

१. एकाच्कार्याणामेवेति क० पु०।
२. कृतस्यापत्यमित्यारभ्य—नत्वाभाव इत्यन्तो नास्ति क० पु०।

विनाशे" ( वा० ) पूनाः यवाः । पूतमन्यत् । "सिनोतेर्ग्रासकर्तृकस्य" ( वा० ) सिनो ग्रासः स्वयमेव ।

८५९. ओदितश्च [८।२।४५]

ओदितो धातोर्निष्ठातस्य नः स्यात् । भुजो । भुग्नः । ओहाक् प्रहीणः । स्वादय ओदितः । षूङ्, दूङ्, दीङ्, डीङ्, धीङ्, मीङ्, रीङ्, लीङ्, व्रीङ् नवैते ओदिताः स्युः । सूनः । सूनवान् । दूनः । ओदिन्मध्ये पाठबलान्नेट् । उड्डीनः ।

८६०. स्फायः स्फी संज्ञायाम् [६।१।२२]

स्फायः स्फी स्यान्निष्ठायाम् । स्फीतः । वेति केचित् । स्फातः ।

८६१. द्रवमूर्तिस्पर्शयोः श्यः [६।१।२४]

द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् ।

८६२. श्योऽस्पर्शे [८।२।४७]

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । "हलः" (६।४।२ ) इति दीर्घः । शीनं घृतम् । अस्पर्शे किम् ? शीतं जलम् । द्रवमूर्तिस्पर्शयोः किम् ? संश्यानो वृश्चिकः । शीतात् संकुचित इत्यर्थः ।

---

देरातः" इत्यस्याप्राप्तिः । "दुग्वोर्दीर्घश्च" ( वा० ) दु गतावित्यस्य ग्रहणम् । टुदु उपतापे इत्ययं तु सानुबन्धकत्वान्न गृह्यते । तथा च माघः प्रयुङ्क्ते 'मृदुतया दुतया" इति । 'गूनः इति । गु पुरीषोत्सर्गे । पूना यवाः । विनष्टा इत्यर्थः । अनेकार्थत्वाद्धातूनां पूञ् पवने । पून इत्यस्य विनाशेऽपि वृत्तिः सिनोतेर्ग्रास इति । षिञ् बन्धने । पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशाद् बन्धनेऽनुकूले भवति, तदा कर्मणः कर्तृत्वं विवक्ष्यते । ग्रासेति किम् ? सिता पाशे न सूकरो । कर्मकर्तृकस्येति किम् ? सितो ग्रासो देवदत्तेन ।

ओदितश्च । ओत् ओकारः इत्संज्ञकोऽस्य स ओदित् । प्रहाण इति । "कृत्यचः" ( ८।४।२९ ) इत्यनेन णत्वम् "घुमास्था" ( ६।४।६६ ) इतीत्वम् । स्वादयः इति धातुसूत्रम् । षूङ् प्राणिप्रसवे । दूङ् परितापे । दृङ् आदरे । दीङ् क्षये । डीङ् विहायसा गतौ । मीञ् हिंसायाम् । रीङ् स्रवणे । लीङ् श्लेषणे । व्रीङ् वरणे । ओदिन्मध्ये इति । यदि डीङः इट् स्यात्ततो धातोः परो निष्ठातकारो न सम्भवतीति न त्वार्थः पाठो व्यर्थः स्यादित्यर्थः ।

---

1. गून इति नास्ति क० पु० ।

८६३. प्रतेश्च [६।१।२५]

प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायां काठिन्ये स्पर्शे । प्रतिशीनः ।

८६४. विभाषाऽभ्यवपूर्वस्य [६।१।२६]

अभ्यवपूर्वस्य श्यो निष्ठायां वा संप्रसारणं स्यात् । अभिश्यानमभिशीनं घृतम् । अवश्यानोऽवशीनो वृश्चिकः । अभ्यवेत्युक्तेर्नेह । समवश्यानः ।

८६५. अञ्चोऽनपादाने [८।२।४८]

अञ्चो निष्ठातस्य नः स्यात्, न त्वपादाने । समक्नः । अनपादाने किम् ? उदक्तमुदकं कूपात् ।

८६६. दिवो विजिगीषायाम् [८।२।४९]

दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । "सनीड्वन्त" (७।२।४६) इति विकल्पितेट्कत्वात् ।

८६७. यस्य विभाषा [७।२।१५]

यस्य क्वचिद् विभाषया इड् विहितस्ततो निष्ठायामिण् न स्यात् । द्यूनः । विजिगीषायां तु द्यूतम् । ओव्रश्चू । "ग्रहिज्या" ( ६।१।१६ ) "स्कोः" ( ८।२।२९ ) इति सलोपः । नत्वम् । तस्यासिद्धत्वात् षत्वे कुत्वे च प्राप्ते "निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः" ( वा० ) इति झलोऽभावान्न षत्वम् । वृक्णः ।

---

विभाषाऽभ्यव । अभ्यवेत्युक्तेरिति । अभ्यवपूर्वस्येति पूर्वग्रहणादित्यर्थः । अभ्यवाभ्यामित्येव सिद्धे पूर्वग्रहणं यत्र समुदाये यौ पूर्वौ तत्र यथा स्यादिति । तेन धातोरवपूर्वत्वेऽपि समुदायस्यातथात्वान्न भवति ।

वृत्तिकारस्त्वाह—पूर्वग्रहणमवसंश्यान इत्यस्य निवृत्त्यर्थम् । समवश्यान इत्यत्र तु व्यवस्थितविभाषाविज्ञानान्न भवतीति ।

अञ्चोऽनपादाने । न त्वपादाने इति । अञ्चत्यर्थविषये चेदपादानं न भवतीत्यर्थः । समक्न इति । "यस्य विभाषा" ( ७।२।१५ ) इतीण्निषेधः । नलोपः । उदक्तमिति । उद्धृतमित्यर्थः । व्यक्तमित्येतत्तु अञ्जू व्यक्तावित्यस्य नाञ्चेः । तेन नत्वाभावः "च्छ्वोः शूडनुनासिके च" ( ६।४।१९ ) इत्यूठ् इत्यर्थः । द्यूतमिति । विजिगीषया हि तत्राक्षाः पात्यन्ते इति गम्यते विजिगीषा । नत्वमिति । "ओदितश्च" ( ८।२।४५ ) तस्यासिद्धत्वादिति । "पूर्वत्रासिद्धम्" ( ८।२।१) इत्यनेन । न षत्वमिति । षत्वं प्रत्येव सिद्धत्ववचनात् । कुत्वं तु स्यादेवेत्येतत्प्रति नत्वस्यासिद्धत्वात् झल्परत्वात् ।

## ८६८. निर्वाणोऽवाते [८।२।५०]

अयं निष्ठायां निपात्यते, न तु वाते वाच्ये। निर्वाणोऽग्निः मुनिर्वा। वाते तु निर्वातो वातः।

## ८६९. शुषः कः [८।२।५१]

शुषो निष्ठातस्य कः स्यात्। शुष्कः।

## ८७०. पचो वः [८।२।५२]

पचेर्निष्ठातस्य वः स्यात्। पक्वः।

## ८७१. क्षायो मः [८।२।५३]

क्षायः परस्य निष्ठातस्य मः स्यात्। क्षामः। क्षामवान्।

## ८७२. प्रस्त्योऽन्यतरस्याम् [८।२।५४]

प्रपूर्वात् स्त्यतेर्निष्ठातस्य मो वा स्यात्।

## ८७३. स्त्यः प्रपूर्वस्य [६।१।२३]

प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम्। प्रस्तीमः। मत्वाभावपक्षे यण्वत इत्यस्य संप्रसारणं प्रत्यसिद्धत्वात् नत्वाभावः। प्रस्तीतः। प्रात् किम्? स्त्यानः।

---

निर्वाणोऽवाते। निर्पूर्वात् वा गतिगन्धनयोरित्यस्मान्निष्ठातो नत्वं निपात्यते इत्यर्थः, न तु वाते वाच्ये इति। वातश्चेत्कर्ता न भवतीत्यर्थः। तेन निर्वाणो दीपो वातेनेत्यत्र न निषेधः। हेतौ करणे वा तृतीया। भावे प्रत्यये तु भवति। वातम्, वातेन। वार्त्तिकमते तु भावे प्रतिषेधो न भवति, निर्वाणं वातेनेत्येव भवति। इदमेवाचार्यस्याप्यभिप्रेतं यदाह—वाच्य इति।

क्षायो मः। क्षाम इति। क्षै क्षये। "आदेच उपदेशे" (६।१।४५) इत्यात्वम्।

स्त्यः प्रपूर्वस्य। यण्वत इति। अनेन "संयोगादेरातो" (८।२।४३) इति सूत्रमुपलक्ष्यते। तस्य चासिद्धत्वात् आदौ संप्रसारणे कृते यण्वत्ता विहन्येति न नत्वम्। स्त्यानः इति। "संयोगादेः" (८।२।४३) इति नत्वम्। अत्रापि पूर्वग्रहणं प्रपूर्वत्वं समुदायस्य यथा विज्ञायेतेति तेन प्रसंस्त्यान इत्यत्रापि भवति।

८७४. अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः [८।२।५५]

एते निष्ठान्ता निपात्यन्ते, न चेत् प्रादेः परे स्युः । त्रिफला । फुल्लः । क्षीबो मत्तः । कृशस्तनुः । परिकृशश्च । उल्लाघो नीरोगः । अनुपसर्गात् किम् ?

८७५. आदितश्च [७।२।१६]

आकारेतो निष्ठाया इण् न स्यात् ।

८७६. ति च [७।४।८९]

तादौ किति परे चरफलोरत उत्स्यात् । प्रफुल्लः । प्रक्षीबितः । प्रकृशितः । प्रलाघितः । "उत्फुल्लसंफुल्लयोरुपसंख्यानम्" ( वा० ) ।

---

अनुपसर्गादिति । न चेत् प्रादेरिति । एतेनोपसर्गग्रहणं प्रादिमात्रोपलक्षणमिति इति वार्तिककारस्याशयं दर्शयति—अन्यथा परिकृशश्चेति नारभेत । परिगतकृश इत्यर्थः । परेः क्रियान्तरयोगेनानुपसर्गादित्येव सिद्धेः । "यत्क्रियायुक्ताः प्रादयस्तं प्रति" इति वचनात् ।

वस्तुतस्तु उपसर्गग्रहणस्योपचारे कारणाभावादुक्तरीत्या 'परिकृशश्च' ( वा० ) इति नारभ्यमिति स्थितम् । यदा तु परिः कृशि विशिनष्टि तदोपसर्गत्वेऽपि यथा स्यादिति तदारभ्यम्, यद्यभिधानमस्तीत्यन्ये ।

फुल्ल इति । त्रिफला विशरणे । "आदितश्च "(७।२।१६ ) इति नेट् । "ति च" ( ७।४।८९) इत्युत्वम् । लत्वमात्रं तु निपात्यते इति स्थितिः । क्तवत्वन्तस्याप्येतन्निपातनमिष्यते, फुल्लग्रहणस्य सूत्रे निष्ठैकदेशक्तान्तानुकरणपरत्वात् । तेन फुल्लवानित्यपि । क्षीबादिषु तु नैतदिष्यते । क्षीब इत्यादि । क्षीब मदे । कृशतनुत्वे साधु यक्तो । उल्लूर्वः । एषां निष्ठायास्तकारस्य लोपः । तस्यासिद्धत्वात् प्राप्तस्य वलादिलक्षणस्येटोऽभावश्च निपात्यते ।

यद्यपि फुल्ल विकसनेऽस्य उल्लाघेश्च पचाद्यचि इतरयोश्च इगुपधालक्षणे के च फुल्लादयः सिद्धयन्ति, तथापि "निष्ठा च द्वयजनात्" ( ६।१।२०५ ) इत्यादि—कार्यसिद्धये क्षीबिताद्यनिष्टनिवृत्तये फुल्लवानिति सिद्धये निपातनाश्रयणम् ।

आदितश्च ।चकारोऽनुक्तसमुच्चयार्थः । [1]तेनाश्वस्तो वातः इत्यपि सिद्धम् यद्यप्युत्वेऽभावो फुल्ल इत्यत्रैव प्रथमोपस्थितत्वादपेक्षितत्वाद्दर्शयितुं युक्तौ, तथापि लत्वार्थं निपातनेनैवानयोरपि निपातयितुं सुशक्यत्वात् तदर्थमनयोरारम्भोऽनर्थक इति शङ्कां निरसितु निपातनाविषये प्रयोजनं दर्शितम् । प्रसङ्गात्तु फुल्ल इत्यत्रा[2]प्युपयोक्ष्यते' इति हृदयम् ।

---

१. तेनाश्विस्तो वात इति क० पु० ।   २. उपयोज्यते इति क० पु० ।

८७७. नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् [८।२।५६]

एभ्यो निष्ठातस्य नो वा स्यात्। नुन्नः। नुत्तः। विद विचारणे। विन्नः। वित्तः। उन्दी क्लेदने।

८७८. श्वीदितो निष्ठायाम् [७।२।१४]

श्वयतेरीदितश्च निष्ठायामिण् न स्यात्। उन्नः। उत्तः। त्राणः। त्रातः। घ्राणः। घ्रातः। ह्रीणः। ह्रीतः। वेत्तेस्तु विदितः। विद्यतेस्तु विन्नः।

८७९. न ध्याख्यापॄमूर्छिमदाम् [८।२।५७]

एभ्यो निष्ठातस्य नो न स्यात्। ध्यातः। ख्यातः। पूर्त्तः। राल्लोपः। मूर्त्तः। मत्तः।

---

न च नलोपो निपात्यते, उत्त्वमिडभावश्चेति प्राचो ग्रन्थादुभावपि निपातितो इति भ्रमितव्यम् लक्षणान्तरसिद्धत्वेन तदयोगात्। न च लत्वमात्रार्थत्वे निपातनाश्रयणमनर्थकं लत्वर्थत्वात्। अन्यथा "शुषः कः" ( ८।२।५१ ) "पचो वः" ( ८।२।५२ ) इतिवत्। फलेर्लः इति सूत्रणे मात्राप्रतीतिगौरवे स्याताम्। "अवयवव्युत्पादनात् समुदायव्युत्पादन लघीय इति। प्रफुल्त इति। कथं तर्हि "प्रफुल्लराजीवमिवाङ्कमध्ये" इति। प्रशब्दस्य फुल्लशब्देन समासे भविष्यति। उत्फुल्लसफुल्लयोरिति। यद्यपि प्रफुल्ल इतिवत् फुल्लेरेव पचाद्यजन्तत्वेन वा सिद्धम्। एतत्तथापि उत्फुल्ल संफुल्लः इति प्रयोगनिवृत्त्यर्थं वचनम्।

नुदविद। "रदाभ्याम्" ( ८।२।४२ ) "संयोगादेरातो" ( ८।२।४३ ) इति नित्ये प्राप्ते ह्री इत्यस्याप्राप्ते उभयत्र विभाषेयम्। नुन्न इति नुद प्रेरणे। विद विचारणे। उन्दिना रौधादिकेन साहचर्यादस्यैव भवति, न विद सत्तायामिति दैवादिकस्य। विदॢ लाभे इत्यस्य तु "वित्तो भोगप्रत्यययोः" इति वक्ष्यते। विद ज्ञाने इत्यस्य तु सेट्कत्वात् धातोः परो निष्ठातो न सम्भवतीत्यग्रहणमिति भावः। नुन्नः। नुत्त इति। "अनिदिताम्" ( ६।४।२४ ) इति नलोपः।

यदुक्तं तुदादिसूत्रे विद विचारणे इत्यस्यैव ग्रहणमिति तस्य व्यावर्त्यं दर्शयति—वेत्तेस्त्वित्यादिना। तदुक्तम् भाष्ये—

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते।
वित्ते विन्तश्च विन्नश्च भोगे वित्तश्च विन्दते. ॥ इति ॥

न ध्याख्या। ध्यै चिन्तायाम्। ख्या प्रकथने। पॄ पालनपूरणयोः। मूर्छा मोहसमुच्छ्राययोः। मदी हर्षे। पूर्त्त इति। "उगुकः किति" ( ७।२।११ ) इतीण्

८८०. वित्तो भोगप्रत्यययोः [८।२।५८]

विन्दतेर्निष्ठान्तस्य निपातोऽयम् । भोगे प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् ? विन्नः ।

८८१. भित्तं शकलम् [८।२।५९]

भिन्नमन्यत् ।

८८२. ऋणमाधमर्ण्ये [८।२।६०]

एतन्निपात्यमाधमर्ण्यव्यवहारे । ऋतमन्यत् ।

---

निषेधः । मूर्त इति । "आदितश्च" ( ७।२।१६ ) मत्त इति । "श्वीदितः ( ७।२।१४ ) भोगे प्रत्यये चार्थे इति वित्तं धनमितिवद् भुज्यते । प्रतीयते इति प्रत्ययः कर्मसाधनावेतौ इति व्याचष्टे ।

वित्तो भोग । विन्दतेरिति । विद्लृ लाभे इत्यस्य ज्ञानार्थादिदा भाव्यम् । सत्ताविचारणयोरपि न भोगप्रत्यययोर्वृत्तिः सम्भवतीति भाव । 'भुज्यते इति भोगः । "विभाषा गमहनविदविशाम्" ( ७।२।६८ ) इति तौदादिकस्य वसौ विकल्प्यते[1] इति वेट्कत्वात् "यस्य विभाषा" ( ७।२।१५ ) इतीण्निषेधः ।

भित्त । भिदे निष्ठायां नत्वाभावो निपात्यते, शकलं च पर्यायतयोच्यते । तथा चामरः 'भित्तं शकलखण्डे वा" इति । जातिशब्दो हि भित्त शब्द क्रिया तु केवलं व्युत्पत्त्यर्थमुपादीयते । गच्छतीति गौरितिवत् । [2]न त्वत्र क्रिया विवक्ष्यते । अन्यथा भिन्नं भित्तमिति सह प्रयोगो न स्यात् । भिन्नमिति विदीर्णमित्यर्थः ।

ऋणमाधमर्ण्ये । अधमः ऋणे अधमर्णः । अस्मादेव निपातनात् सप्तम्यन्तोत्तरपदसमासः । तस्य भाव आधमर्ण्यं तेन [3]चाधमर्ण्योपलक्षितो व्यवहार उपलक्ष्यते, तेनोत्तमर्णे इत्यपि सिद्ध्यतीत्याचष्टे—अधमर्णव्यवहार इति । ऋणग्रहणं कालापेक्षया । कालान्तरदेयेन वस्तुना परिवर्तितरूपो व्यवहार [4]इह विवक्षितः । स चोभयोरपि दातृगृहीत्रोः सम्भवो भवति इत्युभयोरपि प्रयोगो न विरुध्यते लक्षणायां लिङ्गम् "धारेरुत्तमर्णः" ( १।४।३५ ) इति निर्देशः ।

---

१. लोपमिति क० पु० ।
२. विकल्पते इति ख० पु० ।
३. न च अपि इति क० पु० ।
४. उपलक्षितो व्यवहारोपलक्ष्यते इति क० पु० ।
५. इति इति क० पु० ।

८८३. इण् निष्ठायाम् [७।२।४०]

निरः कुषो निष्ठाया इण् न स्यात्। निष्कुषितः।

८८४. वसतिक्षुधोरिट् [७।२।५२]

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात्। उषितः। क्षुधितः।

८८५. अञ्चेः पूजायाम् [७।२।५३]

पूजार्थादञ्चतेः क्त्वानिष्ठयोरिट् स्यात्। अञ्चितः। गतौ तु अक्तः।

८८६. लुभोऽविमोहने [७।२।५४]

लुभः क्त्वानिष्ठयोरिट् स्यात्, न तु गार्ध्ये। लुभितः। गार्ध्ये तु लुब्धः।

८८७. क्लिशः क्त्वानिष्ठयोः [७।२।५०]

क्लिशः परयोरेतयोरिड् वा स्यात्। क्लिशितः। क्लिष्टः। "वस् जप् श्वासश्वसो निष्ठाया इड् वेति केचित्। वमितः। "अनुनासिकस्य क्विझ्" (६।४।१५) इति दीर्घः। वान्तः। जपितः। जप्तः। विश्वसितः। विश्वस्तः। आश्वसितः। आश्वस्तः।

---

इण् निष्ठायाम्। "निरः कुषः" (७।२।४६) इति विकल्पितेट्कत्वाद् "यस्य विभाषा" (७।२।१५) इतीडनिषेधे प्राप्ते पुनर्विधिः।

वसतिक्षुधोः। उषित इति। यजादित्वात् सम्प्रसारणम्। "शासिवसि" (८।३।६०) इति षत्वम्। क्षुधित इति कित्त्वान्न गुणः। वसतीति शप्निर्देशः स्पष्टार्थः। वसतेः सेट्कत्वाद्भवितव्यमेवेटा।

अञ्चेः पूजायाम्। उदित्वात् क्त्वायां तु "यस्य विभाषा" (७।२।१५) इति नित्ये प्राप्ते वचनम्। अञ्चित इति। "नाञ्चेः पूजायाम्" (६।४।३०) इति नलोपाभावः। अक्त इति "अनिदिताम्" (६।४।२४) इति न लोपः।

लुभोऽविमो। "तीषसह" (७।२।४८) इति क्त्वायां विकल्पे निष्ठायां निषेधे च प्राप्ते वचनम्।

क्लिशः क्त्वानिष्ठयोः। क्लिश उपतापे सेट्। क्लिश बाधने इत्युभयोः सामान्यग्रहणम्। क्लिश उपतापे इत्यस्योभयत्र नित्यं प्राप्तं बाधित्वा क्लिश् विबाधने इत्यस्य तूदित्वात् क्त्वायां विकल्पे सिद्धेऽपि निष्ठाया "यस्य विभाषा" (७।२।१५) इति निषेधे प्राप्ते वचनम्। वम्जपोव्यासेत्यादि। टुवम् उद्गिरणे। जप जल्पव्यक्तायां वाचि विपूर्वः आङ्पूर्वः। श्वस प्राणने।

८८८. पूङश्च [७।२।५१]

पूङः क्त्वानिष्ठयोरिड् वा स्यात्।

८८९. पूङः क्त्वा च [१।२।२२]

पूङः क्त्वानिष्ठा च सेट् किन्न स्यात्। पवितः। पूतः।

८९०. निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः [१।२।१९]

एभ्यः सेड्निष्ठा किन्न स्यात्। शयितः। "आदिकर्मणि निष्ठा वक्तव्या" (वा०)।

८९१. आदिकर्मणि क्तः कर्तरि च [३।४।७१]

आदिकर्मणि यः क्तः स कर्तरि स्यात् चाद्भावकर्मणोः।

८९२. विभाषा भावादिकर्मणोः [७।२।१७]

भावे आदिकर्मणि च आदितो निष्ठाया इड् वा स्यात्। प्रस्वेदितश्चैत्रः। स्वेदितं तेन। मेदितम्। क्ष्वेदितम्। धर्षितम्। पक्षे प्रस्विन्नः। स्विन्नं तेनेत्यादि।

---

पूङश्च। "श्र्युकः किति" (७।२।११) इति निषेधे प्राप्ते वचनम्। क्त्वाग्रहणमुत्तरार्थम्, "न क्त्वा सेट्" (१।२।१८) इत्येव सिद्धेः।

निष्ठा शीङ्। शीङ् स्वप्ने। अनुबन्धनिर्देशो यङ्लुग्व्यावृत्त्यर्थः। शेशियितः। शेशियितवान् इति।[1] ञिष्विदा गात्रप्रक्षरणे। ञिमिदा स्नेहने। ञिक्ष्विदा स्नेहनमोचनयोरिति दिवादिः। न तु क्ष्विदा अव्यक्ते शब्दे इति भ्वादिः। मिदि साहचर्यात्। ञिधृषा प्रागल्भ्ये।

स्विदादीनां "आदितश्च" (७।२।१६) इति निषेधात् सेट् निष्ठा न संभवति इत्यादिकर्मणि निष्ठामुदाहरति—आदिकर्मणीति।

कर्म क्रिया सा च फलोद्देशप्रवृत्तानेकक्षणसमूहरूपा तस्या आदिक्षणः आदिकर्म। आद्यक्षणे प्रवृत्ते धात्वर्थभूता क्रिया न प्रवृत्तेति वचनम्। अथवा न्यायसिद्धोऽयमर्थः। आदिक्षणमात्रे क्रियात्वारोपात्। तदुक्तम्—

समूहः स तथाभूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदे काले भेदस्य संभवः॥ इति।

---

१. शेशियितः शेशियितवान् इति नास्ति क० पु०।

८९३. मृषस्तितिक्षायाम् [१।२।२०]

क्षमार्थान्मृषेः सेड्निष्ठा किन्न स्यात्। मर्षितः। तितिक्षायां किम्? अपमृषितं वाक्यम्।

८९४. उदुपधाद्भावादिकर्मणोरन्यतरस्याम् [१।२।२१]

उकारोपधात् परा भावादिकर्मणोः सेड्निष्ठा किन्न स्याद्वा। द्योतितम्। द्युतितं तेन। प्रद्योतितः, प्रद्युतितः। भ्वादीनामिष्टिः। नेह गुधितम्।

८९५. निष्ठायां सेटि [६।४।५२]

सेटि निष्ठायां परतो णेर्लोपः स्यात्। भावितः। भावितवान्। "श्वीदितः" (७।२।१४) इति नेट्। संप्रसारणम्। शूनः दीप्तः। गुहू गूढः। यत्तु उदितो वेति विकल्पितट्त्वात् निष्ठायां नेट्। वतः। ततः। परेः सति वेट्कत्वादिडभावे प्राप्ते "क्षितातोतपतित" इति निपातनाद् इट्। पतितः। अनेकाच्त्वादिट्। दरिद्रितः। "जाग्रोऽविचिण्णल्" (७।३।८५) इति गुणः। जागरितः। आदिकर्मणि निष्ठायां शकेरनिड् वेति सौनागाः। शक्तः शकितोऽर्चितुं शिवस्तेन।

---

प्रस्वेदितश्चैत्र इति। प्रस्वेदितुमारब्ध इत्यर्थः। कर्तर्ययं क्त इति दर्शयितुं पुनरुदाहृतम्। प्रशब्द आदिकर्मद्योतनार्थः।

स्वेदितमित्यादि। भावे क्तः ल्यङ् नपुंसके भावे क्ते इति। इडभाव इत्यर्थः।

प्रस्विन्न इति। कित्त्वान्न गुणः। "रदाभ्याम्" इति नत्वम्।

मृषस्तितिक्षायाम्। अविस्पष्टमित्यर्थः।

तितिक्षाग्रहणमेव ज्ञापकमनेकार्था धातव इति।

उदुपधाद्भावादिकर्मणोः। गुधितमिति। गुध परिवेष्टने दिवादिः।

निष्ठायां सेटि। सेटीति किम्? अनिटि मा भूत्। ननु तत्रापि भवितव्यम् "णेरनिटि" (६।४।५१) इति। एवन्तर्हि कालावधारणार्थम्। इडागमे कृत एव णिलोपो यथा स्यात्। अकृते मा भूत्। अन्यथा कारितमित्यादौ कृताकृतप्रसङ्गित्वात् पूर्वं "णेरनिटीति" (६।४।५१) णिलोपे कृते 'एकाच' (७।२।१०) इतीण् न स्यात्। संप्रसारणमिति। "वचिस्वपि" (६।१।१५) इत्यनेन।

८९६. क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु [७।२।१८]

मन्थादिष्वर्थेषु क्षुब्धादयोऽष्टौ क्तान्ता निपात्यन्ते । फाण्टमनायासः कषायभेदः । अन्यत्र क्षुभितम् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । फाणितम् । बाहितम् ।

---

गून इति । टुओश्वि गतिवृद्ध्योः । "हलः" ( ६।४।२ ) इति दीर्घः । "ओदितश्च" ( ८।२।४५ ) इति नत्वम् । ('दीप्त' इति । दीपी दीप्तौ । ईदित्वान्नेट् । गूढ इति । "यस्य विभाषा" ( ७।२।१५ ) इति नेट् । ढत्वधत्वष्टुत्वढलोपदीर्घाः )। वनु इत्यादि । वनु याचने । तनु विस्तारे । मनु अवबोधने । सर्वे उदितः । 'अनुदात्तोपदेश" ( ६।४।३७ ) इति नलोपः । नत इति । णम प्रह्वत्वे शब्दे च । 'एकाच उपदेशे" ( ७।२।१० ) इतीडभावः'। सनि वेट्कत्वादिति । "तनिपतिदरिद्रातिभ्यः सनो वा इड्वा वचनात्" ( वा० ) इडभावे प्राप्ते । "यस्य विभाषा" ( ७।२।१५ ) इत्यनेन । पतित इति । "एकाच उपदेशे" ( ७।२।१० ) इत्युक्तेः अकृत्वाइ यस्याव-शाश्ति निषेधः । सनि वेट्कत्वे न "यस्य विभाषा" (७।२।१५ ) इति प्रत्ययाश्रयोऽपि न भवति तत्राप्येकाच इत्यनुवृत्तेरिति भावः । दरिद्रितः इति । आतो लोपः । सौनागा इति । सुनागस्याचार्यस्य शिष्याः । शक इति । शकितोऽसि वक्तुमीश्वरस्तेन इति । कर्मणि क्तः ।

यद्यपि शकिः केवलोऽकर्मकः, तथापि तुमुन्नन्तवाच्यक्रियाविषयत्वात् सकर्मको भवति । तथा च कर्मणि लादयो दृश्यन्ते । अयं योगः शक्योऽकर्तुम् इति हरदत्तः ।

क्षुब्धस्वान्त । मन्थादिष्वर्थेषु इति समुदायेन चेन्मन्थादयोऽभिधीयन्ते इत्यर्थः । तेन मन्थादीनां [2]धात्वर्थं प्रति साधनत्वेनोपादाने' न भवति । क्षुभितं मन्थेनेति । द्रवद्रव्यसंयुक्ताः सक्तवो मन्थः । मन्थदण्ड इत्यपरे । तथा च माघः "शोभैव मन्दरक्षुब्ध-क्षुभिताम्भोधिवर्णनेति"[3] । क्षुब्धा गिरिनदीति क्षुभ्यमानात् । क्षुब्ध इति । क्षुभ संचलने । क्ते इडभावो निपात्यते । स्वन ध्वन शब्दे । इडभावः । "अनुनासिकस्य" ( ६।४।१५ ) इति दीर्घः । लगे सङ्गे । क्ते इडभावो निपातनात् । निष्ठानत्वमपि निपातनात् । म्लेच्छ अव्यक्ते शब्दे । अनेत्वमपि निपातनात् । "व्रश्च" ( ८।२।३६ ) इति षत्वे ष्टुत्वम् ।

---

१. इत आरभ्य—दीर्घाः इत्यन्तो (     ) रेखाङ्कितो नास्ति क० पु० ॥
२. साधनत्वेनोपादानेनेति क० पु० ।
३. क्षुभिताम्भोधिवर्णना इति क० पु० ।

## ८९७. धृषिशसी वैयात्ये [७।२।१९]

एतौ निष्ठायामविनये अनिटौ स्तः । धृष्टः । विशस्तः ।

## ८९८. दृढः स्थूलबलयोः [७।२।२०]

स्थूले बलवति चायं निपातः । दृहितोऽन्यः ।

## ८९९. प्रभौ परिवृढः [७।२।२१]

परिवृंहितोऽन्यः ।

---

रेभृ शब्दे । इत्व प्राग्वत् । फण गतौ । दीर्घ. । फाण्टमनायासः । कषायभेद इति । अल्पायाससाध्यः कषायविशेषोऽनायासशब्देन लक्ष्यते इत्यर्थ । रसः । कल्कः । शृतं क्षीरम् । फाण्टमिति पञ्चाप्येते कषायाः । तत्र रसः स्वरसः । कल्क. पिष्ट' । शृतं क्वाथः । शृतं नाम 'पित्तुराणमौषधजालम् उदके प्रक्षिप्य रात्रावधिवासितमुदकं यत् प्रातः पीयते तदेवोदके प्रक्षिप्य मधुसंयुक्त कृत्वा यत्पीयते तत्फाण्टमित्यर्थः । बाढमिति । 'बाहुप्रयत्ने । इडभावे ढत्वादि । अन्यत्रेति । मन्थादेरवाचकत्वे इत्यर्थ. ।

धृषिशसी । ञिधृषा प्रागल्भ्ये । शसु हिंसायाम् । अनयोः आदितश्च" "यस्य विभाषा" इति चेट्प्रतिषेधे सिद्धेऽपि वचनं नियमार्थम् । अनयोर्वैयात्ये एवानिट्त्वं नान्यत्रे ति विरुद्ध जातेः विजातिः तस्या भावो वैयात्यम् । ततोऽन्यत्र धर्षितः 'विशसित इत्येव भवति ।

'अथ धृषेः "विभाषा भावादिकर्मणोः" इति विकल्पे प्राप्ते नित्यार्थ कस्मान्न भवति ? अत्र वृत्तिः—भावादिकर्मणोरपि वैजात्ये न 'धृषिरस्तीति । एवं चास्यादित्वे प्रयोजनं चिन्त्यमिति हरदत्तः ।

माधवस्त्वाह—वैयात्यादन्यत्र भावकर्मणोर्विकल्प एव भवति । धृष्टम् । धर्षितम् । प्रधृष्टः, प्रधर्षित इति ।

दृढः स्थूलबलयोः । बलमस्यास्तीति बल: "अर्श आदिभ्योऽच्" तदाह्–बलवतीति । स्थूलो मांसलो निर्बलोऽपि । बलवान् कृशोऽपि दृढ इति । दृहि वृद्धौ इति 'भ्वादिः पठ्यते । इदित्वान्नुम्, तस्य क्तप्रत्यये इडभावः । हकारलोपस्तकारस्य ढत्वं च निपात्यते । दृंहितोऽन्यः इति । स्थूलबलाभ्यामन्यत्रेत्यर्थः' । एतच्च वार्तिक-मतेनोदाहृतम् ।

---

१. पिष्टमिति क० पु० ।
२. प्रापसे इति क० पु० ।
३. सिसित इति क० पु० ।
४. अथेति नास्ति क० पु० ।
५. वृतिरस्तीति क० पु० ।
६. ह्वाविरिति क० पु० ।
७. भ्यामिति नास्ति क० पु० ।

९००. कृच्छ्रगहनयोः कषः [७।२।२२]

कषो निष्ठायामिण् न स्यात् कृच्छ्रगहनयोः । कष्टोऽग्निः । कष्टं वनम् । कषितमन्यत् ।

९०१. घुषिरविशब्दने [७।२।२३]

घुषेर्निष्ठायामिण् न स्यात् । घुष्टा रज्जुः । अविशब्दने किम् ? घुषितं वाक्यम् ।

९०२. अर्देः संनिविभ्यश्च [७।२।२४]

एतत्पूर्वादर्देर्निष्ठायामिण् न स्यात् । समर्णः । न्यर्णः । अर्दितोऽन्यः ।

---

भाष्यकारस्तु दृह दृहि वृद्धौ इति धातुद्वयं पठति स्म । तत्र "अनिदितोऽप्येतन्निपातनं नलोपवर्जम् । प्रत्युदाहरणं ( दृहित[1] इति द्रष्टव्यम् ।

ननु "होढः" (८।२।३१) इति ढत्व-धत्व-ष्टुत्वढलोपेषु दृढ इति सिद्धं तत्किं हलोपनिपातनेन ? उच्यते—द्रढिमेत्यत्र "पूर्वत्रासिद्धम्" ( ८।२।१ ) इत्यसिद्धत्वात् ) ढलोपस्य "र ऋतो हलादेर्लघोः" ( ६।४।१६१ ) इति रभावो न स्यात् । परिदृढय्यागत इति । "ल्यपि लघुपूर्वात्" ( ६।४।५६ ) इत्ययादेशो न स्यात् । परिवृढी कन्येति गुरूपोत्तमलक्षणः ष्यङ् स्यात् । अतोऽसिद्धत्वनिवृत्तये हलोपो निपात्यते ।

प्रभौ परिवृढः । वृहि वृद्धावस्यापि क्ते पूर्ववन्निपातनं हलोपे प्रयोजनं च । परिवृंहितोऽन्यः । भाष्यकारस्तु वृह वृद्धाविति प्रकृत्यन्तरमपि मन्यते । तस्याप्येतन्निपातनं नलोपवर्जमिच्छति । तन्मते वृहितमिति निरनुषङ्गं प्रत्युदाहार्यम् ।

कृच्छ्रगहनोः । दुःखं तत्कारणं च लक्षणया कृच्छ्रशब्देन गृह्यते । कष्टोऽग्निरिति । कष हिंसार्थः । अग्निरिह चीयमानो विवक्षितः । स हि कष्टो भवति । चयनकरणस्य[2] दुर्ज्ञानत्वात् । कष्टं वनमिति । दुष्प्रवेशमित्यर्थः ।

घुषिरवि । घुषिर् शब्दार्थ इति भ्वादिः । घुषिर विशब्दने इति चुरादिः । द्वयोः सामान्येन ग्रहणम् । तथा च विशब्दने इति निषेधः क्रियते ।

ननु विशब्देनार्थाच्चुरादिणिचा भाव्यम्, ततश्च तेन व्यवधानात् घुषे परा निष्ठा नास्तीति कथमिट्निषेधप्रसङ्गः ? एवं तर्हि विशब्दन इति निषेध एव ज्ञापको विशब्दनार्थस्य चुरादेर्णिजनित्य इति । तेन "महिपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः" इत्युपपन्नम् । तथा घुषितं वाक्यमित्यपि । सति हि णिचि घोषितमिति स्यात् । घुषितशब्देन प्रकटीकृतमित्यर्थः ।

---

१. दृंहित इत्यारभ्य—प्रसिद्धत्वादित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

२. परिदृढ इति । एतन्निपातन [illegible] यथा गत इति क० पु० । ३. प्रकारस्येति ख० पु० ।

९०३. अभेश्चाविदूर्ये [७।२।२५]

अभिपूर्वादर्देर्निष्ठायामिण् न स्यात् सामीप्ये। अभ्यर्णम्। अभ्यर्दितमन्यत्।

९०४. णेरध्ययने वृत्तम् [७।२।२६]

ण्यन्ताद्वर्ततेर्वृत्तमिति निपात्यतेऽध्ययनेऽर्थे। वृत्तं छन्दश्छात्रेण। वर्तितमन्यत्।

९०५. शृतं पाके [६।१।२७]

श्रा इत्यस्य शृभावो निपात्यते निष्ठायां क्षीरहविषोः पाके। शृतं क्षीरम्। श्राणमन्यत्।

---

अभेश्चाविदूर्ये। विशेषेण दूरं विदूरं ततोऽन्यदविदूरं तत्पुनर्यदासन्नं नाविदूरं वा तदुभयं विवक्षितम्।

एवं च सामीप्य इति व्याख्यानमुपलक्षणं वेदितव्यं नातिदूरस्यापि। अन्यथा लाघवाय सामीप्य इत्येव वदेत्। अविदूरस्य भाव आविदूर्यं ब्राह्मणादित्वात् ष्यञ्। अस्मादेव निर्देशात् "नञ् पूर्वात् तत्पुरुषात्" (५।१।१२१) निषेधोऽस्य न भवति।

णेरध्ययने। निपात्यते इति। अध्ययनेऽर्थे इति। अधीयते इत्यध्ययनम्। बहुलवचनात् कर्मणि ल्युट्। एवं च कर्मार्थे क्त इत्युक्तं भवति। तथा चोदाहरति। वृत्तं छन्दश्छात्रेण। संपादितमधीतमिति यावत्।

यद्यपि वृत्तेरन्तर्भावितण्यर्थस्य क्त्वायां विकल्पितेट्त्वात् "यस्य विभाषा" (७।२।१५) इतीट्निषेधाद् वृत्तमिति सिद्ध्यति, तथापि यदा णिचैवार्थोऽभिधीयते, तदा वर्तितमित्यध्ययने मा भूदित्येवमर्थमिदम्। ये तु वर्तितं छन्दः छात्रेत्यपोच्छन्ति, तेषामेतदनर्थकम्। वर्तितमन्यदपि रज्ज्वादिकम्।

शृतमिति। श्रा इत्यस्येति। श्रा पाके इत्यदादौ पठ्यते। चुरादावपि। घटादिष्वपि पठ्यते मित्त्वार्थम्[1]। श्रै पाके इति च घटादौ। तस्यापि कृतात्वस्येह ग्रहणम्। निपातनसामर्थ्याच्च लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयते इत्याहुः।

एवं च कृत्वा ण्यन्ततयापि श्रातेरेतन्निपातनं भवति। शृतं चोरं देवदत्तेनेति। अत एव प्रकृतं संप्रसारणमेव न विहितम्। श्रपेरपि शृतमेव यथा स्यादिति। पाक इति वचनात्। श्रापयतेः स्वेदनार्थस्य न भवति।

---

१. तार्थत्वात् र्था इति क० पु०।

९०६. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः [७।२।२७]

एते णिचि निष्ठान्ता वा निपात्यन्ते । पक्षे दमितः । शमितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञापितः ।

९०७ रुष्यमत्वरसंघुषास्वनाम् [७।२।२८]

एभ्यो निष्ठायामिण् न स्याद्वा । रुष्टः । रुषितः । आन्तः । अमितः । तूर्णः । त्वरितः । संघुष्टः । संघुषितः । आस्वान्तः । आस्वनितः ।

---

तथा च वार्त्तिकम्—श्राश्राप्योः शृभावो निपात्यते ([1]इति निष्ठायां क एव । अत्र विभाषेत्यनुवर्तते, सा च व्यवस्थिता । अतः क्षीरहविषोरेव शृभावो नित्यश्च ।) अन्यत्र तु नैव भवतीत्याशयेनाह—क्षीरहविषोः पाके इति । शृतं क्षीरमिति । स्वयमेव विविलन्नमित्यर्थः ।

श्रातिरयं यद्यपि पाके इत्यविशेषेण पठ्यते, तथापि कर्मकर्तृविषयस्य पचेरर्थे वर्तते । स च ण्यन्तोऽपि णिज्रहितपचि वाच्यम् पचतेरर्थमाह—सोऽपि पच्यर्थत्वात् पाक एवेत्युभयत्रापि शृभावो भवति । यदा पुनः श्रापेर्द्वितीयो णिजुत्पद्यते, तदा पाचयितृव्यापारः पाचनालक्षण. प्राधान्येनाभिधीयते । न तु पच्यर्थं पाक इति निपातनाभावः श्रपणमन्यदिति । शाकादि । तत्र श्रपितमिति ण्यन्तस्य प्रत्युदाहार्य्यम् ।

वा दान्त । एते इति । दमु शमु उपशमे । पूरी आप्यायने । दिवादिश्चुरादिश्च । दसु उपक्षेपे । स्पश बाधने । छद अपवारणे । ज्ञप् मारणतोषणनिशामनेषु मित्सञ्ज्ञः । निपात्यते इति । णिलुक् इडभावश्च निपात्यते । दान्तः शान्त इति । "अनुनासिकस्य क्विझलोः" (६।४।१५) इति दीर्घः । दस्तस्पष्टच्छन्नेषु ह्रस्वोऽपि निपात्य इति हरदत्तः । दमितः । शमित इति । मितां ह्रस्वः । ज्ञपित इति । "ज्ञप् मिच्च" (ग०) इति ह्रस्वः ।

रुष्यमत्वर । रुष रोषे । अस्य "तीषसह" (७।२।४८) इति विकल्पितेट्त्वाद् "यस्य विभाषा" (७।२।१५) इति निषेधे प्राप्ते विकल्पो विधीयते । अम गत्यादिषु । अम रोगे । इति चौरादिकस्तु न गृह्यते, एकाच इत्यधिकारात् । आन्तः इति । "अनुनासिकस्य" (६।४।१५) इति दीर्घः । तूर्णं इति । ञित्वरा संभ्रमे । "ज्वरत्वर" (६।४।२०) इत्यूठ् । निष्ठानत्वम् । अस्य "आदितश्च" (७।२।१६) इति निषेधे प्राप्ते विकल्पः । एवं चास्यादित्त्वमात्मनेपदमात्रफलकमित्याहुः ।

संघुष्ट इति । सम्पूर्वाद्घुषेरविशब्दने इति प्राप्ते विकल्पोऽयम् । अविशब्दनेऽपि संपूर्वस्य परत्वादयं विकल्प एव । संघुष्टौ दम्यौ । संघुषितौ दम्याविति । आस्वान्त इत्यादि । देवदत्त इति शेषः । आङ्पूर्वस्य स्वनेर्मनोऽभिधानेऽप्ययमेव विकल्पः । परत्वाच्च । आस्वान्तं मनः । आस्वनितं मन इति ।

---

1. इति निष्ठायामित्यारभ्य—नित्यश्चेत्यन्तो (     ) रेखाङ्कितो नास्ति क० पु० ।

## ९०८. हृषेर्लोमसु [७।२।२९]

हृषेर्निष्ठायामिड् वा स्यात् लोमस्वर्थे। हृष्टं हृषितं लोम। "विस्मित-प्रतिघातयोश्च" (वा०) हृष्टो हृषितो मैत्रः। विस्मितः प्रतिहतो वेत्यर्थः।

## ९०९. अपचितश्च [७।२।३०]

चायतेर्निपातोऽयं वा। अपचितः। अपचायितः।

## ९१०. प्यायः पी [६।१।२८]

प्यायतेर्निष्ठायां पीभावः स्यात्। पीनं मुखम्। स्वाङ्गादन्यत्र वा। प्यानः पीनः स्वेदः। सोपसर्गस्य न। प्रप्यानः। आङ्पूर्वस्यान्धूधसोः स्यादेव। आपीनोऽन्धुः। आपीनमूधः।

## ९११. ह्लादो निष्ठायाम् [६।४।९५]

ह्लादो ह्रस्वः स्यान्निष्ठायाम्। प्रह्लन्नः।

## ९१२. द्यतिस्यतिमास्थामिति किति [७।४।४०]

एषामिकारोऽन्तादेशः स्यात्तादौ किति परे। दितः। सितः। मितः। स्थितः।

---

हृषेर्लोमसु। हृषू अलीके। उदित्वान्निष्ठायामनिट्। हृषु तुष्टौ इति सेट्। द्वयोर्ग्रहणमित्युभयत्र विभाषेयम्। लोमानि अङ्गजानि मूर्धजानि च। [1]तद्विषये हृषे वर्तमानो हृषिर्लोमसु वर्तते इत्याह—लोमस्वर्थे इति।

प्यायः पी। पीनमिति। "ओदितश्च" (८।२।४५) इति निष्ठानत्वम्। इह विभाषेत्यनुवर्तते, सा च व्यवस्थिता। तेन स्वाङ्गे नित्यम्। अस्वाङ्गे तु वेत्याह-स्वाङ्गादन्यत्र वेति। प्यान इति। "श्वीदितो निष्ठायाम्" (७।२।१४) इतीडभावे यलोपः। नत्वम्। व्यवस्थान्तरमाह—सोपसर्गस्य नेत्यादि। अन्धुः कूपः।

ह्लादो निष्ठायाम्। ह्लादी सुखे च। प्रह्लन्न इति। ईदित्वादिडभावे "रदाभ्यां निष्ठात" (८।२।४२) इति नत्वम्।

द्यतिस्यति। दो खण्डने। षोऽन्तकर्मणि। मा माने। माङ् माने। मेङ् प्रणिदाने। ष्ठा गतिनिवृत्तौ। दद्भावः [2]ईत्त्वं च बाध्यते। श्तिपानिर्देशो धातुविशेषणार्थः। यत्तु प्राचोक्तम्। श्तिपा[3]निर्देशो यङ्लुङ्व्यावृत्त्यर्थः। दादितः। दाधित इति। तत्र "ति च किति" (७।४।८९) इति वचनात् नास्ति प्रसङ्ग इति।

---

१. मूर्धजानि च। इह विभाषेत्यनुवर्तते इति क० पु०।

२. इत्त्व चेति नास्ति क० पु०।

३. शिप्या इति क० पु०।

## ६१३. शाच्छोरन्यतरस्याम् [७।४।४१]

शितः । शातः । छितः । छातः । "श्यतेर्नित्यमित्त्वं व्रते" ( वा० ) संशितं व्रतम् ।

## ६१४. दधातेर्हिः [७।४।४२]

धाञो हिः स्यात्तादौ किति । हितः ।

## ६१५. दो दद्घोः [७।४।४६]

घुसंज्ञस्य दा इत्यस्य दत् स्यात्तादौ किति । आदेशस्य तान्तत्वे "दस्ति" (६।३।१२४) इति दीर्घत्वं दोषः । दान्तत्वे निष्ठानत्वम् । धान्तत्वे भष्भावः स्यात् । तस्मात् थान्तः । चर्त्त्वम् । दत्तः । घोः किम् ? दातः ।

---

शाच्छोरन्यतरस्याम् । शो तनूकरणे । छो छेदने । शात इति । "आदेच" (६।१।४५) इत्यात्त्वम् । [1]इयमपि व्यवस्थितविभाषेति दर्शयति—श्यते[2]र्व्रते नित्यमेवेष्यते यत्नवानित्यर्थः । संशितं व्रतमिति । सम्यक् संपादितमित्यर्थः ।

दधातेर्हिः । दधातेः श्तिपा निर्देशे धेटो निवृत्त्यर्थः । तीत्य[3]नुवृत्तेर्यङ्लुकि न । दाधितः । हितमिति । हिनातेरेव सिद्धे दधाते[4]र्धीत इति निवृत्त्यर्थं वचनम् ।

दो दद्घोः । जश्त्वे संहितायास्तुल्यत्वात्पक्षान्तराणि प्रतिक्षिप्य थान्तत्वं व्यवस्थापयितुमाह—आदेशस्य तान्तत्वे इत्यादि । दीर्घत्वं दोष इति । विदत्तमित्यादावुपसर्गस्येत्यर्थः ।

दस्तीत्यत्र द्वौ पक्षौ । दा इत्यस्य य आदेशस्तकारान्तस्तकारादिर्वेति । तत्राद्ये पक्षे दोषो नान्त्ये इति बोध्यम् ।

दान्तत्वे निष्ठानत्वमिति । "रदाभ्याम्" (८।२।४२) इत्यनेन । भष्भाव इति । "झषस्तथोर्धोऽधः" (८।२।४०) इति धकारः स्यादिति विवक्षितम् । स हि वस्तुतो भष्संज्ञकः । "एकाचो बशो भष्" (८।२।३७) इति तु नास्ति । स्ध्वोः पदान्तस्य चाभावात् ।

यद्यपि तकारादिप्रत्ययसन्निपातेन भवन् दद्भावो न नत्वधत्वयोर्निमित्तं भवितुमर्हति सन्निपातपरिभाषयेति दान्तधान्त[5]पक्षयोरप्यस्ति परिहारः, तथापि परिभाषाया अनित्यत्वशङ्कया स नादृतः । दात इति । दाप् लवने । अदाप् इति निषेधान्न घुत्वम् ।

---

१. इहापत्र इति क० पु० । २. र्व्रतनित्यमेवेति क० पु० । ३. नेत्यनुवर्तते इति क० पु० । ४. धीत इति नास्ति क० पु० । ५. दधपक्षयोरिति क० पु० ।

## ९१६. अच उपसर्गात्तः [७।४।४७]

अजन्तादुपसर्गात् परस्य दा इत्यस्य घोस्तः स्यात्तादौ किति । प्रत्तम् । अवत्तः ।

"अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते" ।। इति

## ९१७. दस्ति [६।३।१२४]

इगन्तस्योपसर्गस्य दीर्घः स्याद् दादेशे तकारे परे । नीत्तम् । सूत्तम् । "घुमास्था" (६।४।६६) इतीत्त्वम् । धेट् । धीतम् । गीतम् । पीतम् । "जनसनखनामिति" ( ६।३।४२ ) आत्त्वम् । जातम् । सातम् । खातम् ।

---

अच उपसर्गात्तः । द्वितकारकोऽयमादेशस्तेनानेकाल्त्वात् सर्वादेशो भवति । एकतकारे तु "अलोऽन्त्यस्य" ( १।१।५२ ) इति बाधित्वा "आदेः परस्य" ( १।१।५४ ) स्यात् अच इति पञ्चमीनिर्देशात् । यद्येवम् "अपो भि" ( ७।४।४८ ) इत्यत्रापि [1]द्वितकारक एव स्याद् । अस्तु पञ्चम्यन्तस्याच इत्यनुवृत्तेः पर[2]स्यैव भविष्यति न सर्वस्य तत्रान्त्यस्य संयोगान्तलोपः पूर्वस्य जश्त्वेन सिद्धमिष्टम् ।

अन्ये त्वाहुः—अच इति [3]द्विरावर्तते । तेनैकेनोपसर्गो विशिष्यते, परेण स्थानी निर्दिश्यते । तेनाकारस्यैव तकारो दकारस्यापि चर्त्वेन तकारे रूपसिद्धिरिति । आदेशे अकार उच्चारणार्थः । अवदत्त इत्यादि तादेशबाधनार्थं निपात्यते । आदिकर्मणीत्येतत् प्रदत्तस्यैव विशेषणं नेतरेषामसंभवात् । इति चेष्यते इति । चशब्दाद् यथा प्राप्तम् ।

अवत्त वीतं प्रत्तमित्याद्यपि यथा भवतीत्याह्—अन्ये त्वाहुः । अवगत दत्तमवदत्तमित्यादिविवक्षायामवादीनां गमिना योगो न ददातिनेति तं प्रत्यनुपसर्गत्वान्न तत्प्रसङ्गः । उपसर्गप्रतिरूपका एते निपाता एवेति ।

दस्ति । दादेशे तकारे परे इति । दाधातोः सम्बन्धी य आदेशस्तकारस्तस्मिन् । उत्तरपदे इत्यधिकारात्[4] तस्य तीत्यनेन विशेषणाद् "यस्मिन् विधिः" (प०) इति तदादिविधेस्तकारादावुत्तरपदे इत्यर्थो ग्राह्यः । नीत्तम् । सूत्तमिति । यदा द्वितकारक आदेशस्तदा तावत्सिद्धमिष्टम् ।

---

१. द्वितकारको एव वा स्यादिति क० पु० ।　　२. पकारस्यैवेति क० पु० ।
३. द्वितकारावर्तते इति क० पु० ।
४. उत्तरपदाधिकारादिति क० पु० ।

६१८. अदो जग्धिर्ल्यप्ति किति [२।४।३६]

अदो जग्धिः स्याल्ल्यपि तादौ किति च । इकार इत् । घत्वम् । "झरो झरि सवर्णे" (८।४।६५) जग्धः । "आदिकर्मणि क्तः कर्तरि च" (३।४।७१) प्रकृतः कटं सः । प्रकृतः कटस्तेन । "निष्ठायामण्यदर्थे" ( ६।४।६० ) प्रक्षीणः सः ।

६१९. वाक्रोशदैन्ययोः [६।४।६१]

क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशे दैन्ये च गम्ये । क्षीणायुर्भवान् क्षितायुर्वा । क्षीणोऽयं तपस्वी क्षितो वा । भावे दीर्घो वेति केचित् । प्रक्षितं प्रक्षीणं तेन ।

६२०. निनदीभ्यां स्नातेः कौशले [८।३।८९]

आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये । निष्णातः शास्त्रेषु । नदीष्णः । "सुपि च" ( ७।३।१०२ ) इति कः ।

---

यदा त्वन्त्यस्य तकार इति [1]पक्षस्तदापि चर्त्वभूतस्तकारो दादेशो ज्ञेयः । न चास्यासिद्धत्वं तकारादावुत्तरपदे इत्याश्रयणसामर्थ्यात् । यथा रोरुत्वम् । "दधातेर्हिः" ( ७।४।४२ ) इत्यत्र श्लुविकरणस्य निर्देशो धेट् पाने इति भ्वादेर्व्यावृत्त्यर्थः इति दर्शयति—धेट् धीतमिति । "द्यतिस्यति" ( ७।४।४० ) इतीत्वस्य प्रत्युदाहरति—गीतम्, पीतमिति ।

अदो जग्धिरिति । जग्धेरिकार उच्चारणार्थः । तेन न नुम् । ल्यप्तीति पृथक् पदम् । लुप्तसप्तमीकम् । तीति वर्णनिर्देशे सप्तमीनिर्देशात्तदादिविधिरिति व्याचष्टे—ल्यपि तादौ किति च । घत्वमिति । "झषस्तथोर्धोऽधः" ( ८।२।४० ) इत्यनेन ।

इदानीं कार्यं प्रपञ्चयति । आदिकर्मणीति । व्याख्यातम् । प्रकृतः कटं सः । कटं कर्तुमारब्धवानित्यर्थः । प्रशब्द आदिकर्मद्योतनार्थः । तेनोक्तत्वात् कर्तरि प्रथमा । कर्मण्यनुक्तत्वाद् द्वितीया । प्रकृतः कटस्तेनेति । कर्मणि क्ते तु विपर्ययः । निष्ठायामण्यदर्थे इति अनेन दीर्घ इति शेषः । प्रक्षीणः स इति । "क्षियो दीर्घात्" (८।२।४६) इति निष्ठानत्वम् ।

निनदीभ्यां स्नातेः । नदीष्ण इति । नद्यां स्नातो नदीष्णः इति । "सुपि स्थः" ( ३।२।४ ) इति योगविभागात् कः । नदीस्नाने कुशल इत्यर्थः । कवयस्तु कुशलतामात्रे प्रयुञ्जते ।

---

१. अत्र इति क० पु० ।

२. हित्येति क० पु० ।

६२१. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च [३।४।७२]

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां गतः। प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितो विष्णुः। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातोऽच्युतः। गरुडमारूढो गोविन्दः। विश्वमनुजीर्णोऽनन्तः। पक्षे प्राप्ता गङ्गा तेनेत्यादि। शीङादेरकर्मकत्वेऽपि उपसृष्टस्य सकर्मकत्वात् पृथगुक्तिः।

६२२. क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः [३।४।७६]

निश्चलार्थाद् गत्यर्थाद् भोजनार्थाच्चाधिकरणे क्तः स्याद् यथा प्राप्तं च।

गत्यर्थाकर्मक। तयोरेवेति नियमस्यापवादः। गत इति। "अनुदात्तोपदेश" (६।४।३७) इति नलोपः। प्राप्त इति। प्रपूर्वः आप्लृ व्याप्तौ। गत्यर्थोऽयम्, ग्लान इति। ग्लै हर्षक्षये। "आदेच" (६।१।४५) इत्यात्वम्। "संयोगादेरात" (८।२।४३) इति नत्वम्। अकर्मकोऽयम्। श्लिषिः सकर्मकः। शेषमधिशयित इति। "अधिशीङ्स्थासां कर्म" (१।४।४६) इति शेषः। [1]( उपासितः। आस उपवेशने। उपोषित इति। वस निवासे। उपपूर्वः "वसतिक्षुधोरिट्" (७।२।५२)। "शासिवसिघसीनाम्" (८।३।६६) इति षः। अनुजात इति। "जनसनखन" (६।४।४२)। इत्यात्वम्)। आरूढ इति। रुह जन्मनि प्रादुर्भावे च। "हो ढः" (८।२।३१) षत्वष्टुत्वढलोपदीर्घाः। अनुजीर्ण इति। जृष् वयोहानौ। "ॠत इद्धातोः" (७।१।१००) नत्वं णत्वम्। पक्षे इति। भावकर्मणोरित्यर्थः।

ननु शीङादिभ्योऽकर्मकादित्येव सिद्धं तत् किं पृथगुपात्ता इत्यत आह—शीङादेरित्यादि।

क्तोऽधिकरणे। ध्रौव्यम्, स्थैर्यम्। गतिर्गमनम्। प्रत्यवसानं भोजनम्। इति व्याचष्टे निश्चलार्थादित्यादि। निश्चलशब्दो भाववचनः नैश्चल्यार्थादिति यावत्। यथा—प्राप्तं चेति। ध्रौव्यार्थेभ्योऽकर्मकत्वात् कर्तरि भावे च। आसितो देवदत्तः। आसितं देवदत्तेनेति। गत्यर्थेभ्यः कर्तरि कर्मणि भावे च। गतश्चैत्रो ग्रामं गतश्चैत्रेण ग्रामः। गतं चैत्रेण। सकर्मकादपि कर्माविवक्षायामकर्मकत्वाद्भावे क्तो भवति। प्रत्यवसानार्थेभ्यस्तु भावे कर्मणि च कर्तरि विधायकाभावात्। भुक्तं चैत्रेण। भुक्त ओदनश्चैत्रेण।

---

१. उपासित इत्यारभ्य—जनसन इत्यात्वमित्यन्तो ( ) रेखाङ्कितो नास्ति क॰ पु॰।

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ १ ॥

भुक्तमेषामस्तीति मत्वर्थीयाकारेण भुक्ताः पीता इत्यादि स्यात् ।

**६२३. ञीतः क्तः [३।२।१८७]**

ञीतो धोर्वर्तमाने क्तः स्यात् । ञिक्ष्विदा । क्ष्विण्णः । ञि इन्धी । इद्धः ।

**६२४. मतिबुद्धिपूजार्थेभ्यश्च [३।२।१८८]**

एतदर्थेभ्यो वर्तमाने क्तः स्यात् । राज्ञां मतः इष्टः बुद्धः विदितः । पूजितः । अर्चितः । चादनुक्तमपि । शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट इत्यपि । सुप्तः । शयितः । स्तः इत्याद्या वर्तमाने ज्ञेयाः ।

---

सर्वेभ्योऽधिकरणे क्रमेण कारिकयोदाहरति मुकुन्दस्येत्यादि । आस्यतेऽस्मिन्निति । इत्यासितमासनमित्यर्थः । यायतेऽस्मिन् यातं मार्ग इत्यर्थः । भुज्यतेऽस्मिन्निति भुक्तं भोजनमित्यर्थः । त्रिष्वपि "अधिकरणवाचिनश्च" (२।३।६८) इति कर्तरि षष्ठी ।

नन्वेवं प्रत्यवसानार्थेभ्यः कर्तरि क्तस्याभावाद् भुक्ता ब्राह्मणा इत्यादि न सिद्धयेदत आह–भुक्तमेषामस्तीत्यादि । भोजनं भुक्तम् भावक्तान्तात् "अर्श आदिभ्योऽच्" (५।२।१२७) व्याख्येय इत्यर्थः ।

ञीतः क्तः । ञि इद् यस्य ञीत् तस्य ञीतः । वर्तमाने इति । तेन चास्य क्तस्य वर्तमानविषयतया भूतविषयता "येन नाप्राप्ति" न्यायेन बाध्यते । एव गतिबुद्धीत्यत्रापि । ज्ञातमित्येतत्तु भूतेऽपि भवति । तेनेत्यधिकारे "उपज्ञाते" (४।३।११५) इत्यधिकारे कृत्तद्धितविधानात् । वर्तमाने हि "क्तस्य च वर्तमाने" (२।३।६७) इति षष्ठ्या भाव्यम् । एवं च कृत्वा "पूजितो यः सुरैर" पीत्यचिकित्स्योऽपशब्दः इत्याहुः । क्ष्विण्ण इति । "आदितश्च" (७।२।११६) इति नेट् । इद्ध इति । "श्वीदितो निष्ठायाम्" (७।२।१४) इति नेट् । नलोपः ।

मतिबुद्धि । मतिरिहेच्छा बुद्धेः पृथग् ग्रहणात् । राज्ञां मत इति । मन ज्ञाने । अस्यानेकार्थत्वादिच्छायां वृत्तिः । "अनुदात्तोपदेश" (६।४।३७) इत्यनुनासिकलोपः । इष्ट इति । इषु इच्छायाम् । "लोभसह" (७।२।४८) इति वेट्त्वाद् "यस्य विभाषा" (७।२।१५) इति नेट् । शीलित इत्यादि । शील समाधौ । रक्ष पालने । क्षमूष् सहने । क्रुश आह्वाने । जुष् प्रीतिसेवनयोः । ञिष्वप् शये । शीङ् स्वप्ने । तृप प्रीणने इत्याद्याः इत्यनेन "शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि । रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥ हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ । कष्टं भविष्यतीत्याहुरमृतः पूर्ववत्स्मृतः" ॥ इति । इत्येते वार्तिकोक्ताः संगृहीताः ।

## ६२५. नपुंसके भावे क्तः [३।३।११४]

धातोः क्तः स्याद् भावेऽर्थे स च क्लीबे। हसितं जल्पितं शयितम्।

## ६२६. लिटः कानज्वा [३।२।१०६]

लिटः कानजादेशो वा स्याच्छन्दसि। प्रयोगवशात् लोकेऽपि इति केचित्। "तङानावात्मनेपदम्" (१।४।१००)। द्वित्वादि। चक्राणः।

## ६२७. क्वसुश्च [३।२।१०७]

लिटः क्वसुरादेशो वा स्यात्। बभज्वान्। "जाग्रोऽविचिण्" इत्यत्र इकार उच्चारणार्थः। तेन क्वसावपि न गुणः। जजागृवान्। येषां नोच्चारणार्थस्तेषां क्वसौ गुणः जजागर्वान्।

---

नपुंसके। 'तयोरेव" (३।४।७०) इति सिद्धेऽपि नपुंसके भावे कालसामान्येन क्तविधानार्थं विशेषविहितेन ल्युटा मा [1]बाधीत्येवमर्थं चेदम्। स च क्लीबे इति। एतेन घञादिवाच्यो भावो लिङ्गान्तरेऽपीत्युक्तम्। शयितं छात्रस्येति। नपुंसके भावे क्तस्य योगे शेषविवक्षायां कर्तरि षष्ठी।

लिटः कानज्वा। किक्करणं 'तिस्तिराण इत्यत्र "ऋच्छत्यृताम्" (७।४।११) इति गुणस्य निषेधार्थम्। स हि प्रतिषेधविषये आरभ्यते। चक्राण इत्यत्र तु "असंयोगाल्लिट्कित्" (१।२।५) इत्येव सिद्धम्। [2]किदयम् भाषायामपीति केचित्। भाष्ये तु छान्दस एवेति स्थितम्।

क्वसुश्च। बभज्वानिति। भञ्जो आमर्दने। द्वित्वादि। कित्वान्नलोपः। उगित्वान्नुम्। "सान्तमहतः" (६।४।१०) इति दीर्घः। "संयोगान्तस्य लोपः" (८।२।२३)। भाष्ये तु छान्दसः क्वसुरिति स्थितम्। तथा चोत्तरत्र भाषाया-मित्युच्यते। तत्र कित्त्व तितीर्वानित्यत्र पूर्ववद्गुणाभावार्थं बभज्वानित्यादौ तु संयोगान्तत्वात् लिटः कित्वं नास्ति, तथापि छन्दसि "सार्वधातुकमपित्" (१।२।४) इति ङित्वेनापि नलोपो भविष्यति। "जाग्रोऽविचिण्णल्ङित्सु" इति। [4]वकारेणाङ्गाक्षिप्तप्रत्ययस्य विशेषणाद्वकारादौ क्वसावपि निषेधः सिद्ध्यतीत्यर्थः। शसादौ च संप्रसारणे [5]जजागृप इति भाव्यम्।

---

१. भाव्यमिति इति क० पु०। २. विवरण इति क० पु०।
३. किद् चेति क० पु०।
४. तकारेणेति क० पु०।
५. प्रजागृप इति क० पु०।

## ९२८. वस्वेकाजाद्घसाम् [७।२।६७]

कृतद्विवानामेकाचामादन्तानां घसेश्च क्वसोरिट् स्यान्नान्येषाम्। आदिवान्। आरिवान्। ददिवान्। दरिद्रातेरशिति नित्यल्लोपित्वेनादन्तत्वाभावान्नेट्। ददरिद्वान्। जक्षिवान्। एषां किम्? बभूवान्। "वसोः सम्प्रसारणम्" (६।४।१३१) जुगागमः। बभूवुषः। बभूवुषी। "वसुस्रंसु" (८।२।७२) इति दः। बभूवत्। वकारादौ क्वितिच्छ्वोः शूठौ वेति केचित्। दुद्यूवान्। दिदिवान्। दिदिवुषः। विविश्वान्। विविच्छ्वान्।

---

एवं च क्वावपि लुप्ते प्रत्ययलक्षणेन तु गुणनिषेधात्तुकि जागृदिति भवति। वर्णोऽत्र प्रत्ययविशेषत्वेनाश्रीयते न प्राधान्येनेति। [1]तेन वादौ प्रत्यये लुगिति। वर्णाश्रये इत्यपि नास्ति। मतृणेट् इतोमागमत्।

मतान्तरमाह—येषामित्यादि। ते हि जागृविरित्यत्र निषेधमिच्छन्ति। "जृदृसृजागृभ्यः क्विन्" (उ०) इति क्विन्नन्तः। दर्विरित्यत्र तु विनोणादिको द्रष्टव्यः।

नेड्वशिकृति (७।२।८) इतीण्निषेधः। क्रादिनियमात् प्राप्तस्य 'वस्वेकाजाद्घसाम्' (७।२।६७) इति नियमान्न भवति। न च क्वसोः कित्त्वेन गुणनिषेधः। प्रतिषेधविषय एव जागर्ति गुणस्यारम्भात्।

एव च शसादावपि जजागरुः इति। ([3]भवितव्यम्। तथा क्वावपि गुणे रपरत्वे जागरिति। "उषविद्" (३।१।३८) इत्यामभावपक्षे चेदमुदाहृतम्। आमि तु जागरामकृवान् इति भाव्यम्)। [2]एकाजित्यविभक्तिको निर्देशः। तथा च व्याख्यास्यति।

वस्वेकाजादिति। कृतद्विवंचनानामेकाचामिति। ये कृतेऽपि द्वित्वे एकाच एवावशिष्यन्ते तेषामित्यर्थः। [4]न्याय्यमन्वयं चैतत्। नित्यत्वादिटः पूर्वं द्विर्वचनेनैव भाव्यम्। कृते तु तस्मिन् इटः प्रवृत्तिकाले एकाच्कृतद्वित्वः संभवतीति "नेड्वशि कृति" (७।२।८) इति निषेधं बाधित्वा क्रादिनियमात् सर्वत्रेटः [5]प्रसक्तस्य नियमोऽयम्। एषामेव क्वसोरिड्भ[6]वतीत्याह—नान्येषामिति। अद् भक्षणे।

---

१. तेन स्वादौ च संप्रतन्येणेति क० पु०।
२. इति विभक्तिको निर्देश इति क० पु०। ३. भवितव्यमित्यारभ्य—भाव्यमित्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०। ४. न्यक्कावेतत् इति क० पु०।
५. प्रासस्य इति ख० पु०।
६. रिवतीत्याहेति क० पु०।

## ६२६. विभाषा गमहनविदविशाम् [७।२।६८]

एभ्यो वसोरिड् वा स्यात् । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । तौदादिको विद्‌विशी । विविदिवान् । विविद्वान् । विविशिवान् । विविश्वान् । "दृशेश्चेति वाच्यम्" (वा० ) ददृश्वान् । ददृशिवान् ।

---

द्वित्वहलादिः शेषाभ्यासदीर्घसवर्णदीर्घेषु कृतद्वित्वोऽप्ययमेकाजेवेति इड् भवति । आरिवानिति । ऋ गतौ । "ऋच्छत्यृताम्" (७।४।११) इति गुणे कृते द्वित्वादिषु च पूर्ववदयमप्येकाच् । ददिवान् इति । डुदाञ् दाने । नित्यत्वात् कृते द्वित्वे नायमेकाच् इगिनमित्तस्याल्लोपो ना[1]सति तस्मिन् भवतीत्यनेकाजर्थमाद्ग्रहणम् ।

यद्येवं दरिद्रातेरपि स्यादत आह—दरिद्रातेः । अशित्यार्धधातुके नित्याल्लोपित्वेनेति । "दरिद्रातेरार्धधातुके आ[2]तो लोपो वाच्यः" (वा० ) इति विवक्षिते एव क्वसौ पूर्वमातो लोपविधानादित्यर्थः । ददरि[3]द्वानिति ।

यद्य"प्यनेकाच आम् वक्तव्य" (वा० ) इत्यामि सति दरिद्रांचक्रिवानिति भवति, तथाऽपि "आत औ णलः" (७।१।३४) इत्यौकारविधानेन ज्ञापितं दरिद्रातेराम् नेति पूर्वमुक्तम् । तेन मभावपक्षे रूपमिदम् । जक्षिवानिति । घस्लृ अदने । अदेर्घसादेशो वा "लिट्यन्यतरस्याम्" (२।४।४०) इति । तस्य द्वित्वात्पूर्वं परत्वात् "घसिभसोर्हलि च" (६।४।१००) इत्युपधालोपः स्यात् । तत्र च कृतेऽनच्कत्वात् इति द्वित्वमेव न स्यात् ।

न चास्य द्वित्वे स्थानिवद्भावो ।[4] हल्निमित्तत्वात् इति नायं कृतद्विर्वचन एकाच् भवतीति घसिग्रहणम् । तत्सामर्थ्यात् तु परत्वादुपधालोपमिडागमो बाधते । तत्र कृते "गमहन" (६।४।९८) इत्युपधालोपः । तस्माज् निमित्तकत्वेन स्थानिवत्त्वात् द्वित्वम् । 'शासिवसि" (८।३।६०) इति षत्वं कुत्वं च । "वसोः संप्रसारणम्" (६।४।१३१) इति । द्व्यनुबन्धकोऽपि क्वसुरिह गृह्यते । यत्रादेशस्य वसोरुदित्करणस्य सामान्यग्रहणार्थत्वात् तस्य ह्येतदेव प्रयोजनं द्व्यनुबन्धकोऽपि क्वसुः सामान्येन यथा गृह्येतेति । उगित्त्वात् कार्यस्य स्थानिवद्भावेनापि सिद्धेरिति भावः । क्वसोरुगित्वेन तर्हि किं प्रयोजनमत आह—बभूवुषीति । "उगितश्च" (४।१।६) इति ङीप् । बभूवदिति । क्लीबे स्वमोर्नपुंसकात् इति लुका लुप्तत्वान्न नुमादिः । दुधूवानिति । ऊठि कृते द्वित्वम् । दिदिवानिति । "वस्वेकाजाद्घसाम्" (७।२।६७) इति नियमादिड भावे वलि लोप । भाष्ये तु वलोपः प्रत्याख्यातस्तन्मते क्वसोः छान्दसत्वाद् वलोपो ज्ञेयः । येषां तु लोकेऽपि क्वसुर्वलोपश्च नारभ्य इति मतं तेषां "हलि च" (८।२।७७) इति दीर्घे दिदीवानिति भवितव्यम् । विविश्वानिति । विच्छ गतौ ।

विभाषा गम० । "वस्वेकाजाद्" (७।२।६७) इति नियमादप्राप्ते विभाषेयम् । जग्मिवानिति । "गमहन" (६।४।९८) इत्युपधालोपः । जगन्वानिति । "मोनो

---

१. नास्ति तस्मिन्नसतीति क० पु० ।
२. के आनुलोपो इति क० पु० ।
३. दरिद्रातेरिति क० पु० ।
४. चाच् निमित्तत्वादिति क० पु० ।

६३०. दाश्वान्साह्वान्मीढ्वांश्च [६।१।१२]

एते क्वस्वन्ता निपात्यन्ते ।

६३१. उपेयिवाननाश्वाननूचानश्च [३।२।१०९]

एते निपात्यन्ते । नात्रोपसर्गस्तन्त्रम् । समीयिवान् । ईयिवान् । जाग्रः कानचि गुणो वेति केचित् जजाग्राणः, जजागाराणः ।

---

धातोः" ( ८।२।६४ ) "म्वोश्च" ( ८।२।६५ ) इति नत्वम् । जघ्निवानित्यादि । "अभ्यासाच्च" ( ७।३।५५ ) इति कुत्वम् । तौदादिकविशिना साहचर्याद्विदिरपि तौदादिक एव लाभार्थो गृह्यते ।

[1]यद्यप्यादादिकेन हनापि साहचर्यमस्ति, तथापि शब्दपरविप्रतिषेधात् परसाहचर्यमेव नियामकम् । तेन ज्ञानार्थकोऽदादिर्न गृह्यते । विविद्वानित्येवास्य भवति । सत्ताविचारणार्थयोस्तु दिवादितुदाद्योरात्मनेपदित्वात् क्वसोरसंभव एवेति भावः ।

दाश्वान् । दाशृ दाने । छन्दसि विभाषायां वा विशेषेण क्वसावद्वित्वमनिट्त्वं च निपात्यते । एवं च सर्वत्र । षह मर्षणे । भ्वादिरनुदात्तेत् । अस्य परस्मैपदमुपधादीर्घश्चा[2]धिकम् । मिह सेचने । अस्य ढत्वमुपधादीर्घश्च ।

उपेयिवाननाश्वम् । उपपूर्वादिणो भाषायां क्वसुर्निपात्यते । स च लिट आदेशः लिट इत्यनुवृत्तेः । अनेकाच्त्वादप्राप्त इडागमश्च निपात्यते । तत्र द्वित्वमभ्यासस्य "दीर्घ इणः किति" ( ७।४।६९ ) इति दीर्घो सवर्णदीर्घं बाधित्वा आङ्गत्वात् "इणो यण्" ( ६।४।८१ ) परत्वात् परत्वादनुवृत्तेरयं लङ्लुङ्विषयेऽपि भवति ।

ननु भूतसामान्यं तद्विषयः । न च तत्र लिडस्ति "परोक्षे लिट्" ( ३।२।११५ ) इति वचनात् । मैवम् । "छन्दसि लिट्" ( ३।२।१०५ ) इति भूतसामान्येऽपि लिड्विधानात् । एवमपि भाषायामसौ दुर्लभः । भाषायां च क्वसुस्तस्य विधीयते । एवं तर्हि आदेशसामर्थ्यात् भूतमात्रे भाषायामपि लिडनुमीयते । स च वानुवृत्तेर्विकल्पते । तेन भूते भाषायामेभ्यो वा लिड् भवति । तस्य नित्यं क्वसुरादेशः । वाऽनुवृत्तेः पक्षे लुङादयो यथाप्राप्ता अपि ।

उपागात् । उपैत् । उपेयायेति । अत्र च वलादिलक्षण एव इट् "नेड्वशि कृति" ( ७।२।८ ) इति निषिद्धः क्रादिनियमात् पुनः प्राप्तो "वस्वेकाजाद्घसाम्" ( ७।२।६७ ) इति प्रतिषिद्धः पुनः प्रतिप्रसूयते नापूर्वो विधीयते । तेनोपेयुषः । उपेयुषा

---

१. यद्यप्यादादिकेनेत्यारभ्य—गृह्यते इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

२. अधिकमित्यारभ्य—भवतीत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु० ।

## ६३२. लटः शतृशानचावप्रथमासमानाधिकरणे [३।२।१२४]

लटः स्थाने शतृशानचौ स्तः प्रथमया चेदेकार्थता न स्यात्। शबादि। पचन्तं चैत्रं पश्य। पचता चैत्रेण कृतम्। "तङानावात्मनेपदम्" (१।४।१००) इत्यात्मनेपदसंज्ञा। कर्तृगे फले शानच्।

## ६३३. आने मुक् [७।२।८२]

आने परे अदन्ताङ्गस्य मुगागमः स्यात्। पचमानं चैत्रं पश्य। पचमानेन चैत्रेण कृतम्। लङ्क्तेः प्रथमासमानाधिकरणेऽपि क्वचित्। सन् द्विजः। "माङ्याक्रोशे" (वा०) मा पचन्। मा पचमानः। मा पाक्षीदित्यर्थः।

---

इत्यत्रादौ इट् न भवति। नात्रेति। न तन्त्र विवक्षित इत्यर्थः। आचार्योपदेश एवात्र प्रमाणम्। अनाश्वानिति। नञ्पूर्वस्याश्नोतेः[1]। क्वसुरिडभावश्च निपात्यते। पक्षे नाशीत्। नाश्नात्। नाशा। अनूचान इति। वचेर्ब्रूञो वचेर्वा। अनुपूर्वात्कर्तरि कानज्निपात्यते न भावकर्मणोः। पक्षे अन्ववोचत्। अन्वब्रवीत्। अनूवाच।

लटः शतृशान। प्रथमाया अन्या अप्रथमा। द्वितीयादिरिति। पर्युदासोऽयम्। तया समानं साधारणमधिकरणमभिधेयं यस्येति बहुव्रीहिः। सति सप्तमी चेयं षष्ठ्यर्थे वा सप्तमीत्याह। अप्रथमया चेदिति। प्रत्ययग्रहणपरिभाषया तदन्तविधेरप्रथमान्तेनेत्यर्थं द्रष्टव्यः।

नहि कर्मत्वादिशक्तिवाचिनो द्वितीयादेः कर्त्रादिवाचिना लटैकार्थता संभवतीति। (शबा[2]दिति। शित्वेन सार्वधातुकत्वाद् इत्यर्थः। पचन्तं चैत्रं पश्येति। शतुरुगित्वान्नुम्)।

यद्यपि लटो प्रथमान्तेन सामानाधिकरण्यं न क्वचिदुपलब्धं तथापि तदादेशयोः शतृशानचोर्दर्शनात् स्थानिनो लकारस्यापि तद्योग्यत्वमनुमीयते इति काल्पनिकं तदाश्रीयते। यद्यपि पचत्योदनमित्यादौ क्रियाप्रधानत्वादाख्यातस्य न पश्येत्यादि क्रियान्तरयोगः सभवति, तथापि शत्रादिविषयस्य क्रियोपसर्जनकर्त्राद्यभिधायित्वात् तस्य क्रियान्तरयोगनिमित्तं कर्मत्वादि न विरुध्यते। कर्तृगे फले शानजिति। पचेः प्रकृतत्वात् तदभिप्रायमेतत्। अनुदात्तस्त्वविशेषेण भवति। पचमानः स्मयमान इति।

आने मुक्। "अतो येय" इत्यतोऽनुवृत्तं पञ्चम्यन्तमप्यदग्रहणमान इति सप्तम्या षष्ठ्या विपरिणम्यते। तेन चाङ्गस्य विशेषणात् तदन्तविधिरित्याह—अदन्ताङ्गस्येति।

---

१. नञ्पूर्वस्नोतेरिति क० पु०।
२. शबादीत्यारभ्य— उगित्वान्नुम् इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

ननु यद्यङ्गभक्तो मुक् ततस्तदेव न व्यवदध्यात् तदवयवभक्तस्तु व्यवदध्यादेवेति पचमान इत्यादावदुपदेशाल्लसार्वधातुकमनुदात्तमिति न प्राप्नोति। अकारमात्रभक्तत्वे तु तदवयवत्वान्नास्ति व्यवधानमित्यदोष इति यथाकरं व्याख्यानमुचितं न त्वदन्ताङ्गस्येति।

यत्तु प्राचोक्तम्। "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति मुकोऽविद्यमानत्वेन व्यवधानाभावात् स्यादेवानुदात्तत्वम्।

काशिकाकारस्तु परिभाषेयं नास्तीति मन्यमान उक्तवान् इति। तदस्वीकुर्वता 'समासस्य" ( ६।१।२२३ ) इत्यत्रेयं परिभाषा भाष्ये पठिता किं तु एषैव' हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति।

न चात्र हल. स्वरप्राप्तिरस्तीति प्रकृतेनोपयुज्यते। यदि तु सापि पठ्येत ततो मरुत्वानित्यत्र "ह्रस्वनुड्भ्यां मतुप्" (६।१।१७६) इत्युदात्तं स्यात्। इदमेवाभिसंधाय तत्र वृत्तिकृतोक्तम्—अत्र "स्वरविधौ व्यञ्जनमविद्यमानवत्" इत्येषा परिभाषा नाश्रोयते ( इति लभ्यते इत्याहुः। तदेतद् हरदत्तेनानूद्य दूषितम्। तस्मादिष्टिरेवेयमिति व्यवस्थापितम्। अस्यापोष्टेरयं शेषो जागर्ति तस्मादत एव मुग्विधेयः। अत् चासौ अन्तश्चादन्तः स चासावाङ्गश्च। अङ्गे भव आङ्गः तस्यानित्यत्वात् विशेषणस्यापि न पूर्वनिपातः तेनाङ्गसंबन्धिनोऽन्तस्यात् इत्यर्थः कथंचिद् योज्यः )। तेन मरुत्वानित्यत्र न भवति।

लडुक्तेरिति। ' वर्तमाने लट्" (३।२।१२३) इति वर्तमाने पुनर्लड्ग्रहणादित्यर्थः।

यद्यपि वर्तमाने लडिति प्रथमान्तं प्रकृत तथापि तत् स्वरयिष्यते। तस्य चेहानुवृत्तिसामर्थ्यात् षष्ठ्या विपरिणामेन तस्यैवादेशो भविष्यतः, अत एव न प्रत्ययान्तराशङ्काऽपीति भावः।

पुनर्लडुक्तेरिति। एवं हि पुनर्विधिः संपद्यते। स च निषिद्धेऽपि विषये विधानार्थो भवतीत्यर्थः।

प्रथमासमानाधिकरणेऽपि क्वचिदिति। उपलक्षणमेतत्। अप्रथमान्तेन सामानाधिकरण्याभावेऽपि भवतीत्यर्थः। तेन कुर्वतोऽपत्यं कौर्वतः। पाचतः। कुर्वतो भक्तिः। कुर्वद्[1]भक्तिः। कुर्वाणा भक्तिरिति प्रत्ययोत्तरपदयोरपि सिद्ध्यति। अन्यथा कुर्वतो देवदत्तस्यापत्यमित्यादि पदान्तरापेक्षत्वेन तद्धितसमासौ न स्याताम्। पदान्तरानपेक्षत्वे तु अप्रथमान्तेन सामानाधिकरण्याभावः इति शतृशानचौ न स्याताम्। तथा पुनर्लड्ग्रहणाद् यो भूते लट् "ननौ पृष्टप्रतिवचने" ( ३।२।१२० ) इति तस्यापि भवतः।

ननु मां कुर्वन्तं कुर्वाणं वा पश्येति। अत्र केचित् "नन्वोर्विभाषा" (३।२।१२१) इत्यतो विभाषेत्यनुवर्तयन्ति। व्यवस्थिता चेयं तेनाप्रथमासामानाधिकरण्ये विकल्पः पचन्तं पश्येत्यादौ। प्रत्ययोत्तरपदयोश्च नित्यम्। पचतितरामित्यादावन्ते तु नैव भवतः।

१. शक्तिरिति क० पु०।

## ९३४. संबोधने च [३।२।१२५]

हे पचन्। हे पचमान।

## ९३५. लक्षणहेत्वोः क्रियायाः [३।२।१२६]

क्रियायाः लक्षणे हेतौ चार्थे सतो धातोर्लटः शतृशानचौ स्तः। शयाना भुञ्जते। अर्जयन् वसति।

## ९३६. कृत्यचः [८।४।२९]

प्रपीयमाणः।

## ९३७. ईदासः [७।२।८३]

आसः परस्य ईन् स्यात्। "आदेः परस्य" (१।१। ) इत्यादेरेव। आसीनः।

---

एवं च त्रिभाग्यैवेष्टसिद्धावप्रथमासमानाधिकरणे इति स्पष्टार्थम्। एतेनोत्तरसूत्रद्वयमपि व्याख्यातमित्याहुः।

माङ्याक्रोश इति। लुङि न प्राप्नोति। अस्मादेवादेशविधानाल्लडनुमीयते इति कैयटः। मा पचतु इत्यर्थ इति। नायं माङ् किं तु मा शब्द इत्युक्ते माङ्पर्यायेणार्थकथनमेतत्।

संबोधने च। हे पचन्निति। अत्रादेशः प्रथमा चोभौ संबोधनं द्योतयतः।

लक्षणहेत्वोः। लक्ष्यतेऽनेनेति लक्षणं परिचायकम्। हेतुस्तु योग्यतामात्रेण विवक्षितो नाश्रितव्यापारो निमित्तं स च क्रियाविषयत्वे प्रयोजनमुच्यते। सत[1] इति। [2]वर्तमानादित्यर्थः।

शयाना इति। अत्र शयनं लक्षणं भोजनस्य। अर्जयन्नित्यर्थः। अर्ज प्रतियत्ने। चुरादिः।

अर्जनार्थो वासः इत्यर्थः। तदुक्तम्—हेत्वर्था तु क्रिया तस्मात् न स प्रतिनिर्धीयते इति।

लक्षणहेत्वोः किम्? किं पचति च पचति च। क्रियायाः किम्? यः कम्पते सोऽश्वत्थः। यत्प्लवते तल्लघु। द्रव्यगुणयोर्लक्षणे मा भूत्।

---

१. यत इति क० पु०।

२. वर्तमानस्येत्यर्थ इति क० पु०।

९३८. विदेः शतुर्वसुः [७।१।३६]

वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात् । विदन् । विद्वान् । विदुषी ।

९३९. तौ सत् [३।२।१२७]

तौ शतृशानचौ सत्संज्ञौ स्तः ।

९४०. लृटः सद् वा [३।३।१४]

लृटः सत्संज्ञावादेशौ स्तो वा । व्यवस्थितविकल्पेनाप्रथमैकार्थादिषु नित्यमन्यत्र वा । करिष्यन्तम् । करिष्यमाणम् । हे करिष्यन् । अर्जयिष्यन् वसति । प्रथमैकार्थत्वे करिष्यति । करिष्यन् ।

---

इह तु हन्तीति पलायते । वर्षतीति धावति इत्यत्रेतिशब्देनैव हेतुत्वस्य द्योतितत्वात् व्यवस्थितविभाषया च न भवतः ।

विदेः शतुर्वसुः । विद ज्ञाने । स्थानिवत्त्वादेव सिद्धे वसोरुगित्करणं 'वसोः संप्रसारणम्" इत्यत्र क्वसोरपि सामान्यग्रहणार्थम् । तत्सामर्थ्यात्त्वेकानुबन्धग्रहणम् इत्येतदपि न प्रवर्तते । विद्वानिति । उगित्त्वान्नुम् । विदुषीति । "उगितश्च" ( ४।१।६ ) इति ङीप् । वसोः संप्रसारणम् । षत्वम् ।

तौ सत् । स्वरितत्वादपि शतृशानचोरनुवृत्तिलाभे तौग्रहणं वर्तमानकालस्वरूपोपाध्यसंसर्गेण शतृशानच्मात्रपरिग्रहार्थम् । तेन लृडादेशयोरपि ब्राह्मणस्य करिष्यन् इत्यत्र "पूरणगुणसुहितार्थ" (२।२।११) इति षष्ठी समासनिषेधो भवति । तथा "ननौ पृष्टप्रतिवचने" (३।२।१२०) इति भूते लट्, तदादेशयोरपि तयोः संज्ञा भवति ।

ननु मां ब्राह्मणस्य कुर्वन्तं कुर्वाणं वा पश्येति पूर्ववत् समासनिषेध इति मनसि कृत्य व्याचष्टे—तौ शतृशानचाविति । तौग्रहणेन शतृशानज्मात्रं परामृश्यते न प्रकृत उपाधिरपीत्यर्थः ।

लृटः सद्वा । अप्रथमैकार्थादिष्विति । आदिशब्दात् प्रत्ययोत्तरपदयोश्च संबोधने च लक्षणहेत्वोः क्रियायाः इत्यस्मिन् विषये च नित्यमेव । यथा' करिष्यतोऽपत्यं कारिष्यतः । करिष्यद्भक्तिः । संबोधनमुदाहरति । हे करिष्यन्निति । अर्जयिष्यन् वसतीति हेतौ ।

---

१. नित्यमेव करिष्यतोऽपत्यं कारिष्यतिः करिष्यमाणभक्तिरिति क० पु० ।

## ६४१. पूङ्यजोः शानन् [३।२।१२८]

आभ्यां शानन् प्रत्ययः स्यात् । पवमानः । यजमानः ।

## ६४२. ताच्छील्यवयोवचनशक्तिषु चानश् [३।२।१२९]

एषु गम्येषु धातोश्चानश् स्यात् । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ।

## ६४३. इङ्धार्योः शत्रकृच्छ्रिणि [३।२।१३०]

अधीयन् । धारयन् ।

## ६४४. द्विषोऽमित्रे [३।२।१३१]

द्विषन् ।

## ६४५. अर्हः प्रशंसायाम् [३।२।१३३]

अर्हन् ।

---

पूङ्यजोः शानन् । शानन् प्रत्ययः स्यादिति । एतेन शत्रादेशवल्लडादेशत्वं निरस्यति । तथा हि सति वेति वक्तव्यं पचते यजते इति तिङोऽपि यथा स्युरिति । लादेशेषु च वाऽसरूपविधिर्नास्तीत्याकरे स्थितत्वात् । "लः कर्मणि" इति वचनात् भावकर्मणोरपि स्यात् । कर्तर्येव चेष्यते । लः सार्वधातुकमनुदात्तं स्यात् । एवं चाशदावपि स्यात् । [1]शकारः सार्वधातुकत्वार्थः । नकारः स्वरार्थः ।

ताच्छील्यवयोवचन । ताच्छील्यं तत्स्वभावता । वयः शरीरावस्था यौवनादि । वचनग्रहणं स्पष्टार्थम् । शक्ति. सामर्थ्यम् । एषु क्रमेणोदाहरणानि । निघ्नान इति । "गमहन" इत्युपधालोपः । चानशो[2]ऽनादेशत्वेन नादेशत्वनात्मनेपदित्वात्परस्मैपदिभ्योऽविधानम् ।

इङ्धार्योः । इङः आत्मनेपदित्वाद् धारयतेश्च कर्त्रभिप्राये शता न सिध्यति । लसार्वधातुकानुदात्तत्वं च प्राप्नोतीत्यारम्भः । अकृच्छ्रः सुखसाध्यो धात्वर्थः सोऽस्यास्तीत्यकृच्छ्री कर्तृविशेषणं चैतत् इत्याह—अकृच्छ्रिणि कर्तरि इति ।

द्विषोऽमित्रे । अमयतीत्यमित्रः शत्रुः । "अमे द्विषति चित्" (उ०) इति अक्-प्रत्ययः । चित्स्वरो हीष्यते । नञ्समासे तु परवल्लिङ्गताऽपि स्यात् । द्विषेः स्वरितेत्वात् कर्त्रभिप्राये शता न प्राप्नोतीत्यारम्भः ।

अर्हः प्रशंसायाम् । प्रथमासमानाधिकरणत्वात् पूर्वेण न प्राप्नोति सति वा तस्य लसार्वधातुकानुदात्तत्वं स्यादित्ययमारम्भः । प्रशंसायां किम् ? अर्हति चौरो वधम् ।

---

१. शकारः सार्वधातुकत्वार्थं इति नास्ति क० पु० ।
२. चानशोऽनादेशत्वेन नात्मनेपदित्वात्परस्मैपदिभ्यो विधानमिति क० पु० ।

९४६. आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु [३।२।१३४]

इतः परं क्विपमभिव्याप्य ये प्रत्ययास्ते तच्छीलादिषु ज्ञेयाः ।

९३७. तृन् [३।२।१३५]

धातोस्तृन् स्यात्तच्छीलादिषु । कर्ता कटान् ।

९४८. अलंकृञ् निराकृञ् प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् [३।२।१३६]

एषु इष्णुच् स्यात् तच्छीलादौ । अलंकरिष्णुः, चरिष्णुः इत्यादि । ताच्छीलिकेषु वाऽसरूपन्यायो न । तेन अलंकर्तेति न ।

---

आक्वेस्तच्छील । अभिविधावयमाङित्याह—क्विपमभिव्याप्येति । तत्र धात्वर्थः शीलं यस्येति तच्छीलः । यः स्वभावतः फलनिरपेक्षः प्रवर्तते सः । धात्वर्थो धर्मो यस्य तद्धर्मः । यो विनापि शीलेन स्वधर्मो ममायमिति प्रवर्तते तस्य । धात्वर्थस्य साधुकारी यो धात्वर्थं साधुकरोतीति विनापि शीलेन । तेषु कर्तृष्वित्यर्थः ।

तृन् । नकारः स्वाद्युदात्तार्थः । कर्ता कटमिति । "न लोकाव्यय" ( २।३।६९ ) इति षष्ठीनिषेधः ।

अलंकृञ् । अलंपूर्वो डुकृञ् करणे । निराङ्पूर्वोऽपि स एव । प्रपूर्वो जनी प्रादुर्भावे । उत्पूर्वो डुपचष् पाके । पत्लृ गतौ । मदी हर्षे इत्येके । रुच दीप्तौ । अपपूर्वस्त्रपूष् लज्जायाम् । वृतु वर्तने । वृधु वृद्धौ । षह मर्षणे । चर गतौ इत्यादि । आदिशब्दः प्रकारे न व्यवस्थावाची । तेन निराकरिष्णुः प्रजनिष्णुरित्यादि मध्यवर्तिनामप्युदाहार्यम् ।

यत्र सोपपदा उपात्ता (¹स्तत्रोपात्तादेव रूपाद्भवति । अन्यथोदः पचतपमद इत्येवावक्ष्यत् । किं प्रत्येकमुत्पूर्वपाठेन ? तेन समुत्पतिष्णुरिति न भवति । ये तु निरुपपदा उपात्तास्तेभ्यो यथा दर्शनं भवतीत्याहु ) । ताच्छीलिकेष्वित्यादि । निन्दको हिंसक इत्यादौ "²ण्वुल्तृचौ" (३।१।१३३) इत्येव सिद्धौ तृन् बाधनार्थम् । "निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्" ( ३।२।१४६ ) इति वुञो विधानमन्यार्थस्य ज्ञापकमन्यथा "वाऽसरूप" ( ३।१।९४ ) इत्येव पक्षे ण्वुलपि सिद्ध इति भावः । तेनालंकर्तेति नेति । ताच्छीलिकसामान्यापेक्षत्वाज्ज्ञापकस्य तृनादयो न भवन्तीत्यर्थः ।

---

१. तत्रोपात्तादेवेत्यारभ्य—इत्याहुरित्यन्तो (      ) रेखाङ्कितो नास्ति क० पु० ।

२. ण्वुलेव सिद्धौ इति क० पु० ।

## १४९. णेश्छन्दसि [३।२।१३७]

ण्यन्तादिष्णुच् स्याच्छन्दसि। लोकेऽपीति केचित्। कारयिष्णुः।

## १५० भुवश्च [३।२।१३८]

भविष्णुः। चादनुक्तेऽपि। भ्राजिष्णुः।

## १५१. ग्लाजिस्थश्च ग्स्नुः [३।२।१३९]

एभ्यो ग्स्नुः स्यात्तच्छीलादौ। चाद्भुवश्च। ग्लास्नुः। गित्वान्न गुणः। जिष्णुः। स्थास्नुः। "श्र्युकः किति" (७।२।११) इत्यत्र गकारप्रश्लेषान्नेट्। भूष्णुः।

---

णेश्छन्दसि। यदि छन्दसि तत्किमत्रोपन्यस्तमत आह—लोकेऽपीति। केचिदिति। कारयिष्णुरिति। हेतुमण्णिचि "अयामन्ताल्वाय्य" (६।४।५५) इत्ययादेशः।

ग्लाजिस्थश्च ग्स्नुः। एभ्यो ग्स्नुः स्यादिति। गकारादित्वाद् 'हशि च" (६।४।११४) इति रोरुत्वं कृतं विसर्जनीयस्तु न[1] कृतः। यदि ह्ययं कादिः क्रियेत तदा स्थास्नुरित्यत्र "घुमास्था" (६।४।६६) इतीत्वं स्यादिति भावः।

यद्येवं जिष्णुरित्यत्र "क्ङिति च" (१।१।५) इति गुणनिषेधो न स्यात्,[2] अत आह—गित्वान्न गुणः। "क्ङिति च" (१।१।५) इत्यत्र गकारोऽपि चर्त्वेन सः प्रश्लिष्यते। तथा च व्याख्यातम्। गित्किन्ङिन्निमित्ते गुणवृद्धी न स्त इति भावः।

एवमपि भूष्णुरितीड्निषेधो न स्यात्। किं कितीति वचनादत आह—"श्र्युकः क्ङिति" (७।२।११) इत्यत्र गकारप्रश्लेषादिति। तेन गिति किति ङिति चेण्निषेध इत्यर्थः।

यदि गकारः प्रश्लिष्यते, तर्हि तस्य चर्त्वस्यासिद्धत्वाद् "हशि च" (६।१।११४) इत्युत्वेन भाव्यम् ततश्च "श्र्युकः किति" (६।१।११४) इति निर्देशो नोपपद्येत। मैवम्। असंहितया निर्देशो भविष्यति। सौत्रो वेत्याहुः।

अन्ये तु कित्वमेवाश्रित्य स्था आस्था इत्याकारप्रश्लेषेणेत्वाभावं वर्णयन्ति। तदसत्। "दशेश्छन्दस्युपसंख्यानम्" दश विधीयते दङ्क्ष्णव पशव इत्यत्र कित्वात् "अनिदिताम्" (६।४।२४) इति नलोपः स्यात्। छान्दसत्वात्तदभाव इति तु ब्रह्मास्त्रम्। तस्माद् गिदेवायमित्याचार्याणामाशयः।

तथा च काशिका—"स्नोर्गित्वान्नस्य ईकारः क्ङितोरीत्वशासनात्। गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरितोः" ॥ १ ॥ इति।

---

१. नेति नास्ति क० पु०।
२. न स्यात् श्र्युकः क्ङितीति वचनादत आह—श्र्युकः कितीति गकारप्रश्लेषात् इति क० पु०।

९५२. त्रसिगृधिधृषिक्षिपेः क्नुः [३।२।१४०]

एभ्यः क्नुः स्यादुक्तेऽर्थे। त्रस्नुरित्यादि। ग्लाक्षिपचपरिमृजः ग्स्नुरिति केचित्। ग्लास्नुः। क्षेष्णुः। पक्ष्णुः। परिमार्ष्णुः।

९५३. चलनशब्दार्थादकर्मकाद् युच् [३।२।१४८]

चलनार्थाच्छब्दार्थादकर्मकाद्युच् स्यादुक्तेऽर्थे। चलनः। कम्पनः। शब्दनः। रवणः। अकर्मकात् किम्? पठिता विद्याम्।

९५४. अनुदात्तेतश्च हलादेः [३।२।१४०]

हलादेरनुदात्तेतो युच् स्यात्। वर्तनः।

---

त्रसिगृधि। त्रस्नुरिति। "नेड्वशि" (७।२।८) इति नेट्। कित्वं गृध्नुरित्यत्र गुणाभावार्थम्। परिमार्ष्णुरिति। "मृजेर्वृद्धिः" (७।२।११४) वत्वषत्वणत्वानि।

चलनशब्दार्थ। चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः शब्दः श्रोत्रग्राह्योऽर्थः। उदाहरणेषु चल कम्पने। कपि चलने। शब्द शब्दने चुरादिः। "तत्करोति" (वा०) इति णिजन्तो वा नामधातुः। रु शब्दे। चलन इति। "युवोरनाकौ" (७।१।१)।

अनुदात्तेतश्च। वर्तन इति। वृतु वर्तने। अनुदात्तेतः किम्? भविता। हलादेः किम्? एधिता।

ननु सर्वोऽपि अनुदात्तेत् हलन्त एवेति तदन्तविधिं बाधित्वा सामर्थ्याद्धलादेरेव ग्रहीष्यते तत्किमादिग्रहणेन। नैतदस्ति। जुगुप्सादिः सनन्तोऽनुदात्तेदस्ति। अवयवेऽस्वरितार्थं निङ्ग् समुदायस्य विशेषकमित्युक्तत्वात्। अतस्तद्व्यावृत्तये तदन्तविधिः स्यादित्यादिग्रहणम्।

यत्तु प्राचोक्तम्। गुपादेः सन्नन्तस्याजन्तस्य "पूर्ववत्सनः" (५।२।८६) इति निमित्तातिदेशेनानुदात्तेतो व्यावृत्तिर्मा भूदिति। तदसत्। न हि तत्र निमित्तमतिदिश्यते, किं तु पूर्वस्मिन् धातौ यन्निमित्तं तत्सना व्यवधानेऽप्यात्मनेपदं प्रवर्तयतीति स्थितम्। नैतावता सन्नन्तो धातुरनुदात्तेत् भवितुमर्हति।

तत्राहुः। एतदेवातो लोप इत्यार्धधातुके इत्यस्य परसप्तमीत्वे ज्ञापकं परसप्तमां तु प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति जुगुप्सते इत्यादो हलन्तत्वादेव भविष्यतीत्यादिग्रहणमनर्थकं स्यात्। विपर्यसप्तमी पक्षे त्वादिग्रहणं स्पष्टार्थम्। "अचो यत्" (३।१।९७) इत्यत्राच्ग्रहणं च विषयसप्तमीपक्षस्य ज्ञापकमित्युक्तम्। तदेतत्सद्वयं यथा लक्ष्यं क्वचित् किञ्चिदाश्रीयते।

९५५. लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् [३।२।१५४]

एभ्य उकञ् स्यादुक्तेऽर्थे। लाषुकः। पातुकः। स्थायुकः। घातुकः। शारुकः। इत्यादि।

९५६. जल्पभिक्षकुट्टलुण्टवृङः षाकन् [३।२।१५५]

एभ्यः षाकन् स्याद् उक्तेऽर्थे। जल्पाकः। जल्पाकी। वराकः। वराकी इत्यादि।

९५७. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् [३।२।१५८]

एभ्य आलुच् स्यात् उक्तेऽर्थे। स्पृहयालुः। गृहयालुः। पतयालुः। एते अयरचुरादयन्ताः। दयालुः। निपूर्वो द्राति। निद्रालुः। तत्पूर्वो द्रा तदो नान्तता निपात्यते। तन्द्रालुः। श्रद्धालुः। "शीङो वाच्यः" (वा०) शयालुः।

---

जल्पभिक्ष। षत्वं ङीषर्थमित्युदाहरति—जल्पाकीति। जल्पे 'ज्वलन् शब्दार्थादिति" (३।२।१४८) भिक्षेरपि "अनुदात्तेतश्च हलादेः" (३।२।१४९) इति युचि प्राप्ते कुट छेदने। लुण्ट स्तेये इत्येतयोश्चौरादिकयोः "णेश्छन्दसि" (३।२।१३७) इतीष्णुचि वृङस्तु 'आदृगमहन" (३।२।१७१) इति किक्निनोः प्राप्तयोरयं विधीयते। स्पृहि। स्पृहयालुरिति। स्पृह ईप्सायाम्। "अयामन्ताल्वाय्य" (६।४।५५) इति णेरयादेशः। पतयालुरिति। 'पत्लृ गतौ। एते त्रयश्चुरादय इति। तेन णेरयादेशेन रूपसिद्धिरिति'।

यद्येवं णिच्युपधाया गुणवृद्धी स्यातामत आह—अदन्त इति। ततश्चातो लोपस्य स्थानिवत्त्वात्तदभाव इति भावः।

दयालुरिति। दय दानगतिहिंसादानेषु। भ्वादिः। सूत्रे श्तिका निर्दिष्टः। निद्रालुरिति। निपूर्वो द्रा कुत्सायां गतौ। श्रद्धालुरिति। श्रत् पूर्वो डुधाञ् धारणपोषणयोः, न तु धेट् तस्य श्रत्पूर्वस्याप्रयोगात्।

अथ लुचेव किं नोच्यते? शपि कृते "अतो दीर्घो यञि" (७।३।१०१) इति दीर्घेण स्पृहयालुरित्यादि सिद्धेः। मैवम्। तिङीत्यनुवृत्तिपक्षे दीर्घस्यासिद्धेः। श्रद्धालुश्च न सिध्येत्। शपः श्लौ द्वित्वादिषु श्रद्दधलुरिति स्यात्।

---

१. पत्लृ गताविति नास्ति क० पु०।
२. सिद्धिरिति क० पु०।

९५८. दाधेट्सिशदसदो रुः [३।२।१५९]

एभ्यो रुः स्यादुक्तेऽर्थे। दारुः। धारुः। शद्रुः। सद्रुः।

९५९. सृघस्यदः क्मरच् [३।२।१६०]

एभ्यः क्मरच् स्यादुक्तेऽर्थे। सृमरः। घस्मरः। अद्मरः।

९६०. भञ्जभासमिदो घुरच् [३।२।१६१]

एभ्यो घुरच् स्यात्। भञ्जेः कर्मकर्तरि। घित्त्वात् कुत्वम्। भङ्गुरः। भासुरः। मेदुरः।

९६१. विदिभिदिच्छिदेः कुरच् [३।२।१६२]

एभ्यः कुरच् स्यात्। वेत्तेरत्र ग्रहणम्। विदुरः। भिदिच्छिदोः कर्मकर्तरि। भिदुरः। छिदुरः।

९६२. इण्नशजिसर्तिभ्यः क्वरप् [३।२।१६३]

एभ्यः क्वरप् स्यादुक्तेऽर्थे। पित्त्वात्तुक्। इत्वरः। नश्वरः। जित्वरः। सृत्वरः। सृत्वरी।

९६३. गत्वरश्च [३।२।१६४]

अयं निपात्यते। गत्वरी।

९६४. जागुरूकः [३।२।१६४]

जागर्तेरूकः स्यात्। जागरूकः।

---

दाधेट्सिशद। डुदाञ्दोदेडां त्रयाणां ग्रहणमभिधानादित्याहुः। भञ्जेवा भञ्जेः कर्मकर्तरि इति। अभिधानस्वाभाव्यमत्र हेतुः। एवमुत्तरसूत्रेऽपि।

विदिभिदि। वेत्तेरिति। विद ज्ञाने इत्यादादिकस्यैव वेत्यर्थः। कर्मकर्तरीति। माघस्तु शुद्धे कर्तरि प्रायुङ्क—"प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाः दुरयाचितमङ्गनाः" इति।

इण्नश। पित्त्वाल्लुक् इति। "ह्रस्वस्य पिति कृति" (६।१।७१) इति। पित्त्वादनुदात्तश्च।

सृत्वरीति। "टिड्ढाणञ्" (४।१।१५) इति ङीप्। गत्वरीति। क्वरपनुनासिकलोपश्च निपातनात्। ङीप् प्राग्वत्।

जागुरूकः। पञ्चम्यन्तपाठमाश्रित्य व्याचष्टे—जागर्तेरिति। अन्ये तु जागरूक इति सिद्धरूपपाठेन निपातनमेतदित्याहुः। तेषामुत्तरसूत्रे उको नानुवर्तेत।

---

१. प्रयतनायेति क० पु०।

९६५. यजजपदशां यङः [३।२।१६६]

एभ्यो यङन्तेभ्यो ऊकः स्यात् । यस्य हलः । यायजूकः । जञ्जपूकः । दन्दशूकः । "वदेश्च" (वा०) वावदूकः ।

९६६. नमिकम्पिस्म्यजसकमहिंसदीपो रः [३।२।१६७]

एभ्यो रः स्यात् । नम्रः । कम्प्रः । स्मेरः । जसु मोक्षणे नञ्पूर्वः । अजस्रम् । सततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः ।

९६७. सनाशंसभिक्ष उः [३।२।१६८]

सन्नन्तादाशंसिभिक्षिभ्यां च उः स्यात् । रिरंसुः । आशंसेरिच्छार्थस्य ग्रहणम् । आशंसुः । भिक्षुः ।

९६८. विन्दुरिच्छुः [३।२।१६९]

एतौ निपात्यौ । वेदनशीलो विन्दुः । एषणशील इच्छुः । "भाषायां धाञ्कृसृजनिनमिगमिभ्यः किकिनौ वाच्यौ" (वा०) । तौ च लिड्वत् । द्वित्वादि । दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः । जग्मिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वाच्यौ" (वा०) सासहिः । वावहिः । चाचलिः । पापतिः ।

---

यजजप । दशेर्यङि कृतनलोपस्यानुकरणं दशेति । यायजूक इति । यजेर्यङि द्वित्वादि । "दीर्घोऽकितः" (७।४।८३) अतो लोपे "यस्य हलः" (६।४।४९) इति यलोपः । जपदंशोस्तु "जपजभदहदशभञ्जपशां च" (७।४।८६) इति नुक् ।

सनाशंसभिक्ष । सनिति प्रत्ययग्रहणात्तदन्तग्रहणमित्याह—सन्नन्तादिति । षणु दाने च षण संभक्तौ इति धातोस्तु ग्रहणं न भवति । गर्हादिषु जिगीषुशब्दस्य पाठात् ।

इच्छार्थस्येति । आङ्पूर्वस्य शसेस्तत्रैव रूढेः । तेन स्तुत्यर्थस्य न भवतीत्याशयः ।

विन्दुरिच्छु. । वेत्तेर्ज्ञानार्थस्य नुमागमः । इषेरिच्छार्थस्य छत्वमुप्रत्ययश्च निपात्यते ।

भाषायामिति । दधिरिति । आतो लोपः । जज्ञिरिति । "गमहन" (६।४।९८) इत्युपधालोपः । नेमिरिति । एत्वाभ्यासलोपौ । सासहिरित्यादि । यङि अतो लोपे यलोपः । पापतिरिति । "नीग्वञ्चु[1]" (७।४।८४) इति नीक् तु न भवति "सासहिवावहिचाचलिपापतीनाम्" इति वार्त्तिकेन नीगभावस्य निपातनात् ।

---

१. नीगधिततो तु न भवति ।

९६९. स्वपितृषोर्नजिङ् [३।२।१७२]

आभ्यां नजिङ् स्यादुक्तेऽर्थे। स्वप्नक्। तृष्णक्। तृष्णजौ। धृषेोऽपीति केचित्। धृष्णक्।

९७०. शृवन्द्योरारुः [३।२।७३]

आभ्यामारुः स्यात्। शरारुः। वन्दारुः।

९७१. भियः क्रुक्लुकनौ [३।२।१७४]

भीरुः। भीलुकः। "क्रुकन्नपि वाच्यः" (वा०) भीरुकः।

९७२. स्थेशभासपिसकसो वरच् [३।२।१७५]

एभ्यो वरच् स्यात्। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः। प्रमद्वरोऽपीति केचित्।

९७३. यश्च यङः [३।२।१७६]

यातेर्यङन्तात् वरच् स्यात्। अतो लोपः। तस्य "न पदान्ते" (१।१।५८) इति यलोपं प्रति स्थानिवत्त्वाभावात् "लोपो व्योर्वलि" (६।१।६६) इति यलोपः। पुनर्यङोऽकारलोपस्य स्थानिवत्त्वात् आतो लोपे प्राप्ते "न पदान्त" (१।१।५८) इति वरचि यङ्वर्णनिमित्त आतो लोपो न। यायावरः

९७४. भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् [३।२।१७७]

एभ्यस्तच्छीलादौ क्विप् स्यात्। विभ्राट्। भाः। धूः। विद्युत्। ऊर्क्। पूः। जवतेर्दीर्घश्च। जूः। ग्रावस्तुत्।

---

स्वपितृषोर्नजिङ्। तृष्णक् इति। ङित्वान्न गुणः। इकार उच्चारणार्थः। धृषेोऽपीति केचित्। धृषेश्चेति वक्तव्यमिति वार्तिकात्। केचिदिति परमतम्।

स्थेशभास। ईश्वर इति। "नेड्वशि" (७।२।८) इतीडभावः। पेश्वर इति। पिशृ गतौ।

यश्च यङः। यायावर इति। या प्रापणे। यङि द्वित्वम्। वरेऽतो लोपः। यलोपः। आतो लोपे प्राप्ते इदमेव वरे विधौ प्रतिषेधवचनं ज्ञापकं यङो यकारलोपे कृते तदवयवस्याकारस्याप्यस्ति प्रत्ययत्वम् इति।

भ्राजभास। भ्राज् दीप्तौ। भास् दीप्तौ। धुर्वी हिंसायाम्। द्युत दीप्तौ। ऊर्ज बलप्राणनयोः। पॄ पालनपूरणयोः। जु गतौ सौत्रः। ग्रावपूर्वः। ष्टुञ् स्तुतौ। "क्विप् च"

## ६७५. अन्येभ्योऽपि दृश्यते [३।२।१७८]

अन्येभ्योऽपि क्विप् दृश्यते तच्छीलादौ। भित्। छित्। "क्विब्वचि-प्रच्छ्यायतस्तु कटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च" (वा०)। वक्त्यनया वाक्। पृच्छति प्राट्। आयतं स्तौतीति आयतस्तूः। कटं प्रवते कटप्रूः। जवति जूः। श्रयन्त्येतां श्रीः। "द्युतिगमिजुहोतीनां द्वे"। (वा०) द्योतते दिद्युत्। गच्छति जगत्। "जुहोतेर्दीर्घश्च" (वा०) जुहोत्यनया जुहूः। "ध्यायतेः संप्रसारणं च" (वा०) धीः। दृ भये। अस्य ह्रस्वद्वित्वे च। दीर्यतीति ददृत्। सुद्रुपरिव्रजां दीर्घश्चेति केचित्। स्रवति स्रूः। द्रवति द्रूः। परिव्रजति परिव्राट्। दृशिग्रहणात् मित्रं ह्वयति मित्रह्वः। वयति ऊः। आप्यायते आपीः इत्यादि।

---

(३।२।७६) इत्येव सिद्धेऽपि तस्यैवायं प्रपञ्चः। विभ्राडिति। "व्रश्च" (८।२।३६) इति षत्वम्। जश्त्वचर्त्वे।

धूरिति। "राल्लोपः" (६।४।२१) इति वलोपः। "र्वोरुपधायाः" (८।२।७६) इति दीर्घः। ऊर्क् इति। चोः कुः। "रात्सस्य" (८।२।२४) इति नियमान्न संयोगान्तलोपः। पूरिति "उदोष्ठ्यपूर्वस्य" (७।१।१०२) इत्युत्वम्। "र्वोरुपधायाः" (८।२-७६) इति दीर्घः। "जवतेर्दीर्घश्च" इति वार्त्तिकाद् दीर्घः। सूत्रे जूरिति पठित्वा दीर्घनिपातनमाश्रयणीयमित्यर्थः।

अन्ये तु वक्ष्यमाणदृशिग्रहणस्येहाप्यपकर्षाद् दीर्घः इत्याहुः[1]।

तथा च दृशिग्रहणप्रपञ्चे "क्विब्वची" (वा०) इत्यत्र दीर्घप्रदर्शनार्थं पुनर्जूग्रहणम्। ग्रावाणं स्तौतीति ग्रावस्तुत्। "ह्रस्वस्य" (६।१।७१) इति तुक्। ग्रावशब्दस्य सप्तमीनिर्देशाभावेऽप्युपपदसंज्ञेष्यते।

अन्ये तु सूत्रं दीर्घोच्चारणान्नातिरिच्यते इत्युक्तं प्राक्। श्रयन्त्येतां। श्रीरिति। वस्तुकथनमेतत्। विग्रहस्तु श्रीयते जनैरिति श्रीरिति।

द्युतिगमि। दिद्युदिति। "द्युतिस्वाप्योः संप्रसारणम्" (७।४।६७)। जगदिति। "गमः क्वौ" (६।४।४०) इति मलोपे तुक्। अत्र द्वे च इति चकारेण दीर्घः समुच्चीयमानो द्युतिगम्यो नं भवति। दीर्घश्रुत्याऽचश्चेत्युपस्थानादचा च तदन्तविधेराश्रयणाज्जुहोतेरेवाजन्तस्य भवतीत्याशयेनाह—जुहोतेर्दीर्घ इति। न त्वेतद्वचनान्तरम्। जुहोत्यनयेति करणस्य कर्तृत्वविवक्षया। एवं धीरित्यत्रापि। पुरुषो ध्यायति अनया धीरिति

---

१. इत्याहुरिति नास्ति क० पु०।

९७६. भुवः संज्ञान्तरयोः [३।२।१७९]

भुवः क्विप् स्यात् संज्ञायामन्तरे च । मित्रभूः । धनिकाधमर्णयोरन्तरेऽस्तीति प्रतिभूः ।

९७७. विप्रसंभ्यो ड्वसंज्ञायाम् [३।२।१८०]

एभ्यः पराद्भुवो डुः स्यान्न तु संज्ञायाम् । विभुः । प्रभुः । संभुः । "मितद्र्वादेश्च" ( वा० ) मितद्रुः । शंभुः । स्वयंभुः ।

९७८. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे [३।२।१८२]

दाशादेष्ट्रन् स्यात् करणेऽर्थे । दात्यनेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

---

हरदत्तः । धीरिति । "हलः" ( ६।४।२ ) इति दीर्घः । परिव्राडिति । परो "व्रजेः षः पदान्ते" ( वा० ) इति षत्वम् । वचनादनन्त्यस्यापि दीर्घः । मित्रहूरिति । उरिति । दीर्घस्त्वस्यापाणिनीयः । यथोक्तम्—"षत्वतुकोः" ( ६।१।८६ ) इति भाष्ये वेञो प्रत्यये उरिति प्राप्नोति उदिति चेष्यते इति । हरदत्तमाधवोऽप्येवम् । यद्वा ताच्छीलिके वञौ दृशिग्रहणाद्दीर्घ एव । अन्यत्र तुगिति व्यवस्थाप्यम् । यजादित्वात् संप्रसारणे दीर्घः । प्रापारिति । दृशिग्रहणादेव संप्रसारणम् । यलोपः ।

भुवः संज्ञान्तरयोः । मित्रं भवति मित्रं भवते वा । संज्ञेयं कस्यचित् । अन्तरो मध्यवर्ती उच्यते । स चेह दृशिग्रहणानुवृत्तेर्विशिष्टविषयो गृह्यते न ग्रामाद्यन्तर्वर्तीत्याह—धनिकाधमर्णयोरिति । धनिको नाम यदीयं धनं धार्यते । यो धारयति सोऽधमर्णः । तयोरन्तरेऽस्तीति विश्वासार्थम् । न चात्रापि संज्ञात्वादेव सिद्धिः । यावद्द्रव्यभाविनी हि संज्ञा । इयं तु सत्यपि ऋणप्रयोगे निवर्तते इति ।

विप्रसंभ्यो । असंज्ञायां किम् ? विभूर्नाम कश्चित् । "मितद्र्वादिभ्यः" ( वा० ) मितादिभ्यः द्रवत्यादिभ्य इत्यर्थः । मितद्रुरिति । मितं द्रवति । शंभुरिति । अन्तर्भावितण्यर्थोऽत्र भवतिः । सुखं भावयतीत्यर्थः शं सुखरूपो वा भवतीति । शंभुः । शं भवत्यस्मादिति व्युत्पत्तिस्त्वपादाने डुप्रत्ययाभावाच्चिन्त्येति माधवः ।

दाम्नीशस । दाप् लवने । दैप् शोधने इत्यस्य त्वग्रहणमनभिधानात् । एवं युज समाधावित्यस्यापि । मेढ्रमिति । "हो ढः" ( ८।२।३१ ) षत्वष्टुत्वढलोपाः । दंष्ट्रेति ।

९७९. अर्तिलूधूसूखनसहचर इत्रः [३।२।१८४]

एभ्यः करणे इत्रः स्यात् । अरित्रम् । लवित्रम् । इत्यादि ।

९८०. पुवः संज्ञायाम् [३।२।१८५]

अस्मात् करणे इत्रः स्यान्नाम्नि । पवित्रं दर्भः ।

९८१. उणादयो बहुलम् [३।३।१]

उणादयः प्रत्यया वर्तमाने संज्ञायां च बहुलं स्युः । ते च केचिद् विहिताः केचिन् प्रयोगादुन्नीयन्ते ।

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥ १ ॥"

"कृवापाजिमिस्वदिसाध्यशूभ्य उण्" । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधु । आशु । "गमेर्डोः" गौः । "ग्लानुदिभ्यां डौः" । ग्लौः । नौः ।

---

पित्वेऽपि ङीप् न भवति । अनित्यः पितां ङीपित्युक्तत्वात् । अन्ये त्वजादित्वाट्टाप-मित्याहुः । नद्ध्रीति । "नहो धः" (८।२।३४) इति धत्वम्, "झषस्तयोर्धोऽधः" (८।२।४०) इति । ष्टुत्वम् । सूत्रे दशनहेति निर्देशो ज्ञापकः क्वचिदक्कित्यपि दंशेर्नलोपो भवति इति । तेन दशने इति ल्युट्यपि नलोपो न भवति । [ष्ट्रनर्थं तु निपातनं न भवति । "शुनो दन्त दंष्ट्रा" इति निर्देशात् । येऽत्र सेटस्तेषां "तितुत्रतय" (७।२।९) इति निषेधः।

अर्तिलूधू । अरित्रमिति । ऋ गतौ । गुणः । आदिपदाद् धू विधूनने इति कुटादे-ङित्त्वाद् उवङि धवित्रम् ।

अन्ये त्वाहुः । विदिभिदिछिदेर्ङिदिति प्रकृतस्य धुरचोङिदित्यतिदेशेनैव सिद्धे प्रत्ययान्तरकरणमातिदेशिकं ङित्त्वमनित्यमिति ज्ञापनार्थम् । तेनास्यापि गुणो भवति । धवित्रमिति । तथा च प्रयोगे प्राणाः वै धवित्राणि इति ।

न चाकुटादेरयं प्रयोगः । यत इत्र विधौ कुटादेरेव ग्रहणं स्थितम्, निरनुबन्ध-कत्वात् ।

तथा च न्यासः—धूञ् कम्पने । पूङ् प्राणिगर्भविमोचने । पूङ् प्राणिप्रसवे । इत्येतेषां निरनुबन्धकपरिभाषया ग्रहणं न भवतीति ।

पुवः संज्ञायाम् । पवित्रं दर्भ इति । येनाज्यमुत्पूयते यच्चानामिकायां यज्ञादौ वेष्ट्यते तदुच्यते ।

उणादयो बहुलम् । उण् वक्ष्यमाण आदिर्येषान्ते उणादयः । ननूणादयः "कृवा-पाजि" इत्यादिशास्त्रान्तरेणैव विहितास्तत्किमनेनेत्याह—वर्तमाने संज्ञायां चेति ।

१. सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ०)

सेतुः । तन्तुः । क्रोष्टा इत्यादि ।

---

किमर्थं तर्हि बहुलग्रहणमत आह—ते चेति। उणादयो हि पञ्चपाद्यां केचिदेव कुतश्चिदेव विहिताः, न सर्वेणापि प्रकृत्यन्तराद् बहुलग्रहणात्त्वनुपात्ता अपि ऊह्यन्ते यतो बहूनर्थान् लातीति बहुलम्। यदुक्तम्— । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादि।

ननु किमनुक्तोन्नयनेन यावता पञ्चपाद्यां यावतो यावद्भ्यो यथा विहितास्तैरेवालमत आह—प्रयोगादुन्नीयते इति। लोके वेदे च निरूढाः संज्ञाशब्दा. उपलभ्यन्ते ते चानादित्वात् साधुत्वेनानुगन्तव्याः। न चैतद् बहुलग्रहणमन्तरेण शक्यमित्याशयः।

अथ किमसिद्धं यदूह्यते तद्दर्शयति संज्ञास्विति। अनादिप्रयुक्तास्वेव न सर्वासु तत्र प्रकृत्यादिविवेकोपायादनेनाङ्गुल्यादितासु शङ्कुलादिषु यत्र परभागः सिद्धेन[1] प्रत्ययेन केनचित् सदृशः अतः तत्र तं भाग प्रत्ययं कल्पयित्वा परिशिष्टो भागः प्रकृतिधातुत्वेनोह्यः। दृषेऽत्र्वजिति प्रत्ययं दृष्ट्वा शङ्किः प्रकृतिरुह्यते तेन शङ्कुलेति सिद्धम्।

यत्र च पूर्वो भागो धातुना केनचित् प्रसिद्धेन सिद्धस्तत्र तं भागं प्रकृतिं कल्पयित्वा परिशिष्टो भागः प्रत्ययत्वेनोह्यः। यथा ऋफिडः ऋफिड्ड इति। ऋधातोः फिडफिड्डौ प्रत्ययौ।

कथं तर्हि गुणाद्यभावोऽत आह—कार्याद्विद्यादिति। कार्यं गुणाभावादिलक्षणं दृष्ट्वाऽनुबन्धं ककारादिलक्षणं विद्यादूहेत। तेन फिडफिड्डौ कितौ द्रष्टव्यौ इत्यर्थः। उपलक्षणञ्चैतत्। आगमादेशनिकाराणामपि। एतदूहात्मकं शास्त्रमुणादिष्वनुक्तलक्षणेषु ज्ञेयमित्यर्थः। केचिद्विहिता इत्युक्तम्, तानुदाहरति—

कृवापाजि। कारुरिति। करोतेरुणि णित्वाद् वृद्धिः शिल्पिनि कारके। वायुः। वा गत्यर्थः। पै ओवैशोषणे इति वा। आतो युक् वात उच्यते। पिबन्त्यनेनौषधमिति पायुर्गुदम्। जयति रोगानिति जायुरौषधम्। वृद्धायो। मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम्। स्वदते इति स्वादु मिष्टम्। साध्नोति परकार्यमिति साधुः। अश्नुते इत्याशुः व्रीहिभेदः शीघ्रार्थश्च। एवमन्येऽप्यनुगन्तव्यम्। गौरिति। "गोतो णित्" ( ७।१।६० ) इति णित्वाद् वृद्धिः।

सितनिगमि। सिनोति जलं सेतुः। तनोति तन्यते वा तन्तुः। "तितुत्रतथ" ( ७।२।६ ) इति नेट्। गच्छति गन्तुः। मसीपरिणामे। मस्यति मस्तुः दधिद्रवः। षच समवाये॥ च ते सक्तुः। अवति ओतुः। "ज्वरत्वर" ( ६।४।२० ) इत्यूट्। बाहुलकाद् गुणः। धत्ते धातुः। क्रोशति क्रोष्टा।

---

१, सिद्धेनेति नास्ति ह० पु०।

२. अवितृस्तृतन्त्रिभ्य ईः (उ०)

अवीः । तरीः । स्तरीः । तन्त्रीः ।

३. लक्षेर्मुट् च (उ०)

लक्ष्मीः ।

४. संस्त्याने स्त्यायतेर्ड्रट् (उ०)

संस्त्यानं स्त्रीत्वम् । टित्वान् ङीप् । स्त्री ।

५. जृविशिभ्यो झच् (उ०)

"झोऽन्तः" (७।१।३) जरन्तः । वेशन्तः ।

६. गण्डिमण्डोजनिनन्दिभ्यश्च (उ०)

गण्डयन्तः । मण्डयन्तः । जनयन्तः । नन्दयन्तः ।

७. श्रुदक्षिस्पृहिगृहिदृजिभ्य आप्य (उ०)

श्रवाप्यः । दक्षाप्यः । स्पृहयाप्यः । गृहयाप्यः । दराप्यः । जयाप्यः ।

---

अवितृ । अवति[1] गर्भमवीः । अवी स्त्रीधर्मिणी विदुः । तरीर्नौः । स्तरीः शयनम् । तन्त्रि कुटुम्बधारणे । तन्त्रीः स्नायुः ।

लक्षेर्मुट् च । चादीच्च । लक्ष्यते इति लक्ष्मीः ।

संस्त्याने । संस्त्यानं शुक्रशोणितयोः सन्धीभावः । स्त्यै ष्ट्यै शब्दसंघातयोरित्यस्तो ल्युटि निष्पन्नत्वात् । तच्च स्त्रियामेव सम्भवतीति फलमतो व्याचष्टे--संस्त्यानं स्त्रीत्वमिति । ड्रोबिति । टित्वात् । स्त्रीति । संस्त्यायतेऽस्यां शुक्रशोणिते इति स्त्री ङित्वाट्टिलोपः । वलि लोपः ।

जृविशि । जीर्यति जरन्तः । महिषो भूतग्रामो वेति उणादिवृत्तिः । विशत्यस्मिन् वेशन्तः पल्वलम् ।

गण्डिमण्डि । गडि वदनैकदेशे । मडि भूषायाम् । इदितौ । ण्यन्तयोस्तयोर्ग्रहणम् । गण्डयन्तः । मेघः । "अयामन्ता" (६।४।५५) इति णेरयादेशः । "मण्डयन्तः भूषणम्" जनयन्तः । उणादिवृत्तिषु जनिर्न दृश्यते जिरेव पठ्यते । जयन्तः पाकशासनिः । इत्यमरः । नन्दयन्तो नन्दकः ।

श्रुदक्षि । श्रवाप्यो यज्ञपशुः । दक्ष वृद्धौ । दक्षाप्यः । गडो गृध्रश्च । स्पृहिगृहो अदन्तौ चुरादिण्यन्तौ तत्र णेरयादेशः । स्पृहयाप्यः । गृहयाप्यः । गृहस्वामी । दीर्यति दराप्यः । विदीर्णभूः । जयति जयाप्यः ।

---

१. भवतेर्गर्भमवीरिति क० पु० ।

८. स्तनिदृषिपुषिगदिमदिहृदिभ्यो णेरित्नुच् (उ०)

एभ्यो ण्यन्तेभ्य इत्नुच् स्यात् । अदन्तत्वान्न वृद्ध्यादि । स्तनयित्नुः । दूषयित्नुः । पोषयित्नुः । गदयित्नुः । मदयित्नुः । हृदयित्नुः ।

६. कॄगॄस्तॄजागृभ्यः क्विन् (उ०)

कीर्विः । गीर्विः । स्तृविः । अविचिण्णलित्युक्तेर्न गुणः । जागृविः । असुनादयः प्रागुक्ताः ।

इति पूर्वकृदन्तम्

अथोत्तरकृदन्तम्

६८२. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् [३।३।१०]

क्रियायां क्रियार्थायामुपपदे धातोर्भविष्यति तुमुन्ण्वुलौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । पुनरण्वुक्तेर्ज्ञाप्यते नात्र वाऽसरूपन्यायेन तृजादय इति ।

---

कॄगॄस्तॄ । कीर्तिरिति । "ऋत इद्धातोः" ( ७।१।१०० ) कॄगॄभ्यां भावे । स्तृविरध्वर्युः । दीर्घान्तस्य स्तीर्विरित्यपीच्छन्ति । जागृविर्वह्निः । प्रबुद्धश्च । असुनादयः प्रागुक्ताः इति । तेऽप्यौणादिका एवेत्यर्थः ।

एवं दिङ्मात्रेणोणादीन् प्रदर्श्य कृत एव प्रकृतानाह—

तुमुन्ण्वुलौ । क्रिया अर्थः प्रयोजनमुद्देश्यं यस्याः सा क्रियार्था क्रिया तस्याम् । मान्तत्वादिति । "कृन्मेजन्तः" ( १।१।३६ ) इति वचनात् । कृष्णं द्रष्टुमुपयातीति भविष्यद्दर्शनार्थमित्यर्थः । कृष्णदर्शनार्थोपगमनक्रियात्रोपपदम्, तुमुन्नन्तस्याव्ययत्वात् "न लोकाव्ययनिष्ठाखलर्थ" इति कर्मणि षष्ठी न । कृष्णं दर्शक इति । द्रक्ष्यन्नित्यर्थः । "अकेनोः" इति न षष्ठी । तत्र ण्वुल् कर्तरि विधीयते । "कर्तरि कृत्" इति । तुमुन् पुनर्भावे । कुत एतत् "तुमर्थाच्च भाववचनात्" इत्यत्र तुमर्थग्रहणात् ।

यदि तुमुन्नपि कर्तर्येव स्यात् तदा सेसेनादयोऽपि "कर्तरि ( कृत्"[1] इत्येव कर्तरि भवन्ति, किं तुमर्थे इत्यनेन । अतस्तुमर्थग्रहणात् कर्तुस्तावदपकृष्यते न चान्योऽन्योऽर्थो ) निर्दिश्यते । "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति" (प०, धातोश्च स्वार्थो नाम भाव एवेति ।

अथ किमर्थं ण्वुल् विधीयते यावता "ण्वुल्तृचौ" इति सामान्येन विहित एव । सत्यम् । क्रियार्थोपपदेन भविष्यदर्थे लृटा परत्वात् ण्वुल् मा बाधि इति पुनर्विधीयते ।

---

१. इतित्यारभ्य–नान्योऽर्थो इत्यन्तो (        ) रेखाङ्कितो नास्ति क० पु० ।

९८३. समानकर्तृकेषु तुमुन् [३।३।१५८]

अक्रियार्थोपपदार्थमेतत्। इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात्। इच्छति भोक्तुं वष्टि वाञ्छति वा। इच्छन् करोतीत्यादावप्रयोगान्न।

९८४. शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् [३।४।६५]

एषूपपदेषु धातोस्तुमुन् स्यात्। शक्नोति भोक्तुम्। एवं धृष्णोतीत्यादौ अस्ति भवति विद्यते वा भोक्तुम्।

---

तुमुना न बाधः शङ्कनीयो भिन्नार्थत्वात् कर्तरि ण्वुल् तुमुन् तु भावे इत्युक्तम्। एवमपि न विधेयः, यतो वाऽसरूपविधिना तुमुन्विषये ण्वुलपि सिध्येत् इत्याशङ्क्य ज्ञापनार्थं हीदमित्याह—पुनर्ण्वुलुक्तेर्ज्ञायते इति।

किं तदाह—नात्रेति। अत्र क्रियार्थायां क्रियायां भविष्यति च वाऽसरूपविधि-र्नास्तीति ज्ञाप्यते। तेन कर्ता व्रजति विक्षिपको व्रजतीत्यादि न भवतीत्यर्थः।

क्रियायां किम्? भिक्षिष्ये इत्यस्य जटा। क्रियार्थायां किम्? धावतस्ते पति-ष्यति दण्डः। अस्त्यत्र धावनक्रियोपपदं न त्वसौ दण्डपातनार्थं धावति उद्देश्ये तादर्थ्यं विवक्ष्यते न हेतुमात्रेण।

समानकर्तृकेषु। अक्रियार्थोपपदार्थमेतदिति। इच्छति भोक्तुमित्यादौ हि नेच्छाया भुजिं प्रति तादर्थ्यं प्रतीयते इच्छायाः प्रवृत्तिसामान्ये हेतुत्वस्यावधारितत्वेनाप्रतिपाद्य-मानत्वात्। इच्छाविषयत्वं चोद्देश्यत्वं उद्देश्यसाधनत्वं च तादर्थ्यं न चेच्छापि इष्य-माणविषयिणी अभेदेन नात्माश्रयात्, भेदे वाऽनवस्थानादतस्तुमुन्ण्वुलावित्यनेन न सिध्यतीत्ययमारम्भ इत्यर्थः। अस्तु वा तादर्थ्यं तदाऽप्युपलक्षणमेतत् प्रयोजनान्तर-स्यापि। समानकर्तृकेषु वक्ष्यामीति पुनस्तुमुन् विधीयते। 'इच्छार्थेषु लिङ्लोटौ' (३।३।१५७) च परत्वात् प्राप्नुतस्तौ च मा भूतामिति। ण्वुलपि मा भूदिति च। एककर्तृकेष्विति। तुमुन् प्रकृत्यर्थस्येच्छायाश्च यद्येकः कर्तेत्यर्थः। तेन देवदत्तस्य भोजन-मिच्छतीत्यत्र न भवति। इच्छन् करोतीत्यादाविति।

ननु भावे तुमुन् विधीयते स कथं कर्तरि स्यात्? एवं तर्हि उपलक्षणमेतत्। इच्छना क्रियते इत्यत्र (कर्माविवक्षायां[1] भावे प्रसङ्गः। अप्रयोगान्नेति। प्रयुक्तानां हि इह अनुशासनम्, न चेच्छन्) कर्तुमिति क्वचित् प्रयोगो दृश्यते इत्यर्थः।

शकधृष। अयमप्यक्रियार्थोपपदार्थ आरम्भः। न हि शक्नोति भोक्तुमित्यादौ

---

१. मानवर्द्धियोर्यो इति क० पु०।

२. कर्माविवक्षायामित्यारभ्य—न चेच्छन् इत्यन्तो ( ) रेखाङ्कितो नास्ति क० पु०।

## ९८५. कालसमयवेलासु तुमुन् [३।३।१६७]

एषु धातोस्तुमुन् स्यात्। कालः समयो वेला वा भोक्तुम्।

## ९८६. भाववचनाश्च [३।३।११]

क्रियार्थायां क्रियायां भविष्यति घञादयः स्युः। जयाय याति। पाकाय व्रजति।

## ९८७. पदरुजविशस्पृशो घञ् [३।३।१६]

एभ्यो घञ् स्यात् कालत्रये। पचाद्यजादेरपवादः। पद्यतेऽसौ पादः। रोगः। वेशः। स्पर्शः।

---

क्रियार्थोपपदता गम्यते किं तह्यर्थान्तरम्। यतः शक्नोति भोक्तुम्। धृष्णोति। जानाति इति प्रावीण्यं गम्यते। ग्लायतीति तदशक्तिः। घटते अर्हतीति योग्यता। आरभते क्रमते भोक्तुम् इति भुजेराद्यावस्था। लभते इत्यप्रत्याख्यानम्। अस्तीत्यादौ संभवमात्रमिति। अर्थग्रहणं त्वनन्तत्वादस्तिनैव संबध्यते, न शकादिभिरित्याशयेनोदाहरति—अस्ति भवति विद्यते वा भोक्तुम्।

कालसमयवेलासु। पर्यायोपादानमर्थोपलक्षणार्थम्। तेनानेहायोगेऽप्युदाहार्यम्। प्रैषादिग्रहणं चेहानुवर्तते। तेन यत्र ते गम्यन्ते तत्र भवति। भूतानि कालः पचतीति। वाऽसरूपविधेरधिकार इति वचनाल्ल्युडपि भवति कालो भोजनस्येति। गम्यते ह्यत्र प्रैषः। तस्माद् भवान् भुङ्क्तामिति वाक्यार्थान्।

भाववचनाश्च। "स्वरितेनाधिकारः" (१।३।११) इति वचनाद् भावे इत्यधिकृत्य विहिता एव गृह्यन्ते इत्याह—घञादय इति। आदिपदेनाजपावरि।

यद्यपि विहिता एव ते स्वलक्षणैस्तथापि क्रियार्थोपपदेन तुमुनाऽस्मिन् विषये घञादयो बाध्येरन्नित्ययमारम्भः। लृट् तु भविष्यद्विषयोऽप्यत्र न[1] भवति। स हि शुद्धे धात्वर्थे विधीयते। धात्वर्थस्य च सिद्धतायां घञादय इति। यागाय यातीति। यष्टुं यातीत्यर्थः।

"तुमर्थाच्च भाववचनात्" (२।३।१५) इति चतुर्थी। वचनग्रहणं याभ्यः प्रकृतिभ्यः येन विशेषेण घञादयो विहितास्ते तत्रैव विषये साधवो नान्यत्रेत्येवमर्थम्। यथोक्। ऋदोरप्। हस्तादाने चेरस्तेये इति न वर्णान्तरान्न वा विशेषान्तरे भवति।

पदरुज। कालत्रये इति। भविष्यतीति निवृत्तमिति भावः। पचाद्यजादेरिति। उत्सर्गस्य पचाद्यचस्तदपवादाना शवुलादीनां चेत्यर्थः। पद्यतेऽसाविति। करणस्यात्र कर्तृत्वं विवक्ष्यते। कथं तर्हि पदम् "पादस्य पदाज्याति" (६।३।५२) इति

१. नेति नास्ति क० पु०।

९८८. सृ स्थिरे [३।३।१७]

सर्तेः स्थिरे कर्तरि घञ् स्यात्। सारः। "व्याधिमत्स्यबलेषु च" (वा०) "उपसर्गस्य घञ्यबहुलम्"। अतीसारः। विसारः। प्रसारः।

९८९. भावे [३।३।१८]

धात्वर्थे वाच्ये धातोर्घञ् स्यात्। पाकः।

निर्देशात्। "खनो घ च" (३।३।१२५) इत्यत्र घित्वसामर्थ्यादन्यतोऽपि घ इत्याहुः। रुजति विशति स्पृशतीति विग्रहः। इगुपधलक्षणे के प्राप्ते अत्र वार्त्तिकम्। "स्पृश उपतापे इति वक्तव्यम्"। उपतापो रोगः। तत्र घञि "ञ्नित्यादिर्नित्यम्" (६।१।१९७) इत्याद्युदात्तः स्पर्शशब्दो भवति। अन्यत्र पचाद्यचि चित्वादन्तोदात्त एव।

सृ स्थिरे। "सृ इत्यविभक्तिको निर्देशः" इति हरदत्तोक्तेः सुरित्यनाकरः पाठः। सर्त्तेरिति। भ्वादेर्ह्वादेश्च ग्रहणमिहेति स्थितम्। स्थिर इति कालान्तरस्थायिपदार्थं इत्युच्यते। स हि चिरं तिष्ठन् कालान्तरं सरति स्पृशतीति सार उच्यते खदिरादेः। स्थिर इति च सर्त्तेः कर्तृविशेषणं नोपपदम्।

अर्धर्चादिषु सारशब्दस्य पाठादित्यभिप्रेत्याह—स्थिरे कर्तरीति। व्याधीत्यादि अस्थिरार्थम्। अतीसार इति। शरीरान्तरवस्थितं रुधिरादिद्रव्यमतिशयेन सारयतीति व्याधिरुच्यते। अन्तर्भावितण्यर्थोऽत्र सरतिः। एवं बलेऽपि[4] ज्ञेयम्। सारयति चेष्टयतीति कृत्वा बलवान् हि चेष्टते। विसारो मत्स्यः। विविधं सरतीति कृत्वा। बहुलवचनाच्च दीर्घाभावः।

भावे। भवनं भावः। क्रियासामान्यमुच्यते न भवतेरेवार्थः इति व्याचष्टे—धात्वर्थे वाच्ये इति। यद्यपि धातुरेव धात्वर्थमाह, तथापि यस्तस्य सिद्धता नाम धर्मः स घञादिभिरुच्यते। अत एव द्रव्यधर्मं लिङ्गसंख्याकारकशक्तिसंबन्धमुपादत्ते। न त्वाख्याताभिहितः। तदुक्तम्—

"क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता।
सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति धर्मविधिम्॥ १॥

यद्यप्येकवचनेन पुलिङ्गेन निर्देशः क्रियते तथापि न तदुभयं विवक्षितं तेन पाकौ पाकाः, पचनं पक्तिरिति संख्यान्तरे लिङ्गान्तरे च भवन्ति। पाक इति। ञित्वादुपधावृद्धिः। "चजोः" (७।३।५२) इति कुत्वम्।

१. घ चेति क० पु०।
२. क्रियेति क० पु०।
३. धितोत्याद्यु इति क० पु०।
४. बलेऽपि इति क० पु०।

९९०. इकः काशे [६।३।१२३]

काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात्। नीकाशः। अनूकाशः। इकः किम्? प्रकाशः।

९९१. अकर्तरि च कारके संज्ञायाम् [३।३।१९]

धातोर्घञ् स्यात् कर्मादौ वाच्ये संज्ञायाम्। प्रास्यति प्रासः। चादसंज्ञायामपि। कस्त्वया दायो दत्तः। "दारजारौ कर्तरि णिलुक् च" (वा०)।

९९२. एरच् [३।३।५६]

इवर्णान्तादच् स्यात्। घञोऽपवादः। चयः। जयः।

---

इकः काशे। कासृ दीप्तावस्य घञन्तत्वात् "उपसर्गस्य घञ्यमनुष्ये" (६।३।१२२) इत्येव सिद्धे नियमार्थमेतत् इत्याह—इगन्तस्यैव प्रादेर्दीर्घ इति।

यदा तु पचाद्यजन्तः काशशब्दस्तदायं विधिरेव न नियम इति ज्ञेयम्। तेन प्राकाशाय[1]स्वर्यंदे ददातीत्यादौ घञन्तत्वात् "उपसर्गस्य" (६।३।१२२) इति दीर्घो न विरुध्यते।

अकर्तरि च। प्रसज्यप्रतिषेधोऽयम्। पर्युदासे हि कारक इत्यनर्थकम् 'नञिव युक्त-न्यायात्' इत्यभिप्रेत्याह—कर्मादौ वाच्ये इति। प्रास्यतीति। असु क्षेपणे। चादिति। चकारोऽयं भिन्नक्रमः। संज्ञायां चेति। तेनासंज्ञायामपि भवतीत्यर्थः।

यद्येवम् अकर्तरि कारके इत्येतावदस्तु मा भूत्संज्ञायां ग्रहणं मा चकार इति चेत् सत्यम्। बाहुल्येन संज्ञायां भवति। क्वचिदेवासंज्ञायामिति सूचयितुं तदुभयम्। दाय इति। दीयमानं सर्वमुच्यते इति नेयं संज्ञा। अकर्तरीति किम्? बिभर्तीति भर्ता।

दारजारौ। अकर्तरीत्युक्ते वचनम्। दारयन्ति दाराः। जरयति जारः। "जनी-जॄष्" (ग०) इति मित्त्वादुपधाह्रस्वे कृते घञ्निमित्तोपधावृद्धिः। तत्र कर्तव्ये णिलो-पस्य स्थानिवत्त्वेन व्यवधानं स्यादिति णिलुग्वचनम्। तत्र क्विलुगुपधात्वेति वा। घञ्निमित्तकत्वाद्वा नास्ति स्थानिवत्त्वम्। अन्ये तु दीर्यन्ते यैस्ते दाराः। जीर्यतेऽनेन जार इति। अण्यन्ताभ्यामेव करणे घञि व्युत्पादयन्ता नैतदाद्रियन्ते।

एरच्। इत प्रभृति अकर्तरि च कारके इति द्वयमप्यनुवर्तते "कृत्यल्युटो बहुलम्" (३।३।११३) इति यावदित्याशयेनाह—भावादाविति।

---

1. प्रकाशायास्वपरिवेति क० पु०।

९९३. ऋदोरप् [३।३।५७]

ऋवर्णान्तादुवर्णान्ताच्चाप् स्याद्भावादौ। करः। गरः। स्तवः। लवः।

९९४. इङश्च [३।३।२१]

अस्माद् घञ् स्याद् भावादौ नाच्। अध्यायः। उपेत्यस्माद्धीते उपाध्यायः।

९९५. प्रथने वावशब्दे [३।३।३३]

विपूर्वात् स्तृञो घञ् स्याद् विस्तीर्णार्थे, न तु शब्दे। पटस्य विस्तारः। शब्दे तु वाचो विस्तरः।

९९६. घञपोश्च [२।४।३८]

अदेर्घस्लृ स्याद् घञि अपि च।

९९७. उपसर्गेऽदः [३।३।५९]

अदेः प्रादावप् स्याद्भावादौ। प्रघसः। प्रादौ किम्? घासः।

---

ऋदोरप्। ऋच्च उश्च तयोः समाहारे द्वन्द्वः। सौत्रं पुंस्त्वम्[1]। दकारोऽयमुच्चारणार्थो निर्दिष्टो न तकार इति तत्काल उकारो न गृह्यते, तेन दीर्घादपि भवतीत्युदाहरति—लव[2] इति। लूञ् छेदने।

इङश्च। अकर्तरि चेत्येव सिद्धे अजपोरपवादार्थं पुनरिह प्रकरणे घञ् प्रतिप्रसूयते। अत एव तौ प्रदर्शयितुमुपन्यासः। अध्याय इति। अधीयते इति कर्मणि। उपाध्याय इत्यपादाने। कथमुपाध्याया "घञजपाः पुंसि" (लि०) इत्युक्तेः। सत्यम्। अपादाने स्त्रियामुपसंख्यानाद् भविष्यति।

प्रथने वाव। न तु शब्दे इति। शब्दविषये विस्तारे नेत्यर्थः।

घञपोश्च। अत्रार्धधातुके इति विषय सप्तम्यधिकृता। तेनादौ घस्लादेशस्ततो घञपौ भवत इति मतेनादौ घञं समुदाहृत्य चरममपमुदाहरति।

उपसर्गेऽदः। ये तु आहु—यद्यप्यार्धधातुके इति विषयसप्तमी, तथापि यत्र तद्विशेषो निर्दिश्यते सा परसप्तम्येवेति तन्मते विपरीत- क्रम ऊहनीयः।

---

१. सौत्रो इति क० पु०।

२. लव इति नास्ति क० पु०।

९९८. समुदोरजः पशुषु [३।३।६९]

समुत्पूर्वादजतेरप् स्याद् भावादौ पशुविषये। अघञपोरित्युक्तेर्वीभावो न। समजः पशुसङ्घः। उदजः पशुप्रेरणम्। अन्यत्र समाजः। उदाजः। "नोदात्तोपदेश" (७।३।३४) इति न वृद्धिः। शमः। आचमादेस्तु आचामः। कामः। वामः। श्रमादेस्तु श्रामः। श्रमः। चामः। चमः। विश्रामः। विश्रमः। विश्रामोऽपशब्द इति काशिकायाम्। "हनस्तोऽचिण्णलोः"। (७।३।३२) आघातः।

९९९ हनश्च वधः [ ३।३।७६ ]

हन्तेरनुपसर्गाद्भावे अप् स्यात् हन्तेर्वधादेशश्च। वधः। घञोऽपीष्टिः। घातः। नीमिमीलियां खलचोरात्वनिषेधः। निमयः। मयः। विलयः। लयः।

---

समुदोरजः। अन्यत्र ब्राह्मणादिषु।

आचामेस्तु। अनाचमिकमिवमोनामिति वक्तव्यमित्युक्तेः। श्रमादेस्तु इति। श्रमु-श्रमु-विश्रमं चेति केचिदित्युक्तेः। विश्रामोऽपशब्द इति काशिकायामिति।

ननु यदि स्वलक्षणेनासिद्धमित्यस्यापशब्दत्वमुच्यते, तदा श्रमश्चाम इत्यनयोरपि वाच्यम्।

अथ परमतेऽप्यपशब्दत्वं तद्विश्रमो वेति केचिदिति वाध्येत। नैवम्। श्रमुवमोर्यातुमेदोपपद्यते कथञ्चित् स्वमते विकल्पः। विश्रमेस्तु न कथञ्चिदुपपद्यते। यत्तु तत्रोक्त नञादिनिर्दिष्टस्यानित्यत्वात् संज्ञापूर्वको विधिरनित्य इति वा निषेधाभाव इति विश्रामप्रयोग उपपाद्य इति नैतत्काशिकाकारो मन्यते, आप्तवचनाभावात्। "सूर्यं-विश्राममूमि:" "विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनु." इत्यादिकविप्रयोगाणां निरङ्कुशत्वेन विश्रान्तिपदप्रक्षेपेणाप्युपपत्तेः। यदाह वामनः—विश्रामभूमिरित्यादिपदप्रयोगमन्याय्यमेव मन्यन्ते इति। एवेति दुश्चिकित्स्यत्वमुक्तमिति न किंचित् सङ्कटम्। घात इति। "हो हन्तेः" इति कुत्वम्। उपधावृद्धिः।

हनश्च। अन्तोदात्तोऽयं निपात्यते। तत्राऽप्यतो लोपे कृते उदात्तनिवृत्तिस्वरेणाद्युदात्तत्व भवति। इदमेवादेशस्यादन्तोपदेशप्रयोजनम्। घञोऽपीष्टिरिति। चकारोऽत्र: समुच्चयार्थः।

निमीति। 'मिनातिमिनोतिदीङां ल्यपि च" ( ६।१।५० ) "विभाषा लीयतेः" ( ६।१।५१ ) इति प्राप्तं निषिध्यते। नियम इत्यादि। "एरच्" ( ३।३।५२ )।

१००० कर्मव्यतिहारे णच् स्त्रियाम् [ ३।३।४३ ]

क्रियाव्यतिहारे गम्ये धातोर्णच् स्याद् भावादौ स च स्त्रियाम् ।

१००१ णचः स्त्रियामञ् [ ५।४।१४ ]

स्त्रियां विहितणजन्तात् स्वार्थेऽञ् स्यात् । तद्धितत्वान्न "य्वाभ्याम्" ( ७।३।३ ) इत्यैचि प्राप्ते ।

१००२ न कर्मव्यतिहारे [७।३।६]

कर्मव्यतिहारेऽर्थे प्रत्यये परे नैच् स्यात् । आदिवृद्धिः । "टिड्ढाणञ्" ( ४।१।१५ ) इति ङीप् । व्यावहासी ।

---

कर्मव्यतिहारे । कर्मेह क्रिया गृह्यते न साधनं कर्म । तत्र धातोर्वृत्यसंभवादित्याशयेनाह—क्रियाव्यतिहारे इति । व्यतिहारो विनिमयः भावादाविति । आदिशब्देन न[1] "अकर्तरि च कारके संज्ञायाम्" ( ३।३।१९ ) अनभिधानादिति हरदत्तादिभिरुक्तेः।

तथा च काशिकायाम्—स्त्रीलिङ्गे भावे इत्येतावदुक्तम् । तस्मादादिग्रहणं प्रवाहापातम् । "अकर्तरि च कारके संज्ञायाम्" इत्यस्याधिकारो विच्छिन्नो मा शङ्कि इति । भावश्चासावादिश्च प्रथम[2]निर्दिष्टोऽर्थस्तस्मिन्निति योज्यम् । एजयम् "कृत्यल्युटो बहुलम्" ( ३।३।११३ ) इति वचनात् क्वचिद्बाधकविषयेऽपि भवति । व्याव-च[3]र्चीति । अत्र हि "व्यासश्रन्थो युच्" (३।३।१०७) इति युचः परत्वात् प्राप्तिः । व्यात्युक्षीति च "गुरोश्च हलः" ( ३।३।१०३ ) इत्यकारः प्राप्तः । क्वचिन्न भवत्येव व्यतो[4]क्षा प्रतीचेति ।"

णचः स्त्रियामञ् । स्त्रियां विहितणजन्तादिति । स्त्रियां विहितो यो णच् तदन्तादित्यर्थः ।

ननु णच् स्त्रियामेव विवक्षितायां विधीयते, तत्किं स्त्रियामित्यनेन । एवं तर्हि ज्ञापयत्येतत् 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" ( प० )। तेन देवता । [5]त्रैलोक्यमित्यादि सिद्धम् ।

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद् व्यवहासशब्दादञ् । आदिवृद्धिरिति "तद्धितेष्वचामादेः" ( ७।२।११७ ) इत्यनेन । "गतिकारकोपपदानाम्" ( प० ) इत्य-

---

१. नेति नास्ति क० पु० ।

२. प्रथमनिर्दिष्टो स्वस्मिन्निति क० पु० ।

३. व्यावचोरीति क० पु० ।

४. प्रतीचेति नास्ति क० पु० ।

५. त्रैलोक्यमित्येव क० पु० ।

१००३ अभिविधौ भाव इनुण् [ ३।३।४४ ]

अभिव्याप्तौ गम्यायां भावे इनुण् स्यात् ।

१००४ अणिनुणः [ ५।४।१५ ]

इनुणन्तात् स्वार्थेऽण् स्यात् । आदिवृद्धिः । "इनण्यनपत्ये" ( ६।४।१६४ ) सांराविणं वर्तते ।

१००५ उपसर्गात् खल्घञोः [७।१।६७]

उपसर्गाल्लभेर्नुम् स्यात् खलि घञि च । प्रलम्भः ।

१००६. न सुदुर्भ्यां केवलाभ्याम् [७।१।६८]

सुदुर्भ्यां परस्य लभेर्नुम् न स्यात् । सुलाभः । दुर्लभः । केवलाभ्यां किम् ? सुप्रलम्भः । अतिदुर्लम्भः ।

---

सुबन्तेन हासशब्देन व्यवयोः समासे कृते ततोऽञ् । व्यवहासेन व्यावहासी । "स्त्रियां क्तिन्" (३।३।९४) इति प्रकरणे तु णच् नोक्तः । वाऽसरूपविधिर्यथा स्यात् । तेन व्यवकृष्टिरिति क्तिन्नपि भवति ।

अभिविधौ । गुणक्रियाभ्यामभिव्याप्ति[१]रभिविधिस्तदाह–अभिव्याप्ताविति । भाव इति वर्तमाने पुनर्भावग्रहणं वाऽसरूपनिरासार्थम् । तेन घञा क्तिनः समावेशो न[२] भवति ल्युटा तु, भवति बहुलग्रहणात् ।

अणिनुणः । तद्धितोऽयम् । तदाह—आदिवृद्धिरिति । "नस्तद्धिते" (६।४।१४४) इति टिलोपस्तर्हि तत्राह—इनण्यनपत्ये इति । प्रकृतिभावादित्यर्थः । सांराविणं वर्तते इति । समन्ताद्रवणमिति । संशब्दोऽभिव्याप्त्यर्थः । "उपसर्गे तु[३] रुवः" ( ३।३।२२ ) इति । घञ् तु अनभिविधौ उपसर्गान्तरे च सावकाशः ।

उपसर्गात् । "लभेश्च" ( ७।१।६४ ) इत्येव सिद्धे नियमार्थमेतत् । उपसर्गादेव लभेर्नुम् खल्घञोर्नान्यस्येति । तेन ईषल्लभः । लाभः[४] इत्यत्र न भवति ।

न सुदुर्भ्याम् । अतिदुर्लभ इति । यदा तु स्वतोऽकर्मप्रवचनीयसंज्ञे, तदाऽस्त्येव केवलत्वमिति नुम् न भवत्येव । अतिसुलभोऽतिदुर्लभ इति । अथ केवलशब्दोऽयं सजातीयमेव निवर्तयति, उपसर्गान्तरं न पुनर्विजातीयकर्मप्रवचनीयमपीति ।

---

१. प्राप्तिरिति ख० पु० ।
२. नेति अधिकः क० पु० ।
३. च इति क० पु० ।
४. भाव इति क० पु० ।

१००७. स्फुरतिस्फुलत्योर्घञि [६।१।४७]

अनयोरेच आत्वं स्याद् घञि । स्फारः । स्फालः ।

१००८. निवासचितिशरीरोपसमाधानेष्वादेश्च कः [३।३।४१]

एष्वर्थेषु चिनोतेर्घञ् स्यान्नाच् आदेश्च कः । निवासो निकायः । चितौ । आकायोऽग्निः । कायः शरीरम् । राशीकरणे गोमयनिकायः ।

१००९. घञि च भावकरणयोः [६।४।२७]

भावेऽर्थे करणार्थे च घञि रञ्जेर्नस्य लोपः स्यात् । रागः । अनयोः किम् । रजत्यस्मिन्निति रङ्गः ।

१०१०. स्यदो जवे [६।४।२८]

निपातो वेगे । स्यदः । अन्यत्र स्यन्दः ।

१०११. अवोदैधौद्मप्रश्रथहिमश्रथाः [६।४।२९]

एते निपात्यन्ते । अवोदः अवक्लेदनम् । एधः इन्दनम् । ओद्मः । उन्दनम् । प्रश्रथः । हिमश्रथः ।

---

निवासचिति । नाजिति । एरजिति प्राप्तिः । निकाय इति निचीयतेऽस्मिन्नन्न[1]-पानादिक इति । आकाय इति । आचीयतेऽस्मिन्निष्टकाः । काय इति । चीयतेऽहरह इति । गोमयनिकाय इति । निचयनं राशीकरणम् । घञि राग इति रञ्जन राग इति । रज्यतेऽनेन वा ।

स्यदो जवे । स्यन्दू प्रस्रवणे । अस्य नलोपो वृद्ध्यभावश्च निपात्यते । अनि-[2]ग्लक्षणत्वान्न "धातुलोप" ( १।१।४ ) इत्यस्याप्राप्तिः ।

अवोदैधौ । एष नलोपो निपात्यते । अवोद इति । अपूर्व उन्दी क्लेदने । नलोपे "न धातुलोप" ( १।१।४ ) इति गुणनिषेधः । एध इति । इन्धेर्नलोपो गुणश्च निपात्यते । ओद्म इति । उन्देरौणादिके मन्प्रत्यये नलोपो गुणश्च । प्रश्रथहिमश्रथयोः श्रन्थेर्नलोपो वृद्ध्यभावश्च ।

१. अस्मिन्निति-न्नपानादीति क० पु० ।

२. अनिमित्तत्वादिति क० पु० ।

१०१२. ड्वितः क्त्रिः [३।३।८८]

डु इत् यस्य ततो धातोर्भावादौ क्त्रिः स्यात्। "क्त्रेर्मम् नित्यम्" (४।४।२०)। क्त्रिप्रत्ययान्ताद् नित्यं मप् स्यान्निर्वृत्तेऽर्थे। करणेन निर्वृत्तं कृत्रिमम्। पक्त्रिमम्।

१०१३. ट्वितोऽथुच् [३।३।८९]

टु इत् यस्य ततो धातोरथुच् स्यात् भावादौ। वेपथुः। श्वयथुः।

१०१४. यजयाचयतविच्छप्रच्छरक्षो नङ् [३।३।९०]

एभ्यो नङ् स्याद्भावादौ। श्चुत्वम्। यज्ञः। याच्ञा। यत्नः। "च्छ्वोः शूठ्" विश्नः। "प्रश्ने चासन्नकाले" (३।२।११७) इति ज्ञापकान्न संप्रसारणम्। प्रश्नः। रक्ष्णः।

---

ड्वितः क्त्रिः। भावादाविति। अत्राप्यादिग्रहणमधिकाराविच्छेदप्रदर्शनाय। स्वभावात्त्वयं भाव एव भवति न कारके। तथा च करणेन निर्वृत्तमिति विगृह्यते, न तु कृत्येति। पित्त्व[1]मनुदात्तार्थम्।

क्त्रेर्मम् नित्यम्। तद्धितोऽयम्। केचित् त्रेरिति पठन्ति। तत्रापि त्रिशब्दः संख्यार्थो न गृह्यतेऽनभिधानाद् नित्यमित्युक्तेः क्त्रिप्रत्ययान्तः केवलो न प्रयुज्यते। अत एव तेन न शक्यते विग्रहो दर्शयितुमित्यभिप्रेत्याह—करणेन निर्वृत्तमिति। डुकृञ् करणे क्त्रिवान्न गुणः। पक्त्रिममिति। डुपचष् पाके। यदि तु तद्धितः क्त्रिमबित्येक[2] एव प्रत्ययः क्रियते, अभिधानाच्च कर्मणीत्युच्यते, ततः पक्वपक्त्रिमशब्दयोः पर्यायता स्यादिति प्रकारभेदख्यापनार्थं प्रत्ययद्वय कृतम्। कथं पाकिमम्? "भावप्रत्ययान्तान्निर्वृत्तेऽर्थे इमप् वाच्यः" (वा०) इति वचनात्।

ट्वितोऽथुच्। अयमपि भाव एव पूर्ववत्। वेपथुरित्यादि। टुवेपृ कम्पने। टुओश्वि गतिवृद्ध्योः। वाऽसरूपविधिना घञादिरपि भवत्येवेति हरदत्तः। घञ् त्वनभिधानान्नेत्यन्ये।

यज याच। अयं च यथाऽभिधानं कारकेऽपीष्यते। तथा च "यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" इत्यत्र। इज्यते[3] इति यज्ञो विष्णुरिति व्याख्यातम्।

---

१. पित्त्वमनुदात्तार्थमिति नास्ति क० पु०।

२. क्त्रिमबित्येक एवेति क० पु०।

३. अयं पाठो नास्ति क० पु०।

## १०१५. स्वपो नन् [३।३।९१]

स्वप्नः ।

## १०१६. उपसर्गे घोः किः [३।३।९२]

प्रादावुपपदे घुसंज्ञकात् किः स्याद्भावादौ । आतो लोपः । अन्तर्धिः । आदिः । आधिः ।

## १०१७. कर्मण्यधिकरणे च [३।३।९३]

कर्मण्युपपदे अधिकरणे घोः किः स्यात् । उदकं धीयतेऽस्मिन्निरयुदधिः । पयोनिधिः ।

## १०१८. स्त्रियां क्तिन् [३।३।९४]

धातोर्भावादौ क्तिन् स्यात् तदन्तश्च स्त्रीलिङ्गः । कृतिः । बुद्धिः । स्मृतिः । ह्लाद इति योगविभागात् क्तिनि ह्रस्वः । प्रह्लत्तिः । "ति च" (७।४।८९) चूर्तिः । फुल्लिः । चायते क्तिनि नित्यं चिभावः । अपचितिः । कण्डूयतेः क्तिन् । अतो लोपः । तस्य च लोपे कर्तव्ये स्थानिवत्त्वाभावात्

---

नञो ङित्त्वं'विश्न इत्यत्र गुणनिषेधार्थम् । न चान्तरङ्गत्वात् पूर्वं तुकि कृते छः शत्वेऽपि लघूपधत्वाभावाद् न गुणप्रसङ्ग इति वाच्यम्, सतुक्कस्य छस्य शत्वविधानात् । एवं च तुकोऽनित्यत्वज्ञापनार्थं ङित्करणमिति प्राचोक्तमनादेयम् । तत्र हि सतुक्कस्य छस्येति व्याख्यात विरुध्येत । याच्ञेति । यद्यपि नङन्ताः सर्वे पुंलिङ्गास्तथाप्यय स्त्रीलिङ्गः स्वभावात् । रक्ष्ण इति । 'रषाभ्याम्" ( ८।४।१ ) इति णत्वम् । 'विष्यादिषु वाऽसरूपविधिर्नेष्यतेऽनभिधानात् ।

उपसर्गे घोः किः । कित्वफलमाह—आतो लोप इति । अन्तर्धिरन्तर्धानम् । आदिरादानमादीयते वा । आधीयतेऽस्मिन् आधीयते चेत्याधिः ।

कर्मण्यधिकरणे च । कर्मण्युपपदमधिकरण तु प्रत्ययार्थो विवक्षितो व्याख्यानादित्याह—कर्मणीत्यादि । अधिकरणग्रहणमर्थान्तरनिरासार्थम्, चकारस्तु प्रत्ययानुकर्षणार्थः । तेन भावे करणादौ च न भवति । उदधिरिति । "पेष वासवाहनधिषु च" ( ६।३।५८ ) इत्युदकस्योदादेशः ।

स्त्रियां क्तिन् । अयं च घञ येन नाप्राप्तिन्यायेन बाधते । अजेपो तु 'विप्रतिषेधे परम्" ( १।४।२ ) भाष्ये तु अधिक- कारोऽधिकारः घञप्युदाहृतः ।

---

१. विष्णुरिति क० पु० ।

२. विष्ण्वादिषु इति क० पु० ।

यलोपः। कण्डूतिः। शान्तिः। दान्तिः। "तितुत्रतथ" (७।२।९) इति नेट्। दीप्तिः। "तितुत्रेष्वग्रहादीनामिति वाच्यम्" (वा०)। नेह निगृहीतिः। निकुचितिः। निपठितिः। उपस्निहितिः।

## १०१९. ग्लाज्याहात्वरिभ्यो निः [उ०]

ग्लानिः। ज्यानिः। हानिः। "ज्वरत्वर" (६।४।२०) इत्यूठ् तूर्णिः। "ऋल्वादिभ्यः क्तिन् निष्ठावद् वाच्यः" (वा०) कीर्णिः। शीर्णिः। लूनिः। धूनिः। "संपदादिभ्यः क्विप्वा" (वा०) संपत्। विपत्। पक्षे संपत्तिः। विपत्तिः। आकृतिगणोऽयम्।

---

ति चेति। तादौ प्रत्यये चरफलोरत उत् स्यात् इति व्याख्यात प्राक्। चायतेरित्यादि[1]। वक्तव्यमिति शेषः। कण्ड्यतेरिति। कण्ड्वादि यगन्तादित्यर्थः।

ननु तर्हि सत. क्तिनित्ययुक्तम् अप्रत्ययादित्यकारेण बाधितत्वात्। तथा च न पदान्तसूत्रे भाष्यम्—"इद तर्हि कण्डूतिर्वल्गूतिरिति। नैतदस्ति प्रयोजनम्। कण्डूया वल्गूयेति भवितव्यम्। इद तर्हि कण्डूयतेः क्विच् वाह्मण् कण्डूतिरिति। नैष दोषः, क्तिन्नवादिभ्यः इति कण्डूयतेरपि क्तिनो वृत्त्यादिषु स्वीकृतत्वात्।

नन्वाता लोपस्य 'अचः परस्मिन्" (१।१।५७) इति वलि लोपं प्रति स्थानिवत्वाद् य लोपो न प्राप्नोतीत्यत आह्—तस्येति। स्थानिवत्त्वाभावादिति। 'न पदान्त" (१।१।५७) इति निषेधादित्यर्थः।

नन्वेवमपि पुनः स्थानिवत्त्वादुवङ् स्यात्। अस्तु तस्यापि सिद्ध कण्डूरिति।

न च पुनरुवङ् प्रसङ्ग, तस्यादिष्टादच. पूर्वत्वात्। शान्तिः। दान्तिरिति। "अनुनासिकस्य क्विझलोः क्ङिति" (६।४।१५) इति दीर्घः। दीप्तिरिति। भावादित्वात् क्तिन् विधिरिति माधवः।

अन्ये[2] तु "गुरोश्च हल." (३।३।१०३), इत्यत्र निष्ठायां सेट् इत्युक्तेनाकार इत्याहुः।

निगृहीतिरिति। "ग्रहिज्या" (६।१।१६) इति संप्रसारणम्। 'ग्रहोऽलिटि" (७।२।३७) इति दीर्घः। निकुचितिरिति। कुच क्रुञ्च कौटिल्याल्पीभावयोः। "अनिदिताम्" (६।४।२४) इति नलोप.। उपस्निहितिरिति। ष्णिह प्रीतौ।

ग्लास्ना। अत्र त्वरनेर्ग्रहणमनाकरम्। "घटादय षित" इति (ग०) प्राचोक्तेरङेव भाव्यम्। त्वरेति। तूर्णिरित्येतन्तु धृषि वृष्णि पार्ष्णि भूष्णिरित्युणादिषु णिजन्तस्य निर्वाननम्। सत्यम्। उणादिप्रत्ययान्तमिह प्रयोगप्राचुर्यादाचार्यैः संगृहीतमिति द्रष्टव्यम्।

---

१. रित्यादि वस्तु टाप् इति क० पु०।   २. अत्र चेति क० पु०।

१०२०. ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च [३।३।९७]

एते निपात्याः। अव ऊतिः। यु यूतिः। जु जूतिः। षो षिञ् वा सातिः। हि हन्वा। हेतिः। कृत कीर्त्तिः।

१०२१. व्रजयजोर्भावे क्यप् [३।३।९८]

आभ्यां भावे क्यप् स्यात् स्त्रियाम्। व्रज्या। इज्या। स्त्र्यधिकारत्वान्न वासरूपविधिना पक्षे क्तिन्। भावे किम्? कर्मादौ न।

१०२२. संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः [३।३।९९]

एभ्यः क्यप् स्यात् संज्ञायां स्त्रियाम्। "अजेः क्यपि वीभावो नेति वाच्यम्" (वा०) समज्या। निषद्या। निपत्या। मन्या। विद्या। सुत्या। "अयङ् यि क्ङिति" शय्या। भृत्या। इत्या।

---

ज्वरत्वरेत्यूठ् इति। तत्रानुनासिके चेत्यनुवर्तते इति भावः। ऋल्वादिभ्य इति। ऋकारान्तेभ्यः लूप्रभृतिभ्यश्चेत्यर्थः। कॄर्णेरिति। "ऋत इद्" (७।१।१००) इतीत्वं रपरः। 'हलि च" (८।२।७७) इति दीर्घः। स्वाभ्यामिति। नत्वं णत्वम्। संपदादेरिति। यद्यपि वार्त्तिके वेति नोक्तम्, तथापि बहुवचनात् क्तिन्नपीष्यते इति मत्त्वा वेति प्रक्षिप्तम्।

ऊतियूतिजूति। अत्रोदात्त इति वर्तते। क्तिनो नित्त्वादाद्युदात्तत्वप्रसक्तेः। ऊतिरिति। 'ज्वरत्वर" (६।४।२०) इत्यूठ्। अन्तोदात्तार्थं वचनम्। युजुवो दीर्घोऽपि षो षिञ् वेति। षोऽन्तकर्मणि। अस्य 'द्यतिस्यति" (७।४।४०) इतीत्वाभावार्थं च। षिञ् बन्धने इत्यस्य चात्वार्थं च।

काशिकायां तूक्तम्, सनोतेर्वा "जनसनखनाम्" (६।४।४२) इत्यात्वे कृते स्वरार्थं निपातनमिति, हि [१] हन्वेति। हि गतौ इत्यस्य गुणार्थम्। हन्तेर्नस्येत्वार्थं चेत्यर्थः।

कीर्तिरिति। "ण्यासश्रन्थ" (३।३।१०७) इति युचि प्राप्ते क्तिन्नपि निपात्यते। उपधायाश्च। ऋत इत् रपरः। 'उपधायां च" (८।२।७८) इति दीर्घः। णेर्लोपः। कालापास्तु युचमपीच्छन्ति कीर्तना इति।

व्रजयजो। क्तिनोऽपवाद इति। उदात्त इत्येव। पकार उत्तरत्र तुगर्थः। इज्येति। कित्वात् सम्प्रसारणम्।

संज्ञायां। त्रिष्वाद्येषु अधिकरणे। समज्या सभा। निषद्या प्रापणः [२]। निपत्या पिच्छिला भूमिः। मन्यतेऽनया मन्या गलपार्श्वशिरा। तया हि क्रुद्धादिर्ज्ञायते। विद्य-

---

१. हि हन्वेति क० पु०।  २. प्रापण इति नास्ति क० पु०।

**१०२३. कृञः शच [३।३।१००]**

कृञो भावादौ शः स्यात् क्यप् च स्त्रियाम् । शित्त्वाद्भावे यक् । रिङा-देशः । क्रिया । कृत्या । योगविभागात् क्तिन्नपि । कृतिः ।

**१०२४. इच्छा [३।३।१०१]**

इषेः शे निपातोऽयम् । "परिचर्यापरिसर्यामृगयाऽटाट्यादयश्च" (वा०) परिचर्या । परिसर्या । मृगया । अटाट्या । "जागर्तेरकारो वा" ( वा० ) जागर्या । जागरा । आस्या । चर्या इति केचित् ।

---

तेऽनयाऽर्थं तत्त्वं विद्या । सूयतेऽभिसूयते सोमोऽत्रेति सुत्या । अभिषवदिवसः । सुत्यमह-स्कम् इति त्वार्षं मनोवत्त्वम् । शय्यतेऽस्यां शय्या खट्वादिः । भरणं भृत्या वेतनम् । ईयते गम्यतेऽनया इतीत्या शिबिकादिः । कथं भृतिः । मतिः । आसुतिः । कर्मणि भृतौ मति "रजःकृष्यासुतिपरिषद." ( ५।२।११२ ) इति ज्ञापकात् ।

कृञः । भावे यगिति । कर्मण्यपीति ज्ञेयं यद्यभिधानमस्ति । करणादौ च 'अचि श्नु' धातु" ( ६।४।७७ ) इति इयङ् । कृत्येति । क्यपि तुक् ।

इच्छा । शप्रत्ययो यगभावश्च निपात्यते इत्यर्थे द्रष्टव्यः[1] । शस्याय भावे न कारके स्वभावात् । परिचर्येति । सर्वत्र शो निपात्यते, यक् तु सिद्ध एव । परिसर्येति । सृ गतौ अस्य गुणोऽपि निपात्यते । यक् तु सिद्ध एव । मृगयेति । मृग अन्वेषणे चुरादा-वदन्तः । अस्य णावतो लोपाभावो निपात्यते । यकि णिलोपः ।

अन्ये तु णेरयादेशो यगभावश्च निपातनादित्याहुः ।

अटाट्येति । अटे शे यकि कृते टयशब्दस्य द्वित्वं पूर्वभागे यकारलोपोऽकारस्य चाकारः । हलादिः शेषस्तु नास्ति ।" पष्ठिद्वित्वे धातुद्वित्वे चाभ्याससंज्ञेत्युक्तेः । जाग-र्येति, वाग्रहणात् । पक्षे जागरा । अत्र यकि सति "जाग्रोऽविचिण्णल्ङित्सु" (७।३।८५) इति गुणः । आस्येति । आस उपवेशने । "ण्यासश्रन्थो युच्" (३।३।१०७) इति युचि प्राप्ते श इष्यते । काशिकायां तूक्तं कथमास्येति । "ऋहलोर्ण्यत्" (३।१।-१२४) भविष्यति । वाऽसरूपविधिप्रतिषेधश्च स्त्रीप्रकरणविषयस्यैवोत्सर्गापवादस्येति । द्वयोरप्युत्सर्गापवादयोः स्त्र्यधिकारविहितत्वेऽस्त्रियामिति प्रतिषेधादित्यर्थः ।

एवं चर्येत्यपि "गदमदचर" ( ३।१।१०० ) इति यति व्युत्पादनीयम् ।

---

१. नपार्थश्चेति क० पु० ।

२. विभुषास्त्विति क० पु० ।

३. द्रष्टव्य इति नास्ति क० पु० ।

४. धाये द्वित्वेऽभ्याससंज्ञा धातुद्वित्वे च स्युक्तेरिति क० पु० ।

## १०२५. अप्रत्ययात् [३।३।१०२]

प्रत्ययान्ताद्धातोर्भावादौ स्त्रियामः स्यात् न क्तिन्। चिकीर्षा। अटाटा। लोलूया। कण्डूया। कण्डूतिरपि।

## १०२६. गुरोश्चहलः [३।३।१०३]

हलन्ताद् गुरुमतः अः स्याद्भावादौ स्त्रियां, न क्तिन्। ईहा। ऊहा। गुरोः कम्? भक्तिः। हलः किम्। नीतिः। "निष्ठायां सेट् इति वाच्यम्" (वा०)। तेनेह न। आप्तिः। राद्धिः। प्रशस्तिः। प्रशंसेत्यपि।

## १०२७. षिद्भिदादिभ्योऽङ् [३।३।१०४]

षितो भिदादेश्चाङ् स्यात्। स्त्रियां भावादौ। जृष्। "ऋदृशोऽङि गुणः" (७।४।१६) जरा। त्रपा। क्षमूष्। क्षमा। क्षम इत्यस्य क्षान्तिः। भिदा। छिदा। गुहा। मेधा। गोधा। कारा। हारा। तारा। धारा। कृपा। पीडा। भूपा इत्यादि।

---

अप्रत्ययात्। अ इत्यविभक्तिको निर्देशः। चिकीर्षेति। कृञः सन् द्वित्वादि। अटाटेति। अटेः "सूचिमूत्रि" (वा०) इति यङि टयशब्दस्य द्वित्वं हलादिः शेषाभ्यासदीर्घत्वयोरटाटयशब्दादप्रत्ययः। अतो लोपः। "यस्य हलः" (६।४।४९) इति यलोपः। कण्डूयेति। कण्ड्वादियगन्तात् वाऽसरूपविधेरस्त्रियामिति निषेधात् क्तिना न भाव्यमिति शङ्कामपनयति कण्डूतिरपीति। क्तिन्नावादिभ्य इत्यनेन क्तिन्नपीत्यर्थः।

गुरोश्च। हला धातोर्विशेषणात्तदन्तविधिरित्याह—हलन्तादिति।

एव च स्थिते न हलन्तः समुदायो गुरुर्भवितुमर्हति तस्याज्मात्रधर्मत्वादतस्तद्वल्लक्षणाश्रीयते इत्याह—गुरुमत इति।

विपर्ययस्तु न भवति। चेष्टायामिति निर्देशात्। प्रशसेत्यपीति "प्रशंसायां रूपम्" (५।३।६६) इति निर्देशादिति भावः। निष्ठायामनिट्त्वादप्राप्तिः।

षिद्भिदादिभ्यो। भिदादेश्चेति। यद्यपि भिदा छिदा इत्यङन्ता एव पठ्यन्ते, तथापि धातोरित्यधिकारात् तत्प्रकृतय एव निष्कृष्येह भिदादिशब्देन निर्दिश्यन्ते। प्रत्ययान्तपाठस्तु लोके यत्र प्रयोगस्तत्रैव यथा स्यात्। कार्यान्तरनिपातनार्थं च क्वचित्। तद् यथा भिदा छिदेति विदारणे। अन्यत्र भित्तिः। छित्तिः। गुहा कन्दरौषध्योः। अन्यत्र गूढिः। मेधेति। मिधृ मेधृ हिंसाक्लेशनयोः। गोधेति। गुध् परिवेष्टने। अत्र[1] गुणः।

---

१. अन्यत्रेति क० पु०।

**१०२८. चिन्तिपूजिकथिकुम्बिचर्चश्च [३।३।१०५]**

एभ्योऽङ् स्याद्भावादौ स्त्रियाम् । वक्ष्यमाणयुचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा ।

**१०२९. आतश्चोपसर्गे [३।३।१०६]**

प्रादावुपपदे आदन्तेभ्योऽङ् स्यात् स्त्रियां भावादौ न क्तिन् । उपदा । श्रद्धा । अन्तर्धा ।

**१०३०. ण्यासश्रन्थो युच् [३।३।१०७]**

ण्यन्तादासिश्रन्थिभ्यां च युच् स्यात् स्त्रियां भावादौ । कारणा । आसना । श्रन्थना । "घट्टिवन्दिविदिभ्यश्च" (वा० ) घट्टना । वन्दना । वेदना । "इषेरनिच्छार्थात्" ( वा० ) अन्वेषणा । "परेर्वा" ( वा० ) पर्येषणा । परीष्टिः । एषणा ग्रन्थनेत्यपि केचित् ।

**१०३१. रोगाख्यायां ण्वुल् बहुलम् [३।३।१०८]**

धातोर्ण्वुल् स्यात् स्त्रियां भावादौ रोगाख्यायाम् । प्रच्छर्दिका । विचर्चिका । बहुलोक्तेः शिरोऽर्त्तिः । "धात्वर्थनिर्देशे ण्वुल् वक्तव्यः" ( वा०)

---

कारा, हारा, तारेति कृहृतृभ्योऽङि "ऋदृशोऽङि" गुणे कृते दीर्घत्वं च निपात्यते । लेखा, रेखेति । लिख् अक्षरविन्यासे । अस्य गुणो रेफश्च वा लस्य । कृपेति । कृप् कृपायाम् । अस्य संप्रसारणं च । [1]चूडेति । चुलेर्डत्वं दीर्घश्च । मारा शस्त्रम् । धारा प्रपाते । एवमाद्यूह्यम् । [2]कुम्बेति । कुबि छादने । चर्च अध्ययने । सर्वे चुरादिण्यन्ताः ।

ण्यासश्रन्थो । अप्रत्ययस्यापवादः । घट्टीत्यादिवात्तिकम् । घट्ट चलने भ्वादिः । चुरादेर्ण्यन्तत्वादेव सिद्धेः । विदिर्लाभार्थो गृह्यते । ज्ञाने तु वेदनेति प्रयोगो विद चेतनाख्याननिवासेष्विति चुरादेर्ण्यन्तत्वेन सिद्धः ।

न च वेत्तेः क्तिनो निवृत्त्यर्थं वचनम् । वित्तिरिति निर्देशात् । इषेरनिच्छार्थादिति । इष[3] गतौ । इष आभीक्ष्ण्ये इत्यस्य चेत्यर्थः ।

रोगाख्यायां । आख्याग्रहणं रोगस्य[4] चेत् प्रत्ययान्तं संज्ञा स्यात् तदा इत्येवमर्थम् । प्रच्छर्दिकेति । छर्द वमने । विचर्चिकेति । चर्च अध्ययने । प्रत्ययोपसर्गाभ्यां

---

१. चूडेति चुलेर्डत्वं दीर्घश्चेति अत्र नास्ति क० पु० । २. कुम्बेति क० पु० ।
३. इष गतौ इति नास्ति क० पु० । ४. रोगस्यचेत् इति क० पु० ।

आसिका । शायिका । "इक्श्तिपौ धातुनिर्देशे" (वा० ) पचिः । नन्दिः । अदिः । भवतिः । अत्तिः । जुहोतिः । दीव्यतिः । वर्णनिर्देशे "वर्णात्कारः" (वा० ) । अकारः । ककारः । "रादिफः" रेफः । "मत्वर्थाच्छो मत्वं च" (वा० ) मत्वर्थीयः । "इञजादिभ्यः" (वा० ) आजिः । आतिः । "इक् कृष्यादिभ्यः" कृषिः । गिरिः । किरिः ।

---

रोगप्रतीतिः । पामा विचर्चिका । शिरोऽर्त्तिरिति । शिरः पीडा । अर्द हिंसायाम् । "तितुत्रतथ" (७।२।९) इतीडभावः । "झरो झरि" (८।४।६५) दलोपः । आसिका । शायिकेति । आसनं शयनमित्यर्थः । टापि "प्रत्ययस्थात्" (७।३।४४) इतीत्वम् । "इक्श्तिपौ धातुनिर्देशानुकरणे" (वा० ) बाहुलकात् क्वचिन्न । "पचिरित्यादि । "प्रकृतिवदनुकरणम्" (प० ) इत्यनुकरणस्यापि धातुत्वेन ततो विधानात् कृत्संज्ञेति स्वादयः ।

भवतिरित्यादि[1] "उपसर्गात् सुनोति" (८।३।६५) इत्यादि ज्ञापकादकर्तृवाचिन्यपि श्तिपि शबादयो भवन्ति । शित्करणं तु ध्यायते हूयतेरित्यादावात्वप्रतिषेधार्थं पिबाद्यादेशार्थं च स्यात् ।

एवं च शित्करण[2] सामर्थ्यादकर्त्रर्थत्वेऽपि शबादिरिति प्राचोक्तमनादेयम् ।

एवं भावकर्मवाचिन्यपि क्वचिद् यगपि भवति । यथा "विभाषा लीयते." (६।१।५१) इति तत्रैवोक्तम् ।

वर्णनिर्देश इति । अत्र "वर्णात्कारः" इति यद्वार्तिकं तत्र निर्देशे इत्यनुवृत्तेरर्थसंपन्नमेतदुपदर्शितम् । वर्णमात्रस्यानुकरणादित्यर्थो न तु वर्णादुच्चार्यमाणादिति । तथा हि सति ककार इत्यादौ ([3]समुदायस्योच्चारणात् न स्यात् वर्णमात्रानुकरण इत्यर्थे तु भवति । अकारस्योच्चारणार्थत्वात् वर्णमात्रस्य चानुकार्यत्वात् बहुव्रग्रहणात् गुण इत्यादौ न भवति ) । अत एव क्वचित् समुदायादपि भवति । एवकारो वषट्कार इति ।

अकार इति । प्रयोजनाभावान् न कस्येत्संज्ञा । अधातुविहितत्वेनार्धधातुकत्वात् नेट् । तथा च इक इकारादिर्विधीयते । एवमिकारस्यादौ गुणाभावोऽपि । कृत्संज्ञा त्वधातुविहितत्वेऽपि अधिकार सामर्थ्यात् अस्यास्ति तेन प्रातिपदिकत्वात् स्वादिसिद्धिः ।

यद्यपि करणं कारः अस्य कारोऽकार[4] इत्यादिव्युत्पत्त्येदं सिद्ध्यति । तथाऽप्यकारकरणमिति न सिद्ध्येत् । करोतेः पौनरुक्त्यादिति कारप्रत्ययो विधीयते इत्याहुः ।

---

१. भवन्ति शिवाद्य इति क० पु० ।		२. चानुकरणसामर्थ्यादिति क० पु० ।

३. समुदायस्योच्चारण—न भवतीत्यन्तो (		) रेखाङ्कितो नास्ति क० पु० ।

४. इत्याद्यरीति क० पु० ।

१०३२. विभाषाख्यानपरिप्रश्नयोरिञ् च [३।३।११०]

परिप्रश्ने आख्याने च गम्ये धातोरिञ् स्यात् स्त्रियां भावादौ, चात् ण्वुल् । वोक्ते यथास्वमन्येऽपि । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षीः । सर्वां कारिं कारिकां क्रियां कृत्यां कृतिमकार्षम् । एवं गणिं गणिकां गणनामित्यादि ।

१०३३. आक्रोशे नञ्यनिः [३।३।११२]

नञि उपपदे धातोरनिः स्यादाक्रोशे स्त्रियां भावादौ न क्तिन्नादि । अजीवनिस्ते शठ भूयात् । अप्रयाणिः ।

---

रादिक' इति । वाऽसरूपविधिना रकारोऽपि क्वचित् । "रकारादीनि नामानि शृण्वतो' मम पार्वति" इति ।

भत्वं चेति । बहुलवचनादेतल्लभ्यते । अन्ये तु अभत्वेऽपि तत एव लोप इत्याहुः ।

मत्वर्थीय इति । मतोरर्थं इवार्थो यस्य मत्वर्थ एव मत्वर्थीयः स्वार्थिकः छः । "यस्येति च" (६।४।१४८) इतीकारलोपः । बाहुलकात् क्वचिच्छो न । "तसौ मत्वर्थे" (१।४।१९) इति । अत एव मतुवर्थीय इत्याप ।

इञजादिभ्य इति । वृत्तिपाठानुरोधेनैवमुक्तम् । भाष्ये त्विणुक्तः । तथा च "इञ् वपादिभ्यः" ( वा० ) इति पृथगिञ् विहितः । आजिरिति । बहुलवचनादजेर्वीभावो न । उपधावृद्धिः । आतिरिति । अत सातत्यगमने । भावे इञ् । कृषिरिति । कित्वान्न गुणः । किरिर्गिरिरिति । ॠत इत् रपरः ।

विभाषाऽऽख्यान । अल्पाच्तरत्वादाख्यानशब्दस्य सूत्रे पूर्वनिपातः । आर्थेनुक्रमे प्रश्नपूर्वकमाख्यानमित्याशयेन व्याचष्टे—परिप्रश्ने आख्याने चेति ।

क्रियामिति । "कृञः श च" ( ३।३।१०० ) इति शः । कृत्यामिति । चकारात् क्यप् । कृतिमिति । कृञ इति योगविभागात् क्तिन्नपीत्युक्तम् । गणिमिति । गण संख्याने। चुरादावदन्तः । अतो लोपस्य स्थानिवत्त्वात् नेञ्निमित्तोऽपि वृद्धिः ।

गणिकामिति । ण्वुल् । गणनामिति । युच् इत्यादीनि । कां पाचिं पचां पक्तिं-मित्याद्यूह्यमित्यर्थः ।

आक्रोश इति । आक्रोशः शपनम् । ल्युट् च । तदन्तश्च नपुंसक इति । भावे यो ल्युट् तदन्त इत्यर्थः । तथा चामरः । क्तल्युट् नपुंसके भाव इति । एवं करणार्थस्य' ल्युटो विशेष्यलिङ्गत्वमित्युक्तं भवति । तथा चैवोदाहरति । अत एव भाष्येऽपि प्रयोगः । कोऽसौ 'अनुमानो नाम इति ।

---

१. गुणएवेति क० पु० । २. करणार्थस्येति क० पु० । ३. अनुमानो नामेति ख० पु०।

**१०३४. ल्युट् च [३।३।११५]**

धातोर्ल्युट् स्यात् भावे तदन्तश्च नपुंसकः । ज्ञानम् । मानम् । प्रमाणम् । प्रयाणम् । प्रयानम् । प्रकोपणम् । प्रकोपनम् । प्रेषणम् । प्रणिसनम् । प्रनिसनम् । प्रवनम् ।

**१०३५. करणाधिकरणयोश्च [३।३।११७]**

करणेऽधिकरणे च धातोर्ल्युट् स्यात् । इध्मप्रव्रश्चनः । रजनः । गोदोहनी स्थाली । शयनी ।

**१०३६. वा यौ [२।४।५७]**

ल्युटि परे अजेर्वीभावो वा स्यात् । प्रवयणम् । प्राजनम् । दरिद्राणम् । मिहपतदरोति नलोपिनो निर्देशात् अङ्क्त्यपि नलोपः । दशनः । "ष्ठिवुसिवो-ल्युट्यु पधादीर्घो वा" (वा०) ष्ठीवनम् । सीवनम् । पक्षे ष्ठेवनम् । सेवनम् । कुटादित्वान्न गुणः । स्फुरणम् । स्फुलनम् । "कृत्यल्युटो बहुलम्" (३।३।११३) राजभोजनाः शालयः । राजाच्छादनं वासः ।

---

प्रमाणमिति । "कृत्यचः" ( ८।४।२९ ) इति णत्वम् । प्रयापणमिति । "णे-र्विभाषा" ( ८।४।३० ) इति णत्वविकल्पः । प्रकोपणमिति । "हलश्चेजुपधात्" ( ८।४।३१ ) इति णः । प्रेङ्खणमिति । "इजादेः सनुमः" ( ८।४।३२ ) इति ।

प्रणिसनमिति । "वा निसनिक्ष" ( ८।४।३३ ) प्रवेपनमिति । "न भाभूपूगमि" ( ८।४।३४ ) इति णत्वम् । निषेधः । करणाधिकरणयोश्च । इध्मप्रव्रश्चन इति । प्रवृश्च्यतेऽनेन प्रव्रश्चनः इध्मस्य प्रव्रश्चन इति कर्मणि षष्ठ्या समासः ।

रजन इति । रज्यतेऽनेन । "असिप्रकेऽनेघिनुणि च रञ्जेर्नलोपो वाच्यः" ( वा० ) इति नलोपः । गोदोहनीति । गौर्दुह्यतेऽस्याम् । "टिड्ढाणञ्" ( ४।१।१५ ) इति ङीप् सर्वत्र विशेष्यलिङ्गता ।

वा यौ । यु इति ल्युडेवोत्सृष्टानुबन्धो निर्दिश्यतेऽन्यस्यासम्भवादित्यादि । ल्युटीति । प्रवयणमिति । "कृत्यच." ( ८।४।२९ इति णत्वम् । दरिद्राणमिति । "सनि-ण्वुलि ल्युटि च न" ( वा० ) इत्युक्ते "दरिद्रातेरार्धधातुके" ( वा० ) आलो लोपो न ।

मिहपत । एतच्च "दाम्नी शसयुज" (३।२।१८२) इति ष्ट्रन् विधौ व्याख्यातम् । ष्ठिवुसिवोरिति । एतच्च पृषोदरादित्वात् साधु[१] । राजभोजना इति । कर्मणि ल्युट् । कर्तृषष्ठ्या समासः । राजाच्छादनमिति । करणे ल्युट् ।

---

१. राजाच्छादनमिति । करणे ल्युडिति नास्ति क० पु० ।  २. साधवः क० पु० ।

१०३७. पुंसि संज्ञायां घः प्रायेण [३।३।११८]

पुंल्लिङ्गे करणेऽधिकरणे चार्थे धातोर्घः क्वचित् संज्ञायाम्। णिलोपः।

१०३८. छादेर्घेऽद्व्युपसर्गस्य [६।४।९६]

द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद् घे परे। उरश्छदः। प्रच्छदः। अद्व्येति किम् ? समुपच्छादः। आकुर्वन्त्यस्मिन्नित्याकरः।

१०३९. गोचरसंचरवहव्रजव्यजापणनिगमाश्च [३।३।११९]

एते निपात्याः। गावश्चरन्त्यत्र गोचरः। संचरन्ति तेन संचरः इत्यादि।

१०४०. अवे तॄस्त्रोर्घञ् [३।३।१२०]

अवतारः। अवस्तारः।

---

( 'पुंसि सञ्ज्ञायां। पुंसि करणेऽधिकरणे चार्थे इति। एतेनेतः प्रभृति करणाधिकरणयोरित्येवानुवर्तते भावाधिकारो निवृत्त इति सूचयति। आकुर्वन्त्यस्मिन्। इति ) व्यवहारानिति शेषः। आकरः।

गोचरसंचर। "हलश्च" ( ३।३।१२१ ) इति घञं वक्ष्यति, तदपवादार्थं पुनर्घो विधीयते। गावश्चरन्त्यस्मिन्निति निर्वचनमात्रमेतत्। रूढिशब्दस्त्वयं विषयपर्यायः। ज्ञानगोचर इत्यादि प्रयोगात्। संचरन्तेऽनेनेति। परस्मैपदपाठस्तु न युक्तः "समस्तृतीयायुक्तात्" ( १।३।५४ ) इत्यात्मनेपदविधानात्। संचरो मार्ग इत्यादिग्रहणात्। वहन्त्यनेन वहः स्कन्धः। व्रजन्त्यनेन व्रजः गोष्ठः, व्यजन्त्यनेन व्यजस्तालवृन्तः। आपतेऽस्मिन्नापणः। पण्यस्थानम्। निगच्छन्त्यस्मिन् निगमश्छन्दः। चोऽनुक्तसमुच्चयार्थः। निकषन्त्यस्मिन् निकषः। कषः।

अवेतॄस्त्रोर्घञ्। अवतारः। अवतरन्त्यस्मिन् अवतारः कूपादिः। अवतरन्त्यनेनेति। अवतरणमार्गोऽपि। अवतरणमवतार इति त्वयुक्तम्। भावाधिकारस्य निवृत्तत्वात्। भावे च "ॠदोरप्" ( ३।३।५७ ) इति—अवतर इत्येव भवति। घञो घकारोऽपगतः मार्गः 'अपामार्गं विमार्गं इत्यादौ कुत्वार्थः। "हलश्च" ( ३।३।१२१ ) इति हलन्ताद् धातोः सञ्ज्ञायां घञो विधानात्।

---

१. पुंसि संज्ञायामित्यारभ्य—आकुर्वन्त्यस्मिन्नित्यन्तो (   ) रेखाङ्कितो नास्ति क० पु०।

२. घकारोपि मार्गोऽपामार्ग इति क० पु०।

## १०४१. खनो घ च [३।३।१२५]

अस्माद् घः स्यात् चाद् घञ् । करणाधिकरणयोः पुंसि । आखनः । आखानः । "आखनोडङ्कडरङ्कवकाः वाच्याः" (वा०) उक्तार्थे । आखः । आखनिकः । आखरः । आखनिकवकः ।

## १०४२. ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् [३।३।१२६]

एष्वसुखसुखार्थेषूपपदेषु धातोः खल् स्यात् । "तयोरेवेति" (३।४.७०) भावे कर्मणि चार्थे । कृच्छ्रे । दुष्करः कटो भवता । अकृच्छ्रे । ईषत्करः सुकरो वा । "निमिमीलियामात्त्वाभावात्" । ईषन्निमयः । दुः प्रमयः । सुविलयः ।

## १०४३. उपसर्गात् खल्घञोः [७।१।६७]

ईषत्प्रलम्भः । दुःप्रलम्भः । सुप्रलम्भः ।

## १०४४. कर्तृकर्मणोश्च भूकृञोः [३।३।१२७]

ईषदादिषूपपदेषु - कर्तृपूर्वाद्भुवः कर्मपूर्वात् कृञश्च खल् स्यात् । "कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्" ( वा० ) खित्त्वान्मुम् । कृच्छ्रे । अदुराढ्येन दुराढ्येन भूयते दुराढ्यंभवम् । अकृच्छ्रे । ईषदाढ्यम्भवम् । स्वाढ्यम्भवम् । ईषदाढ्यङ्करः । दुराढ्यङ्करः । स्वाढ्यङ्करश्चैत्रो भवता ।

---

खनो घ च । किमर्थं घित्करणं न हि खनक इत्यत्र कुत्वसम्भवोऽस्ति । एवं तर्हि ज्ञापयत्येतत् अन्यतोऽप्ययं भवतीति भजे. भगः, पदेः पद. । खल् सचनने खल इत्यादि सिद्धम् । आख इति । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । आखर इति डरः ।

ईषद् दुसु । एष्वसुखसुखेष्विति । यथा संभवमेतत् । दुर एव कृच्छ्रे संभवोऽकृच्छ्रे एवेतरयोरिति । निवृत्तमिति । तयोरेवेत्यादि । दुष्करः कटो भवता । दुःशब्दो रेफान्तोऽप्यस्ति । "सुदुरोरधिकरणे" (वा० ) इति निर्देशात् । भवतेति । "न लोकाव्यय" ( २।३।६९ ) इति षष्ठीनिषेधात् कर्तरि तृतीया । आत्त्वाभावादिति । 'निमिमीलियां खलचोरात्त्वनिषेधः" (वा०) इत्युक्तेः । लभेर्नुमं स्मारयति । "उपसर्गात् खल्घञोः" ( ७।१।६७ ) इति ।

कर्तृकर्मणोः । चकारः ईषदादीनामपि सन्नियोगार्थः । तेन यदा कर्तृकर्मणोरीषदादीनां च युगपदुपपदत्वं तदा खल् । तत्र कर्तृकर्मणी धातोरनन्तरे प्रयोज्ये ईषदादयस्तु व्यवधानेन न तु व्यत्ययेन । कुतः खित्करणात् । तद्धि मुमर्थं क्रियते मुम् चानव्ययस्य । ईषदादीनां तु धातोरानन्तर्ये तदनर्थकं स्यात् ।

१०४५. आतो युच् [३।३।१२८]

ईषदादिष्वादन्ताद् युच् स्यात् न खल्। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः। दरिद्रातेर्नेति केचित्। "शासि युधि दृशि धृषि मृषिभ्यो युच् वाच्यः" (वा०) वेत्येके। दुःशासनः। दुःशासः। सुशासनः। सुशासः। युधेरण्यन्तत्वात्। दुर्योधनः। सुयोधनः। दुर्योधः। सुयोधः। सुदर्शनः। सुदर्शः। सुधर्षणः। सुधर्षः। ईषन्मर्षणः। ईषन्मर्षः।

१०४६. अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा [३।४।१८]

प्रतिषेधार्थयोरलंखल्वोरुपपदयोर्धातोः क्त्वा वा स्यात्। "दोदद्घोः" अलं दत्त्वा। अलं दानेन। "घुमास्था" (६।४।६६) पीत्वा खलु। पानेन खलु।

---

न च कृद्ग्रहणपरिभाषया सगतिकेऽपि खिदन्ते मुम् भवेदिति वाच्यम्। एषा हि परिभाषा प्रत्ययग्रहणपरिभाषाविषया न चासावुत्तरपदाधिकारे प्रवर्तते इति लेखग्रहणेन ज्ञापितम्। कथं तर्हि "खित्यनव्ययस्य" (६।३।६६) इत्यत्र खिदन्त इति तदन्तविधिभाव इति चेत्। अनव्ययस्येति निषेधसामर्थ्यादेवेति तत्रैवोक्तमिति स्थितम्।

यथासंख्यमभिप्रेत्याह—कर्तृपूर्वाद्भूव इत्यादि। च्व्यर्थयोरित्यर्थः।

अदुराढ्येनेत्यादि। अनाढ्येन भवता दुःखेनाढ्येन भूयते इत्यर्थः। ईषदाढ्यम्भवमिति। अनाढ्येनाढ्येन भूयते इत्यर्थः।

एवं च कृभ्वर्थमात्रविशेषणस्य दुरः आढ्यशब्देनासमर्थेन समासश्चिन्त्यः। अत एवाकरे अनाढ्येनायासेनाढ्येन भूयते दुराढ्यम्भवमित्येव विगृह्यते, न त्वदुराढ्येन दुराढ्येन भूयते इति। दुराढ्यम्भवमिति वृत्तौ तु दुःशब्दस्याढ्यम्भवशब्देन समासो नाढ्यशब्देन। अत्रोभयोरप्युपपदयोः पूर्वं परस्य समासस्ततः पूर्वस्य। 'उपपदमतिङ्' (२।२।१९) इत्यत्र सुप् सुपेति निवृत्तम्। तेनानेकस्यापि युगपत् समास इति न्यासादयः।

(कथं[1] पुनः सुदुराः व्यवहितयोः प्रयोगः। "ते प्राग्धातोः" (१।४।८०) इति नियमात् इति चेत्। 'कृत्यल्युटो बहुलम्' (३।३।११३) इति बहुलवचनानुवृत्तेः। दुराढ्यम्भवमित्यादि भाष्योदाहरणादिति भावः)।

ईषदाढ्यङ्कर इति। अनाढ्यश्चेत् सुखेनाढ्यः क्रियते इत्याद्यूह्यम्।

च्व्यर्थयोः किम्? आढ्येन सुभूयते। यत्तु स्वाढ्येन भूयते इति प्रत्युदाहरन्ति। तदसत्। अत्र हि खलोऽभावात् भूपसर्गस्य धातोः प्राक् प्रयोगेण भाव्यम्।

युधेर्ण्यन्तादिति। केवले कर्मणोऽसम्भवात् समर्थन भाव्यमिति भावः।

अलंखल्वोः। तुमर्थ इत्यनुवृत्तेर्भविष्य विधिः। अत्र दत्त्वेति। "अमैवाव्ययेन" (२।२।२०) इति नियमान्नोपपदसमासः। वाऽसरूपविधिनाऽपि सिद्धे वा ग्रहणं स्पष्टार्थम्।

---

१. कथं पुनरित्यारभ्य—इति भावः इत्यन्तो भागः ( ) रेखाङ्कितो नास्ति क० पु०।

१०४७. समानकर्तृकयोः पूर्वकाले [३।४।२१]

समानकर्तृकयोर्धात्वोः पूर्वकाले स्थिताद्धातोः क्त्वा स्यात् । "अनुदात्तोपदेश" (६।४।३७) इति मलोपः । विष्णुं नत्वा स्तौति । द्वित्वमतन्त्रम् । नत्वा स्तुत्वा व्रजति । स्वरत्यादेः "श्र्युकः किति" (७।२।११) इति नित्यमिडभावः पूर्वविप्रतिषेधेन । स्वृत्वा । सूत्वा । धूत्वा ।

१०४८. क्त्वि स्कन्दिस्यन्दोः [६।४।३१]

एतयोर्लोपो न स्यात् क्त्वे परे । स्कन्त्वा । स्यन्त्वा । ऊदित्वात् स्यन्दित्वा ।

क्त्वः कित्त्वे प्रयोजनमाह—"घुमास्थेति" इत्वमिति शेषः । प्रतिपेधया. किम् ? अलङ्कारः ।

समानकर्तृकेषु । समानशब्दः एकपर्यायः इत्याह—एककर्तृकयोरिति ।

यद्यपि शक्तिः कारकं सा च 'प्रतिक्रियं भिद्यते । तथापि शक्तिशक्तिमतोरभेदादेककर्तृकत्वमुक्तम् । धात्वोरिति । क्रियापेक्षत्वात्कर्तृभावस्य धात्वर्थयोरित्यर्थो ज्ञेयः । पूर्वकाले स्थितादिति । पूर्वकालभाविक्रियावचनादित्यर्थः ।

ननु समानकर्तृकयोरिति द्विवचननिर्देशाद्बहुषु न स्यादत आह—द्वित्वमतन्त्रम् इति । अविवक्षितमित्यर्थः ।

तेन बहूनामपि समानकर्तृकत्वे भवतीत्युदाहरति—नत्वा स्तुत्वा' व्रजति ।

नन्वेवमपि सर्वपूर्वाया एव प्राप्नोति यथामीषां ब्राह्मणानां पूर्वं आनीयतामित्युक्ते सर्वपूर्व एवानीयते । तत्राहुः । नेह स्तुत्यपेक्षं पौर्वकाल्यं यत आख्यातवाच्या क्रिया विशेष्यत्वात् प्रधानम् । तेन तां प्रति सर्वासां विशेषणत्वात् परस्परेणासम्बन्धः "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादिति" न्यायात् ।

एवं च कृत्वा प्रयोगोऽप्यनियतो भवति । स्नात्वा भुक्त्वा पीत्वा व्रजति । पीत्वा' स्नात्वा भुक्त्वा व्रजति इति । इह तु पूर्वं भुङ्क्ते ततो व्रजति इत्यत्र स्वशब्देन पौर्वकालस्योक्तत्वात् क्त्वा न भवति । आस्यते भोक्तुम् इति वासरूपविधिना लडपि' भवति । यदा त्वासेः क्त्वा भवति तदा भुजो लडादय एव भवन्ति । आसित्वा भुङ्क्ते इति तुमुनत्र न भवति । आसित्वा भोक्तुम् इति अनभिधानादित्याहुः ।

स्वरत्यादेरिति । "स्वरतिसूति" (७।२।४४) इति विकल्पपरमपि बाधित्वा पूर्वविप्रतिषेधेन निषेध एव भवतीत्यर्थः' ।

क्त्वि स्कन्दि । स्कन्त्वेति । "एकाच" (२।२।१० इति नेट् ।

१. समक्रियमिति क० पु० । २. स्तुत्वेति नास्ति क० पु० ।
३. पीत्वा स्नात्वा भुक्त्वा व्रजतीति नास्ति क० पु० । ४. तुमुनर्थेति क० पु० ।
५. निषेधमन्तेति क० पु० ।

१०४९. न क्त्वा सेट् [१।२।१८]

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ? कृत्वा ।

१०५०. मृडमृदगुधकुषक्लिशवदवसः क्त्वा [१।२।७]

एभ्यः सेट् क्त्वा किन् स्यात् । मृडित्वा इत्यादि । "क्लिशः क्त्वा" (७।२।५०) इति वेट् । क्लिशित्वा । क्लिष्ट्वा । उदित्वा । उषित्वा । "रुद-विद" (१।२।८) इति कित्त्वम् । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा ।

१०५१. नोपधात् थफान्ताद्वा [१।२।२३]

नकारोपधात् थफान्तात् परः सेट् क्त्वा कित् स्याद्वा । श्रथित्वा । श्रन्थित्वा । गुफित्वा । गुम्फित्वा । नोपधात् किम् ? कोथित्वा । रेफित्वा ।

१०५२. वञ्चिलुञ्च्यृतश्च [१।२।२४]

एभ्यः सेट् क्त्वा किद्वा स्यात् । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । ऋतित्वा । अर्तित्वा ।

---

न क्त्वा सेट् । शयित्वेति अकित्त्वादगुणः ।

मृडमृद । मृड सुखने मृद क्षोदे । गुध रोषे । कुष निष्कर्षे । क्लिश हिंसायाम् दिवादिरात्मनेपदी । क्लिशू विबाधने क्र्यादिः । द्वावपि । वद व्यक्तायां वाचि । वस निवासे । "न क्त्वा सेट्" ( १।२।१८ ) इति निषेधस्यापवादः । उदित्वेति । यजादित्वात् संप्रसारणम् । उषित्वेति । "वसतिक्षुधोरिट्" ( ७।२।५२ ) इतीट् संप्रसारणम् । "शासिवसि" ( ८।३।६० ) इति षत्वम् । गृहीत्वेति । "ग्रहिज्या" ( ६।१।१६ ) इति संप्रसारणम् । "ग्रहोऽलिटि" ( ७।२।३७ ) इति दीर्घः ।

नोपधात् थफान्ताद्वा । अन्तग्रहणं सुखार्थम् । श्रथित्वेति । श्रन्थ ग्रन्थ सन्दर्भे । "अनिदिताम्" ( ६।४।२४ ) इति नलोपः । गुफित्वेति । गुफ ग्रन्थे । कोथित्वा । रेफित्वेति कुथ पूतीभावे । रिफ कत्थन[1]युद्धनिन्दाहिंसादानेषु । "रलो व्युपधात्" (१।२।२६) इत्यपि विकल्पोऽत्र न भवति । नोपधग्रहणसामर्थ्यादिति स्थितम् ।

वञ्चिलुञ्च्यृतश्च । वञ्चु गतौ । भ्वादिः । वञ्चु प्रलोभने । चुरादिः । लुञ्च अपनयने । ऋतिः सौत्रो धातुर्घृणार्थः धातुसाहचर्यात् । तस्यार्धधातुके इयङो विकल्पनात् तदभावपक्षे कित्त्वं विकल्प्यते ।

१. कथनयुद्धनिन्दाहिंसादानेषु इति क० पु० ।

**१०५३.　तृषिमृषिकृशेः काश्यपस्य [१।२।२५]**

एभ्यः सेट् क्त्वा किद्वा स्यात् । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । "रलो व्युपधाद्" ( १।२।२६ ) इति कित्त्वं वा । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । व्युपधात् किम् ? वर्तित्वा । रलः किम् ? सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् ? भुक्त्वा । "वसतिक्षुधोरिट्" ( ७।२।५२ ) क्षुधित्वा । क्षोधित्वा । "अञ्चेः पूजायाम्" ( ७।२।५३ ) इतीट् । अञ्चित्वा । गतौ तु अक्त्वा । लुभित्वा । लोभित्वा । विमोहने तु लुब्ध्वा ।

**१०५४.　जॄव्रश्च्योः क्त्वि [७।२।५५]**

आभ्यां परस्य क्त्व इट् नित्यं स्यात् । जरीत्वा । जरित्वा । व्रश्चित्वा ।

**१०५५.　उदितो वा [७।२।५६]**

उदितो धातोः क्त्व इड् वा स्यात् । शमित्वा । "अनुनासिकस्य क्विझ्" ( ६।४।१५ ) इति दीर्घः । शान्त्वा । धूत्वा । देवित्वा ।

**१०५६.　क्रमश्च क्त्वि [६।४।१८]**

क्रम उपधाया दीर्घो वा स्यात् झलादौ क्त्वि परे । क्रान्त्वा । क्रन्त्वा । झलि किम् ? क्रमित्वा । "पूङश्च" इति वेट् । पवित्वा । पूत्वा ।

---

तृषिमृषि । ञितृषा पिपासायाम् । मृष तितिक्षायाम् । कृश तनूकरणे । काश्यपग्रहणं पूजार्थम् । वेति हि वर्तते । अञ्चित्वेति । पूजायाम् "उदितो वा" ( ७।२।५६ ) इति विकल्पं बाधित्वा "अञ्चेः पूजायाम्" ( ७।२।५३ ) इति नित्यमिट् । "न क्त्वा सेट्" ( १।२।१८ ) इत्यकित्वान्नलोपाप्रसङ्गः ।

*एवं च "नाञ्चेः पूजायाम्" ( ६।४।३० ) इति नलोपाभावः इति प्राचोक्तं* निर्विषयम् । अक्त्वेति गत्यर्थस्यापि "दितो वा" ( ७।२।५६ ) इतीट्पक्षे नलोपाप्रसङ्गात् । अञ्जित्वेतत् पूर्ववत् । लुभित्वेति । लोभित्वा[1] । 'लुभो विमोहने" (७।२।५४) इतीट् । "रलो व्युपधात्" ( १।२।२६ ) इति वा कित्त्वम् ।

जॄव्रश्च्योः । इट् नित्यमिति जॄ इत्यस्य "श्र्युकः किति" ( ७।२।११ ) इति निषेधे प्राप्ते व्रश्चेस्तूदित्वाद् विकल्पे प्राप्ते इट् विधीयते इत्यर्थः । जरीत्वेति । "वॄतो वा" इति वा दीर्घः । द्यूत्वेति । "च्छ्वोः शूड्" ( ६।४।१९ ) इत्यूठ् । यण् ।

---

१. लोभित्वेति नास्ति क० पु० ।

## १०५७. जान्तनशां विभाषा [६।४।३२]

जकारान्तानां नशेश्च लोपो वा स्यात् क्त्वि परे। भक्त्वा। भङ्क्त्वा। रक्त्वा। रङ्क्त्वा। नष्ट्वा। नंष्ट्वा। "झलादौ वाच्यम्" (वा०) नेह—अञ्जित्वा। "जनसन" (६।४।४२) इत्यात्त्वम्। खात्वा। खनित्वा। "द्यतिस्यति" (७।४।४०) इतीत्त्वम्। दित्वा। सित्वा। स्थित्वा। "दधातेर्हिः" (७।४।४२) हित्वा।

## १०५८. जहातेश्च क्त्वि [७।४।४३]

अस्य हिः स्यात् क्त्वि। हित्वा। हाङस्तु हात्वा। "अदो जग्धिः" (२।४।३६) जग्ध्वा।

## १०५९. समासेऽनञ्पूर्वे क्त्वो ल्यप् [७।१।३७]

अनञ्पूर्वे समासे सति क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकर्षेण कृत्वा प्रकृत्य। अनञिति किम्? अकृत्वा।

---

जान्त। वर्णग्रहणादेव तदन्तविधिलाभेऽप्य[1]न्तग्रहणं स्पष्टार्थम्। नङ्क्त्वेति। "मस्जिनशोर्झलि" (७।१।६०) इति नुम्। तस्य पक्षे लोपः। "रधादिभ्यश्च" (७।२।४५) इतीट्पक्षे नशित्वा। अञ्जित्वेति। ऊदित्वादिड्वा। इडभावपक्षे त्वक्त्वा अङ्क्त्वा इत्युभयं भवति।

जहातेश्च क्त्वि। हात्वेति। ओहाङ् गतौ। "अदो जग्धिः" (२।४।३६) जग्ध्वेति। अद् भक्षणे। "झषस्तथोः" (८।२।४०) इति धत्वम्। "झरो झरि सवर्णे" (८।४।६५)।

समासेऽनञ्पूर्वे। अनञिति पर्युदासोऽयम्। स च "नञिव युक्तन्यायेन सदृशं गृह्णाति। ([2]नञ्भिन्नं नञ्सदृशमव्ययं गृह्यते पूर्वशब्दस्यावयववचनः। तेनाव्ययपूर्वपदकसमास इह गृह्यते। ततः परमकृत्वेत्यादौ न भवतीति व्याचष्टे—अनञ्पूर्वे इत्यादि। लकारो) "लिति" (६।१।९३) इति स्वरार्थः।

पित्त्वस्य फलमाह—तुगिति। प्रकर्षेण कृत्वेति। इत्थंभूतलक्षणे तृतीया। प्रकृष्टं करणमिति यावत्। प्रशब्दोऽत्र धात्वर्थगतं प्रकर्षं द्योतयन् "कुगतिप्रादयः" (२।२।१८) इति मत्वान्तेन नित्यं समस्यते। क्त्वो ल्यपः स्थानिवत्त्वात् "ह्रस्वस्य पिति" (६।१।७१) इति तुक्। स्नात्वा कालकः। पीत्वा स्थिरकः इत्यादौ तु मयूरव्यंसकादिषु निपातनात् ल्यबभावः।

---

१. ग्यन्तग्रहणं स्पष्टार्थम् इत्यारभ्य—अङ्क्त्वेत्यन्तो (    ) रेखाङ्कितो नास्ति क० पु०।
२. नञ्भिन्नमित्यारभ्य—अपरपृष्ठे लकार इत्यन्तो (    ) रेखाङ्कितो नास्ति क० पु०।

## १०६०. षत्वतुकोरसिद्धः [६।१।८६]

षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धः स्यात् । कोऽसिचत् । कोऽसि । अत्र "एङः पदान्तादिति" एकादेशस्यासिद्धत्वात् न षत्वम् । अधीत्य । प्रेत्य । अत्रैकादेशस्यासिद्धत्वात् "ह्रस्वस्य" ( ६।१।७१ ) इति तुक् ।

## १०६१. वा ल्यपि [६।४।३८]

अनुदात्तोपदेशस्रोक्तानां ल्यपि परे वानुनासिकलोपः स्यात् । व्यवस्थितविकल्पत्वात् मान्तानिटां वा नान्तानिटां वनतनादीनां च नित्यम् ।

---

षत्वतुकोरसिद्धः । एकादेश इत्यर्थः । एक आदिश्यतेऽनेनेत्येकादेश । एकादेशशास्त्रम्—आद्गुणादीत्यर्थः ।

कार्यासिद्धत्वे हि यद्यपि षत्वे न दोषः । कोऽसिचदित्यादावोकारस्यासिद्धत्वेनेणोऽभावेन तन्निमित्तस्य षत्वस्याप्रसङ्गात् । तथापि तुकि दोषः स्यात् । अधीत्येत्यादावेकादेशेन दीर्घेण स्थानिनो ह्रस्वस्य निवर्तितत्वात् ।

न चैकादेशस्यासिद्धत्वेऽपि स्थानिनः पुनरुन्मज्जनमस्ति । कोऽसिचदिति । षिच क्षरणे । "लिपिसिचिह्वश्च" (३।१।५३ ) इति च्लेरङि "किमः क" (७।२।१०३) सोरुत्वम् "अतो रोरप्लुताद्"(६।१।११३) इत्युत्वम् । "एङः पदान्तादति" (६।१।१०६) इति पूर्वरूपमेकादेशः । तस्यान्तादिवत्वेति । परादिवद्भावात् ओऽसिचत् इति पदं तेन सकारः परादिर्न भवतीति "सात्पदाद्योः" ( ८।३।१११ ) इति निषेधाभावादेकादेशमोकारमाश्रित्य षत्वम् "आदेशप्रत्यययोः" ( ८।३।५६ ) इति प्राप्त तदसिद्धत्वान्न भवति ।

असिद्धत्वे हि षत्वशास्त्रं प्रति को असिचदित्येवमवतिष्ठते पद तत्र चाकारेण व्यवधानात् षत्वाप्राप्तिरिति ।

एवं कोऽस्य—इत्यत्र प्रत्ययसकार इति प्राप्तम् । अस्येतीदमः षष्ठ्येकवचनस्य "टाङसिङसाम्" ( ७।१।१२ ) इति स्यः ।

सूत्रार्थमुदाहरणे योजयति अत्रेत्यादि ।

उक्तार्थं प्रासङ्गिकं षत्वमुदाहृत्य तुकमुदाहरति अधीत्येति । अधिपूर्व इङ् अध्ययने । क्त्वो ल्यपि सवर्णदीर्घेण ह्रस्वस्य निवर्तित्वात् तुक् न प्राप्नोति ।

असिद्धत्वे तु तुक प्रति अधि इय इत्येवमवस्थित पदरूपमिति ह्रस्वाश्रयः समिध्यतीत्युपदर्शयति-एकादेशस्यासिद्धत्वादित्यादि ।

वृत्ते छत्रम् अयजे छत्रमित्यत्र डे इट् प्रत्ययस्य च "आद्गुणः" ( ६।१।८७ ) तस्यासिद्धत्वात् ह्रस्वलक्षणः "छे च" ( ६।१।७३ ) इति नित्यस्तुक् स्यात् । "दीर्घात

आगत्य । आगम्य । प्रणत्य । प्रणम्य । प्रहत्य । प्रमत्य । प्रवत्य । वितत्य । "अजेर्ल्यपि वाभावो नेति केचित् । उदज्य । अदो जग्धिर्ल्यप्ति किति । प्रजग्ध्य । अन्तरङ्गत्वात् प्रागेव जग्धौ सिद्धेऽपि ल्यबुक्तेर्ज्ञायते हित-दत्व-आत्व-इत्व-दीर्घत्व-श-ऊठ्-इड्विधयो ल्यपि न स्युरिति ।

## १०६२. न ल्यपि [६।४।६९]

ल्यपि परे घुमास्थादेरीत्वं न स्यात् । विधाय । प्रदाय । प्रखन्य । प्रस्थाय । प्रक्रम्य । आपृच्छ्य । प्रदीव्य । प्रपठ्य । एषु हित्वाद्यभावः । प्रमाय । प्रगाय । प्रपाय । प्रहाय । प्रसाय । दो प्रदाय । प्रशाय । प्रच्छाय । "मीनातिमिनोति" (६।१।५०) इत्यात्वम् । प्रमाय । निमाय । उपदाय । "विभाषा लीयतेः" (६।१।५१) विलाय । विलीय । णिलोपः । उत्तार्य । विचार्य ।

---

पदान्ताद्वा" (६।१।६६) इति विकल्प इष्यते इति चेत्, सत्यम् । प्रतिषिध्यतेऽत्रासिद्धत्वम् "सम्प्रसारणङीट्सु प्रतिषेधो वक्तव्यः" (वा०) इति । सम्प्रसारणं तु न प्रयाजयति शब्दहूषु परिवीषु । अत्र ह्वेञो वेञश्च क्विपि सम्प्रसारणे परपूर्वत्वे च कृते तस्य "हलः" (६।४।२) इति दीर्घेण निवर्तितत्वात् एकादेश एव नास्ति यस्यासिद्धत्वं प्रसज्येत येन यत्वाभावः शङ्क्येत । न वा स्थानिवत्त्वम् अल्विधित्वात् ।

आगत्येति । आगम्येत्यादि । गम्-हन्-नम्-मन्-वन्-तनां रूपाणि ।

अदो इति । ननु प्रजग्ध्येत्यत्र समासापेक्षत्वेन बहिरङ्गात् ल्यपः पूर्वमेकपदाश्रयत्वादल्पापेक्षत्वाच्चान्तरङ्गत्वेन जग्धिः क्त्वावस्थायामेव प्राप्नोति तत्र क्तिलीत्येव सिद्धं नार्थो ल्यब्ग्रहणेनेत्याशङ्क्य-अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते इति ज्ञापनार्थं ल्यब्ग्रहणमित्याह—अन्तरङ्गत्वादित्यादि ।

ज्ञापनस्य फलमाह—हित्वेत्यादि ।

तद् यथा विधाय दधातेर्हि न । प्रदाय "दोदद्घोः" (७।४।४६) इति दद् । प्रखन्य । "जनसनखनाम्" (६।४।४२) इत्यात्वं न । प्रस्थाय । "द्यतिस्यति" (७।४।४०) इतीत्वं न । प्रक्रम्य । "क्रमश्च क्त्वि" (६।४।१८) इति दीर्घो न । आपृच्छ्य । प्रदीव्य । च्छ्वोः शूठौ न । प्रपठ्य । वलादेरिडागम् न ।

"घुमास्था" (६।४।६६) इतीत्वस्याप्यभावमुदाहरति—प्रमायेत्यादि । प्रशाय प्रच्छायेति । "शाच्छोरन्यतरस्याम्" (७।४।४१) इति प्राप्तस्येत्वस्याभावः । उत्तार्य । विचार्येति । तॄ प्लवनतरणयोः । चर गतिभक्षणयोः । णौ वृद्धिः ।

**१०६३. ल्यपि लघुपूर्वात् [६।४।५६]**

लघुपूर्वात् परस्य णेरयादेशः स्यात् ल्यपि । विगणय्य । प्रणमय्य । लघुपूर्वात् किम् ? संप्रधार्य ।

**१०६४. विभाषाऽऽपः [६।४।५७]**

आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि । प्रापय्य । प्राप्य ।

**१०६५. क्षियः [६।४।५९]**

क्षियो ल्यपि दीर्घः स्यात् । वेत्येव । प्रक्षीय । प्रक्षिय्य ।

**१०६६. मयतेरिदन्यतरस्याम् [६।४।७०]**

मेङ इकारोऽन्तादेशः स्यात् वा ल्यपि । अपमित्य । अपमाय ।

**१०६७. ल्यपि च [६।१।४१]**

वेञो ल्यपि संप्रसारणं न स्यात् । प्रवाय ।

**१०६८. ज्यश्च [६।१।४२]**

ज्या इत्यस्य तथा । प्रज्याय ।

**१०६९. व्यश्च [६।१।४३]**

व्येञो ल्यपि प्राग्वत् । उपव्याय ।

---

ल्यपि लघुपूर्वात् । लघुरच्पूर्वो यस्मात्स लघुपूर्वोऽर्थाद्धलेव तस्मात् परस्येत्यर्थः । "णेरनिटि" ( ६।४।५१ ) इति लोपापवादः । विगणय्येति । [1]णावतो लोपस्य स्थानिवत्त्वान्नोपधावृद्धिः । प्रणमय्येति । मितां ह्रस्वः । प्रवेभिदय्येति । भिदेर्यङन्तात्णौ[2] अतो लोपे "यस्य हलः" ( ६।४।४९ ) इति यलोपः ।

न च "असिद्धवदत्राभात्" इति ह्रस्वयलोपाल्लोपानामसिद्धत्वात् लघुपूर्वात् परो णिर्नास्तीति वाच्यम्, [3]व्याश्रयत्वात् । ह्रस्वादयो हि णौ ल्यपि गुणे । णेरयादेश इति ।

संप्रधार्येति । धृञ् धारणे णौ वृद्धिः णिलोपः ।

---

१. णावतो लोपस्येति नास्ति क० पु० ।

२. स्य यल्लोपे इति क० पु० ।

३. व्याश्रयत्वादिति नास्ति क० पु० ।

## १०७०. विभाषा परेः [६।१।४४]

परेः व्येञो वा संप्रसारणं स्याल्ल्यपि। तुकं बाधित्वा परत्वात् "हलः" (६।४।२) इति दीर्घः। परिवीय। परिव्याय। समो वेत्येके। संवीय। तत्कालेऽपि क्त्वा क्वचित्। आस्यं व्यादाय स्वपिति। नेत्रे निमील्य हसति।

## १०७१. आभीक्ष्ण्ये णमुल् च [३।४।२२]

धातोः पूर्वकाले णमुल् स्यात् पौनःपुन्ये क्त्वा च। "नित्यवीप्सयोः" (८।१।४) स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा वा। पायं पायम्। भोजं भोजम्। "चिण्णमुलोर्दीर्घः" (६।४।९३) इति णिचि वा दीर्घः। गामं गामम्। गमं गमं वा। "विभाषा चिण्णमुलोः" (७।१।६९) इति नुम् वा। लम्भं लम्भम्। लाभं लाभम्। प्रादौ तु प्रलम्भं प्रलम्भम्। ण्यन्तजागुस्तु जागरं जागरम्। जागारं जागारमित्यादि ज्ञेयम्।

---

विभाषा प:। प्राप्नोतेरिति। प्राप्नू व्याप्तावित्यस्य। न स्विङादेशस्य लाक्षणिकत्वादिति भावः।

तुकं बाधित्वेति। व्येञ् संप्रसारणे कृते ह्रस्वाश्रयस्तुक् प्राप्नोति तं बाधित्वा परत्वात् 'हलः" (६।४।२) इति दीर्घे कृते ह्रस्वाभावान्न तुगित्यर्थः।

तत्कालेऽपीति। पूर्वकालत्वाभावादप्राप्तौ वचनम्।

मुख व्यादायेति। पूर्वं ह्यसौ स्वपिति पश्चाद् व्यादत्ते। यदैव हसति तदैव संमीलयति इति पूर्वकालत्वाभावः।

अन्ये त्वाहुः। अवश्यं ह्यसौ व्यादाय मुहूर्तं स्वपिति संमील्य च हसति। ततश्चोत्तरकालभावि स्वापहासलक्षणापेक्षं पौर्वकाल्यमप्यस्ति। तदाश्रयः क्त्वा सूत्रेणैव सिद्धः नार्थोऽनेनेति।

आभीक्ष्ण्ये। पौनःपुन्ये इति। पौनःपुन्यविशिष्टक्रियावचनाद्धातोरित्यर्थः।

नित्यवीप्सयोरिति। अनेन द्वित्वमिति शेषः। द्विवचनसहितावेव क्त्वाणमुलावाभीक्ष्ण्यं द्योतयतः इति भावः।

स्मारं स्मारमिति। स्मृ चिन्तायाम्। णमुलि णित्वाद् वृद्धिः। "कृन्मेजन्तः" (१।१।३९) इत्यव्ययं द्विर्वचनम्। "विभाषाग्रे प्रथमपूर्वेषु" (३।४।२४) इत्यत्र विभाषाग्रहणं क्त्वाणमुल्भ्यां मुक्ते लडादयोऽपि यथा स्युरिति क्रियमाणं ज्ञापकं यत्र क्त्वाणमुलौ विधीयेते तत्र वाऽसरूपविधिर्नास्तीति। तेनाभीक्ष्ण्ये लडादयो न भवन्तीति स्थितम्।

## १०७२. कर्मण्याक्रोशे कृञः खमुञ् [३।४।२५]

कर्मण्युपपदे कृञः खमुञ् स्यात् आक्रोशे गम्ये। चौरंकारमाक्रोशति। चौरोऽसीत्याक्रोशतीत्यर्थः।

## १०७३. स्वादुमि णमुल् [३।४।२६]

स्वाद्वर्थेषु कृञो णमुल् स्यात्। एककर्तृकयोः पूर्वकाले। स्वादुंकारं भुङ्क्ते मान्तत्वमविकारार्थम्। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते।
मान्तत्वमविकारार्थम्। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते।
सम्पन्नंकारम्। लवणंकारम्। वाऽसरूपेण क्त्वाऽपि स्वादुंकृत्वा भुङ्क्ते।

## १०७४. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् कृञ् [३।४।२७]

एषूपपदेषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगो यस्य स तथा चेत्। कृञो-ऽयर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारं एवङ्कारं कथंकारं इत्थंकारं भुङ्क्ते। इत्यर्थः। सिद्धेति किम्। अन्यथा शिरः कृत्वा भुङ्क्ते। क्त्वाऽपि। एवं कृत्वापि।

---

पायम् पायमिति। "आतो युक् चिण्कृतोः" (७।३।३३) इति युक्। गामं गाममिति। गमेर्ण्यन्ताण्णमुल्। मितां ह्रस्वे वा दीर्घः। णिलोपः। प्रादौ तु प्रलम्भ इति। तदुक्तं काशिकायाम्–"विभाषा चिण्णमुलोः" (७।१।६९) इत्यत्र इयं व्यवस्थित-विभाषा तेनानुपसृष्टस्य विकल्पः प्रादेर्नित्यं भवतीति "चिण्णमुलोरनुपसर्गस्य" इति च वार्तिकम्। ण्यन्तजागुरित्विति। ण्यन्यजागर्तेश्चिरण्णमुलोर्वा वृद्धिरिति केचिदित्युक्तेः। कुवलस्य तु "जाग्रोऽविचिण्णल्ङित्सु" (७।३।८५) इति गुण एवेति भावः।

कर्मण्याक्रोशे। चौरङ्कारमाक्रोशति–इति चौरादयः [1]शब्दाः इह शब्दप्रधानाः करोतिश्चोच्चारणार्थः। चौरस्त्वमित्युच्चार्याक्रोशतीत्यर्थः। इति विवृणोति। चौरोऽसि—इत्युच्चार्येति शेषः। नात्र करोतिर्निष्पादनार्थः। न ह्यनेन चौरः क्रियते, अपि त्वाक्रोशसंपादनार्थमचौरोऽपि चौर इत्युच्यते इति भावः।

स्वादुमि णमुल्। स्वादुमीत्यर्थग्रहणम् व्याख्यानादित्याह—स्वाद्वर्थेष्विति। तेन तत्पर्यायाणामपि मान्तत्वं सिद्धयतीति भावः। पूर्वकाले इति। पूर्वकाले वर्तमानात् कृञ इत्यन्वयः। स्वादुंकारमिति। पूर्वपदस्य मान्तत्वं निपातनात्।

१. चौरादय आक्रोशार्थशब्दप्रधाना इति क० पु०।

## १०७५. यावति विन्दजीवोः [३।४।३०]

यावत्युपपदे आभ्यां णमुल् स्यात् । विदॢ लाभे । यावद्वेदं भुङ्क्ते । यावज्जीवमधीते ।

---

अथ किमर्थं णमुल् विधीयते न प्रकृतः खमुञेव विधीयते । तत्र खित्वादेव मुम् सिद्धयति इति मान्तत्वमपि न निपात्यमित्याशङ्क्याह—मान्तत्वमविकारार्थमिति ।

अयमर्थः खमुञ्यपि कृते स्वन्तस्य मुम् न स्यादनव्ययस्येति वचनात् । ततश्च स्वादुमिति । "च्वौ च" ( ७।४।२६ ) इति दीर्घः स्यात् । स्त्रियां च 'वोतो गुणवचनात्" ( ४।१।४४ ) इति ङीप् स्यात् । अतः स्वादुमिति रूपं निपात्यते । तत्सामर्थ्यात् भावप्रत्ययविषये रूपान्तरं व्यावर्तयद्विकारनिवृत्त्यर्थं सपद्यते । ततश्च मान्तत्वेनानदन्तत्वात् ङीपभावः । अनजन्तत्वात्तु नेत्वदीर्घौ इति । अस्वाद्वीमित्यादि । च्व्यर्थविवक्षायामपि न स्वादौ ङीप् न वा दीर्घादिकार्यं किं तु स्वादुकारमित्येव भवतीत्यर्थः । सपन्नलवणशब्दावपि स्वादुपर्यायौ । स्वादुकृत्वेति । भावप्रत्ययमात्रे स्वादुमो मान्तत्वनिपातनमिति भावः ।

अन्याद्यर्थत्वात् निष्प्रयोजनत्वादित्यर्थः । तदेव विवृणोति । इच्छन् भुङ्क्ते इत्यर्थं इति ।

नह्यत्र करोतिनार्थे कश्चिद्विशेषः क्रियते इत्येतावत् । न तु सर्वथाऽर्थशून्यत्वमुच्यते । अन्यथा भेदनिबन्धनस्य पौर्वकालस्य समानकर्तृकत्वस्य चाभावात् क्त्वाणमुलावेव न स्याताम् । अथापि णमुल्वचनसामर्थ्यादुभयाभावेऽपि स्यात्, तथापि वाऽसरूपविधिना तदुभयलक्षणः क्त्वा तु न स्यात् । तस्मादिहापि—अस्ति क्रियाद्वयं तस्य सामान्यविशेषभावेनान्वयः । तथा हि क्रियासामान्यविषयः करोतिस्तद्विषयः प्रकारोऽन्यथादिशब्दैरुच्यते । तत्र सामान्यस्य सन्निहिते विशेषे भोजनादौ पर्यवसानात्तद्विषय एव प्रकार उक्तो भवति । ततश्चान्यथा भुङ्क्ते इत्युक्ते यावानर्थस्तावानेव सत्यपि करोतौ विशेषेणैव सामान्यापेक्षाया उपक्षयादित्येतावता प्रयोगानर्हत्वमुच्यते । न पुनरभिधेयासत्त्वात् ।

एवं च क्रियाभेदनिबन्धनः क्त्वाप्युपपद्यते इति सूचयति । क्त्वापीति । वाऽसरूपविधिनेत्यर्थः ।

यावति विन्दजीवोः । पूर्वकाले इतीह नास्ति । यावद्वेदं भुङ्क्ते इति । यावल्लभते तावद्भुङ्क्ते इत्यर्थः ।

असाकल्यार्थमेतत् । साकल्ये तु "कर्मणि दृशिविदोः साकल्ये" ( ३।४।२९ ) इत्येव सिद्धम् । यथा ब्राह्मणवेदं भोजयति । यं यं लभते तं तं भोजयतीत्यर्थः ।

१०७६.　　निमूलसमूलयोः कषः [३।४।४३]

एतयोः कर्मणोः कषो णमुल् स्यात् ।

१०७७.　　कषादिषु यथाविध्यनुप्रयोगः [३।४।४६]

कषादिषु मध्ये यस्माण्णमुलुक्तः स एव अनुप्रयोज्यः । धातुसम्बन्धे सिद्धेऽपि नियमार्थमुक्तिः । निमूलकाषं कषति । समूलकाषं कषति । समूलं कषतीत्यर्थः ।

१०७८.　　शुष्कचूर्णरूक्षेषु पिषः [३।४।३५]

एषु कर्मसु पिषो णमुल् स्यात् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । इत्यादि ।

१०७९.　　परिक्लिश्यमाने च [३।४.५५]

स्वाङ्गे द्वितीयान्ते । शिरः पेषं युध्यते ।

---

निमूल । कष हिंसायाम् ।

कषादिषु यथा । "निमूलसमूलयोः कषः" (३।४।३४) इत्यारभ्य येभ्यो णमुल् विहितस्ते कषादयः । [1]धातुसम्बन्धे इति । क्रियान्तरसम्बन्धे इत्यर्थः

नियमार्थमिति । प्रकृतिधातुयोग एव कषादेर्णमुल् स्यादन्ययोगे मा भूदित्येव-मित्यर्थः ।

निमूलकाष कषतीति । निर्गतं मूलमस्य निमूलं कषणं करोतीत्यर्थः ।

एकस्यापि धात्वर्थस्य निमूलादि विशेषणसम्बन्धाद् भेदे सति सामान्यविशेष-भावेन विशेषणविशेष्यभावः । एवमुत्तरत्रापि ।

समूलाकृतजीवेषु । सजीवं गृह्णातीत्यर्थः इति । जीवतीति जीवः "इगुपध" (३।१।१३५) इति कः । जीवन्तं गृह्णातीत्यर्थः इति हरदत्तः । करणे "हिंसार्थानां च समान[2]कर्तृकाणाम्" (३।४।४८) इति णमुलं वक्ष्यति । अहिंसार्थमिदम् । यथाविध्यनुप्रयोगार्थं तत्रैव नित्यसमासार्थं च हन्तेर्हिंसार्थस्यापि प्रत्ययोऽनेनैवेष्यते पूर्वविप्रतिषेधेन । हिंसार्थानामित्यनेन तु कृते "तृतीयाप्रभृतीन्यतरस्याम्" (२।२।२१) इति विकल्पितः समासः स्यात् इति ।

---

१. धातुसम्बन्धे इति क० पु० ।

२. समानकारककाणामिति क० पु० ।

**१०८०. विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः [३।४।५६]**

द्वितीयान्ते । गेहानुप्रवेशमास्ते इत्यादि ।

**१०८१. समूलाकृतजीवेषु हन्कृञ्ग्रहः [३।४।३६]**

एषु कर्मसु क्रमेण हन्त्यादेर्णमुल् स्यात् । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवं गृह्णातीत्यर्थः ।

**१०८२. करणे हनः [३।४।३७]**

करणे उपपदे हन्तेर्णमुल् स्यात् । पादघातं हन्ति । पादेन हन्तीत्यर्थः ।

**१०८३ स्नेहने पिषः [३।४।३८]**

स्निह्यते येन तस्मिन् करणे पिषेर्णमुल् स्यात् । तैलपेषं पिनष्टि । तैलेन पिनष्टीत्यर्थः ।

**१०८४. हस्ते वर्तिग्रहोः [३।४।३६]**

हस्तार्थे करणे आभ्यां णमुल् स्यात् । हस्तवर्तं वर्तयति । करवर्तम् । हस्तग्राहं गृह्णाति । करग्राहम् । करेण गृह्णातीत्यर्थः ।

---

स्नेहने पिषः । व्याख्यानादर्थग्रहणमित्याह—स्निह्यतेऽनेनेति । द्रवद्रव्यमुच्यते । तेनोदपेषं पिनष्टीत्याद्यपि । 'पेष वासवाहनधिषु च" ( ६।३।५८। इत्युदकस्योदभावः । स्वेपुष. । स्व इत्यर्थग्रहणमित्याह—स्ववाचिनीति । धनं स्वस्य पर्यायः । गोविशेषः । कथ पुनः स्वं रूपमिति सति पर्यायाणां विशेषाणां च ग्रहणं इत्यादि स्वोक्तेऽर्थं वार्तिक प्रमाणयति वृत्तावाविति । विभाषा "वृक्षमृग" (२।४।१२ इत्यत्र वृक्षविशेषाणामेव ग्रहणं न स्वरूपपर्याययोः । "स्वेपुषः" ( ३।४।४० ) इत्यत्र पर्यायाणां विशेषाणां ग्रहणम् स्वरूपस्यापि इत्यपि द्रष्टव्यम् ।

तथा च स्वपोषमित्युदाह्रियेत "सभाराजा" ( २।४।२३ ) इत्यत्र तु राजपर्यायाणामेव ग्रहणम् न स्वरूपविशेषयोः । "पक्षिमत्स्यमृगान्" । पक्षिमत्स्यमृगान् हन्तीत्यत्र स्वरूपस्य विशेषस्य च ग्रहणं न पर्यायस्य मीनस्येष्टिरिति सूक्तम् । एतत् सर्वं तत्रैवोपपादितमस्माभिः । उपदंशस्तृतीयायाम् । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते इत्यर्थः । अत्र मूलकस्य भुज्यपेक्षया करणत्वं शाब्द मूलकेन भुङ्क्ते किं कृत्वा उपदश्य किम् ? अर्थात् मूलकमित्येतदेव कर्म गम्यते । यद्येवं मूलकेनेति करणस्योपदंशिना सामर्थ्याभावात् प्रत्ययो न स्यात् उपपदसंज्ञासमासश्च न प्राप्नोति । तत्राहुः । यद्यपि भुजिना शब्दोऽन्वयः उपदंशिना तु कर्मापेक्षायां सन्निधानादयोग्यत्वाच्च वस्तुतः सम्बन्धोऽस्त्येव भुजिप्रति हि करणमन्यथा नोपपद्यते ।

१०८५. स्वेपुषः [३।४।४०]

स्वार्थाचिनि करणे पुषेर्णमुल् स्यात् । स्वपोषं पुष्णाति । स्वेन पुष्णातीत्यर्थः । पर्यायाणां विशेषाणां चात्र ग्रहणमिष्यते । धनपोषम् । गोपोषम् ।

वृक्षादौ तद्विशेषाणां स्वे पर्यायविशेषयोः ।
पर्यायस्यैव राजादौ मत्स्यादौ तद्विशेषयोः ॥

१०८६. उपमाने कर्मणि च [३।४।४५]

येन कर्म कर्ता चोपमीयते तत्रोपपदे णमुल् स्यात् । रत्ननिधायं निधत्ते । रत्नमिव निधत्ते इत्यर्थः । अजनाशं नष्टः । अज इव नष्ट इत्यर्थः ।

१०८७. उपदंशस्तृतीयायाम् [३।४।४७]

तृतीयान्तोपपदात् उपदंशेर्णमुल् स्यात् । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । "तृतीयाप्रभृतीनि" ( ) इति वा समासः ।

१०८८. अपादाने परीप्सायाम् [३।४।५२]

त्वरायामपादानोपपदात् धातोर्णमुल् स्यात् । कषादित्वाभावात् यथा विध्यनुप्रयोगो न । शय्योत्थायं धावति । शय्याया उत्थाय धावतीत्यर्थः ।

१०८९. द्वितीयायां च [३।४।५३]

द्वितीयान्ते उपपदे धातोर्णमुल् स्यात् त्वरायाम् । यष्टिग्राहं युध्यन्ते । यष्टीर्गृहीत्वा युध्यन्ते इत्यर्थः ।

---

अत्राथऽभिसम्बन्धे वचनसामर्थ्यात् प्रत्ययादि भविष्यतीति तदभिप्रेत्याह—तृतीयाप्रभृतीनि । वाऽसरूपविधिना क्त्वाऽपि । मूलकेनोपदश्य भुङ्क्ते ।

अपादाने परी । शय्याया उत्थायेति । एव नाम त्वरते । यदवश्यकर्तव्यमप्यक्षिप्रक्षालनादि[1]नापेक्षते शय्योत्थानमात्रमेवाद्रियते इति विवक्षायां त्वरा गम्यते । एवं यष्टीर्गृहीत्वेत्यत्रापि । एवं नाम युद्धाय त्वरे यदासन्नं यष्ट्यादिकमपि गृहीत्वा धावति नायुधं प्रतीक्षते इति विवक्षया त्वरा ज्ञेया ।

---

१. नापेक्ष्यते इति क० पु० ।

१०९०. अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ [३।४।५९]

अव्यये उपपदे कृञः एतौ स्तः। अप्रियस्योच्चैः प्रियस्य नीचैः कथने उच्चैः कृत्य उच्चैः कृत्वा उच्चैःकारं वा अप्रियं ब्रूते। नीचैःकृत्य प्रियं ब्रूते। इत्यादयः कृतो ज्ञेयाः दिङ्मात्रमेतदुक्तम्।

---

अव्ययेऽयथा। असन्देहाय यथाभिप्रेताख्यानेऽव्यये इति वाच्येऽन्यथा निर्देशान्नञः प्रश्लेषो गम्यते। अयथाभिप्रेतशब्द आख्यानक्रियाविशेषण यथाभिप्रेतं न भवति तथा ख्याति इत्यर्थ.। तदेव विवृणोति। अप्रियस्योच्चैरिति। नीचैर्नामाप्रियं वाच्यं मरणादि उच्चैर्नाम पुत्रजननादि वाच्यम्। यत्तु तयोर्विपर्ययेण कथनं भवति तदयथाभिप्रेतमित्यर्थ.।

प्रियं ब्रूते इति। प्रियाख्यान यद्यप्यभिप्रेतं तथापि तत्प्रकारस्य नीचैस्त्वस्यानभिप्रेतत्वमत्र विवक्षितम्।

इत्यादय इति। इह विशिष्यानुक्ता अपि मूलशास्त्रादवगन्तव्या इत्यर्थः। दिङ्मात्र मार्गव्युत्पादनमात्रमिह कृतं न साकल्येन व्याकरणं संगृहीतम्। विस्तरभीरुबालव्युत्पादनार्थमेवैतद् ग्रन्थकरणात् यद्वक्ष्यति।

आनन्त्यात् सर्वशः शब्दा इत्यादि। अत एवोपेक्षितसूत्रव्याख्यानाय सोऽप्यनर्थकः। परेषां पूर्ववृत्तिमात्रसंग्रहे तेनैव गतार्थत्वात्। अतिरिक्तार्थसंग्रहे चातिविस्तारापत्तेरिति भावः।

दुग्धाम्भोमण्डलमौलिमण्डनमणिर्यः शेषवंशामलो-
त्तसः श्रीनरसिंहसूनुरभवत् प्रत्यक्षवाचस्पतिः।
सारघ्नौ कृतगूढभावविवृतौ सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् कृत्याश्रया प्रक्रिया॥

इति कृदन्त प्रक्रिया।

---

# अथ वैदिकी प्रक्रिया

वैदिकशब्देष्वप्येवैव प्रक्रिया। य एव लौकिकास्त एव वैदिका इति न्यायात्। क्वचित्प्रयोगवशादन्यथात्वम्।

१०६१. प्रकृत्यान्तः पादमव्यपरे [६।१।११५]

ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे न तु वकारयकारपरे अति। उप प्रयन्तो अध्वरम्। सुजाते अश्वसूनृते। अन्तः पादमिति किम्? य एतेऽर्चयन्ति। अव्यपरे किम्। तेऽवदन्। तेऽयस्मयम्।

---

ययेयता प्रबन्धेन लौकिकेषु शब्देष्वन्वाख्यातेषु वैदिकान्वाख्यानमवशिष्यते तच्चेदमप्रयोजनं "रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति" वदता भाष्यकारेण वेद-रक्षाया व्याकरणारम्भप्रयोजनत्वेन मुख्यतयाऽभिधानात्। ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति वेदार्थज्ञानोपायतया वेदाङ्गत्वेनैव 'व्याकरणारम्भ-प्रयोजकाध्ययनविधानात्। तमनुपकुर्वतश्च तदङ्गत्वासम्भवात्। तत्कथं वैदिकानु-पेक्ष्य लौकिका एवेह व्युत्पादिता इत्याशङ्क्य परिहरति–वैदिकशब्देष्वपीत्यादि। एवैव लौकिकोक्तैव प्रक्रिया साधारणत्वादगृह्यमाणविशेषत्वादित्यर्थः।

ननु गृह्यते एवविशेषः। व्यपदेशतोऽर्थतो रूपतश्च भेदात्। तथा च भाष्य-कारो लौकिकेभ्यो वैदिकान् भेदेन व्यपदिशति। अथ शब्दानुशासनं केषां शब्दानां लौकिकानां वैदिकानां चेति। अर्थभेदोऽपि दृश्यतो वेदे श्रूयते उत्ताना वै दिवं गता वहन्तीति। एतद्वै देव्य मधूयत् घृतमिति।

न च लोके गवादिशब्दानामेवंभूतोऽर्थः प्रसिद्धः। रूपभेदश्चापि श्रूयते। वेदेऽष्टाकपालोऽग्निष्टोमो गृह्णाति। एव च यत्रापि गवादिशब्देषु रूपभेदो नावगम्यते तत्राप्यर्थभेदादेव शब्दभेदस्तादृश्यनिबन्धनश्चैकत्वाध्यवसाय इति। तदेतत् प्रति-क्षिपन्नाह–य एव लौकिकास्ते एव वैदिका इति न्यायादिति। तथा चाकृत्यधिकरणे जैमिनेः सूत्रे प्रयोगचोदनाभावादर्थैकत्वमविभागादिति। अत्र ह्येव सिद्धान्तितं लौकिकेभ्यो गवादिशब्देभ्यो न वैदिकास्ते भिद्यन्ते तत्त्वेन प्रत्यभिज्ञानात्। सोऽयं देवदत्त इतिवत्। न चेदं बाध्यते। भेदे च वेदे पृथक् व्युत्पत्त्यभावादबोधकतया धर्मप्रमाणत्वं व्याहन्येत। यदुक्तम्–'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः' इति।

---

१. इत्यादिना भाष्यकारेरोति क० पु०।

२. वेदाङ्गत्वेन व्याकरणाध्ययनविधानात् इति क० पु०

यूपाहवनीयादिशब्दानां तदर्थानां चालौकिकत्वेऽपि प्रसिद्धपदसमभिव्याहाराद् व्युत्पत्तिः सिध्यति । व्यपदेश[1]भेदस्तु ब्राह्मणपरिव्राजकन्यायात् प्राधान्यस्थापनार्थतया न भेदे प्रमाणम् । यत्तूत्तानवहनादिकमुपदिश्यते सोऽर्थवादः । लोकप्रसिद्धस्य गोपदार्थस्योत्तानवहनरूपक्रियाविशेषप्रतिपादनस्य प्रशंसार्थत्वात् । यदपि रूपान्यत्वमुक्तम् न तदपि भेदकमेकदेशविकृतस्यानन्यत्वात् । अत एवोदाहृतेषु विकृताविकृतेष्वर्थैकत्वमुपलभ्यते । एवं च शब्दैक्ये सिद्धे तदर्थैक्यमप्यर्थतः सिद्धम् । तदाह—शबरस्वामी—य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चामीषामर्था इति । सूत्रार्थस्तु लोकवेदयोः शब्दरूपस्य चार्थरूपस्य चैकत्वं प्रत्यभिज्ञारूपप्रत्यक्षाविभागात् । एवं च सति दर्शपूर्णमास्यादिप्रयोगचोदनाया अभावः स्यादिति ।

ननु यदि लिङ्गशब्देष्वप्येवं प्रक्रिया ततस्तद्विरुद्धाः देवासः कर्णेभिः त्मना गृभ्णामीत्येवमादयः प्रामादिकाः सम्भाव्येरन्नत आह—क्वचिदिति । यथा लौकिकेषु सामान्यलक्षणे सत्यपि विशेषलक्षणमप्यस्ति णिङभावपक्षे "कमेश्च्नेश्चङ् वाच्यः" इति । एवं वैदिकेष्वप्युक्तसामान्यलक्षणे स्थितेऽपि "आज्जसेरसुक्" ( ७।१।५० ) इत्यादिविशेषलक्षणस्य सत्त्वान्नापशब्दत्वं शङ्क्यमित्यर्थः । उक्तं च भाष्ये—लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यतीति ।

प्रयोगवशादिति । प्रयोगविशेष एव न तु तल्लक्षणादर्शनात् सर्वत्र तथा प्रयोग ऊहनीय इत्यर्थः । तदुक्तं भाष्ये दृष्टानुविधिश्छन्दसीति । तदेवान्यथात्वमुदाहरति—प्रकृत्यान्तरिति । पादस्य मध्ये इत्यन्तःपादमित्यव्ययीभावः । मन्तरित्यव्ययमित्य धिकरणशक्तिप्रधान[2] मध्यमाचष्टे पादश्चेह न श्लोकस्य गृह्यते । पादशब्देन ऋक्पादस्य ग्रहणमिष्यते इतीष्टेः ।

अन्ये तु "वा छन्दसि" इत्यतो मण्डूकप्लुतिन्यायेन छन्दसीत्यनुवर्तयन्ति । तेनास्य वैदिकत्वं संपद्यते इत्याशयेन व्याचष्टे ऋक्पादमध्यस्य इति । "एङः पदान्तादति" ( ६।१।१०९ ) इत्यतोऽनुवर्तमानमेङ इति पञ्चम्यन्तमप्यर्थात् प्रथमया विपरिणम्यतेऽस्य कार्यिणोऽसम्भवात् इत्याशयेनाह—एङिति । प्रकृत्येति । सन्धिरूपं विकारं न यातीत्यर्थः । अन्तःपादमिति किमिति । ऋचीत्येव किं नोक्तमित्यर्थः । एतेऽर्वन्ति इति । कया मती एतेऽर्वन्ति शुष्मं वृषणो [3]वसूया इति । अत्र च एते इति पादस्यान्ते एङस्ति । अकारश्च परस्य पादस्यादाविति न निमित्तनिमित्तयोः पादमध्यस्थत्वमिति सत्यपि ऋक्त्वे प्रकृतिभावाभावः । अत्र च पदान्तादित्यप्यनुवर्तनीयम् । तेनाग्ने रथं सुवहस्य प्रणीतौ । वायोरिव सूनृतानामुदर्कः "इत्यादौ ङसिङसोश्च" ( ६।१।११० ) इति पूर्वरूपं न तद्बाध्यते ।

---

१. व्यपदेशो भदस्तु इति क० पु० ।
२. प्रधानमर्थमाचष्टे इति क० पु० ।
३. वृषणोत्र सुषा इति क० पु० ।

१०९२. अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च [६।१।११६]

एषु सप्तसु व्यपरेऽप्यति एङ् प्रकृत्या । पशुभिर्नो अव्यात् मित्रमहो अवद्यात् । उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादमिति किम् ? य एवेऽर्चयन्ति । अव्यपरे किम् ? तेऽवदन् । ते अयस्मयम् ।

१०९३. यजुष्युरः [६।१।११७]

उरःशब्द एङन्तोऽति परे प्रकृत्या यजुषि । उरो अन्तरिक्षम् ।

१०९४. आङोऽनुनासिकश्छन्दसि [६।१।१२६]

आङोऽनुनासिकादेशोऽचि प्रकृत्या । अभ्र आँ अपः ।

१०९५. षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु [८।३।५३]

षष्ठीविसर्गस्य सः स्याद् बहुलं छन्दसि पत्यादौ परे । वाचस्पतिः दिवस्पुत्रः इत्यादि ।

---

अव्याद् । एषामनुकरणत्वात् सुबन्तेन समासः । अव्यादिति । अव रक्षणे इत्यस्मादाशिषि लिङ् । अवद्यादिति पञ्चम्यन्तम् । अवक्रमुरिति । अदपूर्वस्य क्रमेर्लिट्युसि "छन्दसि वा वक्तव्यम्" ( वा० ) इति द्वित्वनिषेधः । क्वचिदवचक्रमुरिति पठ्यते तदयुक्तम् । तथा लक्ष्यादर्शनात् । अव्रतेति । वृङ्वृञो. "मन्त्रे घसह्वर" ( २।४।८० ) इति च्लेर्लुकि झस्यादादेशो यण् अयमिति । इदमः सौ । अवन्त्वित्यवतेर्लोट् । अवस्यव इति । अवेरसुन्[1] औणादिकः । ततः क्यच् । "क्याच्छन्दसि" ( ३।२।१७० ) इत्युः । तेनो अवन्त्विति । बह्वृचास्तु पूर्वरूपमेवाधीयते इति हरदत्तः ।

यजुष्युरः । यजूंषि पादाभावादनन्तःपादार्थं वचनम् ।

आङोऽनुना । आङिति ङित्विशिष्ट आकारो गृह्यते य ईषदर्थे इत्यादिना लक्षितः । यद्यपि अभ्र आँ अपः इत्यत्राकारो नेषदर्थादिचतुष्टयवृत्तिः सप्तम्यर्थानुवादित्वात्, तथापि वाक्यस्मरणयोरङित् इत्यत्रैव तात्पर्यमन्यत्र सर्वत्रैव आङ् ङिद्वेदितव्य इति भाष्ये स्थितत्वादस्याङ्त्वं द्रष्टव्यम् ।

---

१. असुन् इति क० पु० ।

## १०९६. स्यश्छन्दसि बहुलम् [६।१।१३३]

स्य इत्यस्य सोर्लोपः स्याद्धलि बहुलम् । एष स्य वाजी । बहुलं किम् । यत्र स्यो निपतेत् ।

## १०९७. अयस्मयादीनि छन्दसि [१।४।२०]

अयस्मयादीनि छन्दसि भपदसंज्ञानि स्युः । अयस्मयम् । भाषायां तु पदसंज्ञा । अयोमयम् । तन्वादीनां विकल्पेनेयङुवङौ । तन्वं पुषेम । तनुवम् । विषुं विषुवं पश्य । स्वर्गो लोकः । सुवर्गो वा । त्र्यम्बकम् । त्रियम्बकम् । वरेण्यम् । वरेणियम् ।

## १०९८. छन्दस्युभयथा [६।४।८६]

भूसुधियोर्यण् स्यादियङुवङौ च । वनेषु चित्रं विभ्वम् । विभुवम् वा । सुध्यो नव्यमग्ने । सुधियो वा ।

## १०९९. आज्जसेरसुक् [७।१।५०]

अकाराज्जसेरसुगागमः स्याच्छन्दसि । ब्राह्मणासः ।

## ११००. बहुलं छन्दसि [७।१।१०]

अतो भिस ऐस् बहुलं स्याच्छन्दसि । एत्यम् । देवेभिः । कर्णेभिः ।

---

स्यश्छन्दसि । स्यदः प्रथमान्तस्यानुकरणं लुप्तषष्ठीकम् । एषस्य वाजी । एष एतदः स्य'स्त्यदः । त्यदाद्यत्वम् । "तदोः सः सावनन्त्ययोः" (७।२।१०६) इति सत्वम् । सुलोपः ।

अयस्मयादीनि । निपातनमेतत् न तु संज्ञाविधानम् । तेन "वृद्धिरादैच्" (१।१।१) "अदेङ् गुणः" (१।१।२) इत्यत्र भपदसंज्ञयोः समावेशः सिद्ध्यतीति स्थितम् । एवं च भसंज्ञानि स्युरिति निपातने द्वारमात्रमुच्यते । अयस्मयमिति । अयसो विकारः । "आज्जसेरसुक्" (७।१।५०) इति पूर्वाचार्यानुरोधेन निर्देशः । इकार उच्चारणार्थः । ब्राह्मणास इति । असुकः पूर्वान्तत्वाज्जस. सकारस्य न रुत्वम् । पूर्वासः उभयासः इत्यादौ तु परत्वात् पूर्वमसुकि कृते सकृद्गतिन्यायात् पुनर्जसः शी न भवति ।

---

१. एतदनन्तरमतोऽनि स्थितम् एवं च भसंज्ञानि स्युरिति निपातने द्वारमुच्यते इति क० पु० ।

२. जश्त्वस इति ग० पु० ।

१९०१. मन्त्रेष्वाङ्यादेरात्मनः [६।४।१४१]

आङिति टा। तस्मिन् परे आत्मन्शब्दस्यादेर्लोपः स्यात् मन्त्रेषु। त्मना देवेभ्यः। अन्यत्रापि लोपः। त्मन्यासमञ्जन्।

१९०२. सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः [७।१।३९]

एषामेते आदेशाः स्युः। ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते जसः सुः। आर्द्रे चर्मन्। चर्मणीति प्राप्ते लुक्। "न ङिसंबुद्ध्योः" (८।२।८) इति नलोपो न। मतो। मत्या इति प्राप्ते पूर्वसवर्णः। सखाया। सखायौ इति प्राप्ते औकारस्य आ। नताद् ब्राह्मणम्। नतमिति प्राप्ते अम आत्। अस्मे इन्द्राबृहस्पती। न युष्मेवाजबन्धवः। वयं यूयमिति प्राप्ते जसः शे। यूयवयादेशाभावश्च छान्दसत्वात्। उरुया। उरुणेति प्राप्ते या। नाभा पृथिव्याः नाभाविति प्राप्ते डा। अनुष्ठ्या यजामसि। अनुष्टुभा इति प्राप्ते ड्या। साधुया। साधु इति प्राप्ते याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते आल्। सुपां सुपो भवन्ति। धुरि दक्षिणायाः। दक्षिणायामिति प्राप्ते। तिङां तिङो भवन्ति। ये यूपाय तक्षति। तक्षन्तीति प्राप्ते। इयाच् डियाच् ईकारश्च। उर्विया। दार्विया। उरुणा। दारुणेति प्राप्ते इयाच्। सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। सरसी शयानम्। सरसि इति प्राप्ते ईकारः। आङ्याचयारश्च। प्रबाहवा। प्रबाहुनेति प्राप्ते आङ्। स्वप्नया। स्वप्नेनेति प्राप्ते। नावया। नावेति प्राप्ते।

---

मन्त्रेष्वाङ्यादेः। अन्यत्रापीति। सप्तम्यामपीत्यर्थः। एतच्च बाहुलकात्।

सुपां सुलगिति। सप्तम्या ङेरित्यर्थः। अत्राहुः पूर्वसवर्णेनाप्येतत् सिद्धम् कथं चर्मन् इ इति स्थिते पूर्वसवर्णो निरनुनासिकस्य ङेरान्तरतम्यान्निरनुनासिको दकारः। तत्र परतः "स्वादिषु" (१।४।१७) इति पदत्वात् प्राप्तेऽपि नलोपे "न ङिसंबुद्ध्योः" (८।२।८) इति प्रतिषिद्धे संयोगान्तलोपेन सिद्ध्यति चर्मन्निति। तस्मादुपलक्षणमेतत्। हविर्धानयोर्यत्सुन्वन्तीत्युदाहार्यम्। अत्र हि यद् ङि इति स्थिते पूर्वसवर्णे दकारे कृते स्पदाद्यत्वे सति स्थानिवद्भावात् ङे स्मिन् स्यात्। स्यामादिषु "चाल्लोऽन्त्यस्य" पूर्वसवर्णे कृते पूर्वभागस्य श्रवणप्रसङ्गस्तस्माल्लुगेषितव्यः इति। मतो

१११०३. प्रसमुपोदः पादपूरणे [८।१।६]

एषां द्वे स्तः पादपूरणे। प्र प्रायमग्निः। ससमिद् युवसे। उपोप मे परामृश। किं नोदुदुहर्षसे।

१११०४. अमो मश् [७।१।४७]

मिवादेशस्यामो मश् स्यात्। वधीं वृत्रम्। अवधिषमिति प्राप्ते।

---

इति। टापा इकारे पूर्वसवर्णे कृते सवर्णदीर्घः। ओकारस्य आ इति। अनेन आदित्यत्र आ आदित्य.कारोऽपि प्रश्लिष्यते इति दर्शितम्। अम आदिति। आकारे तु नतात् ब्राह्मणात् इति पठित्वा तच्छब्दात् ब्राह्मणशब्दाच्च आत् आदेश इत्युक्तं "न विभक्तौ" (१।३।४) इति तकारस्य नेत्वम्। यूय वयमिति। जस शे इति। शकारः सर्वादेशार्थः। अत्र हरदत्तः प्रमादपाठोऽयम्। तथाहि न युष्मे वाजबन्धवो विनिन्युश्च न मर्त्यं अवद्य'मधिदीधरत् इति। ऋत्ताश्वमेघनाम्नो राज्ञो दानं श्रूयते। व्यत्ययेन बहुवचनम्। वाजमित्य'न्ननाम। अन्नदानेन ये सर्वेषा बन्धवस्तेषां सबोधनं हे वाजबन्धवः। युष्य.सु अधीत्यस्यानेन सबन्धः स च सप्तम्यर्थानुवादी। विनिन्युश्च न निन्दनशाला.पि मर्त्यः अवद्यं न धारयति अवद्याभावादित्यर्थः। अस्मे इन्द्राबृहस्पती रयिधत्त शताश्विनमित्यत्रापि मन्त्रे रयिं धत्तमिति क्रिया दधातिश्च दानार्थः तेनास्मभ्यं रयिं दत्तमित्यर्थः। तस्मात् युष्मासु अस्मभ्यम् इति प्राप्ते सुप्स्यसोः शे इति युक्तः पाठः। यूयवयादेशाभावश्च छान्दसत्वादित्यपि न वाच्यम्। आचार्यैस्तु काशिकानुसारात् तथा विमृश्य लिखितम्। उरयेति। परत्वाद्रूपो नादेशे कृते यादेशः। नाभा इति। डित्वाट्टिलोपः। साधु इति प्राप्ते इति। सोर्लुकि प्राप्ते इत्यर्थः। वसन्ते इति प्राप्ते आल्। पूर्वसवर्णे तु "अतो गुणः" (६।१।९७) इति स्यात्। सुपां सुपो भवन्ति इति। सूत्रे सुप्ग्रहणमर्पणाय सुप्ग्रहणं कार्यमित्यर्थः। व्यत्ययो बहुलमित्यस्यायं प्रपञ्चः। एवं तिङां तिङ इत्यपि। प्रवाहयेत। आङो ङित्करणसामर्थ्यादन्त्यङित्स्वपि गुणः। स्वप्नयेति। एवं चाकारः सुगीति दीर्घनिवृत्त्यर्थः। "अतो गुणे" (६।१।९७) इति पररूपम्।

प्रसमुपोदः। समाहारे द्वन्द्वः। समासान्तविधेरनित्यत्वात् "द्वन्द्वाच्चुदषहान्तात्समाहारे" (५।४।१०६) इति टच् न भवति। प्रप्रायमग्निरिति। नात्र द्विर्वचनस्य किंचिद्द्योत्यं केवलं पादपूरणमेव कार्यम्। न चैवंविधस्य भाषायां प्रयोगोऽस्तीति सामर्थ्यात् छन्दस्येवेदं विधानमित्याहुः। पादपूरणे किं प्रदेवन्देव्याधिया।

अमो मश्। मिवादेशस्याम इति। द्वितीयेकवचनं तु गृह्यते। छन्दसि दृष्टानुविधानात् परत्र तिङ्साहचर्यान् च। वधीमिति। "हन्तेर्लुङि च" (२।४।४३) इति

१९०५. ध्वमो ध्वात् [७।१।४२]

ध्वस्थाने ध्वात् स्यात् । धारयध्वात् । धारयध्वमिति प्राप्ते ।

१९०६. यजध्वैनमिति च [७।१।४३]

एनमित्यमोऽन्तलोपःवक ारस्य च यकारः । यजध्वैनं प्रियमेधाः ॥

१९०७. तस्य तात् [७।१।४४]

लोड्मध्यमबहुवचनस्य तस्य तात् । गमयतात् । गमयतेति प्राप्ते ।

१९०८. तप्तनप्तनथनाश्च [७।१।४५]

एते च तस्यादेशाः स्युः । तप-शृणोत ग्रावाणः । तनप्-दधातन । तन-जुहुतन । थन-ये जुहुथन । शृणुत धत्त जुहुत इति प्राप्ते ।

१९०९. इदन्तो मसि [७।१।४६]

मस्शब्दे अन्त इकारः स्यात् । पुरस्ताद्दीपयामसि । दीपयाम इति प्राप्ते ।

---

वधादेशः च्नेः सिच् इट् मिपोऽमभावः । तस्य मश् । अकार उच्चारणार्थः । शित्वात् सर्वादेशः । तस्य "अस्तिसिचः" (७।३।९६) इतोट् । "इट ईटि" इति सिचो लोपे सवर्णदीर्घः । शित्करणम् अलोऽन्त्यस्य माभूदिति । अन्यथा मकारस्यापि मकार-वचनं विकारनिवृत्त्यर्थं स्यात् "मा राजि" (८।३।२५) इतिवत् ।

यजध्वैनमिति । वकारस्य च यकार इति । बह्वृचास्तु वकारमेवाधीयते । तत्र यलोपमात्रं निपात्यम् यजध्वमेनमिति प्राप्ते । तस्य लोड्मध्यमबहुवचनस्येति । छन्दसि दृष्टानुविधानात् । पूर्वोत्तराभ्यां बहुवचनाभ्यां साहचर्याच्च प्रथमपुरुषैकवचनं न गृह्यते इति भावः । तप् शृणोत इति । पित्वेनाङित्त्वाद्गुणः । अत एव दधातने-त्यत्र "श्नाभ्यस्तयोरातः" (६।४।११२) इत्यालोपाभावः । यदिष्टनेति । इषेस्तु-दादित्वाच्छः । तस्य "बहुलं छन्दसि" (७।३।९७) इति लुकि कृते "इषुगमियमाम्" (७।३।७७) इति छत्वाभावः । इष्टनम् ।

इदन्तो मसि । मसः सकारान्तस्य सप्तमी । अन्तशब्दोऽवयववाची तेन कित्त्वा-भावेऽपि इकार आगमः संपद्यते इति व्याचष्टे—मस्[1] शब्द इति । हरदत्तस्त्वाह—मसीत्यविभक्तिको निर्देशः । इकार उच्चारणार्थः इत् अन्तो यस्य स इदन्तः स्थित एव सकारे इकार उपसञ्जनीयः । अन्तग्रहणाच्चेत्[2] मसग्रहणेन गृह्यते इति ।

१. मसशब्द इति क० पु० ।

२. चेत् ग्रहणेन ।

११११०. स्नात्व्यादयश्च [७।१।४९]

एते निपात्याः । स्नात्वी मलादिव । स्नात्वेति प्राप्ते । पीत्वी ।

११११. छन्दसि शायजपि [३।१।८४]

हलः श्नः शायजपि स्यात् हौ छन्दसि । "हृग्रहोर्भश्छन्दसि" (वा०) एतयोर्हस्य भः स्यात् छन्दसि । गृभाय । गृहाणेति प्राप्ते । जभार । जहारेत्यर्थः ।

१११२. व्यत्ययो बहुलम् [३।१।८५]

शबादिविकरणानां छन्दसि बहुलं व्यत्ययः स्यात् । भेदतीति । भिनत्तीति प्राप्ते । मरते । म्रियते इत्यर्थः । बहुलोक्तिः सर्वविधिव्यभिचारार्था ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥१॥

उपग्रहः परस्मैपदात्मनेपदं । नरः प्रथमपुरुषादिः ।

---

हृग्रहोरिति । गृभायेति । ग्रह उपादाने । लाट् सेहिः । "क्र्यादिभ्यः श्ना" (३।१।८१) "ग्रहिज्या" (६।१।१६ इति संप्रसारणम् । जभारेति । हृञो लिटो णलि वृद्धौ हस्य भ. ।

[1]व्यत्ययो बहुलम् । भेदतीति । श्नमि प्राप्ते शप् । मरतीति । श्यनि प्राप्ते शप् । परस्मैपदं व्यत्ययेनैव । ननु पूर्वसूत्रादपि—इत्यनुवर्त्य छन्दसि व्यत्ययो भवति अपि शब्दाद् यथाप्राप्तं चेत्युक्तेऽपि सर्वेष्टसिद्धिः, किं बहुलवचनेनेत्यत आह—बहुलोक्तिः सर्वस्य प्रकृतस्याप्रकृतस्य च विधेर्व्यभिचारो व्यत्ययो यथा स्यादित्येवमर्थम् । तमेव व्यत्ययं श्लोकेन प्रपञ्चयति सुप्तिङित्यादि । तत्र सुपां व्यत्ययः धुरि दक्षिणायाः दक्षिणस्यामिति प्राप्ते । तिङामिति । तक्षतीति तक्षन्तीति प्राप्ते इति ग्रन्थकृतैवोद्धृतः । उपग्रहः परस्मैपदात्मनेपदे इति । यद्यपि लादेशव्यतिषङ्गात् क्रियासाधनयो[2]र्यो विशेषः स्वार्थपरार्थत्वादिकः मुख्य उपग्रहः । यथोक्तम्—

यः आत्मनेपदाद् भेदः क्वचिदर्थस्य गम्यते ।
अन्यतश्चापि लादेशान्मन्यते तमुपग्रहम् इति ॥

आत्मनेपदाद्धेतोरित्यर्थः । एवमन्यतश्चापि लादेशादिति । इह तु तद्व्यतिरिक्तनिमित्तत्वात् परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते इति भावः । यथा ब्रह्मचारिण-

---

१. व्यत्ययेनतीति इति क० पु० ।

२. क्रियासाधनो विशेष इति क० पु० ।

## १११३. लिङ्याशिष्यङ् [३।१।८६]

आशीर्लिङि धातोरङ् स्याच्छन्दसि। यामुटि कृते "अतो येयः" (७।२।८०) स्थेयम्। गेयम्। गमेम। वच उम्। वोचेम। विदेयम्। शकेयम्। रुहेयम्। दर्शेयम्।

## १११४. छन्दस्युभयथा [३।४।११७]

धात्वधिकारोक्तः सर्वोऽपि प्रत्ययः सार्वधातुकार्धधातुकसंज्ञः स्याच्छन्दसि। वर्धन्त। वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः। विशृण्विरे सुन्विरे।

---

मिच्छते। इच्छतीति प्राप्ते। लिङ्गस्य मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। नरः पुरुषः। अथास वीरैर्दशभिर्वियूयाः। वियूयादिति प्राप्ते। आशीर्लिङ्। कालः कालवाची प्रत्ययः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। हत्वामिति। नृषोरः सुभितमुग्रवोरम् इति। सुभितमिति प्राप्ते भकारस्य धकारः। अचामिति। उरगायन्तु मा मातरो गर्भिणीयः। गर्भिण्य इति प्राप्ते। दीर्घस्य ह्रस्वः। स्वरस्य। अश्वावतीः। मन्तोदात्तत्वे आद्युदात्तत्वम्। कर्तृशब्दकारकमात्रोपलक्षणम् तद्वाचिनीनां विभक्तीनामित्यर्थः। मादयद्भिः संप्रदानस्य करणत्वम्। यङिति। यङो यशब्दादारभ्य "लिङ्याशिष्यङ्" (३।१।८६) इति ङकारेण प्रत्याहारस्तेषां व्यत्ययो भवतीत्यत्र मूले एवोदाहृतम्। एषां च व्यत्ययं शास्त्रकृत् पाणिनिरिच्छति। चशब्दो हेतौ यस्माद्बाहुलकेन सिद्ध्यति। तस्माद्बाहुलकग्रहणं कर्तव्यमित्यर्थः। बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद् वुञ्। तत् पुनर्बहुलग्रहणस्य प्रवृत्तिनिमित्तं बह्वर्थत्वम्।

लिङ्याशिष्यङ्। स्थागागमिवचिविदिशकिरुहीनेवोदाहरति। प्रायेण तत्रैवाङो दर्शनात्। स्थेयमिति। मिपोऽम् भवति। यामुट् तस्य छन्दसि सार्वधातुकत्वात् "लिङः सलोपोऽनन्त्यस्य" (७।२।७९) इति सलोपः। ततः शपोऽपवादेऽङि सति "आतो लोप इटि च" (६।४।६४) इत्यालोपः प्राग्वत्। "अतो येयः" (७।२।८०) इतीयादेशे "आद्गुणः। गेयमिति। गै शब्दे। आत्वं शेषं प्राग्वत्। गमेमिति। यास इयादेशे "लोपो व्योर्वलि" (६।१।६६) इति यलोपः। अनङीति निषेधात् "गमहन" (६।४।९८) इत्युपधालोपेन। अङो ङित्त्वान्न गुणः। शकेयम् इति। अत्र "स्वादिभ्यः श्नुः"रपवादोऽङ्। दृशेरमिति। नन्वङि सति "ऋदृशोऽङि गुणः" इति गुणेन भाव्यम्। अत एव "दृशेरक् वक्तव्यः" (वा०) इत्याकरः। सत्यम्। बाहुलकात् अङ्यपि गुणाभावं मन्यते।

छन्दस्युभयथा। व्यत्ययो बहुलमित्यस्यैवायं प्रपञ्चः। धात्वधिकारोक्तः सर्वोऽपि प्रत्ययः इति। नावश्यमनन्तरो लिङेवापेक्ष्यतेऽपि तु लिङ् धिदादिरपीत्यर्थः। णिलोप

**१११५. लिङर्थे लेट् [३।४।७]**

लिङर्थे विध्यादौ धातोर्लेट् प्रत्ययः स्याच्छन्दसि ।

**१११६. सिब् बहुलं लेटि [३।१।३४]**

धातोः सिप्प्रत्ययो बहुलं स्याल्लेटि ।

**१११७. इतश्च लोपः परस्मैपदेषु [३।४।९७]**

लेटस्तिङामितो लोपः स्याद्वा परस्मैपदेषु ।

**१११८. लेटोऽडाटौ [३।४।९४]**

लेटः अट् आट् इत्येतावागमौ स्तः तौ च पितौ । जोषिषत् । तारिषत् मन्दिषत् । पक्षे पताति विद्युत् । उदधिं च्यावयाति ।

---

इति । "णेरनिटि" ( ६।४।५१ ) इत्यनेन । विशृश्विरे इति । शृणोते "लिटस्तझयोरेशिरेच्" ( ३।४।८१ ) इतीरेच् । छान्दसत्वात् न द्वित्वम् । सार्वधातुकत्वात् "श्रुवः शृ च" (३।१।७४ इति शृभावश्च । "असंयोगाल्लिट् कित्" इति कित्त्वादगुणाभावे' 'हुश्नुवो." ( ६।४।८७ ) इति यण् । सुन्विरे इति । "स्वादिभ्यः श्नुः" ( ३।१।७३ ) लिङर्थे विध्यादाविति । "हेतुहेतुमतोर्लिङ्" ( ३।३।१५६ ) इत्यादावपि । लेटोऽडाटौ च न यौगपद्येन अड्विधिसामर्थ्यात् । अन्यथा सवर्णदीर्घे कृते विशेषाभावात् । तौ च पिताविति । "आडुत्तमस्य पिच्च" ( ३।४।९२ ) इत्यतोऽनुवृत्तेरेवमुक्तम् । तत् प्रयोजनं तु करवाव करवै । करवैधे इति द्विवचनादौ विकरणस्य गुणः । अन्यथा यथा सार्वधातुकत्वात् विकरणो भवत्येव "सार्वधातुकमपित्" (१।२।४ ) इति ङित्त्वाद् गुणो न स्यात् । आकारे तु पित्वं नास्त्यलम् । यदाह हरदत्तः । करवैते इति 'छन्दस्युभयथा" ( ३।४।११७ ) इति सार्वधातुकत्वाद्विकरणः । आर्धधातुकत्वात् ङित्त्वाभावाद् विकरणस्य गुणः । करोतेश्चोत्वाभावः । जोषिषदिति । जुषी प्रीतिसेवनयोः । अनुदात्तेत् व्यत्ययेन परस्मैपदं तिप् इकारलोपः । अडागम. । सिप् इकार उच्चारणार्थः । प् इत । सिप इट् । उपधागुणः । षत्वम् । तारिषदिति । तृ इत्यस्य "सिब् बहुलं लेटि" ( ३।१।३४ ) "छन्दसि .णिद्वक्तव्यः" (वा०) इति वृद्धिः । शेषं प्राग्वत् । मन्दिषत् इति । मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु । इदितो नुम् । षत्वं इति । सिप इत् लोपस्य चाभावः । पताताति । आट् । च्यावयाताति । च्युङ् गतौ ण्यन्तः ।

१११९. स उत्तमस्य [३।४।९८]

लेट उत्तमस्य सकारस्य लोपो वा स्यात्। करवाव। पक्षे करवावः। टेरेत्वम्।

११२०. आत ऐ [३।४।९५]

लेट आकारस्य ऐ स्यात्। मन्त्रयैते। मन्त्रयैथे। विधिसामर्थ्यादाट ऐत्वं न। मन्त्रयाते।

११२१. वैतोऽन्यत्र [३।४।९६]

आत ऐ विषयं विना लेट एकारस्य ऐ स्याद्वा। पशूनामीशै। गृह्यान्तै। पक्षे दधसे। एतोऽन्यत्र किम्? मन्त्रयैते।

११२२. उपसंवादाशङ्कयोश्च [३।४।८]

उपसंवादे शङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकं पताम।

११२३. कृमृदृरुहिभ्यश्छन्दसि [३।१।५९]

एभ्यश्च्लेरङ् वा स्याच्छन्दसि। अकरत्। अमरत्। अदरत्। अरुहत्।

---

स उत्तमस्य। करवावेति। कृञो लटो वस्। "तनादिकृञ्भ्यः उः" (३।१।७६) गुणो रपरः। आट्। अङित्त्वाद्विकरणस्य गुणः। मन्त्रयैते। मन्त्रयैथे इति। मन्त्रि गुप्तभाषणे। इदित्त्वान्नुम्। ण्यन्ताल्लेटः स्थाने आते आथे शब्दयोराकारस्यैकारः। शपि णेर्गुणायादेशौ। विधिसामर्थ्यादिति। अन्यथा लाघवाय ऐटमेव विदध्यात्।

वैतोऽन्यत्र। ईशै इति। ईश ऐश्वर्ये। उत्तमैकवचनमिट् परस्मैपदेषु इति वचनात्—"इतश्च" (३।४।१००) लोपो नास्ति। टेरेत्वम्, तस्य ऐ। गृह्यान्तै इति। ग्रहेः कर्मणि लेट्। आट्। यक् सम्प्रसारणम्। झोऽन्तः।

उपसंवादाशङ्कयोश्च। पणबन्ध इति। यदि मे भवानिदं कुर्यादहमपि ते इदं दास्यामीति त्रिपुरविजये देवैः प्रार्थितस्य रुद्रस्येदं वचनम्। पशवोऽत्र द्विपादः चतुष्पादश्च नेदिति। इच्छब्दः आशङ्कां द्योतयति। जिह्माचरणेन नरकपातः संभाव्यते स मा भूदित्यर्थः।

कृमृदृ०। [1]अमरदिति। व्यत्ययेन परस्मैपदम्॥

---

१. अमरदिति क० पु०।

**११२४. श्रुशृणुपृकृवृभ्यश्छन्दसि [६।४।१०२]**

एभ्यो हेर्धिः स्यात् छन्दसि । श्रुधीहवम् । शृणुधी गिरः । "अन्येषामपि दृश्यते" ( ६।३।१३७ ) इति दीर्घः । पृधि । पूर्धि । उरुणस्कृधि । अपावृधि ।

**११२५. वा छन्दसि [३।४।८८]**

हिरपिद्वा स्यात् छन्दसि ।

**११२६. अङितश्च [६।४।१०३]**

पित्त्वेनाङितो हेर्धिः स्यात् । रारन्धि । प्रयन्धि । युयोधि । पित्त्वाभावे प्रीणीहि ।

**११२७. आदृगमहनजनः किकिनौ लिट् च [३।२।१७१]**

आदन्तादृ ऋवर्णान्तात् गमादेश्च किकिनौ स्तः छन्दसि । तौ च लिड्वत् । द्वित्वादि । पपिः । कित्त्वम् । "ऋच्छत्यृताम्" ( ७।४।११ ) इति गुणबाधार्थम् । "बहुलं छन्दसि" ( ७।१।१०३ ) इत्युत्त्वम् । जगुरिः जग्मिः । जघ्निः । जज्ञिः ।

---

श्रुशृणु । शृणु इति रूपानुकरणम् शृणुधीत्यत्र धिभावविधानसामर्थ्यात् "उतश्च प्रत्ययात्" ( ६।४।१०६ ) इति लुक् न भवति । अन्येषु व्यत्ययेन शप् । तस्य "बहुलं छन्दसि" ( २।४।७३ इति लुक् । पूर्धि इति । "उदोष्ठ्यपूर्वस्य" ( ७।१।१०२ ) इति उत् रपरः । "हलि च" ( ८।२।७७ ) इति दीर्घः । उरुणस्कृधि इति । "नश्च धातुस्थोरुषुभ्यः" ( ८।४।२७ ) इति णत्वम् । "कः करत्करति" ( ८।३।५० ) इति विसर्जनीयस्य सः । अपावृधीति । अपपूर्वो वृङ् वृञ् वा "अन्येषामपि दृश्यते" ( ६।३।१३७ ) इत्यपस्य दीर्घः ।

अङितश्च । ननु हिर्ङिदेव "सेर्ह्यपिच्च" ( ३।४।८७ ) इति वचनादत आह—पित्त्वेनाङित इति । रारन्धीति । रमेर्व्यत्ययेन परस्मैपदं छान्दसत्वाच्च शपः श्लुः द्वित्वेऽभ्यासदीर्घश्च । अङित्त्वादेव नलोपाभावः । प्रयन्धीति । शपो लुक् छान्दसः । युयोधीति । यौतेः शपः श्लुश्छान्दसः । प्रीणीहीति । प्रीञ् तर्पणे क्र्यादिः ।

आदृगमहन० । पपिरिति । पा पाने । "लिटि धातोः" ( ६।१।८ ) इति द्वित्वम् । ह्रस्वः । आतो लोपः । ननु लिड्वद्भावे सति "असंयोगाल्लिट् कित्" (१।२।५) इत्येव सिद्धे कित्करणमनर्थकमित्याशङ्क्याह—कित्त्वमित्यादि । "ऋच्छत्यृताम्" (७।४।११)

**११२८. तुमर्थे सेसेनसेअसेनक्सेकसेनध्यैअध्यैन्-कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः [४।४।६]**

धातोरेते प्रत्ययाः स्युः छन्दसि तुमुनोऽर्थे। से वक्षे रायः। सेन् ताव-मिषे। असे असेन् जीवसे। क्से प्रेषे। कसेन् श्रियसे। अध्यै अध्यैन्। आचरध्यै। कध्यै कध्यैन्। आहुवध्यै। शध्यै पिबध्यै। शध्यैन् मादयध्यै। तवै पातवै। तवेङ् सूतवे। तवेन् कर्तवे कर्तुमित्यर्थः।

**११२९. प्रयै रोहिष्यै अव्यथिष्यै [३।४।१०]**

एते निपात्याः। प्रयातुम्। रोढुम्। अव्यथितुमित्यर्थः।

---

इति गुणः। प्रतिषेधविषय आरभ्यते तस्यापि बाधनार्थमित्यर्थः। जगुरिति। गॄ निगरणे। "बहुलं छन्दसि" (७।१।१०३) परत्वात् उत्वे कृते तस्य "द्विर्वचनेऽचि" (१।१।५९) स्थानिवत्त्वात् गॄ इत्यस्य द्वित्वम्। अत्रादिति दकारस्तकारो वा मुख-सुखार्थ इति। तातपरस्तपर इत्यत्र तत्कालग्रहणाभावाद्दीर्घादप्यकारात् किकिना-वुदाहियेते। जग्मिरिति। "गमहन" (६।४।९८) इत्युपधालोपः। जघ्निरिति। "हो हन्तेः" (७।३।५४) इति कुत्वम्। जज्ञिरिति। श्चुत्वम्। जश्चोर्जः। लिड्वदित्ययं कार्यातिदेशः। स्वरूपाबाधेन च कार्यमतिदिश्यते इति किकिनोः स्थाने तिबादयः कानचौ न भवतः। अनभिधानाच्च नैतौ भावकर्मणोर्भवतः। वर्तमानाधि-काराच्च न भूतकालेऽप्यतिदिश्यते। लादेशत्वाभावाच्च न परस्मैपदसंज्ञापि।

तुमर्थे से। तुमर्थो भाव इति व्याख्यातं प्राक्। वक्षे इति। वचेः से कुत्वम् षत्वं चास्य एषे इति। इणो गुणः। नकारो "ञ्नित्यादिर्नित्यम्" (६।१।१९७) इत्याद्युदात्तार्थः। प्रेषे इति। इणः क्से। कित्वाद् गुणे। आद्गुणः। श्रियसे इति। इयङ्। आचरध्यै इति। [1]चर गतिभक्षणयोः। मादयध्यै इति। मदो हर्षे। ण्यन्ताद् मकः पूर्ववल्लुक्। व्यत्ययेन शप् च गुणायादेशौ। पातवै इति। पिबतेः। सूतवे इति। पूङ् प्राणिगर्भविमोचने। ङित्वान्न गुणः। कर्तवे इति। गुणः। कर्तुमित्यर्थः। सर्वादीनामप्यर्थविवरणोपलक्षणमेतत्। प्रयै। प्रपूर्वाद् यातेः कै प्रत्ययः रोहिष्यै। गुणः। नञ् पूर्वात् व्यथेरिष्यै। एतेऽपि तुमर्थे इति दर्शयति। प्रयातुमित्यादि।

---

1. चरगतिभक्षणयोः मादयध्यै इति नास्ति क० पु०।

**११३०. दृशे विख्ये च [३।४।११]**

एतौ निपात्यौ । द्रष्टुं विख्यातुमित्यर्थः ।

**११३१. ईश्वरे तोसुन्कसुनौ [३।४।१३]**

ईश्वरे उपपदे धातोरेतौ स्तस्तुमुनर्थे । ईश्वरो विचरितोः । ईश्वरो विलिखः ।

**११३२. कृत्यार्थे तवैकेन्केन्यत्वनः [३।४।१४]**

धातोरेते स्युः कृत्यानामर्थे भावकर्मणोः । तवै । अन्वेतवै । केन् अवगाहे । केन्यः । दिदृक्षेण्यः । त्वन् कर्त्वम् ।

**११३३. सृपितृदोः कसुन् [३।४।१७]**

आभ्यां कसुन् स्यात् भावलक्षणे तुमर्थे । पुराक्रूरस्य विसृपो विरप्शिन् । पुरा जतृभ्यः आतृदः । कृञः सन्नन्तात् ण्वुल् । अतो लोपः । तस्य स्वरं प्रति स्थानिवत्त्वाभावत् ।

---

दृशे । के प्रत्ययः । क्त्त्वान्न गुणः । विख्य इति आतो लोपः ।

ईश्वरे । विचरितोरिति । चर गतौ । इट् । विलिख इति । लिख विलेखने । क्त्त्वान्न गुणः । वत्वातोसुन्कसुन । इत्यव्ययत्वाद्विभक्तेर्लुक् । 'न लुमता" (१।१।६३) इति निषेधात् "अत्वसन्तस्य चाधातोः" (६।४।१४ ) इति कसुनो दीर्घः ।

कृत्या । भावकर्मणोरिति । "तयोरेव कृत्यक्तखलर्थाः" ( ३।४।७० ) इति कृत्यानां भावकर्मणोरेव विधानादिति भावः । यद्यपि भव्यगेयादिषु कर्तर्यप्यर्थः । वह्य स्नानीय चूर्णमित्यादौ करणादिरपि । तथापि न तत्र कृत्यत्वेन कर्त्रादिषु विधानं किं तर्हि स्वरूपेण । कृत्यतया विधानन्तु भावकर्मणोरित्येव युक्तः । अन्वेतवै इति । अनुपूर्वादिणः । अवगाहे इति । गाहू विलोडने । दिदृक्षेण्य इति । दृशेः सन्नन्तात् । अतो लोपः । कर्त्वमिति । कृञो गुणः सोरभादेशः । अन्वेतव्यमित्याद्यर्थः । तुमर्थे तवै विहित एव । कर्मणि कारकेऽप्यनेन पुनर्विधीयते ।

सृपितृदोः । सृप गतौ । उतृदिर् हिंसानादरयोः । विसृप इत्यादि । विसर्पितुं आतर्दितुमित्यर्थः । "न पदान्त" ( १।१।५८ ) इति सूत्रस्यावशिष्टं विषयं व्युत्पादयन्नाह—कृञ इत्यादि । चिकीर्ष इति स्थिते "ण्वुल्तृचौ" ( ३।१।१३३ ) इति ण्वुल् । तस्याकादेशे अतो लोपे परत्वात् कृते "लिति" ( ६।१।१९३ ) इति स्वरे कर्तव्ये "अचः परस्मिन्" ( १।१।५७ ) इत्यतो लोपस्य स्थानिवत्त्वादाकारस्य स्वरो न

## ११३४. लिति [६।१।१९३]

लिति परे पूर्वमुदात्तं स्यात्। इति ईकारस्योदात्तता। चिकीर्षकः। अदेः क्तिनि कृते "बहुलं छन्दसि" (२।४।३९) इति घस्लृ। "घसिभसोर्हलि च" (६।४।१००) इत्युपधालोपः। "झलो झलि" (८।२।२६) इति सलोपः। धत्वम्। उपधालोपस्य स्थानिवत्त्वाभावात् घस्य जश्त्वम्। समाना ग्धिः सग्धिः इत्यादिप्रयोगमनुसृत्याख्यातव्यम्।

॥ इति वैदिकी प्रक्रिया समाप्ता ॥

---

स्यात्। 'न पदान्त" (१।१।५८) इति निषेधात्तु भवति। ईकारस्येति। ककारात् परस्य। "स्वरविधौ व्यञ्जनमविद्यमानवत्" इति रषयोरव्यवधायकत्वादि इति भावः। तत्रादौ कृञ् धातोरित्यन्तोदात्तः। ततः सन् "आद्युदात्तश्च" (३।१।३) इति प्रत्ययस्वरे प्राप्ते 'ञ्नित्यादिर्नित्यम्" (६।१।१९७) इति सन्नन्तस्यादिश्चि[1]शब्देकार उदात्तः "अनुदात्तं पदमेकवर्जम्" (६।१।१५८) इति परिशिष्टस्यानुदात्तत्वेन परौ द्वावनुदात्तौ। ततो ण्वुलोऽपि प्रत्ययाद्युदात्तत्वे प्राप्ते लित्स्वरेण सति शिष्टेन कीशब्देकारस्योदात्तत्वम्। ततः शेषनिघातेन [2]चिशब्दोऽप्यनुदात्तः। ततः "उदात्तादनुदात्तस्य स्वरितः" (८।४।६६) इत्यकारः स्वरितः तस्य पूर्वत्रासिद्धत्वाच्छेषनिघातेन कीशब्दो नानुदात्तः। ततः 'स्वरितात् संहितायामनुदात्तानाम्" (१।२।३९) इत्यन्तस्यैकश्रुतिः प्रचयरूपेति प्रक्रिया द्रष्टव्या। आचार्यस्तु स्वरविधौ स्थानिवत्त्वनिषेधमुदाहर्तुं लित्स्वरमात्रमुपदर्शितम्। अत एव स्वरप्रक्रियोदाहरणार्थमस्योपन्यास इत्यपि न मन्तव्यम्। स्वरश्चलो'लवेदसाधारणत्वान्न वैदिकप्रक्रियामेव प्रदर्शनीय इत्यत्रापि नियामकमस्तीति। जश्विधौ उदाहरति। अदेरित्यादि। "झलो झलि" (८।२।२६) इति सलोप इति। तत्र सिच् इति नाश्रीयते इत्यर्थः। तदाश्रयणे तु छान्दसो लोपो द्रष्टव्यः। धत्वमिति। "झषस्तथोर्धोऽधः" (८।२।४०) इत्यनेन। अस्थानिवत्त्वादिति। जश्विधौ "न पदान्त" (१।१।५८) इति निषेधादित्यर्थः। सति तु स्थानिवत्त्वेऽकारेण व्यवधानाज्झल्परो नास्तीति जश् न स्यात् इति भावः। सग्धिरिति। समानस्य सभावः। प्रयोगमनुसृत्येति। प्रयोगं दृष्ट्वा तत्सिद्ध्यनुरोधेनेहानुक्तापि विशेषप्रक्रियोहनीयेत्यर्थः।

---

१. आदिश्चिकार उदात्त इति क० पु०।

२. चिशब्दोऽपीति क० पु०।

आनन्त्यात् सर्वशब्दा हि न शक्यन्तेऽनुशासितुम् ।
बालव्युत्पत्तयेऽस्माभिः संक्षिप्योक्ता यथामति ॥ १ ॥
प्रक्रियाकौमुदी सेयं रामचन्द्रप्रकाशिता ।
सततमसत्तमो वध्यात् सच्चकोरप्रिया चिरम् ॥ २ ॥

---

कुतस्तर्हि सर्वे नोच्यन्त अत आह—आनन्त्यादिति । 'अतोऽनन्ताः शब्दाः चत्वारि वाक्परिमिता पदानि" इत्यादि श्रुतेः । न चैते सर्वशः सकलैर्नानुशासितुं प्रकृत्यादिविशेषेण व्युत्पादयितुं शक्यन्ते । अतो बालानां शब्दापशब्दज्ञानशून्यानाम् अल्पमेधसां व्युत्पत्तये मार्गप्रदर्शनेन मूलशास्त्रेऽधिकारसिद्ध्यर्थं संक्षिप्य प्रचरदल्पप्रयोगज्ञानोपयिकलक्षणप्रदर्शनेनोक्ताः प्रदर्शिताः यथामति । अनेनासर्वज्ञेन तेषामशेषविशेषाणां ज्ञातुमशक्यता दर्शयति । यथोक्तम्—

यान्युज्जहार माहेशाद् व्यासो व्याकरणार्णवात् ।
तानि किं शब्दरत्नानि सन्ति पाणिनिगोष्पदे ॥ इति ।

प्रक्रियाकौमुदी कुर्मः इति पूर्वं प्रतिज्ञातम् । तदिदानीमुपसंहरन् ग्रन्थनाम्नोऽन्वर्थतां रूपकेण समर्थयते—प्रक्रियेत्यादिना । सेति । पूर्वं प्रतिज्ञातेयं समाप्तिं नीयमानत्वेनेदानीं प्रत्यभिज्ञायमाना रामचन्द्रनाम्नाचार्येण प्रकाशिता । सूत्रवार्तिकभाष्यादिप्रमाणोपदर्शनेनामूलकत्वादिशङ्काकलङ्कानवस्कन्दिता प्रक्रियासु शब्दानुशासनेषु कौमुदीतुल्या इव कृतिः । असन्ति अप्रकृष्टानि वचांसि असाधुशब्दरूपाणि तानि इव मलिनत्वादश्रेयस्करत्वाच्छास्त्रजन्यज्ञानोदयनिवर्तकत्वाच्च चिरं वध्यात् नाशयतु इत्याशंसा । एतेन प्रक्रियापद ( 'सूचितसाधुशब्दव्युत्पादनस्यापि असाधुशब्दप्रयोगनिवृत्तिः फलमित्युक्तम् । "न म्लेच्छितवै० दुष्यति चापशब्दैरित्याद्युक्तेः )। तत् किमपशब्दानेव प्रतिपाठेन लक्षणेन चोपदिश्य नैते प्रयोक्तव्या इति वदन्ति ? नेत्याह—सच्चकोरप्रियेति । सन्तः साधवो ये शब्दास्ते चकोरा एव चकोराः कौमुद्युपजीवित्वात् अनन्यशरणत्वाच्च तेषां प्रिया उज्जीवकत्वात् । ते वा प्रिया अङ्गीकृतत्वात् परिपालनीयत्वेन यस्याः सा । प्रियस्यापूर्वत्वमिति । प्रियस्य विशेषणत्वेऽपि परनिपातः । अपशब्दानां प्रतिदेशं प्रतिभाषं प्रत्यक्षरं च भेदेनानन्त्यात् । प्रतिपदपाठो लक्षणं वा कर्तुमशक्यमिति लघुत्वात् साधव एव लक्षणेनोपदिश्यन्ते । तथा चापशब्दा निवर्तिता भवन्ति । उपादेयोपदेशे ह्यर्थादनुपादेयनिवृत्तिर्गम्यते । यथा "पञ्च पञ्चनखा भक्ष्याः" इति भक्ष्यनियमादन्येऽभक्ष्या इति गम्यते । अथवा सन्तः शिष्टास्ते चकोरा इव साध्वसाधुविवेचकत्वात् तेषां प्रिया । एतेन शिष्टादरणीयतयाऽस्य ग्रन्थस्य प्रामाण्यं समर्थयते ।

---

१. सूचित इत्यारभ्य—इत्याद्युक्तेरित्यन्तो ( ) रेखाङ्कितो नास्ति ख० पु० ।
२. परनतीति क० पु० । ३. ते वा प्रिया उपजीव्यत्वात् इति पाठः क० पु० ।

जयति सुभगमूर्तिमु ग्धहासावलोक-
प्रशमितजनतापो विट्ठलः स्वात्मबोधः ।
सचकितमिव लक्ष्मीः सेवते यत्पदाब्जं
ललिततरकराभ्यां साधु संवाहयन्ती ॥ ३ ॥ इति ।

# इति श्रीरामचन्द्राचार्यविरचितायां प्रक्रियाकौमुद्यां कृदन्तः समाप्तः ।

# ॥ समाप्ता चेयं प्रक्रियाकौमुदी ॥

---

अथ चाप्रकृष्टक्रियार्थाभिव्यक्तितापोपशमाह्लादकत्वादिर्यस्याः सा कौमुदी । कुमुदानां जीवातुभूता चन्द्रज्योत्स्ना रमयत्यानन्दयति इति रामो रतिहेतुश्चन्द्रः, तेन प्रकाशिता सतो असद्वचोऽपशब्दतुल्यं सर्वव्यवहारोपरोधकत्वात् असमीचीनमिति—आलोकाभावरूपत्वाद्वा असदिति वचो यस्मिन् अभिसारादिप्रवर्तकत्वादियमसतीत्यभिशापवचो यस्मादिति वा "पुमान् स्त्रिया" इत्येकशेषः । तादृशं तमोऽन्धकारं वध्यात् चिरमित्यथाशास्यम् । सा च—सतामुत्तमानाम् अयाचितोपस्थितमम्बुकेवलं रसात्मकस्योडुपतेश्च रश्मयः । 'बभूव तस्याः किल पारणाविधिर्नवृत्त्यवृत्तिर्व्यतिरिक्तसाधनं." इत्युक्तदिशाहारान्तरपराङ्मुखतया चन्द्रोदय एव किरणपानेन शरीरवृत्तेर्विधानात्तपोनिष्ठमेव सता मुनिव्रताना चकोराणा प्रिया भवतीति रूपकं समासोक्तिश्च ।

अत्र चिरत्वस्यैव विधेयत्वान्न समाप्तपुनरात्तत्वं दोषः । तदेतेनैव वाक्यार्थसमाप्तेरिति ।

इदानीं मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चेत्याशयाद् ग्रन्थान्ते कृतमिष्टदेवतास्तुतिरूपं मङ्गलं शिष्यशिक्षायै निबध्नाति—जयतीति । सर्वोत्कर्षस्तदाक्षिप्तः प्रणामो वा जयतेरर्थः । विट्ठलो व्याख्यातः । तद्विशेषणं सुभगमूर्तिरिति । सुभगा सर्वेष्टदत्वाद् मङ्गलरूपा मूर्तिर्यस्य सः, मङ्गलं भगवान् विष्णुरित्युक्तेः ।

अथवा—

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ इति ।

तेन शोभनो भगो यस्या यस्यां वा । एतदेव प्रपञ्चयति । मुग्धेत्यादिना । मुग्धः कोमलः सुन्दरो वा हासो यस्मिन् स चासाववलोकः सानुग्रहत्वात् । स एवेह स्मेरा[1]

---

१. स्मेरा दृष्टिरिति नास्ति तत्स्थानेतस्येडादृष्टिरिति क० पु० ।

दृष्टिस्त्वया प्रकर्षेण शमितो जनानां जीवमात्रस्य वा तापः आधिदैविकाधिभौतिकाध्यात्मिकस्त्रिविधो येन। एतेन साधनपारतन्त्र्याभावाद् ऐश्वर्यादित्रयमुक्तम्। विठ्ठल इति च ज्ञानम्। स्वात्मप्रदीप इति च स्वप्रकाशः। "अत्रायं पुरुषः स्वयं ज्योतिः। तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। सचकितनिर्वेत्यादि वैराग्यम्। लक्ष्मीः सर्वाभिलषणीयापि यस्य पदाब्ज चरणकमलमतिसुन्दराभ्यां कराभ्यां सम्यक् संवाहयन्ती तद्दासीत्वमाचरन्ती। सचकितमिव अतङ्गोदासीनतया निरादृतया च कदाचिन्मां परित्यजेदिति शङ्कया सेवते। एतेन विषयवैमुख्यं लक्ष्मीप्रदत्वं च ध्वनितम्।

क्षोणीमण्डलमौलिमण्डनमणिर्यः शेषवंशाम्बुधेः
सोमः श्रीनरसिंहसूनुरभवत् प्रज्ञावतामग्रणीः।
तत्सूनोः कृतनुभावविदुषो सत्प्रक्रियाव्याकृतौ
श्रीकृष्णस्य कृतौ समाप्तिमगमत् सा वैदिकी प्रक्रिया॥ १॥

यत्कृपालेशतोऽशक्तेऽपि जृम्भते मयि वाङ्मयम्।
नृसिंहं नौमि शेषाङ्कं दैवतं पितरं गुरुम्॥ २॥

इति विद्वज्जनेन्द्रशेषकृष्णभाषा कृतिरियमिह शेषवंशाङ्क महोत्।
यदि विविधनिबन्धाः साक्षिणः सन्ति सन्तो यदि च हृदि ममास्ते जनकः श्रीनृसिंहः॥ ३॥

इत्येवं समाप्तिमाप्ता सुपुरुषप्रणीता वृत्तित्रयस्वरूपा प्रक्रियाकौमुदीवृत्तिः।

॥ श्रीकृष्णाय परमात्मने नमः॥

# सूत्रानुक्रमणिका

सूत्राङ्कः — अ — सूत्राङ्कः

सूत्राङ्कः

सूत्राङ्कः

